श्लोकः २

सर्वस्य जगतो धारको भगवान् धर्मः, 'तस्मादनपेतं तद्विषयम्' इत्यर्थे धर्मशब्दाद् यत्प्रत्ययः । सर्वजगद्धारकभगवद्विषयकं प्रत्यक्षावगमम् अक्षेषु इन्द्रियेषु नियमनाय प्रतिस्थितं ब्रह्म प्रत्यक्षम्, अवगम्यते साक्षात्क्रियत अनेनेत्यवगमम् । साक्षात्कारानुकूलशास्त्रजनितपरोक्षज्ञानम् । 'ग्रह वृ दृ निश्चिगमश्च' इति गमेः करणे अप्प्रत्ययः । अप्प्रत्ययान्तस्य 'घञबन्तः' इति पुंलिङ्गत्वानुशासनेऽपि, इह 'लिङ्गमशिष्यम्' इति वचनात् तन्नाश्रितम् । वस्तुतस्तु 'घञबन्त' इति सूत्रे 'भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्याम्, स्त्रीत्वविशिष्टे तु भावे क्तिन्नादिभिः बाधेन, परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । 'सम्बन्धमनुवर्तिष्यते' इति भाष्यात्' इत्याधुनिकवचनात् करणे अप्प्रत्ययान्तोऽप्यवगमशब्दः नपुंसकलिङ्ग एव युक्त इति । प्रत्यक्षस्य ब्रह्मणोऽवगमम् । एवं च 'धर्म्यम्' इत्यनेन न पौनरुक्त्यम् । 'धर्म्यम्' इत्यस्य 'भगवद्विषयकम्' इत्यर्थात्, 'प्रत्यक्षावगमम्' इत्यस्य च 'ब्रह्मापरोक्षज्ञानसाधनपरोक्षज्ञानम्' इत्यर्थकत्वात् । कर्तुं सुसुखं सुकरम् अव्ययम् अव्ययमोक्षफलकम् । 'इदं ज्ञानं प्रवक्ष्यामि' इति प्रस्तुतं ज्ञानम् इह भावे ल्युटि प्रथमान्तं संयोज्यम् । 'एवं प्रशस्तम्' इति स्तुतिमात्रपरत्वादस्य श्लोकस्य क्रियाभिसन्धाभावो न दोषाय ।। २ ।।

**भावदीपिका (श्री.टि.)–** राजशब्देन कथं प्रधानत्वं लब्धम् इत्यत आह– **राजेवेति** ।। यथा राजा सर्वप्रधानः तथेत्यर्थः । **राजा चासौ विद्या चेति** ।। ननु कथमयं विग्रहः । पुंलिङ्गस्त्रीलिङ्गयोः विशेषणविशेष्यभावायोगात् । अतः 'राज्ञी चासौ विद्या च' इति वक्तव्यम् । इति चेत् उच्यते । 'पुंयोगादाख्यायाम्' इति सूत्रेण या पुमाख्या पुंयोगात् स्त्रियां वर्तते तत्र ङीष् विहितः, 'गोपी' इत्युदाहृतं च । तद्वत्, अत्र विद्यायां राजयोगाभावेनोक्तसूत्रेण ङीषोऽप्राप्तेः, अगत्या तथैव विग्रहोऽङ्गीकार्यः । एवमेव 'राजगुह्यम्' इत्यत्रापि 'राजा च तद् गुह्यं च' इत्येव विग्रहः कार्यः । अत एव 'इन्द्रियजयफलमाह' इत्यत्र गीताभाष्यटीकायाम् 'इन्द्रियजयश्च तत् फलं च' इति विग्रहो दर्शित इति ज्ञातव्यम् । एवमेव 'क्षेत्रजेषे मघवन्' इत्यत्र भाष्यम् 'मुक्तिक्षेत्रविजयाय' इति । तद्व्याख्यातं टीकाकारैः 'मुक्तिश्च तत् क्षेत्रं च' इति ।

**भावप्रकाशः (कृ.टि.)–** ननु 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इति अभिधानाद्राजशब्दः प्रभ्वादिवाची । ततश्च प्रधानेति तद्व्याख्यानमयुक्तमित्यतो गौणत्वमाश्रित्याह– **राजेवेति** ।। **राजा चासौ विद्या चेति** ।। अत्र राजन्शब्दस्य विद्याविशेषणत्वाद्राज्ञी चासाविति वक्तव्यमिति चोद्यमुक्ताभिधाने नित्यपुल्लिङ्गत्वोक्त्या

निरसनीयम् । गर्भमाधत्त राज्ञीति प्रयोगस्तु 'पुंयोगादाख्यायाम्' इति ङीषन्तत्वादुपपन्नः । न च मुख्यार्थस्य राजन्शब्दस्य पुंस्त्वेऽपि अमुख्यार्थलिङ्गं स्यादि वाच्यम् । अमुख्यार्थत्वेऽपि गङ्गायां घोष इत्यादौ मुख्यार्थलिङ्गत्वस्यैव दर्शनादिति ।।

## भाष्यम्

**प्रत्यक्षं ब्रह्मावगम्यते येन तत् प्रत्यक्षावगमम् । अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षः ।।**

भावप्रदीपिका (प.टी.)– प्रत्यक्षावगमपदस्यापूर्वार्थमाह– **प्रत्यक्षेति ।।** ब्रह्मणः प्रत्यक्षशब्दार्थत्वं कथम् ? इत्यत आह– **अक्षेष्विति ।।**

प्रमेयदीपिका (ज.टी.)– 'प्रत्यक्षेणावगमो यस्य' इति व्याख्यानमसत् । भगवन्माहात्म्यस्य शास्त्रैकसमधिगम्यत्वात् । अद्वैतोद्धारस्य च प्रमाणविरुद्धत्वादिति भावेनाऽह– **प्रत्यक्षमिति ।।** शास्त्रैकवेद्यं ब्रह्म कथं प्रत्यक्षम्? इत्यत आह– **अक्षेष्विति ।।** प्रत्यक्षः परमात्मा । प्रादिसमासोऽयं नाव्ययीभाव इति ज्ञापनाय नपुंसके प्रकृतेऽपि पुंलिङ्गनिर्देशः । अन्यथा षष्ठी न श्रूयेत ।।

भावबोधः (र.टि.)– नन्वहमिति प्रत्यक्षवेद्यजीवाभिन्नब्रह्मणोऽपि प्रत्यक्षगम्यत्वमस्त्येवेत्यत आह– अद्वैतोद्धारस्येति ।। प्रादिसमासोऽयमिति ।। अनेनैव प्रकारेण 'सविषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षम्' इति ब्रह्मतर्कोक्तरीत्या प्रमाणवाचकप्रत्यक्षशब्दस्याप्ययमेव समासो द्रष्टव्यः । अव्ययीभावत्वे बाधकमाह– अन्यथेति ।। अन्यथा अव्ययीभावसमासत्वे शास्त्रीयप्रयोगेषु प्रत्यक्षस्य लक्षणमाहेति षष्ठी न श्रूयतेत्यर्थः । प्रयोगबाहुल्यात् षष्ठीत्येवेत्युक्तम् । वस्तुतस्तु यद्यपि 'नाव्ययीभावादतोऽम्त्वपञ्चम्या' इत्यपवादे तृतीयासप्तम्योर्बहुलमिति क्वचिदम्भाववत्त्वेन प्रत्यक्षेणेत्यादेरव्ययीभावत्वाभावज्ञापकत्वाभावेन तच्छ्रवणाभावदापादनासम्भवः । तथाऽपि प्रथमाद्वितीयाद्विवचनबहुवचनचतुर्थ्येकवचनद्विवचनान्ताः प्रत्यक्षे प्रत्यक्षाणीत्यादयो न श्रूयेरन्नित्यपि ग्राह्यम् ।

**भावदीपः** (रा.टि.)– नन्वहंधीविषयप्रत्यगात्मन एव ब्रह्मत्वादस्ति तस्यापि प्रत्यक्षगम्यता इत्यत आह– **अद्वैतोद्धारस्येति** ।। अद्वैतोक्तेरित्यर्थः ।। **प्रमाणेति** ।। साक्षि-

प्रत्यक्षादिप्रमाणेत्यर्थः ।। 'ब्रह्म' इत्यस्यानन्वयाद् विशेष्याकाङ्क्षां पूरयति– **परमात्मेति ।। प्रादिसमासोऽयमिति ।।** 'कुगतिप्रादयः' इति सूत्रे 'कुशब्दो गतिसञ्ज्ञकाः प्रादयश्च समर्थेन समस्यन्ते' इति द्वितीयाध्यायोक्तेः प्राद्युपसर्गेषु पठितप्रतिशब्दस्याक्षपदेन तत्पुरुषसमासो नतु 'अक्षं प्रति प्रत्यक्षम्' इत्यव्ययीभावः । अव्ययीभावत्वे 'प्रत्यक्षम्' इत्येव निर्दिशेत् । 'अव्ययीभावश्च' इति सूत्रे 'अव्ययीभावो नपुंसकं स्यात्' इत्युक्तेरिति भावः । अव्ययीभाव एव कुतो नाश्रितो भाष्यकृता इत्यत आह– **अन्यथेति ।।** अव्ययीभावत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सूत्रेण विभक्तीनाम् सुपो अम्भावे, 'जगत्सत्यत्वग्राहिप्रत्यक्षस्य' इत्यादिनिर्देशो भगवत्पादीयप्रमाणलक्षणादावनुपपन्नः स्यादिति भाव इत्येके ।। प्राज्ञास्तु 'प्रत्यक्षावगमः' इत्यत्र षष्ठीसमासो नान्यः ।। अवगम्यते अनेनेति अवगमम्, प्रत्यक्षस्य अवगममिनि षष्ठी न श्रूयेत इत्यर्थः' इत्याहुः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। प्रादिसमास इति ।।** प्रति स्थितः अक्षमिति प्रत्यक्षार्थ इत्यादौ वृत्तिविषये स्थिताद्यर्थे वर्तमानानां प्रतीत्यादीनां अगतित्वेपि 'कुगतिप्रादयः' इत्यत्र प्रादिग्रहणात् द्वितीयान्ताक्षशब्देन समासवत् इहापि क्रान्तातीत्यादिपदसङ्ग्राह्यस्थिताद्यर्थे वर्तमानस्य प्रतिशब्दस्यागतित्वेपि 'कुगतिप्रादयः' इत्यत्र प्रादिग्रहणात् द्वितीयान्तेन अक्षशब्देन अत्यादयः क्रान्ताद्यर्थे द्वितीययेति प्रादिसमास इत्यर्थः ।। प्रति स्थित इत्युक्तिस्तु गताद्यर्थे वृत्तिं अस्वपदविग्रहेण नित्यसमासत्वं च सूचयितुम् । अक्षेषु इन्द्रियेषु प्रति स्थित इति भाष्यं तु फलितोक्तिपरम् । नतु विग्रहोपदर्शनपरमिति द्रष्टव्यम् ।।

नच प्रत्यक्षशब्देन प्रादिसमासोङ्गीकर्तुं शक्यते । तथासति प्रत्यक्षशब्दस्य अर्धपिप्पलीत्यादिवत् 'परवल्लिङं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गविधानेन नियतलिङ्गत्वापत्त्या प्रत्यक्षः अर्थः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानमिति अभिधेयलिङ्गत्वाभावापातादिति वाच्यम् । वार्तिककृता कात्यायनेन 'प्राप्तापन्नालंगतिपूर्वसमासेषु प्रतिषेधः' इति गतिसमासे परवल्लिङ्गताप्रतिषेधात् । गतिग्रहणस्यान्यस्यासम्भवेन प्राद्युपलक्षितायाः आकरे स्थितत्वात् प्रादिसमासस्य परवल्लिङ्गत्वाभावेन विशेष्यनिघ्नतया निष्कोषाम्बिरित्यादिवत् अभिधेयलिङ्गत्वोपपत्तेः । नच प्रादिसमासे 'कर्मप्रवचनीयानां समासः' इति कर्मप्रवचनीयस्य प्रतिशब्दस्य समासप्रतिषेधात् कथमत्राक्षशब्देन प्रतिशब्दस्य प्रादिसमासः स्यादिति वाच्यम् । 'लक्षणेत्थम्भूताख्यानभागवीप्सेत्यादिरूपकर्मप्रवचनीयत्वप्रयोजकस्यात्राभावेन अकर्मप्रवचनीयत्वात् प्रतिशब्दस्याक्षशब्देन समासोपपत्तेः ।।

नचैवमक्षमिति द्वितीयानुपपत्तिः । कर्मप्रवचनीययोगाभावेन कर्मप्रवचनीययुक्ते द्वितीया' इत्यनेन तदप्राप्तेः लक्षणान्तरस्य चाभावात् इति वाच्यम् । 'बुभुत्सितं न प्रतिभाति किञ्चन' इत्यादाविव उभसर्वतसोः कार्या इत्यादिवार्तिकृदुक्तरीत्या अकर्मप्रवचनीयप्रतिशेषयोगेपि द्वितीयाया उपपन्नत्वात् ।।

ननु अक्षस्याक्षस्य प्रत्यक्षमिति इति वात्स्यायनभाष्यकृदुक्तरीत्या विग्रहाश्रयणेनाव्ययीभावस्याप्यत्र वक्तुं शक्यत्वात् किं प्रादिसमासाश्रयणेन इत्यतः, तथासति प्रतिशब्दयोगे षष्ठ्या अविधानात् प्रति अक्षस्येति विग्रहे अक्षस्येति षष्ट्या अश्रवणप्रसङ्गात् न तथा विग्रहाश्रयणेनाव्ययीभावत्वमङ्गीकर्तुं शक्यमित्याह– **अन्यथेति** ।। यद्वा ननु अक्षं अक्षं प्रति वर्तत इति विग्रहाश्रयणेन प्रत्यक्षशब्दे अव्ययीभावस्यापि सति सम्भवे परित्यागायोगात् न तन्निवृत्तिसूचकप्रादिसमासाश्रयणं युक्तमित्यतः, तथासति उपकुम्भादिवत् नियतनपुंसकत्वेन विशेष्यनिघ्नत्वापत्त्या प्रत्यक्षोर्थः प्रत्यक्षा बुद्धिः इत्याद्यभिधेयलिङ्गता न स्यात् । इन्द्रियगुणकर्मसामान्येष्वतिव्याप्तिश्चेत्यादि दोषे सत्येव स्पष्टत्वात् शिष्यैरेवोह्यतामिति भावेन तमुपेक्ष्य तत्पक्षे उद्योतकरवार्तिकोक्तं दोषमेवाह– **अन्यथेति** ।। 'प्रत्यक्षस्य लक्षणमाह' इत्याद्यभियुक्तप्रयोगेष्विति शेषः ।। 'नाव्ययीभावादतोम्त्वमश्चम्याः' इति पञ्चम्या अमादेशनिषेधेपि 'तृतीयासप्तम्योर्बहुलम्' इति तृतीयासप्तम्योर्विकल्पेन तद्विधानेपि अन्यत्र नियमेनाभावविधानात् प्रत्यक्षमित्येव भाव्यत्वेन प्रत्यक्षस्येति षष्ठी न श्रूयेतेत्यर्थः ।।

यद्यपि प्रत्यक्षे प्रत्यक्षाणीति प्रथमा द्वितीयाद्विवचनबहुवचनत्वे चपरीक्षकप्रयोगेषु श्रूयत इति तदश्रवणमप्यापादयितुं शक्यम् । तथापि प्रत्यक्षस्येति प्रयोगस्य प्रायिकत्वात् तदश्रवणमेपापादितमिति द्रष्टव्यम् ।।

**भावरत्नकोशः (सु.टि.)**– 'प्रत्यक्षेण सुखादेरिवावगमो यस्य तत् प्रत्यक्षावगमम्' इति शङ्करभाष्यं सङ्क्षेपतोऽनुवदति– **प्रत्यक्षेणेति** ।। 'श्रुतेस्तु शब्दमूलत्वात्' इत्यधिकरणादौ भगवन्माहात्म्यस्य शास्त्रैकगम्यत्वोक्तेराह– **शास्त्रैकसमधिगम्यत्वादिति** ।। अहंवित्तिवेद्यजीवाभिन्नब्रह्मणोऽपि प्रत्यक्षावगमत्वमस्ति इत्यत आह– **अद्वैतोद्धारस्येति** ।। अद्वैताभिधानस्येत्यर्थः । **प्रमाणेति** ।। 'अहं संसारी दुःखी' इत्यादिसाक्षिप्रत्यक्षादिप्रमाणगोचरप्रत्यक्चैतन्यस्य ब्रह्माभेदोक्तेः तद्विरुद्धत्वादित्यर्थः ।

श्लोकः २

वक्ष्यमाणश्रुतिषु आत्मशब्दः परमात्मवाची । स एव च भाष्ये विशेष्याकाङ्क्षापूरक इति भावेनाह– **परमात्मेति** ।। प्रतिशब्दस्याव्ययत्वेन तस्याक्षशब्देन समासे अव्ययीभावत्वानुशासनेन 'अव्ययीभावश्च' इति नपुंसकत्वप्राप्तेः कथं पुंलिङ्गत्वम्? इत्यत आह– **प्रादीति** ।। 'कुगतिप्रादयः' इति शास्त्रादिति भावः । नन्वत्र सूत्रे 'प्रादयो गताद्यर्थे प्रथमया' 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' 'अवादयः क्रुष्टाद्यर्थे तृतीयया' 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति वाक्यैः प्रथमादिविभक्तियुक्तपदैरेव समासस्य नियमितत्वेन, सप्तम्यन्तेन कथं प्रतिशब्दस्य समास इति चेन्न । भाष्ये उक्तसौनागवचनानाम् 'प्रादयः क्तार्थे समस्यन्त इति वक्तव्यम्' इति वार्तिकविवरणरूपत्वस्योक्तत्वेन 'कुगतिप्रादयः' इति सूत्रेणैव 'प्रति स्थितः' इत्यर्थकस्य प्रतेः सप्तम्यन्तेनापि समाससम्भवात् । अत एव 'प्रायिकं चैतदुपाधिवचनम्, अन्यत्रापि समासो दृश्यते' इति वृत्तिकारः । कैयटोऽपि 'पूजादीनां प्रयोगविषयोपलक्षणार्थत्वाद् अन्यत्रापि समासो भवति' इत्याह ।

केचित्तु 'प्रतिस्थितोऽक्षाणि' इति विगृह्य 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासो विधेयः । अत एव 'अनुप्रवस्य' इत्यृग्भाष्ये 'महान् प्रति प्रतिस्थश्च' इत्यत्र 'सर्वान् वैरिणः प्रतितिष्ठतीति प्रति' इत्युक्तं टीकायाम् । भाष्यं तु फलितप्रदर्शनमिति तत्र सप्तमीश्रवणं नानुचितमित्याहुः । अव्ययीभावसमासत्वे बाधकमाह– **अन्यथेति** ।। अव्ययीभावाश्रयणे । 'प्रत्यक्षस्यैव मानत्वम्', 'जगत्सत्यत्वग्राहिप्रत्यक्षस्य वर्तमानमात्रग्राहित्वे' इत्यादिभगवत्पादीयप्रयोगे, 'प्रत्यक्षस्य लक्षणमाह' इत्याद्यभियुक्तप्रयोगे च षष्ठीश्रवणं न स्यात् । श्रूयते च सा । तेन ज्ञायते प्रादिसमास एवायमिति भावः । 'प्रत्यक्षम् इति प्रथमैकवचनम्, द्वितीयैकवचनं वा न श्रूयेत' इत्यवचनम् अव्ययीभावत्वेनव्यययीभावत्वे च रूपविशेषाभावात् । 'प्रत्यक्षे दर्शने, प्रत्यक्षाणि दर्शनानि इत्यादौ द्विवचनबहुवचने न श्रूयेत', 'प्रत्यक्षाय इति चतुर्थी न श्रूयेत' इत्यवचनमपि उक्तप्रयोगप्राचुर्याभावात् । 'तृतीया पञ्चमी सप्तमी वा न श्रूयेत' इत्यवचनमपि 'अपञ्चम्या' इति, 'तृतीयासप्तम्योः' इति चाव्ययीभावत्वपक्षेऽपि तृतीयादिविभक्तिश्रवणोपपत्त्या तच्छ्रवणस्यानव्ययीभावत्वाज्ञापकत्वात् 'षष्ठी न श्रूयेत' इत्येवोक्तम् इत्यभियुक्ताः ।

**भावदीपिका (श्री.टि.)**– ननु 'अहम्' इति प्रत्यक्षवेद्यजीवाभिन्नब्रह्मणोऽपि प्रत्यक्षगम्यत्वमस्त्येव इत्यत आह– **अद्वैतोद्गारस्येति** ।। ननु 'प्रत्यक्षं ब्रह्म' इति नपुंसकलिङ्गेन

प्रकृतत्वात् 'प्रत्यक्षम्' इति वक्तव्ये 'प्रत्यक्ष' इति कथं पुंलिङ्गनिर्देशः इत्यत आह– **प्रादिसमासोऽयमिति** ।। 'कु गतिप्रादयः' इत्यत्र 'प्रादयो गताद्यर्थे प्रथमया' इति विहितः समासः प्रादिसमासः । समासवृत्तिविषये गताद्यर्थे वर्तमानाः प्रादयो गतित्वाभावेऽपि प्रथमान्तेन समस्यन्त इत्यर्थः । एवं च वृत्तिविषयतया स्थितरूपार्थप्रदर्शनेन 'प्रगत आचार्यः प्राचार्यः', 'प्रगतः पितामहः प्रपितामहः' इत्यादाविव 'अक्षेषु प्रतिस्थितं ब्रह्म प्रत्यक्षम्' इत्ययमपि प्रादिसमास एवेत्यर्थः । ननु 'लक्षणेनाभिप्रती आभिमुख्ये' इति सूत्रेण 'अक्षं प्रति प्रत्यक्षम्' इत्यव्ययीभाव एवास्तु इत्यत आह– **नाव्ययीभाव इति** ।। अव्ययीभावत्वे बाधकमाह– **अन्यथेति** ।। अव्ययीभावत्वे 'प्रत्यक्षस्य लक्षणमाह' इत्यादिशास्त्रीयप्रयोगेषु 'प्रत्यक्षस्य' इति षष्ठी न श्रूयेतेत्यर्थः । तथा हि 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति पञ्चमीं विना अमादेशविधानात्, 'तृतीयासप्तम्योर्बहुलम्' इति तृतीयासप्तम्योर्विकल्पेन तद्विधानेऽपि, अन्यत्र नियमेन तद्विधानात् 'प्रत्यक्षम्' इत्येव स्यात्, न 'प्रत्यक्षस्य' इति षष्ठी । उपलक्षणमेतत् । 'प्रत्यक्षे' 'प्रत्यक्षाणि' इति प्रथमा द्वितीया द्विवचनबहुवचने, चतुर्थी षष्ठी द्विवचनबहुवचने च शास्त्रीयप्रयोगेषु न श्रूयेरन् इत्यपि द्रष्टव्यम् । 'प्रत्यक्षस्य' इति षष्ठीप्रयोगस्य प्रायिकत्वात् स्वपदेन ग्रहणम् इत्यवधेयम्, इत्येवम् अस्मदाचार्यकृतोपासनापादीयसुधाटिप्पण्यनुसारेण एतद्वाक्यार्थो द्रष्टव्यः । भाष्ये 'अक्षेषु प्रति प्रति प्रत्येकं प्रत्येकं प्रेरकत्वेन स्थित इति प्रत्यक्ष' इत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– ननु जीवस्य प्रत्यक्षत्वात् तदभिन्नब्रह्मणोऽपि प्रत्यक्षगम्यत्वमित्यत आह– **अद्वैतेति** ।। ब्रह्मेति प्रकृतत्वात् प्रत्यक्ष इति कथमित्यतोऽर्थपरामर्शोऽयमित्यभिप्रेत्याह– **परमात्मेति** ।। **प्रादिसमास इति** ।। ननु 'प्रादयो गताद्यर्थे प्रथमया । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अवादयः क्रुष्टाद्यर्थे तृतीयया । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । निरादयः क्रान्ताद्यर्थे पञ्चम्या' इत्यादिवाक्यैः 'कुगतिप्रादयः' इत्युक्तप्रादिसमासस्य नियमितत्वात् कथमत्र सप्तम्यन्तेन समास इति चेन्न । 'वाक्यानां प्रादीनामर्थविशेषे समासोदाहरणार्थत्वम्' इति कृष्णपण्डितोक्तेः 'कुगतिप्रादयः' इति सूत्रेणैव सप्तम्यन्तेनापि प्रादिसमासः । अत एव कुगतिसूत्रे प्रादयः क्तार्थे समस्यन्त इत्येव वार्तिकम् । एतदेव 'सौनागैर्विस्तरतरकेण पठितम्' इति भाष्यञ्च । ततश्च विभक्तिविशेषैरेव समास इति नियमाभावादुक्तं युक्तमिति । अव्ययीभावत्वे बाधकमाह– **अन्यथेति** ।। अव्ययीभावत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति सुपोऽमादेशप्राप्त्या प्रत्यक्षस्येति षष्ठीश्रवणं न स्यादित्यर्थः । उपलक्षणमेतत् । द्विवचनबहुवचनान्तं

श्लोकः २

चतुर्थ्यन्तं च न श्रूयेतेत्यपि ग्राह्यम् । बहुप्रयोगसिद्धत्वात् षष्ठीत्येवेक्तम् । प्रथमाद्वितीयैक-वचनान्तं तु न प्रत्युदाहर्तुं शक्यम् । अव्ययीभावत्वेऽनव्ययीभावत्वे चाविशेषात् । तृतीया-पञ्चमीसप्तम्यन्तमपि न प्रत्युदाहर्तुं युक्तम् । अव्ययीभावत्वेऽपि तृतीयादिश्रवणोपपत्तेः पञ्चम्या अमादेशनिषेधात् । तृतीयासप्तम्योः बहुलममादेशविधानादिति बोध्यम् ।

## भाष्यम्

**तथा च श्रुतिः 'यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरम् । यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' 'यो वाचि तिष्ठन्' 'यः चक्षुषि तिष्ठन्' इत्यादिः । 'य एषोऽन्तरक्षणि पुरुषो दृश्यते' इति च । 'अङ्गुष्ठमात्रः पुरुषः अङ्गुष्ठं च समाश्रितः' इति च । 'त्वं मनः, त्वं चन्द्रमाः, त्वं चक्षुरादित्यः' इत्यादेश्च मोक्षधर्मे ।।**

भावप्रदीपिका (प.टी.)– भगवतोऽक्षस्थतिः कुत इत्यत आह– **तथा चेति ।।** सर्वेन्द्रियगतत्वात् मुख्यप्राणस्य तदन्तर्गतत्वोक्त्या हरेस्तत्सिद्धिः ।।

प्रमेयदीपिका (ज.टी.)– परमात्मनोऽक्षेषु स्थितत्वे किं मानम्? इत्यत आह– **तथाचेति ।।** प्राण इति घ्राणाभिमानिनी देवतोच्यते । प्राणादन्तरः भिन्नः । अङ्गुष्ठेति कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । मन इत्यादेः मनआदिस्थ इत्यर्थः ।।

भावबोधः (र.टि.)– श्रुतौ यश्चक्षुषि तिष्ठन्नित्यादिवत् घ्राणस्यानुक्तेः प्राणशब्द एतत्पर इत्याह– **प्राण इतीति** ।। 'अन्तर्याम्यधिदैवादिषु' इति सूत्रानुसारेण देवतेत्युक्तम् । अनेन चक्षुरादिशब्दानामप्यभिमानिदेवतापरत्वमुक्तं भवति ।

भावदीपः (रा.टि.)– 'यं प्राणो न वेद' इति वाक्यं शेषोक्तिसार्थक्यायाह– **प्राण इतीति** ।। प्राणादेः जडत्वेन 'वेद' इत्यस्य अप्रसक्तनिषेधतापत्तेः 'अधिदैवादिषु' इति सूत्रकृता दैवपदोक्तेश्चेति भावः । एतेन वागादिकमप्यभिमानिदेवतापरं प्रायपाठाज्ज्ञातव्यमित्युक्तं भवति ।।

भावरत्नकोशः (सु.टि.)– ननु भगवतोऽक्षशब्दितेन्द्रियस्थितत्वे 'यः प्राणे तिष्ठन्' इति श्रुतिः न प्रमाणम् । वायुवृत्तिविशेषस्य प्राणस्येन्द्रियत्वायोगात्, प्राणस्य जडविशेषस्य 'न वेद'

इत्युक्तवेदननिषेधस्य अप्रसक्तप्रतिषेधायोगेन अयुक्तत्वाच्चेत्यत आह– **प्राण इति प्राणाभिमानिनी देवतेति** ।। तथा चोक्तदोषद्वयमलग्नकमिति भावः । एवमेव वागादिशब्दोऽपि तदभिमानिदेवतापर इति 'यं वाङ् न वेद' इत्यादि युज्यत इति ज्ञातव्यम् । भावप्रदीपिकायां तु सर्वेन्द्रियगतत्वान्मुख्यप्राणस्य, तद्गतत्वोक्त्या हरेः सर्वेन्द्रियस्थितत्वसिद्धिरिति 'यः प्राणे तिष्ठन्' इति श्रुतिगतप्राणशब्दो मुख्यप्राणार्थको व्याख्यातः ।

'अन्तरम् अवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यभिधानादिसिद्धनानार्थस्यापि अन्तरशब्दस्य प्रकृते बहिर्योगउपसंव्यानान्तर्ध्याद्यर्थग्रहणे प्राणशब्दात् पञ्चम्यनुपपत्तेर्भेदार्थत्वमभ्युपगम्य तं व्याचष्टे– **अन्तरो भिन्न इति** ।। 'अन्यारात्' इति शास्त्रात् तत्र पञ्चमी युक्तेति भावः । अन्तर्याम्यधिकरणचन्द्रिकायामपि 'अन्तरशब्दस्य विविक्तत्वमर्थः' इत्युक्त्वा 'पञ्चम्युपपपत्तिश्च' इत्युक्तम् । 'प्राणमन्तरो यमयति' इत्यत्रत्यान्तरशब्दस्तु 'अन्तः स्थित्वा रमणकृदन्तर' इति, 'बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः' इत्यनुभाष्यबृहद्भाष्यादौ व्याख्यातः । तथा च 'अन्तरः सन् प्राणं यमयति' इति श्रुतिखण्डार्थः स्पष्ट इति न व्याख्यातः ।।

'अक्षण्यन्तः पुरुषो दृश्यत इति दिव्यदृष्टिभिः' इति छन्दोगश्रुत्याऽपि चक्षुस्थितिरुच्यते । अङ्गुष्ठेतीति इति श्रुतौ 'अङ्गुष्ठं समाश्रितः' इत्यनेन कर्मेन्द्रियाधिष्ठातृत्वमुच्यते । तथा हि अङ्गुष्ठशब्दोऽङ्गवाची । अङ्गौ पाणिपादावयवे तिष्ठतीति अङ्गुष्ठः । 'सुपि स्थः' इति कः । 'अम्बाम्ब' इत्यादिना षत्वम् । अङ्गे पाणिपादे तिष्ठतीति अङ्गस्थः । स एव पृषोदरादिभावाद् अकारस्योकारे विकारे षत्वे च वा 'अङ्गुष्ठः' इत्यङ्गुष्ठशब्द आभिधानिकैर्व्युत्पादित इति । तेन तदधिष्ठानं पाणिपादं लक्षयित्वा तदितरवाक्पायुउपस्थाख्यकर्मेन्द्रियलक्षणाभ्युपगमे, तं समाश्रितः तदधिष्ठितः इत्युक्तार्थलाभ इति भावः । अथवा अङ्गुष्ठमात्रः पाण्याद्यङ्गे तिष्ठतीत्यङ्गुष्ठः, तत्त्वेन मीयते ज्ञायत इति बाहुलकात् कर्मणि 'हु या मा श्रु भसिभ्यः त्रन्' इति माते त्रन्प्रत्यये 'मात्र' इति रूपे च, 'अङ्गुष्ठश्चासौ मात्रः' इति बाहुलकादेव विशेषणयोः समासे 'कर्मेन्द्रियाधिष्ठातृतया प्रमाणसिद्धो भगवान् पुरुषः' इत्यर्थाद् उक्तार्थलाभ इति । अत्र पक्षे 'अङ्गुष्ठं तत्परिमाणावच्छिन्नहृदयदेशं समाश्रित' इति श्रुतिशेषार्थः । **मन इत्यादेरिति** ।। मोक्षधर्मे नारायणीये-

'प्राप्य श्वेतं महाद्वीपं नारदो भगवान् ऋषिः ।'

'भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुः समाहितः ।<br>स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ।।'

श्लोकः २

इत्युपक्रम्य 'त्वमोङ्कारस्त्वं तपस्त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुराद्यः' इत्यादि नारदस्तुति-वाक्यं पठितम् । तत्र मनसि स्थितो मनः, चन्द्रमसि स्थितश्चन्द्रमाः, चक्षुषि स्थितश्चक्षुरित्यर्थ इत्याद्यर्थ इत्यर्थः । अत्रान्तरिन्द्रियस्य सर्वेन्द्रियप्रधानत्वात्, चक्षुषश्च 'सर्वेन्द्रियाणां नयनं प्रधानम्' इति प्रसिद्ध्या स्वेतरप्रधानत्वात्, तदुभयग्रहणमेव सर्वेन्द्रियोपलक्षणमिति ज्ञान-कर्मेन्द्रियस्थितत्वं लभ्यते । 'ब्राह्मणो वै सर्वा देवता' इत्यादिवत् तत्स्थत्वात् ताच्छब्द्यम् । तथा चोक्तं वैयाकरणैः 'अग्नीध्रः शरणे रण् भत्वं च' इत्यत्र 'अग्निम् इन्द्धे अग्नीत्, तस्य स्थानमाग्नीध्रम्, तात्स्थ्यात् सोऽप्याग्नीध्रः' इति । 'गेहे कः' इत्यत्र 'तात्स्थ्याद् दाराः गृहा इति च' इति भावः ।

**भावदीपिका (श्री.टि.)**– श्रुतौ 'यश्चक्षुषि तिष्ठन्' इत्यादिवत् 'यो प्राणे तिष्ठन्' इत्यनुक्तेः प्राणशब्द एव तत्पर इत्याह– **प्राण इति प्राणाभिमानिनी देवतेति** ।। आहङ्कारिकप्राणाख्यो नासिक्यो वायुरिति सम्प्रदायविदः । अन्ये तु अयं नासिक्यो वायुः प्रवह इत्याहुः । एतन्न्यायात् चक्षुरादिशब्देनाप्यभिमानिदेवता एव ग्राह्याः । अन्यथा 'यं चक्षुर्न वेद' इत्याद्ययुक्तं स्यात् । 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इत्यत्राधिदैवपदप्रयोगाच्चेति द्रष्टव्यम् । 'यः प्राणमन्तरः' इत्यनेन पौनरुक्त्यपरिहारायाह– **भिन्न इति** ।।

**भावप्रकाशः (कृ.टि.)**– ननु भगवत इन्द्रियस्थत्वे प्रमाणं वक्तव्यम् । तत्कथं प्राणवायुस्थितत्वे तदुच्यत इत्यत आह– **प्राणाभिमानिनीति** ।। यं प्राणो न वेदेत्येतत् घटयितुमभिमानी देवतेत्युक्तम् । **प्रशस्तेन्द्रिय इति** ।। प्रशंसायां मतुब्विधानादिति भावः ।

## भाष्यम्

**'स प्रत्यक्षः प्रति प्रति हि सोऽक्षेष्वक्षवान् भवति य एवं विद्वान् प्रत्यक्षं वेद' इति सामवेदे ब्राभ्रव्यशाखायाम् । धर्मो भगवान् । तद्विषयं धर्म्यम् । सर्वं जगद्धत्त इति धर्मः । 'पृथिवी धर्ममूर्धनि' इति च प्रयोगात् मोक्षधर्मे । 'भारभृत् कथितो योगी' इति च । 'भर्ता सन् भ्रियमाणो बिभर्ति' इति च श्रुतिः । 'धर्मो वेदमग्र आसीन्न पृथिवी न वायुर्नाकाशो न ब्रह्मा न रुद्रो न देवा न ऋषयः सोऽध्यायत्' इति च सामवेदे बाभ्रव्यशाखायाम् ।। २ ।।**

**धृञ इति** ।। 'अर्ति स्तु सु हु सृ धृ क्षि क्षु भा या वा पदि यक्षि नीभ्यो मन्' इत्युणादिसूत्राद् 'धृञ् धारणे' इति धातोः कर्तरि मनूप्रत्यये सार्वधातुकलक्षणे गुणे, रपरत्वे 'धर्मः' इति रूपमिति भावः । 'धरतीति धर्मः' इति भाषणीये 'धत्ते' इति भाषणं धात्वो-रैकार्थ्याशयम् । 'सर्वं जगत्' इति तु धरणकर्मत्वेन योग्यतयाऽन्वितमिति भाष्यशेषः सुगमार्थ-त्वादव्याख्यातः । 'प्रयोगात्' इति पञ्चम्याः श्रवणाद् उक्तम्– **कुत इति** ।। **मोक्षधर्म इति** ।।

'क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः ।
वैजयन्त इति ख्यातः पर्वतप्रवरो नृप ।।'

इत्युपक्रमे वैजयन्तनामकपर्वतमुक्त्वा 'ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम्' इत्युपरि पर्वतपदं प्रयुज्य च, 'ततः खान्निपपातासौ पृथिवीधर्ममूर्धनि' इति प्रयोगः कृतः । तत्र पृथिवी-धर्मशब्दस्य पर्वतोऽर्थः । धरतीति धर्मः, पृथिव्या धर्मः पृथिवीधर्मः, तन्मूर्धनि इति व्युत्पत्तेः । अत एव 'पृथिवीधरः' इति प्रसिद्धिरिति भावेनार्थमाह– **पर्वतोपरीति** ।। 'पूरणगुण' इत्यत्र सदंशात् कृदव्ययग्रहणमिति शाब्दिकैरुक्तेरत्र समासः साधुः ।

'भारभृत्' इत्यत्र 'सर्वं भारं बिभर्ति' इति व्युत्पत्त्या सर्वधारकत्वमवगम्यते विष्णु-सहस्रनामसु इति भाष्यार्थः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतिं मनसि निधायाह– **सर्वत्रेति** ।। **भर्ता** सर्वस्य । 'सर्वं वाक्यं सावधारणम्' इति न्यायप्राप्तावधारण-व्यावर्त्यम्– **नेति** ।। **धर्मशब्दस्येति** ।। तथा गीतास्थधर्म्यशब्दान्तर्गतधर्मशब्दो न भगवद्वाचक इति शङ्कितुर्हृदयम् । भावप्रदीपिकायां तु 'सर्वं जगत्' इत्यत्र योग उक्तो भगवति । अत्र तु रूढिरप्यस्तीति वक्तुम् 'धर्मो वा' इति श्रुत्युदाहरणमित्युक्तम् । श्रुतिगतधर्मशब्दस्य पुंलिङ्गत्वाद् 'इदम्' इति कथं नपुंसकलिङ्गनिर्देश इति शङ्कां परिहर्तुमाह– **इदमग्रे अस्याग्र इति** ।। ऐकपद्याश्रयणान्नोक्तशङ्कावकाश इति भावः । **किन्न स्यादिति** ।। तत्रैव प्रसिद्धेरिति भावः । **अध्यायदितीति** ।। ध्यानस्य ज्ञानरूपत्वेन पुण्ये जडे तदयोगात्, न प्रकृते धर्मशब्दः पुण्यार्थ इति भावेन वाक्यशेषमुदाजहार भाष्यकार इत्यर्थः ।

**पुनरुक्तिरिति** ।। 'धर्म्यम्' इत्यस्य 'भगवद्विषयम्' इति व्याख्याने प्रत्यक्षावगमधर्म्य-शब्दयोरेकार्थत्वेन पुनरुक्तिप्रसङ्ग इत्यर्थः । तामुपपादयति– **ब्रह्मेति** ।। भाष्यानुसारेण 'भगव-द्विषयम्' इत्यनुवादे कार्येऽपि, 'ब्रह्मविषयम्' इत्यनुवादो ब्रह्मभगवत्पदयोः ऐकार्थ्यस्फोरणाय ।

श्लोकः ३

तच्च प्रत्यक्षावगमशब्देन पौनरुक्त्यं स्फुटयितुम् 'अवगतिसाधनत्वम्' इति वदन् गमेः करणे अप्प्रत्यये अवगमशब्दनिष्पत्तिरित्यभिप्रैति । तत् अवगतिसाधनत्वम् । स्वस्यैव स्वसाधनत्वस्यात्माश्रयदोषेणायोगादिति भावः ।। १-३ ।।

**भावदीपिका (श्री.टि.)**– ।। **अर्थः** अनपेतशब्दार्थः । **प्रसिद्धत्वादिति** ।। 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेनावक्तव्यत्वादित्यर्थः । **तद्विरुद्धत्वात्** ब्रह्मज्ञानविरुद्धत्वात् । तथा च ब्रह्मज्ञानस्य 'धर्म्यम्' इति प्रवृत्तधर्माविरुद्धत्वकथनं बाधितमिति भावः । **धृञ इति** ।। तथा च 'धृञ् धारणे' इत्यस्माद्धातोः औणादिके मन्प्रत्यये नकारलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे, 'उरण् रपर' इति रपरत्वे च 'धर्म' इति रूपं द्रष्टव्यम् । **पर्वतोपरीति** ।। पर्वताधारत्वेनेत्यर्थः । 'अयम् आर्योपरि तिष्ठति' इत्यादिप्रयोगात् । **भर्ता सन्नेवेति** ।। धारकः सन्नेवेत्यर्थः । **ध्रियमाणः** ध्रियमाणः । 'भर्ता सन्नेव' इत्येवकारव्यावर्त्यं दर्शयति– **नेति** ।। **इत्यस्येति** ।। धर्म्यपदेनोक्तस्येत्यर्थः । इत्यस्य चेति ।। प्रत्यक्षावगमशब्देनोक्तस्य चेत्यर्थः । **साधनत्वमिति** ।। अत एव पूर्वं 'प्रत्यक्षं ब्रह्मावगम्यते येन' इत्युक्तमिति द्रष्टव्यम् । तत् अवगतिसाधनत्वम् । ननु कथं न विरुद्धम् । एकस्मिन्नेव ज्ञाने साधनत्वसाध्यत्वयोरयोगादित्यत आह– **परोक्षज्ञानस्येति** ।। तथा च धर्म्यं ब्रह्मविषयं प्रत्यक्षावगमं ब्रह्मापरोक्षज्ञानसाधनं ज्ञानं परोक्षज्ञानं च प्रवक्ष्यमीति गीतार्थो द्रष्टव्यः ।। १-३ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **प्रसिद्धत्वादिति** ।। तथा च तत्कथनमयुक्तम् । अप्राप्तेऽर्थे शास्त्रमर्थवदिति न्यायादिति भावः । **धृञो मन्प्रत्यय इति** ।। अनेन धरतीति धर्म इत्येव व्युत्पत्तिः धत्त इति भाष्यं त्वर्थकथनमात्रमिति सूचयति । तथा च धृञ् धारण इत्यस्माद् अर्तिस्तु सु इत्याद्युणादिसूत्रेण मन्प्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे रपरत्वे च धर्म इति भवतीति भावः । **पर्वतोपरीत्यर्थ इति** ।। पृथिवीधर्मेत्यस्यार्थः **पर्वतेति** । तस्य पृथिवीधारकत्वात् । अत एव भूधर इति प्रसिद्धिः । मूर्धनीत्यस्यार्थः उपरीतीति विवेकः ।। २ ।।

## अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
## अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।। ३ ।।

भावरत्नकोशः (सु.टि.)– उक्तज्ञानस्यातिसुकरत्वे न कोऽपि संसारी स्यात् ? इत्यत उच्यते– **अश्रद्दधाना इति** ।। अस्य उपदिश्यमानस्य धर्मस्य जीवोद्धारकत्वेन धर्मशब्दार्थस्य

ज्ञानस्य । 'न लोक' इति निषेधः कारकषष्ठीविषय इति, नेह सम्बन्धसामान्यषष्ठीविषये प्रवर्तते। अत एव 'ब्राह्मणस्य कुर्वन्' 'नरकस्य जिष्णुः' इत्यादिप्रयोगः । अश्रद्दधानाः अविश्वसन्त इमं धर्ममास्तिक्येन अस्वीकुर्वन्त इत्यर्थः । धर्मस्य स्वरूपे फले च श्रद्धारहिता इत्यपि केचित् । मामप्राप्य मृत्युसंसारवर्त्मनि मृत्युरूपसंसारमार्गे निवर्तन्ते नितरां वर्तन्ते । अप्राप्य मां निवर्तन्ते । न तूर्ध्वं गच्छन्ति । निवर्तमानाश्च न क्वापि जोषमासते । किन्तु 'मृत्यु...' इत्युक्तसंसारमार्गे परिभ्रमन्तीत्यपि आहुः । तस्मात् ज्ञानं श्रद्धेयमिति विभावितमिति ।। ३ ।।

## मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
## मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।। ४ ।।

## भाष्यम्

**प्रत्यक्षावगमशब्देनापरोक्षज्ञानसाधनत्वमुक्तम् । तज्ज्ञानायाह**– मयेति ।। **तर्हि किमिति न दृश्यते ? इत्यत आह**– अव्यक्तमूर्तिनेति ।। **४ ।।**

भावप्रदीपिका (प.टी.)– मया ततम् इत्येतं श्लोकमवतारयति– **प्रत्यक्षेति ।। उक्तं** 'यस्य' इति शेषः। यदि सर्वगतस्तर्हि कुतो न दृश्यत इत्यतः अन्त्यपदमवतार्य व्याचष्टे– **तर्हीति** ।।

प्रमेयदीपिका (ज.टी.)– एवंतर्हि पुनरुक्तिः स्यात् । 'ब्रह्मविषयं ज्ञानम्' इत्यस्य 'ब्रह्मावगम्यते विषयीक्रियत अनेन ज्ञानेन' इत्यस्य च भेदाभावादित्यत आह– **प्रत्यक्षेति ।।** नावगमशब्देन विषयीकरणमुच्यते । किन्त्ववगतिसाधनत्वम् । नच ज्ञानस्य तद्विरुद्धम् । परोक्षज्ञानस्यापरोक्षज्ञानसाधनत्वोपपत्तेरिति भावः । 'ज्ञानं विज्ञानसहितं प्रवक्ष्यामि' इति प्रतिज्ञाय **यज्ज्ञात्वा** इत्यादिना तत्प्रशंसादिकमुक्तम् । अतो **मया ततम्** इत्यादिकमपि किं तथाभूतमेव किञ्चित्? उत प्रतिज्ञातमुच्यते? इति शङ्कायामाह– **तदिति ।।** प्रतिज्ञातमित्यर्थः । यस्य अपरोक्षज्ञानसाधनत्वमुक्तं तदिति वा । कृत्स्नाध्यायप्रतिपाद्योक्तिरियम् । विशेषणवैयर्थ्यमाशङ्क्याह– **तर्हीति ।।** सर्वव्यापी चेदित्यर्थः । न दृश्यते 'सर्वत्र' इति शेषः ।। ४ ।।

श्लोकः ४

**भावदीपः (रा.टि.)**– ।। **एवं तर्हीति** ।। प्रत्यक्षावगमधर्म्यपदयोः भाष्योक्तव्याख्यानपक्षे न पुनरुक्तिः धर्म्यपदस्य प्रत्यक्षावगमशब्देनेत्यर्थः । क्रमेण द्वयोरैकार्थ्यं व्यनक्ति– **ब्रह्म इत्यादिना** ।। **तथाभूतमेवेति** ।। प्रशंसाभूतमेवेत्यर्थः । यच्छब्दाध्याहारेण भाष्यं योजयति– **यस्येति** ।। आदिपदोक्तिराह– **कृत्स्नेति** ।। **विशेषणेति** ।। गीतायाम् 'अव्यक्तमूर्तिना' इति विशेषणेत्यर्थः ।। ४ ।।

**भावदीपिका (श्री.टि.)**– ।। 'प्रशंसादिकम्' इत्यत्रादिपदेन अश्रद्दधानानां निन्दा ग्राह्या । **तथाभूतमिति** ।। प्रशंसादिरूपमित्यर्थः । 'उत प्रतिज्ञातं किञ्चिदुच्यते' इत्यन्वयः । **विशेषणेति** ।। 'अव्यक्तमूर्तिना' इति विशेषणेत्यर्थः ।। ४ ।।

**भावरत्नकोशः (सु.टि.)**– 'तत्प्रशंसादिकम्' इत्यत्रादिपदेन 'अश्रद्दधानाः' इति श्लोकोक्तनिन्दासङ्ग्रहः । **तथाभूतं** प्रशंसादिरूपम् एव । किञ्चित् 'उच्यते' इत्याकृष्यते । परामर्शसौकर्याय 'प्रत्यक्ष' इत्यादिपूर्ववाक्यं 'यस्य' इत्यध्याहृत्य उत्तरवाक्येन सह प्रकारान्तरेण योजयति– **यस्यापरोक्षेति** ।। 'मया ततम्' इत्यादेः 'अहं क्रतुः' इत्यन्तस्य ज्ञान-प्रतिपादकत्वात् 'ज्ञानमाह' इत्येव वक्तव्ये किमिति आदिपदम् ? इत्यत आह– **कृत्स्नेति** ।। 'अहं क्रतुः' इत्यन्तं ज्ञानप्रतिपादकम्, तत उत्तरं विज्ञानप्रतिपादकम् । यद्वक्ष्यति 'प्रतिज्ञातं विज्ञानमाह' इति । अतोऽत्र आदिपदं सर्वाध्यायार्थसङ्ग्रहार्थं प्रयुक्तमिति भावः । **विशेषणेति** ।। अस्मच्छाब्दर्थस्य भगवत 'अव्यक्तमूर्तिना' इति यद् विशेषणं तद्वैयर्थ्यमिति भावः । 'न दृश्यते' इत्यत्र 'भवान्' इति शेषः । ननु 'किमिति न दृश्यते' इति प्रश्नोऽनुपपन्नः । पुरतो दृश्यमानत्वात्, इत्यतः शेषोक्त्या भाष्यं घटयति– **सर्वत्रेतीति** ।।

**गीताश्लोकाक्षरार्थस्तु**– प्रतिज्ञातं ज्ञानमुच्यते– **मयेत्यादिना** ।। अव्यक्ता अतीन्द्रिया मूर्ति देहो यस्य स तथा तेन, मया इदं चराचरात्मकं सर्वं जगत् ततम् व्याप्तम् । जगद्व्यापी चेत् त्वं तर्हि सर्वत्र किं न दृश्यसे ? इत्याशङ्कापनोदाय 'अव्यक्तमूर्तिना' इत्युक्तम् । मत्स्थानि मयि उपजीवनेन स्थितानि । चशब्द तुशब्दार्थः । अहं तेषु भूतेषूपजीवनेन नावस्थितः । 'ततम्' इत्युक्त्या जगत आधारत्वं स्वस्याधेयत्वं च प्रतीतम् । तत्प्रतीतिं निरसितुम् 'मत्स्थानि' इत्युक्तमिति स्वामिनः ।। ४ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **ब्रह्मावगम्यत इति** ।। गीताप्रत्यक्षशब्दार्थानुवादः–

**ब्रह्मेति** । अवगमशब्दार्थानुवादो गम्यत इत्यादि । **तत्प्रशंसादिकमिति** ।। आदिपदादश्रद्दधाना इति श्लोकार्थसङ्ग्रहः । ननु मया ततमित्यादेः ज्ञानप्रतिपादकत्वात् ज्ञानमाहेति वक्तव्ये व्यर्थमादिपदमित्यत आह– **कृत्स्नाध्यायेति** ।। ४ ।।

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममाऽत्मा भूतभावनः ।। ५ ।।**

## भाष्यम्

**मत्स्थत्वेऽपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह– न चेति ।। 'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च' इति हि मोक्षधर्मे । 'सञ्ज्ञासञ्ज्ञ' इति च । ममाऽत्मा देह एव भूतभावनः । 'महाविभूते माहात्म्यशरीर' इति हि मोक्षधर्मे ।। ५ ।।**

भावप्रदीपिका (प.टी.)– 'मत्स्थानि सर्वभूतानि' इत्युक्त्वा, कथं 'न च मत्स्थानि' इत्युच्यत इत्यत आह– **मदिति** ।। भगवतः स्पर्शाद्यभावे प्रमाणमाह– **नेति** ।। तर्हि तज्ज्ञानं कथमित्यत आह– **सञ्ज्ञेति** ।। सञ्ज्ञा वेदस्तेन ज्ञानं यस्य तत्सम्बोधनम् । 'अहं भूतभावनः' इत्यनुक्त्वा 'मम'इति कथमुच्यत इत्यत आह **ममेति** ।। अत्रैव प्रमाणमाह– **महाविभूत** इति ।।

प्रमेयदीपिका (ज.टी.)– 'मत्स्थानि सर्वभूतानि' इत्युक्त्वा पुनः कथं 'नच मत्स्थानि' इति व्याहतमुच्यते? इत्यत आह– **मत्स्थत्वेऽपीति** ।। **स्पृष्ट्वेति** ।। स्पर्शनेन्द्रियेण तां ज्ञात्वा अन्योन्यधर्मसङ्क्रान्तिमासाद्य चेत्यर्थः । परमेश्वरस्य स्पर्शनाद्य-वेद्यत्वे प्रमाणमाह– नेति ।। सञ्ज्ञया शब्देनैव सञ्ज्ञा सम्यज्ज्ञानं यस्यासौ तथोक्तः । मत्स्थानि इत्यादेरुक्तत्वाद् भूतभृत्त्वादिकं पुनरुक्तमित्यत आह– **ममेति** ।। प्राग् भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनः अव्यक्तमूर्तिना इति मूर्तावुक्तायां साऽस्म-दादीनामिव भिन्नेति भ्रान्तिनिरासार्थं स्वलक्षणं स्वदेहस्योच्यत इत्यर्थः । भूतभावन-त्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति भावेनोक्तम्– **भूतेति** ।। स्यादिदं व्याख्यानं यदि

श्लोकः ५

भगवद्देहस्येदं भवेत् । तदेव कुतः? इत्यत आह– **महाविभूते इति** ।। माहात्म्यमेव शरीरं यस्यासौ तथोक्तः ।। ५ ।।

**भावबोधः (र.टि.)**– ननु पृथिवी तद्गतभूतानां परस्परसम्बन्धवत् विष्णुतद्गतभूतानामपि सम्बन्धोऽस्त्येवातः कथं व्यतिरेकदृष्टान्तत्वमित्यत आह– **स्पर्शनेन्द्रियेणेति** ।। **धर्मसङ्क्रान्तिमिति** ।। पृथिवीगतगन्धादेर्भूतशरीरे भूतशरीरगतगन्धादेस्तु पृथिव्यां प्रतीतेरिति भावः ।। ४, ५ ।।

**भावदीपः (रा.टि.)**– 'यथा आकाश' इत्यग्रेतनदृष्टान्तानुरोधेनाऽह– **अन्योन्येति** ।। औष्ण्यशैत्यादिधर्मसम्बन्धमित्यर्थः ।। **स्वलक्षणमिति** ।। स्वकीयमसाधारणधर्ममित्यर्थः ।।५।।

**भावरत्नकोशः (सु.टि.)**– ननु पृथिवीतद्गतभूतानां सम्बन्ध इव भगवत्तद्गतभूतानामपि सम्बन्धोऽवर्जनीय एवेति कथं 'न तथा मयि' इत्युक्तिः ? इत्यत आह– **स्पर्शनेन्द्रियेणेति** ।। तां पृथिवीम् इति योग्यकर्मसंयोजनम्, '...ज्ञात्वा' इत्यन्तं 'सृष्ट्वा' इत्यस्य व्याख्यानम् । '...आसाद्य' इत्यन्तं तु तत्तात्पर्यरूपम् । **धर्मसङ्क्रान्तिं** पृथिवी तद्गतभूतशरीरयोः गन्धादिधर्मसमाश्लेषम् । नन्वाधाराधेयभावे सति अन्योन्यधर्मसङ्क्रान्तिरवर्जनीयैव । किञ्चास्माकं स्पर्शनेन्द्रियेण तदज्ञानेऽपि केषाञ्चित्स्यात् । तेषामपि तदभावे न प्रमाणम् ? इत्यतो 'न दृश्यः' इत्यादिप्रमाणोदाहरणमिति भावेन तदवतारयति– **परमेश्वरस्येति** ।। 'न दृश्यश्चक्षुषा' इति श्रवणादुक्तम्– **स्पर्शनाद्यवेद्यत्व इति** ।। अदृश्यत्वस्यादित्वेऽपि प्रस्तुतत्वात् स्पर्शनं स्वशब्देनोपात्तम् । अदृश्यत्वं त्वादिपदेनेति ज्ञातव्यम् ।

इन्द्रियादिप्रमाणागोचरस्य कथं प्रमेयत्वं स्यात् ? इत्यत आह – सञ्ज्ञासञ्ज्ञेति इति भावप्रदीपिका । तद्वाक्यमप्रतीतेर्व्याचष्टे– **सञ्ज्ञयेति** ।। 'सञ्ज्ञायत अनेन शब्देन' इति व्युत्पत्त्या सञ्ज्ञाशब्दो वेदलक्षणशब्दपरः, सावधारणश्च । द्वितीयसञ्ज्ञाशब्दोऽपि सम्पूर्वाज्ज्ञानातेः 'आतश्चोपसर्गे' इत्यङ्प्रत्यये रूपम् । 'यस्य' इति कर्मणि षष्ठी । 'तथोक्तः' इत्यतः परं 'तत्सम्बुद्धिः' इति योज्यम् । तथा च भावप्रदीपिका 'तत्सम्बोधनम्' इति । मोक्षधर्मे च 'नमस्ते देवदेवेश' इत्युपक्रम्य 'सप्तमहाभागयाम्य सञ्ज्ञासञ्ज्ञ तुषित महातुषित' इत्यादिना सम्बोधनरूपं भगवत्कर्मकं नारदस्तवनम् आम्नायते ।

'इत्यादेः' इत्यत्रादिपदेन 'न चाहं तेष्ववस्थितः' इत्यस्य ग्रहः । 'इत्यादिकम्' इत्यत्रादिशब्देन 'न च भूतस्थः' इत्यस्य ग्रहणम् । कृतचोद्यं परिहर्तुं भाष्यतात्पर्यमाह– **प्रागिति** ।। **सा** मूर्तिः । **स्वलक्षणं** स्वस्य भगवतोऽसाधारणो धर्मः, भूताधारत्वादिकं स्वलक्षणम् । मूर्तावुक्तेः स्वाभेदसिद्धेर्न भेदभ्रान्तिर्भवितुमर्हतीति भावः । **भूतभावनत्वस्य** सर्वभूतोत्पादनस्य । अत्र पक्षे न भगवत्परत्वेऽपि पुनरुक्तिशङ्का । 'ममात्मा मम स्वरूपमहमिति यावत्' इत्युक्तं भवतीति आहुः । **माहात्म्यं** भूताधारत्वादिरूपं भूतभावनत्वादिरूपं च । उक्तमाहात्म्यसम्पन्नशरीरकत्वस्यात्र विवक्षितत्वात् प्रमाणेन प्रकृतार्थसिद्धिरिति हृदयम् । स्पष्टं चैतद् उत्तरप्रस्थाने । 'तथोक्तः' इत्यनन्तरं 'तत्सम्बुद्धिः' इति शेषः । 'महाविभूते माहात्म्यशरीर' इति मोक्षधर्मे सम्बुद्ध्यन्तस्यैव पाठात् ।। ५ ।।

'भूतानि मयि स्थितानि' इत्युक्तौ अर्जुनस्य हृदये काचन शङ्का प्राप्ता 'यथा पृथिव्यां स्थितानि भूतानि स्पर्शनेन्द्रियेण तां ज्ञात्वा, अन्योन्यधर्मसङ्क्रान्तिमासाद्य च वर्तन्ते, तथा वर्तन्ते चेत्, अनुपलम्भबाधः' इति, तामिमां शङ्कां परिहर्तुमुच्यते– **न च मत्स्थानीति** ।। मयि स्थितत्वेऽप्यन्योन्यधर्मसङ्क्रान्तिमासाद्य न तिष्ठन्ति । मम स्पर्शनाद्यवेद्यत्वादेर्न स्पृश्यः । 'स्पर्शनेन' इत्यादिमानसिद्धतयाऽचिन्त्यशक्तेरसङ्गतत्वात्, इति भावेनोक्तम्– **ऐश्वरम्** ।। ईश्वरस्यायं स्वरूपभूतः ऐश्वरः, तं योगं सामर्थ्यं मम पश्य इति । 'अव्यक्तमूर्तिना' इति मूर्तावुक्तायां साऽस्मदादीनामिव भिन्ना, इति भ्रमनिरासार्थं स्वलक्षणं भूताधारत्वादिकं स्वदेहस्याप्युच्यते– **भूतभृदिति** ।। ममात्मा देहः भूतभावनः भूतानि भावयति उत्पादयतीति व्युत्पत्त्या सर्वभूतानामुत्पादयिता । प्राग्भूताधारत्वादिकं स्वस्योक्तम् । अत्र पुनः, उक्तभेदभ्रमनिरासार्थं देहस्योच्यत इति न पुनरुक्तिः । किञ्च भगवत उक्तभूताधारत्वानुवादेन भूतोत्पादकत्वस्याधिकस्यात्र निरूपणं क्रियत इति न पुनरुक्तिः । अयं चार्थो भूतभावनत्वस्याधिकस्योक्तेश्च न पुनरुक्तिरिति टीकातोऽवगम्यते ।। ५ ।।

**भावदीपिका (श्री.टि.)**– ननु पृथिव्यास्तद्गतभूतानां च परस्परसम्बन्धवत् विष्णोस्तद्गतभूतानां च परस्परसम्बन्धोऽस्त्येव, अतः कथं व्यतिरेकदृष्टान्तत्वम् ? इत्यत आह– **स्पर्शनेन्द्रियेणेति ।। अन्योन्यधर्मसङ्क्रान्तिमिति** ।। पृथ्वीगतगन्धादेर्भूतशरीरे, भूतशरीरगतगन्धादेस्तु पृथिव्यां प्रतीतेरिति भावः । **इदम्** भूतभावनत्वम् । **माहात्म्यम्** भूतभावनत्वरूपम् ।। ५ ।।

श्लोकः ६

भावप्रकाशः (कृ.टि.)– ननु पृथिवीतद्गतभूतवद्विष्णुतद्गतभूतानामपि सम्बन्धसत्त्वात् कथं न तथा मर्यात्युक्तमित्यत आह– **स्पर्शनेन्द्रियेणेति** ।। **सङ्कातिमिति** । पृथिवीतद्गतमूतयोरन्योन्यं गन्धादिधर्मसङ्क्रमवत् सङ्क्रान्तिमित्यर्थः ।। ५ ।।

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ।। ६ ।।**

## भाष्यम्

**'मत्स्थानि', 'नच मत्स्थानि' इत्यत्र दृष्टान्तमाह– यथाऽऽकाशस्थित इति ।। न हि आकाशस्थितो वायुः स्पर्शाद्याप्नोति ।। ६ ।।**

भावप्रदीपिका (प.टी.)– भगवदाश्रयत्वेऽप्यस्य स्वस्थितत्वं कथम् ? इत्याशङ्क्य, उत्तरश्लोकमवतार्य व्याचष्टे– **मदिति** ।।

प्रमेयदीपिका (ज.टी.)– एकमेकत्राश्रितमित्यत्रासम्भावनाऽभावात् किं तद्दृष्टान्तत्वोक्त्या? इत्यत आह– **मत्स्थानीति** ।। तत्र स्थितत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादावित्यर्थः । तदत्र न प्रतीयत इत्यतो व्याचष्टे– **न हीति** ।। स्पर्शादीति तद्धर्मोपलक्षणम् ।। ६ ।।

भाववोधः (र.टि.)– ।। **तद्धर्मोपलक्षणमिति** ।। परान्वयाद्वाव्यादौ शब्दादिसद्भावेऽपि आकाशे स्पर्शाभावादिति भावः ।। ६ ।।

भावदीपः (रा.टि.)– 'इत्यत्र' इत्यन्तस्य तात्पर्यार्थमाह– **तत्र स्थितत्वेऽपीत्यादि** ।। **तदिति** ।। अन्योन्यधर्मसङ्क्रान्त्यादौ दृष्टान्तत्वमित्यर्थः ।। ६ ।।

भावरत्नकोशः (सु.टि.)– 'मत्स्थानि''न च मत्स्थानि' इत्युभयस्य दृष्टान्तमाह' इति भाषणमयुक्तम् ? गीतायाम् 'मत्स्थानि' इत्यस्यैव दृष्टान्ताभिधानाद्, इत्याशङ्क्य 'न च मत्स्थानि' इत्यंशोक्तितात्पर्यमाह– **तत्र स्थितत्वेऽपीति** ।। 'मत्स्थानि' इत्यनेन तत्र स्थितत्वम्, 'न च मत्स्थानि' इत्यनेन तु तद्धर्मासङ्क्रान्तिरभिसंहिता । तत्र चासम्भावितत्वशङ्कायां

तद्व्युदासाय 'दृष्टान्तमाह' इति भाषणं युक्तमेवेति भावः । **तत्** अन्योन्यधर्मासङ्क्रान्त्यादि । ननु स्पर्शस्याकाशवृत्तित्वाभावात् तद्गतधर्मासङ्क्रान्त्युपपादनाय कथं भाष्ये स्पर्शग्रहणम् ? इत्यत आह– **स्पर्शादीति** ।। **तद्धर्मोपलक्षणमिति** ।। विपरीतलक्षणया स्पर्शशब्देन निःस्पर्शत्वं ग्राह्यम् । आदिशब्देन च शब्दगुणकत्वविवरादिरूपाकाशधर्मग्रह इत्यर्थः । अन्योन्यधर्मासङ्क्रान्तेः प्रस्तुतत्वाद् 'वायुधर्मस्पर्शम् आकाशो नाप्नोति' इति प्रतिपादनाय भाष्ये 'स्पर्शादि' इत्युक्तमिति नासम्भवदुक्तिकत्वं तस्येति केचित् ।।

'तत्र स्थितत्वेऽप्यन्योन्यधर्मासङ्क्रान्तिः' इत्येतद् दृष्टान्तेनोपपाद्यते– **यथेति** ।। नित्यं सदा आकाशे स्थितः । तत्रावस्थानं च नैकदेशेन, किन्तु सर्वत्र गतः । सर्वत्रपन्नयोरुपसङ्ख्यानात् सर्वत्रशब्द उपपदे गमेर्डः । एवंविधोऽपि महान् वायुः नाकाशधर्मं निःस्पर्शत्वादिकम् आप्नोति । तथा सर्वाणि भूतानि मत्स्थानि अपि अन्योन्यधर्मसङ्क्रान्तिरहितान्येव तिष्ठन्ति इति उपधारय अवधारयेति ।। ६ ।।

**भावदीपिका (श्री.टि.)**– नन्वन्योन्यधर्मासङ्क्रान्तौ कथमिदमुदाहरणम् ? वायुनिष्ठ-स्पर्शाख्यधर्मसङ्क्रमणस्याकाशे स्पर्शाभावेनाभावेऽपि, आकाशनिष्ठधर्मासङ्क्रमणं वायौ कथम् ? 'परान्वयाच्छब्दवांश्च' इति न्यायेन, आकाशनिष्ठशब्दाख्यधर्मसङ्क्रामणस्य सत्त्वात् । 'न हि स्पर्शाद्याप्नोति' इति चायुक्तम् । आकाशे स्पर्शाभावेन वायुः आकाशनिष्ठस्पर्शादि नाप्नोतीति तन्निषेधायोगात् ? इत्यत आह– **स्पर्शादीति** ।। **तद्धर्मोपलक्षणमिति** ।। आकशनिष्ठ-शब्दातिरिक्त 'भूतमप्यसितम्' इति प्रमाणसिद्धनीलरूपत्व आकाशत्वशब्दोपादानकृत्त्वादि-धर्मोपलक्षणं कार्यम् । जहत्स्वार्थलक्षणेयम् । तथा च 'न ह्याकाशस्थितो वायुः स्पर्शाद्याप्नोति' नीलरूपत्वाद्याकाशनिष्ठधर्मसङ्क्रान्तिं नाप्नोतीति यावत् । तथा आकाशः वायुनिष्ठस्पर्शनी-रूपत्वादिसङ्क्रान्तिं च नाप्नोतीति च द्रष्टव्यम् । तथा चान्योन्यधर्मासंक्रान्तावुदाहरणं सुयुक्तमिति भावः ।। ६ ।।

**भावप्रकाशः (कृ.टि.)**– ननु 'मत्स्थानि न च मत्स्थानि' इत्युभयस्य दृष्टान्तमाहेत्य-युक्तम् । गीतायां मत्स्थानीत्यत्रैव दृष्टान्तप्रतिपादनादित्यत आह– **तत्र स्थितत्वेऽपीति** ।। ननु स्पर्शस्याकाशावृत्तित्वात् तद्धर्मासङ्क्रान्त्युपादनाय कथं स्पर्शग्रहणमित्यत आह– **तद्धर्मेति** ।। आकाशधर्मेत्यर्थः । भाष्ये त्वन्योन्यधर्मसङ्क्रान्त्यभावस्याभिप्रेतत्वाद्वायुधर्मं आकाशो न सङ्क्रा-मतीति प्रदर्शनाय स्पर्शग्रहणमिति बोध्यम् ।। ६ ।।

श्लोकः ७

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्।। ७ ।।

## भाष्यम्

**ज्ञानप्रदर्शनार्थं प्रलयादि प्रपञ्चयति– सर्वभूतानीत्यादिना ।। ७ ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **ज्ञानमिति** ।।

प्रमेयदीपिका (ज.टी.)– यथा **'मया ततम्'** इत्याद्युक्तोपपादनार्थान्युत्तरवाक्यानि न तथा सर्वभूतानि इत्यादि । किन्तु स्वतन्त्रमेव ज्ञानप्रतिपादकमिति भावेनाऽह– **ज्ञानेति ।। प्रलयादीति ।।** तत्कारणत्वम् । **'प्रकृतिं स्वामवष्टभ्य'** इति वचनात् ।।७।।

भावदीपः (रा.टि.)– ।। आदिपदार्थमाह– **तत्कारणत्वमिति** ।। ७ ।।

भावरत्नकोशः (सु.टि.)– ।। **उक्तोपपादनार्थानीति** ।। 'मया ततम् इदम्' इति 'मत्स्थानि भूतानि' 'न च मत्स्थानि' इति चोक्तार्थानाम् 'पश्य मे योगमैश्वरम्' इति हेतु-कथनेन, 'यथाऽऽकाशस्थितः' इति दृष्टान्ताभिधानेन चोपपादनादिति भावः । **ज्ञानप्रतिपादनम्** ज्ञातव्यार्थोपदेशः । जगद्धर्मस्य प्रलयादेर्भगवन्माहात्म्यत्वाभावाद् अस्याध्यायस्य च भगव-न्माहात्म्यस्पष्टनार्थत्वात् कथं 'प्रलयादि प्रपञ्चयति' इति भाषणम् ? इत्यत आह– **तत्कारणत्वमिति** ।। अत एव 'विसृजामि' इति असकृत्सर्जनकर्तृत्वमुच्यत इति । 'सर्वभूतानि प्रकृतिं यान्ति' इत्यत्रापि 'मया' इति संयोजने प्रलयकारणत्वमेव भाष्याभिमतमिति भावः ।। ७ ।।

गीताश्लोकार्थः 'सर्वभूतानि' इत्यादेः 'बहुधा विश्वतोमुखम्' इत्यन्ताया नवश्लोक्या अक्षरार्थस्तुप्रतिज्ञातज्ञानप्रदर्शनाय 'मया' इत्यादिना भगवतो व्याप्तत्वसर्वाधारत्वाद्युक्त्वा 'न च' इत्यादिश्लोकद्वयेनोपपाद्य च, अधुना प्रतिज्ञातज्ञानप्रदर्शनार्थं भगवतः प्रलयादिकारणत्वं प्रपञ्च्यते– **सर्वभूतानीति** ।। सर्वाणि भूतानि सशरीरजीवजातानि कल्पक्षये प्रलयकाले मामिकां मदधीनां प्रकृतिं त्रिगुणात्मिकां यान्ति तत्र लीनानि भवन्ति । पुनश्च तानि कल्पादौ सृष्टिकाले विशेषेण विविधतया च सृजामि इत्युक्तमेव ।। ७ ।।

भावदीपिका (श्री.टि.)– ।। तत्कारणत्वमिति ।। गीतायां तस्यैवाभिधानादिति भावः ।। ७ ।।

भावप्रकाशः (कृ.टि.)– ननु प्रलयादेः विष्णुमाहात्म्यत्वाभावात् कथं ज्ञानप्रदर्शनार्थमित्युक्तमित्यत आह– तत्कारणत्वमिति ।। ७ ।।

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।। ८ ।।**

## भाष्यम्

**प्रकृत्यवष्टम्भस्तु यथा कश्चित् समर्थोऽपि पादेन गन्तुं लीलया दण्डमवष्टभ्य गच्छति । 'सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि' इति मोक्षधर्मे ।**

**'सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि' इति च ।**

**'विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ।**
**प्रधानविनियोगस्थः परं ब्रह्माधिगच्छति' इति च ।।**

**'न कुत्रचिच्छक्तिरनन्तरूपा विहन्यते तस्य महेश्वरस्य ।**
**तथाऽपि मायामधिरुह्य देवः प्रवर्तते सृष्टिविलापनेषु'**
**इति ऋग्वेदखिलेषु ।**

**'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे' इति भागवते ।**

**'अथ कस्मादुच्यते परं ब्रह्मेति । बृंहति बृंहयति' इति च आथर्वणे ।**

**'पराऽस्य शक्तिर्विविधैव श्रूयते' इति च ।**

भावप्रदीपिका (प.टी.)– ज्ञानं नाम ज्ञेयम् । प्रकृत्यवष्टम्भेन हरिः सृजति चेदस्वतन्त्र इत्यत आह– **प्रकृतीति** ।। तथा इति शेषः । अस्वातन्त्र्यादेव

श्लोकः ८

**प्रकृत्यवष्टम्भः** किं न स्यात् ? इत्यत आह– **सर्वेति** ।। सर्वभूतगुणास्तदधीनाः यतोऽतस्तं सर्वभूतविलक्षणं जानीहीत्यर्थः । पञ्चभूततन्मात्राजीवेश्वराख्यानि सप्त सूक्ष्माणि । एवं शुष्वेत्यादौ सकलगुणपूर्णत्वाद् भगवतो नास्वातन्त्र्यमित्यर्थः ।।

**प्रमेयदीपिका (ज.टी.)–** तद्विकलस्य भगवतो न सामर्थ्यमिति प्रतीतिनिरासार्थमाह– **प्रकृतीति** ।। **'तथा लीलयैव, न तु केवलस्य सामर्थ्याभावात्'** इति शेषः । कुत एतत्? भगवतः सर्वसामर्थ्यसम्पूर्णत्वस्य प्रमितत्वाद् इत्याह– **सर्वेति** ।। **सर्ववस्तुसामर्थ्यैः । एवं भूतवत् पारतन्त्र्याद्युपेतम् । किन्तु दैवं देवोत्तमम् । पञ्च महाभूतानि महदहङ्कारौ च सप्त सूक्ष्माणि । 'सर्वज्ञता तृप्तिः'** इत्युक्तप्रकारेण **षडङ्गम्** । **प्रधानस्य मूलप्रकृतेः विनियोगः कार्येषु यो व्यापारः । तत्स्थः** तज्ज्ञानी । **मायामधिरुह्य** प्रकृतिमवष्टभ्य ।।

**भावदीपः (रा.टि.)–** 'एवम्' इत्यनुवादः,'भूतवत्' इत्यादि व्याख्या ।। **सर्वज्ञता तृप्तिरित्युक्तप्रकारेणेति** ।। फलितार्थमाह– **तज्ज्ञानीति** ।। प्रधानविनियोगज्ञानीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** 'प्रकृत्यवष्टम्भस्तु' इति भाष्यान्वयाय शेषमपेक्षितमनुवर्तयन्नाह– **तथा लीलयैवेति** ।। कृतचोद्यं परिहर्तुं न्यायप्राप्तैवकारव्यावर्त्यमाह– **न त्विति** ।। **एतत्** 'लीलयैव प्रकृत्यवष्टम्भः, न तु सामर्थ्याभावेन' इत्येतत् । सर्वसामर्थ्यसम्पूर्णत्वे नेदं प्रमाणम् ? इत्यतो भूतशब्दो वस्तुमात्रोपलक्षणमिति व्याचष्टे– **सर्ववस्तुसामर्थ्यैरिति** ।। 'नैवम्' इति प्रमाणे 'एवम्' इत्यस्यार्थः– **भूतवदिति** ।। तत्तात्पर्यम्– **पारतन्त्र्याद्युपेतमिति** ।। 'सर्वभूतगुणैर्युक्तं दैवं मां ज्ञातुमर्हसि' इत्यर्धगतपञ्चादिशब्दान् व्याख्यास्यन् 'भूतवत् पारतन्त्र्याद्युपेततया ज्ञातुं नार्हसि' इत्युक्तौ, पुनः कथं ज्ञातव्यः इति पृच्छति– **किन्त्विति** ।। उत्तरमाह– **दैवमिति** ।। देवशब्दात् 'तत्रोत्तमः' इत्यर्थे 'शेषे' इति प्राप्ताणप्रत्ययापवादेन 'देवाद् यञञौ' इत्यञ्प्रत्यये 'दैवम्' इति रूपम् । 'अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः' इति पूर्वत्र पुरुषशब्देन भगवतः प्रस्तुतत्वात् 'सर्वभूतगुणैः सर्ववस्तुसामर्थ्यैः युक्तं देवोत्तमं मां ज्ञातुमर्हसि' इति श्लोकार्थात् तेन सर्वसामर्थ्यसम्पूर्णत्वमावेद्यत इति भावः । 'इति च' इति भाष्ये 'मोक्षधर्मे' इत्यस्यानुकर्षणार्थश्चकारः । **इत्युक्तेति** ।।

'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।।'

इति वचनोक्तप्रकारेण षडङ्गं महेश्वरं च विदित्वेत्यर्थः । **तत्स्थः** तत्रावस्थितिमान् इत्यस्य तात्पर्यम्– **तज्ज्ञानीति** ।। प्रमाणे 'अलुप्तशक्तिः' इति 'अनन्तशक्तिः' इति चोक्तशक्तेः षडङ्गेष्वङ्गत्वेन प्रविष्टतया सर्वसामर्थ्यसम्पूर्तिर्लभ्येति भावः । 'मायामधिरुह्य प्रवर्तते' इत्युक्ते मायिकं भगवतः कर्तृत्वमिति प्रतीतिः स्यात् । तां निरस्यन् व्याचष्टे– **मायामधिरुह्य प्रकृतिमवष्टभ्येति** ।। 'सृष्टिविलापनेषु' इत्यत्र प्रतिकल्पं सृष्टिविनाशभावाद् बहुवचनम् । आद्यर्थे वा तदिति भाष्यशेषार्थः । अत्रानन्तशक्तित्वं स्फुटं प्रतीयते । 'मय्यनन्तगुणे' इत्यस्य अनन्ताः असङ्ख्याताः गुणाः यस्यासौ अनन्तगुणः, तस्मिन् । 'गुणतोऽनन्ते' इति गुणानां प्रत्येकं अनवधिकत्वम् अनन्तावान्तरविशेषवत्त्वं चाभिप्रेयते' इति सुधातोऽर्थोवगन्तव्यः । अनन्ताः विग्रहाः देहाः यस्यासौ अनन्तविग्रहः, तस्मिन्, इत्यनन्तगुणत्वादेव सकलसामर्थ्यसम्पूर्णत्वलाभः ।।

**भावदीपिका** (श्री.टि.)– ।। **केवलस्य** प्रकृत्यवष्टम्भरहितस्य । **सर्वज्ञता तृप्तिरित्युक्तप्रकारेणेति** ।। 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमनल्पशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः सन्तः षडङ्गानि वदन्ति विष्णोः ।।' इति प्रमाणोक्तप्रकारेणेत्यर्थः ।

**भावप्रकाशः** (कृ.टि.)– नन्विदं वाक्यं सर्वभूतगुणयुक्तत्वप्रतिपादकत्वात् कथं सर्वसामर्थ्यासम्पूर्णत्वे मानमित्यत आह– **सर्ववस्तुसामर्थ्यैरिति** । **सर्वज्ञता तृप्तिरित्युक्तेति** ।। 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य' इत्युक्तेत्यर्थः ।

## भाष्यम्

**'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादेश्च । प्रकृतेर्वशादवशम् ।। 'त्वमेवैतत्सर्जने सर्वकर्मण्यप्यनन्तशक्तोऽपि स्वमाय-**

**यैव । मायावशं चावशं लोकमेतत्तस्मात् स्रक्ष्यस्यत्सि पासीश विष्णो' इति गौतमखिलेषु ।। ८ ।।**

भावप्रदीपिका (प.टी.)– प्रकृतेर्वशादवशत्वं हरेरुच्यते, ततस्तस्यास्वातन्त्र्यमेव विक्षितमित्यत आह– **प्रकृतेरिति** ।। प्रकृतेर्वशादवशत्वम् इत्येतच्छ्रुत्युक्तप्रकारेण ज्ञेयमित्यर्थः ।। ८ ।।

प्रमेयदीपिका (ज.टी.)– कं कः प्रवोचं प्रवोचत् । **'प्रकृतेर्वशात् विसृजामीति** आविद्यक मेवेश्वरस्य कर्तृत्वम् । वस्तुतस्तु निष्क्रियत्वमित्युच्यते' इत्यन्यथाप्रतीति-निरासाय अन्यथाऽन्वयमाह– **प्रकृतेरिति** ।। कुत एतत्? इत्यतः पूर्वोक्तार्थसहितेऽत्र प्रमाणमाह– **त्वमेवेति** ।। एतत्सर्जने एतस्य लोकस्य सृष्ट्याम् । अन्यस्मिन्नपि पालनादौ सर्वकर्मणि । तस्मात् मायावशत्वादेव अवशम् । एतत् एतम् । स्रक्ष्यसि सृजसि ।। ८ ।।

भावबोधः (र.टि.)– ।। **सृजसीति** ।। अत्सि पासीति प्रायपाठादिति भावः ।। ८ ।।

भावदीपः (रा.टि.)– ।। 'कम्' इत्यनुवादः,'कः' इति व्याख्या ।। **पूर्वोक्तार्थसहित इति** ।। 'प्रकृत्यवष्टम्भस्तु' इत्यादिनोक्तार्थसहित इत्यर्थः ।। **अत्र इति** ।। 'अर्थः' इत्यनुषङ्गः ।। अंशतोऽपौनरुक्त्याय आह– **अन्यस्मिन्नपि पालनादौ सर्वकर्मणीति** ।। 'तस्मात्' इत्यस्यार्थोक्तिपूर्वकमन्वयमाह– **तस्मादिति** ।। **अत्सि** इत्यादिप्रायपाठादाह– **सृजसीति** ।। ८ ।।

भावदीपिका (श्री.टि.)– द्वितीयाविभक्ति उत्तमपुरुषयोर्व्यत्ययमङ्गीकृत्य व्याचष्टे– **कं क इत्यादि** ।। भाष्ये अवशं पराधीनम् । तत्कुत इत्यतः पराधीनत्वोपपादनाय 'प्रकृतेर्वशात्' इत्युक्तम् । प्रकृत्यधीनत्वादित्यर्थः । मदधीनप्रकृत्यधीनत्वादत्यन्तपराधीनमिति भावः । 'मायावशम्, तस्मादेव चावशम्' इत्यन्वयमभिप्रेत्य 'तस्मात्' इत्यस्यार्थमाह– **तस्मादिति** ।। **माया** प्रकृतिः । लोकशब्दस्य पुंलिङ्गत्वात् 'एतत्' इति लिङ्गव्यत्यय इत्यभिप्रेत्य, 'एतत् एतम्' इत्युक्तम् । 'अत्सि पासि' इति प्रायपाठादाह– **सृजसीति** ।। ८ ।।

**भावरत्नकोशः (सु.टि.)–** 'विष्णोर्वीर्याणि सामर्थ्यानि' इत्यत्र 'कम्' इत्यनन्वितम् । अतो व्याचष्टे– **कं क इति** ।। विभक्तिव्यत्ययः छान्दस इति भावः । 'प्रवोचम्' इत्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः, पुरुषव्यत्ययश्च छान्दस इति भावेनाह– **प्रावोचदिति** ।। योऽपि पार्थिवपरमाणून् गणयतीति श्रुतिशेषार्थः । 'न ते' इत्यस्य हे विष्णो देव ते महिम्नः जगत्सर्जनादि शक्तिरूपस्य परम् अन्तं सीमानं जायमानो न प्राप्नोति, जातो नाप, जनिष्यमाणो नाप्स्यतीत्यर्थश्च तत्त्वप्रकाशिकातोऽवसेयः ।

'प्रकृतेर्वशादवशम्' इति भाष्यस्य प्रकृत्यधीनत्वादस्वतन्त्रमित्यर्थः । 'वशः प्रभुत्वाधीनत्ववाञ्छास्तु' इति ह्यभिधानम् । सर्वकर्मशब्देन सर्जनातिरिक्तपालनादिकर्मग्रहणम् इत्याह– **अन्यस्मिन्नपीति** ।। अपिपदमाकृष्य योजितम् । इदं भगवतः सर्वसामर्थ्यसम्पूर्णत्वे पूर्वोक्तार्थे प्रमाणम् । 'प्रकृतेर्वशादवशम्' इत्येतत् प्रमापयितुं 'मायावशं चावशं लोकमेतत् तस्मात्' इति प्रमाणशेषः । तदन्वयं प्रदर्शयन् व्याचष्टे– **तस्मादिति** ।। 'व्यत्ययो बहुलम्' इति लिङ्गव्यत्यय इति भावेनोक्तम्– **एतद् एतमिति** ।। लकारव्यत्ययोऽप्युक्तशास्त्रादिति भावेनाह– **स्रक्ष्यसि सृजसीति** ।। 'अत्सि' 'पासि' इति साहचर्याल्लडर्थ एव युक्त इति भावः ।। ८ ।।

सृष्टौ साधनत्वेन प्रकृतेरुक्तेर्विनैव साधनं सृजति किम् ? इति शङ्कां निरसितुं विशदीक्रियते– **प्रकृतिमिति** ।। प्रकृतिमवष्टभ्य उपादानतयोपादाय कृत्स्नं भूतग्रामं विसृजामि । तस्यापि चेतनाचेतनत्वेनासृज्यत्वमेव किन्न स्यात् ? इत्यत उक्तम्– **अवशमस्वतन्त्रमिति** ।। कुतोऽस्वातन्त्र्यम् ? प्रकृतेर्वशात् प्रकृत्यधीनत्वादिति । तर्हि प्रकृतिविकलस्य सृष्ट्यादावसामर्थ्यमेव किम् ? इति प्रतीतिं निरसितुम् स्वां स्वाधीनाम् इत्युक्तम् । यथा कश्चित्पादेन गन्तुं समर्थोऽपि लीलया दण्डमवष्टभ्य गच्छति, तथा लीलयैव प्रकृत्यवष्टम्भः, न तु केवलस्य सामर्थ्याभावात् । तथा चाहुः 'साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' इति भावः ।। ८ ।।

**भावप्रकाशः (कृ.टि.)–** सर्जनशब्देन त्यागरूपविसर्जनग्रहणे स्रक्ष्यसीत्युपसंहाराविरोध इति शङ्कां परिहरन् कर्मधारयभ्रान्तिं निरस्यति– **एतस्येति** ।। कर्मधारये सृष्टिसम्बन्धिनो लाभादिति भावः । लोकशब्दस्य पुंस्त्वात् तदनुसारेणाह– **एतमिति** ।। अत्सि पासीति लडन्तप्रायपाठविरोधात् कथं स्रक्ष्यसीति लृडित्यत आह– **सृजसीति** ।। ८ ।।

श्लोकः ९

**नच मां तानि कर्माणि निबध्नन्ति धनञ्जय ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

## भाष्यम्

**उदासीनवत् न तूदासीनः । तदर्थमाह–** असक्तमिति ॥ **'अवाक्यनादरः' इति श्रुतिः । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इति भागवते । यस्यासत्त्यैव सर्वकर्मशक्तिः कुतस्तस्य सर्वकर्मबन्ध इति भावः । 'न कर्मणा वर्धते नो कनीयान्' इति हि श्रुतिः । यः कर्माणि नियामयति कथं च तं कर्म बध्नाति ॥ ९ ॥**

भावप्रदीपिका (प.टी.)– किं तत्सादृश्यम् ? इत्यतश्चतुर्थपादं सप्रमाणकमवतारयति– **तदिति** ॥ साक्षादौदासीन्यमेवार्थः किं न स्यात् ? इत्यत आह– **द्रव्यमिति** ॥ अत्र यद्यकर्तृत्वं नाभिप्रायः, तर्हि कथं पूर्वोक्तकर्मालेपेनास्य सङ्गतिः इत्यत आह– **यस्येति** ॥ भगवतोऽपि रामकृष्णादिरूपेण बन्धदर्शनात् कथं तस्य न कर्मबन्धः ? इत्येतत् श्रुत्युपपत्तिभ्यां दूषयति– **नेति** ॥

प्रमेयदीपिका (ज.टी.)– स्वतः कर्तृत्वे कथमुदासीनत्वमुच्यते? इति चेन्न । वतिना तस्य निषिद्धत्वादिति भावेनाऽह– **उदासीनवदिति** ॥ अनुदासीनत्वेऽपि वतिर्व्यर्थः स्यात् । अन्यस्य तदर्थस्याभावादित्यत आह– **तदर्थमिति** ॥ वत्यर्थं सादृश्यं स्वयमेव वित्रृणोतीत्यर्थः। परमेश्वरस्य कर्मसु सत्त्यभावे प्रमाणमाह– **अवाक्येति** ॥ सर्वथोदासीन एवं किं न स्यात्? इति चेन्न । तथासति प्रकृत्यादीनामसत्त्वप्रसङ्गादिति भावेनाऽह– **द्रव्यमिति** ॥

यदीश्वरस्य स्वतः कर्तृत्वं स्यात् तदा 'उदासीनम्' इत्येतत् 'नच मां तानि कर्माणि निबध्नन्ति' इत्यत्र कथं हेतुः स्यात्? इत्यत आह– **यस्येति** ॥ **असत्त्या** अनादरेण । अनायासेनेति यावत् । भगवतोऽपि कर्मबन्धोऽस्ति इति केषाञ्चित् प्रलापो यथा 'विष्णुर्येन' इत्यादि । तन्निरासाय श्रुत्युपपत्ती प्राह– **न कर्मणेति** ॥ **नियामयति** नियच्छति ॥ ९ ॥

श्लोकः ९

**भावबोधः (र.टि.)– ।। विष्णुर्येनेति ।।** 'ब्रह्मा येन कुलालवन्नियमितो ब्रह्मण्ड-भाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे' इति तद्वचनम् । नियच्छतीति स्वार्थिको णिजिति भावः ।। ९ ।।

**भावदीपः (रा.टि.)– ।। अवाक्येतीति ।।** तदर्थस्तु सप्तमाध्याय उक्त इति भावः ।। **यथा विष्णुर्येनेत्यादिरिति ।।** 'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे' इत्याह इत्यर्थः । स्वार्थे णिजिति भावेनाऽऽह– **नियच्छतीति ।। ९ ।।**

**भावरत्नकोशः (सु.टि.)–** ।। स्वतः मायां विना । वतिना वतिप्रत्ययेन । तस्य उदासीनत्वस्य । 'न तूदासीनः' इति भाष्यभावोक्तिः– निषिद्धत्वादिति ।। अनुदासीनत्वेऽपीति ।। यथा स्वतो निष्क्रियत्वावेदनाय उदासीनशब्द इति पक्षे वतिर्व्यर्थ इत्यभिसंहितम्, तथा 'अनुदासीनत्वमेवेश्वरस्येति सिद्धान्तेऽपि' इत्यपेरर्थः । अन्यस्य प्रकृत्यर्थोदासीनत्वव्यतिरिक्तस्य । 'तदर्हम्' इत्यर्हार्थेऽपि वतिस्मरणात्, तस्य च 'असक्तम्' इत्यनेनाप्रतिपादनात् कथमेतत् ? इत्यत उक्तम्– सादृश्यमिति ।। सादृश्यस्य वतिप्रत्ययार्थत्वाद् 'असक्तम्' इत्यनेन सादृश्योक्तौ पुनरुक्तिः इत्यत उक्तम्– विवृणोतीति ।। न विद्यते वाक्यमनुग्रहमन्तरेण यस्यासौ अवाक्यः । न विद्यत आदर आसक्तिर्यस्यासौ नादरः । अवाक्यश्चासौ नादरश्चेत्यवाक्यनादर इति भाष्ये श्रुत्यर्थः । 'द्रव्यम्' इति वचने द्रव्यं प्रकृत्यादि, स्वभावः प्रकृत्यादेः परिणामादिरित्यर्थः । कथं हेतुरिति ।। उदासीनवदासीनत्वं नाम कर्मस्वसक्तत्वमिति विवृतम् । कर्तृत्वस्य च स्वाभाविकत्वे सर्जनपालनादिकर्मण्यसक्तिशब्दितम् अकर्तृत्वं कथमेष्टव्यम् ? तथा चोदासीनत्वस्यासिद्ध्यापात इति भावः । कार्यकर्तृभावसम्बन्धस्यावर्जनीयत्वात् कथमसक्ति ? इत्यत उक्तम्– असक्त्याऽनादरेणेति ।।

ननु अनादरः तिरस्कारः, कर्मसु त्वरणाभावो वा । पक्षद्वयेऽपि भृत्यानुग्रहकातरत्वम् 'जगद्रक्षाकेवलोद्योगिन' इत्यादिशास्त्रावेदितं सकलजगत्सर्जनादिकर्मणि व्यापृतिमतस्तव देवदत्तस्येव कर्मलेपः प्रसज्येत ? इत्यत उच्यते– **न चेति** ।। तानि कर्माणि जगत्सर्जनोप-

श्लोकः ९

संहरणादीनि न निबध्नन्ति । अत्र हेतुः– **उदासीनवदासीनमिति** ।। वस्तुतोऽनुदासीनोऽप्यहम् उदासीनसदृश आसे, तमित्यर्थः । किन्नामोदासीनसादृश्यं वतिना बोध्यं तव ? इत्यत उक्तम्– **असक्तमिति** ।। उदासीनस्य कर्मसु यथा सक्तिः आदर आयासो नास्ति तथा मम सर्वकर्म कुर्वतोऽपि तत्र सक्तिशब्दतात्पर्यगोचरायासो नास्ति । यस्य असक्त्यैव सर्वकर्मशक्तिः, कुतस्तस्य सर्वकर्मबन्ध इति भावः ।।

परमेश्वरस्य सर्जनपालनादिव्यापारशालित्वममञ्जुलं स्यात् इत्यत आह– **अनायासेनेति यावदिति** ।। आयासमन्तरा सर्जनपालनादिकर्मसमर्थत्वस्य 'उदासीनवदासीनम्' इत्यनेन बोध्यस्य हेतुत्वेन विवक्षितत्वान्नोक्तचोद्यावकाश इति 'यस्य' इति भाष्यहृदयमिति भावः । **विष्णुर्येनेति** ।।

'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ।।'

इति भर्तृहरिश्लोके प्रकृतोपयुक्तप्रतीकग्रहणमिदम् । 'कनीयान् 'भवति' इति श्रुतौ शेषः । हेतुमण्यन्तत्वेन अस्य नियमनकर्तुरभावेन तन्निबन्धनकारयितृत्वायोग इत्यतः स्वार्थिकोऽत्र णिजिति भावेनाह– **नियच्छतीति** ।। **'द्रव्यं कर्म च कालश्च'** इति शास्त्रादिति भावः । तं कर्मनियन्तारमिति भाष्येऽर्थः । न कर्म भगवतो बन्धकं तन्नियम्यत्वात् । यत् स्वसत्ताप्रवृत्त्यादौ अन्याधीनं न तद्बन्धकम्, यथा भृत्यो राजाधीनो न राजबन्धक इत्युपपत्तिर्भाष्योक्तेति भावेन 'श्रुत्युपपत्ती प्राह' इति प्रागुक्तम् ।। ९ ।।

**भावदीपिका (श्री.टि.)**– ।। **अन्यस्येति** ।। अनुदासीनत्वातिरिक्तस्य वत्यर्थस्याभावात् । तथा च कर्मसु सक्तेरेव प्राप्त्या 'असक्तम्' इत्येतद् विरुद्धं स्यादित्यर्थः । **सादृश्यमिति** ।। नानुदासीनत्वं वत्यर्थः, किं तु सादृश्यमित्यर्थः ।।

भाष्ये न विद्यतेऽनुग्रहमन्तरेण यस्य वाक्यमित्यवाक्यः, न विद्यते आदरः आग्रहः आसक्तिर्यस्येति नादरः, अवाक्यश्चासौ नादरश्चेति अवाक्यनादर इत्यर्थः । 'विशेषणं विशेष्येण बहुलम्' इति बहुलग्रहणाद् विशेषणयोरेवात्र समास इति ज्ञातव्यम् । यद्यपि 'न विद्यते आदर

आश्चर्यबुद्धिर्यस्य इति नादरः' इति तत्त्वप्रकाशिकायां व्याख्यातम् । तथाऽपि तस्यार्थस्य प्रकृतानुपयोगात् परित्याग इति ध्येयम् । **कथं हेतुःस्यादिति** ।। स्वतः कर्तृत्वाभावे हेतुत्वं स्पष्टमेवेति भावः । **केषाञ्चित्** मीमांसकानाम् । **विष्णुर्येनेत्यादि** ।।

'ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ।।'

इति तद्वचनादित्यर्थः । स्वार्थे णिजिति भावेनाह– **नियच्छतीति** ।। ९ ।।

**भावप्रकाशः (कृ.टि.)**– तदर्हमित्यर्हार्थेऽपि वतिस्मरणात् तस्य चासक्तमित्यनेन प्रतिपादनादाह– **सादृश्यमिति** ।। सादृश्यस्य वतिनोक्तत्वात् पुनरुक्तिरित्यत आह– **विवृणोतीत्यर्थ इति** ।। **कथं हेतुः स्यादिति** ।। उदासीनवदासीनत्वं नाम कर्मासक्तत्वमिति व्याख्यातम् । कर्तृत्वे च जन्यजनकभावसम्बन्धप्राप्त्या सत्त्वयोगादसिद्धिप्राप्तेरिति भावः । यस्येत्यादि भाष्येऽसक्तेः हेतुविशेषणत्वाङ्गीकारान्नासिद्धिरिति बोध्यम् । ननु जन्यजनकभावसम्बन्धसत्त्वात् कथमसक्त्येत्युक्तमित्यत आह– **अनादरेणेति** ।।

ननु 'अनादरः परिभवः' इत्यमरोक्तेरनादरस्तिरस्कारो वा आदराभावो वा उभयत्राप्यसिद्धिः । ब्रह्मादिमोक्षार्थं सृष्ट्यादिकरणेन सृष्ट्यादिशक्तेः तिरस्कारपूर्वकत्वाभावात् । आदरपूर्वकत्वाच्चेत्यत आह– **अनायासेनेति यावदिति** ।। यद्यप्यसक्त्येत्यस्यैवानायासेनेति व्याख्यानं कर्तुं शक्यम् । तथाप्यसक्तत्वे प्रागुदाहृतश्रुत्यनुसारायानादरेणेति व्याख्याय तत्फलितमिदमुक्तम् । **विष्णुर्येनेत्यादीति** ।। ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मण इतीत्यर्थः । ननु नियामयतीत्यस्य हेतुमण्ण्यन्तत्वे नियमनकारयितृत्वं लब्धं तत्र युक्तम् । अन्यस्य नियमनकर्तुरभावेन तत्प्रयुक्तकारयितृत्वायोगादित्यत आह– **नियच्छतीति** ।। स्वार्थिको णिजिति भावः ।। ९ ।।

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ।। १० ।।**

श्लोकः १०

## भाष्यम्

**उदासीनवदिति चेत् स्वयमेव प्रकृतिः सूयत इत्यत आह– मयेति ।। प्रकृतिसूतिद्रष्टा कर्ता अहमेवेत्यर्थः । तथा च श्रुतिः 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' इति ।।**

भावप्रदीपिका (प.टी.)– 'असक्तम्' इति उदासीनशब्दार्थे कथितेपि तदविवेकेना आक्षेपसमाधानायोत्तरश्लोकमवतार्य सप्रमाणकं व्याचष्टे– **उदासीनवदिति** ।। १० ।।

प्रमेयदीपिका (ज.टी.)– कथं तर्हि,'अहं केवलं द्रष्टैव; प्रकृतिरेव चराचरं सूयते' इत्युत्तरवाक्यमित्यतः तन्निवर्त्याशङ्कां प्रदर्श्य व्याचष्टे– **उदासीनवदिति** ।। भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा क्रियाभाव एवोक्त इति मत्वा शङ्कितम् । पुरा 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्तम् । इदानीं तु 'उदासीनवत्' इति निष्क्रियत्वमुच्यते ।। एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नम् इति तन्निवृत्त्यर्थमिदं वाक्यम् । तत्र 'अध्यक्षेण' इत्यनेन प्रकृतिसूतेः द्रष्टाऽहमेवेत्युच्यते ।

तृतीयया च तत्प्रयोजककर्ता चाहमेव । नतु तस्याः स्वातन्त्र्यमिति । दर्शनपूर्वकत्वात् प्रयोजकत्वस्य तदुक्तिः । अन्यथा तृतीया व्यर्था स्यादिति भावः । प्रकृतिप्रयोजकत्वं परमेश्वरस्य कुतः? इत्यत आह– **यत इति** ।। **प्रसूता** सृष्टावभिमुखीभूता । **प्रसूती** प्रसूतिः । **तोयेन** कर्मणा । **व्यससर्ज** विससर्ज । वहुलग्रहणात् ।। १० ।।

भाववोधः (र.टि.)– ननूदासीनवच्चेत् जगत्सृष्ट्यादि न स्यादिति शङ्कनीयम् । प्रकृतिरेव सूयते इति शङ्कायां किं वीजमित्यत आह– पुरेति ।। ननु विवक्षित-प्रयोजकत्वस्य मयेति तृतीययैव लाभात् अध्यक्षेणेति व्यर्थमित्यत आह– दर्शनपूर्वकत्वादिति ।। अन्यथेति द्रष्टृत्वमेव प्रतिपाद्यते । न तु प्रयोजकत्व-मित्यङ्गीकारे अहमध्यक्ष इत्येव स्यात् । न तूभयत्र तृतीयेत्यर्थः । वहुलग्रहणा-दिति ।। वहुलं छन्दसीति सूत्रे वहुलग्रहणात् लिट्यडागम इत्यर्थः ।। १० ।।

श्लोकः १०

**भावदीपः (रा.टि.)–** शङ्कानुदयमाशङ्क्याज्ञानमूलतया तामुज्जीवयति– **भगवते-त्यादिना ।। व्याख्यातमिति ।।** असक्तपदेनेत्यर्थः ।। अधुना शङ्कापरभाष्यार्थमाह– **पुरेत्यादिना ।। इति शङ्कितमिति** इतिपदस्य पूर्वेणान्वयः ।। **इत्यनेनेति ।।** प्रातिपदिके-नेत्यर्थः ।। 'मया' इति तृतीययैव प्रयोजककर्तृत्वलाभात् 'तत्र अध्यक्षेण' इति किमर्थम्? इत्यत आह– **दर्शनेति ।। अन्यथेति ।।** द्रष्टृत्वमात्रस्याभिमतत्वे 'अहम् अध्यक्षः' इत्येव ब्रूयादित्यर्थः ।। **बहुलग्रहणादिति ।।** षष्ठान्त्यपादे अडागमतन्निषेधप्रकरणे 'बहुलं छन्दस्यमाङ्-योगेऽपि' इति बहुलग्रहणं तु लुङ्, लङ्, लिङ्भ्योऽन्यत्रापि लकारे अडागम इत्यर्थः ।। अडागमाभावमात्राभिप्राये 'छन्दस्यमाङ्योगेऽपि' इत्येव ब्रूयादित्यर्थः ।। १० ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु व्यससर्जेत्यस्य लिट्त्वात् कथं तत्राडागमः । 'लङ्लुङ्लृङ्क्ष्वडुदात्तः' इति लङ् लुङ् लृङ्क्ष्वेवाडागमविधानादित्यत आह– **बहुलग्रहणा-दिति ।।** 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रे बहुलग्रहणात् लिट्यपि अडागम इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** ।। **तर्हि** यदीश्वरस्य स्वतः कर्तृत्वं स्यात्, तर्हीत्यर्थः । 'मयाऽध्यक्षेण' इत्यस्य तात्पर्यम्– **अहं केवलं द्रष्टैवेति ।। सूयते** जनयति । सादृश्यं कर्मसु व्यासत्त्यभावलक्षणं व्याख्यातम्, 'असक्तं तेषु कर्मसु' इति विवृतम् । **तदज्ञात्वा** स्वकृत-व्याख्यानम् आच्छाद्य । **इति मत्वेति ।।** उदासीनशब्दस्य क्रियामात्राभाववद्बोधकत्वस्य आपाततोऽवगमादिति भावः । 'शङ्कितम्' इत्येतदेव विशदयति– **पुरा प्रकृतिमिति ।।** विसर्गशब्दितजगत्सृष्टिलक्षणक्रियाकर्तृत्वम् आख्यातेनाभिहितम् इत्यर्थः । **इत्यापन्नमितीति ।।** इतिशब्दस्य 'शङ्कितमिति' इति पूर्वेण सम्बन्धः । कर्तृतृतीयातात्पर्यम्– **द्रष्टाऽहमेवेति ।। तृतीयया** 'अध्यक्षेण मया' इत्यत्रत्यतृतीयया । अन्यत्र तृतीयाऽयोगात् 'कर्तृकरणयोस्तृतीया' इति शास्त्रादत्र कर्तर्येव तृतीयेति भावेनोक्तम्– **कर्ता चाहमेवेति ।। स्वातन्त्र्यमिति ।।** 'उच्यते' इत्यनुवर्तते ।

ननु 'त्वयि कर्तृत्वोपचारमात्रम्' इत्याक्षेपे 'अहमेव स्वतन्त्रः कर्ता, नान्यः' इति परिहार-समर्पकं 'मया' इत्येतदेव वक्तुमुचितम्, नतु 'अध्यक्षेण' इत्येतदपि । प्रयोजनादर्शनात्, इत्यत आह– **दर्शनेति ।। तदुक्तिः** 'अध्यक्षेण' इति विशेषणोक्तिः । 'अहं केवलं द्रष्टैव, प्रकृतिरेव चराचरं सूयते' इति प्रागुक्तापातप्रतीतार्थाङ्गीकारे बाधकमाह– **अन्यथेति ।।** द्रष्टृत्वमात्रस्याभि-

श्लोकः १०
मतत्वे 'अहमध्यक्षः, प्रकृतिस्तु सूयते' इत्येवावक्ष्यत्, तृतीयाविभक्तिर्न तत्र प्रयोक्तव्येत्यर्थः । **प्रकृतिप्रयोजकत्वं** प्रकृतिकर्तृकसृष्टौ प्रयोजककर्तृत्वम् ।

नन्वत्र श्रुतौ परमेश्वरस्य प्रकृतिं प्रति प्रयोजकत्वं न प्रतीयते, प्रकृतेर्भगवत्प्रसूतत्वं प्रकृतानुपयुक्तमेव च प्रतीयते? इत्यत आह– **प्रसूता सृष्टावभिमूखीभूतेति** ।। 'कृदिकारात्' इत्यत्र 'अक्तिनः' इति पर्युदासादाह– **प्रसूती प्रसूतिरिति** ।। विसर्गस्य ईकारश्छान्दस इति भावः । तथा च द्वादशे 'यतः प्रिया सा जगतः प्रसूतिः' इति भाष्ये । 'तोयेन' इत्यनुवादः, 'कर्मणा' इति व्याख्यानम् । तन्नामसु पाठादिति भावः । लिट्यडागमश्छान्दसत्वादिति तदर्थमाह–**विससर्जेति** ।। छन्दस्यडागमे प्रमाणोक्तिः – **बहुलग्रहणादिति** ।। 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्रे ।

भगवतोदासीनसादृश्यं स्वयमेव व्याख्यातम् । तदज्ञात्वा, 'क्रियाऽभाव एवोक्तः' इति मत्वा शङ्कितम् । **पुरा** 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्तम् । इदानीं तु 'उदासीनवत्' इति निष्क्रियत्वमुच्यते । एवं तर्हि प्रकृतिरेव सूयते । त्वयि तु तत्सन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नमिति । तदेतन्निवृत्त्यर्थमुच्यते– **मयेति** ।। कार्यमधिकृत्याक्षाणि यस्य सोऽध्यक्ष इत्यध्यक्षशब्देन प्रकृतिसूतेः द्रष्टा अहमेवेत्युच्यते । तृतीयया च तत्प्रयोजककर्ता चाहमेव, न तु तस्याः स्वातन्त्र्यमिति प्रकृतिसूतेर्द्रष्टा तत्प्रयोजककर्ता च । मया प्रकृतिः सचराचरं जगत् सूयते उत्पादयति । न केवलं प्रकृतिसूतेर्द्रष्टा प्रयोजककर्ता चाहम्, किन्तु जगत्कर्ता चास्मीत्युच्यते– **हेतुनेति** ।। कर्तृरूपकारणभूतेनानेन मया जगत् विविधतया परिवर्तते पुनःपुनर्जायते ।। १० ।।

**भावदीपिका (श्री.टि.)**– ननु भगवत उदासीनत्वस्य निषिद्धत्वात् कथमियं शङ्केत्यत आह– **भगवत इति** ।। **व्याख्यातम्** 'असक्तम्' इत्यनेनेत्यर्थः । **क्रियाभावः** कर्तृत्वाभावः । ननूदासीनवच्चेत्, जगत्सृष्ट्यादि न स्यात् इति शङ्कनीयम् । 'प्रकृतिरेव सूयते' इति शङ्कायां किं बीजम् ? इति चेत्तत्राह– **पुरेति** ।। **तृतीयया** 'मयाऽध्यक्षेण' इति तृतीयया । **तत्प्रयोजककर्ता** प्रकृतिनिष्ठसूतिप्रयोजककर्ता । 'कर्तृकरणयोस्तृतीया' इति कर्तरि तृतीयाविधानादिति भावः । ननु विवक्षितस्य प्रयोजककर्तृत्वस्य 'मया' इति तृतीययैव लाभात्, 'अध्यक्षेण' इति व्यर्थम् ? इत्यत आह– **दर्शनेति** ।। **तदुक्तिः** 'अध्यक्षेण' इति द्रष्टृत्वोक्तिः । **अन्यथेति** ।। द्रष्टृत्वमेव प्रतिपाद्यते, न तु प्रयोजककर्तृत्वम् इत्यङ्गीकारे 'अहमध्यक्षः' इत्येतावता पूर्णत्वेनोभयत्र कर्तृत्वार्थकतृतीयाविभक्तिवैयर्थ्यं स्यादित्यर्थः ।।

ननु 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति लुङादावेव अडागमविधानेन लिटि तद्विधानाभावात् 'विससर्ज' इति वक्तव्यम्, 'वि अससर्ज' इति कथम् ? इत्यत आह– **बहुलेति** ।। 'बहुलं छन्दसि' इति सूत्रे बहुलग्रहणात् लिट्यपि अडागम इत्यर्थः ।

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
इति स्म वैयाकरणाः प्रयोगे चतुर्विधं बाहुलिकं वदन्ति' ।।

इति वचनबलेन बहुलशब्दार्थो द्रष्टव्यः ।। १० ।।

**भावप्रकाशः (कृ.टि.)**– ।। **व्याख्यातमिति** ।। असक्तमित्यनेनेति शेषः । ननूदासीनवदिति चेत्तर्हि जगतः सृष्ट्यादि न स्यादिति शङ्कनीयम् । प्रकृतिरेव सूयत इति शङ्कायां किं बीजमित्यत आह– **पुरेति तृतीयया चेति** ।। मयेति तृतीययेत्यर्थः । ननु कर्तृत्वमौपचारिकमित्याक्षेपे तन्मात्रं वक्तव्यं दर्शनं किमर्थमुक्तमित्यत आह– **दर्शनपूर्वकत्वादिति** ।। अहं केवलं द्रष्टैव प्रकृतिरेव चराचरं सूयत इति प्रागुक्तापातप्रतीतार्थाङ्गीकारे बाधकमाह– **अन्यथेति** ।। नन्वत्र प्रकृतेर्भगवदुत्पन्नत्वमयुक्तमेवोच्यते । प्रकृतं च परमेश्वरस्य प्रेरकत्वं नोच्यत इत्यत आह– **सृष्टावभिमुखीकृतेति** ।। 'कृदिकारादक्तिन' इति क्तिनन्तान् ङीपो निषेधात् प्रसूतीति कथमित्यत आह– **प्रसूतिरिति** ।। ननु लुङ्लङ्लृङ्क्ष्वडुदात्त इत्युक्तेः कथं ट्यिडागम इत्यत आह– **विससर्जेति** ।। श्रुतावडागमप्रयोगं समर्थयते– **बहुलेति** ।। बहुलं च्छन्दस्यमाङ्योगेऽपीति सूत्रे बहुलग्रहणाल्लिट्यडागम इत्यर्थः ।।

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ।। ११ ।।**

## भाष्यम्

**तर्हि केचित् कथं त्वामवजानन्ति । का च तेषां गतिः ? इत्यत आह– अवजानन्तीत्यादिना ।। मानुषीं तनुं मूढानां मानुषवत् प्रतीतां तनुम् । नतु मानुषरूपाम् ।। उक्तं च मोक्षधर्मे–**

श्लोकः ११

**'यत् किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशाम्पते ।**
**सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ।।**
**ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।**
**भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ।**
**भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तम' इति ।।**

भावप्रदीपिका (प.टी.)– ननु यदि त्वं सर्वकर्ता निर्दोषः, तर्हि कथं त्वां केचिद्विषन्ते ? निर्दोषद्वेषेण तेषां कथं नाशो गतिः स्यात् ? अतः सदोष एव त्वम् इत्याशङ्कोत्तरत्वेनोत्तरश्लोकद्वयमवतारयति– **तर्हीति ।।** ननु मानुषीं तनुमाश्रितं द्विषन्तः कथं मूढा इत्यत आह– **मानुषीमिति ।।** मनुष्यरूपैव किं न स्यात् ? इत्यत आह– **उक्तं चेति ।।**

प्रमेयदीपिका (ज.टी.)– उत्तरवाक्यस्य सङ्गत्यप्रतीतेस्तामाह– **तर्हीति ।।** यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता । कैश्चिदवज्ञानात् । तेषां चानर्थाभावादुक्तमसदिति शङ्काभिप्रायः **'मानुषीं तनुमाश्रितम्'** इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **मानुषीमिति ।।** भ्रान्त्यनुवाद एवायमिति भावः । कुतो न? इत्यत आह– **उक्तं चेति ।।** चः हेतौ । शरीराणि हि भौतिकानि भवन्ति । भूतानि चेश्वरस्य बुद्धिजानि । तत्कथं तानि वध्नीयुरित्यर्थः ।। अत्रैव **'ईश्वरो हि'** इत्यादिनाऽन्ये हेतवोऽभिधीयन्ते । **विराट्** नित्याभिव्यक्तरूपः । **वरदः** मोक्षप्रदः । **सगुणः** स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तत् । **अव्यक्तं** तदभिमानिनी देवता । **तस्य शुश्रूषुः** । लिङ्गव्यत्ययश्छान्दसः ।।

भाववोधः (र.टि.)– ।। **नञा निर्दिष्टमनित्यमिति** ।। 'न लोक' इति षष्ठीप्रतिषेधो न वर्तत इति भावः । नन्वव्यक्तं शुश्रूष्विति भवेत् । कथं पुल्लिङ्गमित्यत आह– **लिङ्गव्यत्यय इति** ।।

भावदीपः (रा.टि.)– तर्हीत्यस्याकाङ्क्षितमाह– **यदीत्यादि** ।। अध्याहारेण योजनामाह– **तस्य शुश्रूषुरिति** ।। नञा निर्दिष्टस्यानित्यत्वात् उप्रत्यययोगेपि 'न लोकाव्ययनिष्ठा' इति षष्ठीनिषेधो नेत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** अव्यक्तं शुश्रूषुरित्यस्य ईश्वरविशेषणत्वपरिहारायाह– **तस्य शुश्रूषुरिति** ।। न च डुप्रत्ययान्तशुश्रूषुपदयोगे कथं तस्य षष्ठीति वाच्यम् । तेन कारकषष्ठी-निषेधेपि शेषषष्ठ्या अनिषेधेन तदुपपत्तेः । यथा चैतत् तथोक्तमधस्तात् । विशेषणानां विशेष्यनिघ्नत्वात् नपुंसकलिङ्गाव्यक्तशब्दविशेषणशुश्रूषुशब्दस्यापि नपुंसकत्वे शुश्रूषु इति भवितव्यम् । शुश्रूषुरिति कथमित्यत आह– **लिङ्गव्यत्ययः छान्दस इति** ।।

**भावरत्नकोशः (सु.टि.)–** 'का च' इति भाष्यभावं सपरिकरमाह– **कैश्चिदिति** ।। तनुश्चेद् अमानुषी तर्हि 'मानुषीम्' इति कथं भगवतोऽभिलाप इत्यतो 'मूढानाम्' इति भाष्य-भावमाह– **भ्रान्तीति** ।। मनुष्यशब्दात् सम्बन्धार्थेऽणि, ङीपि 'हलस्तद्धितस्य' इति यकारलोपे 'मानुषीम्' इति रूपमिति भावः । **कुत इति** ।। मानुष्यरूपमिति कुतो नेत्यर्थः । 'न' इति साध्ये हेतुसम्पत्तय आह– **चो हेताविति** ।। 'उक्तं च' इत्यत्र चशब्दो हेतुसमर्पको व्याख्येय इत्यर्थः । 'यत्किञ्चित्' इत्यादित्रिपादीतात्पर्यमाह– **शरीराणीति** ।। **तानि** भूतानि, 'तम्' इति शेषः । **अत्रैव** ईश्वरस्य देहसम्बन्धाभाव एव । ईश्वरत्वं बन्धकदेहजिहासुत्वे सति तत्र शक्तत्वमत्र विवक्षितम् । 'बाहुजः क्षत्रियो विराट्' इत्यभिधानाद् विराट्शब्दः क्षत्रियवचन इति कथं तस्य देहाबद्धत्वे हेतुसमर्पकत्वम् इत्यतो व्याचष्टे– **विराट् नित्याभिव्यक्तरूप इति** ।। विशेषेण राजन्नित्याभिव्यक्तरूपात् निमित्ताद् विराट्शब्दो भगवति वर्तते । नित्यव्यक्तविग्रहस्य च प्रत्यग्रशरीरग्रहणमनुचितमिति भावः । वरदत्वं रुद्रादिसाधारणमित्यतो विवक्षितमर्थमाह– **मोक्षद इति** ।। निर्विशेषणवरशब्देन वरणीयमुख्यो मोक्षो ग्राह्यः । सर्वमोक्षप्रदानसमर्थस्य च स्वबन्धकदेहयोगो न युक्त इति भावः ।।

सगुणत्वं गुणत्रयवत्त्वं बन्धानुकूलमेवेति साध्यविपरीतव्याप्तम्, 'सगुणो निर्गुणः' इति विप्रतिषिद्धं चेत्यतो व्याचष्टे– **सगुणः स्वातन्त्र्यादीति** ।। निर्गुणोऽपि सत्त्वादिगुणहीनोऽपीति भाष्यार्थः । 'प्रलीयन्तेऽस्मिन्' इति प्रपूर्वात् लीङ् श्लेषणे इति धातोरधिकरणे 'एरच्' इत्यच्-प्रत्यये, अधिकरणेऽच्प्रत्ययान्तस्य च विशेष्यनिघ्नत्वान्नपुंसकत्वमिति भावः । शुश्रूषुत्व-मचेतनेऽव्यक्ते घटयितुमुक्तम्– **तदभिमानिनीति** ।। **तस्य** प्रस्तुतनारायणस्य । 'जिज्ञासुरपि योगस्य' इत्यत्रेवात्रापि षष्ठी निर्वाह्या । अव्यक्तविशेषणत्वात् 'शुश्रूषु' इति वाच्ये कथं लिङ्गान्तरमित्यत आह– **लिङ्गव्यत्यय इति** ।। 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति शास्त्रादिति भावः ।

श्लोकः ११

'अंशो नानाव्यपदेशात्' इत्यधिकरणे चन्द्रिकायां तु 'शुश्रूषुः' इत्यत्र जीवनिष्ठशुश्रूषां प्रति प्रकृतो नारायण एव विषयत्वेन सम्बध्यत इत्याह– **शुश्रूषुस्तस्येति** ।। एवं च भूत-सम्बन्धाधीनप्रलयादिमत्त्वाकार्यत्वप्रवृत्तिनिमित्तकाभ्यां भूतप्रलयाव्यक्तशब्दाभ्यामुक्तो जीवसमूहः, तस्य नारायणस्य शुश्रूषुर्मोक्षार्थं जिज्ञासुरिति योजनेति भावः इति व्याख्याय, तत्त्वप्रदीपे तु 'भूतप्रलयस्थानभूता अव्यक्तशब्दिता श्रीः प्रकृतस्य नारायणस्य शुश्रूषुः, 'ये चाप्यक्षरमव्यक्तम्' इति स्मृतेः' इति प्रकारान्तरेण योजितम्' इत्युक्तम् ।

**भावदीपिका (श्री.टि.)**– ।। **भ्रान्तीति** ।। भ्रान्तिसिद्धं यन्मानुषत्वं तदेव भगवताऽनूद्यते, नतु वास्तवमित्यर्थः । **अत्रैवेति** ।। 'परमात्मनो भूतबन्धाभावे' इत्यर्थः । **हेतव इति** ।। तथाच 'ईश्वरो हि' इत्यादि हेतुगर्भविशेषणमितिभावः ।। **तस्य शुश्रूषुरिति** ।। ननु 'शुश्रूषु' इत्यस्य सन्नन्तत्वेन 'सनाशंसभिक्ष उः' इत्यनेन उप्रत्ययान्तत्वात्, उप्रत्ययान्तस्य च 'न लोक' इति षष्ठ्या निषेधात्, 'हरिं दिदृक्षुः' इतिवत् 'तं शुश्रूषुः' इति वक्तव्ये 'तस्य' इति कथमुक्तम्? इति चेदुच्यते । 'कर्तृकर्मणोः कृति' इति प्राप्ता या कर्तरि कर्मणि च षष्ठी सैव 'न लोक' इति निषिध्यते, न तु 'शेषे' इत्यनेन प्राप्ता सम्बन्धमात्रे षष्ठी । प्रकृते च 'कर्तृकर्मणोः' इत्यनेन कर्तरि षष्ठी नोच्यते, येन निषेधावतारः स्यात्, किन्तु 'शेषे' इति सम्बन्धमात्र एव । न ह्यस्याः प्रतिषेधोऽस्तीति । नन्वत्रापि शुश्रूषायां भगवतः कर्मत्वं विवक्ष्यताम् । तथा च कर्मणि प्राप्तद्वितीयापवादकत्वेन 'कर्तृकर्मणोः' इत्यनेन प्राप्ता षष्ठी 'न लोक' इत्यनेनापोद्यते । एवं च 'अपवादस्यापवादे पुनरुत्सर्गस्यैव स्थितिः' इति न्यायेन कर्मणि द्वितीयैव प्राप्नोति । तथा च 'तम्' इत्येव वक्तव्यम् इति चेत्, सत्यम् । तथात्वे साक्षाद्भगवत्कर्मकतत्पादसंवहनादिरूपैव सेवा प्राप्नोति, न तु तत्सम्बन्धिसेवा । अनया क्रियमाणा जगत्सर्जनादिरूपा सेवैव । सा च न भगवत्कर्मिका, भगवत्सम्बन्धिनी तु भवति । अतः सामान्यतो भगवत्सम्बन्धिसेवामात्रप्राप्त्यर्थं शेषे षष्ठीमाश्रित्य 'तस्य' इत्युक्तमिति गुरुचरणानां सम्प्रदायः । भावबोधे तु 'नञा निर्दिष्टमनित्यम्' इति 'न लोक' इति षष्ठीप्रतिषेधो न प्रवर्तत इत्युक्तम् । ननु 'अव्यक्तं शुश्रूषु' इति भवेत्, तत्कथं 'शुश्रूषुः' इति पुंलिङ्गम् ? इत्यत आह– **लिङ्गव्यत्यय इति** ।।

**भावप्रकाशः (कृ.टि.)**– ननु तनोर्मानुषत्वाभावे सर्वज्ञस्य भगवतस्त्वज्ज्ञानाभावेन तदभिलापायोग इत्यत आह– **भ्रान्त्यनुवाद इति** ।। कृष्णेन लोकस्य यद्भ्रान्तिसिद्धं तदनूद्यत

इत्यर्थः । **अत्रैवेति** ।। देहसम्बन्धाभाव इत्यर्थः । ननु बाहुजः क्षत्रियो विराडित्यमरोक्तेः क्षत्रियत्वं विराट्त्वम् । तत्कथं प्रवृद्धत्वे हेतुर्व्यभिचारादित्यत आह– **नित्याभिव्यक्तेति** ।। राजृ दीप्तावित्यस्माद्विशेषेण राजत इत्यर्थे 'सत्सूद्विष' इत्यादिना क्विप् । विशेषेण राजनं च नित्याभिव्यक्तरूपत्वेमेवेति भावः । रुद्रादौ व्यभिचाराद्वरप्रदत्वं नावृद्धत्वसाधकमित्यत आह– **मोक्षद इति** ।। सत्त्वादिगुणवत्त्वं न बद्धत्वे लिङ्गं विरोधादित्यत आह– **स्वातन्त्र्यादीति** ।। ननु तत्पुरुषत्वे तादात्म्यं क्लीबत्वं चाऽयुक्तम् । व्यधिकरणबहुव्रीहिस्त्वगतिकागतिरित्यत आह– **भूतानीति** ।। प्र पूर्वाल्लीयतेरधिकरणे एरजित्यच्, अधिकरणेऽजन्तस्य च विशेष्यलिङ्गत्वात् क्लीबत्वं युक्तम् । 'क्तल्युट् नपुंसके भावे स्त्रियां क्तिन्नादयो मताः । अतो 'घञजपः पुंसि' इति भावे अजन्तस्य पुंस्त्वनियमोक्त्या परिशेषेणाधिकरणाद्यर्थाजन्तस्य विशेष्यलिङ्गत्वावगमात् । एवं च षष्ठीतत्पुरुषे नानुपपत्तिः । टीका तु तात्पर्यार्थप्रदर्शिकेति बोध्यम् । अव्यक्तस्य जडत्वात् कथं शुश्रूषुत्वमित्यत आह– **तदभिमानिनीति** ।। शुश्रूषुरित्यतः प्रागध्याहार्यमाह– **तस्य शुश्रूषुरिति** ।। यद्यपि कर्तृकर्मणोरिति प्राप्तषष्ठ्या न लोकेत्यनेन शुश्रूषुरित्युप्रत्यययोगे निषेधात्तमित्यध्याहर्तुमुचितम् । तथाऽपि न लोकेति कारकषष्ठ्या निषेधेऽपि शेषषष्ठ्या अनिषेधाच्छेषषष्ठी इयमिति भावेन तस्येत्युक्तम् । ननु शुश्रूषुशब्दस्य विशेष्यनिघ्नत्वा-द्विशेष्यानुसारेण क्लीबत्वावश्यभावात् कथं पुंस्त्वमित्यत आह– **लिङ्गव्यत्यय इति** ।।

## भाष्यम्

**अवतारप्रसङ्गे चैतदुक्तम् । अतो नावताराः पृथक् शङ्क्याः । 'रूपाण्यनेकान्यसृजत् प्रादुर्भावभवाय सः । वाराहं नारसिंहं च वामनं मानुषं तथा' ।। इति ।**

भावप्रदीपिका (प.टी.)– ननु मूलरूपस्य नारायणस्यामनुष्यत्वेऽपि कृष्णाद्यवताराणां तत्किं न स्यात् ? इत्यत आह– **अवतारेति** ।। मनुष्यादिजन्युत्पत्तेः पूर्वमेव कृष्णावतारविभागोक्तेश्च न तेषां मानुषत्वमित्याह– **रूपाणीति** ।।

प्रमेयदीपिका (ज.टी.)– अस्त्वेतन्मूलरूपविषयम् । अवतारस्य तु कृष्णस्य मानुषत्वं भवत्वित्यत आह– **अवतारेति** ।। 'यत्तद्दृशिवान् ब्रह्मा रूपं हयशिरोधरम्' इति हयग्रीवावतारप्रसङ्गेऽस्तु हयग्रीवस्यैवम् । कृष्णस्तु मानुषशरीर एव किं न स्यात्?

श्लोकः ११

इति चेन्न । युक्तिसाम्यात् ।।विशेषप्रमाणाच्चेत्याह– **रूपाणीति ।। असृजत् व्यभजत्** । **प्रादुर्भावभवाय** उत्तरत्र । **सः** नारायणः । **मानुषं** कृष्णादिकम् ।।

भावदीपः (रा.टि.)– 'प्रादुर्भावभवाय' इत्यत्र शेषमाह– **उत्तरत्रेति** ।।

भावरत्नकोशः (सु.टि.)– ।। **एतत्** मोक्षधर्मवचनम् । 'नावताराः पृथक् शङ्क्याः' इति भाष्यं विवृण्वन्नेवोत्तरग्रन्थमवतारयति– **अस्त्विति** ।। एवं मूलरूपस्येवाबन्धकरूपत्वम् । वराहनरसिंहादेरुत्पत्त्यभावादाह– **असृजद् व्यभजदिति** ।। **प्रादुर्भावभवाय** प्रादुर्भावसम्भवाय, **'उत्तरत्र'** रूपविभागोत्तरकाले, इति शेषोक्तिः । **देवमानुषरूपम्** वराहादि दैवम्, रूपम् वामनाख्यम्' इति स्थिते, मानुषं मनुष्यवत् प्रतीयमानं परिशेषाद् रामकृष्णादिरूपमिति भावेनोक्तम्– **मानुषं कृष्णादिकमिति** ।।

भावप्रकाशः (कृ.टि.)– वराहादिरूपाणामुपत्त्यभावादाह–**व्यभजदिति** ।। रूपविभागस्य प्रादुर्भावप्रयोजकत्वोपपादनाय अध्याहरति– **उत्तरत्रेति** ।। ननु वामनस्य देवत्वात् कथं मानुषत्वमित्याङ्क्य मानुषम् इत्येतन्न विशेषणमिति भावेनाह– **मानुषं कृष्णादिकमिति** ।।

## भाष्यम्

**तत्रैव प्रथमसर्गकाल एवावताररूपविभक्त्युक्तेश्च । अतो न तेषां मानुषत्वादिर्विना भ्रान्तिम् । भूतं महदीश्वरं चेति भूतमहेश्वरम् । तथा हि बाभ्रव्यशाखायाम् 'अनाद्यनन्तं परिपूर्णरूपमीशं वराणामपि देववीर्यम्' इति । 'अस्य महतो भूतस्य निश्वसितम्' इति च । 'ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक' इति च मोक्षधर्मे ।। ११ ।।**

भावप्रदीपिका (प.टी.)– उपसंहरति– **अत इति** ।।भूतानां महेश्वर इत्येतावानेवार्थो न भूतमहेश्वरपदस्येत्याह– **भूतमिति** ।। तत्रैव प्रमाणमाह– **तथा हीति** ।। ब्रह्मकायिकेति देवनिकायनियाम्कत्वेनेश्वरमुच्यते ।। ११ ।।

प्रमेयदीपिका (ज.टी.)– **तत्रैव मोक्षधर्म एव** । **प्रथमसर्गकाल एव** । मानुषादिजात्युत्पत्तेः प्रागेवेत्यर्थः । उपसंहरति– **अत इति** ।। **तेषाम्** अवताराणाम् ।

उत्तरपदविरोधश्चान्यथेति भावेन तद्व्याचष्टे– **भूतमिति ।।** **भूतं** सर्वदा विद्यमानमिति कालानन्त्यमाचष्टे । महदिति देशात्यनन्त्यम् । ईश्वरमिति गुणानन्त्यम् । भावं याथार्थ्यमिति व्याख्यानापेक्षया नपुंसकम् ।।

**अत्र श्रुतिं पठति– तथा हीति ।। ईशं वराणामिति ईश्वरम् । षष्ठ्याः परनिपातः। देवाः वीर्यं पुत्रा यस्यासौ तथोक्तः । 'महतो भूतस्य' इति देशकालानन्त्यमुच्यते । वराणां देवानामीशत्वे 'ब्रह्म' इति मोक्षधर्मवाक्यं प्रमाणम् । पुरोहितादिदेव-निकायास्त्वदधीना इत्यर्थः।। 'ब्रह्म' इति द्विरुक्तिरादरार्था ।। ११ ।।**

**भावबोधः (र.टि.)–** ननु परं भावमिति द्वितीयान्तभावशब्दस्य पुंलिङ्गत्वात् तद्विशेषणीभूतमहच्छब्देश्वरशब्दयोरपि पुंलिङ्गत्वात् भूतं महानीश्वरश्चेति वक्तव्यम् । कथं महदीश्वरमिति नपुंसकलिङ्गप्रयोग इत्यत आह– **भावमिति** ।। सप्तमाध्याये 'परं भावमजानन्तो ममाव्ययमनुत्तमम्' इत्यत्र भावं याथार्थ्यमिति व्याख्यातत्वात्तेनैवेदमपि व्याख्यातमेवेत्यभिप्रेत्यैव मुक्तमिति ज्ञातव्यम् । ननु वराणामीश इति कथमीश्वरशब्दार्थकथनम् । तथात्वे वरेशमिति स्यादित्यत आह– **षष्ठ्याः परनिपात इति** ।। ईश्वरशब्दे षष्ठ्यन्तवरशब्दस्य परनिपात इत्यर्थः ।। ११ ।।

**भावदीपः (रा.टि.)–** ननु 'परं भावम्' इत्यत्र भावशब्दस्य पुंलिङ्गत्वात् तद्विशेषणीभूत 'भूतमहेश्वर'पदव्याख्यानपर इति भाष्ये 'महान्तम्' इत्यनुवादो युक्तो नतु महदिति इति शङ्कां निराह– **भावमिति** ।। अत्र भावपदस्य भाष्यकृदव्याख्यानेऽपि 'परम्भावमजानन्तो ममाव्यय-मनुत्तमम्' इत्यत्र सप्तमे व्याख्यातत्वात् तद्व्याख्यानमत्राप्यनुसन्धास्यन्ति शिष्या इति भावेन तदपेक्षया महदित्यनुवाद इत्यर्थः ।। 'ईश्वरम्' इत्यस्य 'ईशं वराणाम्' इति विग्रहोक्तौ 'वरेशम्' इति स्यात् । 'उपसर्जनं पूर्वम्' इति षष्ठ्यन्तस्य पूर्वनिपातेन भाव्यत्वादित्यत आह– **षष्ठ्या इति** ।। श्रौतनिरुक्तिबलादेव परनिपात इति भावः । का च तेषां गतिरित्यस्यार्थतो अनुवादः ।। ११ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु परं भावमिति भावशब्दस्य पुंलिङ्गतया तद्विशेषणीभूत-महदीश्वरशब्दानामपि पुंलिङ्गत्वात् भूतो महानीश्वरश्च इत्येव वक्तव्यम् । कथंभूतं महदीश्वरं च इति नपुंसकप्रयोग इत्यतः 'परं भावमजानन्तो ममाव्ययमनुत्तमम्' इति सप्तमाध्याये भावं

श्लोकः ११

याथार्थ्यमिति व्याख्यातत्वात् तेनैवास्यापि व्याख्यातप्रायत्वात् । 'क्वचित् तद्भावशेषः स्यात् क्रियाशेषः क्वचिद्भवेत् । क्वचित् पदार्थशेषः स्यादिदमादिस्त्रिधा स्मृतः' इति प्रमाणानामन्यत्रोक्तत्वाच्च व्याख्यानापेक्षया नपुंसकत्वोक्तिरित्याह– **भावं याथार्थ्यमिति** ।। ननु वराणामीश इति षष्ठीसमासे 'समासे षष्ठी' इति समासशास्त्रे प्रथमानिर्दिष्टत्वेन वराणामित्यस्य उपसर्जनत्वात् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते वरेशमिति भवितव्यम् । ईश्वर इति तु कथं स्यादित्यतः इदमागमबलादेव षष्ठ्याः परनिपात इत्याह– **षष्ठ्याः परनिपात इति** ।। उपलक्षणमेतत् । ईशशब्दान्ताकारलोपोपि निर्वचनत्वादित्यपि द्रष्टव्यम् ।।

**भावरत्नकोशः (सु.टि.)**– ननु मोक्षधर्मे पाद्मसृष्ट्यनन्तरं भूभारोद्धाराय भगवदवतारविभागोक्तेः कथं 'प्रथमसर्गकाले' इत्युच्यत इत्यत आह– **मानुषादिजातीति** ।। अत्र प्रथमसर्गशब्देन मानुषादिजात्युत्पत्तिप्राक्कालाधिकरणकसर्ग एव ग्राह्य इति न मोक्षधर्मविसंवाद इति भावः । भ्रान्तिं विना तेषामवताराणां मानुषदेहयोगादिर्नास्तीति भाष्यार्थः । अन्यथा अवताराणां मानुषशरीरादिभावाभ्युपगमे । 'जीवभूतां महाबाहो' इत्यत्र सप्तमे 'भूताः सर्वदा स्थिताः' इति व्याख्यातत्वादाह– **सर्वदा विद्यमानमिति ।। गुणानन्त्यमिति** ।। नहि देशकालगुणैरनन्तस्य कृष्णस्य मनुष्यतन्वाश्रयणं युक्तमिति भावः । ननु गीतागतभावशब्दस्य पुंलिङ्गत्वात् तद्विशेषणे 'भूतमहेश्वरम्' इत्येतत्पदेऽपि पुंलिङ्ग एव वक्तव्ये, 'भूतं महान्तम् ईश्वरम्' इत्येव भाषणीयम् । 'महत्' इति क्लीबत्वं कथम् ? इत्यत आह– **भावमिति** ।। 'परं भावमजानन्तो ममाव्ययमनुत्तमम्' इति सप्तमे 'भावं याथार्थ्यम्' इति व्याख्यानात् तदपेक्षया इहापि नपुंसकलिङ्गं प्रयुक्तमित्यर्थः । बहुलग्रहणात्तु विशेषणानामपि समास इति भावः । अत्र भगवतो भूतत्वे, महत्त्वे, ईश्वरत्वे चेति वदता 'अनाद्यनन्तम्' इति कालानन्त्यम्, 'परिपूर्णरूपम्' इति देशानन्त्यम्, 'वराणां देवानाम्' इति च गुणानन्त्यं ग्राह्यमिति श्रुतिर्व्याख्याता भवति ।

**एवमिति** ।। भूतादिबन्धाभावेन मानुषदेहाभाव इत्यर्थः । **युक्तिसाम्यादिति** ।। भगवदवतारत्वयुक्तिसाम्यादित्यर्थः । 'विभक्त्युक्तेः' इत्युत्तरभाष्यानुसारेणाह– **व्यभजदिति** ।। 'पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्' इत्याद्युक्तप्रकारेणाऽदिसृष्टावेव व्यभजदित्यर्थः । **उत्तरत्रेति** ।। ब्रह्माण्डोत्पत्त्यनन्तरं ब्रह्मणो दैनन्दिनकल्पे तत्तद्दैत्यकृतपीडापरिहारं प्रयोजनीकृत्य प्रादुर्भावभवायेत्यर्थः । **प्रागेवेति** ।। तथा च कृष्णादिरूपं कथं मानुषं स्यादित्याशयः ।

ननु 'परं भावम्' इति द्वितीयान्तभावशब्दस्य पुंलिङ्गत्वात् तद्विशेषणीभूतानां भूतशब्द-महच्छब्द ईश्वरशब्दानामपि पुंलिङ्गत्वात् 'भूतो महानीश्वरश्च' इति वक्तव्यम्, कथं 'भूतं महदीश्वरम्' इति नपुंसकलिङ्गप्रयोग इत्यत आह— **भावमिति** ।। सप्तमाध्यये 'परं भाव-मजानन्तः' इत्यत्र 'भावं याथार्थ्यम्' इति व्याख्यातत्वात्, तस्य च नपुंसकत्वात् तदनुसारेण 'भूतं महदीश्वरम्' इति नपुंसकलिङ्गप्रयोगो युक्त इति भावः । ननु तर्हि 'वरेशम्' इति स्यात् ? इत्यत आह— **षष्ठ्या इति** ।। षष्ठ्यन्तवरशब्दस्येत्यर्थः । **देववीर्यमिति** ।। 'प्रजापते रेतो देवाः' इति श्रुतेरिति भावः ।।

**पुरोहितादिदेवनिकाया इति** ।। अनेन 'पुरोहित' 'कायिक' 'महाराजिक' इति देवगणानां संज्ञेत्युक्तं भवति । 'पुरोहित' इत्याद्यविभक्तिको निर्देशः । तथा च 'पुरोहितो ब्रह्म' इत्याद्यर्थो द्रष्टव्यः । 'ब्रह्म पुरोहित कायिक' इत्युक्त्याऽलम् । पुन 'ब्रह्म' इति किमर्थमित्यत आह— **पुनः ब्रह्मेतीति** ।। ११ ।।

ननु 'वराणामीशम्' इति विग्रहाभ्युपगमे 'वरेशम्' इत्येव समासः स्यात्, न तु 'ईश्वरम्' इति ? इत्यत आह— **षष्ठ्याः परनिपात इति** ।। 'दन्तानां राजा राजदन्तः' इत्यत्र यथा षष्ठ्यन्तमुपसर्जनमपि परतो निपात्यते, तथा 'वराणामीशम्' इत्यत्रापि 'वराणाम्' इति षष्ठ्यन्तस्य परनिपातो वक्तव्यः । निरुक्तत्वाद् ईशशब्दाकारलोपश्च । सति चैवम् 'ईश्वरम्' इति रूपमिति, 'वरेशम्' इति स्यादिति चोद्यमनवकाशमिति भावः । चतुर्थे तु 'ईशेभ्योऽपि वर ईश्वरः' इति प्रकारान्तरमुक्तम् । उपादानोपादेययोरभेदादेव वीर्यपदं पुत्रपरमिति भावेनाह— **वीर्यं पुत्रा इति** ।। **देशकालेति** ।। 'महतः' इति देशानन्त्यम्, 'भूतस्य सदा विद्यमानस्य' इति कालानन्त्यमुच्यत इत्यर्थः । 'निश्वसितम् ऋग्वेदादिविद्याजातम् अनायासेनादिकाले तेनो-च्चारितम्' इति श्रुतिशेषार्थः ऋग्भाष्यटीकायामुक्तः । प्रकृतार्थे प्रामाण्याय, ब्रह्मणः पुरोहितादि-तादात्म्यानुपपत्तिपरिहाराय चाह— **पुरोहितादीति** ।। **देवनिकायाः** देवगणाः ।

ननु पुरोहितादीनां कथं गणदेवतात्वम् ? इत्यतो भाष्ये 'महाराजिक' इत्युक्तम् । तस्यायमभिप्रायः महाराजिकशब्दस्तावद् गणदेवतावचनः । 'महाराजिकसाध्याश्च रुद्राश्च गण-देवताः' इत्यभिधानात् । ततः पूर्वं पठितस्य पुरोहितादिशब्दस्यापि गणदेवतार्थत्वमेव । ततः परम् 'आभास्वर महाभास्वर सप्तमहाभागयाम्य सञ्ज्ञासञ्ज्ञ तुषित' इति आभास्वरतुषितशब्दौ पठ्येते । तावपि 'आदित्य विश्ववसवः तुषिताभास्वरानिलाः' इत्यभिधानाद् गणदेवतावचनाविति

श्लोकः ११

तत्सहपठितपुरोहितादिशब्दोऽपि देवनिकायार्थ एवेति सम्बोधनस्य तात्पर्यम् । **त्वदधीना इति** ।। 'नपुंसकानां नलोपो वाच्यः' इति शास्त्राद् 'ब्रह्म' इति सम्बुद्धौ रूपम् । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति वचनादिति भावः । **आदरेति** ।। अभ्यासाच्च तत्र तात्पर्यं ज्ञायत इति भावः ।। यदि त्वमेव जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि केचित् कथं त्वामवजानन्ति ? किञ्च ते फलं प्राप्नुवन्ति ? न किमप्यनिष्टं तेषाम् । 'अतोऽहमेव कृत्स्नजगतः कर्ता' इति प्रागुक्तमयुक्तम् ? इत्यत उच्यते– **अवजानन्तीति** ।। मूढाः मानुषीं तनुमाश्रितम् 'मनुष्यदेहमधिष्ठाय स्थितम्' इति भ्रान्त्यनुवाद एवायम् । मामवजानन्ति अवमतया जानन्ति । मूढत्वस्यैव विवरणम् भूतं सर्वदा विद्यमानं महत् देशतो व्याप्तिमन्तम् ईश्वरं गुणपूर्णं मम भावं याथार्थ्यमजानन्त इति । अन्यथा योजनं तु 'भूतं महदीश्वरं च' इति भाष्याद्यननुगुणम् । भावप्रदीपिकायाम् 'भूतानां महेश्वरम्' इत्यप्यर्थान्तरमुक्तम् ।। ११ ।।

**भावप्रकाशः (कृ.टि.)**– ननु पाद्मब्रह्मकृतदैत्यादिसृष्ट्यनन्तरं भूभारोद्धाराय भगवता अवताररूपविभागः कृत इति मोक्षधर्मे नारायणोपाख्याने स्पष्टमुक्तम् । तत्कथं प्रथमसर्गकाल एवेत्युक्तमित्यतो व्याचष्टे– **मनुष्यादिजात्युत्पत्तेः प्रागेवेत्यर्थ इति** ।।

ननु भूतं महदीश्वरं चेति कथं क्लीबत्वम् । भावशब्दस्य पुंस्त्वेन तद्विशेषणानां विशेष्यनिघ्नानां भूतादिशब्दानामपि पुंस्त्वावश्यम्भावादित्यत आह– **व्याख्यानापेक्षयेति** ।। सप्तमाध्याये भावं याथार्थ्यमिति यद्व्याख्यानं तदपेक्षयेत्यर्थः । अयं भावः । भावशब्दोऽत्र भूयतेऽनुभूयत इति कर्मणि घञन्तः । श्रिणीभुवोऽनुपसर्ग इत्युक्तेः । कर्माद्यर्थघञन्तं चाऽभिधेयलिङ्गम् । 'क्तल्युट् नपुंसके भावे स्त्रियां क्तिन्नादयो मताः । 'अतो घञजपः पुंसि' इति भावे घञन्तस्य पुंस्त्वनियमोक्त्या परिशेषेण कर्माद्यर्थघञन्तस्याऽभिधेयलिङ्गत्वलाभात् । 'सम्बन्धमनुवर्तिष्यते' इति महाभाष्यप्रयोगाच्च । प्रकृते च याथार्थ्यमभिधेयं तच्च नपुंसकं प्रचुरप्रयोगात् । अतो भावशब्दस्य क्लीबत्वात् तद्विशेषणभूतादिशब्देऽपि तद्युक्तमिति ।। प्रकारान्तरविस्तरस्तु अस्मत्परमगुरुश्रीयदुपत्याचार्यकृतसुधाटिप्पण्यामनुसन्धेयः ।।

ननु तर्हि षष्ठीति समासशास्त्रे षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वात् प्रथमानिर्दिष्टं समास उपसर्जनमित्युपसर्जनसंज्ञायामुपसर्जनं पूर्वमिति पूर्वप्रयोगे वरेशमिति स्यादित्यत आह– **षष्ठ्याः परनिपात इति** ।। राजदन्तादिषु परमिति सूत्रेणेति शेषः । श्रुत्यनुसारेण प्रकृतस्याऽपि

राजदन्तादिषु बोद्धव्यत्वादिति भावः । पृषोदरादित्वादीशशब्दान्त इति बोध्यम् । यद्वा संज्ञा-च्छन्दसोः दृष्टस्यैवाऽनुविधेयत्वात् परनिपात इति भावः । तत्पुरुषत्वे वीर्यस्यैवानादित्वादि-सिद्धिः स्यान्न विष्णोरित्यत आह– **देवा इति** ।। ननु वीर्यशब्दार्थरेतसः कथं देवाभेद इत्यत आह– **पुत्रा इति** ।। उपादानोपादेययोरभेदाद्वीर्यपदं पुत्रपरमिति भावः ।

ननु ब्रह्मपुरोहितेति वाक्ये हे ब्रह्म हे पुरोहितेत्यादि विष्णोः सम्बोधनमयुक्तम् । विष्णोः पुरोहितादितादात्म्याभावादित्यत आह– **पुरोहितादिदेवनिकाया इति** ।। देवगणा इत्यर्थः । अथ सधर्मणां स्यान्निकाय इति अमरोक्तेरिति बोध्यम् । नच महाराजिकसाध्याश्च गणदेवता इत्यमरोक्तेः महाराजिकशब्दस्य देवगणविशेषवाचित्वेऽपि पुरोहितकायिकशब्दयोस्तत्कथम्, येन देवगणा इति बहुवचनं प्रयुक्तमिति वाच्यम् । मोक्षधर्मे गुह्यब्रह्मपुरोहित ब्रह्मकायिक महाराजिक आभास्वरतुषितेति पूर्वोत्तरदेवगणवाचिशब्दसाहचर्यादिति गृहाण । **त्वदधीना इति** ।। 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्युक्तेरिति भावः । **आदरार्थेति** ।। तात्पर्यज्ञापिकेत्यर्थः । तेन आदरे द्विरुक्तेरननुशासनात् कथमेतदित्यपास्तम् । एकप्रकारासकृदुक्तेः तात्पर्यलिङ्गत्व-प्रसिद्धेरिति भावः ।। ११ ।।

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ।। १२ ।।**

## भाष्यम्

**तेषां फलमाह– मोघाशा इति ।। वृथाशाः । भगवद्द्वेषिभिः आशासितं आमुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च वृथैव तेषाम् । ज्ञानं च । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन न कश्चित् पुरुषार्थ आमुष्मिकस्तैराप्यत इत्यर्थः । वक्ष्यति च 'तानहं द्विषतः क्रूरान्'इत्यादि ।।**

भावप्रदीपिका (प.टी.)– नन्वेवं निर्दोषं चेत्, कथं तेषां न दुर्गतिरित्युक्तम् ? इत्यत उत्तरश्लोकार्धम् अवतारयति– **तेषामिति** ।। भगवद्द्वेषिकंसादीनां सम्पदादिदर्शनात् कथं मोघाशत्वम् ? इत्यत आह– **भगवदिति** ।। मोघकर्माणः इत्येतद्व्याचष्टे– **यज्ञादीति** ।। एतदेव प्रमाणैः साधयति– **वक्ष्यति चेत्यादिना** ।।

श्लोकः १२

**प्रमेयदीपिका** (ज.टी.)– किञ्च तेषां फलम् इत्यस्य परिहारो न दृश्यते । अत आह– **तेषामिति** ।। अनर्थत्व प्रदर्शनाय व्याचष्टे– **वृथेति** ।। सम्पदादिप्राप्तिदर्शनात् कथमित्यत आह– **भगवदिति** ।। युद्धादिकर्मणां साफल्यदर्शनात् कथं मोघकर्माणः? इत्यत आह– **यज्ञादीति** ।। ज्ञानं तत्वविषयं तेषां नास्त्येव । अतः कथं तस्य मोघत्वमुच्यते? इत्यत आह– **ज्ञानं चेति** ।। 'ज्ञानं च तेषां वृथैव' इत्यस्य 'केनापीत्यर्थः' इति सम्बन्धः । अनेन ज्ञानपदमुपलक्षणमिति चोक्तं भवति । न केवलं पुरुषार्थानवाप्तिः । अपि तु दुःखावाप्तिश्चेति भावेन तत्र प्रमाणान्याह– **वक्ष्यति चेति** ।।

**भावदीपः** (रा.टि.)– किञ्च 'तेषां फलम्' इति चशब्दबलाद् 'यथा'पदमाकृष्यत इति भावेनोक्तम्– **ज्ञानं च तेषां वृथैवेत्यस्येति** ।। **अनेनेति** ।। 'भक्त्याद्युपायेन' इति कथनेन 'मोघज्ञानमोघभक्तिमोघवैराग्यादिमन्तः' इत्युक्तं भवतीत्यर्थः ।। न केवलं पुमर्थहेतुत्वरूपं मोघ-पदतात्पर्यभूतमिति चार्थः ।।

**भावरत्नकोशः** (सु.टि.)– 'का च तेषां गतिः' इति भाष्यमर्थतोऽनुवदति– **किञ्च तेषां फलमितीति** ।। विषयज्ञानस्य फलदर्शनात् कथं मोघत्वम् ? इत्यतः 'ज्ञानं तत्त्वविषयम्' इति वक्तव्यम् । तत्तु तेषां नास्त्येव । 'सर्वथापि तु त एवोभयलिङ्गात्' इत्यधिकरणेऽयोग्यानां तत्त्वज्ञानाभावस्य स्थितिरिति भावेनोक्तम्– **ज्ञानं तत्त्वविषयं तेषां नास्त्येवेति** ।। भाष्ये चशब्दः 'तेषां वृथैव' इत्यस्यानुकर्षणार्थ इति भावेनाह– **ज्ञानं च तेषां वृथैवेत्यस्येति** ।। तस्यैव विवरणम् 'केनापि' इति योज्यम् । **अनेन** 'भक्त्याद्युपायेन न कश्चित्पुरुषार्थ आमुष्मिक' इति च कथनेन । न केवलं 'ज्ञानं भक्तिः विरक्तिश्च मोघाः' इत्युपलक्षितम् । किन्तु 'ज्ञानसाध्यम् आमुष्मिकफलं न किमपि तेषाम्' इति च । ज्ञानपदेनैव ज्ञानफलमुप-लक्षितमिति चार्थः । स्थितस्य ज्ञानस्य फलनिष्पादकत्वमिह ज्ञानशब्दार्थो न विवक्षितः । किन्तु तत्त्वज्ञानस्यानवाप्तिः, ज्ञानफलत्वेन प्रसिद्धं यद् आमुष्मिकफलं तस्यालाभश्चेति भावः ।

**भावदीपिका** (श्री.टि.)– ।। **साफल्येति** ।। वीरस्वर्गरूपफलसद्भावादिति भावः । **उपलक्षणमिति** ।। गीतायां ज्ञानपदं भक्त्याद्युपलक्षकमित्यर्थः ।।

**भावप्रकाशः** (कृ.टि.)– ज्ञानं चेत्यतः परमध्याहार्यं दर्शयन् व्यवहितत्वात् सम्बन्धं दर्शयति– **ज्ञानश्चेति** ।।

## भाष्यम्

**मोक्षधर्मे च 'कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः ।। यो द्विष्याद् विबुधश्रेष्ठं देवं नारायणं हरिम् । कथं स न भवेद् द्वेष्यः आलोकान्तस्य कस्यचित् ।।' इति ।**

**'सर्वोत्कृष्टो ज्ञानभक्ती ह यस्य नारायणे पुष्करविष्टराद्ये ।**
**सर्वावमे द्वेषयुतश्च तस्मिन् भ्रूणानन्तघ्नोऽस्य समो न चैव'**

**इति सामवेदे शाण्डिल्यशाखायाम् । 'द्वेषाच्चैद्यादयो नृपाः' ।**

**'वैरेण यन्नृपतयः शिशुपालपौण्ड्र साल्वादयो गतिविलासविलोकनाद्यैः ।**
**ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम्'**

**इति भागवते भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं च स्वभक्तस्य कदाचिच्छापबलाद् द्वेषिणोऽपि भक्तिफलमेव भगवान् ददातीति ।।**

भावप्रदीपिका (प.टी.)– ननु कथं न भगवद्वेषिणां दुर्गतिर्भागवते द्वेषात् इत्युक्तेः ? इत्यत आह– **द्वेषादिति** ।। कथं भक्तप्रियत्वज्ञापनमनेन ? इत्यत आह– **स्वेति** ।।

प्रमेयदीपिका (ज.टी.)– आ सम्यक् । लोकान्तस्य चण्डालादेः ।। **पुष्करविष्टराद्ये** पद्मासनस्य पितरि । भ्रूणानन्तघ्नः अनन्तभ्रूणघ्नः ।। यद्येवं कथं तर्हि भागवतादौ भगवद्द्वेषस्य मोक्षसाधनत्ववचनम् ? इत्यत आह– **द्वेषादिति** ।। 'तद्गतिं गताः' इति सम्बन्धः । वैरेण ध्यायन्तः यदीयगत्यादिभिः आकृतधियः आकृष्टबुद्धयः । ये पूर्वं भक्ताः शिशुपालादयः तद्विषये भवत्वेषा गतिः । न तु पौण्ड्रसाल्वादिविषये । अत आह– **नित्येति** ।। भक्तप्रियत्वज्ञापनार्थमित्युक्तं विवृणोति– **स्वभक्तस्येति** ।। इति भक्तप्रियत्वज्ञापनार्थमिति योजना ।।

भावबोधः (र.टि.)– ।। तद्गतिं गता इति ।। भागवतस्थेन वाक्येनेत्यर्थः । न तु पौण्ड्रकसाल्वादिविषय इति ।। यद्यपि 'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणि । आविष्टास्तु हरेर्भक्तास्तद्भक्त्या हरिमापिरे' इत्यादिना एतेष्वपि सज्जनप्रवेश उक्तः । तथाऽपि

श्लोकः १२

शिशुपालादिदेहानां जयादिशुभजीवकर्मनिर्मितत्वेन तेषामेव तद्देहाभिमानित्वात्तद्देहावच्छेदेनासुर-सम्बन्धवशेन तत्कृतद्वेषस्य प्रामादिकत्वेन तेषां द्वेषफलतमःप्राप्तिर्न भवति । तत्कृतस्वाभाविक-भक्तिफलं शुभमेव भवति । तत्प्रविष्टासुराणामेव द्वेषफलं तम इति । तेषामेव भक्तप्रियत्व-ज्ञापनार्थमित्युक्तगतिविषयत्वम् । पौण्ड्रकादिदेहानां वेनाद्यसुरकर्मनिर्मितत्वेन तेषामेव तद्देहाभि-मानित्वात् तद्देहावच्छेदेन शुभजीवसम्बन्धवशेन तत्कृतभक्त्यादेरस्वाभाविकत्वेन तेषां भक्त्यादि-फलाभावात् । तत्प्रविष्टशुभजीवानामेव शुभफलम् । पौण्ड्रकाद्यसुराणां तु तत्कृतद्वेषस्य स्वाभाविकत्वेन तत्फलं तम एवेति तेषां पूर्वोक्तगतिविषयत्वासम्भवात् । नित्यध्यानस्तुत्यर्थं चेति सर्वसाधारणगत्यन्तरोक्तिः । अत एव चशब्द इति भावः । अत एव सुधायां

'स्मर्तव्यो भगवान्नित्यम् इत्यर्थेनैव हि क्वचित् ।
द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत्'

इत्यनुव्याख्यानस्य तात्पर्यमुक्तम् । द्विविधानि वाक्यानि । 'वैरेण यन्नृपतयः' इत्यादीनि स्मरणप्रधानानि । तेषां प्रथमा गतिः । 'द्वेषाच्चैद्यादयः' इत्यादीनि द्वेषप्रधानानि । तेषां द्वितीयेति हृदयमिति । अत्र 'वैरेण यन्नृपतयः' इत्यादिवाक्यैर्नित्यध्यानस्य प्रशस्तत्वप्रतीतिः । इदं वाक्यं सन्निहितभगवद्ध्यानस्य नित्यकर्तव्यत्वाभिप्रायकम् । अनुपपन्नप्रतीतार्थकत्वे सति आप्तवाक्यत्वादित्यनुमानेनेति ज्ञातव्यम् । तदुक्तं कर्मनिर्णये 'वचनलिङ्गानुमा हि सा' इति एतदेवाभिप्रेत्योक्तं सुधायाम् 'वाक्यलक्षणानुमानं चेत्याचार्याः' इति ॥

**भावदीपः (रा.टि.)**– आङो द्वेष्यपदेनान्वय इति भावेन तदर्थमाह– **आ सम्यगिति ॥** 'द्वेषम्' इत्यादिपादस्य प्रकृतोपयोगाय भागवतस्थवाक्यशेषेणान्वयो ध्येय इति भावेनाऽह– **इति सम्बन्ध इति ॥ नतु पौण्ड्रसाल्वादीति ॥** तेषामासुरस्वभावत्वेन तेषु भगवद्भक्तेरागन्तुक-सज्जीवानुप्रवेशनिमित्तकत्वेन शिशुपालादिभक्तेरिवानादित्वाभावात् । अत एव भाष्ये 'भक्ता एव हि ते पूर्वम्' इत्युक्तमिति भावः ॥

**भावरत्नकोशः (सु.टि.)**– 'शाश्वतीः समाः' इति भाष्ये 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । शाश्वतेषु वर्षेष्वित्यर्थः । आङो द्वेष्यपदेनान्वय इति भावेन तदर्थमाह– **आ सम्यगिति ॥** लोकः जनः, तदन्तस्य इत्यस्यार्थः **चण्डालादेरिति ॥** सुधायां तु 'लोको जनः, तस्यान्तः चाण्डालादिः, तत्पर्यन्तस्य' इति 'आलोकान्तस्य' इत्येतद् ऐकपद्येन व्याख्यातम् ।

'सर्वोत्कृष्टः रमाब्रह्मादिदेवताविषयकज्ञानभक्तिसम्पत्तिमद्भ्योऽप्यतिशयितः । 'सः' इति शेषः । 'ह' इत्यव्ययम्, न तु 'इह' इति छेदः, प्रगृह्यत्वापत्तेरिति स्फुटत्वाद् दुर्गमार्थं पदमनूद्य व्याख्याति– **पुष्करेति** ।। **पद्मासनस्य** विरिञ्चस्य । अनन्तशब्दस्य विशेषणस्यापि 'विशेषणं विशेष्येण बहुलम्' इति बहुलग्रहणात् परनिपात इति भावेन व्याचष्टे– **अनन्तभ्रूणघ्न इति** ।। 'कृतघ्नः' 'शत्रुघ्नः' इत्यादौ 'मूलविभुजादित्वात् क' इति हरदत्तवचनाद् 'भ्रूणघ्नः' इत्यत्रापि हन्तेः कप्रत्ययः । **यद्येवमिति** ।। 'भगवद्द्वेषिण आमुष्मिकं फलं नास्ति' इति यदि मतमित्यर्थः ।

'गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ।।

इत्यत्र सहश्रुतपदानां क्रियान्वयाभावादबोधकत्वम् ? इत्यत आह– **इति सम्बन्ध इति** ।। एतच्छ्लोकात् पूर्वश्लोके,

'कामाद् द्वेषाद् भयात् स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ।।

इति श्रुतक्रियापदेनान्वय इत्यर्थः । व्यवहितत्वादन्वयं दर्शयति– **वैरेण ध्यायन्त इति** ।। **न तु पौण्ड्रकादीति** ।। यद्यपि 'पूतनाकंसनरकशिशुपालादिषु द्विधा । जीवाः सन्तस्त्व-सन्तश्च..... ।। इति शिशुपालादिषु जीवद्वैविध्यमिव,

'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणि । आविष्टास्तु हरेर्भक्ताः ........ ।।

इति शास्त्रेण पौण्ड्रसाल्वादिष्वपि जीवद्वैविध्यम् आवेद्यत इति शिशुपालादिभ्यस्तेषां वैलक्षण्येनोक्तगत्यविषयत्वकथनमित्ययुक्तमिव । तथापि शिशुपालादिदेहानां जयादि-सज्जीवकर्मनिर्मितत्वेन तत्र शापवशेन द्वेष्यसुरजीवप्रवेशनिबन्धनतात्कालिकद्वेषमनिरूप्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः शिशुपालादयः । पौण्ड्रकसाल्वादयस्तु सज्जीवावेशमात्रशालि-त्वेऽपि सज्जीवसम्बन्धात् पूर्वमभक्ताः, प्रत्युत द्वेषिण इति तदा भक्तिफलायोग्यतया तमः-प्राप्तियोग्यतया च भगवतो भक्तप्रियत्वज्ञापनं तत्र तात्पर्यविषयतया नावकल्पयितुमुचितमिति शिशुपालादिवैलक्षण्यमस्ति । अत एव भाष्ये 'भक्ता एव हि ते' इति 'पौण्ड्रके नरके चैव' इति प्रमाणे च 'आविष्टास्तु हरेर्भक्ताः' इति सज्जीवावेशमात्रमुक्तमिति भावेनेयमुक्तिरिति ज्ञातव्यम् ।

श्लोकः १२

तदेतन्निपुणतरमुपपादितम्–

'स्मर्तव्यो भगवान्नित्यम् इत्यर्थेनैव हि क्वचित् ।
द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् ॥'

इत्याद्यनुव्याख्यानव्याख्यावसरे 'द्विविधानि वाक्यानि' 'वैरेण यन्नृपतयः' इत्यादीनि स्मरणप्रधानानि' इत्यादि सुधायाम् । 'नित्यध्यानस्तुत्यर्थं च' इति भाष्यं यद्यपि पुराणवाक्यं द्वेषस्यापि मुक्तिसाधनत्वं प्रतिपादयतीव प्रतीयते । तथापि न तदभिप्रायकं तद्वाक्यम् । किन्तु 'मुमुक्षुणा भगवान् सर्वदा स्मर्तव्यः' इत्येतदभिप्रायकमेव । यथा

'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥'

इत्यत्र नाकार्यकरणे तात्पर्यम्, किन्तु सर्वथा भर्तव्यत्वे । तथेहापीति सुधारीत्या नित्यं भगवदनुस्मरणं प्रशस्तमिति ध्यानप्राशस्त्यतात्पर्यकम्, न पुनर्द्वेषस्यापि मुक्त्युपायत्वे तात्पर्यवदिति व्याख्येयम् ।

**भावदीपिका (श्री.टि.)**– ॥ **तद्गतिं गता इति सम्बन्ध इति** ॥ 'ईश्वरे मन आवेश्य तदघं हित्वा बहवस्तद्गतिं गता' इति सप्तमस्कन्धगतपूर्ववाक्येनान्वयः ॥ न तु पौण्ड्रकादिविषये, अत आह– **नित्येत्यादि** ॥ यद्यपि,

'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणि ।
आविष्टास्तु हरेर्भक्ता तद्भक्त्या हरिमापिरे ॥'

इत्यादिना एतेष्वपि सज्जीवप्रवेश उक्तः । तथापि शिशुपालादिदेहानां जयादिशुभजीवकर्मनिर्मितत्वेन तेषामेव तद्देहाभिमानित्वात्, तद्देहावच्छेदेन असुरसम्बन्धवशेन तत्कृतद्वेषस्य प्रामादिकत्वेन तेषां द्वेषफलतमःप्राप्तिर्न भवति । तत्कृतस्वाभाविकभक्तिफलं शुभमेव भवति, तत्प्रविष्टासुराणामेव द्वेषफलं तम इति तेषामेव भक्तप्रियत्वज्ञापनार्थम् इत्युक्तगतिविषयत्वम् । पौण्ड्रकादिदेहानां वेनाद्यसुरकर्मनिर्मितत्वेन तेषामेव तद्देहाभिमानित्वात्, तद्देहावच्छेदेन शुभजीवसम्बन्धवशेन तत्कृतभक्त्यादेः अस्वाभाविकत्वेन तेषां भक्त्यादिफलाभावात् तत्प्रविष्टशुभजीवानामेव शुभफलम्, पौण्ड्रकाद्यसुराणां तु तत्कृतद्वेषस्य स्वाभाविकत्वेन तत्फलं तम एवेति तेषां

पूर्वोक्तगतिविषयत्वासम्भवात् 'नित्यध्यानस्तुत्यर्थं च' इति साधारणगत्यन्तरोक्तिरिति ध्येयम् । अत एव सुधायाम्–

'स्मर्तव्यो भगवान्नित्यम् इत्यर्थेनैव हि क्वचित् ।
द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् ॥'

इत्यनुव्याख्यानस्य तात्पर्यमुक्तम् 'द्विविधानि वाक्यानि । 'वैरेण यन्नृपतय' इत्यादीनि स्मरणप्रधानानि, तेषां प्रथमा गतिः । 'द्वेषाच्चैद्यादयः' इत्यादीनि द्वेषप्रधानानि तेषां द्वितीयेति हृदयम्' इति । अत्र 'वैरेण यन्नृपतय' इत्यादिवाक्यैर्नित्यध्यानप्रशस्तत्वप्रतीतिः, 'इदं वाक्यं सन्निहितभगवद्ध्यानस्य नित्यकर्तव्यत्वाभिप्रायकम् अनुपपन्नप्रतीतार्थकत्वे सति आप्तवाक्यत्वात्' इत्यनुमानेनेत्याद्यालोचनीयमिति सम्प्रदायविदः । तदुक्तं कर्मनिर्णये 'वचनलिङ्गानुमा हि सा' इति । एतदेवाभिप्रेत्योक्तं सुधायाम् 'वाक्यलक्षणानुमानं चेत्याचार्याः' इति ।

**भावप्रकाशः (कृ.टि.)– ॥ तद्गतिं गता इति सम्बन्ध इति ॥**

गोप्यः कामाद्भयात् कंसो द्वेषाच्चैद्यायो नृपाः ।
सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥

इति सप्तमस्कन्धश्लोकस्थस्य द्वेषादिति वाक्यस्य

कामात् स्नेहाद्भयात् द्वेषाद् यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥

इति पूर्वश्लोकगतेन तद्गतिं गता इत्यनेन सम्बन्ध इत्यर्थः । **न तु पौण्ड्रेति** ॥ पौण्ड्रकादीनां पूर्वभक्तत्वाभावादिति भावः । न चात्र विनिगमकाऽभावः ।'पौण्ड्रके नरके चैव साल्वे कंसे च रुग्मिणी । आविष्टास्तु हरेर्भक्ताः तद्भक्त्या हरिमापिरे ' इत्यत्र पौण्ड्रकादिषु हरिभक्तावेशोक्तेरेव नियामकत्वादिति ॥

## भाष्यम्

**भक्ता एव हि ते पूर्वं शिशुपालादयः । शापबलाद् द्वेषिणः । तत्प्रश्नपूर्वं पार्षदत्वशापादिकथनाच्चैतज्ज्ञायते । अन्यथा किमिति तदप्रस्तुतमुच्यते ?**

श्लोकः १२

भावप्रदीपिका (प.टी.)– भवेत्स्तुतिश्चैद्यादीनां भक्तत्वे । तदेव कुत इत्यत आह– **भक्ता इति ।।** हि इति प्रसिद्धमित्यर्थः । इतश्च न द्वेषिणां मोक्ष इत्याह– **तत्प्रश्न इति ।।** पार्षदत्वकथने कथं न द्वेषिणां मुक्तिः ? इत्यत आह– **अन्यथेति ।।** यदि द्वेषिणां मोक्षः, तर्हि 'अहो अत्यद्भुतं ह्येतत्' इति कथं द्वेषिणो मोक्षः ? इति युधिष्ठिरप्रश्ने, अस्त्येव द्वेषिणां मोक्ष इत्युत्तरं स्यात् । पार्षदत्वकथनं व्यर्थमेवेत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– स्यादेतत् । यदि तेषां स्वतो भक्तत्वं शापबलादेव द्वेषित्वमित्येतत् प्रमितं स्यात् । तदेव कुतः? इत्यत आह– **भक्ता एव हीति ।।** प्रसिद्धमेवैतद् भागवतादावित्यर्थः । कुतो वचनानामर्थान्तरकल्पना? इति चेत् 'यो द्विष्यात्' इत्याद्युदाहृतवाक्याविरोधात् । हेत्वन्तरं चाह– **तत्प्रश्न इति ।।**

'अहो अत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि ।
वासुदेवे भगवति गतिश्चैद्यस्य विद्विषः'

इति युधिष्ठिरेण 'द्वेषिणः कथं मुक्तिर्जाता' इत्येवंरूपे तद्विषये प्रश्ने कृते सति, नारदेन

'मातृष्वसेयो वश्चैद्यो दन्तवक्रश्च पाण्डव ।
पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ।।'

इति तदुत्तरत्वेन पूर्वपार्षदत्वादिकं कथ्यते । ततोऽपि द्वेषो न मोक्षसाधनमित्येतज्ज्ञायते । कथम् ? इत्यत आह– **अन्यथेति ।।** यदि द्वेषोऽपि मोक्षसाधनं स्यात् तदा किमत्राद्भुतम्? यतो द्वेषोऽप्येको मुक्तिमार्ग इत्युत्तरं वक्तव्यम् । पूर्वपार्षदत्वादिकं त्वप्रस्तुतमनुपयुक्तं न वक्तव्यं स्यादित्यर्थः ।।

भावरत्नकोशः (सु.टि.)– तत्प्रश्ने पूर्वपार्षदत्वादि न कथ्यत इत्यतो भाष्यं घटयितुमाह– **इत्येवंरूपे तद्विषये प्रश्ने कृते सतीत्यादि ।। विप्रशापात्** सनकादिशापात् । **मुक्तिमार्गः** मुक्त्युपायः । 'अप्रस्तुतम्' इत्यनूद्य 'अनुपयुक्तम्' इति व्याख्यातम् ।

भावदीपिका (श्री.टि.)– ।। **तदुत्तरत्वेन** युधिष्ठिरप्रश्नोत्तरत्वेन । **स्तुतेरिवेति ।।** स्तुतेर्यथा मोक्षसाधनत्वम्, एवं निन्दाया मोक्षसाधनत्वं न स्यादिति व्यतिरेके दृष्टान्तः ।

**सत्प्रतिपक्षेति** ।। निन्दादौ साम्यकथनान्यथानुपपत्त्या द्वेषस्य मोक्षसाधनत्वम् इत्यर्थापत्त्या पूर्वपार्षदत्वकथनान्यथानुपपत्त्या भक्तेर्मोक्षसाधनत्वमिति पूर्वोक्तार्थापत्तेः सत्प्रतिपक्ष इत्यर्थः ।। **यथाकथञ्चिदिति** ।। भक्त्या द्वेषेण वेत्यर्थः । **घटनोपेतमिति** ।। भावः द्वेषभावः, भवस्य द्वेषभवस्य द्वेषाभिवृद्धेरेव कारणम् इत्यर्थपरत्वसम्भवेन सावकाशमित्यर्थः । **प्रतीत एवेति** ।। भावः द्वेषेण भगवच्चिन्तनम्, भवनस्य द्वेषविषयभवनस्य कारणं भगवत्सरूपत्वरूपमोक्षस्य कारणमिति प्रतीतार्थ इत्यर्थः । **उभयोः** द्वेषिभक्तयोः ।।

## भाष्यम्

**भगवतः साम्यकथनं तु द्वेषिणामपि द्वेषमनिरूप्य पूर्वतनभक्तिफलमेव ददातीति ज्ञापयितुम् । 'न मे भक्तः प्रणश्यति' इति वक्ष्यति ।।**

भावप्रदीपिका (प.टी.)– ननु यदि द्वेषिणां मोक्षो न नारदाभिप्रेतस्तर्हि किमिति 'निन्दनस्तव' इति भगवतो निन्दादौ साम्यं प्रस्तुते वक्तीत्यत आह– **भगवत इति** ।।

प्रमेयदीपिका (ज.टी.)– ननु नारदेन 'निन्दनस्तवसत्कार' इत्यदिना भगवतो निन्दादौ साम्यमपि तदुत्तरत्वेन कथ्यते । यदि स्तुतेरिव निन्दाया न मोक्षसाधनत्वं स्यात् तदा तदनुपयुक्तं न वक्तव्यमिति सत्प्रतिपक्षार्थापत्तिरित्यतोऽस्यान्यथोपपत्तिमाह– **भगवत इति** ।। **साम्यं** निर्विकारत्वम् । भक्तानामपराधं भगवान् न गणयतीत्येतत् कुतः? इत्यत आह– **नेति** ।।

भावदीपः (रा.टि.)– ।। **साम्यमपीति** ।। स्तुतिनिन्दयोर्भगवतो निर्विकारत्वमपीत्यर्थः ।। **अर्थापत्तिरिति** ।। पूर्वपार्षदत्वोक्त्यन्यथानुपपत्तिरूपसाम्योक्त्यन्यथानुपपत्तिरूपार्थापत्त्या सत्प्रतिपक्षेत्यर्थः ।।

भावरत्नकोशः (सु.टि.)– ।। 'निन्दनस्तवसत्कार' इत्यत्रादिशब्देन

'............. न्यक्कारार्थं कलेबरम् ।
प्रधानपरयो राजन्नविवेकेन कल्पितम् ।
हिंसा तदभिमानेन दण्डपारुष्ययोरपि ।

श्लोकः १२

वैषम्यमिह भूतानां ममाहमिति पार्थिव ।
यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ।।

इत्यन्तस्य ग्रहः । तत्र निन्दादीनामर्थः विषयः, छान्दसम् अर्थशब्दस्य कलेवरविशेषणतया नपुंसकत्वम् । प्रधानकार्यदेहजीवयोः प्रकृतिपुरुषयोर्वा याथार्थ्याज्ञानेन कल्पितं निन्दनादिना प्राप्तदुःखसुखभोगार्थं समर्थितम् । 'मम' 'अहम्' इति 'मदीयमिदम्' 'अहं कर्ता' इत्येवंरूपेण, तदभिमानेन कलेवराभिमानेन, भूतानामिह देहे हिंसा दण्डपारुष्ययोश्च निपतितयोर्वैषम्यं च भवति । अयं चाभिमानो यन्निबन्धनः यस्मिन् देहे निरूढः, तद्वध तस्य देहस्य वधः । स्वाभिमन्यमानदेहवधमेव स्वात्मवधमिव मन्यते इति यावत् । श्रीकृष्णस्तु एवंविधमिथ्याभिमान-विषयदेहशून्यत्वान्न निन्दादिप्राप्तदेहवान् । किन्तु तत्तद्योग्यतानुसारेण तत्तत्फलदाता सम एवेति भावेनोक्तम्– **तथा न यस्येति** । अखिलात्मनः अखण्डस्वामिनः यस्य हरेस्तथा जीव-स्येवाभिमानो नास्ति । कुतः कैवल्यात् प्राकृतदेहहीनत्वात् । तदपि कुतः परस्य प्रकृत्यादिक-मतीतस्य अस्य श्रीकृष्णस्य हिंसानिन्दनादिप्राप्तखेदाद्युपलक्षणम् । केन कल्प्यते न केनापि । तत्र निमित्तान्तरम् अकर्तुर्न विद्यते । प्राकृतदेहतन्निमित्तदुःखादिसंयोजनकर्ता यः तस्य स्वतन्त्रस्येत्येषोऽर्थः प्रतिपाद्यत इति । तथा च निन्दनस्तवनादौ भगवतः साम्यमपि तदुत्तरत्वेन द्वेषिणः कथं मुक्तिर्जातेत्येवंरूपप्रश्नोत्तरत्वेन कथ्यत इत्यर्थः सम्पद्यते । किं तत इत्यत आह– **यदि त्विति** ।। **तत्** साम्यम् । **अर्थापत्तिरिति** ।। पूर्वपार्षदत्वाद्युक्त्यन्यथानुपपत्तिरूपार्था-पत्तिरित्यर्थः । भाष्ये साम्यशब्देन सादृश्यस्यापि प्रतीतेः 'निन्दन' इत्यादौ च सादृश्यानुक्तेः, अनुपयोगाच्चाह– **साम्यं निर्विकारत्वमिति** ।।

**भावप्रकाशः (कृ.टि.)– ।। निन्दनस्तवेति ।।**

निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् । प्रधानपरयो राजन्नविवेकेन कल्पितम् ।
हिंसा तदभिमानेन दण्डपारुष्ययोरपि । वैषम्यमिह भूतानां ममाहमिति पार्थिव ।
यन्निबन्धोऽभिमानोऽयं यद्वधात्प्राणिनां वधः । तथा न यस्य कैवल्यादभिमानोऽखिलात्मकः ।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ।

इत्यन्तेन वाक्येनेत्यर्थः । अन्ये तु निन्दनेति श्लोकः ।

सर्वात्मनः समदृशेरद्वयस्याऽनहंकृतेः । तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ।

इति श्लोकश्चेत्येवं श्लोकद्वयेनेत्यर्थः । नच सप्तमस्कन्धपुस्तकेषु निन्दनेत्यस्यानन्तरं उक्तश्लोको नोपलभ्यत इति वाच्यम् । तत्त्वनिर्णयटीकायां क्रमेणैतत् श्लोकद्वयोदाहरणेन द्वितीयश्लोकस्य सप्तमस्कन्धे उत्सन्नत्वावगमादित्याहुः । **अर्थापत्तिरिति** ।। तत्प्रश्ने पूर्वपार्षदत्वादीति भाष्योक्तार्थापत्तिरित्यर्थः । ननु निन्दनेत्यादिना सादृश्यानुक्तेः कथं साम्यकथनमित्युक्तमित्यत आह– **निर्विकारत्वमिति** ।।

## भाष्यम्

**न च 'भावो हि भवकारणम्' इत्यादिविरोधः । द्वेषभाविनां द्वेष एव भवतीति हि युक्तम् । अन्यथा गुरुद्वेषिणामपि गुरुत्वं भवतीत्याद्यनिष्टमापद्येत । न चाकृतधीत्वेऽविशेषः । तेषामेव हिरण्यकशिप्वादीनां पापप्रतीतेः ।।**

भावप्रदीपिका (प.टी.)– ननु यदि तेषामाकृतधियामपि न मोक्षः, तर्हि न्यायविरोध इत्यत आह– **न चेति** ।। किमित्येवमर्थान्तरकल्पना ? इत्यत आह– **अन्यथेति** ।। नन्वाकृतधियामपि द्वेषिणां मोक्षाभावे, न भक्तानामपि स्यात्, आकृतधीत्वाविशेषादित्यत आह– **न चेति** ।।

प्रमेयदीपिका (ज.टी.)– द्वेषस्य मुक्तिसाधनत्वाभावे भावः यथाकथञ्चिच्चिन्तनं भवस्य मोक्षस्य कारणमित्यादि वचनविरोधः स्यादित्यत आह– **नचेति** ।। कुतो न? इत्यत आह– **द्वेषेति** ।। हि यस्मादेतद्वचनम् इति युक्तं घटनोपेतं तस्मादित्यर्थः । यथोक्तम्– 'यादृशी भावना ज्ञेया सिद्धिर्भवति तादृशी' इति । प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **अन्यथेति** ।। भगवद्द्वेषिणो मुक्तिभाजस्तदाकृतधीत्वाद् भगवद्भक्तवदित्यनुमानविरोध इत्यत आह– **न चेति** ।। उभयोराकृतधीत्वे सति फलेऽपि अविशेषः इति च नेत्यर्थः । कुतः? इत्यतः कालातीतत्वादित्याह– **तेषामेवेति** ।। आकृतधीनामेव ।।

श्लोकः १२

**भावदीपः (रा.टि.)–** 'इति हि युक्तम्' इति भाष्ये 'इति युक्तम्' इत्युक्तं नित्यत्वमेव अनूद्य विशेष्याकाङ्क्षायाम् 'एतद्वचनम्' इत्याध्याहारेण पूरयन् युक्तपदार्थमाह– **एतद्वचनमिति ।। युक्तं घटनोपेतमिति ।।** द्वेषभाविनां द्वेष एव भवति, नतु भगवद्भाव इत्यर्थतया उपपन्नं तद्वचनम् । तस्मान्न विरोध इति योजनेत्यर्थः । **प्रतीत एवेति ।।** मोक्षरूप एवार्थ इतीत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। आकृतधीनामिति ।।** नच 'अचिश्नुधातुभ्रुवां य्वोः इयङुवङौ' इति इयङि सुधियामितिवत् आकृतधियामिति स्यात् । आकृतधीनामिति तु कथमिति वाच्यम् । अत्र 'वामि' इति विकल्पेन नदीसञ्ज्ञाविधानात् 'ह्रस्वनद्यापो नुट्' इति नुटि आकृतधीनामित्यपि सम्भवात् । नच 'यूस्त्र्याख्यौ नदी' इति सूत्रेण नित्यप्राप्तनदीसञ्ज्ञाया एव तत्र विकल्पितत्वात् प्रकृतेन च नित्यस्त्रीलिङ्गत्वाभावनेन नदीसञ्ज्ञाप्राप्तेरेवासम्भवेन कथं विकल्पावकाश इति वाच्यम् । विशिष्टाङ्गस्य स्त्रीलिङ्गत्वाभावेपि तदवयवभूतधीशब्दस्य स्त्रीलिङ्गत्वात् तन्मात्रेण विशिष्टाङ्गस्य नदीसञ्ज्ञाप्राप्त्या विकल्पसम्भवतात् । नचात्र विनिगमकाभावः । 'यूस्त्र्याख्यौ नदी' इति सूत्रे क्विप् लुप्समाससिद्ध्यर्थं प्रथमलिङ्गग्रहणं च कर्तव्यमित्यादिना महाभाष्यकारेणाभिहितत्वात् । अयमस्यार्थः । यः शब्दः प्रथमं स्त्रीत्वयुक्तं द्रव्यमभिधाय पश्चात् येनकेनचित्प्रकारेण लिङ्गान्तरयुक्तं द्रव्यान्तरमाह , तत्र अस्त्र्याख्यत्वेपि नदीसञ्ज्ञा स्यादेवेति । तथाचावयवभूतधीशब्दस्य स्त्र्याख्यत्वेन अस्त्र्याख्यस्यापि आकृतधीशब्दस्य नदीसञ्ज्ञोपपत्तेः युक्तः अनुदिदिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** भाष्ये 'द्वेषिणामपि' इत्यनन्तरं 'भक्तानाम्' इति योज्यमिति हृदि निधायोत्तरं भाष्यमवतारयति– **भक्तानामिति ।।** 'भाव' इत्यनूद्य तदर्थमाह– **भाव इति ।।** यथाकथञ्चिद् वैरभयादियुक्तत्वेनापि इत्यादिवचनेति ।।

> 'जन्मत्रयानुगुणितवैरसंरब्धया धिया ।
> ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ।।'

इत्यादिभागवतादिवचनेत्यर्थः । 'हि' इत्यनुवादः । 'यस्मात्' इति व्याख्या । **प्रतीत एव** यथाकथञ्चिच्चिन्तनमपि मोक्षकारणमिति प्रतीत एव । भाष्यं योजयति– **उभयोरिति ।।** द्वेषिभक्तयोरित्यर्थः । **फले** मोक्षलक्षणे । 'इति च न' इत्यत्र चशब्दः 'न च भावो हि भवकारणमित्यादिविरोध' इत्यनेन समुच्चयार्थः । **कालातीतत्वात्** बाधितविषयत्वात् ।

'तेषामेव' इत्यस्यार्थः– **आकृतधीनामेवेति** ।। यद्यपि 'यू स्त्र्याख्यौ नदी' इति स्त्रीवाचकत्व एव नदीसञ्ज्ञा विहिता । आकृतधीशब्दश्च उपसर्जनत्वेन पुमर्थक इति षष्ठी-बहुवचने नुडागमानवकाशे इयङादेशे च 'आकृतधियाम्' इत्येव स्यात् । तथापि 'पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वमेष्टव्यम्' इत्यर्थकेन 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसञ्ज्ञायाम् 'ह्रस्वनद्यापो नुट्' इति नुडागमो भविष्यतीति 'आकृतधीनाम्' इति साधुः । अत एव 'बहुश्रेयसीनां ब्राह्मणानाम्' इत्याधुनिक उदाहरत् । न च नेदमुदाहरणमिति इयङ्स्थानं प्रकृतं तु तथाविधमिति, तत्र 'नेयङुवङ्स्थानावस्त्री' इति प्रतिषेधः प्रसरतीति वाच्यम् । 'वाऽमि' इति सूत्रे उक्तवार्तिके नदीसञ्ज्ञाया विकल्पितत्वात् ।

**भावदीपिका (श्री.टि.)**– ।। **आकृतधीनामिति** ।। ननु कथमेतत् ? षष्ठीबहुवचने 'आकृतधी आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' 'ह्रस्वान्तात्, नद्यन्तात्, आबन्ताच्च नुडागमः स्यात् आमि परे' इति सूत्रेण नद्यन्तत्वान्नुडागमे सति, 'आकृतधीनाम्' इति भवतीति हि वक्तव्यम् । तदयुक्तम् । नद्यन्तत्वाभावात् । तथा हि 'यू स्त्र्याख्यौ नदी' 'ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्त' इत्यनेन हि नदीसंज्ञाऽत्र वक्तव्या । सा न युक्ता । अस्य पुरुषविशेषणत्वेन पुंलिङ्गतया नित्यस्त्रीत्वाभावात्, इति चेत् ।

अत्राहुः गुरुचरणाः । 'यू स्त्र्याख्यौ नदी' इत्यत्र सूत्रे वार्तिकम् 'अत्र प्रथमलिङ्गग्रहणं कर्तव्यं नदीसंज्ञायाम्' इति । अस्यार्थः प्रथमशब्दस्य यल्लिङ्गं तद्ग्रहणमेव कर्तव्यं नदीसंज्ञाविधौ । प्रथमशब्दस्य नित्यस्त्रीत्वे तदन्तशब्दस्यास्त्रीत्वेऽपि नदीसंज्ञाऽस्त्येवेति । तद्यथा 'अतिलक्ष्मीनाम्' इति । अत्र प्रथमस्य लक्ष्मीशब्दस्य नित्यस्त्रीलिङ्गत्वात्, तदन्तातिलक्ष्मी-शब्दस्य अस्त्रीलिङ्गत्वेऽपि नदीसंज्ञाऽस्त्येवेति नुडागमे 'अतिलक्ष्मीनां पुंसाम्' इति भवति । एवमिहापि धीशब्दस्य प्रथमस्य नित्यस्त्रीलिङ्गत्वेन तल्लिङ्गस्यैव नदीसंज्ञाविधौ ग्राह्यतया वार्तिकोक्तत्वात्, तदन्ताकृतधीशब्दस्यास्त्रीलिङ्गत्वेऽपि नदीसंज्ञायाः सत्त्वान्नुडागमे 'आकृत-धीनाम्' इति युक्तमिति न कश्चिद्दोष इति ।

**भावप्रकाशः (कृ.टि.)**– ।। **तदाकृतधीत्वादिति** ।। भगवदाकृष्टबुद्धित्वादित्यर्थः । **आकृतधीनामेवेति** ।। धीशब्दस्य वामीत्यनेन षष्ठीबहुवचनपरे विकल्पेन नदीसंज्ञाविधानादा-कृतधीशब्दस्यापि नदीत्वम्, प्रथमलिङ्गग्रहणं चेति वार्तिके पूर्वं नित्यस्त्रीलिङ्गस्योपसर्जनत्वेऽपि

श्लोकः १२
नदीत्वं वक्तव्यमित्युक्तत्वात् । तेन नुडागमोपपत्तिः । एतेनाऽकृतधीशब्दस्य नित्यस्त्रीलिङ्गत्वाभावेनानदीत्वात् कथं नुडिति निरस्तम् ॥

## भाष्यम्

**'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः ।**
**विविक्षुरत्यगात् सूनोः प्रह्लादस्यानुभावतः' इति ॥**

**'यदनिन्दत् पिता मह्यम्' इत्यारभ्य 'तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्' इति प्रह्लादेन भगवतो वरयाचनाच्च । बहुषु ग्रन्थेषु च निषेधः कुत्रचिदेव तदुक्तिरिति विशेषः । यस्मिन् तदुच्यते तत्रैव निषेधः उक्तः ॥**

भावप्रदीपिका (प.टी.)– ननु भागवतवचनानामन्यवचनैरन्यार्थत्वे, विपरीतं किं न स्यात् ? इत्यत आह– **बह्विति** ॥ ततश्च भागवतवचनस्यैवार्थान्तरमिति युक्तिद्वयमाह– **यस्मन्निति** ॥

प्रमेयदीपिका (ज.टी.)– **विविक्षुः** वेक्ष्यतीति सम्भावनाविषयः । 'आशङ्कायामचेतनेषूपसङ्ख्यानात्' । मह्यं मम । ननु वचनत्वाविशेषात् 'यो द्विष्यात्' इत्यादिभिः 'द्वेषाच्चैद्य' इत्यादीनां कथं बाधनम्? इत्यत आह– **बह्विति** ॥ निषेधः द्वेषस्य मुक्तिसाधनतायाः । न केवलं बहुत्वाबहुत्वरूपोऽनयोर्विशेषः । किन्तु स्वव्याहतत्वास्वव्याहतत्वरूपोऽपीत्याह– **यस्मिन्निति** ॥ भागवतादौ ग्रन्थे 'भगवन्निन्दया' इत्यादि निषेधः ॥

भावबोधः (र.टि.)– ॥ **सम्भावनाविषय इति** ॥ स्वतस्तस्य तमःप्रवेशेच्छाभावादिति भावः । नन्विच्छायामेव सन्धिविधानात् कथं विविक्षुरित्यस्य सम्भावनाविषय इति व्याख्यानमित्यत आह– **आशङ्कायामिति** ॥ अत्राचेतनत्वं नाम सन्नन्तप्रकृत्यर्थेच्छाराहित्यमात्रं चेतनाचेतनसाधारणं विवक्षितम् ॥

भावदीपः (रा.टि.)– ॥ **सम्भावनाविषय इति** ॥ तमःप्रवेशेच्छाया अयुक्तत्वादिति भावः ॥ **अचेतनेष्विति** ॥ अचेतनशब्देनेच्छाराहित्यस्य विवक्षितत्वात् 'विविक्षुः' इत्यत्र

सन्प्रत्ययः साधुरिति भावः ।। **उक्तप्राय इति** ।। द्वितीयाध्याये 'गुणोत्कर्षज्ञानान्मुक्तिः' इत्युक्त्या द्वेषान्नेति प्राप्तत्वादिति भावः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति इच्छायां सन्विधानात् सन्नन्तविविक्षुशब्दस्य कथं सम्भावनविषय इति व्याख्यानं तत्राह– **आशङ्कायामचेतनेषूपसङ्ख्यानादिति** ।। आशङ्कासम्भावना प्रयोक्तृधर्मः । तद्विशिष्टक्रिया-वचनात् धातोः स्वार्थे सन्प्रत्ययो भवतीति उपसङ्ख्यानार्थः ।।

ननु च कूलस्याचेतनत्वेन तत्राचेतनगर्भितोक्तोपसङ्ख्यानप्रवृत्तिसम्भवात् तत्र सम्भावनायाम् उपसङ्ख्यानाख्यानेन सन्प्रत्ययसम्भवेपि हिरण्यकशिपोश्चेतनत्वेन तत्राचेतनगर्भितोक्तोप-सङ्ख्यानाप्रवृत्त्या कथं तेन तत्र सम्भावनायां सन्प्रत्ययसिद्धिरिति चेन्न । तथासति 'श्वा मुमूर्षति' इत्यत्रापि शुनः चेतनत्वेन तत्रोपसङ्ख्यानाप्रवृत्त्या तेन तत्र सनः सिद्ध्यसम्भवेनन तदनुदाहरणत्वप्रङ्गात् । यदि च शुनः चेतनत्वेपि जीवनस्यातिप्रियत्वात् व्याध्याद्यभिभवे मर्तुमिच्छायाः असम्भवेन इच्छायां सनः अनुपपत्त्या 'मरिष्यति श्वा' इति सम्भावनाविषयतया सलम्भावनाया सन्प्रत्ययसिद्धिसम्भवात् तत्रोदाहरणत्वमिति मन्यसे हन्त तर्हि हिरण्यकशिपोरपि चेतनत्वेपि तमो वेक्ष्यामीति इच्छाया असम्भवेन इच्छायां सनः अनुपपत्त्या उक्तसम्भावना-विषयत्वमात्रेण उपसङ्ख्यानात् सन्सिद्धिर्भविष्यतीति न प्रकृतेप्यनुपपत्तिः ।

यदि चाचेतनग्रहणे नार्थ इति वदता भाष्यकारेण चेतनभागस्योपङ्ख्यानान्तर्भावखण्डनोप-सङ्ख्यानस्य तदगर्भितत्वात् चेतनेपि प्रवृत्तिसम्भवात् तेन सनः सिद्धिसम्भवात् नानुपपत्ति-रित्याशयात् । .......अतः कूलं पिपषति इत्यस्य सम्भावनायां सनः सिद्धिसम्भवनायां सन्युदाहरणतया परेण दर्शितत्वात् प्राथमिकत्वात् तस्यैव दृष्टान्ततयोपदर्शनीयत्वेन तदनुपदश्र्य द्वितीयोदाहरणस्य दृष्टान्ततयोपदर्शनं सुधायां क्लिष्टतरमिति ध्येयम् ।।

**भावरत्नकोशः (सु.टि.)**– ननु हिरण्यकशिपोस्तमःप्रवेशेच्छाऽभावात्, कथं विविक्षुः वेष्टुम् इच्छुः इतीच्छार्थकप्रत्यय इत्यत आह– **वेक्ष्यतीति सम्भवनाविषय इति** ।। अत्रार्थे शास्त्रम्– **आशङ्कायामिति** ।। सम्भावनाविषयतायामित्यर्थः । **अचेतनेषु** इच्छारहितेषु । अत्र च हिरण्यकशिपोः तदिच्छाभावेऽपि सम्भावनाविषयत्वमात्रेण सन्प्रत्यये, 'सनाशंसभिक्ष उः' इत्युप्रत्यय इति भावः । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति शास्त्रादाह– **मह्यं ममेति** ।। **बाधनं**

श्लोकः १२

प्रतीतार्थप्रच्यावनम् । निषेधस्य विषयं दर्शयन्नाह– **निषेधो द्वेषस्य मुक्तिसाधनताया इति ।।** **निषेधः** 'भगवन्निन्दया वेनो द्विजैस्तमसि पातितः' इति, 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः' इत्यादिवचनैर्भागवत एव द्वेषस्य मुक्तिसाधनताया निषेधः कृत इत्यर्थः ।

**भावदीपिका (श्री.टि.)**– हिरण्यकशिपोः तमोवेशनेच्छाया अभावादाह– **वेशनसम्भावनेति ।।** नन्विच्छायामेव सनो विधानात् कथं सन्नन्तस्य 'विविक्षुः' इत्यस्य वेशनसम्भावनाविषयत्वमर्थः इत्यत आह– **आशङ्कायामिति ।।** 'आशङ्कायाम् अचेतनेषूपसङ्ख्यानम्' इति वार्तिके इत्यर्थः । इच्छायां सन्प्रत्ययं विधाय, 'श्वा मुमूर्षति', 'कूलं पिपतिषति' इति चेतनाचेतनसाधारणसन्नन्तशब्दप्रयोगोपपत्त्यर्थम् इदं वार्तिकं प्रवृत्तम् । तस्यायमर्थः अचेतनेषु सन्नन्तशब्दप्रकृत्यर्थेच्छारहितेषु, आशङ्कायां सम्भावनायां विवक्षितायां सत्यां सन्प्रत्ययोपसङ्ख्यानं कर्तव्यमिति । तेन चेतनाचेनसाधारण्येन सन्नन्तशब्दप्रयोगो युक्त इति भावः ।।

**भावप्रकाशः (कृ.टि.)**– ननु हिरण्यकशिपोस्तत्प्रवेशेच्छाभावात् कथं विविक्षुरित्युक्तमित्यत आह– **सम्भावनेति ।।** ननु इच्छायां सन्विधानात् कथमिदं व्याख्यानमित्यत आह– **आशङ्कायामिति ।।** सम्भावनायामित्यर्थः । अचेतनेषु इच्छारहितेषु आशङ्कायामुपसङ्ख्यानमित्यनेन सम्भावनादिविशिष्टक्रियावचनात् स्वार्थसन्विधानादित्यर्थः ।।

## भाष्यम्

**महातात्पर्यविरोधश्चोक्तः पुरस्तात् । अयुक्तिमद्भ्यो युक्तिमन्त्येव बलवन्ति वाक्यानि । युक्तयश्चोक्ता अन्येषाम् । न चैषां काचिद्गतिः ।।**

भावप्रदीपिका (प.टी.)– युक्तिमत्त्वायुक्तिमत्त्वन्यायाच्चेयं व्यवस्थेत्याह– **अयुक्तिमद्भ्य इति ।।** सावकाशनिरवकाशन्यायाच्चैवमित्याह– **न चेति ।।**

प्रमेयदीपिका (ज.टी.)– भगवद्गुणोत्कर्ष एव सर्ववेदानां यन्महातात्पर्यं तद्विरोधो द्वेषान्मुक्तिवाचिनाम् । इतरेषां तु तदानुकूल्यमिति च विशेष इति भावेनाऽह– **महातात्पर्येति ।। उक्तः** उक्तप्रायः। इतोऽपि बाध्यबाधकभावो युक्त इति भावेन व्याप्तिं तावदाह– **अयुक्तिमद्भ्य इति ।।** सप्तम्यर्थे मतुप् । ततः किमित्यत आह– **युक्तयश्चेति ।।** 'महातात्पर्यविरोधश्च' इत्यपेक्षया । अन्येषामनुकूलाः युक्तयः ।

श्लोकः १२

**'अव्ययं विबुधश्रेष्ठम् । पुष्करविष्टरायै' इति ।। सावकाशत्वनिरवकाशत्वविशेषाच्चैव-मित्याह– न चेति ।। 'इतरेषां तूक्तैव' इति शेषः ।।**

**भावबोधः (र.टि.)– ।। उक्तप्राय इति ।।** यतो गुणोत्कर्षज्ञानं विनाऽन्येन न मोक्षः अतो मोक्षप्रयोजनकवेदानां गुणोत्कर्षे महातात्पर्यमित्युक्तेऽर्थात् द्वेषस्य मुक्तिसाधनत्वं द्विरुद्ध-मित्युक्तमेवेति भावः । **सप्तम्यर्थे मतुबिति ।।** अव्ययत्वविबुधश्रेष्टत्वपुष्करविष्टराद्यत्वरूप-युक्तीनां 'कर्मणा' इति 'यो द्विष्यात्' इति 'सर्वोत्कृष्ट' इति वाक्येषु प्रतिपाद्यत्वेन सत्त्वात् सप्तम्यर्थे मतुबित्यर्थः । तदस्यास्त्यस्मिन्निति मतुबित्युभयार्थे मतुब्विधानादिति भावः । ननु प्रतियोगिनोऽनुक्तत्वात् किमपेक्षया यो द्विष्यादित्यादिवाक्यानामत्यपेक्षया इति भाष्येऽन्यत्व-मुच्यत इत्यत आह– **महातात्पर्यविरोधश्चेत्यपेक्षयेति ।।** महातात्पर्यविरोधश्चेत्यनेनैव तत्सम्बन्धितया प्रतियोगिभूतानि वाक्यानि उपस्थापितानि । ततश्च 'तेषां चैद्यादयो नृपा' इत्यादिवाक्यानां महात्पर्यविरोध उक्तः तेभ्योऽन्येषामित्यर्थः । ता एव युक्तीराह– **अव्यय-मित्यादिना ।।** अयं भावः । भगवद्वेषी पितृनरकपातहेतुः लोकान्तादिः सर्वजनद्वेष्यः, सर्वावमश्च । उत्तमपुरुषद्वेषित्वात् सद्गुरुद्वेषिशिष्यवदिति । न चासिद्धो हेतुः । विष्णुः सर्वोत्तमः सर्वात्मनाऽव्ययत्वात् विबुधश्रेष्टत्वात् पद्मासनपितृत्वात् व्यतिरेकेण देवदत्तवत् इति युक्त्या भगवतः सवोत्तमत्वसिद्धेरिति । **इतरेषां त्विति ।।** 'द्वेषाच्चैद्यादयो नृपा' इत्यादीनामित्यर्थः ।

**भावदीपः (रा.टि.)– ।। सप्तम्यर्थ इति ।।** 'तदस्यास्त्यस्मिन्निति मतुप्' इत्युक्तेरिति भावः ।। **युक्तयश्चेति ।।** चशब्दसमुच्चेयमाह– **महातात्पर्यविरोधश्चेत्यपेक्षयेति ।।** न केवलं महातात्पर्यविरोध उक्त इति चार्थ इति भावः । **'अन्येषाम्'** इत्यस्य प्रतियोगिसूचनायैतद् इत्येके । महातात्पर्यविरुद्धस्मृतीनां प्रतियोगित्वादिति 'अन्येषाम्' इत्यस्यान्वयाय आह– **अनुकूला इति ।। 'यो द्विष्यात्'** इत्यादि वचनानामित्यर्थः ।। युक्तीर्व्यनक्ति– **अव्यय-मित्यादिना ।।** 'कर्मणा मनसा' इति श्लोके अव्ययत्वादेः प्रतीतेरिति भावः ।। **उक्तैवेति ।।** 'द्वेषाच्चैद्यादयः' इत्यादिवाक्यानां भक्तप्रियत्वादिज्ञापनादिरूपा गतिरुक्तैवेत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। सप्तम्यर्थे मतुबिति ।।** अव्ययत्वविबुधश्रेष्टत्वपुष्कर-विष्टराद्यत्वरूपयुक्तीनां 'कर्मणा' इति इति, 'यो द्विष्यात्' इति 'सर्वोत्कृष्ट' इति वाक्येषु प्रतिपाद्यत्वेन सत्वात् सप्तम्यर्थे मतुबित्यर्थः ।। 'तदस्यास्त्यस्मिन्निति मतुप्' इति उभयार्थेऽपि मतुब्विधानादिति भावः ।।

श्लोकः १२

**भावरत्नकोशः (सु.टि.)–** भगवद्गुणोत्कर्ष एव वेदानां महातात्पर्यस्यैव द्वितीयाध्याये उक्त्या 'द्वेषान्न मुक्तिः' इत्यत्र तदनुक्तेराह– **उक्तप्राय इति** ।। 'मोक्षो हि महापुरुषार्थः । स च विष्णुप्रसादादेव सिद्ध्यति । विष्णुप्रसादश्च गुणोत्कर्षज्ञानाद् भवति । अतो भगवद्गुणोत्कर्ष-ज्ञान एव सर्वागमानां महातात्पर्यम्' इत्युक्तौ गुणोत्कर्षज्ञानापादितभक्तिरेव मोक्षसाधनम्, न तु द्वेषोऽप्यर्थाल्लभ्यत इति महातात्पर्यविरोधो द्वेषान्मुक्तिवाचिवाक्यानाम् । भक्तेर्मुक्तिहेतुत्ववाचिनां 'यो द्विष्याद्विबुधश्रेष्ठम्' इत्यादिवचनानां तु महातात्पर्यानुकूल्यमेवेति भावः । **व्याप्तिम्** 'यानि युक्तिमन्ति तानि अयुक्तिमद्भ्यो बलवन्ति, यथा सम्मतानि' इति व्याप्तिम् । ननु 'युक्तिरेषामस्ति' इति षष्ठ्यर्थे मतुबिति पक्षे वाक्यानां युक्तिं प्रति धर्मित्वम्, युक्तीनां च वाक्यधर्मत्वं प्रतीतमयुक्तम् ? युक्तीनां परामर्शविशेषरूपाणाम् आत्मधर्मत्वेन वाक्यधर्मत्वा-भावात्, इत्यत आह– **सप्तम्यर्थ इति** ।। 'युक्तय एषु वाक्येषु प्रतिपाद्यतया सन्ति इति युक्तिमन्ति' इति स्वप्रतिपाद्ययुक्त्युपोद्बलितानि वाक्यानि अत्र युक्तिमच्छब्देन विवक्षितानि । 'तदस्त्यस्यास्मिन्निति मतुप्' इति शास्त्रादिति भावः । अन्यत्वं सप्रतियोगिकम् इत्यतः प्रतियोगि दर्शयितुमाह– **महातात्पर्येति** ।। येषां 'द्वेषाच्चैद्यादयः' इत्यादीनां महातात्पर्यविरोध उक्तः, तेभ्योन्येषां 'कर्मणा मनसा वाचा', 'यो द्विष्यात्' इत्यादिरूपाणां द्वेषस्य मोक्षसाधनत्व-निषेधपराणामित्यर्थः । 'अनुकूलाः' इति भाष्यशेषोक्तिः । 'युक्तयश्च' इत्यत्र चशब्दः महातात्पर्यविरोधश्चेत्येवं समुच्चयार्थ इत्यपि आहुः ।

केचित्तु अनुकूलयुक्तीनाम् एतदध्यायात् पूर्वं काप्यनुक्तत्वात् कथम् 'उक्तः' इति भाषणम् ? इत्याशङ्क्य महातात्पर्यविरोधश्चेत्यपेक्षया 'उक्तः' इति वचनं तत्सन्नियोगादव्ययत्वादियुक्तीनाम् उच्यमानानामपि उक्तत्वमुपचारादिति भावेन 'महातात्पर्यविरोधश्चेत्यपेक्षया' इत्युक्तमिति वदन्ति ।

अन्येषामनुकूला एव युक्तीर्दर्शयति– **अव्ययमित्यादिना** ।। भगवान् न द्वेष्यो भवितुमर्हति उत्तमपुरुषत्वात्, सद्गुरुवत् । भगवद्द्वेषो वा न मुक्तिहेतुः उत्तमपुरुषद्वेषत्वात्, राजद्वेषवत् । भगवद्द्वेषिणो वा न मुक्तिभाजः उत्तमपुरुषद्वेषित्वाद्, राजद्वेषिवत् । न चासिद्धिः । भगवान् उत्तमपुरुषः अव्ययपदोपलक्षितसकलदोषशून्यत्वात्, विबुधश्रेष्ठत्वात्, पद्मासनपितृत्वाच्च, व्यतिरेकेण चैत्रवदिति युक्तिभिस्तत्सिद्धेः । एवं चैतद्युक्त्युपोद्बलितैः 'कर्मणा मनसा वाचा', 'यो द्विष्याद्विबुधश्रेष्ठम्', 'सर्वावमो द्वेषयुतश्च' इति वचनैः 'द्वेषाच्चैद्यादयः' इत्यादीनां बाधनं युक्तमेवेति भावः । **निरवकाशत्वेति** ।। 'यावत्या वाचा कामयीत तावत्या दीक्षणीयाया-

मनुर्ब्रूयात्' इत्यत्र निरवकाशप्राबल्यस्य पूर्वतन्त्रे स्थितेरिति भावः । **इतरेषां** 'द्वेषाच्चैद्यादय' इत्यादीनाम् । **उक्तैव** भक्तिप्रियत्वज्ञापनादिरूपा गतिरुक्तैव ।

**भावदीपिका (श्री.टि.)–** द्वेषस्य मुक्तिसाधनत्वाङ्गीकारे महातात्पर्यविरोधस्यानुक्तत्वादाह– **उक्तप्राय इति** ।। गुणोत्कर्षज्ञानं विनाऽन्येन न मोक्षः । अतो मोक्षप्रयोजनकानां वेदानां गुणोत्कर्षे महातात्पर्यम् इत्युक्ते, अर्थात् द्वेषस्य मुक्तिसाधनत्वं तद्विरुद्धम् इत्युक्तमेवेत्यर्थः । उक्तं चानुव्याख्याने 'यद् द्वेषेण मुक्तिः स्याद् वक्तव्यो दोषसञ्चय' इति । 'युक्तिमन्ति' इत्यत्र युक्तयो न बाह्याः अन्वेषणीयाः, किं नाम अव्ययत्वविबुधश्रेष्ठत्वपुष्करविष्टराद्यत्वरूपा युक्तयः 'कर्मणा मनसा''यो द्विष्यात्' 'सर्वोत्कृष्टे' इति वाक्येष्वेवोक्ताः सन्तीत्याशयेनाह– **सप्तम्यर्थ इति** ।। तथा च 'युक्तय एषु सन्तीति युक्तिमन्ति' इति सप्तम्यर्थे मतुबित्यर्थः । 'तदस्यास्त्यस्मिन्' इति षष्ठीसप्तम्यर्थयोर्मतुब्विधानादिति भावः । ननु प्रतियोगिनोऽनुक्तत्वात् किमपेक्षया 'यो द्विष्यात्' इत्यादिवाक्यानाम् 'अन्येषाम्' इति भाष्येऽन्यत्वमुच्यते? इत्यत आह– **महातात्पर्येति** ।। 'महातात्पर्यविरोधश्च' इत्यनेनैव तत्सम्बन्धितया प्रतियोगिभूतानि वाक्यान्युपस्थापितानि । तथा च येषां 'चैद्यादयो नृपाः' इत्यादिवाक्यानां महातात्पर्यविरोध उक्तः, तेभ्यो वाक्येभ्योऽन्येषां 'कर्मणा', 'यो द्विष्यात्', 'सर्वोत्कृष्टे' इति वाक्यानां प्राबल्येन बाधकत्वे अनुकूला युक्तयस्तत्रैवोक्ताः सन्तीत्यर्थः । ता एव युक्तीराह– **अव्ययमित्यादिना** ।।

अयं भावः । भगवद्द्वेषी पितृनरकपातहेतुः लोकान्तादिसर्वजनद्वेष्यः सर्वावमश्च उत्तमपुरुषद्वेषित्वात् सद्गुरुद्वेषिशिष्यवत् । न च विशेषणासिद्धो हेतुः । 'विष्णुः उत्तमपुरुषः सर्वात्मनाऽव्ययत्वात्, विबुधश्रेष्ठत्वात्, पद्मासनपितृत्वात् व्यतिरेकेण देवदत्तवत्' इति युक्त्या भगवतः सर्वोत्तमत्वसिद्धेरिति । **इतरेषां तूक्तैवेति** ।। 'द्वेषाच्चैद्यादयः' इत्यादिवाक्यानां 'भक्तप्रियत्वज्ञापनार्थम्' इत्यादिना सावकाशत्वमुक्तमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** गुणोत्कर्षे वेदानां महातात्पर्योक्तावपि द्वेषान्मुक्तिरित्यत्र तद्विरोधानुक्तेराह– **उक्तप्राय इति** ।। ननु षष्ठ्यर्थमनुपालब्धं युक्तिमत्वं नाम युक्त्यनुकूलत्वम् । तथा चानुकूल्ययुक्तीनां प्रागनभिधानादुक्ता इत्ययुक्तम् । 'लोकानकूल' इत्यग्रिमवाक्येन पुनरुक्तिश्चेत्यत आह– **सप्तम्यर्थे मतुबिति** ।। तदस्यास्त्यस्मिन्निति मतुबिति सूत्रादिति

श्लोकः १२

भावः । ननु प्रतियोगिनोऽनुक्तेः किमाक्षेपेण 'यो द्विष्यात्' इत्यादिवाक्यानामन्यत्वमित्यत आह– **महातात्पर्येति** ।। 'महातात्पर्यविरोधश्च' इत्यनेन येषां महातात्पर्यविरोध उक्त-स्तेभ्योऽन्येषामित्यर्थः । ननु युक्तिमन्तीति सप्तम्यर्थमतुपा पर्यवसितं स्वोक्तार्थे युक्ति-प्रतिपादकत्वं 'कर्मणा' इत्यादि वाक्यानां कथमित्याशङ्क्य ता एव युक्तीराह– **अव्ययमिति** ।। अयं भावः । भगवद्द्वेषी पितृनरकपातहेतुः लोकान्तादिसर्वजनद्वेष्यः सर्वावमश्च उत्तमपुरुष-द्वेषित्वात् सद्गुरुद्वेषिशिष्यवत् । न चासिद्धो हेतुः, विष्णुः सर्वोत्तमः अव्ययत्वात् विबुधश्रेष्ठ-त्वात् पद्मासनपितृत्वाच्च व्यतिरेकेण चैत्रवदिति तत्सिद्धेरिति । **इतरेषामिति** ।। द्वेषाचैद्यादय इत्यादीनामित्यर्थः ।

## भाष्यम्

**साम्येऽपि वाक्ययोः लोकानुकूलाननुकूलयोर्लोकानुकूलमेव बलवत् । लोकानुकूलं च भक्तप्रियत्वं नेतरत् । उक्तं च तेषां पूर्वं भक्तत्वम् 'मन्येऽसुरान् भागवतांस्त्र्यधीशे संरम्भमार्गाभिनिविष्टचित्तान्' इत्यादि । अतो न भगवद्द्वेषिणां काचिद् गतिरिति सिद्धम् ।। द्वेषकारणमाह–** राक्षसीमिति ।।१२।।

भावप्रदीपिका (प.टी.)– अन्यगुणैर्वाक्ययोः साम्येऽपि लोकानुकूलत्वादेषां प्राबल्यं किमुतासाम्ये इत्याह– **साम्येऽपीति** ।। प्रसिद्धं तेषां भक्तत्वमित्युक्तम् । कुत्र ? इत्यत आह– **उक्तं चेति** ।। उपसंहरति– **अत इति** ।। त्वयि दोषाभावे किमिति द्विषन्त ? इत्यत्र उत्तरार्धमवतारयति– **द्वेषेति** ।। १२ ।।

प्रमेयदीपिका (ज.टी.)– इतश्च बाध्यबाधकभावो युक्त इत्यभिप्रेत्य व्याप्तिं तावदाह– **साम्येऽपीति** ।। गुणान्तरेण । साम्येऽपीति कैमुत्यार्थम् । लोकानुकूलशब्देन लोकदृष्टव्याप्तिकानुमानानुकूलत्वमुच्यते। ततः किम्? इत्यत आह– **लोकेति** ।। **इतरत्** द्वेषिप्रियत्वम् । भगवत्प्रीत्यैव मोक्ष इति तु प्रसिद्धमेव । शिशुपालादीनां पूर्वभक्तत्वं प्रसिद्धमित्युक्तम् । तत् कथम्? इति चेत् पार्षदत्वात् । वचनाच्चेत्याह– **उक्तं चेति** ।। त्रयाणां लोकानामधीशे, संरम्भेण मार्गमात्रेण अभिनिविष्टचित्तान् ।।

उपसंहरति– **अत इति** ।। **गतिः** सद्गतिः । स्वमौढ्यादेव मामवजानन्ति। न

**मद्दोषात्** । **तेषां च महाननर्थ इति सर्वं समाहितम् ।। 'राक्षसीम्' इत्यादि तु किमर्थम्? इत्यत आह– द्वेषेति ।। 'मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुत इत्याशङ्कानिवृत्त्यर्थम्' इति शेषः । 'अन्येषामविद्यमानं मौढ्यमेव तेषां कुतः ? इत्याशङ्कानिवृत्त्यर्थम्' इति वा । अत्र कारणमिति मूलकारणम् ।।**

**भावबोधः (र.टि.)– ।। कैमुत्यार्थमिति ।।** प्रकृते गुणान्तरेणापि साम्याभावात् बाध्यबाधकभावोऽस्तीति किमु वक्तव्यमिति भावः । नन्वस्तु भक्तप्रियत्वद्वेषिप्रियत्वयोर्लोकानुकूलाननुकूलत्वे । तथाऽपि द्वेषस्य मुक्तिसाधनत्वाभावे किमायातमित्यत आह– **भगवत्प्रीत्यैवेति ।।** पूर्वमधिष्ठानयाथात्म्यज्ञानं मौढ्यमित्यङ्गीकृत्य मौढ्यान्मिथ्याज्ञानं भवत्वित्युक्तम् । इदानीं मिथ्याज्ञानमेव मौढ्यमित्यङ्गीकृत्याह– **अन्येषामिति ।। मूलकारणमिति ।।** राक्षसत्वादेः स्वाभाविकत्वेन 'इच्छाद्वेषसमुत्थेन' इत्युक्तेच्छादिरूपावान्तरकारणं प्रति कारणत्वेनावान्तरकारणत्वायोगात् मूलकारणत्वमित्यर्थः ।।

**भावदीपः (रा.टि.)– ।। इतश्चेति ।।** लोकानुकूलाननुकूलत्वाभ्यां चेत्यर्थः ।। **कैमुत्यार्थमिति ।।** प्रकृते निरवकाशत्वादिना प्रबलदुर्बलयोः 'किमु' इत्यर्थसूचनायेत्यर्थः ।। इति द्वेषवाक्यानां गत्युक्तिः ।। १२ ।।

**भावरत्नकोशः (सु.टि.)– ।। इतश्च** लोकानुकूलत्व अननुकूलत्वरूपविशेषाच्चेत्यर्थः । **कैमुत्यार्थमिति ।।** प्रकृतानां च 'द्वेषात्' इत्यादिवाक्यानां बहुत्वनिरवकाशत्वादिगुणान्तरेणापि साम्याभावाद् बाधकत्वं नास्तीति किमु वक्तव्यमिति द्योतनाय 'साम्येऽपि' इत्युक्तमित्यर्थः । प्रत्यक्षादिप्रमाणागोचरार्थावबोधकोदाहृतवचनानां किन्नाम लोकानुकूलत्वमित्यतो विवक्षितमर्थं दर्शयति– **लोकानुकूलशब्देनेति ।।** 'यो यत्र स्नेहवान् स तत्प्रियः, यथा राज्ञि स्नेहवान् राजप्रियोऽमात्यः' इति लोकदृष्टव्याप्तिमदनुमानेत्यर्थः । केचित्तु 'नभो नीरूपम्' इत्यस्मात् 'नभो नीलम्' इत्यस्य प्राबल्यं स्यात् । सर्वलोकानुकूलत्वादित्यत आह 'लोकानुकूलशब्देन' इति इत्यवतारयन् । भक्तिः प्रिया यस्यासौ भक्तिप्रियस्तत्त्वमिति भाष्ये, 'द्वेषप्रियत्वम्' इति टीकायां च, भक्तिद्वेषशब्दाभ्यां तद्वन्तो ग्राह्याः । ननु भगवतो द्वेषिप्रियत्वाभावेऽपि 'द्वेषो मुक्तिहेतुर्न भवति' इत्यत्र किमायातम् ? इत्यत आह– **भगवत्प्रीत्यैवेति ।।** 'तत्प्रीणनान्मोक्षमाप्नोति सर्वः', 'तत्प्रीत्यैव च मोक्षः' इत्यादिशास्त्रप्रसिद्धमेवेत्यतो न द्वेषेण मुक्तिरिति भावः ।।

श्लोकः १२

'ब्रह्मविष्णुरुद्राणामधीशे तुरीयशिवे' इति प्रतीतिं निरसितुमाह– **त्रयाणामिति** ।। वैराभिनिविष्टचित्तानां भागवतशब्दोक्तं भगवद्भक्तत्वमयुक्तमित्यत आह– **संरम्भेण मार्गमात्रेणेति** ।। 'शाखाग्रे चन्द्रमाः' इत्यादाविव द्वारमात्रेणेत्यर्थः, न तु फलसाधनं संरम्भशब्दितो द्वेष इति मात्रशब्दः । 'परिचायकमात्रेण' इत्यर्थ इत्यपि आहुः । संरम्भश्चासौ मार्गश्चेति व्युत्पत्तिरिति भावः । **उपसंहरति** द्वेषस्य मुक्तिसाधनत्वाभावम् । 'विष्णौ द्वेषो विवर्धितस्तमस्यन्धे पातयति' इति द्वेषिणः तमःप्राप्त्यावेदनात् क्वापि गतिर्नेति कथमित्यत आह– **गतिः सद्गतिरिति** ।।

'अवजानन्ति मां मूढाः' इत्यादेरुक्तमर्थं सङ्क्षिप्यानुवदन्नुत्तरभाष्यमवतारयति– **स्वमौढ्यादेवेति** ।। 'मूढाः' इति हेत्वर्थगर्भं विशेषणमिति स्फोरयितुमिदं सर्वम् । तर्हि कथं केचित्त्वामवजानन्ति, किञ्च तेषां फलम् इति कृतचोद्यम् 'अधिष्ठानयाथात्म्याज्ञानं मौढ्यम्' इह विवक्षितमिति भावेनाह– **मौढ्यान्मिथ्याज्ञानमिति** ।। 'मौढ्यं मिथ्याज्ञानम्' इत्यङ्गीकृत्याप्याह– **अन्येषामिति** ।। **अत्र** 'द्वेषकारणमाह' इति भाष्ये । नन्ववज्ञानं नाम द्वेषः । तत्र च कारणं 'मूढाः' इत्युक्तमेवेति, 'कारणमाह' इति कथं भाष्यत इत्यत आह– **मूलकारणमिति** ।।

'किञ्च तेषां फलम्' इति प्रश्नस्योत्तरमुच्यते– **मोघाशा इति** ।। वृथाशाः । भगवद्द्वेषिभिराशासितम् आमुष्मिकं न किञ्चिदाप्यत इति भावः । मोघानि व्यर्थानि कर्माणि यज्ञादीनि येषां ते तथोक्ताः । युद्धादिकर्मणां साफल्यदर्शनेऽपि, यज्ञादिकर्माणि न तेषां फलमावहन्तीत्यर्थः । मोघं ज्ञानं तत्त्वविषयं येषां ते मोघज्ञानाः । तत्त्वज्ञानमेव तेषां नास्तीति कथं तस्य मोघत्वमुच्यत इति चेन्न । केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेन तेषां ज्ञानमेव नोत्पद्यते । 'सर्वथाऽपि तु त एवोभयलिङ्गात्' इति हि सूत्रमिति । ज्ञानपदोपलक्षित आमुष्मिकः पुरुषार्थो न कश्चित्तैराप्यत इति तात्पर्यात् । कुतोऽज्ञानं तेषाम् ? यतः विचेतसः विपरीतज्ञानाः ।।

ननु भगवन्तमवजानतामपि चैद्यादीनां 'द्वेषाच्चैद्यादयो नृपाः', 'तद्गतिं गताः' इति भागवतादौ महापुरुषार्थो मुक्तिरुच्यत इति चेन्न । उक्तवचनानां भक्तप्रियत्वज्ञापनार्थत्वस्य नित्यध्यानस्तुत्यर्थत्वस्य च भाष्यादौ स्थापितत्वादिति । ननु मौढ्यान्मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुत इति शङ्कां परिहर्तुम्, अन्येषामविद्यमानमौढ्यमेव तेषां कुतः ? इति शङ्कानिरासार्थं वा द्वेषे मूलकारणमुच्यते– **राक्षसीमिति** ।। मोहोऽस्याः कार्यत्वेन

अस्तीति मोहिनी, तां बुद्धिभ्रंशकरीं राक्षसीम् आसुरीं प्रकृतिं स्वभावं श्रिताः आश्रिताः दैत्याः, रक्षांसि, पिशाचकाः, मर्त्याधमाश्चेति चतुर्विधास्तमोयोग्याः मामवजानन्तीति सम्बन्धः ।।१२।।

**भावदीपिका (श्री.टि.)**– ।। **गुणान्तरेणापीति** ।। उभयोर्वाक्ययोः निरवकाशत्व-बहुत्वादिगुणान्तरेण साम्येऽपि तन्मध्ये 'यल्लोकानुकूलं तदेव बलवत्' इति यदा दृष्टं तदा गुणान्तरेण साम्याभावे लोकानुकूल्ये च सति तद् बलवदिति किमु वक्तव्यमिति कैमुत्यार्थ-मित्यर्थः । प्रकृते च 'द्वेषात्' 'यो द्विष्यात्' इत्यादिवाक्ययोर्गुणान्तरेणापि साम्याभावात् लोकानुकूलत्वाच्च युक्तो बाध्यबाधकभाव इति भावः । नन्वस्तु भक्तप्रियत्वद्वेषिप्रियत्वयोः लोकानुकूलत्वाननुकूलत्वे । तथाऽपि द्वेषस्य मुक्तिसाधनत्वाभावे किमायातमित्यत आह– **भगवत्प्रीत्यैवेति** ।। **प्रसिद्धमेवेति** ।। 'तत्प्रीणनान्मोक्षमाप्नोति सर्वः', 'यस्य प्रसादात् परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इति श्रुत्यादिप्रसिद्धमिति नोक्तमित्यर्थः ।

**संरम्भः** द्वेषेण युद्धकरणम् । **मार्गमात्रेणेति** ।। भगवति मनोनिवेशे मार्गमात्रेणेत्यर्थः । द्वेषादिना तच्चिन्तने तत्रैव सम्यङ्मनसः स्थितौ सत्यां पश्चान्मरणसमये भगवद्वेषनाशेन भक्त्यभिवृद्धौ सत्यामेव भगवन्तं प्रविष्टा इति हि सम्प्रदायविदः । अत एव भागवते 'कृष्णचक्रहतांहसौ' इत्युक्तम् । तमोगतेः सत्त्वादाह– **सद्गतिरिति** ।। **न मद्दोषादिति** ।। मम दोषवत्त्वादित्यर्थः । पूर्वम् 'अधिष्ठानयाथात्म्याज्ञानं मौढ्यम्' इत्यङ्गीकृत्य 'मौढ्यान्मिथ्याज्ञानं भवतु' इत्युक्तम् । इदानीं 'मिथ्याज्ञानमेव मौढ्यम्' इत्यङ्गीकृत्याह– **अन्येषामिति** ।। रागद्वेषादिकारणस्योक्तत्वादाह– **मूलकारणमिति** ।। राक्षसादेः स्वाभाविकत्वेन द्वेषे मूलकारण-त्वादिति भावः ।। १२ ।।

**भावप्रकाशः (कृ.टि.)**– ननु वक्तव्यस्य लोकानुकूलेत्यादिनैव लाभात् साम्येऽपीति व्यर्थमित्याङ्कां तद्व्याकुर्वन्नेव परिहरति– **गुणान्तरेणेति** ।। प्रकृते गुणान्तरेणापि साम्याभावाद्बाध्यबाधकभावोऽस्तीति किमु वक्तव्यमिति कैमुत्यार्थमित्यर्थः । नन्वेवं नभो नीरूप-मित्यस्मान्नभो नीलमित्यस्य प्राबल्यं स्यात् । सर्वलोकानुकूलत्वादित्यत आह– **लोकानुकूल-शब्देनेति** ।। ननु भवतां भक्तप्रियत्वद्वेषिप्रियत्वयोः लोकानुकूलाननुकूलत्वे । तथाऽपि द्वेषस्य मुक्तिसाधनत्वाभावे किमायातमित्यत आह– **भगवत्प्रीत्यैवेति** ।। समाहारद्विगुना ब्रह्मविष्णु-महेश्वरेषु इत्यर्थो लभ्यते । नच त्रिष्वभिनिविष्टचित्तानां भागवतानिति विशेषोक्तिर्युक्तेत्यत आह–

श्लोकः १३

**त्रयाणामिति** ।। ननु संरम्भो द्वेषः, तेनाभिनिविष्टचित्तानां कथं भागवतत्वम्, द्वेषित्वादित्यत आह– **मार्गमात्रेणेति** ।। द्वारमात्रेणेत्यर्थः । स्वाभाविकद्वेषव्यावृत्त्यै मात्रपदम् ।

नन्वधिष्ठानतत्त्वाज्ञानं मौढ्यमित्यङ्गीकृत्य मौढ्यान्मिथ्याज्ञानमित्युक्तम् । तत्कथं 'न मां दुष्कृतिनो मूढाः' इत्यत्र मौढ्यं मिथ्याज्ञानमिति व्याख्यानमित्यतस्तदनुसारेणाप्याह– **अन्येषामिति** ।। ननु द्वितीययोजनायां अवजानन्तीत्यस्य द्वेषार्थत्वात्तत्र च मूढपदेन मिथ्याज्ञानाख्यकारणस्योक्तत्वात् द्वेषकारणमाहेति कथमुक्तमित्यत आह– **मूलकारणमिति** ।।१२।।

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।। १३ ।।**

## भाष्यम्

**नेतरे द्विषन्तीति दर्शयितुं देवानाह**– महात्मान इति ।। **१३ ।।**

भावप्रदीपिका (प.टी.)– न त्वद्दोषेण द्वेषः, किन्त्वात्मदोषेणैवेति कुतो ज्ञायत इत्युत्तरश्लोकमवतारयति– **नेतर इति** ।। १३ ।।

प्रमेयदीपिका (ज.टी.)– ननु कुतोऽयं विवेकः? इत्याकाङ्क्षायां राक्षसादिभ्य इतरे न द्विषन्तीत्येतावदेव वक्तव्यम् । 'भजन्ति' इत्यादि तु व्यर्थमित्यत आह– **नेतर इति** ।। सत्यमेतत् । तथाऽपि देवानां स्वरूपकथनार्थमेतत् । तच्च द्वेषाभावोपपादनार्थमिति भावः ।। देवान् इत्युक्तमजीवोपलक्षणम् ।।

भावदीपः (रा.टि.)– ।। अयं विवेक इति ।। राक्षसादिस्वभावाः प्रद्विषन्तीत्येवंरूप इत्यर्थः ।। १३ ।।

भावरत्नकोशः (सु.टि.)– ।। अयं 'राक्षसादिस्वभावा एव द्विषन्ति' इत्येवंरूपः । **एतत्** 'न द्विषन्ति इत्येतावदेव वक्तव्यम्' इत्येतत् । **एतत्** 'भजन्त्यनन्यमनस' इत्येतत् । वैयर्थ्यपरिहारायाह– **तच्चेति** ।। ननु 'भजन्ति' इत्यादिकं कथं देवस्वरूपकथनरूपम् । ऋषिगन्धर्वादिष्वतिप्रसङ्गात् इत्यतो 'देवमानुषदानवाः' इत्यादाविवात्र देवशब्दो मुक्तियोग्यजीवमात्रपर इत्याह– **देवानिति** ।।

ननु 'राक्षसादिस्वभावा एव द्विषन्ति, नेतरे' इत्येवं विवेकः कुत इत्याकाङ्क्षायां यतो राक्षसादिभ्य इतरे न द्विषन्तीति वक्तुम् उत्तमजीवानां स्वरूपं कथ्यते द्वेषाभावोपपादनार्थम्– **महात्मानस्त्विति** ।। दैवीं प्रकृतिं मुक्तियोग्यस्वभावं महान् आत्मा मनो येषां ते महात्मानः महापुरुषा तु भूतादिं भूतानां कारणम् अव्ययं मां ज्ञात्वा निश्चितपरोक्षतत्त्वा इति यावत् । अनन्यमनसः मदेकचित्ताः सन्तो मां भजन्ति ।। १३ ।।

**भावदीपिका (श्री.टि.)**– ।। **अयं विवेक इति** ।। 'स्वमौढ्यादेव मामवजानन्ति, न मद्दोषात्' इति विवेक इत्यर्थः । **तच्चेति** ।। उत्तमानां स्वभावकथनमित्यर्थः । **देवानिति** ।। 'त्रिविधा जीवसङ्घास्तु देवमानुषदानवाः' इति जीवत्रैविध्यविवक्षायां देवशब्दस्योत्तमजीवोपलक्षकताया दृष्टत्वादिति भावः ।। १३,१४ ।।

**भावप्रकाशः (कृ.टि.)**– ननु भजतीत्याद्युक्तं कथं देवस्वरूपम् । गन्धर्वादिष्विति प्रसङ्गात् । किंच राक्षसादीतरेषु द्वेषाभावसाधनाय तदितरानाहेति वक्तव्यम् । देवानाहेति कथमुक्तमित्यत आह– **उत्तमजीवोपलक्षणमिति** ।। अनेन दैवीं प्रकृतिमित्यपि व्याख्यातम् ।। १३ ।।

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ।। १४ ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु**- इतिकर्तव्यताविशेषोक्त्या भजनमेवोच्यते– **सततमिति** ।। यतन्तः भगवज्ज्ञानाय प्रयतमानाः व्रतं नियमः । नित्ययुक्ताः सदा मय्येव मनोयोगसम्पन्नाः सन्तो मामुपासते ।। १४ ।।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ।। १५ ।।**

## भाष्यम्

**सर्वत्रैक एव नारायणः स्थित इति एकत्वेन, पृथक्त्वेन सर्वतो वैलक्षण्येन । बहुधा हि तस्य रूपम् 'आभाति शुक्लमिव लोहितमिवाथो नीलमथोऽर्जुनम्' इति सनत्सुजाते ।। 'दैवमेवापरे' इत्युक्तप्रकारेण बहवो वा बहुधा ।। १५ ।।**

श्लोकः १५

भावप्रदीपिका (प.टी.)– एकत्वेन इत्यादेरर्थं सप्रमाणकमाह– **सर्वत्रेति ।।**

प्रमेयदीपिका (ज.टी.)– 'एकत्वेनाद्वैतभावनया' इति व्याख्यानमसत् । मिथ्याभावनात्वादिति भावेनाऽह– **सर्वत्रेति ।।** सर्वत्र स्थितो नारायण एक एवेति योजना । 'पृथक्त्वेनादित्यचन्द्रादिरूपेण' इत्यसदिति भावेनाऽह– **पृथक्त्वेनेति ।।** अपरस्तु 'पृथक्त्वेन' इत्येतत् सम्यक् व्याख्याय 'बहुधा' इत्येतत् 'आदित्यादिरूपेण' इति व्याख्यातवान् । अत आह– **बहुधेति ।।** कथम्? इत्यत आगमेनैव दर्शयति– **शुक्लमिवेति ।।** इवशब्दोऽप्यर्थः ।। प्रकारान्तरेण व्याख्याति– **दैवमेवेति ।।** १५ ।।

भावबोधः (र.टि.)– अल्पत्वादेरिवशब्दमुख्यार्थस्य बाधाद्व्याख्याति– **इवशब्दोऽप्यर्थ इति ।।**

भावदीपः (रा.टि.)– ।। **दैवमेवेति** ।। 'दैवमेवापरे यज्ञं योगिनः पर्युपासते । ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति' इत्यादिना चतुर्थोक्तदिशेत्यर्थः ।। १५ ।।

भावरत्नकोशः (सु.टि.)– 'एकत्वेन 'एकमेव परं ब्रह्म', 'वासुदेवः सर्वम्' इत्येवंरूपपरमार्थदर्शनेन' इति शङ्करभाष्यतात्पर्यम्– **अद्वैतभावनयेति ।। मिथ्याभावनात्वादिति ।।** सा च 'न च रमन्त्यहो असदुपासनया', 'अयोग्यानि अनुपास्यानि, अफलत्वविपर्ययाभ्याम्' इत्यादौ अनर्थहेतुरावेदितेति भावः । 'एक एव नारायणः स्थितः' इति कथम् । अव्याकृताकाशादेरपि सर्वत्रावस्थितत्वाद्, इति शङ्कां परिहर्तुमन्वयं दर्शयति– **सर्वत्र स्थित इति** ।। 'आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरवस्थित इत्युपासते' इति शङ्करभाष्यं सङ्क्षिप्यानुवदति– **पृथक्त्वेनादित्येति** ।। **इत्यसदिति** ।। मिथ्योपासनात्वापातादिति भावः । **सम्यक्** 'सर्वतो वैलक्षण्येन' इति भाष्यरीत्या । 'शुक्लादिरूपतयेवोपासते' इति प्रतीतिः मिथ्योपासनात्वापातादयुक्तेति भावेनेवशब्दार्थमाह– **इवशब्द इति** ।। 'इत्युक्तप्रकारेण' इति भाष्ये 'दैवमेवापरे यज्ञं योगिनः पर्युपासते' इत्यादिना चतुर्थे यज्ञभेदोक्तिप्रस्तावोक्तप्रकारेण 'बहव उपासका बहुभिः प्रकारैरुपासते' इति वा 'बहुधोपासते' इति वचनार्थः । तत्र 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति सर्वयज्ञैर्भगवत उपास्यत्वावेदनादिति व्याख्यानं द्रष्टव्यम् ।।

**गीताक्षरार्थस्तु** अन्येऽपि च महात्मानः ज्ञानयज्ञेन यजन्तः पूजयन्तो मामुपासते

श्रवणमननध्यानानि नित्यमनुतिष्ठन्तः सन्तः **एकत्वेन** 'सर्वत्र स्थितो नारायण एक एव' इति भावनया **पृथक्त्वेन** सर्वतो वैलक्षण्येन **बहुधा** शुक्लनीलपीतादिरूपवत्त्वेन च मामुपासते । यद्वा बहुधा 'दैवमेवापरे यज्ञम्' इत्यादिचतुर्थाध्यायोक्तदिशा बहवः उपासकाः विश्वतोमुखं सन्तं भगवन्तम् उपासते । अत्र पक्षे धाप्रत्ययो न विधार्थे, किन्तु स्वार्थ इति ।। १५ ।।

**भावदीपिका (श्री.टि.)**– व्यवहितत्वादन्वयमाह– **सर्वत्रेति** ।। **अपरः** भास्करः । **सम्यगिति** ।। 'सर्वतो वैलक्षण्येन' इत्येवं सम्यगित्यर्थः । तस्य भेदाभेदवादित्वादिति भावः । अल्पत्वादेरिवशब्दमुख्यार्थस्य प्रकृतेऽसम्भवादाह– **इवशब्दोऽप्यर्थ** इति ।। तथाच परस्परसमुच्चयार्थो द्रष्टव्यः । **दैवमेवेतीति** ।। तथा चैकत्वेन, पृथक्त्वेन, 'दैवमेव' इत्युक्त-प्रकारेण 'बहुधा बहवः यजन्तः यज्ञभेदवन्तो मामुपासते' इति गीतार्थः ।। १५ ।।

**भावप्रकाशः (कृ.टि.)**– ननु गीतायामेकत्वेन मामुपासत इत्येकत्वस्योपासना-प्रकारत्त्वमुक्तम् । भाष्ये तु सर्वत्र स्थितस्य तत्प्रतीयत इत्यत आह– **सर्वत्र स्थित इति** ।। इवशब्दाद् वस्तुतः शुक्लत्वाद्यभावप्रतीतावाह– **इवशब्दोऽप्यर्थ** इति ।। १५ ।।

**अहं क्रतुरहं यज्ञः स्वधाऽहम् अहमौषधम् ।**
**मन्त्रोऽहम् अहमेवाज्यम् अहमग्निरहं हुतम् ।। १६ ।।**

## भाष्यम्

**प्रतिज्ञातं विज्ञानमाह– अहं क्रतुरित्यादिना ।। क्रतवोऽग्निष्टोमादयः । यज्ञः देवतामुद्दिश्य द्रव्यपरित्यागः । 'उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीरितः' इत्यभिधानात् ।। १६ ।।**

भावप्रदीपिका (प.टी.)– उत्तरग्रघट्टकम् अवतारयति– **प्रतिज्ञातमिति** ।। क्रत्वादिभोक्तृत्वकर्तृत्वादिनैक्यव्यपदेश इत्युक्तम् । क्रतुयज्ञयोर्भेदं सप्रमाणकमाह– **क्रतव इति** ।। १६ ।।

प्रमेयदीपिका (ज.टी.)– 'विश्वतोमुखम्' इत्युक्तं सर्वात्मकत्वं प्रपञ्चयत्युत्तरेण' इत्यन्यथाव्याख्याननिरासार्थम् आह– **प्रतिज्ञातमिति** ।। अन्यथा प्रतिज्ञाताऽनुक्तिप्रसङ्ग

इति भावः । व्याख्यानं तु 'रसोऽहम्' इत्यादेरिव द्रष्टव्यम् । क्रतुयज्ञशब्दयोरर्थभेदमाह– **क्रतव इति ।। सामान्यविशेषभावेन भेद इत्यर्थः ।। १६ ।।**

**भावदीपः (रा.टि.)– ।। इत्यादेरिवेति ।।** सप्तमे 'रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः' इत्यादौ यथा रसादीनां रसादित्वनियन्तृत्वेन रसादिभोक्तृत्वेन च 'रसोऽहम्' इत्याद्युच्यत इति व्याख्या तथेहापि क्रतुत्वादिनियन्तृत्वेन क्रत्वादिभोक्तृत्वेन 'अहं क्रतुः' इत्याद्युच्यत इति व्याख्या ज्ञेयेत्यर्थः ।। **सामान्येति ।।** पूर्वोत्तराङ्गकलापविशिष्टक्रियाविशेषा अग्निष्टोमादयः क्रतुपदोक्ताः, द्रव्यत्यागमात्रं यज्ञशब्दार्थ इति भावः ।। १६ ।।

**भावरत्नकोशः (सु.टि.)–** 'विश्वतोमुखं विश्वरूपम्' इति शङ्करभाष्यस्य 'सर्वात्मकं माम्' इति श्रीधरेण व्याख्यातत्वादाह– **विश्वतोमुखमित्युक्तं सर्वात्मकत्वमिति ।।** परव्याख्याने दूषणमाह– **अन्यथेति ।। प्रतिज्ञातेति ।।** 'ज्ञानं विज्ञानसहितम्' इत्यत्र प्रतिज्ञातेत्यर्थः । **क्रतुयज्ञशब्दयोरिति ।।** 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति पर्यायत्वाभिधानादिति भावः । **सामान्यविशेषभावेनेति ।।** यज्ञशब्दः 'स एष यज्ञः पञ्च-विधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः' इति सोमशब्दितज्योतिष्टोम-दर्शपूर्णमासादिसर्वकर्मसाधारणः । क्रतुशब्दस्तु अग्निष्टोमादिसंस्थाकज्योतिष्टोमाश्वमेधादि-यज्ञविशेषवचन इति कुरुपाण्डवन्यायेन भेद इत्यर्थः । भाष्ये 'ज्योतिष्टोमादयः' इति वक्तव्ये 'अग्निष्टोमादयः' इति वचनम् अग्निष्टोम,अत्यग्निष्टोम, उक्थ्यादिसंस्थाम् अन्तरा केवलं ज्योतिष्टोमस्याननुष्ठानाद् अग्निष्टोमादिसंस्थाकस्यैवानुष्ठेयत्वात् तदभिप्रायम् । तथा च यजुर्वेदे प्रजापतिर्यज्ञानसृजताग्निहोत्रं च अग्निष्टोमं च पौर्णमासीं चोक्थ्यं च ।। इत्यादि । एतेन 'ज्योतिष्टोमादिकमेव यज्ञं गृहीत्वा' इत्यष्टादशाध्यायटीकावाक्यमपि समाहितं वेदितव्यम् । एकवचनं च जात्यभिप्रायकमिति भाष्ये क्रतव इति बहुवचनमिति वदन्ति ।। १६,१७ ।।

**गीताक्षरार्थस्तु–** 'अहं क्रतुः' इत्यादिचतुःश्लोक्यक्षरार्थस्तु प्रतिज्ञातं विज्ञानमुच्यते– **अहं क्रतुरित्यादिना ।।** दीक्षा, प्रायणीय, उदयनीय, सवनत्रयअवभृथात्मकोऽग्निष्टोमादिसंस्थाको ज्योतिष्टोमाश्वमेधादिरूप क्रतुः । तत्सत्ताप्रतीत्यादिकारणत्वात्, तद्भोक्तृत्वात्, तत्रोपास्यत्वाच्च 'अहम्' इत्याद्यभेदव्यपदेश इति 'रसोऽहम्' इत्यादेरिव व्याख्यानं द्रष्टव्यमिति टीकातोऽभि-दिष्टः । देवतोद्देशेन द्रव्यपरित्यागरूपो यज्ञोऽप्यहमेव । यज्ञक्रतुशब्दयोः सामान्यविशेषभाव-

विवक्षया भेदः । अत्र क्रतुयज्ञशब्दौ क्रियाविशेषवाचिनौ । क्रियावांश्च यजमानः । तन्नियमनादिनैव क्रियानियमनादेः प्राप्तावपि 'रसोऽहमप्सु' इत्यादाविव क्रत्वादिगतक्रतुत्वादि-धर्मनियन्तृत्वस्य, यजमानधर्मभूतक्रियान्तरापेक्षया क्रतौ श्रेष्ठत्वनियन्तृत्वस्य च विशेषतो भगवत्कर्तृकत्वं बोधयितुमुपात्तौ । स्वधा पित्रन्नम्, औषधम् ओषधिप्रभवमन्नम्, व्याध्युपश-मनार्थभेषजं वा । मन्त्रः 'तच्चोदकेषु मन्त्राख्या' इत्युक्तलक्षणो वेदभागः याज्यापुरोनुवाक्यादि । आज्यमहमेव । अग्निः आहवनीयादिः । हुतं हवनम्, हवनकर्म वा । आज्येतरद् हविः ।।१६।।

**भावदीपिका (श्री.टि.)– ।। इत्यादेरिवेति ।।** क्रत्वादिः सत्ताप्रतीत्यादिकारणत्वादिना भगवान् क्रत्वादिः, न त्वभेदेनेत्यर्थः ।। १६,१७ ।।

**भावप्रकाशः (कृ.टि.)–** अन्यथा व्याख्यानं दूषयति– **अन्यथेति** ।। ज्ञानं विज्ञान-सहितमित्यत्रेति शेषः । **व्याख्यानं त्विति ।।** क्रत्वादिकारणत्वेन तद्भोक्तृत्वेन च तदभेद-व्यपदेशः । यद्यपि क्रत्वादेः यानि साधनानि तान्यपि जन्यानि तद्भोग्यानि च । तथाऽपि क्रत्वादीनां क्रियादिसारत्वे क्रतुत्वादौ च स एव नियामकः । ननु स्वसाधननियमनानुषक्त-जन्मानः क्रत्वादयः साधनापेक्षया विशेषतो भोग्याश्चेति दर्शयितुं विशेषोपादानमिति व्याख्यानमित्यर्थः । अग्निष्टोमादय इति भाष्ये सामसाध्यत्वमादिपदसङ्ग्राह्यतावच्छेदकमिति ।। १६,१७ ।।

**पिताऽहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रम् ओङ्कार ऋक् साम यजुरेव च ।। १७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अस्य जगतः पिता जनयिता । माता जनयित्री । धाता पोषकः । पितामहः पितृपिता । वेद्यं वेदितव्यं वस्तु । पवित्रं पावनं वस्तु । ओङ्कारः ओङ्कारत्वसर्वगुणाधारवस्तुवाचकत्वशक्तिनियन्तृतया तच्छब्दवाच्यः प्रणवोऽप्यहमेव । ऋक्सामयजुश्च ऋक्त्वादिनियन्ताऽपि अहमेव ।। १७ ।।

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ।। १८ ।।**

श्लोकः १८

## भाष्यम्

**गम्यते मुमुक्षुभिरिति गतिः । तथाहि सामवेदे वसिष्ठशाखायाम् 'अथ कस्मादुच्यते गतिरिति ब्रह्मैव गतिरिति, तद्धि गम्यते पापविमुक्तैः' इति साक्षादीक्षत इति साक्षी । तथाहि बाष्कलशाखायाम् 'स साक्षादिदमद्राक्षीत्, यदद्राक्षीत् तत् साक्षिणः साक्षित्वम्' इति ।।**

भावप्रदीपिका (प.टी.)– गतिशब्दं सप्रमाणकं व्याचष्टे– **गम्यत इति** ।। किमुच्यते ? इति च योज्यम् । साक्षिशब्दस्य विशिष्टार्थं सप्रमाणकमाह– **साक्षादिति** ।। तस्मात् साक्षिणः साक्षित्वं साक्षिशब्दप्रवृत्तिनिमित्तमित्यर्थः ।।

प्रमेयदीपिका (ज.टी.)– 'गतिः कर्मफलम्' इति व्याख्यानमपाकर्तुमाह– **गम्यत इति** ।। **शरणम्** इत्यतो भेदार्थमुक्तम्– **मुमुक्षुभिरिति** ।। अत एव 'गम्यते' इत्यस्यावगम्यत इत्यर्थः । कुत एतत्? इत्यत आह– **तथा हीति** ।। 'किमुच्यते' इत्यपि प्रश्नोऽध्याहार्यः । **साक्षी** इत्यौदासीन्यं प्रतीयते । अत आह– **साक्षादिति** ।। कुत एतत्? इत्यत आह– **तथा हीति** ।। यदद्राक्षीत् साक्षात् तत् साक्षिणः परमेश्वरस्य साक्षित्वं साक्षिशब्दप्रवृत्तिनिमित्तम् । तदुक्तम् 'साक्षाद् द्रष्टरि सञ्ज्ञायाम्' इति ।।

भावबोधः (र.टि.)– नन्वाश्रयस्यैव गम्यत्वान्मुमुक्षुभिरित्युक्तेऽपि शरणमित्यतः कथं गतेर्भेदः । किञ्च मुक्तैरेव गम्यत्वं मुमुक्षुभिस्तु मेयत्वमेवेत्यत आह– **किमुच्यत इत्यपीति** ।।

भावदीपः (रा.टि.)– ।। **अत एवेति** ।। शरणपदस्य आश्रयपर्यायप्राप्त्यर्थत्वेन व्याख्यानादेवेत्यर्थः । अन्यथासिद्ध अर्थभेदासिद्धेरिति भावः ।। 'ब्रह्मैव गतिः' इत्युत्तरोक्त्यनुरोधादाह– **इत्यपि प्रश्नोऽध्याहार्य इति** ।। गतिरिति पदेन किमुच्यत इति प्रश्न इत्यर्थः ।। **तदुक्तमिति** ।। पाणिनिनोक्तमित्यर्थः । 'साक्षात्' इति सूत्रेण 'साक्षात्' इत्यव्ययाद् द्रष्टरि वाच्ये सञ्ज्ञायाम् इनिप्रत्यये 'अव्ययानां भमात्रे टिलोपः' इति टिलोपे 'साक्षी' इति सिद्धेरिति भावः ।।

**वाक्यार्थप्रदीपः** (पां.टि.)– ननु द्रष्टृत्वस्य साक्षिशब्दप्रवृत्तिनिमित्तत्वं कुत इत्यत आह– **तदुक्तमिति** ।। पाणिनिनेति शेषः ।। तद्वाक्यमुदाहरति **साक्षाद् द्रष्टरि**

**सञ्ज्ञायामिति** ।। साक्षाच्छब्द अव्ययम् । सञ्ज्ञाग्रहणं च धनिकाधमर्णन्यायद्रष्टृरूपाभिधेयमित्यर्थः । **तदुक्तमिति** ।। पाणिनिनोक्तमित्यर्थः ।।

**भावदीपिका (श्री.टि.)**– तथाऽपि कथमर्थभेदः । आश्रयस्यैव गम्यत्वादित्यत आह– **अत एवेति** ।। मुक्तैरवगम्यत्वस्य, मुमुक्षुभिस्तु ज्ञेयत्वस्यैव भगवतः प्रसिद्धेरिति भावः । श्रुतौ 'ब्रह्मैव गतिः' इत्यस्यापृष्टोत्तरत्वनिरासायाह– **किमुच्यत इति** ।। 'गतिः' इति शब्देन किमुच्यत इत्यर्थः । विहितस्यैवानूद्यत्वात् पूर्वं 'साक्षादिदमद्राक्षीत्' इति साक्षाद्द्रष्टृत्वस्यैव विहितत्वात्'यदद्राक्षीत्' इति कथमनुवाद इत्यत आह– **यदद्राक्षीत्साक्षादिति** ।। उक्तार्थे पाणिनिसम्मतिं चाह– **तदुक्तमिति** ।। साक्षाद्द्रष्टरि अपरोक्षतो द्रष्टरि अभिधेये सति संज्ञायां विवक्षितायां सत्यां 'साक्षी' इति शब्दो निपात्यत इति सूत्रार्थः । एवं च प्रकृते साक्षाद्द्रष्टुर्भगवतोऽभिधेयत्वात्, भगवत एवंसंज्ञाकत्वाच्च साक्षिशब्दवाच्यत्वं युक्तमिति भावः । एवं व्याख्याने 'यत्साक्षादिदमद्राक्षीत्' इति श्रुत्या पाणिनिसूत्रस्यैकार्थ्यं भवतीति ध्येयम् ।

केचित्तु साक्षाच्छब्दात् द्रष्टर्यभिधेये इनिप्रत्ययः स्यादिति सूत्रार्थः । तथा च 'अव्ययानां भमात्रे टिलोपः' इति वार्तिकेन टीभूतस्य 'आत्' इत्यस्य लोपे 'साक्षिन्' इति प्रातिपदिके सति, पश्चात्स्वाद्युत्पत्तौ 'साक्षी' इति रूपमित्याहुः । तन्न । प्रकृतानुपयोगात् । तथा हि 'साक्षादीक्षते' इति निरुच्य तत्रैव प्रमाणमुक्त्वा सम्मतितयोदाहृतसूत्रेऽपि साक्षाच्छब्दाद् इत्यादिव्याख्याने उक्तार्थाप्रतिभासने वाऽसङ्गत्यापत्तेर्न तथा सूत्रार्थ इति ध्येयम् ।

मुमुक्षोरपि संसारभीतत्वात् 'परायणम्' इति वक्ष्यमाणप्रमाणानुसारेणाह– **मुक्तोपलक्षणमिति** ।। **पुनरुक्तिरिति** ।। 'तिष्ठत्यस्मिन्' इति स्थानशब्देन पुनरुक्तिरित्यर्थः ।। १८ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **भेदार्थमिति** ।। शरणमित्यत्र मुक्ताश्रयत्वस्याऽभिप्रेतत्वादिति भावः । ननु मुमुक्षुभिर्ज्ञेयत्वमेव न तु गम्यत्वमित्यत आह– **अत एवेति** ।। ब्रह्मैव गतिरिति प्रत्युत्तरानुरोधादाह– **किमुच्यत इत्यपीति** ।। **साक्षात् द्रष्टरीति** ।। साक्षाच्छब्दात् द्रष्टर्यभिधेये इनिः स्यात् संज्ञायामित्यर्थः । तथा चेनिप्रत्ययेऽव्ययानां भमात्रे टिलोप इति भावः ।।

# भाष्यम्

**शरणम् आश्रयः संसारभीतस्य । 'परं परायणम्' इत्याद्युक्तम् । 'नारायणं महाज्ञेयं विश्वात्मानं परायणम्' इति च । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम् । तथा हि ऋग्वेदखिलेषु 'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः' इति ।। १८ ।।**

भावप्रदीपिका (प.टी.)– शरणनिधानशब्दयोः अर्थभेदं सप्रमाणकमाह– **शरणमिति** ।। १८ ।।

प्रमेयदीपिका (ज.टी.)– निवासशब्दार्थागतार्थतया शरणशब्दार्थमाह– **शरणमिति** ।। संसारभीतस्य इति मुक्तोपलक्षणम् । विष्णोर्मुक्ताश्रयत्वे प्रमाणमाह– **परमिति** ।। परायणं मुक्तानामाश्रयः ।। तथाऽपि 'निधानम्' इति पुनरुक्तिरित्यत आह– **संहारेति** ।। 'सर्वभूतानि प्रकृतिं यान्ति' इत्युक्तत्वात् । कथं भगवति निधीयन्ते? इत्यत उक्तम्– **प्रकृत्येति** ।। प्रथमं प्रकृतिं यान्ति, पश्चात् तत्र निधीयन्त इत्यर्थः । तत्कुतः? इत्यत आह– **तथा हीति** ।। विश्वकर्मणीश्वरे शुभ्रचक्षुः शुद्धदृष्टिरहम् ।। १८ ।।

भावबोधः (र.टि.)– ।। **मुक्तोपलक्षणमिति** ।। अनेन निवासशब्दः मुक्तामुक्तसर्वाश्रयत्वार्थक इत्युक्तं भवति ।।

भावदीपः (रा.टि.)– ।। **मुक्तोपलक्षणमिति** ।। एतेन निवासशरणशब्दयोः सामान्यविशेषभावेनार्थभेद इति सूचितं भवति ।। **इत्युक्तत्वादिति** ।। अत्रैवाध्याये पूर्वत्रेत्यर्थः ।।१८।।

भावरत्नकोशः (सु.टि.)– ।। **'इति'** इति शङ्करभाष्यानुवादः । **भेदार्थम्** भेदज्ञापनार्थम् । 'शरणम्' इत्यस्य 'मुक्तप्राप्यम्' इत्यर्थस्य वक्ष्यमाणत्वादस्यापि प्राप्यर्थकत्वे पुनरुक्तिः ? इत्यतो भाष्ये 'मुमुक्षुभिः' इत्युक्तमिति भावः । ननु मुमुक्षुभिर्भगवान् ज्ञेय एव, न गम्यः । तत्कथं भाष्ये 'गम्यते' इत्युक्तम् ? इत्यत आह– **अत एवेति** ।। अर्थभेदस्य वक्तव्यत्वादेव । 'ब्रह्मैव गतिः' इति प्रत्युत्तरानुरोधादाह– **किमुच्यत इतीति** ।। 'अथशब्दानन्तरम्' इति शेषः । तत् 'कस्मादुच्यते गतिः ? इति । यतः पापविमुक्तैः ब्रह्मज्ञानप्रतिबन्धकपापशून्यैरधिगम्यते' इति

श्रुतियोजनेति भावः । **साक्षादिति** ।। 'साक्षाच्छब्दाद् द्रष्टर्यभिधेये इनिप्रत्ययः स्यात् सञ्ज्ञायाम्' इति व्याकरणसूत्रार्थः । इनिप्रत्यये, अव्ययानां भमात्रे टिलोपे च 'साक्षी' इति रूपमिति भावः । प्रमाणे मुक्ताश्रयत्वस्याभिधानादाह– **मुक्तोपलक्षणमिति** ।। 'मुक्तस्तु स्यात् पराभासः' इति तात्पर्यमनुरुध्याह– **मुक्तानामाश्रय इति** ।। भाष्ये इति च उक्तम् । 'तिष्ठन्त्यत्रेति स्थानम्' इति स्थानशब्देन 'निधानम्' इत्यस्याभिधानादाह– **पुनरुक्तिरिति** ।। **उक्तत्वात्** प्रकृतेरेव भूतनिधानोपनिधित्वस्योक्तत्वात् । देववर्धकिप्रतीतिनिरासायोक्तम्– **ईश्वर इति** ।। प्रसिद्धे अज्ञात्वानुपपत्तेरिति भावः । 'अपश्यम्' इत्यस्यान्वयायाह– **अहमिति** ।। १८ ।।

यत्तु अत्र 'प्रभवप्रलयस्थानं यस्य कस्यचित् यत्र कुत्रचिद् उत्पत्तिप्रलययोर्यत् स्थानं तदप्यहमेव' इत्यैकपद्येन रामानुजस्य व्याख्यानं तत् 'प्रलयकाले संहर्तृत्वात् प्रलयः' इति तात्पर्यनिर्णये 'प्रलयः' इत्यनुवादेनैव दूषितम् । 'अहं क्रतुः' इत्यादौ क्वापि समासार्थतया भगवतोऽनुक्तेः अत्र तेनोक्त इत्यत्र नियामकाभावात् । अपि च शङ्करश्रीधरादिभिः 'प्रभवः' 'प्रलयः' इत्येव पदविभागेन व्याख्यातमिति तथैव व्याख्यानं युक्तमिति । तिष्ठन्त्यत्रेति स्थानम् । संहारकाले जगदत्र निधीयत इति जगतो निधानम् अप्यहमेव । **अव्ययं बीजं** व्यञ्जकं वस्तु ।।

गम्यते अवगम्यते ममुक्षुभिरिति गतिः मुमुक्षुज्ञेयं वस्तु अहमेव । भरणकर्तृत्वाद् भर्ता, प्रभुः स्वामी साक्षी साक्षादीक्षिता, जगतो निवासः आवासस्थानं शरणम् आश्रयः संसारभीतस्य, मुक्ताश्रय इति यावत् । सुहृत् प्रत्युपकारमनपेक्ष्योपकुर्वन्, प्रभवप्रलययोः सत्ताप्रतीत्यादि-कारणत्वात् तद्धेतुत्वाच्च प्रभवः प्रलयश्च अहमेवेत्यर्थः सप्तमे भाषितः ।। १८ ।।

**भावप्रकाशः (कृ.टि.)**– अग्रे मुक्ताश्रयत्वे प्रमाणोदाहरणात् तदनुरोधेनाह– **मुक्तोप-लक्षणमिति** ।। अनेन निवासशब्द आश्रयमात्रार्थ इत्युक्तं भवति । 'मुक्तस्तु स्यात् पराभासः' इति प्रमाणानुसारेणाह– **मुक्तानामाश्रय इति** ।। १८ ।।

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ।। १९ ।।**

श्लोकः १९

## भाष्यम्

**सत् कार्यम् । असत् कारणम् । 'सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्' इति ह्यभिधानात् । 'असच्च सच्चैव च यद् विश्वं सदसतः परम्' इति च भारते ।। १९ ।।**

भावप्रदीपिका (प.टी.)– सदसच्चाहम् इति न भावाभावप्रेरकत्वमित्याह– **सदिति** ।। १९ ।।

प्रमेयदीपिका (ज.टी.)– असतो नियम्यत्वानुपपत्तेः 'सदसच्चाहम्' इत्ययुक्तमित्यत आह– **सदिति** ।। कार्यं सदित्युच्यते । अभिव्यक्तरूपत्वात् इत्यनेन सदेः गत्यर्थस्य क्विपि कर्मणि रूपमेतद् इत्युच्यते। कारणमपि अव्यक्तरूपत्वात् एव असच्छब्दितम् । कार्यकारणयोः सदसच्छब्दप्रयोगं च दर्शयति– **असच्चेति** ।। तस्मात् सदसतोर्विश्वस्माद् ब्रह्म परम् ।। १९ ।।

भावदीपः (रा.टि.)– ।। **प्रयोगं चेति** ।। न केवलं व्यक्तत्वादिरूपमिति चार्थः । शेषोक्त्या वाक्यं योजयति– **तस्मादिति** ।। १९ ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **सदेर्गत्यर्थस्येति** ।। गत्यर्थात् सदेः कर्मणि क्विप् चेति क्विपि तस्य सर्वात्मना लोपे सति रूपसिद्धिरिति भावः ।।

।। इति श्रीमत्पदवाक्यमिदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीमद्विद्याधीशतीर्थपूज्य चरणानां निजशिष्येकेन विरचिते
व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे नवमोध्यायः समाप्तः ।।

भावरत्नकोशः (सु.टि.)– ।। **नियम्यत्वानुपपत्तेरिति** ।। 'असदहम्' इत्यभेदव्यपदेशो हि 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इति शास्त्रात् तत्सत्तायास्तदधीनत्वनिबन्धनः । न चासतः सत्ताऽस्ति । अतः तस्येशानियम्यत्वमनुपपन्नमिति हेतोः 'असदहम्' इत्ययुक्तमित्यर्थः । 'षद्लृ विशरणगत्यवसादनेषु' इति गतेरपि धात्वर्थत्वाद् उक्तम्– **गत्यर्थस्येति** ।। क्विपि सम्पदादिलक्षणे, चर्त्वे तु 'सत्' इति रूपमित्यर्थः । 'चशब्दोऽवधारणे' इत्यभिप्रेत्योक्तम्–

**अव्यक्तरूपत्वादेवेति** ।। न केवलं व्यक्तत्वाव्यक्तत्वरूपनिमित्तम्, किन्तु 'प्रयोगे च' इति चशब्दः । यच्छब्दश्रवणात् तच्छब्दमध्याहरति– **तस्मादिति** ।। परशब्दस्तन्त्रमिति भावेनोक्तम्– **ब्रह्म परमिति** ।।

**गीताक्षरार्थस्तु**- तपामि सूर्यादौ स्थितः सन्, वर्षं वृष्टिम्, अमृतसत्तादिकारणत्वात् तद्भोक्तृत्वाच्च अमृतम् । अमृतम् अमरणम्, मृत्युर्मरणमिति वा । इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति अमृतम् । 'प्रलयकालादन्यदाऽपि संहर्तृत्वान्मृत्युः' इति तात्पर्यनिर्णये । सत् कार्यम्, असत् कारणं चाहमेवेति ।। १९ ।।

**भावदीपिका (श्री.टि.)**– ।। **सदेरिति** ।। तथा च 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः 'सद्यते अवगम्यत इति कर्मार्थे क्विपि, तस्य लोपे, निर्वचनत्वात् दस्य तकारे सति 'सत्' इति रूपं द्रष्टव्यम् ।। १९ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **नियम्यत्वानुपपत्तेरिति** ।। सदसच्चाहमिति व्यपदेशबाधान्नैक्यनिबन्धनः किन्तु यदधीनेत्यादेः तदधीनत्वनिबन्धनः । नच तद्युक्तम् । असतस्तदधीनत्वानुपपत्तेरित्यर्थः । **कर्मणि क्विपीति** । सम्पदादिभ्यश्चेति वार्तिकादिति शेषः ।।१९।।

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्**
**।। २० ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताश्लोकाक्षरार्थस्तु**- 'अहं क्रतुः' इत्यादिना सर्वक्रत्वादिभोक्तृत्वमपि भगवतोऽभिसंहितम् । तत्र यदि सर्वत्र भोक्ता भगवांस्तर्हि भागवतादीनां त्रैविद्यादीनां च फलसाम्यमेव स्यात् ? भगवद्भोगनिमित्तकत्वात् फलस्य, इत्यभिप्रायेण प्रश्ने, उत्तरम्– **त्रैविद्या इत्यादि** ।। तिस्रो विद्याः ऋग्यजुस्सामलक्षणा येषां ते त्रिविद्याः, त एव प्रज्ञादित्वात् त्रैविद्याः, विष्णुं सर्वोत्तमं ज्ञात्वाऽपि त्रय्यां मुखतः प्रतीयमानं स्वर्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठाय, अन्ते विष्णौ समर्पणं कुर्वाणा इत्यर्थः । मां यज्ञैरिष्ट्वा अन्ते मयि समर्प्य, सोमपाः पूतपापाः यज्ञशिष्टसोमरसपानेन शोधितकल्मषा इति यावत् । स्वर्गतिं स्वर्गादिफलं प्रार्थयन्ते । ते च पुण्यं पुण्यप्राप्यसुरेन्द्रलोकम् आसाद्य प्राप्य दिवि स्वर्गे दिव्यान् उत्तमान् देवभोगान् देवभोगसदृशान् अश्नन्ति भुञ्जते ।। २० ।।

श्लोकः २१

**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ।। २१ ।।**

## भाष्यम्

**तथाऽपि मद्भजनमेवान्यदेवताभजनाद्वरमिति दर्शयति– त्रैविद्या इत्यादिना ।। २०,२१ ।।**

भावप्रदीपिका (प.टी.)– ननु यदि भवान् सर्वक्रत्वादिभोक्ता, तर्हि न भागवतत्रैविद्यादिभेद इत्याशङ्क्य, उत्तरत्वेनोत्तरश्लोकमवतारयति– **तथाऽपीति** ।। २०,२१ ।।

प्रमेयदीपिका (ज.टी.)– 'सदसच्चाहमर्जुन' इति विज्ञानस्योपसंहृतत्वादुत्तरस्यासङ्गतिमाशङ्क्याह– **तथाऽपीति** ।। 'अहं क्रतुः' इत्यादिना सर्वक्रत्वादिभोक्तृत्वं यदुक्तं भगवतस्तदसत् इति वक्ष्यामीति गूढाभिसन्धिना 'यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फलसाम्यमेव? इति पृष्टस्य इदमुत्तरमित्याशयः । **तथाऽपि** सर्वत्र भगवतः भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितम् । देवताः इति पित्राद्युपलक्षणम् । त्रैविद्याद्यनुष्ठितात् वरम् उत्कृष्टफलम् । **इत्यादिना** श्लोकत्रयेण ।। २०,२१ ।।

भावबोधः (र.टि.)– ।। तदसदिति **वक्ष्यामीति** ।। तर्ह्यहं क्रतुरित्याद्यसत्यमित्यादिनेत्यर्थः । **पित्राद्युपलक्षणमिति** ।। 'पितॄन् यान्ति पितृव्रताः' 'भूतानि यान्ति भूतेज्याः' इति पित्रादेरप्युक्तेरिति भावः ।। २०,२१ ।।

भावदीपः (रा.टि.)– ।। **विज्ञानस्येति** ।। 'अहं क्रतुः' इत्यादिनोपक्रान्तस्येति योज्यम् ।। **इति वक्ष्यामीति** ।। इत्येतच्चोद्यं 'येऽप्यन्यदेवताः' इत्येतदवतारिकायां व्यक्तीकरिष्यामीत्यर्थः ।। **भागवतानां** भगवदेकचिन्तकानाम् ।। **त्रैविद्यानामिति** ।। स्वर्गादिकामनया भगवद्याजिनाम्, आदिपदेनेतरदेवताभजकानामिति ज्ञातव्यम् । **किं साम्यमेव** इत्यन्वयः ।। **इदमिति** ।। **त्रैविद्याः** इत्यादि श्लोकत्रयमित्यर्थः । तत्र फलभेदस्य कीर्तनादिति भावः ।।

**पित्राद्युपलक्षणमिति** ।। पितॄन् यान्ति पितृव्रताः इत्यादेरपि वक्ष्यमाणत्वादिति भावः ।। २०,२१ ।।

**भावरत्नकोशः (सु.टि.)– ।। वक्ष्यामीति ।।** 'तर्हि अहं क्रतुरित्याद्यसत्यम् इत्यादिना' इति शेषः । **सर्वत्र** भागवतानुष्ठितेषु त्रैविद्यानुष्ठितेषु **च** । त्रैविद्यानुष्ठितभगवद्भजनस्य कथमन्यदेवताभजनाद् वरत्वम् ? फलान्तरोद्देश्यकत्वस्योभयत्राविशेषात्, इत्यत आह– **भागवतैरनुष्ठितमिति** ।। 'पितॄन् यान्ति' 'भूतानि यान्ति' इति वचनादाह– **पित्रादीति** ।। 'त्रैविद्यादि' इत्यादिपदेन ज्ञानिमिथ्याज्ञानिनोर्ग्रहणम् । वरशब्दितोत्कर्षः फलापेक्षयेति भावेनाह– **वरमुत्कृष्टफलमिति** ।। आदिपदसङ्ग्राह्योक्तिः– **श्लोकत्रयेणेति** ।।

ततश्च ते यजमानाः तं प्रार्थितं विशालं विपुलं स्वर्गलोकं तत्र भवं भोगं भुक्त्वा पुण्ये भोगप्रापके क्षीणे सति मर्त्यलोकं विशन्ति । पुनरपि एवम् एव त्रय्या विहितं धर्ममनुप्रपन्ना अनुसृताः कामकामाः कामान् भोगान् कामयमानाः गतागतं यातायातं लभन्ते ।। २१ ।।

**भावदीपिका (श्री.टि.)– ।। वक्ष्यामीति ।।** 'तर्हि 'अहं क्रतुः' इत्याद्यसत्यमित्यनेन' इत्यर्थः । 'पितॄन् यान्ति पितृव्रताः, भूतानि यान्ति भूतेज्या' इति वक्ष्यमाणानुसारेणाह– **देवतेतीति ।।** अतिप्रसक्तिवारणाय आदिपदग्राह्यतावच्छेदकमाह– **श्लोकत्रयेणेति** ।।२०,२१।।

**भावप्रकाशः (कृ.टि.)– ।। वक्ष्यामीति ।।** तर्ह्यहं क्रतुरित्याद्यसत्यमित्यनेनेति शेषः । ननु त्रैविद्यानुष्ठितमन्ते मद्भजनं विष्णुपरिवारत्वादिना भागवतानुष्ठितान्यदेवताभजनान्मोक्षप्रदात् कथं वरमित्यत आह– **भागवतैरनुष्ठितमिति** ।। 'पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्याः' इति वाक्यशेषानुसारादाह– **पित्राद्युपलक्षणमिति** ।। ननु 'वैष्णवा इति बुद्ध्यैव मानयंत्यन्यदेवताः' इत्याद्युक्तं ब्रह्मादिकृतान्यदेवताभजनं भगवद्भजनमेतत् कथं तस्माद्वरमित्यत आह– **त्रैविद्याद्यनुष्ठितादिति** ।। आदिपदेन केवलाज्ञनिमिथ्याज्ञानिनोः सङ्ग्रहः । त्रैविद्यकृतस्य स्वर्गच्युतिहेतुत्वात् । अज्ञकृतस्य मोघत्वात् । मिथ्याज्ञानिकृतस्य च विपरीतफलत्वादिति भावः । योगक्षेमं वहामीत्यपुनरावृत्तिफलोक्त्यनुसारेणाह– **उत्कृष्टफलमिति** ।। २० ।।

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।। २२ ।।**

श्लोकः २२

## भाष्यम्

**अनन्याः अन्यदचिन्तयित्वा । तथा हि गौतमखिलेषु 'सर्वं परित्यज्य मनोगतं यद्विना देवं केवलं शुद्धमाद्यम् । ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्ति' इति ।**

**'कामं कालेन महतैकान्तित्वात् समाहितैः ।**
**शक्यो द्रष्टुं स भगवान् प्रभासन्दृश्यमण्डलः'**

**इति मोक्षधर्मे । नित्यमभितः सर्वतो युक्तानाम् ।। २२ ।।**

भावप्रदीपिका (प.टी.)– अनन्यपदमन्यथाप्रतीतिनिरासाय सप्रमाणकं व्याचष्टे– **अनन्या इति** ।। नित्याभियुक्तपदस्यान्यथाप्रतीतिं परिहर्तुमाह– **नित्यमिति** ।।२२।।

प्रमेयदीपिका (ज.टी.)– 'अद्वैतज्ञानिनोऽनन्याः' इति प्रतीतिनिरासार्थमाह– **अन्यथा इति** ।। अविद्यमान मन्यद् येषां ते अनन्याः । तच्च 'अनन्याश्चिन्तयन्तो माम्' इति प्रसङ्गात् चिन्तनीयमिति लब्धे अन्यदचिन्तयित्वा इति सिद्ध्यति । प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **तथा हीति** ।। देवमेवाविशन्ति इत्यनेन 'योगक्षेमं वहाम्यहम्' इत्युक्तार्थं भवति । अत्रैव **कामम्** इत्यागमान्तरम् । प्रभया सन्दृश्यं मण्डलं स्वरूपं यस्यासौ तथोक्तः । दर्शनस्य योगक्षेमसाधनत्वं प्रसिद्धमेव ।। 'नित्याभियुक्तानाम्' इत्यस्य 'अपवादविषयाणाम्' इत्यन्यथा प्रतीतिनिरासार्थमाह– **नित्यमिति** ।। **सर्वतः** सर्वस्मिन् देशे । शरीरेन्द्रियमनोभिर्वा युक्तानां भगवति सेवोद्युक्तानाम् ।। २२ ।।

भावबोधः (र.टि.)– ।। **अत्रैवेति** ।। अन्यदचिन्तयित्वा भगवन्तमेव चिन्तयतां योगक्षेमवहत्वे । अनेन महता कालेनैकान्तिकत्वात् कामं समीहितैरिति पूर्वार्धेन अनन्या इति गीतापूर्वार्धस्य शक्यो द्रष्टुमित्युत्तरार्धेन तेषामित्युत्तरार्धस्य समानार्थकत्वमित्युक्तं भवति । ननु 'देवमेवाविशन्ति' इत्यनेन मोक्षदातृत्वस्य योगक्षेमवहनशब्दार्थत्वेनोक्तत्वादत्र तदनुक्तेः कथमत्रैवागमान्तरमित्युक्तमित्यत आह– **दर्शनस्येति** ।। २२ ।।

**भावदीपः (रा.टि.)– ।। अत्रैवेति ।।** भगवति अनन्यशब्दार्थ एवेत्यर्थः । अस्मिन्नपि वाक्ये 'योगक्षेमं वहामि' इत्येतदर्थोऽर्थाल्लब्ध इति दर्शयति– **दर्शनस्येति** ।। २२ ।।

**भावरत्नकोशः (सु.टि.)–** सर्वनामकार्याभावं निर्वहन्नेव 'अन्यदचिन्तयित्वा' इति भाष्यं घटयितुमाह– **अविद्यमानमित्यादि ।। इति** प्रसङ्गात् चिन्तनीयतया भगवत उक्त्या तत्प्रसङ्गा-दन्यदपि चिन्तनीयमेव वक्तव्यमित्यर्थः । **प्रतीत एवार्थः** 'अद्वैतज्ञानिनोऽनन्या' इति प्रतीत एवार्थः । **इत्युक्तम्** इत्येतद् उक्तार्थं भवतीत्यर्थः । 'महता कालेन समाहितैः कामं द्रष्टुं शक्यः' इत्यस्य स्फुटत्वाद् दुर्गमार्थम् 'प्रभा' इत्यादिवाक्यं व्याख्याति– **प्रभयेति ।।** अनेनागमेन योगक्षेमवहनं कथं लभ्यत इत्यत आह– **दर्शनस्येति ।।** तृतीयार्थे वाऽयं तसिरित्याह– **शरीरेति** ।। २२ ।।

**गीताक्षराध्यस्तु-** एवं त्रैविद्यानां पुनरावृत्तिफलमभिधाय भागवतानां भगवद्भजनेन अपुनरावृत्तिपुरुषार्थलक्षणमोक्षफलमुच्यते– **अनन्या इति ।।** अविद्यमानम् अन्यत् चिन्तनीयं येषां ते अनन्याः 'अन्यदचिन्तयित्वा' इति यावत् । मां चिन्तयन्तो ये जनाः पर्युपासते सम्यक् स्वस्वयोग्यगुणगणम् उपसंहृत्योपासते तेषामहं नित्याभियुक्तानां नित्यम् अभितः सर्वतः सर्वस्मिन् देशे, शरीरेन्द्रिय मनोभिर्वा युक्तानां भगवत्सेवोद्युक्तानां योगक्षेमं योगेन अप्राप्तप्राप्ति-लक्षणेन सहितं क्षेमं स्थितस्य परिपालनम् अपुनरावृत्तिपुरुषार्थं वहामि प्रापयामि । यद्यप्यहमेव सर्वयज्ञानां भोक्ता । तथापि त्रैविद्यानुष्ठितं मद्भजनम् अज्ञानसम्भिन्नमिति तत्फलं फल्गु पुनरावृत्तिमच्च । मद्भजनं मोक्षफलकत्वात् त्रैविद्यानुष्ठितान्यदेवताभजनाद् उत्कृष्टफलकमिति 'किं फलं समम्' इति प्रश्नः परिहृत इति ।। २२ ।।

**भावदीपिका (श्री.टि.)–** 'सर्वम्' इति प्रमाणे केवलं शुद्धमाद्यं देवं विना यत् मनोगतं सर्वं विषयजातं तत् परित्यज्य तमेव ये चिन्तयन्तीत्यर्थः । **योगक्षेममिति ।।** अप्राप्तप्राप्तिरूपत्वात् प्राप्तपरिरक्षणरूपत्वाच्च मोक्ष एव मुख्यतो योगक्षेमशब्दार्थ इति द्रष्टव्यम् । **अत्रैवेति ।।** अन्यदचिन्तयित्वा भगवन्तमेव चिन्तयतां योगक्षेमवहत्व इत्यर्थः । तथा च 'महता कालेनैकान्तिकत्वात् कामं समाहितैः' इत्यनेन 'अनन्याः' इति गीतापूर्वार्धस्य, 'शक्यो द्रष्टुम्' इत्युत्तरार्धेन 'तेषाम्' इत्युत्तरार्धस्य समानार्थत्वं द्रष्टव्यम् । **प्रभयेति ।।** ज्ञानेन, देहकान्त्या वेत्यर्थः । ननु 'देवमेवाविशन्ति' इत्यनेन मोक्षदातृत्वस्य योगक्षेमवहशब्दार्थ-त्वेनोक्तत्वात् 'कामम्' इत्यत्र च तदनुक्तेः, कथम् 'अत्रैवागमान्तरम्' इत्युक्तम् ? इत्यत

श्लोकः २३
आह– **दर्शनस्येति** ।। **अपवादः** निन्दा । 'जनापवादाद् भीरुं मां नातोऽन्यद् वक्तुमर्हसि' इत्यादिप्रयोगात् ।। २२ ।।

**भावप्रकाशः** (कृ.टि.)– प्रकृतप्रमेयाप्रतिपादनात् काममिति प्रमाणोक्तिव्यर्थेत्यतो गूढाभिसन्धिराह– **अत्रैवेति** ।। भगवन्तमेव चिन्तयतां योगक्षेमप्राप्ताविवत्यर्थः । घटादिवत्प्रमायां दृश्यस्वरूप इति व्याख्याने माहात्म्यालाभादाह– **प्रभया सन्दृश्यमिति** ।। आदपरपूर्वकं दर्शनीयमित्यर्थः । कुत इत्यतः तत्र निमित्तमुक्तं प्रभयेति प्रभानिमित्तेनेत्यर्थः ।

ननु मोक्षदातृत्वं योगक्षेमवहत्वमिति देवमेवाविशन्तीत्यनेन व्याख्यातम् । नच तत्काममिति वाक्ये प्रतीयते तत्कथमत्रैवेत्युक्तमित्यतोऽभिसन्धिमुद्घाटयति– **दर्शनस्येति** ।। **अपवादविषयाणामितीति** ।। अभियोगस्तु शपथे स्यादाक्रोशे पराभव इति विश्वोक्तेरभियोगशब्दस्तावदाक्रोशार्थः । आक्रोशोनिन्दापवादश्चेत्यनर्थान्तरम् । तथा च भावे घञन्ताभियोगशब्दस्यापवादार्थत्वेऽभिपूर्वयुजेरेव तदापन्नम् । क्तप्रत्ययश्च कर्मार्थः । ततोऽपवादविषयाणामित्यर्थलाभ इति भावः ।। २२ ।।

**येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।। २३ ।।**

## भाष्यम्

**तर्हि 'अहं क्रतुः'इत्याद्यसत्यमित्यत आह**– येऽपीति ।।

भावप्रदीपिका (प.टी.)– ननु यदि त्रैविद्यानामल्पफलम् । तर्हि न भगवतः सर्वयज्ञभोक्तृत्वादीत्याशङ्क्योत्तरत्वेनोत्तरश्लोकमवतारयति– **तर्हीति** ।। २३ ।।

प्रमेयदीपिका (ज.टी.)– उक्तप्रश्नस्योत्तरं जातम् । तत्किमुत्तरेण? इत्यतः प्रश्नाभिसन्ध्युद्घाटनस्येदमुत्तरमित्याह– **तर्हीति** ।। भगवद्भोगनिमित्तं हि फलम् । स चेत् सर्वत्र समः, तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत् तर्हि 'अहं क्रतुः'इत्युक्तं सर्वत्र भगवतः भोक्तृत्वमपि असत्यमित्यर्थः ।। २३ ।।

**भावरत्नकोशः (सु.टि.)**– अभिसन्ध्युद्घाटनं दर्शयति– **भगवद्भोगनिमित्तं हीति** ।। स चेत् भोगश्चेत् । **तदभावश्चेत्** फलसाम्याभावो यद्यभ्युपगत इत्यर्थः । **सर्वत्र** त्रैविद्यभागवतानुष्ठितयज्ञेषु ।।

'येऽप्यन्यदेवताभक्ताः' इत्यादिषट्श्लोक्या **अक्षरार्थस्तु** भगवद्भोगनिमित्तं हि फलम् । स चेत् सर्वत्र समस्तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत् तर्हि 'अहं क्रतुः' इत्युक्तं सर्वत्र भगवतो भोक्तृत्वमप्यसत्यम् ? इत्यत उच्यते– **येऽपीति** ।। 'यजन्ते अन्यदेवताः' इति विभज्य संयोज्यम् । तेऽपि मामेव यजन्ति तद्यज्ञभोक्ताऽप्यहमेवेति फलितोऽर्थः ।। २३ ।।

**भावदीपिका (श्री.टि.)**– **।। प्रश्नस्येति** ।। यदि सर्वत्र भोक्ता भगवान्, तर्हि भागवतानां त्रैविद्यानां फलसाम्यमेवेति प्रश्नस्येत्यर्थः । **स चेदिति** ।। भगवद्भोग इत्यर्थः । **तदभावश्चेदिति** ।। 'त्रैविद्या माम्' इत्यादिना फलसाम्याभावस्योक्तत्वादिति भावः ।। २३ ।।

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। २४ ।।**

## भाष्यम्

**कारणमाहाविधिपूर्वकत्वे**– अहं हीति ।। २४ ।।

**भावप्रदीपिका (प.टी.)**– त्वां यजतां कथमविधिपूर्वकत्वम् । त्वद्यजनस्यैव विवक्षितत्वात् ? इत्याशङ्कोत्तरत्वेन श्लोकमवतारयति– **कारणमिति** ।। २४ ।।

**प्रमेयदीपिका (ज.टी.)**– 'अहं क्रतुः' इत्यादिनोक्तत्वात् 'अहं हि' इति पुनरुक्तिरित्यत आह– **कारणमिति** ।। 'त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद् भोक्ता, कथं तर्ह्यविधिपूर्वकत्वम्? इति शङ्कायाम्' इति शेषः ।। २४ ।।

**भावरत्नकोशः (सु.टि.)**– **।।** उक्तत्वात् यज्ञभोक्तृत्वस्य 'अहं क्रतुरहं यज्ञः' इत्यत्र क्रतुयज्ञसत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च क्रतुयज्ञशब्दवाच्यत्वमिति व्याख्यानस्याभिप्रेतत्वादिति भावः ।।

श्लोकः २५

त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद् भोक्ता कथं तर्ह्यविधिपूर्वकत्वम् ? इति शङ्कायाम् अविधिपूर्वकत्वे कारणमुच्यते– **अहं हीति** ।। सर्वेषां त्रैविद्याद्यनुष्ठितानां यज्ञानामहमेव भोक्ता । अन्यदेवतोद्देशेन त्यक्तानां हविषां त्वं कथं भोक्ता ? इत्यत उक्तम्– **प्रभुः स्वामीति** ।। चशब्दः परस्परसमुच्चये । एवशब्दः 'अहम्' इत्यनेन सम्बध्यते । एवंभूतमपि मां तत्त्वेन नाभिजानन्ति सर्वदेववरत्वेन भगवन्तं जानन्तोऽपि ब्रह्मरुद्रादीनां तत्परिवारत्वादिकं सम्यक् न जानन्ति यतः, अतस्ते च्यवन्ति प्रच्यवन्ति ।। २४ ।।

भावदीपिका (श्री.टि.)– भाष्ये 'कारणम्' इत्यस्य 'भगवदज्ञानरूपम्' इत्यर्थः ।।२४।।

**यान्ति देवव्रता देवान् पितृन् यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ।।२५।।**

## भाष्यम्

**फलं विविच्याऽऽह– यान्तीति ।। २५ ।।**

भावप्रदीपिका (प.टी.)– सर्वेषां त्वद्याजित्वेन त्वत्प्राप्तिमतां कथं फलभेद इत्याशङ्कानिरासाय श्लोकमवतारयति– **फलमिति** ।। २५ ।।

प्रमेयदीपिका (ज.टी.)– 'ते पुण्यमासाद्य' इति 'योगक्षेमं वहाम्यहम्' इति च फलभेदस्योक्तत्वात् किं यान्ति इत्यादिना? इत्यत आह– **फलमिति** ।। तस्यैवायं प्रपञ्च इति भावः ।। २५ ।।

भावरत्नकोशः (सु.टि.)– ।। **फलभेदस्य** स्वर्गापवर्गलक्षणफलभेदस्य । कृतचोद्यं परिहर्तुमाह– **तस्यैवेति** ।। २५ ।।

**गीताक्षरार्थस्तु** त्रैविद्यभागवतयोः, 'ते पुण्यमासाद्य' इति 'योगक्षेमं वहाम्यहम्' इति च यः फलभेद उक्तः स प्रपञ्च्यते– **यान्तीति** ।। देवेषु व्रतं नियमो भक्तिर्येषां ते देवव्रताः । भूतेषु सप्तमातृ, यक्ष, रक्षः, पिशाचादिषु इज्या 'व्रजयजोर्भावे क्यप्' पूजा येषां ते भूतेज्याः । मां यष्टुं शीलं येषां ते मद्याजिनः । अपिशब्दस्तुशब्दार्थः ।। २५ ।।

श्लोकः २६

## पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
## तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।। २६ ।।

## भाष्यम्

**दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वादित्याशङ्क्याऽह— पत्रमिति ।। न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ । भक्त्यैवाहं तृप्य इति भावः ।**

**'भक्तप्रियं सकललोकनमस्कृतं च' इति भारते ।**

**'एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।**
**एकान्तभक्तिर्गोविन्दे यत् सर्वत्रात्मदर्शनम्' इति ।। २६ ।।**

भावप्रदीपिका (प.टी.)— अस्त्वन्यद्वारा त्वद्यजनेऽल्पफलम् । तथाऽप्यन्ययजनमेव वरं तव महत्त्वेन पूजयितुं साधनाभावादित्याशङ्कापरिहाराय श्लोकमवतारयति— **दुर्बलैरिति** ।। यदि न साधने तात्पर्यम्, तर्हि यत्किञ्चित्पत्रादिनाऽपि पूजा स्यादित्यत आह— **न त्वति** ।। यदि न साधनमपेक्षितं तर्हि कथं हरिप्रसाद इत्यत आह— **भक्त्येति** ।। २६ ।।

प्रमेयदीपिका (ज.टी.)— 'पत्रम्' इत्यस्य सङ्गत्यप्रतीतेराह— **दुर्बलैरिति** ।। 'अतस्तद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां भजनमल्पफलमपि सुशकत्वात् करोमि' इति प्रासङ्गिकशङ्काशेषः । साधनानादरस्योक्तत्वात् यत्किञ्चित् पत्रादिकम् इति न मन्तव्यम् इत्याह— **नत्विति** ।। तत् किमपि भगवते समर्पणीय-मेवेति नियमोऽत्राभिप्रेत इत्यत आह— **भक्त्यैवेति** ।। कुतः? इत्यत आह— **भक्तेति** ।। **स्वार्थः** स्वार्थसाधनोपायः । **आत्मनः** गोविन्दस्य ।। २६ ।।

भाववोधः (र.टि.)— ।। **प्रासङ्गिकेति** ।। प्रकृताक्षेपसमाधानरूपत्वाद्यभावादिति भावः । **साधनोपाय इति** ।। साधनं भावः । तथा च स्वः स्वरूपभूतानन्दाविर्भावोऽर्थः प्रयोजनं येनेति स्वार्थसाधने एकान्तभक्तिरुपाय इत्यर्थः ।। २६ ।।

श्लोकः २६

**भावदीपः (रा.टि.)– ।। प्रासङ्गिकेति ।।** प्रासङ्गिकी भगवत्तदितरभजनयोरनल्पाल्प-फलकत्वोक्तिप्रसङ्गादागता या शङ्का तस्याः शेष इत्यर्थः ।। **साधनोपाय इति ।।** स्वाभीष्ट-साधना इयं गोविन्दैकान्तभक्तिरुपाय इत्यर्थः ।। २६ ।।

**भावरत्नकोशः (सु.टि.)– ।। आह** सङ्गतिम् । पूर्वोक्तानाक्षेपाद् इयं शङ्कैव नेत्यत उक्तम्– **प्रासङ्गिकेति ।।** भागवतत्रैविद्यभजनयोः अनल्पाल्पफलोक्तिप्रसङ्गागतशङ्काशेष इत्यर्थः । पत्रादेर्लोकरीत्या महनीयत्वाभावादाह– **साधनानादरस्येति ।।** 'इदं पत्रम्', 'इदं पुष्पम्' इत्येवंरूपेणानुक्तेरनादर इत्यपि आहुः । किमपि यत्किञ्चिदपि भगवते समर्पणीयमेव किम् इत्यन्वयः । भक्तेरात्मदर्शनस्य च स्वतोऽपुरुषार्थत्वादाह– **साधनोपाय इति ।।** स्वार्थशब्देन स्वार्थनिष्पादनोपायो ग्राह्य इत्यर्थः । कोऽसौ ? इत्यत उक्तं भाष्ये 'एकान्तभक्तिः आत्मदर्शनं चेति द्वयमित्येतावानेव स्वार्थः' इति । अत्रात्मशब्दार्थ **आत्मनः गोविन्दस्येति ।।** 'गोविन्दे' इति प्रस्तावादियमुक्तिः ।। २६ ।।

दुर्बलैस्त्वं पूजयितुमशक्यो महत्त्वात् । अतस्त्वद्भजनस्य महाफलत्वेऽपि तद्विहायाल्पानां देवानां भजनम् अल्पफलमपि सुशकत्वात् करोमि इत्यत उच्यते– **पत्रमिति ।।** अनिषिद्धं पत्रादि यो मे मह्यं प्रयच्छति ददाति, तस्य प्रयतात्मनः प्रकर्षेणोपरतमनस्कस्य परिशुद्ध-मानसस्य वा तत् पत्रादि भक्त्युपहृतं भक्त्या समर्पितम् अहमश्नामि प्रतिगृह्णामि । 'भक्त्यैवाहं तुष्टो भवामि, न द्रव्यादिना' इति द्वि भक्तिशब्दं प्रयुञ्जानस्य भावः ।। २६ ।।

**भावदीपिका (श्री.टि.)– ।। प्रासङ्गिकेति ।।** प्रकृताक्षेपसमाधानरूपत्वाभावादिति भावः । **साधनानादरस्येति ।।** सामान्यतः 'पत्रं पुष्पम्' इत्याद्यनेकसाधनोक्त्या तुलसीपत्रादिरूप एव साधनेऽनादर उक्त इत्यर्थः । 'स्वस्यार्थो येन भवत्यसौ स्वार्थः' इति विग्रहमभिप्रेत्याह– **स्वार्थसाधनेति ।।** साधनशब्दोऽत्र भावार्थः । तथा च स्वार्थसंपादनोपाय इत्यर्थः । 'आत्मनः स्वस्य दर्शनम्' इत्यन्यथाप्रतीतिनिरासायाह– **आत्मन इति ।।** सन्निधानादिति भावः ।। २६ ।।

**भावप्रकाशः (कृ.टि.)–** ननु कथमियं शङ्का, पूर्वोक्तानाक्षेपादित्यत उक्तम्– **प्रासङ्गिकेति ।। साधनादरस्येति ।।** इदं पत्रमित्यादि विशेषरूपेणाऽनुक्तेरित्यर्थः । भक्त्यादेः स्वतः फलत्वाभावादाह– **स्वार्थः साधनोपाय इति ।।** स्वः स्वरूपभूत आनन्दादिरर्थो येनेति व्युत्पत्तेः लक्षणाद्वेति भावः ।। २६ ।।

श्लोकः २७

## यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
## यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ।। २७ ।।

## भाष्यम्

**अतो यत् करोषि ।। २७ ।।**

भावप्रदीपिका (प.टी.)– यत् करोषि इति श्लोकं व्याचष्टे– **अत इति ।।**

**प्रमेयदीपिका** (ज.टी.)– साधनानादरस्य पूर्वमेवोक्तत्वाद्व्यर्थमुत्तरमित्यत आह– **अत इति ।। सामान्यमुक्त्वा विशेषे निगमनमेतदिति** भावः ।। २७ ।।

**भावबोधः** (र.टि.)– ।। **सामान्यमुक्त्वेति** ।। क्रियामात्रकरणे भक्तिः कर्तव्येति सामान्यमुक्त्वा कारणादिक्रियाविशेषं निगमयतीत्यर्थः ।।

**भावदीपः** (रा.टि.)– ।। **असाधनेति** ।। भक्तेरेव स्वप्रयोजकतया द्रव्यादिरूपाराधन-साधनानारदस्य **पत्रम्**इति श्लोक एवोक्तत्वादित्यर्थः ।। **सामान्यमिति** ।। 'भक्त्युपहृतम्' इति 'उपहृतम्' इति उपहरणसामान्यमुक्त्वा करणादानादिविशेषे उपसंहारादित्यर्थः ।। २७ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **साधनेति** ।। भक्तेरेव प्रयोजकत्वाभिप्रायेण भगवद्भजन-साधनानादरस्य 'पत्रं पुष्पम्' इति श्लोक एवोक्तत्वाद् अत्रापि 'यत् करोषि' इत्यादिना कर्माद्यनादरस्य प्रतीयमानत्वादित्यर्थः । **उत्तरम्** 'यत्करोषि' इत्युपरितनं वचनम् । **सामान्य-मिति** ।। 'यो मे भक्त्या' इति पुरुषसामान्यमुक्त्वा 'कौन्तेय' इति पुरुषविशेषे उपसंहारोऽत्र क्रियत इत्यतो न वैयर्थ्यमिति भावः ।। २७,२८ ।।

**गीताक्षराप्थस्तु** यतः 'भक्तैः समर्पितं यत्किमपि पत्रादिकं मम तोषहेतुः, अतस्त्वमपि मय्येव सर्वं समर्पय' इति सामान्यमुक्त्वा विशेषे निगमनं क्रियते– **यत्करोषीति** ।। जुहोषि हवनं निर्वर्तयसि तपस्यसि तपश्चरसि तत् सर्वं मदर्पणं मय्यर्पितं यथा स्यात् तथा कुरुष्व ।। २७ ।।

**भावदीपिका** (श्री.टि.)– ।। **साधनानादरस्येति** ।। पत्रादिरूपसाधनानादरस्य,

श्लोकः २८,२९

भक्तावेवादरस्य च 'पत्रम्' इत्यनेन श्लोकेनोक्तत्वादित्यर्थः । **सामान्यमिति** ।। 'पत्रम्' इत्यादिना 'सर्वकर्मकरणदशायां भक्तिरपेक्षिता' इति सामान्येनोक्तस्य 'यत्करोषि' इत्यादिना यज्ञाशनादिक्रियाविशेषे भक्तिरपेक्षितेति निगमनं क्रियत इत्यर्थः । **अत इति** ।। भाष्यस्य 'यतोऽहं भक्त्यैव तृप्य इति भक्तेरेवावश्यकत्वम्, अतो भक्तिपूर्वं यत्करोषि' इत्यादि योज्यम् ।। २७,२८ ।।

**भावप्रकाशः (कृ.टि.)– ।। सामान्यमुक्त्वेति ।।** यो मे भक्त्या प्रयच्छतीति पुरुषसामान्यविषयं पूर्वमुक्त्वा पुरुषविशेषेऽर्जुने उपसहारोऽयं क्रियत इत्यर्थः ।। २७ ।।

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ।। २८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षराण्यस्तु** विहितकरणादेः त्वय्यर्पणेन किं स्यात् ? इत्यत उच्यते– **शुभाशुभफलैरिति** ।। एवं मयि समर्पयन्, सर्वसमर्पणे सतीति वा शुभाशुभानि इष्टानि अनिष्टानि फलानि येषां तानि शुभाशुभफलानि तैः कर्मबन्धनैः, कर्माख्यबन्धनैः, शुभफलकानामपि कर्मणां बन्धनत्वं मोक्षविरोधितयाऽनिष्टत्वाभिप्रायेण । मोक्ष्यसे मुक्तो भविष्यसि । तद्विशदीक्रियते– **सन्न्यासेति** ।। **सन्न्यासः** कर्मफलानभिसन्धानं **योगः** भगवदर्पणपूर्वकं कर्मानुष्ठानं ताभ्यां युक्त आत्मा मनो यस्य स तथा । विमुक्तः संसारात् मामुपैष्यसि इति ।। २८ ।।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ।। २९ ।।**

## भाष्यम्

**तर्हि स्नेहादिमत्त्वाद् अल्पभक्तस्यापि कस्यचिद् बहुफलं ददासि । विपरीतस्यापि कस्यचिद् विपरीतमित्यत आह– समोऽहमिति ।। तर्हि न भक्तिप्रयोजनमित्यत आह– ये भजन्तीति ।।**

**भावप्रदीपिका (प.टी.)**– ननु यदि भक्तप्रियः, तर्हि भक्तानां फलं ददासि द्वेषिणां दुःखमिति वैषम्यनैर्घृण्ये तव स्यातामित्याशङ्क्य, श्लोकार्धमवतारयति– **तर्हीति** ।। यदि त्वं समः, तर्हि भक्तेरप्रयोजकत्वमित्याशङ्क्य, उत्तरार्धमवतारयति– **तर्हीति** ।। अयमेव समत्वार्थ इत्यर्थः ।।

**प्रमेयदीपिका (ज.टी.)**– भक्तप्रियत्वमुक्त्वा तद्विरुद्धं सर्वत्र साम्यं कथमुच्यते ? इत्यत आह– **तर्हीति** ।। यदि त्वं भक्तप्रियस्तदा द्वेष्यप्रियश्च स्याः । ततश्च भक्तेषु द्वेषिषु यथासङ्ख्यं स्नेहद्वेषवत्त्वात् अल्पभक्तस्यापि कस्यचित् बहुफलं सुखरूपं ददासि । विपरीतस्य अल्पद्वेषिणः अपि कस्यचित् बहुफलं दुःखरूपं ददासि इत्याद्यापाद्यते । राजादिषु तथा दर्शनात् । तथा च वैषम्यनैर्घृण्ये तवेति शङ्कार्थः । पूर्वार्धेनैव शङ्कायाः परिहृतत्वात् किमुत्तरार्धेन ? इत्यत आह– **तर्हीति** ।।

**अहं हि सर्वभूतेषु समः** न वैषम्यादिमान् यतो **मे** तदीयं द्वेषमपेक्ष्याधिकं **द्वेष्यो नास्ति** । तदीयां भक्तिमपेक्ष्याधिकं **प्रियश्च** नास्तीति भगवतोक्तेऽपि विपरीतमर्थं गृहीत्वा शङ्कते । यदि ते प्रियो नास्ति तर्हि न भक्तिः प्रयोजनं फलस्य । तथा चोक्तविरोध इति भावः ।।

**भावबोधः (र.टि.)**– भक्तेर्विष्णुप्रीतिद्वारा मोक्षसाधनत्वेन यदि तेन प्रियो नास्ति तर्हि न भक्तिः प्रयोजिकेति वक्तव्यमित्यत आह– **प्रयोजनं फलस्येति** ।। प्रयुज्यते येन तत्प्रयोजनमित्यर्थः ।। २९ ।।

**भावदीपः (रा.टि.)**– ।। **उक्तेति** ।। भक्तेरेव साधनोपायत्वं यदुक्तं तद्विरोध इत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– ।। **विपरीतमर्थमिति** ।। सर्वथा द्वेष्यः प्रियश्च नास्तीति विपरीतमित्यर्थः । ननु भक्तेः प्रयोजनत्वाभावस्य परं प्रति सिद्धत्वात् तत्कथनमयुक्तम् । अप्राप्ते शास्त्रमर्थवदिति न्यायादित्यत आह– **प्रयोजनं फलस्येति** ।। करणव्युत्पन्नोऽयं प्रयोजनशब्द इति भावः । यच्छब्दश्रवणादबुद्धिपूर्वं योऽवशमित्यतः परमध्याहार्यमाह– **यो वशः स इति** ।। २९ ।।

श्लोकः २९

## भाष्यम्

**मयि ते तेषु चाप्यहमिति ।। मम ते वशाः तेषामहं वश इति । उक्तं च पैङ्गिखिलेषु 'ये वै भजन्ते परमं पुमांसं तेषां वशः स तु ते तद्वशाश्च' इति । तद्वशा एव ते सर्वदा । तथाऽपि बुद्धिपूर्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवत्, शिशुपालादिवच्च । तच्चोक्तं तत्रैव 'अबुद्धिपूर्वं यो वशः तस्य ध्यानात् पुनर्वशो भवते बुद्धिपूर्वम्' इति ।।**

भावप्रदीपिका (प.टी.)– भगवतः सर्वगतत्वात् सर्वस्य तदाधारत्वात् को विशेषो भक्तानाम् ? इत्यत आह– **मयीति** ।। सर्वेषां भगवद्वशत्वात् भक्तस्य को विशेषः ? इत्यत आह– **तद्वशा इति** ।। २९ ।।

प्रमेयदीपिका (ज.टी.)– 'मयि ते तेषु चाप्यहम्' इत्येतन्न फलम्, स्वभावसिद्धत्वादित्यत आह– **मयीति** ।। इति 'अस्य' इति, 'अर्थः' इति योजना । कुत एतत् ? इत्यत आह– **उक्तं चेति** ।। मम ते वशाः इत्येतदपि तादृगेव भजनाभावेऽपि तद्वशत्वस्वाभाव्यादित्यत आह– **तदिति** ।। 'यद्यपि' इति शेषः । अत्र दृष्टान्तं प्रमाणं चाह– **उद्धवादीति** ।। अबुद्धिपूर्वं यो वशः सः ।। २९ ।।

भावदीपः (रा.टि.)– ।। **मयि** इति वाक्यान्ते 'अस्य' इति पदं, 'वशा इति' इत्यनन्तरम् अर्थपदं चाध्याहृत्य योजनामाह– **इत्यस्येत्यर्थ इति योजनेति** ।। **तादृगेवेति** ।। 'मयि ते' इति गीतावाक्योक्तम् अन्योन्याश्रयत्वं यथा निष्फलं तथा 'मम' इत्यादिना व्याख्यातं तद्वशत्वमप्यफलमेव इत्यर्थः ।। प्रमाणे श्रुतयच्छब्दस्य अध्याहृततच्छब्देनान्वयमाह– **अबुद्धिपूर्वं यो वशः स इति** ।। २९ ।।

**भावरत्नकोशः** (सु.टि.)– भक्तप्रियत्वं 'भक्त्युपहृतमश्नामि' इति भक्तप्रियत्वम् । **द्वेष्यप्रियः** द्वेषिणामप्रियः । 'विपरीतस्यापि' इति भाष्यस्यार्थः– **द्वेषिणोऽपीति** ।।

समोऽहमित्यादि **गीताक्षरार्थस्तु**- ननु 'भक्त्युपहृतमश्नामि' इति भक्तप्रियत्वं तवोक्तम् । यदि त्वं भक्तप्रियस्तदा द्वेष्यप्रियश्च स्याः । ततश्च भक्तेषु द्वेषिषु च यथासङ्ख्यं स्नेहद्वेषवत्त्वाद्

अल्पभक्तस्यापि कस्यचिद्बहुफलं सुखरूपं ददासि ? अल्पद्वेषिणोऽपि कस्यचिद्बहुफलं दुःखरूपं ददासि ? इत्यापद्यते । राजादिषु तथा दर्शनात् । तथा च वैषम्यनैर्घृण्ये तव स्याताम् ? इत्यत उच्यते– **समोऽहमिति** ।। अहं सर्वेषु भूतेषु सम न वैषम्यादिमान् । यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो न अस्ति । तदीयां भक्तिमपेक्ष्यापि अधिकं प्रियश्च न अस्ति । यदि ते प्रियो नास्ति तर्हि न भक्तिः प्रयोजिका फलस्य ? इत्याशङ्क्योच्यते– **ये भजन्तीति** ।। ये मां भक्त्या भजन्ति सेवन्ते मयि ते, तेषु चाप्यहम् । मम ते वशाः, तेषामहं वश इत्यर्थः । यद्यपि भजताम् अभजतां च मद्वशत्वं स्वभावसिद्धम् । तथाप्युद्धवादिवत् शिशुपालवच्चोभयेषां बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वाभ्यामस्ति विशेषः । तथा च बुद्धिपूर्वकं भगवद्वशत्वं ज्ञात्वा भजतां भक्तिवशीकृतभगवतां महाफलमस्त्येवेति तात्पर्यम् ।। २९ ।।

**भावदीपिका** (श्री.टि.)– ।। **मदीयम्** मद्विषयम् । **इतीति** ।। तदीययोग्यताऽनतिरेकाभिप्रायेण साम्ये भगवतोक्तेऽपीत्यर्थः । **विपरीतमर्थमिति** ।। 'सर्वथा द्वेष्यः प्रियश्च नास्ति' इति विपरीतमर्थमित्यर्थः । 'प्रयुज्यते प्रवर्त्यते पुमान् अनेन' इति व्युत्पत्त्या प्रयोजनशब्दः प्रयोजनसाधनपर इत्याशयेनाह– **प्रयोजनं फलस्येति** ।। **उक्तविरोध इति** ।। 'पत्रम्' इत्यादिना 'भक्त्यैवाहं तृप्यः' इति यद्भक्तेः प्रयोजकत्वमुक्तं तद्विरोध इति भावः । द्वितीयेतिशब्दात् परमर्थशब्दोऽध्याहार्य इत्याशयेन 'इत्यर्थः' इत्युक्तम् । **तादृगेवेति** ।। फलं न भवतीत्यर्थः । कुत ? इत्यत आह– **भजनाभावेऽपीति** ।। स्वभावसिद्धत्वादिति भावः । **अबुद्धीति** ।। तथा च योऽबुद्धिपूर्वाद् वशः स तस्य भगवतो ध्यानाद् ध्यानमहिम्ना पुनर्बुद्धिपूर्ववशो भवतीत्यर्थः ।। २९ ।।

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ।। ३० ।।**

## भाष्यम्

**न भवत्येव प्रायस्तद्भक्तः सुदुराचारः । तथाऽपि बहुपुण्येन यदि कथञ्चिद्भवति तर्हि साधुरेव स मन्तव्यः ।। ३० ।।**

भावप्रदीपिका (प.टी.)– ननु यदि भगवद्भक्ता एव दुराचराः, तर्हि तेषां का गतिः ? इत्याशङ्क्योत्तरम् अपि चेत् इति श्लोकद्वयं व्याचष्टे– **नेति** ।।

श्लोकः ३१

**प्रमेयदीपिका (ज.टी.)–** 'अपि चेत्' इत्यादिना भक्तेः प्रशंसा क्रियते । तत्र विष्णुभक्तेस्सुदुराचारेणैकत्र समावेशप्रतीतौ यथावद्व्याचष्टे– **न भवत्येवेति** ।। **बहुपुण्येन स्वयोग्याधिकेनार्जितेन** ।। ३० ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षराण्यस्तु** भक्तेः प्रशंसा क्रियते– **अपि चेदित्यादिना** ।। सुदुराचारः अतीव कुत्सिताचारोऽपि अनन्यभाक् स्वातन्त्र्येणान्यदेवताभजनमकुर्वन् मां भजते चेत् तर्हि साधुरेव दुराचारकृतदोषहीन एव मन्तव्यः । हि यस्मात् सम्यग्व्यवसितः समीचीनव्यवसायवान् ।। ३० ।।

**भावप्रकाशः (कृ.टि.)–** ननु बहुपुण्यस्य शुभफलत्वात् कथं दुराचारहेतुत्वमित्यत आह– **स्वयोग्याधिकेनेति** ।। 'स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते । कथञ्चिदधिके यत्ने दोषः कश्चित् समापतेत्' इत्युक्तेरिति भावः ।।

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।। ३१ ।।**

## भाष्यम्

**कुतः? क्षिप्रं भवति धर्मात्मा । देवदेवांशादिष्वेव च तद्भवति । उक्तं च शाण्डिल्यशाखायाम्**

**'नाविरतो दुश्चरितान्नाभक्तो नासमाहितः ।**
**सम्यग् भक्तो भवेत् कश्चिद् वासुदेवेऽमलाशयः ।**
**देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः' इति ।।**

भावप्रदीपिका (प.टी.)– बहुपुण्यं स्वयोग्यादधिकम् । तर्हि सर्वथा सदाचारापेक्षा नास्तीत्यागतमित्यत आह– **देवेति** ।। दुश्चरितादविरतादिः पुरुषो न सम्यग्भक्तः । देवाद्या बहुज्ञत्वाद्दुश्चरितादविरता अपि भक्ता भवन्तीत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– 'सम्यग् व्यवसितो हि सः' इति हेतोरुक्तत्वात् क्षिप्रम्

**इत्यादि व्यर्थमित्यत आह– कुत इति ।। सम्यग्व्यवसायवत्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्य इति शङ्कार्थः । सम्यग्व्यवसायवत्त्वात् क्षिप्रं भवति धर्मचित्तः । यदेतद्भक्तेः सुदुराचारेण सहैकत्र क्वचिदवस्थानमङ्गीकृतं तदपि न मनुष्यविषयमित्याह– देवेति ।। देवाः चन्द्रादयः, तदंशाः सुग्रीवादयः । आदिपदेन विश्वामित्रादीनामृषीणां ग्रहणम् । एतच्च देवदेवांशादिष्वेव विषयेषु भवतीति योजना । कुतः? इत्यत आह– उक्तं चेति ।। दुश्चरितात् अविरतः यः कश्चित् सः अमलाशयः भूत्वा वासुदेवे सम्यग् भक्तो न भवेत् । तथा अभक्तः श्रवणकीर्तनादिभक्तिलिङ्गरहितः । एवम् असमाहितः विषयविक्षिप्तमनाश्च । देवादयश्च क्वचिदेवम्भूता अपि सम्यग् भक्ता भवन्ति । कुतः? ज्ञानतः सम्यग्व्यवसायवत्त्वात् ।।**

**भावदीपः (रा.टि.)– ।। चन्द्रादय इति ।।** चन्द्रस्य गुरुदारपरिग्रहो दुराचारः, सुग्रीवस्य वालिदारपरिग्रहः, प्रथमादिपदेन दिक्पालादीनां भगवता युद्धादिः दुराचारः, द्वितीयादिपदेन अश्वत्थामादिः ग्राह्यः ।। **विश्वामित्रादीनामिति** ।। मेनकादिपरिग्रहादिस्तत्र ज्ञेयः । **तथाविध इति ।।** भक्तलिङ्गवान् इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। तदंशाः** देवांशाः । **एतच्च** 'अपि चेत्' इति वाक्यम् । **दुश्चरितात्** दुराचारात् **अविरतः** अनिवृत्तः अमलाशयः निर्मलान्तःकरणः । भेदे साध्यसाधनभावायोगादाह– **श्रवणकीर्तनादीति** ।।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।

इति श्लोकोक्तस्मरणादिकमादिपदार्थः । विषयैर्विक्षिप्तं व्याकुलं मनो यस्य स तथा । चशब्दस्तुशब्दार्थ इति भावेनोक्तम्– **देवादयस्त्विति ।। एवंभूता अपि** दुश्चरितादविरता अपि । 'सम्यग्भक्तः' इत्येकवचनान्तमपि बहुवचनान्ततया विपरिणम्यानुवर्त्य इति भावेनोक्तम्– **सम्यग्भक्ता इति ।।** 'इति श्रुत्यर्थ' इति शेषः ।।

**भावदीपिका (श्री.टि.)– ।। सम्यग्व्यवसायवत्त्वात्** सम्यग् भगवत्सर्वोत्तमत्वादिनिश्चयवत्त्वात् । **अङ्गीकृतमिति** ।। प्रायःशब्देनेति भावः । **तदंशाः** देवांशाः । यथोक्तमनुव्याख्याने

श्लोकः ३१

'चन्द्रसुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् ।
प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ।।' इति ।

अत्र प्राप्तशब्देन स्वयोग्यादधिकेनार्जितेन पुण्येन प्रसक्तमुच्यते । तथा चान्यत्र

'स्वाधिकाराधिको यत्नः कथञ्चिन्नोपपद्यते ।
कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेत् ।।' इति ।

'एधमानद्विट्' इति श्रुतेश्चेति द्रष्टव्यम् । **विश्वामित्रादीनामिति** ।। विश्वामित्रस्य मेनकोर्वशीरूपाप्सरस्त्रीसम्भोगत्रिशङ्क्वाद्ययाज्ययाजनादिरूपसुदुराचारस्य दर्शनादिति भावः । **दुश्चरितादविरतः** सदा दुराचारवान् । **अभक्त इत्यादि** ।। तथा चाभक्तो यः कश्चित् सोऽप्यमलाशयो भूत्वा वासुदेवे सम्यग्भक्तो न भवेत् , एवमसमाहितो यः कश्चित् सोऽप्यमलाशयो भूत्वा, वासुदेवे सम्यग्भक्तो न भवेदिति योजना द्रष्टव्या । 'श्रवणकीर्तनादिभक्तिलिङ्गः' इत्युक्त्या,

'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
एवं पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।।'

इति भागवते श्रवणादीनां भक्तिज्ञापकत्वेनैव भक्तित्वमुच्यत इत्येव ध्येयम् । एवंभूताः दुश्चरितादविरता अभक्ता असमाहिताश्चेत्यर्थः । **लिङ्गम्** भक्तिचिह्नम् । तथा च 'सुदुराचारः पुमान् भगवद्भक्तो भवितुमर्हति तल्लिङ्गत्वात्' इत्यनुमानं द्रष्टव्यम् ।।

**भावप्रकाशः (कृ.टि.)– ।। तदंशा इति ।।** देवांशा इत्यर्थः । अभेदे हेतुहेतुमद्भावायोगादाह– **श्रवणकीर्तनादीति ।।**

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।

इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणेति सप्तमस्कन्धोक्तभक्तिलिङ्गेत्यर्थः ।

# भाष्यम्

**अतोऽन्यः कश्चिद् भवति चेद् दाम्भिकत्वेन सोऽनुमेयः । साधारणपापानां सत्सङ्गात् महत्यपि कथञ्चिद् भक्तिर्भवति । साधारणभक्तिर्वेतरेषाम् ।।**

भावप्रदीपिका (प.टी.)– ननु दुराचारिण एव लोके भक्ता दृश्यन्तेऽतः कथं देवादिविषयमेतत् ? इत्यत आह– **अत इति** ।। भवति चेदिति महापाप इत्यर्थः । यदि साधारणपापाः, तर्ह्याह– **साधारणेति** ।। न केवलं दाम्भिकोऽसौ, साधारण-भक्तोऽपि भवतीत्याह– **साधारणेति** ।।

प्रमेयदीपिका (ज.टी.)– ननु देवादिभ्योऽन्योऽपि सुदुराचारस्तद्भक्तो दृश्यते । शङ्खचक्राङ्कितबाहुमूलत्वादिलिङ्गवत्त्वात् तत्कथमेतत् ? इत्यत आह– **अतोऽन्य इति** ।। भवति चेत् 'सुदुराचारोऽपि भक्तिलिङ्गवान्' इति शेषः ।। माभूत् सुदुराचारो भक्तः । मध्यमदुराचारस्तु तथाविधः कथम् ? इत्यत आह– **साधारणेति** ।। 'महति' इति वक्ष्यमाणसाधारणभक्तिव्यवच्छेदार्थम् । सुदुराचाराणामपि भगवत्प्रेम्णोऽनुभवसिद्धत्वात् कथं डाम्भिकत्वानुमानम्? इत्यत आह– **साधारणेति** ।। अल्पेत्यर्थः । प्रेमानु-भवाभावेऽनुमानमुक्तम् । महाभक्त्यभावविषयं वेति भावः ।।

**भावबोधः** (र.टि.)– यदि सुदुराचारणमल्पभक्तिस्तर्हि विप्रतिपन्नो दाम्भिकः भगवद्भक्त इति यावत् । देवादिव्यतिरिक्तत्वे सति सुदुराचारत्वाद् असुरवदित्यनुमानं दाम्भिकत्वेन सोऽनुमेय इति कथमुक्तमित्यत आह– **प्रेमानुभवाभाव इति** ।। तथा च प्रेमानुभवाभाववान् पक्ष इत्यर्थः । **महाभक्तेति** ।। महाभक्त्यभावस्यैव साध्यत्वं वेत्यर्थः ।। ३१ ।।

।। इति श्रीरघूत्तमतीर्थप्रणीता गीताभाष्यटीकाभावबोधाभिधाटिप्पणी नवमोऽध्यायः ।।

भावदीपः (रा.टि.)– ।। **डाम्भिकत्वानुमानमिति** ।। विमतो डाम्भिकः भक्तिहीन इति यावत् । देवताद्यन्यत्वे सति भक्तलिङ्गत्वे सति सुदुराचारवत्वात् सम्मतवदित्यनुमानमित्यर्थः । **इति भाव इति** ।। 'येन बाधितविषयं स्यात्' इति शेषः ।।

भावरत्नकोशः (सु.टि.)– ।। **दृश्यते** अनुमीयते । तदनुमानमाह– **शङ्खचक्राङ्कितेति** ।।

श्लोकः ३१

ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
एवं ललाटफलके लसदूर्ध्वपुण्ड्राः ते वैष्णवा भुवनमाशु पवित्रयन्ति ।।
ये शङ्खचक्राङ्कितबाहुमूलाः कण्ठावलम्बितसरसीरुहबीजमालाः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः ते वैष्णवा भुवनमाशु पवित्रयन्ति ।।

इति वचनेन शङ्खचक्राङ्कितबाहुमूलत्वादेर्विष्णुभक्तिलिङ्गत्वावगमादिति भावः । 'अतोऽन्यः' इति भाष्यस्य 'देवतदंशादितोऽन्य' इत्यर्थः । सुदुराचरः पुमान् भक्तोऽपि माभूत् इत्यन्वयः । **सुदुराचारः** स्वोच्चदारपरिग्रहभगवद्भागवतसच्छास्त्रनिन्दादिलक्षणः । **मध्यमदुराचारः** अगम्य-गमनादिरूपः **तथाविधः** भक्तिलिङ्गवान् । **साधारणभक्तीति** ।। महाभक्त्यभावेत्यर्थः । **कथमिति** ।। विष्णुभक्तलिङ्गवानपि विप्रतिपन्नो डाम्भिकः न भगवद्भक्तः देवाद्यन्यत्वे सति सुदुराचारत्वाद् असुरवदिति कथमनुमानम् ? अनुभवबाधितत्वादित्यर्थः ।अनन्तरोक्तविरोध इत्यतः साधारणशब्दार्थमाह– **अल्पेत्यर्थ इति** ।। उक्तं बाधितविषयत्वमुद्धरति– **प्रेमेत्यादि** ।। 'विप्रतिपन्नो डाम्भिकः' इत्यत्र भगवति स्नेहाभाव एवानुमितः । अत्र तु महाभक्त्यभावोऽनुमीयत इति भगवत्प्रेम्णोऽल्पस्यानुभवेऽपि न बाधितविषयमनुमानमिति भावः ।।

**भावदीपिका (श्री.टि.)– ।। अतोऽन्य इतीति ।।** तथा च 'विप्रतिपन्नः सुदुराचारः डाम्भिकः न भगवद्भक्त इति यावत्, देवादिव्यतिरिक्तत्वे सति सुदुराचारत्वात्' इति सत्प्रति-पक्षानुमानमुक्तं भवति । **मध्यमदुराचार इति** ।। सुदुराचारो न भवतीत्यर्थः । **तथाविधः** भक्तिलिङ्गवान् । **साधारणभक्तीति** ।। अल्पभक्तीत्यर्थः ।। सत्प्रतिपक्षानुमानेऽनुभवबाध-माशङ्कते– **सुदुराचाराणामपीति** ।। **भगवत्प्रेम्णः** भगवत्स्नेहरूपभक्तेरित्यर्थः । **डाम्भि-कत्वेति** ।। अभक्तत्वेत्यर्थः ।। भाष्ये **इतरेषां** सुदुराचाराणां भगवत्प्रेमानुभववतामित्यर्थः ।

यदि सुदुराचाराणाम् अल्पा भक्तिरस्ति तर्हि डाम्भिकत्वेन सोऽनुमेय इति कथमुक्तम् ? इत्यत आह– **प्रेमानुभवाभाव इति** ।। प्रेमानुभवाभाववति पुंसीत्यर्थः । तथा च 'प्रेमानुभवाभाववान् पक्षः' इत्याशयः । तथा च भगवत्प्रेमानुभवाभाववान् डाम्भिक अभक्त इति यावत्, देवादिव्यतिरिक्तत्वे सति सुदुराचारत्वादित्यनुमानं द्रष्टव्यम् । भगवत्प्रेमानुभव-वत्सुदुराचारपक्षकानुमानमेवास्तु । नच डाम्भिकत्वरूपाभक्तत्वानुमानायोग इति वाच्यम् । महाभक्त्यभावस्यैव साध्यत्वाङ्गीकारात् । तथा च भगवत्प्रेमानुभवाभाववान् सुदुराचारो

महाभक्त्यभाववान् देवादिव्यतिरिक्तत्वे सति सुदुराचारत्वादित्यनुमानप्रयोगसम्भवादित्याशयेनाऽह– **महाभक्तीति** ।।

**भावप्रकाशः (कृ.टि.)– ।। शङ्खचक्राङ्कितबाहमूलत्वादिलिङ्गत्वादिति ।।**

ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके सलदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ।।

इत्यादिप्रमाणेन शङ्खचक्राङ्कितबाहुमूलत्वादेरपि विष्णुभक्तलिङ्गत्वोक्तेरिति भावः ।। **माभूत् दुसुराचार इति** ।। **स्वोचदारपरिग्रहः** हरिगुरुतच्छास्त्रनिन्दादिः सुदुराचारः । अगम्यागमनाभक्ष्याभक्षादिः मध्यमदुराचार इति विवेकः । **तथाविध इति** ।। शङ्खचक्राङ्कितबाहुमूलत्वादिलिङ्गवानित्यर्थः । **कथं दाम्भिकत्वानुमानमिति** ।। विप्रतिपन्नो दाम्भिको भगवदभक्त इति यावत् देवादिव्यतिरिक्तत्वे सति सुदुराचारत्वादसुरवदित्यनुमानं कथं बाधप्रसङ्गादित्यर्थः । **प्रेमानुभवाभाव इति** ।। भगवद्विषयकस्नेहानुभवाभाव इत्यर्थः । तथा च प्रेमानुभवो यत्र नास्ति तस्यैव पक्षत्वान्न बाध इति भावः । ननु यत्र प्रेमानुभवसिद्धिः तत्र व्यभिचार इत्यत आह– **महाभक्तीति** ।। तथा च महाभक्त्यभावस्य साध्यत्वान्न बाधः । न व्यभिचार इति भावः ।।

## भाष्यम्

**'स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवैहि नास्य भक्तिः' इति श्रीविष्णुपुराणे । 'सा श्रद्धधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः' इति च ।**

भावप्रदीपिका (प.टी.)– अत्रैव प्रमाणान्याह– **स इति** ।।

प्रमेयदीपिका (ज.टी.)– सुदुराचारोऽपि भक्तिलिङ्गान्महाभक्त एवास्तु । किं डाम्भिकत्वादिकल्पनया? इत्यत आह– **स इति** ।। शठमतिः डम्भबुद्धिः । महाभक्तेर्दुराचारोपशमहेतुत्वोक्तेश्च न तयोरेकत्र समावेश इत्याह– **सेति** ।। हरिभक्तिः ।।

भावरत्नकोशः (सु.टि.)– हेतोरप्रयोजकतां शङ्कते– सुदुराचारोऽपीति ।। 'डाम्भिकत्वादि' इत्यत्रादिपदेन महाभक्त्यभावग्रहः । प्रकृतोपयोगसिद्धय उक्तम्– **डम्भबुद्धि-**

श्लोकः ३१

**रिति** ।। अर्थतृष्णामुपयाति विषयतृष्णावान्, अविरक्त इति भाष्यार्थः । 'न वा एकेनाक्षरेण' इति शास्त्रात् पुष्पिताग्रावृत्तेऽपि प्रथमपादे एकाक्षराधिक्यं पौराणिकं न दोषाय । **तयोः** महाभक्तिदुराचारयोः । अन्यत्र हरेः, विषयेष्विति भाष्यार्थः ।

**भावदीपिका (श्री.टि.)**– महाभक्त्यभावसाधकानुमानेऽप्रयोजकतामाशङ्कते– **सुदुराचारोऽपीति** ।। **डाम्भिकत्वादीति** ।। महाभक्त्यभावेत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– **डाम्भिकत्वादीति** ।। आदिपदात् महाभक्त्यभावसङ्ग्रहः ।

## भाष्यम्

**'वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् ।**
**पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ।।**
**गुप्तानि चत्वारि यथाऽऽगमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् ।**
**तं चापि देवं शरणं प्रपन्नमेकान्तभावेन भजाम्यजस्रम् ।।**
**एतैरुपायैः परिशुद्धसत्वः कस्मान्न पश्येयमनन्तमेनम्'**

**इति मोक्षधर्मे आचारस्य ज्ञानसाधनत्वोक्तेश्च ज्ञानाभावे सम्यग्भक्त्यभावात् । तथा हि गौतमखिलेषु–**

**'विना ज्ञानं कुतो भक्तिः कुतो भक्तिं विना च तत्' इति ।**

**'भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैतत् त्रिकमेककालम्' इति च भागवते ।। ३१ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये नवमोऽध्यायः ।। ९ ।।

**भावप्रदीपिका (प.टी.)**–चत्वारि उपस्थमुदरं पाणिर्वाक् । अत्राचारस्य ज्ञानसाधनत्वं ज्ञायते । न भक्तिसाधनत्वमित्यत आह– **ज्ञानेति** ।। ३४ ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितीमगवद्गीताभाष्यभावप्रदीपिकायां नवमोऽध्यायः ।।

श्लोकः ३१

**प्रमेयदीपिका (ज.टी.)– इतश्चैवमित्याह– वेदा इति ।।** मम मया । परस्य गुह्यं न च भिन्नपूर्वं पिशुनत्वं नाऽचरितम् । उपस्थम्, उदरं, पाणिः, वाग् इति चत्वारि । मे मया । एकान्तभावेन नियतमनसा । सत्वम् अन्तःकरणम् । कारणसामग्र्यां सत्यां कार्यानुदयो ह्याश्चर्यहेतुः ।। नन्वाचारस्य ज्ञानसाधनत्वोक्त्या दुराचाराणां ज्ञानाभावः सिद्ध्यतु । महाभक्त्यभावस्तु कुतः ? इत्यत आह– **ज्ञानेति ।।** कुत एतत् ? इत्यत आह– **तथा हीति ।।** भक्तिज्ञानयोरविनाभूतत्वाच्च तदभावे तदभावसिद्धिरित्याह– **भक्तिरिति ।। ३१ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां नवमोऽध्यायः समाप्तः ।। ९ ।।

**भावदीपः (रा.टि.)– ।। इतश्चैवमिति ।।** सदाचारस्य भक्तिहेतुत्वज्ञानसाधनत्वोक्तेश्च न भक्तिदुराचारयोरेकत्र समावेश इत्यर्थः ।। **भक्तिज्ञानयोरिति ।।** भक्तिपदेनात्र प्रेमा ग्राह्यः ।। ३१ ।।

।। इति श्रीमत्सुधीन्द्रतीर्थपूज्यपाजशिष्य श्रीराघवेन्द्रयतिकृते श्रीमद्गीताभाष्यटीकाभावदीपे नवमोऽध्यायः ।।

**भावरत्नकोशः (सु.टि.)– ।। इतश्चैवमिति ।।** सदाचारस्य भक्तिहेतुज्ञानसाधनत्वोक्तेश्च न भक्तिदुराचारयोरेकत्र समावेश इत्यर्थः । 'परस्य' इत्यादेस्तात्पर्यमाह– **पिशुनत्वं नाचरितमिति ।।** राजादिषु परमर्मसूचकत्वमित्यर्थः । 'भिन्नपूर्वम्' इत्यत्र 'भूतपूर्वे चरट्' इत्यत्रेव समासः । 'उपस्थम् उदरं बाहू वाक् चतुर्थी भवेद् द्विजः' इति वचनादाह– **उपस्थमुदरं पाणिर्वागितीति ।।** 'न लोक' इति क्तप्रत्यययोगे षष्ठीनिषेधादाह– **मे मयेति ।।** छन्दस्त्वात् षष्ठीति भावः । कस्मान्न पश्येयम् ? इत्युक्तपरिवेदनम् उपपादयति– **कारणसामग्र्यामिति ।।** कारणानां सामस्त्य इत्यर्थः । **एतत्** 'ज्ञानाभावे सम्यग्भक्त्यभाव' इत्येतत् । **तदभावे** ज्ञानाभावे **तदभावः** भक्त्यभावः । अत्र भक्तिपदेन प्रेमा ग्राह्यः ।। ३१-३४ ।।

**गीताक्षराप्यस्तु-** सम्यग्व्यवसायित्वेऽपि दुराचारः कुतः साधुर्मन्तव्य इत्यत उच्यते– **क्षिप्रमिति ।।** सम्यग्व्यवसायित्वात् क्षिप्रं भवति धर्मचित्तः । ततश्च शश्वच्छान्तिं दुराचारोपशमं निगच्छति नितरां प्राप्नोति । शान्तिं गच्छंश्च भगवन्निष्ठां गच्छति । तां गच्छंश्च मोक्षं

श्लोकः ३२

निगच्छति । हे कौन्तेय मे भक्तः सुदुराचारोऽपि न प्रणश्यति तत्कृतमनर्थं न प्राप्नोति । इमं चार्थं प्रतिजानीहि । यदेतद् भक्तेः सुदुराचारेण सह क्वचिदवस्थानमङ्गीकृतम्, तदपि न मनुष्य-विषयम् । किन्तु देवदेवांश ऋष्यादिविषयमिति ज्ञातव्यम् ।। ३१ ।।

**भावदीपिका (श्री.टि.)–** ।। **आहेति** ।। हेतुसाध्ययोर्व्याप्तिग्राहकप्रमाणसद्भावेन तद्बाधान्नाप्रयोजकताशङ्का इत्याहेत्यर्थः । **तयोः** दुराचारत्वमहाभक्त्योरित्यर्थः । एवं दुराचाराणां महाभक्त्यभावः । 'कस्मान्न पश्येयम्' इत्यस्याभिप्रायमाह– **कारणेति** ।। सामग्रीशब्दः साकल्यपरः । भाष्ये ज्ञानस्य भक्तिभागत्वात् ज्ञानाभावे भक्त्यभावादित्यर्थः । **तदभावे** ज्ञानाभावे । **तदभावसिद्धिः** भक्त्यभावसिद्धिः ।। ३१-३४ ।।

इति यदुपतिगीताभाष्यटीकासुयुक्ताशयमतिललिताभिगीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा नवम अगमदस्यामन्तमध्यायवर्यः ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावदीपिकाख्यायां नवमोऽध्यायः ।।**

**भावप्रकाशः (कृ.टि.)–** परस्य गुह्यं न च भिन्नपूर्वमित्यस्य दुराचाराभावपरत्वं स्पष्टयति– **पिशुनत्वमिति** ।। राजादीन् प्रति परदोषसूचनमित्यर्थः । **उपस्थमिति** ।। 'उपस्थमुदरं बाहू वाक्चतुर्थी भवेद् द्विज' इत्युक्तेरिति भावः । अत्रोपस्थगुप्तिर्नाम परनार्या अधर्षणं स्वभार्याया अपि अनृतावनाह्वानम्, उदरगुप्तिर्नाम युक्ताहारत्वम् । बाहुगुप्तिर्नाम द्यूतस्तेयपरताडनाभावः । मितवाक्त्वमाक्रोशोक्तिवृथावादजनवादाभावश्च वाग्गुप्तिः । सत्योक्ते-रपैशुनस्य च पृथगुक्तत्वात् तदग्रहः । एतच्च सर्वं मोक्षधर्मे गोकपिलीयोपाख्याने स्पष्टम् ।

ननु गच्छामि द्रष्टुं प्रकृतिं तवाद्यामिति भगवद्दर्शनं प्रतिज्ञाय कस्मादिति तद्विरुद्धं कथं पृच्छतीत्यत आक्षेपार्थं कस्मान्न पश्येयमित्युक्तमिति भावेन तत्तात्पर्यमाह– **कारण-सामग्र्यामिति** ।।

**।। इति उमर्जीकृष्णाचार्यविरचितः श्रीप्रमेयदीपिकाभावप्रकाशे नवमोऽध्यायः ।।**

## मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
## स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।। ३२ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षराण्यस्तु** भक्तेर्महिमा कैमुत्येनोच्यते– **मां हीति** ।। हे पार्थ मां व्यपाश्रित्य संसेव्य ये पापादियोनयः अस्वाभाविकाः स्त्रियो वैश्याः तथा शूद्राः ब्राह्मणाः राजर्षयश्च भक्ताः स्यु भवेयुः, तेऽपि परां गतिं यान्ति ।। ३२ ।।

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।। ३३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षराण्यस्तु** किं पुनः पुण्याः स्वाभाविका एते स्त्री-वैश्यादयः । अत्र 'पापयोनयः स्त्रियः' इतिवत् 'पुमांसः' इत्यनुक्तिः पापादिकारितपुंसामभावादिति न्यायदीपिका । यतो भक्तेरेवंविधो महामहिमा अतः अनित्यं नश्वरमसुखं दुःखासम्भिन्न-सुखरहितम् इमं दैवोपनतं भक्त्यादिसाधनानुकूलं वा लोकं देहं प्राप्य मां भजस्व मयि भक्तिमापादय ।। ३३ ।।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।। ३४ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगोनाम नवमोऽध्यायः ।। ९ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षराण्यस्तु** भजने प्रकारः, सप्रकारकभजनस्य फलं चोच्यते– **मन्मना इति** ।। मयि मनो यस्यासौ मन्मनाः भव मद्याजी मद्यजनशीलः । मन्मनस्त्वादिप्रकारेण मत्परायणः मदेकशरणः आत्मानं मनो मयि युक्त्वा समाधाय भजस्व । सति चैवं मामेव एष्यसि गमिष्यसि । अतो महापुरुषार्थसाधनं मद्भजनम् अवश्यमनुष्ठेयमिति ।। ३४ ।।

स्वतन्त्रः कर्ताऽयं लघुरहं कर्मसु परं प्रतिच्छायारूपं किमपि च करोमि स्वविहितम् ।
इति प्राज्ञैर्ज्ञात्वा सकलसुकृतानि प्रतिदिनं हरावेव न्यस्यन् प्रथित इह कर्मज्ञ इति सः ।।

।। इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां नवमोऽध्यायः ।।

## ।। अथ श्रीमद्भगवद्गीतायां दशमोऽध्यायः ।।

## भाष्यम्

**उपासनार्थं विभूतीर्विशेषकारणत्वं च केषाञ्चिदनेनाध्यायेनाह ।।**

भावप्रदीपिका (प.टी.)–**एतदध्यायार्थं दर्शयति– उपासनार्थमिति ।।** अन्यान्तर्गतं वहिर्गतं चेति द्विविधं विभूतिरूपम् । तत्र विष्ण्वादीनि वाह्यरूपाणि । अश्वत्थादीन्यन्तर्गतानि । तेषां स्वसन्निधानेनाश्वत्थादीनां स्वजातितो विशेषकारणत्वं चोच्यत इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– प्रकृतसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति– **उपासनार्थमिति ।।** षष्ठे ध्यानमुक्तम् । तत् नवमान्ते 'मन्मना भव' इति स्मारितम् । तच्च ध्येयसापेक्षम् । विशिष्टाधिकारिणां च भगवद्विभूतय उपास्याः । अतस्ताश्च आहानेन दशमाध्यायेन । तत्राऽदौ केषाञ्चित् बुद्ध्यादीनां महर्ष्यादीनां च विशेषकारणत्वमपि भगवत आहेत्यर्थः । विभूतिशब्दार्थः तात्पर्यनिर्णयेऽभिहितः । तदुक्तेर्भूयस्त्वात् प्रथममुपादानम् । अत एवैकवाक्यता ।। ननु विभूतयो 'रसोऽहम्' इत्यादिनोक्ता एव । सत्यम् । अत एव 'विस्तरेणाऽत्मनः' इति वक्ष्यति । विशेषकारणत्वं नाम सामर्थ्यातिशयोपेततया निर्माणम् ।।

भावबोधः (र.टि.)– ।। **विशेषकारणत्वमपीति** ।। तस्यापि ध्येयविशेषत्वादिति भावः । **तात्पर्यनिर्णय इति** ।। 'विशिष्टभवनं विभूतिः' इत्यादिनेत्यर्थः । ननु 'बुद्धिर्ज्ञानम्' इति 'आदित्यानामहं विष्णुः' इति गीताक्रमेणैव केषाञ्चिद्विशेषकारणत्वं विभूतीरनेनाध्यायेनाहेति वक्तव्यम् । तत्कुतो व्यत्यासः । अध्यायैक्यं च किं निबन्धनमित्यत आह– **तदुक्तेरिति** ।। विभूतिरूपोक्तेरित्यर्थः । **अत एवेति** ।। प्राचुर्येण प्रतिपाद्यस्यैवाध्यायैकवाक्यतायां प्रयोजकत्वादित्यर्थः । ननु कार्यमात्रं प्रति विष्णोर्विशेषकारणत्वात् किं विशिष्योच्यते, केषाञ्चिदेवेत्यत आह– **सामर्थ्यातिशयोपेततया निर्माणमिति** ।। कार्यान्तरापेक्षया बुद्ध्यादीनां सजातीयापेक्षया महर्ष्यादीनामित्यर्थः ।। १ ।।

**भावदीपः (रा.टि.)– ।। विशिष्टाधिकारिणामिति ।।** उत्तमाधिकारिणामित्यर्थः ।। **विभूतय इति ।।** विशिष्टवस्तुषु विशिष्टताप्रदर्शनाय विशिष्टत्वेन विविधत्वेन वा भक्तिज्ञानयोर्विशिष्टत्वेन विविधत्वेन वा प्रादुर्भूतरूपविशेषा इत्यर्थः ।। **विशेषकारणत्वमपीति ।।** तस्याप्यधिकारिविशेषध्येयत्वादत्रोक्तिरिति भावः ।। **तात्पर्यनिर्णय इति ।।** 'विशिष्टभवनं विभूतिः महत्वं विविधभवनं वा' इति गीतातात्पर्यनिर्णयेऽभिहित इत्यर्थः । **अत एवेति ।। भूयस्त्वादेव ।।** दशमेऽस्यैवार्थस्य प्रतिपादनात् 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेनैकाध्यायत्वमित्यर्थः ।। **उक्ता एवेति ।।** 'सप्तमे' इति योज्यम् ।।

**भावरत्नकोशः (सु.टि.)–** 'उपासनार्थम्' इति भाष्यानुसारेणाह– **प्रकृतेति ।।** पूर्वाध्यायप्रकृतार्थसङ्गतत्वेनेत्यर्थः । तमेवार्थं दर्शयति– **षष्ठ इति ।।** साङ्गं ध्यानमेव षष्ठाध्याये उक्तमित्यर्थः । अव्यवहिताध्यायसङ्गत्यर्थमाह– **नवमान्त इति ।। तच्च** ध्यानम् । ननु 'सर्वभूतस्थमात्मानम्' इति तत्रैव ध्येयस्याप्युक्तत्वादत्र तदुक्तौ पुनरुक्तिः स्यात् इत्यत आह– **विशिष्टाधिकारिणां चेति ।।** उत्तमाधिकारिणामित्यर्थः । उक्तमेव ध्येयं साधारणानाम् । अत्र तु विशिष्टाधिकारिणां विभूतिरूपाख्यं तदुच्यत इति न पुनरुक्तिरिति भावः । **बुद्ध्यादीनाम्** 'बुद्धिर्ज्ञानमसंमोहः' इति वक्ष्यमाणानाम् । **'महर्ष्यादीनाम्'** इत्यत्रादिपदेन चतुर्णां मनूनां ग्रहणम् । 'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम्' इति तात्पर्यनिर्णयमनुरुध्य, भावप्रदीपिकायाम् 'द्विविधानि विभूतिरूपाणि, अन्तर्गतानि बाह्यानि' इति । तत्र विष्ण्वादीनि बाह्यरूपाणि । अश्वत्थादीन्यन्तर्गतानि । तानि च स्वसन्निधानेनाश्वत्थादीनां स्वजातितो विशेषे कारणत्वं चोच्यते' इत्यर्थ इति व्याख्यातम् ।

नन्वणिमाद्यैश्वर्यस्यानुक्तत्वात् कथं 'विभूतीराहेति' इत्युच्यते इत्यत आह– **विभूतिशब्दार्थ इति ।।** नात्राणिमाद्यैश्वर्याणि विभूतिशब्दार्थः, येनोक्तदोषः । किं नाम, विशिष्टभवनं विभूतिः ।

'येषां तु विष्णुरूपाणां सन्निधेरन्यवस्तुषु ।
विशिष्टत्वं स्वजातेः स्याद् विभूत्याख्यानि तानि तु ।।'

इति विभूतितत्त्वे इति स्ववचनेनोक्तः, प्रमाणेन विवृतश्चोत्तरप्रस्थाने स एव ग्राह्य इत्यर्थः । **तदुक्तेः** विभूत्युक्तेः । तेन 'बुद्ध्यादिविशेषकारणत्वस्यादौ गीतत्वात् तदनुसारेण 'विशेषकारणत्वम्, विभूतीश्चाह' इति भाषणीये कथं 'विभूतीः' इति भाषितम्' इति चोद्यं निरस्तम् ।

श्लोकः १

विभूत्युक्तेर्भूयस्त्वेन प्राधान्यात् प्रथमग्रहणोपपत्तेरिति । **अत एव** भूयस्त्वेन प्राधान्यादेव **एकवाक्यता** दशमाध्यायस्य । प्रधानार्थैकत्वनिबन्धनत्वाद् एकवाक्यताया इति भावः । **उक्ता एवेति** ।।

'सोऽप्सु स्थित्वा रसयति रसनामा ततः स्मृतः ।
सूर्यचन्द्रादिषु स्थित्वा प्रभानामा प्रभासनात् ।।'

इत्यादिना बाह्यान्तर्गतभगवद्रूपाणां तात्पर्यनिर्णये वर्णनादिति भावः । तेन भाष्ये तदनुक्तिर्न विरुध्यत इति बोध्यम् । **विस्तरेणेति** ।। 'विस्तरेणात्मनो योगं विभूतिं च जनार्दन । भूयः कथय' इति 'विस्तरेण' इति वक्ष्यति गीतायामित्यर्थः । कार्यमात्रे स्वतन्त्रतया विष्णोर्विशेष-कारणत्वात् किं विशिष्याभिधीयते 'केषाञ्चित्' इति ? इत्यत आह– **विशेषकारणत्वं नामेति** ।। भगवतः कार्यमात्रे मुख्यकारणत्वेऽपि यत्र बुद्ध्यादिकार्ये सामर्थ्यातिशयोपेततया निर्माणं तदेव विशेषकारणत्वमिहाभिमतमिति भावः ।।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
दशमाध्यायटीकायाः क्रियते भावदीपिका ।।

ननु कोऽयं विभूतिशब्दार्थः इत्यत आह– **विभूतिशब्दार्थस्तात्पर्यनिर्णय इति** ।। 'विशिष्टभवनं विभूतिः इत्यादिना' इत्यर्थः । ननु गीतायाम् 'बुद्धिर्ज्ञानम्' इत्यादिना बुद्ध्यादि-विशेषकारणत्वस्यैवादौ अभिधानात्, तदनन्तरं विभूतेरभिधानात्, तदनुसारेण 'केषाञ्चिद्विशेष-कारणत्वं विभूतीश्च' इति वक्तव्यम् ? इति चेत्, तत्राह– **तदुक्तेरिति** ।। विभूत्युक्तेरित्यर्थः । ननु विभूतिबुद्ध्यादिविशेष कारणत्वरूपार्थद्वयप्रतिपादकत्वेन एकवाक्यत्वायोगः इत्यत आह– **अत एवेति** ।। प्राचुर्येण विभूतिप्रतिपादकत्वादेवेत्यर्थः । योऽर्थो यत्र प्राचुर्येण प्रतिपाद्यते सोऽध्यायादिः तदर्थ इति भावः । **सत्यमिति** ।। तथा च तस्यैवायं प्रपञ्च इति भावः । तत्रोपष्टम्भकमाह– **अत एवेति** ।। ननु भगवतः कार्यमात्रं प्रति विशेषत एव कारणत्वात्, 'केषाञ्चित्' इति किं विशिष्याभिधीयते इत्यत आह– **सामर्थ्येति** ।। कार्यान्तरापेक्षया बुद्ध्यादीनाम्, सजातीयापेक्षया महर्ष्यादीनामित्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** ननु ध्यानापेक्षितध्येयस्याऽपि सप्तमादावुक्तत्वाद्विभूतिकथनं किमर्थमित्यत आह– **विशिष्टाधिकारिणामिति** ।। उत्तमाधिकारिणामित्यर्थः । **बुद्ध्यादीनामिति** ।। बुद्ध्यादीन् प्रतीत्यर्थः । एवमग्रेऽपि । नन्वत्राध्यायेऽणिमाद्यैश्वर्यस्यानुक्तत्वात् कथं विभूतीराहेति प्रतिपाद्यमुच्यत इत्यत आह– **विभूतिशब्दार्थ इति** ।। यद्यपि विशिष्टभवनं विभूतिर्महत्त्वं विविधभवनं वेत्यनेन तात्पर्यनिर्णये महत्त्वमपि विभूतिरित्युक्तम् । ततश्च विशेषकारणत्वस्यापि विभूतिशब्देनैव लाभात् पृथगुक्तिरयुक्ता । तथाऽपि–

> 'येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु ।
> विशिष्टत्वं स्वजातेः स्याद्विभूत्याख्यानि तानि तु ।।'

इति तात्पर्यनिर्णयोक्तप्रमाणानुसारेण नानारूपाण्येव विभूतिशब्दार्थतयाऽत्र विवक्षितानि । विशेषकारणत्वस्य पृथगुपादानात् । न चैवमेतानि विभूतिमन्ति इति विशेषकारणत्वे विभूतिशब्दप्रयोगविरोधः । विशिष्टभवनं विभूतिरिति योगेन तदुपपत्तेः । ननु गीतापाठक्रमेण विशेषकारणत्वं विभूतीश्चाहेति वक्तव्यं कुतोऽयं व्यत्यास इत्यत आह– **तदुक्तेरिति** ।। विभूत्युक्तेरित्यर्थः । नन्वेवं प्रतिपाद्ययोः द्वित्वादध्यायैकवाक्यता कथमित्यत आह– **अत एवेति** ।। प्राचुर्येण प्रतिपाद्यस्यैकत्वादेवेत्यर्थः । तस्यैवाध्यायैकवाक्यताप्रयोजकत्वादिति भावः । **उक्ता एवेति** ।। इदं च 'सोऽप्सु स्थित्वा रसयति रसनामा ततः स्मृतः' इत्यादितात्पर्यनिर्णयोक्तयोजनानुसारेणोक्तम् । तेन पूर्वं रसोहमित्यादेरर्थान्तरस्योक्तत्वात् कथमेतदिति व्युदस्तम् ।।

ननु कार्यमात्रं प्रति विष्णोर्विशेषकारणत्वात् केषाञ्चिदेवेति किं विशिष्योच्यत इत्यत आह– **विशेषकारणत्वं नामेति** ।। सामर्थ्यातिशयश्च बुद्ध्यादीनां कार्यान्तरापेक्षया महर्ष्यादीनां च सजातीयापेक्षयेति बोध्यम् ।

## श्रीभगवानुवाच–

> **भूय एव महाबाहो शृणु मे परमं वचः ।**
> **यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ।। १ ।।**

श्लोकः १

## भाष्यम्

**प्रीयमाणाय श्रुत्वा सन्तोषं प्राप्नुवते ।। १ ।।**

भावप्रदीपिका (प.टी.)– अपृष्टे किमिति भूय एव वक्ष्यामि इति वक्ष्यति ? इत्यत आह– **प्रीयमाणायेति ।। १ ।।**

**प्रमेयदीपिका (ज.टी.)– प्राक् 'शोकसंविग्नमानसः' इत्युक्तम् । तद्विरुद्धं कथं 'प्रीयमाणाय' इत्युच्यते? इत्यतो व्याचष्टे– प्रीयमाणायेति ।। पूर्वं बन्धुस्नेहाच्छोक उक्तः । इदानीं भगवद्वचनश्रवणनिमित्ता सन्तोषप्राप्तिः श्रोतृत्वसम्पत्प्रतिपादनायोच्यत इति न विरोध इति भावः ।। १ ।।**

**भावरत्नकोशः (सु.टि.)–** सन्तोषप्राप्तिरप्यत्र किमिति वक्तव्या ? इत्यत उक्तम्– **श्रोतृत्वसम्पदिति ।। १ ।।**

**गीताक्षरार्थस्तु** षष्ठे ध्यानमुक्तम्, नवमान्ते 'मन्मना भव' इति स्मारितम् । तच्च ध्येयसापेक्षम् । विशिष्टाधिकारिणां च भगवद्विभूतयो ध्यातव्याः । अतो ध्यानशब्दितोपसनाकर्मभूतानि भगवतो विभूतिरूपाण्यनेन दशमाध्यायेन निरूप्यन्ते । तत्रादौ केषाश्चिद् बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपं विशेषकारणत्वमपि भगवत उच्यते । विशिष्टाधिकारिध्येयरूपाणाम् अत्र कथनाद् 'भोक्तारं यज्ञतपसाम्' इत्यादिना पञ्चमान्तादौ ध्येयमप्युक्तमिति शङ्काऽनवकाशः । ननु विभूतयोऽपि 'रसोऽहम्' इत्यादिना 'अहं क्रतुः' इत्यादिना चाभिहिता एव । सत्यम् । उक्तानामेव प्रपञ्चनमिह क्रियते । अत एव वक्ष्यति 'विस्तरेणात्मनो योगं विभूतिं च' इति । अत एव चैतदध्यायं विभूतिविस्तरयोगं व्यपदिशन्ति । विभूत्युक्तेरेव भूयस्त्वादवान्तरार्थोक्तावपि अध्यायस्यैकवाक्यता ।।

तत्र अर्जुनस्य श्रोतृत्वसम्पत्तिप्रतिपादकविशेषणोक्तिपूर्वकं वक्तव्यं प्रतिज्ञायते– **भूय इति ।।** प्रीयमाणाय मद्वचनं श्रुत्वा सन्तोषं प्राप्नुवते । पूर्वं बन्धुस्नेहात् शोक उक्तः । इदानीं तु भगवद्वचनश्रवणनिमित्तसन्तोषप्राप्तिं श्रोतृत्वसम्पत्तिं प्रतिपादयितुम् इदं विशेषणमित्याकरे स्फुटम् । भूय एव पुनरपि हितकाम्यया हितेच्छया यद् वक्ष्यामि तत् परमम् उत्कृष्टं वचः शृणु । मन्महिमप्रतिपादकं वचनं श्रुत्वा तत्र निष्ठां कुरु ।। १ ।।

भावदीपिका (श्री.टि.)– सन्तोषप्राप्तिः किमर्थं वक्तव्या ? इत्यत आह– **श्रोतृत्वसम्पदिति** ।। १ ।।

भावप्रकाशः (कृ.टि.)– सन्तोषप्राप्तिरपि किमर्थं वाच्येत्यत आह– **श्रोतृत्वसम्पदिति** ।। श्रोत्रानुकूल्येत्यर्थः । यः श्रोता गुरूक्तं श्रुत्वा हृष्यति स गुरुप्रीतिविषयो भवतीति प्रसिद्धम् । तथा च भगवद्वचनश्रवणेन प्रीयमाणत्वोक्त्याऽर्थाद्भगवत्प्रीतिविषयत्वरूपश्रोत्रानुकूल्यमुक्तमिति भावः ।। १ ।।

**न मे विदुस्सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ।। २ ।।**

## भाष्यम्

**प्रभवं प्रभावम् । मदीयां जगदुत्पत्तिं वा । तद्वशत्वात् तस्य इत्युच्यते । यद्यस्ति तर्हि देवादयोऽपि जानन्ति सर्वज्ञत्वात् । अतो नास्तीति भावः । अहमादिर्हि इति तु उत्पत्तिरपि यस्य वशा कुतस्तस्य जनिरिति ज्ञापनार्थम् । 'अहं सर्वस्य जगतः प्रभवः प्रलयः' इति चोक्तम् ।।**

भावप्रदीपिका (प.टी.)– न मे विदुः सुरगणाः प्रभवम् इति प्रभवशब्दं त्रेधा व्याचष्टे– **प्रभवमिति** ।। मदीयामुत्पत्तिं जगदुत्पत्त्यर्थम् । मे इत्यस्य कः सम्बन्धः ? इत्यत आह– **तद्वशत्वादिति** ।। नन्वीश्वरोत्पत्तेरज्ञाततत्वेनासत्त्वम्, तर्हि तत्प्रभावजगदुत्पत्त्योरसत्त्वं स्यादित्यत आह– **अहं सर्वस्येति** ।। जगत्सृष्ट्यादिप्रभावस्य जगदुत्पत्तेश्च प्रामाणिकत्वान्नासत्त्वम्, किन्तु साकल्येनाज्ञाततत्वमेवेत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– प्रभवशब्दः केनचित् सामर्थ्यमात्रवाचित्वेन व्याख्यातः । अन्येन तु भगवदुत्पत्तिवाचित्वेन । तदुभयमङ्गीकुर्वन्नधिकमपि विवक्षुराह– **प्रभवमिति** ।। मदीयाम् उत्पत्तिमिति सम्बन्धः । जगदुत्पत्तिः 'मे' इति कथं विशेष्यते? इत्यत आह– **तदिति** ।। 'जगदुत्पत्तिः' इति वर्तते । एवं तर्हि भगवत्प्रभाववज्जगदुत्पत्तिवच्च भगवदुत्पत्तिरस्त्येव । किन्तु दुर्ज्ञानैव इत्यापन्नमित्यत आह– **यदीति** ।। भगवदुत्पत्तिरिति शेषः । सर्वज्ञत्वात् 'सामान्यतः' इति शेषः । ततः परं 'नच

श्लोकः २

**सामान्यतोऽपि जानन्ति' इत्यध्याहारः । अतः सर्वथाऽनुपलम्भात् । प्रभावादिकं तु विशेषत एव न जानन्ति न तु सामान्यतोऽपीति भावः ।।**

**ननु भगवदुत्पत्तेरभावश्चेदत्राभिप्रेतस्तदा 'अहमादिर्हि' इति हेतुवचनं न सङ्गच्छते । अत्र हि देवादयो अर्वाक्तना मया सृष्टाः कथं पूर्वतनीमुत्पत्तिं जानीयुरिति प्रतीयत** इत्यत आह– **अहमिति ।। अपिशब्दोऽध्याहृतेन 'सर्वस्य' इत्यनेन सम्बद्ध्यते । कुतः? जनकात् । नन्वत्र सर्वस्याप्युत्पत्तिः भगवदधीनेति नोच्यते । किन्तु देवादीनामेव । तत्कथमनेन कारणाभावः सिद्ध्यति? इति चेन्न । देवादिशब्दस्योपलक्षणार्थत्वात् । तत्कुतः? इत्यत आह– अहमिति ।।**

**भाववोधः (र.टि.)– ।। म इति कथं विशेष्यत इति ।।** यदि भगवत्सम्बन्धिप्रभवोत्पत्त्योरिव जगदुत्पत्तेरपि प्रभवशब्दार्थत्वं, कथं तर्हि जगत्सम्बन्धिन्याः गीतायां म इति स्वसम्बन्धित्ववचनमित्यर्थः ।

**भावदीपः (रा.टि.)– ।। अधिकमपीति ।।** जगदुत्पत्तिरूपमित्यर्थः ।। 'मे' 'प्रभवम्' इति गीतापदयोरर्थतोऽनुवादः 'जगदुत्पत्तिं मदीयाम्' इति ।।

**भावरत्नकोशः (सु.टि.)– ।। भगवदुत्पत्तीति ।।** 'प्रकर्षेण भवः उत्पत्तिः प्रभवः' इति 'भवः संसारजन्मनोः' इत्यभिधानानुरोधेन भगवदुत्पत्तिवाचित्वेन व्याख्यात इत्यर्थः । **अधिकमिति ।।** जगदुत्पत्तिरूपम् अधिकमप्यर्थमित्यर्थः । प्रभवशब्दस्य प्रभावार्थकत्वं 'प्रभवं प्रभावं प्रभुशक्त्यतिशयम्' इति परभाष्येऽप्युक्तम् । 'मदीयाम्' इत्यस्य विशेष्याकाङ्क्षायाम् 'जगदुत्पत्तिम्' इति समासान्तर्गतम् उत्पत्तिपदं योजनीयमिति भावेनाह– **उत्पत्तिमिति सम्बन्ध इति ।। विशेष्यत इति ।।** गीतायाम् । 'जगदुत्पत्तिम्' इति पदं विभक्तिविपरिणामेन इह 'उच्यते' इत्यत्र कर्मसमर्पकतया संयोज्यमिति भावेनाह– **जगदुत्पत्तिरिति वर्तत इति ।।** प्रथमान्ततयाऽनुवर्तत इत्यर्थः । अनेन भाष्ये तदीयत्वात् तच्छब्दोपात्तमत्स्वामिकत्वात् तस्य 'मे' इत्युच्यते जगदुत्पत्तिः इत्यक्षरार्थो ज्ञातव्य इत्युक्तं भवति । **एवं तर्हि** यदि प्रभवशब्दस्य अर्थत्रयमभिसंहितम् । 'एवम्' इत्यतः पूर्वम् 'यदि' इति शेष इत्यप्याहुः । **इत्यापन्नमिति ।।** समानन्यायत्वादिति भावः । 'अस्ति' इत्याख्यातोपात्तकर्तृसमर्पणायोक्तम्– **भगवदुत्पत्तिरिति शेष इति ।।** यदि सद्भावमात्रेण देवादिज्ञानगोचरत्वापादनं तर्हि प्रभावादेः 'गुणाः श्रुताः

सुविरुद्धाश्च देवे सन्त्यश्रुता अपि' इत्यादिशास्त्रावेदितगुणविशेषस्य च ज्ञानं मयि स्यात् । तच्च न सम्मतम् इत्यत आह– **सामान्यत इति शेष इति** ।। भाष्ये 'जानन्ति' इत्यस्य आपाद्यतास्फोरणाय 'जानीयुः' इत्यर्थो ज्ञेयः । आपाद्यस्य विपर्यये पर्यवसानं तर्काङ्गमिति तदध्याहरति– **ततः परमिति** ।। 'सर्वज्ञत्वात्' इत्यतः परमित्यर्थः । 'अतः' इति भाष्यानुवादः, 'सर्वथाऽनुपलम्भात्' इति व्याख्या । तर्हि प्रभावादीनामप्यनुपलम्भात् नास्तित्वं स्यादिति कृतचोद्यं भाष्यभावोक्त्या परिहरति– **प्रभावादिकं त्विति** ।। तथाच न तत्समानन्यायतेति हृदयम् । **अत्र** 'अहमादिः' इति वाक्ये । कुतः इत्यनुवादः 'जनकात्' इति व्याख्या ।

**अनेन** देवानाम् ऋषीणां च कारणत्वमात्रेण । **देवादिशब्दस्य** देवशब्दस्य महर्षिशब्दस्य च सर्वोपलक्षणत्वादित्यर्थः । 'देवानां महर्षीणां चाहमादिः, किमु वक्तव्यम् अन्येषामादिरितीति कैमुत्यद्योतनाय सर्वोपलक्षकपदोपादानम्' इति न्यायदीपिकात अवसेयम् । वक्ष्यति च 'न तत्प्रभावम् ऋषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः' इति कैमुत्यं भाष्ये ।

प्रतिज्ञातो महिमोच्यते– **न मे विदुरिति** ।। मे मम प्रभवं प्रभावम्, सामर्थ्यशब्दितं महिमानम् । यद्वा प्रकृष्टो भवः प्रभवः 'भवः संसारजन्मनोः' इत्यभिधानात् जन्म तत् मे मदीयं 'जगतः' इति शेषः । मदधीनां जगदुत्पत्तिं सुरगणा न विदुः न जानन्ति । महर्षयः मरीच्याद्याश्च न विदुः । 'ज्योतिषि भावाच्च' इत्यादिशास्त्रावेदितसर्वज्ञभावा अपि देवादयः सामान्यतो जानन्तोऽपि विशेषतो न जानन्ति । देवानां महर्षीणां चाज्ञाने अन्येषां तत्सुतरामिति द्योतयितुं 'सुरगणाः' 'महर्षयः' इति पदं सर्वोपलक्षकमुपात्तम् । अथवा मे प्रभवं ममोत्पत्तिं देवादयः सामान्यतोऽपि न विदुः । कुतः ? अभावादेव । अभावे हेतुरयमुच्यते– **अहमादिरिति** ।। देवानां महर्षीणां च सर्वशः सर्वेण प्रकारेण आदिः उत्पत्तिः अहम् । यदाहुः 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः' इति । तदधीनत्वात् ताच्छब्द्यम्, मदधीना । अहमादिः कारणमिति वा । देवमहर्ष्यादिरूपस्य सर्वस्यापि जगतः उत्पत्तिर्यदधीना तस्य कुतो जनकादुत्पत्तिः ? यदि च मत्प्रभावाज्जगदुत्पत्तिवच्च ममापि प्रभवः सन् स्यात् तर्हि तं देवादयः सामान्यतो जानीयुः । तेषां सामान्यतः सर्वज्ञत्वात् । अतः सर्वथाऽनुपलम्भात् स नास्तीति निश्चीयत इति भावः ।। २ ।।

श्लोकः २

**भावदीपिका (श्री.टि.)**– ।। **विवक्षुरिति** ।। 'जगदुत्पत्तिं वा' इत्यनेनेत्यर्थः । **मदीयामिति** ।। तथाच 'मे प्रभवं मदीयामुत्पत्तिं न विदुः', तथा 'मे प्रभवं जगदुत्पत्तिं च न विदुः' इत्यर्थो द्रष्टव्यः । **म इतीति** ।। जगत्सम्बन्धिन्या उत्पत्तेः 'मे' इति स्वसम्बन्धित्वं कथमुच्यत इत्यर्थः । भाष्ये 'तस्य' इत्युच्यते 'मे' इत्यनेनेत्यर्थः । **दुर्ज्ञानैवेत्यापन्नमिति** ।। दुर्ज्ञाना इत्येवापन्नम्, न त्वभाव इत्यर्थः । **सर्वथेति** ।। विशेषतः सामान्यतश्चेत्यर्थः । योग्यानुपलब्धेरभावग्राहकत्वादिति भावः । 'प्रभावादिकम्' इत्यादिपदेन भगवदीयजगदुत्पत्ति-ग्रहणम् । **नन्विति** ।। सामान्यतस्तज्ज्ञानस्य सत्त्वादिति भावः । **अध्याहृतेनेति** ।। तथा च 'सर्वस्याप्युत्पत्तिर्यस्य वशा' इति सम्बन्धो द्रष्टव्यः । **अस्य सर्वस्यापीति** ।। देवादि-व्यतिरिक्तप्रपञ्चस्यापीत्यर्थः । **तत्कथमिति** ।। तथा च देवादीनां कारणत्वायोगेऽपि तद्व्यति-रिक्तस्य जगतो भगवज्जनकत्वमस्त्विति भावः ।।

**भावप्रकाशः (कृ.टि.)**– ननु परोक्तार्थयोरेकस्याङ्गीकारो भाष्ये प्रतीयते । नतु द्वितीयस्येत्यत आह– **मदीयामिति** ।। तथा च मदीयामिति सम्बन्धे परोक्तद्वितीयार्थाङ्गीकार-लाभः । मदीयां जगदुत्पत्तिमिति सम्बन्धे त्वधिकोक्तिरपि लभ्यत इति भावः । **म इति कथं विशेष्यत इति** ।। मे प्रभव इति गीतायां मदीयां जगदुत्पत्तिमिति सम्बन्धे त्वधिकार्थोक्तेरय-माक्षेपः । विपर्ययपर्यवसानस्य तर्काङ्गत्वात् तदध्याहरति– **ततः परमिति** ।। प्रभवादावप्येवं तर्कप्रवृत्तौ तदभावोऽपि स्यादित्यतो वैषम्यमाह– **प्रभावादिकमिति** ।।

## भाष्यम्

**उक्तं चैतत् सर्वमन्यत्रापि ।'को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः । अर्वाग् देवा अस्य विसर्जनेनाथा को वेद यत आ बभूव' इति । 'न तत्प्रभावमृषयश्च देवा विदुः कुतोऽन्येऽल्पधृतिप्रमाणाः' इति ऋग्वेदखिलेषु । अन्यस्त्वर्थो 'यो मामजम्' इति वाक्यादेव ज्ञायते ।। २ ।।**

भावप्रदीपिका (प.टी.)– जगदुत्पत्तीश्वरप्रभावयोः साकल्येनाज्ञातत्वं, भगव-दुत्पत्तिस्तु नास्त्येवेत्यत्र प्रमाणमाह– **उक्तं चेति** ।। आजाता प्रजा कुतः ? प्रजाता कुतश्च ? तस्या विविधसृष्टिरिति स कः सम्यग्वेद ? को वा लोकेऽवोचत् ? यतो देवाः परमात्मसर्जनत जाता अर्वाग्भूताः । अथ कथञ्चिचतुर्मुखो वेद । स कः सम्यग्ज्ञानादिना बभूवेत्यर्थः ।। २ ।।

**प्रमेयदीपिका** (ज.टी.)– उक्तमर्थत्रयमुपपादयति– **उक्तं चेति** ।। इयं विसृष्टिः विविधा जगत्सृष्टिः कुतः कारणात् आजाता इति कः पुरुषः कुतः प्रमाणात् अद्धा वेद; कश्च इह लोके प्रावोचत् ? न कोऽपि कुतश्चित् । यतो देवाः अस्य ईश्वरस्य विसर्जनेन निष्पन्ना अर्वाचीनाः । सर्वथाऽप्यज्ञाने तदभावः स्यादित्यत उक्तम् अथ अन्यत् यतः यस्मात् इयम् आ बभूव स कः प्रजापतिः भगवान् अद्धा वेद इत्यर्थः ।। 'न तत्प्रभावम्' इत्यत्र 'अद्धा' इति द्रष्टव्यम् । अत एव व्युत्क्रमः । प्रमाणं प्रमा । अन्यस्त्वर्थः भगवतः जन्माभावः ।। २ ।।

**भावबोधः** (र.टि. ) ।। **अत एव व्युत्क्रम इति** ।। प्रभवं मदीयां जगदुत्पत्तिमिति प्रभवशब्दव्याख्यानरूपभाष्यक्रमानुसोरण 'न तत्प्रभावम्' 'को अद्धा' इति प्रमाणयोः क्रमेणोदाहरणे कर्तव्ये प्रथमं 'को अद्धा' इति पश्चात् न तत्प्रभावम्' इति प्रमाणोदाहरण-व्युत्क्रमः । अत एव प्रथमोदाहृतात् 'को अद्धा' इत्यतोऽनन्तरमुदाहृतेन तत्प्रभावम् इत्यत्रा-द्धेत्यस्यानुवृत्तिज्ञापनार्थमेवेत्यर्थः । 'अल्पधृतिप्रमाणा' इत्यत्र प्रमाणशब्दस्य इयत्तापरत्व-निरासायाह– **प्रमाणं प्रमेति** ।। २ ।।

**भावदीपः** (रा.टि.)– ।। **अर्थत्रयमिति** ।। 'मे प्रभवम्' इत्यस्य भगवतः सामर्थ्यं भगवत उत्पत्तिं भगवदधीनजगदुत्पत्तिमिति प्रोक्तमर्थत्रयमित्यर्थः । अडभावच्छान्दस इति भावेनाऽह– **प्रावोचदिति** ।। कः इत्यनुवादः, प्रजापतिरिति व्याख्या ।। **इति द्रष्टव्यमिति** ।। यथायोग्यं ज्ञानस्य सत्वेन निषेधायोगात् 'अद्धा सम्यङ् न विदुः' इत्यर्थलाभाय 'अद्धा' इत्यनुषञ्जनीयम् इत्यर्थः । **अत एवेति** ।। 'अद्धा' इत्येवमनुषञ्जनीयत्वादेवेत्यर्थः । अन्यथा हि 'प्रभावं मदीयां जगदुत्पत्तिमिति वा' इति भाष्यानुरोधात् 'न तत् प्रभावम्' इत्येतत् पूर्वमुदाहृत्य 'को अद्धा' इति श्रुतिः पश्चादुदाहार्येति भावः ।। यद्वा, देवापेक्षया ऋषीणा-मल्पवेदित्वेन तथाऽऽत्मज्ञानाभावात्, गीतायां 'सुरगणाः' इति देवानां प्रागुक्तत्वेऽपि 'को अद्धा' इति श्रुतौ ऋषीणां प्रागुक्तिः गीतायां तु व्युत्क्रम इत्यर्थः ।। यद्वा 'न तत्प्रभावम्' इति श्रुत्यनन्तरम् 'अन्यस्त्वर्थः' इति वाक्यमुक्त्वा पश्चात् 'को अद्धा' 'क इत्था' इति श्रुतिर्वाच्या । भाष्यव्याख्यानुसारात् । तथाऽपि प्रभाववज्ज्ञानाभावः। भगवज्जन्मनि सर्वथैव ज्ञानाभाव इति द्योतनाय, अद्धापदस्यानुषञ्जनीयत्वादेव 'न तत्' इत्येतत् 'को अद्धा' इत्यनन्तरमुक्त्वा पश्चात् 'अन्यस्तु' इत्येतदुक्तमित्यर्थः ।। २ ।।

श्लोकः २

**भावरत्नकोशः (सु.टि.)**– ।। **अर्थत्रयमिति** ।। मम प्रभवं प्रभावम्, मदीयामुत्पत्तिम्, भगवदधीनजगदुत्पत्तिमिति भाषितमर्थत्रयमित्यर्थः । **आ जाता** आ समन्तान्निर्वृत्ता । 'कः' इत्यत्र विशेष्यपूरणं 'पुरुषः' इति । 'कुतः' इत्यत्र विशेष्यम्– **प्रमाणादिति** ।। **अद्धा वेद** 'अद्धा इति स्फुटावधारणयोः' इति वैयाकरणोक्तेः स्फुटं जानाति । 'बहुलं छन्दस्यमाङ्-योगेऽपि' इत्यडभाव इति भावेनोक्तम्– **प्रावोचदिति** ।। 'विसर्जनेन' इत्यनन्तरं शेषं दर्शयति– **निष्पन्ना इति** ।। 'अर्वाग्' इत्यस्यार्थः– **अर्वाचीना इति** ।। 'अथा को वेद' इति पादमवतारयति– **सर्वथेति** ।। **तदभावः** विविधजगत्सृष्ट्यभावः ।। 'अङ्गीकारेऽधिकारे च समुच्चयविकल्पयोः । मतान्तरेऽप्यथो वा च' इत्यमरशेषे मतान्तरे अथशब्दोऽस्तीत्यभिधाना-दर्थान्तरेऽयमथशब्द इति भावेन तदर्थमाह– **अन्यदिति** ।। इयं विविधा जगत्सृष्टिः । 'कः' इत्यस्यार्थः– **प्रजापतिरिति** ।। तत्तात्पर्यम्– **भगवानिति** ।।

'अद्धा' इत्यस्यानुवृत्तिमभिप्रेत्योक्तम्– **अद्धा वेदेतीति** ।। देवादीनां यथायोग्यं ज्ञानसत्त्वेन निषेधायोगात् 'सम्यङ् न विदुः' इत्यर्थलाभाय अद्धापदम् अनुवर्त्य व्याख्येयमित्यर्थः । ननु 'प्रभवं प्रभावं मदीयामुत्पत्तिं जगदुत्पत्तिं वा' इति भाष्यक्रमेणैव प्रमाणोदाहरणं युक्तम् । आदौ जगदुत्पत्तेरविज्ञेयत्वे प्रमाणोक्तिः, ततः प्रभावस्याज्ञेयत्वे तदुक्तिरिति तु व्युत्क्रमः कुतः इत्यत आह– **अत एवेति** ।। 'न तत्प्रभावम्' इति प्रमाणे 'को अद्धा वेद' इत्यत्रत्यस्य 'अद्धा' इत्यस्य योजनीयत्वादेवेत्यर्थः । **व्युत्क्रमः** भाष्योक्तप्रभावाज्ञेयत्वजगदुत्पत्तिदुर्विज्ञानत्व-रूपक्रमापेक्षया जगदुत्पत्तेर्दुर्विज्ञेयत्वे, प्रभावस्याज्ञेयत्वे चेति व्यत्यस्तः क्रम इत्यर्थः । प्रमाण-शब्दस्य करणार्थल्युडन्तत्वे धृतिसाहचर्यास्वारस्यम् इत्यत आह– **प्रमाणं प्रमेति** ।। भावे ल्युडन्तोऽयं शब्द इति भावः । 'अन्यस्त्वर्थः' इत्यनुवादः 'भगवतो जन्माभावः' इति व्याख्यानम् ।। २ ।।

**भावदीपिका (श्री.टि.)**– ।। **उक्तमर्थत्रयमिति** ।। 'प्रभावं मदीयां जगदुत्पत्तिम्, इत्युक्तप्रभावस्य विशेषतोऽज्ञानम्', 'जगदुत्पत्तेश्च विशेषतोऽज्ञानम्', 'भगवतो जन्माभावश्च' इत्यर्थत्रयमित्यर्थः । ननु देवा एव विदुरिति चेत् तत्राह– **यत इति** ।। **अद्धा** विशेषाकारेण । **कुतश्चित्** प्रमाणात् । **विसर्जनेन** सृष्टिक्रियया । **निष्पन्नाः** देहलाभवन्तः, शेषोक्तिरियम् । 'अर्वाचीना' इति 'अर्वाक्' इत्यस्यार्थः । **तदभाव इति** ।। जगत्सृष्टिरूपार्थाभाव एव स्यादित्यर्थः । वस्तुसिद्धेर्ज्ञानाधीनत्वादिति भावः । **इयम्** सृष्टिः । 'अद्धा को वेद' इत्यत्रापि

'अद्धा' इत्येतदनुवर्तत इत्याशयेन 'अद्धा वेद' इत्युक्तम् । तथा च 'को अद्धा वेद' इत्यनेन 'जगदुत्पत्तिं विशेषतो न विदुः' इत्येतदुपपादितम् ।

'न तत्प्रभावम्' इत्यनेन 'प्रभावं न विदुः' इत्येतदुपपाद्यते– **अद्धेतीति** ।। तथा च 'प्रभावं विशेषतो न विदुः' इत्यर्थः सिध्यतीति भावः । **अत एवेति** ।। 'न तत्प्रभावम्' इत्यत्र 'अद्धा' इत्यस्यानुवृत्तिं सूचयितुं पूर्वं विशेषतो जगदुत्पत्त्यज्ञानोपपादनाय 'को अद्धा' इति श्रुतिरुदाहृता । अन्यथा व्याख्यानानुसारेणादौ 'न तत्प्रभावम्' इति प्रभावाज्ञानमुपपाद्य, अन्ते 'इयं विसृष्टिः' इति जगदुत्पत्त्यज्ञानस्योपपादनीयत्वादित्याशयः । प्रमाणशब्दोऽत्र भावे ल्युडन्त इत्यभिप्रेत्य व्याचष्टे– **प्रमाणं प्रमेति** ।। २ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **अर्थत्रयमिति** । यद्यपि प्रभवस्य भगवदुत्पत्तेस्तदधीन-जगदुत्पत्तेश्चाज्ञेयत्वमुपपद्यमानमेकम् । तथाऽपि विषयोपाधिकभेदादेवमुक्तम् । ननु प्रभावं मदीयां जदुत्पत्तिं वेति व्याख्यानक्रमादेव प्रमाणोदाहरणं युक्तम् । आदौ जगदुत्पत्तेरज्ञेयत्वे प्रमाणोक्तिः । ततः प्रभावस्याज्ञेयत्वे इति व्युत्क्रमस्तु कुत इत्यत आह– **अत एवेति** ।। को अद्धेत्यद्धापदस्य न तत्प्रभावमित्यत्र ग्राह्यत्वादेवेत्यर्थः । भगवतो जन्माभावस्तु न यथाश्रुतार्थः । किन्तु योजनालब्ध इत्येत्प्रमाणोदाहरणमिति भावः । प्रमाणपदस्य करणपरत्वे धृतिसाहचर्यविरोध इत्यत आह– **प्रमाणं प्रमेति** ।। २ ।।

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ।। ३ ।।**

## भाष्यम्

**अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अजत्वेन सिद्धेरितरस्य ।।**

भावप्रदीपिका (प.टी.)– अजशब्दात् अनादिशब्दस्यार्थभेदमाह– **अन इति** ।। तर्हि ब्रह्मण आदिराहित्यं नोक्तं स्यादित्यत आह– **अजत्वेनेति** ।। ३ ।।

प्रमेयदीपिका (ज.टी.)– अजशब्दागतार्थतया अनादिशब्दं व्याचष्टे– **अन इति** ।। 'सर्वस्य' इत्युभयशेषः । अन्तर्णीतण्यर्थादनतेः पचाद्यच् । 'न विद्यते आदिः

**कारणमस्येत्यनादिः' इत्यन्ये । तदसत् । आर्थिकपुनरुक्तेरपरिहारादित्याह– अजत्वेनेति ।। इतरस्य कारणराहित्यस्य । अजत्वे हेतुरयमुच्यत इति चेत् । मैवम् । तज्ज्ञापकविभक्त्याद्यभावात् । गत्यन्तराभावे हि गमनिकैषा । चेष्टकत्वं प्रागनुक्तं कथमनूद्यते?इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् ।।**

**भावबोधः (र.टि.)–** ननु हेतुत्वज्ञापकपञ्चमीविभक्तिहिशब्दाद्याभावेऽपि हेत्वर्थगर्भविशेषणत्वेन तद्घटत इत्यत आह– **गत्यन्तराभावे हीति ।। ३ ।।**

**भावदीपः (रा.टि.)– ।। उभयशेष इति ।।** चेष्टयिता' इत्यत्र, 'आदिः' इत्यत्राप्यन्वेतीत्यर्थः ।। ३ ।।

**भावरत्नकोशः (सु.टि.)– ।। उभयशेष इति ।।** 'सर्वस्य चेष्टयिता', 'सर्वस्यादिः' इत्युभयत्र **'सर्वस्य'** इति पदं काकाक्षिन्यायेन योजनीयमित्यर्थः । अनितेः 'नन्दिग्रहिपचादिभ्यो ल्युणिनि अचः' इति कर्तरि अच्प्रत्यये कृते चेष्टाकृत्त्वलाभेऽपि, चेष्टाकारयितृत्वालाभात् 'चेष्टयिता' इति व्याख्यानायोगः इत्यत उक्तम्– **अन्तर्णीतण्यर्थादिति ।। अन्ये** शङ्करश्रीधरप्रभृतयः । **आर्थिकेति ।।** अजत्वोक्तौ अर्थात् कारणराहित्यस्यापि लाभादिति भावः । 'अनादित्वमजत्वे हेतुः' इति शङ्करभाष्यमनुवदति– **अजत्व इति ।। अयम्** अनादिशब्दाभिप्रेतः । **तज्ज्ञापकेति ।।** 'साधनत्वख्यापकविभक्त्यन्तं लिङ्गवचनं हेतुः' इति । परीक्षकलक्षितहेतुज्ञापकविभक्त्यभावादित्यर्थः । आदिशब्देन 'अनादित्वहेतुना' इत्यादिवचनपरिग्रहः । हेत्वर्थगर्भम् अनादिपदं किन्न स्यात् इत्यत आह– **गत्यन्तरेति ।। गमनिका** अवतारिका । **प्रभावे** प्रभवशब्दगीते सामर्थ्ये **सर्वस्य** सर्वचेष्टयितृत्वादेः ।।

एवं देवाद्यज्ञेयमहिमत्वम् उत्पत्तिराहित्यं चोक्त्वा स्वस्याजत्वादिज्ञानिनो मोक्षाख्यमहिमाऽत्रोच्ते– **यो मामिति ।।** अजम् उत्पत्तिहीनम् अनादिम् अन्तर्णीतण्यर्थादनितेः पचाद्यचि, अनः चेष्टयिता चासौ आदिः कारणं च सर्वस्येति अनादिः । बहुलग्रहणाद् विशेषणयोरपि समासः । तच्चेष्टकत्वं प्रागनुक्तं कथमनूद्यत इति चेन्न । प्रभावे सर्वस्यान्तर्भावात् । लोकमहेश्वरं लोकानां महास्वामिनं च । असम्मूढः असम्भ्रान्तः सन् यो वेत्ति जानाति, स मर्त्येषु सर्वपापैः प्रमुच्यते प्रमोक्ष्यते ।। ३ ।।

**भावदीपिका (श्री.टि.)– ।। उभयशेष इति ।।** तथा च 'अनश्चेष्टयिता' इत्यत्रापि

'सर्वस्य' इत्येतत् सम्बध्यत इति भावः । **पचाद्यजिति** ।। तथा च 'अन चेष्टयाम्' इत्यस्माद्धातोः 'नन्दिग्रहिपचादिभ्यो ल्यु णिनि अचः' इति सूत्रेण कर्तरि पचादिगणस्थत्वाद् अचूप्रत्यये, चकारलोपे, 'अनः' इति रूपं द्रष्टव्यम् । **हेतुरिति** ।। उत्पत्त्यभावे कारणराहित्यं हेतुरनादिशब्देनोच्यत इत्यर्थः । **विभक्तीति** ।। हेतुत्वज्ञापकपञ्चमीतृतीयाविभक्तिशब्दादेर-भावादित्यर्थः । गत्यन्तराभावाद् हेत्वर्थगर्भत्वमङ्गीकृत्यैवं व्याक्रियत इतिचेत्, तत्राह– **गत्यन्तरेति** ।। **गमनिका** व्याख्या । 'अनश्चेष्टयिता' इत्युक्तरीत्या गत्यन्तरं त्वस्तीत्याशयः । **अनूद्यत इति** ।। 'अनादिम्' इत्यत्र अनशब्देनेत्यर्थः । **प्रभाव इति** ।। चेष्टकत्वस्यापि प्रभावत्वेन प्रागुक्ततया नानुक्तत्वमित्यर्थः ।। ३ ।।

**भावप्रकाशः (कृ.टि.)**– अनितेः पचाद्यचि कृते चेष्टाकर्तृत्वलाभेऽपि कारयितृत्वा-लाभाच्चेष्टयितेति व्याख्यानायोग इत्यत उक्तम्– **अन्तर्णीतेति** ।। **विभक्त्याद्यभावादिति** ।। आदिपदेन यतस्ततो हीत्यादेः सङ्ग्रहः । ननु हेत्वर्थगर्भविशेषणमेतदिति नोक्तदोष इत्यत आह– **गत्यन्तराभाव इति** ।। ३ ।।

**बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ।। ४ ।।**

## भाष्यम्

**तत् प्रथयति– बुद्धिरित्यादिना ।। कार्याकार्यविनिश्चयो बुद्धिः । ज्ञानं प्रतीतिः ।। 'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिश्चयः' इति ह्यभिधानम् । दमः इन्द्रियनिग्रहः । शमः परमात्मनि निष्ठा । 'शमो मन्निष्ठता बुद्धेः दम इन्द्रियनिग्रहः' इति भागवते ।। ४ ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकद्वयमवतारयति– **तदिति** ।। आदित्वम् । बुद्धिज्ञानशब्दयोरर्थभेदं सप्रमाणकमाह– **कार्येति** ।। दमादिशब्दार्थं सप्रमाणकमाह– **दम इति** ।।

प्रमेयदीपिका (ज.टी.)– तर्हि 'आदिम्' इत्यनेन 'बुद्धिः' इत्यादिकं गतार्थमित्यत आह– **तदिति** ।। सर्वादित्वम् । 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति

श्लोकः ४

गौतमवचनात् । 'बुद्धिर्ज्ञानम्' इति पुनरुक्तिरित्यत आह– **कार्येति** ।। कुत एतत्? इत्यत आह– **ज्ञानमिति** ।। 'ज्ञायते अनेनेति ज्ञानं शास्त्रम्' इत्यसत्। आध्यात्मिकधर्मप्रसङ्गात् । 'दमो बाह्येन्द्रियोपशमः शमोऽन्तःकरणस्य' इति कश्चित् । तदसत् । एकेनैव शब्देन सिद्धत्वात् । किन्तु दमः क्रियासु विनयः । शमो बाह्यान्तःकरणसंयमः' इत्यपरः । तदप्यसदिति भावेनाऽह– **दम इति** ।। कुतः? इत्यत आह– **शम इति** ।। ४ ।।

**भावबोधः (र.टि.)– ।। आध्यात्मिकेति ।।** बुद्ध्यादीनां बहूनामाध्यात्मिकधर्मत्वादिति भावः ।। ४ ।।

**भावदीपः (रा.टि.)–** 'ज्ञानम्' इत्यस्य 'शास्त्रम्' इति व्याख्या प्रकृतप्रसङ्गाननुगुणेत्याह– **आध्यात्मिकेति** ।। आत्मानमधिकृत्य स्थितधर्मः, प्रसङ्गात् शास्त्रस्य च तथात्वादित्यर्थः ।। ४ ।।

**भावरत्नकोशः (सु.टि.)– ।। तर्हि** 'अनश्चासौ आदिश्च सर्वस्य' इति व्याख्याने । **आदिमित्यनेनेति** ।। 'अनादिम्' इति गीतायाम् 'सर्वस्यानः, सर्वस्यादिः' इति भगवतः सर्वकारणत्वस्य प्राप्तत्वात् । 'बुद्धिज्ञानादिकं मत्त एव' इति भगवत्कारणकत्वस्य बुद्ध्यादौ पुनरभिधाने, तद्वाक्यं पुनरुक्तमित्यर्थः । 'प्रथयति' इति भाष्यस्य 'विस्तारयति' इत्यर्थः । **अनर्थान्तरम्** अर्थान्तराभावः । शब्दाः पर्याया इत्यर्थः । **आध्यात्मिकेति** ।। बुद्धेरसम्मोहादेश्च आत्मानं देहमधिकृत्य प्रवर्तमानधर्मरूपत्वात्, तत्प्रसङ्गे शास्त्रग्रहणस्यानुचितत्वादिति भावः । 'दमः बाह्यकरणानाम् अनर्थेभ्यो विषयेभ्यो नियमनम् । शमः अन्तःकरणस्य तथा नियमनम्' इति रामानुजभाष्यमर्थतोऽनुवदति– **दमो बाह्येति** ।। अन्तःकरणस्य उपशम इत्यस्य बुद्ध्या विविक्तस्यानुवृत्तिः । **एकेनेति** ।। दमशब्दस्य इन्द्रियनिग्रहार्थत्वात्, तेनैव बाह्याभ्यन्तरेन्द्रियनिग्रहग्रहणसम्भवेन शमशब्दस्य वैयर्थ्यादित्यर्थः । **बाह्येति** ।। बाह्यकरणानाम् अन्तःकरणस्य च संयम इत्यर्थः । 'बुद्धेर्मन्निष्ठता शमः' इत्यत्रास्मच्छब्दार्थः परमात्मा । 'सुखशब्दागतार्थतया' इति वदन् 'सुखम् आह्लादः' 'तुष्टिः सन्तोषः' इति शङ्करभाष्यमेकार्थत्वाद् अयुक्तमित्यभिसन्धत्ते ।।

यदुक्तम् 'अनादिम्' इति सर्वकारणत्वं तद् विविच्यते– **बुद्धिरित्यादिना** ।। कार्याकार्य-

विनिश्चयो बुद्धिः, ज्ञानं प्रतीतिः । असम्मोहः अकार्येच्छाराहित्यम्, मिथ्याज्ञानाभावो वा । 'क्षमा क्रोधाभावेन सह अपकर्तुरनपकृतिः' इति षोडशाध्यायभाष्यम् । 'सत्यं यथार्थज्ञानपूर्वकम् अनुष्ठानम्' इति तैत्तिरीयभाष्यम्, यथार्थभाषणं वा । दमः इन्द्रियनिग्रहः, शमः परमात्मनिष्ठता, सुखम् अनुकूलवेदनीयम्, दुःखम् प्रतिकूलवेदनीयम् । 'भवः उत्पत्तिः भावः सत्ता' इति तत्वोद्योतटीका । भयं त्रासः, अभयं त्रासविरोधिमनोव्यापारः ।। ४ ।।

**भावदीपिका (श्री.टि.)–** ।। **तर्ह्यादिमित्यनेनेति** ।। 'बुद्धिम्' इत्यनेनापि सर्वकारणत्वस्यैवोच्यमानत्वात्, तस्य च 'आदिम्' इत्यनेनैवोक्तत्वादिति भावः । **अनर्थान्तर-मिति** ।। पर्याय इत्यर्थः । **आहेति** ।। ज्ञानसामान्यस्य ज्ञानपदेनैवोक्तत्वाद् बुद्धिपदम् उक्तार्थकमेवेत्याहेत्यर्थः । **आध्यात्मिकेति** ।। बुद्ध्याद्याध्यात्मिकधर्मप्रसङ्गे ज्ञानशब्देन तथाविधं ज्ञानमेव ग्रहीतुं युक्तम्, न शास्त्रम् इति । अन्यथा प्रायपाठविरोधः स्यादित्यर्थः । **एके-नैवेति** ।। बाह्यान्तरिन्द्रिययोः उभयोरप्युपशमनस्य सामान्यत इन्द्रियोपशमवाचिना दमशब्देनैव सिद्धत्वात्, शमशब्दस्य वैयर्थ्यमित्यर्थः । **क्रियास्विति** ।। गुर्वादिपूजादिरूपास्वित्यर्थः । **बाह्यान्तःकरणेति** ।। बाह्यवस्तुविषयेऽन्तःकरणसंयम इत्यर्थः ।। ४,५ ।।

**भावप्रकाशः (कृ.टि.)–** ।। **आदिमित्यनेनेति** ।। अनादिशब्दान्तर्गतेनेति शेषः । आदिरित्यनेनेति पाठेऽहमादिर्हीत्यनेनेत्यर्थः इत्याहुः– **एकेनैवेति** ।। दम इन्द्रियनिग्रह इत्युक्तेर्दमशब्देनैव सिद्धत्वादित्यर्थः ।। ४,५ ।।

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ।। ५ ।।**

## भाष्यम्

**तुष्टिः अलम्बुद्धिः । 'अलम्बुद्धिस्तथा तुष्टिः' इत्यभिधानात् ।। ५ ।।**

भावप्रदीपिका (प.टी.)– सुखात् तुष्टेर्वैलक्षण्यं सप्रमाणकमाह– **तुष्टिरिति** ।।५।।

प्रमेयदीपिका (ज.टी.)– सुखशब्दागतार्थतया तुष्टिशब्दं सप्रमाणकं व्याचष्टे– **तुष्टिरिति** ।। ५ ।।

श्लोकः ६

भावरत्नकोशः (सु.टि.)– ।। **अहिंसेति** ।। अहिंसा परपीडाऽभावः । समता द्वन्द्वेषु निर्विकारत्वम्, तुष्टिः विषयालम्बुद्धिः । 'तपो ब्रह्मचर्यादि' इति षोडशाध्यायभाष्यम् । दानम् न्यायार्जितधनस्य पात्रे प्रतिपादनम् । यशः कीर्तिः, अयशः दुष्कीर्तिः । एते नानाविधा भावाः बुद्ध्यादयो विंशतिधर्माः भूतानां सशरीरजीवानां मत्त एव भवन्ति ।। ५ ।।

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ।। ६ ।।**

## भाष्यम्

**पूर्वे सप्तर्षयः । 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः' इति मोक्षधर्मोक्ताः । ते हि सर्वपुराणेषूच्यन्ते । चत्वारः प्रथमाः स्वायम्भुवाद्याः ।। तेषां हि इमाः प्रजाः । न हि भविष्यतां इमाः प्रजा इति युक्तम् । विभागः प्राधान्यं च प्राथमिकत्वादेव भवति । गौतमखिलेषु चोक्तम्**

**'स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम् । वेद यः स प्रजावान्'**

**इति । पूर्वेभ्यो ह्युत्तरा जायन्त इत्येषां प्राधान्यम् । अजातेषु च ज्यैष्ठ्यम् ।।**

भावप्रदीपिका (प.टी.)– प्रतिमन्वन्तरं सप्तर्षिभेदात् केऽत्र विवक्षिताः ? इत्यत आह– **पूर्व इति** ।। विशेषणादित्यर्थः । सावर्णिसञ्ज्ञाश्चत्वारो भविष्यन्मनव इति नेत्याह– **चत्वार इति** ।। कुतो न भविष्यन्ति ? इत्यत आह– **तेषामिति** ।। इतश्च स्वायम्भुवाद्या एव चत्वार इत्याह– **विभाग इति** ।। चतुर्दशमनुषु चतुर्णां विभागेन ग्रहणं प्राधान्याभिप्रायेणैव । तच्च प्राथमिकत्वादेव युक्तमित्यर्थः । चतुर्णां प्राधान्यमेव कुतः । यदर्थं प्रथमाद्यूह्यत इत्यत आह– **गौतमेति** ।। इतश्च पूर्वेषां प्राधान्यमित्यत आह– **पूर्वेभ्य इति** ।। पूर्वसम्भवादित्यर्थः । तर्ह्यन्यसन्ततिजातेभ्यो नैतेषां प्राधान्यमित्यत आह– **अजातेष्वति** ।। प्राधान्यहेतुः इति शेषः ।

प्रमेयदीपिका (ज.टी.)– 'महर्षयः सप्त भृग्वादयः' इति सङ्करः । तदसत् । 'पूर्वे' इति विशेषणेन प्रथममन्वन्तरस्थानामेव ग्रहणस्योचितत्वात् । मोक्षधर्मसंवादाच्चेति भावेनाऽह– **पूर्व इति** ।। इतोऽपि मरीच्यादय एवेत्याह– **ते हीति** ।। 'निरुपपदेन सप्तर्षिशब्देन' इति शेषः । 'पूर्वे' इत्यस्योत्तरत्र सम्बन्धेऽप्येतत् सिद्धमिति भावेनानेकप्रमाणोपन्यासः ।। 'ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो धर्मसावर्ण्यो दक्षसावर्ण्य इति भविष्यन्तश्चत्वारो मनवः' इत्यन्ये । तदसदिति भावेनाऽह– **चत्वार इति** ।। स्वायम्भुवस्वारोचिषरैवतोत्तमाः । प्रथमातिक्रमे कारणाभावादिति भावः ।।

किञ्च 'येषां लोक इमाः प्रजाः' इति विशेषणमेष्वेव सम्भवति । नेतरेषु । अतोऽप्येवमित्याह– **तेषां हीति** ।। इमाः वर्तमानाः प्रजाः अपत्यानि ।। ननु चतुर्दश मनवः । तेषु चतुर्णां यत् पृथक्करणं तत्र कारणेन भाव्यम् । अस्ति च तत्परोक्तेषु सञ्ज्ञासाम्यम् । नतु स्वायम्भुवादिषु । अतः कथमेतत्? इत्यत आह– **विभाग इति** ।। 'प्राधान्यादेव' इति शेषः । सञ्ज्ञासाम्यस्याप्रयोजकत्वात् । अन्यथा मेरुसावर्णेरपि ग्रहणप्रसङ्गादिति भावः । अस्त्वेवम् । प्राधान्यं च परोक्तानामेवेत्यत आह– **प्राधान्यं चेति** ।। 'स्वायम्भुवादीनाम्' इति शेषः ।।

किञ्च श्रुतौ स्वायम्भुवादीनामेव पृथक्करणात् त एवात्रेत्याह– **गौतमेति** ।। 'पृथक्करणेन फलम्' इति शेषः । प्राथमिकत्वादेव प्राधान्यं भवतीत्युक्तम् । तत्कथम् इत्यत आह– **पूर्वेभ्यो हीति** ।। तत्सन्ततावित्यर्थः । तेषां पूर्वेषामुत्तरान् प्रति । तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम् ? इत्यत आह– **अजातेष्विति** ।। विषयसप्तमीयम् । ज्यैष्ठ्यं प्रथमानां प्राधान्यमित्यर्थः ।।

भावबोधः (र.टि.)– ।। **पूर्व इत्यस्योत्तरत्रेति** ।। मनुविशेषणत्वेऽपीत्यर्थः । **संज्ञासाम्यमिति** ।। सावर्ण्यशब्दस्य सर्वत्र सत्वादित्यर्थः ।।

भावदीपः (रा.टि.)– शङ्कते– **चतुर्णामिति** ।। ब्रह्मसावर्ण्यादीनामित्यर्थः ।। 'गौतमखिलेषूक्तं च' इत्यत्र विशेष्यमाह– **पृथक्करणेन फलमिति** शेष इति ।।

भावरत्नकोशः (सु.टि.)– ।। भृग्वादय इति ।।

श्लोकः ६

'भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा ।
अतिनामा सहिष्णुश्च सप्तैतेऽत्र महर्षयः ।। चाक्षुषस्यान्तरे तात ।'

इति शास्त्रोक्ताः गीतायां महर्षिशब्देन ग्राह्या इति आहुः । **ते हीतीति** ।। तथा च मोक्षधर्मे 'सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गताः' इति । शङ्करः रामानुजश्च तथैवाभाषतेति सोऽपि तद्ग्रहणेनैव गृहीतः । भाष्ये 'पूर्वे' इति विशेषणोपादाननात्पर्यमाह– **इति विशेषणेनेति ।। उत्तरत्र** 'पूर्वे चत्वारः' इत्युत्तरत्र । **एतत्** निरुपपदसप्तर्षिपदेन मरीच्यादीनामेव ग्रहणम् । **अनेकेति** ।। मोक्षधर्मसर्वपुराणरूपानेकप्रमाणेत्यर्थः । **तत्र** 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ।।'इत्युपलक्षणत्वेन ब्राह्मवचनमुदाहृतं तात्पर्यनिर्णये । तथा च हरिवंशेषु

'मरीचिरत्रिर्भगवान् अङ्गिराः पुलहः क्रतुः ।
पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः ।।' इति ।

**ब्रह्मसावर्ण्य इति** ।। यद्यपि भागवतेऽष्टमस्कन्धे सावर्णिशब्द इकारान्तः पठ्यते । वक्ष्यति च 'मेरुसावर्णेरपि' इति । तथापि शङ्करभाष्ये 'सावर्ण्या इति प्रसिद्धा' इत्युक्तेरेवमुक्तम् । तथा च विष्णुपुराणे 'पूर्वजस्य सवर्णोऽसौ सावर्ण्यस्तेन कथ्यते' इत्यादि । 'स्वायम्भुवाद्याः' इति भाष्याभिप्रेतानाह– **स्वायम्भुवेति** ।। यद्यपि 'स्वायम्भुवस्वारोचिषउत्तमरैवताः' इति निर्देशः कार्यः । भागवते स्वायम्भुवमाद्यत्वेनोक्त्वा

'स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ।'
'तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।'
'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः ।'
'पञ्चमो रैवतो नाम मनुस्तापससोदरः ।' इति क्रमावेदनात् ।

किञ्च तापसस्य चतुर्थत्वावगमेन उत्तमस्य चतुर्थतया पाठो न युक्तः । तथापि 'तापसस्य भगवदवतारत्वादनुक्तिः' इति भाष्ये वक्ष्यमाणतया तस्येहाग्राह्यत्वात्, 'स्वायम्भुवं स्वारोचिषं रैवतं च तथोत्तमम्' इति भाष्योपात्तप्रमाणानुसाराच्चैवं निर्देशः कृतः । क्रमस्तु भागवतोक्त एवेति अभियुक्ताः ।

भाष्यगतप्रथमपदतात्पर्यमाह– **प्रथमेति** ।। **एष्वेव** स्वायम्भुवादिषूक्तेषु चतुर्थेष्वेव **इतरेषु** परोक्तेषु ब्रह्मसावर्ण्यादिषु । भाष्यभाषितभाविदूषणसौकर्याय इदंशब्दार्थमाह– **इमा इति** ।। 'अयं घटः' इत्यादौ वर्तमानकालोल्लेखानुभवादिति भावः । 'प्रजा स्यात् सन्ततौ जने' इत्यभिधानात् प्रजाशब्देन जनग्रहणे 'लोक इमाः' इत्यनन्वितम् । 'लोकस्तु भुवने जने' इति लोकशब्दस्य जनार्थत्वात् ? इत्यत आह– **प्रजा अपत्यानीति** ।। सन्ततिरत्र प्रजाशब्दार्थ इति भावः । चतुर्दशमनवः स्वायम्भुव, स्वारोचिष, उत्तम, तापस, रैवत, चाक्षुष, वैवस्वत, सावर्णि, दक्षसावर्णि, ब्रह्मसावर्णि, धर्मसावर्णि, मेरुसावर्णि. देवसावर्णि. इन्द्रसावर्णिनामानः चतुर्दशभागवतोक्तमनवः । हरिवंशविष्णुपुराणयोस्तु देवसावर्णीन्द्रसावर्णी त्रयोदशचतुर्दशमनू रौच्यभौत्यशब्दाभ्यां निर्दिष्टौ । चतुर्णां ब्रह्मसावर्ण्यादीनां सञ्ज्ञासाम्यं सर्वत्र सावर्ण्यशब्दानुस्यूतेरिति भावः ।

**स्वायम्भुवादिषु** स्वायम्भुव, स्वारोचिष, रैवत, उत्तमेषु । **एतद्** व्याख्यानम् । भाष्ये 'विभागः' इत्यस्य 'पृथक्करणम्' इत्यर्थः । **मेरुसावर्णेरपीति** ।। भागवते विष्णुपुराणे च सावर्णिशब्दगृहीतस्य अष्टमस्य मनोरेव मेरुसावर्णिशब्देनापि ग्रहणमभ्युपगम्यैवमुक्तम् । मेरुरिव सावर्णिर्मेरुसावर्णिरिति तदर्थ इति केचित् । 'भविता मेरुसावर्णी राजन् द्वादशमो मनुः' इति भागवतकोशविशेषे, 'रुचेः प्रजापतेः पुत्रो रौच्यो नाम भविष्यति । तस्य चेन्मेरुसावर्णिः' इति मत्स्यपुराणे, हरिवंशे सप्तमेऽध्याये 'तथैव मेरुसावर्णिः मनवस्तु चतुर्दश ।' इति मेरुसावर्णेरुपात्तत्वात् तस्यापि सञ्ज्ञासाम्याद् ग्रहणप्रसङ्गादित्यर्थः । भागवते वेदसावर्णीन्द्रसावर्ण्योरुपात्तत्वेऽपि,

'त्रयोदशो रौच्यनामा भविष्यति मुने मनुः ।
भौत्यश्चतुर्दशश्चात्र मैत्रेय भविता मनुः ।।'

इति विष्णुपुराणे नामान्तरेण त्रयोदशचतुर्दशयोर्ग्रहणाद् विष्णुपुराणोक्तस्यैव परैर्गृहीतत्वादेवमुक्तिर्युक्ता । तथा चाष्टमनवमदशमैकादशानां ब्रह्मसावर्ण्य, रुद्रसावर्ण्य, धर्मसावर्ण्य, दक्षसावर्ण्यानां भविष्यतां मनूनां ग्रहणे भागवतोक्तमेरुसावर्णेरपि नामसाम्यात् ग्रहणप्रसङ्गो दुर्वार इति भावेनैवमुक्तमित्यपि आहुः ।

एवं प्राधान्यात् पृथक्करणमित्येवमस्तु परोक्तानां सावर्ण्यानाम् । तथा च स्वायम्भुवादिषु

श्लोकः ६

हेतुरसिद्ध इति भावः । भाष्ये चशब्दो युक्त्यन्तरसमुच्चायक इति भावेनाह– **किञ्चेति** ।। अत्र 'ग्राह्याः' इति शेषः । 'वेद यः स प्रजावान्' इति श्रवणादाह– **फलमितीति** ।। ननु स्वायम्भुवपुत्रः प्रियव्रतः, तत्पुत्राः उत्तम, तापस, रैवता इति भागवतादौ प्रसिद्धम् । तत्कथं 'पूर्वेभ्य उत्तरा जायन्ते' इत्युक्तिः इत्यत आह– **तत्सन्ततावित्यर्थ इति** ।। प्राधान्यं सप्रतियोगिकमिति तद् दर्शयति– **उत्तरान् प्रतीति** ।। **तत्सन्ततावजातान् प्रति** स्वारोचिषादीन् प्रति । स्वारोचिषोऽग्नेः पुत्रः, चाक्षुषः चक्षुषः सुतः, वैवस्वतसावर्णी सूर्यपुत्रौ, दक्षसावर्णिर्वरुणपुत्रः, ब्रह्मसावर्णि उपश्लोकात्मज इत्यस्य भागवते प्रसिद्धेरिति भावः । **विषयसप्तमीति** ।। तथा चाजातविषये पूर्वेषां वयसा ज्यैष्ठ्यमेव प्राधान्यप्रयोजकमिति भाष्यार्थ इति भावः ।

**भावदीपिका (श्री.टि.)**– 'सर्वपुराणेषु' इति 'अनेकप्रमाणेषु' इत्यनेकप्रमाणोपन्यास-प्रयोजनमाह– **पूर्व इत्यस्येति** ।। **उत्तरत्रेति** ।। 'चत्वारो मनव' इत्यत्रेत्यर्थः । **एतत्सिद्ध-मिति** ।। निरुपपदसप्तर्षिशब्देन 'प्रथममन्वन्तरस्थानां मरीच्यादीनामेव ग्रहणं कार्यम्' इत्येतत् सर्वपुराणसम्मत्या सिद्धमित्यर्थः । स्वायम्भुव, स्वारोचिष, उत्तम, तामस, रैवतादिक्रमेण भागवते यद्यपि गणिताः । तथाऽपि वक्ष्यमाणं गौतमखिलवचनं हृदि निधायाह– **स्वायम्भुवे-त्यादिना** ।। ननु स्वायम्भुवादिचतुर्णां ग्रहणे को हेतुः इत्यत आह– **प्रथमेति** ।। **संज्ञासाम्यमिति** ।। चतुर्णां परोक्तानां सावर्ण्यान्तशब्दवाच्यत्वादिति भावः । **विभाग इतीति** ।। पृथक्करणं विभागशब्दार्थः । **मेरुसावर्णेरपीति** ।। तस्यापि सावर्ण्यान्तशब्द-वाच्यत्वादिति भावः । **अस्त्वेवमिति** ।। प्राधान्यात् पृथक्करणमित्यर्थः । **प्राधान्यम्** उत्तमत्वम् । **आहेति** ।। उपपादयतीत्यर्थः । 'पूर्वेभ्यः' इत्यस्य 'प्राथमिकेभ्यः' इत्यर्थः । **स्वायम्भुवादिभ्यः** स्वारोचिषादीनां साक्षादुत्पत्त्यभावात्, अतः 'पूर्वेभ्य' इत्यस्याभिप्रायमाह– **तत्सन्ततावििति** ।। **प्राधान्यम्** स्वामित्वम् ।

**भावप्रकाशः (कृ.टि.)**– ।। **सप्त भृग्वादय इति** ।। भृगुर्नभो विवस्वांश्च सुधामा विरजास्तथा । अतिनामा सहिष्णुश्च सप्तैतेऽथ महर्षयः । चाक्षुषस्यन्तरे तातेत्युक्ता इत्यर्थः । **उत्तरत्रेति** ।। चत्वारो मनव इत्यत्रेत्यर्थः । **रुद्रसावर्ण्य इति** ।। यद्यप्यष्टमस्कन्धे रुद्रसावर्ण्यो नोक्तः । सावर्णिशब्दश्चेकारन्तो दृश्यते । तथाऽपि पुराणान्तरानुसाराद् उक्तं युक्तम् । **रैवतोत्तमा इति** ।। यद्यपि रैवतस्योत्तमानन्तरत्वादेवं निर्देशो युक्तः । तथाऽपि रैवतं च

तथोत्तममित्यग्रिमप्रमाणानुसारादेवमुक्तम् । 'प्रजा स्यात् सन्ततौ जन' इत्युक्तेः प्रजाशब्देन जनग्रहणे येषां लोक इत्यादिकं जनस्वामित्वेन ब्रह्मसावर्ण्यादिष्वपि सम्भवतीत्यत आह– **अपत्यानीति** ।।

।। **मेरुसावर्णेरपीति** ।। यद्यपीन्द्रसावर्णिवेदसावर्ण्योरपि ग्रहणमुचितम् । तयोरपि त्रयोदशचतुर्दशमनुत्वेनाष्टमस्कन्धोक्तेः । तथाऽपि त्रयोदशो रौच्यनामा भविष्यति मुने मनुः । भौच्यश्चतुर्दशश्चात्र मैत्रेयो भविता मनुः' इति विष्णुपुराणे सञ्ज्ञान्तरोक्तेः । सञ्ज्ञासाम्यरूप-परोक्तहेतोरसत्त्वात् मेरुसावर्णिरित्येवोक्तम् । ननु योऽष्टमस्कन्धे द्वादशो मनुर्मेरुसावर्णिरुक्तः । 'स एव रुद्रपुत्रस्तु सावर्णिर्भविता द्वादशे मनुः' इति विष्णुपुराणे रुद्रसावर्णित्वेनोक्तः । तस्य च चतुर्षु परिगणनात् कथमियमतिप्रसङ्गोक्तिः । सत्यम् । मेरुरिव सावर्णिः मेरुसावर्णिरिति व्युत्पत्त्या सूर्यपुत्रस्याष्टममनोः सूर्यसावर्णेर्ग्रहणादतिप्रसंगोपपत्तिरिति व्याचक्ष्यते । ननु स्वायम्भुवपुत्रः प्रियव्रतः तत्पुत्राः उत्तमतापसरैवता इत्यादौ प्रसिद्धम् । तत्कथं पूर्वेभ्य उत्तरा जायन्त इत्युक्तमित्यत आह– **तत्सन्ततावित्यर्थ इति** ।। स्वारोचिषादीन् प्रतीत्यर्थः । स्वारोचिषः अग्निपुत्रः चाक्षुषः चक्षुःपुत्रः, वैवस्वतसावर्णी सूर्यपुत्रौ, दक्षसावर्णिर्वरुणपुत्रः, ब्रह्म-सावर्णिरुपश्लोकसुत इत्यादेः भागवतप्रसिद्धेरिति भावः । **ज्यैष्ठ्यमिति** ।। वयोज्यैष्ठ्यमित्यर्थः । **प्राधान्यमिति** ।। प्राधान्यप्रयोजकमित्यर्थः । **इत्यर्थ इति** ।। इतिशब्दात् परमनुवृत्त्येति शेषः । अर्थशब्दानन्तरमनुसन्धेय इति ।।

## भाष्यम्

**तापसस्य भगवदवतारत्वादनुक्तिः । तच्च भागवते प्रसिद्धम् । मानसत्वं च सर्वेषां मनूनामुक्तं भागवते 'ततो मनून् ससर्जान्ते मनसा लोकभावनान्' इति ।**

भावप्रदीपिका (प.टी.)– तर्हि चतुर्थं तापसमगृहीत्वा रैवतः किमिति गृहीतः ? इत्यत आह– **तापसस्येति** ।। तापसस्य भगवदवतारत्वं कुतः ? इत्यत आह– **तच्चेति** ।। नहि भगवान् स्वतो जायत इत्यर्थः । प्रियव्रतादेरुत्पन्नमनूनां कुतो मानसत्वमित्यत आह– **मानसत्वं चेति** ।।

श्लोकः ६

**प्रमेयदीपिका (ज.टी.)**– इदमुक्तं भवति । प्रधानगुणाभावो हि सति सम्बन्धे भवति । अयुगपद्भाविषु चैतेषु प्रथमानामेव प्राधान्यमुत्तरेषां गुणत्वमुक्तविधया सम्भवति । न त्वन्यथा कथमपीति । प्रथमाश्चेद् गृह्यन्ते तदा चतुर्थस्तापसो गीताभिप्रेततया कुतो न व्याख्यायते ? इत्यत आह– **तापसस्येति** ।। अनुक्तिः अव्याख्यानम् । भगवति च 'मद्भावा मानसा जाताः' इति विशेषणासम्भवादिति भावः । तापसस्य भगवदवतारत्वं कुतः? इत्यत आह– **तच्चेति** ।।

'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः ।
हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात्' इत्यादिना ।।

'ननु यदि विशेषणासम्भवात् प्रथमप्राप्तातिक्रमेण तत्सम्भवतां ग्रहणम् तर्हि 'मानसा जाताः' इति विशेषणासम्भवादेतान् परित्यज्य ब्रह्मसावर्ण्यादय एव ग्राह्याः । तेषु तत्सम्भवात्' इति भास्करः । तत्राह– **मानसत्वं चेति** ।। चतुर्णां दक्षदुहितरि किल भावो युगपदासीदित्येवंविधं मानसत्वं न सर्वेषामिति चेन्न । अत्रार्थे तद्धितोत्पत्तेरस्मरणात् ।।

**भावबोधः (र.टि.)**– ।। **प्रथमप्राप्तातिक्रमेणेति** ।। तापसपरित्यागेनेत्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **अत्रार्थ इति** ।। क्वचिद् भावयुक्तमनस्कत्वार्थे 'मानसाः' इति मनःशब्दाद् अणुप्रत्यये रूपम्। तद्धितोत्पत्तेः पाणिनिस्मृत्यनुक्तेः, किन्त्वपत्यार्थ एवेत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **अत्रार्थे तद्धितोत्पत्तेरस्मरणादिति** ।। मनःशब्दात् तस्येदमिति तद्धिताणुप्रत्यये णित्वात् आदिवृद्धौ सत्यां किल मानसेति रूपमित्यतो युगपत् भवनरूपार्थे तद्धितोत्पन्नप्रत्ययविधानाभावादिति भावः ।।

**भावरत्नकोशः (सु.टि.)**– तत्सन्ततावजातान् प्रति प्रथमानां कथं प्राधान्यम् इति कृतचोद्यं भाष्यभावोक्त्या परिहरति– **इदमुक्तं भवतीति** ।। 'सम्बन्धे सति' इत्यत्र सम्बन्धः प्रथमत्वउत्तरत्वरूपो द्रष्टव्यः । स एव कुतः इत्यतो हेत्वर्थगर्भविशेषणम्– **अयुगपद्भाविष्विति** ।। क्रमभाविष्वित्यर्थः । सम्बन्धाभावोपपादनाय 'अयुगपद् भाविषु इत्युक्तम्' इत्यपि आहुः । **उक्तविधया** 'पूर्वेभ्यो हि' इत्यादिभाष्योक्तविधया । **अन्यथा** उक्तविधया विना प्रकारान्तरेण । **'इति'** इत्यस्य पूर्वेण सम्बन्धः ।

प्रकृतप्रश्नपरिहारार्थमाह– **अनुक्तिरव्याख्यानमिति** ।। **विशेषणासम्भवात्** विशेषणद्वया-सम्भवात् । 'तच्च भागवते प्रसिद्धम्' इति भाष्ये 'तापसस्य भगवदवतारत्वं भागवते प्रसिद्धम्' इत्युक्तमयुक्तम् । तत्र 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः' इति तापसनामानं चतुर्थमनुमभिधाय,

'वृषख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ।
सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ।
ज्योतिर्धामादयः सप्त ऋषयस्तापसेऽन्तरे ।
देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा' ।।

'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः ।
हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात् ।।'

इति तापसमन्वन्तरे हरिनामकस्य भगवद्रूपस्य गजेन्द्रमोचकत्वाभिधानेन तापसस्य भगव-दवतारत्वोक्तेरनाकलनाद्, इत्यतो हरिनामकस्य तावत् कृष्णादिश्रुत्या गरुडवाहनलिङ्गेन गजेन्द्रमोक्षकत्वादिलिङ्गेन च भगवदवतारत्वं सिद्धम् । द्वितीयस्कन्धतात्पर्योदाहृतम्–

'हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः ।
गजेन्द्रं मोचयामास ससर्ज च जगद्विभुः ।।'

इति मात्स्यवचनं चैनमेवार्थमाह । एवं च तापसनामा मनुरेव हरितयाऽऽहूतो गजेन्द्रम-मोचयद् इति तापसस्य हरेरेव भगवदवतारत्वमवबोधयितुं व्यवहितमपि 'हरिरित्याहुतो येन' इति हरिपदघटितमर्धमत्र संयोज्य पठति– **चतुर्थ उत्तमभ्रातेति** ।। भाष्ये चशब्दो 'भागवते च' इति संयोजने 'हरिस्तापसनामाऽसौ', 'चतुर्थस्तापसो नाम्ना' इत्यादिपुराणे चेति समुच्चयार्थ इति भावेन आदिशब्दः प्रयुक्तः ।

इदमत्रावधेयम् उत्तमः तापसो रैवतश्च त्रयो मनवः प्रियव्रतराजस्य पुत्राः । तत्रोत्तम-मन्वन्तरे सत्यसेननामको भगवदवतारः, तापसमन्वन्तरे हरिनामको भगवदवतारः । तत्रापि यस्तापसनामा मनुः हरिशब्देनापि भणितः प्रियव्रतपुत्रः स एव स्वान्तरे हरिण्यां हरिमेधसः सकाशाद्धरिनामा पुनरप्यवतीर्णः । रैवतः पञ्चमो मनुः । तत्र वैकुण्ठनामा भगवदवतार इति ।

श्लोकः ६

एवं सति 'तापसनामाऽसौ मनुरेव हरिरित्याहूतो गजेन्द्रं मोचयामास' इति द्वितीयस्कन्धतात्पर्यम्, 'त्वां तापसं मोचितहस्तिमल्लम्' इति पण्डिताचार्यस्योक्तिः, 'श्रुत्वा हरिस्तमरणार्थिनमप्रमेयः' इति भागवतश्लोके तदा तापसनामा हरिर्भगवान् अरणार्थिनं शरणार्थिनमिति तट्टीकावाक्यं च सङ्गच्छते । एतेन 'प्रियव्रतसुतस्तापसो मनुः हरिश्च हरिमेधसः पुत्र उक्त इति टीकायां कथमेकार्थप्रतिपादकतया अर्धद्वयमेकीकृत्य पठितम्' इति चोद्यं निरस्तम् ।

तापसनामा मनुरेव हरिनामकश्च प्रथितो गजेन्द्रमोचकः । स एव पुनरंशेन हरिण्यां हरिमेधसो हरिनामा भगवदवतारश्चेत्यर्थस्फोरणाय प्रमेयदीपिकायां 'चतुर्थ उत्तमभ्राता' इत्यर्धं 'हरिरित्याहुतो येन' इत्यर्धं च व्यवहितमप्येकीकृत्य पठितवान् जयतीर्थमुनिरिति द्वितीयस्कन्धभागवतोपासनायां सुधीन्द्रतीर्थश्रीमच्चरणैर्विभावितत्वात् । तथा च भागवतकथासङ्ग्रहे विजयीन्द्रस्वामिनः यस्तापसनामा मनुर्गजेन्द्रेण हरिरित्याहूतः तं ररक्ष, स एव हरिमेधसो हरिण्यां हरिर्जातः । स च प्रियव्रतपुत्रं भगवदंशं तापसनामकं मनुं त्रिशिखनामकमिन्द्रं 'सत्यका हरयो वीराः' इति 'शास्त्रोक्तदेवान् ज्योतिर्व्योमादीन् सप्तऋषींश्च ररक्ष' इति ।

यत्तु 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः' इति भागवते पठ्यमानोऽर्धः कल्पितः, टीकायां तदपाठात्' इति । तन्न । टीकायामेवं पाठस्य तापसो भगवदवतारो भागवते प्रसिद्ध इति भाष्यघटनाय कृतत्वात् । भागवत एव 'चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः' इति वचनानन्तरम् अविगानेन पठ्यमानस्य 'वृषख्यातिर्नरः केतुः' इत्यादेरपि टीकायामपाठेन कल्पितत्वप्रसङ्गाच्च । न चेष्टापत्तिः । तस्यापि कल्पितत्वे तत्पुत्रादेरप्यनुक्त्यापत्त्या प्रायपाठविरोधात् । 'वृषख्यातिः' इत्यादिवचनानि टीकोपात्तश्लोकानन्तरमेव पठनीयानीति तु दृष्टहानअदृष्टकल्पनरूपत्वाद् अयुक्तम् । यदि च सूत्रभाष्ये आत्मशब्दस्य भगवत्परत्वसिद्धये

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।'

'अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ।
दत्तं दूर्वाससं सोमम् आत्मेशब्रह्मसम्भवान् ।।'

इति भागवतपाठेऽपि 'अनसूया' इत्यर्धं परित्यज्य तत्पूर्वोत्तरार्धपठनमिव, अत्रापि टीकायां 'तत्रापि जज्ञे' इत्यर्धं परिज्यत्य उपयुक्तयोरेवार्धयोः पठनमिति मन्यसे, तदा भाष्यघटनाय उपयुक्तमेव गृहीतमिति क्व कल्पितत्वजल्पः ! किञ्च विष्णुपुराणे

'तापसस्यान्तरे चैव सम्प्राप्ते पुनरेव तु ।
हरिण्यां हरिभिः सार्धं हरिरेव बभूव ह ।।'

इति हरिनामकावतारस्य हरिण्यां प्रादुर्भावस्य स्पष्टमभिधानेन, विष्णुरहस्ये अष्टाविंशेऽध्याये

'चतुर्थस्तापसो नाम्ना ह्युत्तमस्यानुजो मनुः ।
स्वयमेव हि यो विष्णुर्लीलया मनुतां गतः ।
तस्येमे तनया जाता वृषख्यात्यादयो दश ।
नासत्यस्त्रिशिखो नाम्ना प्राप्त इन्द्रपदं सुराः ।
हरिवीरादयस्तत्र विधृतेस्तनयास्तु ये ।
ततो वैधृतयो नाम धृता वेदास्तु तैः सह ।
हरिमेधा ऋषिर्नाम तस्य स्त्री हरिणी सती ।
तस्यां जज्ञे हरिः साक्षाद् अहमेव सुरेश्वरः ।।'

इत्युक्त्वा, तत्रैव तु चतुस्त्रिंशेऽध्याये

'स्वशक्त्या युध्यतस्तस्य शक्तोऽभून्न जलेचरः ।
प्राणसंशयमापन्नो गजो दीनोऽस्मरद्धरिम् ।
तदैवाविरभूत् साक्षाच्छङ्खचक्रगदाधरः ।
दारयित्वाऽरिणा नक्रं ग्राहाद् गजममोचयत् ।
ग्राहं चामोचयत् तस्माद् ग्राहदेहाद्धरिस्तदा ।।'

इति हरिनामकस्य भगवदवतारस्यैव विस्पष्टमुपवर्णनेन च भागवते पठ्यमानस्य 'तत्रापि जज्ञे' इति अर्धस्य कल्पितत्वकल्पनम् अतिसाहसम् । 'त्वां तापसं मोचितहस्तिमल्लम्' इति पठितपण्डिताचार्यसूक्तिः तापसस्यैव हरिशब्दितस्य गजेन्द्रमोचकत्वमित्येव विस्पष्टमावेदयतीति सर्वं समञ्जसम् ।

**विशेषणासम्भवात्** 'मद्भावा मानसा जाताः' इति विशेषणासम्भवात् । **प्रथमप्राप्तेति** ।। चतुर्थतया क्रमप्राप्ततापसातिक्रमेणेत्यर्थः । **तत्सम्भवताम्** तत् विशेषणं सम्भवद् येषु तेषाम्,

श्लोकः ६

सम्भवद्विशेषणकानामित्यर्थः । **एतान्** स्वायम्भुव, स्वारोचिष, रैवत, उत्तमान्, **ब्रह्म-सावर्ण्यादयः** ब्रह्मसावर्ण्यो रुद्रसावर्ण्यो धर्मसावर्ण्यो दक्षसावर्ण्य इति चत्वारः । भाष्ये 'ततो मनून्' इत्यर्धात् पूर्वम् 'स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः' इति तृतीयस्कन्धगत-श्लोकार्धसंयोजने, 'ससर्ज' इत्याख्यातोपात्तकर्तृलाभः । 'सर्वेषाम्' इति भाषणमनुपपन्नम् ? दक्षप्रजेश्वरकन्यायां चतुर्णामिव सर्वेषां मनूनां मनो लग्नमित्यनुपलम्भादिति भावेन शङ्को– **चतुर्णामिति ।। भावः** मनः ।

**भावदीपिका (श्री.टि.)–** नन्वेवं प्राथमिकत्वेन प्राधान्योपपादनं कथम् ? इत्यत आह– **इदमुक्तं भवतीति ।। प्रथमानां** प्राथमिकानाम् । **उक्तविधया** 'पूर्वेभ्यो ह्युत्तरा जायन्ते अजातेषु च ज्यैष्ठ्यम्' इत्युक्तविधया । **येन गजेन्द्र इति ।।** 'हरिः' इत्याहूतेन 'तापसमनुना' इत्यर्थः । तथा **चाष्टमस्कन्धस्थस्य** 'मनुर्नाम्ना च तापसः हरिरित्याहुतः' इत्येवं वाक्य-स्योदाहरणेन मध्ये 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः' इत्यर्धस्य कल्पितत्वं ज्ञायते । हरिनामकस्य **रूपस्यैव** गजेन्द्रमोक्षकत्वप्राप्त्या,

'हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः । गजेन्द्रं मोक्षयामास ....... ।।'

इति द्वितीयस्कन्धतात्पर्येण, 'त्वां तापसं मोचितहस्तिमल्लम्' इति सङ्ग्रहरामायणेन च विरोधापत्तेः । नन्वितरमन्वन्तर इव तापसमन्वन्तरेऽपि भगवदवतारस्य वक्तव्यत्वात्, तदर्थं 'तत्रापि' इत्यर्ध आवश्यक इति चेन्न । इतरमनूनां भगवद्भिन्नत्वेनासमर्थतया तत्र प्राप्तोपद्रव-परिहाराय तत्र भगवदवतारस्यावश्यं वाच्यत्वात् । अत्र पुनर्भगवत एव मनुत्वेन तद्भिन्न-स्वतन्त्रावतारस्यावक्तव्यत्वाद् इत्याद्यालोचनीयमिति सम्प्रदायविदः । **विशेषणासम्भवादिति ।।** 'जाताः' इति विशेषणासम्भवात्, रैवतात् प्रथमं चतुर्थत्वेन प्राप्ततापसातिक्रमेण 'मद्भावा मानसा जाताः' इति विशेषणसम्भववतां स्वायम्भुवादीनां ग्रहणमित्यर्थः । **एतान्** स्वायम्भुवा-दीन् । **तेष्विति ।।** ब्रह्मसावर्ण्यादीनां चतुर्णां दक्षदुहितरि युगपद्भावनरूपमानसत्वस्य सम्भवा-दित्यर्थः । **अत्रार्थ इति ।।** मनश्शब्दात् 'तस्येदम्' इति तद्धिताण्प्रत्यये, णित्त्वाद् आदिवृद्धौ सत्यां किल 'मानस' इति रूपम् । तत्र युगपद्भावनरूपार्थे तद्धितोत्पत्तेरश्रवणाद् अपवादार्थं व्याख्यानमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** प्राथमिकत्वादेवेत्यवधारणार्थस्यानुक्तत्वात् तं वक्तुमाह–

**इदमुक्तं भवतीति** ।। प्रथमोत्तरभावः कुत इत्यतो हेतुगर्भविशेषणमाह– **अयुगपद्भाविष्विति** ।। क्रमभाविष्वित्यर्थः । यद्वा सम्बन्धाभावोपपादनायायुगपद्भाविष्वित्युक्तम् । कुतो न व्याख्यायत इति प्रश्नेऽनुक्तिरित्यस्योत्तरत्वायोगादाह– **अव्याख्यानमिति** ।। **चतुर्थ उत्तमभ्रातेति** ।। ननु भागवते चतुर्थ इत्यर्धर्चानन्तरं वृषःख्यातिरित्यादि श्रूयते । हरिरित्याहुत इत्यर्धश्च 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः' इत्यर्धानन्तरं श्रूयते । तत् कथमत्रान्यथा पठ्यत इति चेत् । अत्र बहवः । टीकोक्त एव पाठः । तथा च यस्तापसनामको विष्णुः स एव हरिरित्याहुतः तदावतार इति मनुरवतारश्चैक इति, वृषः ख्यातिरित्यादिकं त्वेतच्छ्लोकान्तरं पाठ्यम् । भागवते तु हरिरित्यर्धोऽन्तरितः । तत्रापीत्यर्धस्तु प्रक्षिप्तः । गजेन्द्रोपाख्यानं तु 'बादरायण एतत्ते ' इत्यारभ्यैवेति । अन्ये तु भागवतोक्त एव पाठः । तत्र 'यश्चतुर्थ उत्तमभ्राता' इत्यत्रोक्तः तापसः स एव हरिण्यां हरिमेधसः सकाशाद्धरिनामासन् जज्ञ इति प्रमेयं दर्शयितुं व्यवहितयोरप्यर्थयोरव्यवधानेनोपन्यासः कृत इति वर्णयन्ति । **प्रथमप्राप्तेति** ।। तापसत्यागेनेत्यर्थः । **दक्षदुहितरि भाव इति** ।। दक्षकन्यायां मन आसीदित्यर्थः ।

## भाष्यम्

**अन्यपुत्रत्वं त्वपरित्यज्यापि शरीरं तद्भवति ।।**

**प्रमेयदीपिका (ज.टी.)– ननु ब्रह्मपुत्रास्सन्तु मानसाः । नतु तदा ते मनवः । किन्तु तच्छरीरं परित्यज्य प्रियादिपुत्रा जातास्तदैव । अतो मनुषु मानसत्वमसम्भाव्यमित्यत आह– अन्येति ।। तन्मानसं शरीरम् अपरित्यज्य स्थितानाम् अपि अन्यपुत्रत्वं सम्भवतीति योजना ।। 'द्वितीये शरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यते' इति सम्प्रदायविदः ।।**

**भावबोधः (र.टि.)– ।। स्थितानामिति ।।** तेनापरित्यज्येत्यस्य समानकर्तृकत्वमिति भावः । नन्वन्यपुत्रत्वमिति भाष्यस्य विदुरयुधिष्ठिरादिवच्छरीरान्तरग्रहणाभिप्रायत्वे मनुषु मानसत्वम् असम्भव्येवेति शङ्कानिरासो न स्यादित्यत आह– **द्वितीये शरीरे जात इति** ।। सम्प्रदायविद इत्यनेन नीलादिशरीरादौ तथाभावस्य प्रमितत्वं सूचयति ।। ६,७ ।।

**भावदीपः (रा.टि.)–** ल्यबन्तनिर्वाहायोक्तम्– स्थितानामिति ।।

श्लोकः ६

**भावरत्नकोशः (सु.टि.)– ।। अत्रार्थ इति ।।** जातभवाद्यर्थ इव, 'युगपदेकत्र मनः कृतमेभिः' इति पराभिप्रेतेऽर्थे मनःशब्दाद् अणुप्रत्ययरूपतद्धितप्रत्ययोत्पत्तेः पाणिनिनाऽननुशासनादित्यर्थः । **तदा** ब्रह्मपुत्रत्वदशायाम् । मनुत्वदशायां ब्रह्ममनस्सम्भूतत्वरूपं मानसत्वविशेषणमसम्भवि । मानसत्वदशायां मनुत्वमेव नास्तीति भावः । प्रियव्रतादिपुत्रत्वमपरित्यज्य स्थितानामेव पश्चात् तन्मानसं शरीरं भवतीति यथाश्रुतयोजनायाम्, प्रियव्रतादिपुत्रत्वानन्तरं मानसशरीरप्राप्तिः प्रतीयते । सा च प्रमाणबाधितेति भावेन भाष्यम् अन्यथा योजयति– **तन्मानसमित्यादि ।।** ल्यबुपपत्तये उक्तम्– **स्थितानामिति ।।** 'अन्यपुत्रत्वम्' इति भाष्ये विदुरयुधिष्ठिरादिवत् शरीरान्तर ग्रहणाभिप्राये मनुषु मानसत्वमसम्भव्येवेति कृतचोद्यनिरासो न स्यात् ? इत्यतो भाष्यं घटयितुमाह– **द्वितीयशरीर इति ।।** नग्नजितः पुत्र्या नीलादेव्याः गोपालकन्यकायाश्च नीलादेव्याः द्वितीयशरीरस्य पूर्वशरीरेणैक्यं पुराणादावावेद्यते, तद्वदिति भावः । **सम्प्रदायः** शिष्येषु प्रदानम् ।

**भावदीपिका (श्री.टि.)– ।। ब्रह्मपुत्रा इति ।।** यतो ब्रह्ममनोजातत्वेन तत्पुत्राः, ततो मानसाः सन्त्वित्यर्थः । **न त्विति ।।** तथा 'चत्वारो मनवः मानसाः' इति सामानाधिकरण्यासम्भव इत्यर्थः । समानकर्तृकत्वायाह– **स्थितानामिति ।।** ननु तर्हि युगपच्छरीरद्वयोपलम्भः स्यात् ? इत्यत आह– **द्वितीयशरीर इति ।।** तत् द्वितीयशरीरम् । 'सम्प्रदायविदः' इत्यनेन नीलाशरीरे, गाण्डीवधनुषि, भगवत्किरीटे, सीताभरणादौ च तथाभावः प्रमित इति सूचयति ।

**भावप्रकाशः (कृ.टि.)–** नन्वन्यपुत्रत्वमिति भाष्यस्य विदुरयुधिष्ठिरादिवच्छरीरान्तरग्रहणाभिप्रायकत्वे मनुषु मानसत्वमसम्भाव्येवेति शङ्कानिरासो न स्यादित्यत आह– **द्वितीये शरीर इति ।। सम्प्रदायविदः** इत्यनेन नीलादिदेहादौ तथाभावस्य प्रमितत्वं सूचयति ।

## भाष्यम्

**प्रमाणं चोभयविधवाक्यान्यथाऽनुपपत्तिरेव । 'पूर्वे' इति विशेषणाच्च एतत्सिद्धिः ।। मत्तो भावो येषां ते मद्भावाः । ये ते ब्रह्मणो मानसा जातास्ते मत्त एव जाता इति भावः ।। ६ ।।**

भावप्रदीपिका (प.टी.)– इतश्च स्वायम्भुवाद्या एव । तदाह– **पूर्वं इति ।।** मद्भावा इत्यस्य मत्स्वायम्भुव इति प्रतीतिनिरासायार्थमाह– **मत्त इति ।।** तर्हि कथं ब्रह्ममानसपुत्रत्वम् ? इत्यत आह– **य इति ।।**

प्रमेयदीपिका (ज.टी.)– किमत्र प्रमाणम्? इत्यत आह– **प्रमाणं चेति ।।** मनूनामेव ब्रह्ममानसपुत्रत्ववाक्यं प्रियव्रतादिपुत्रत्ववाक्यं चेत्युभयविधवाक्यम् । उपचारत्वकल्पना क्लिष्टैव । किञ्च 'पूर्वे' इति विशेषणं पूर्वेणैव सम्बद्ध्यते परेणैव वा उभाभ्यामपीति त्रयः पक्षाः । पक्षत्रयेऽपि चत्वारो मनवः प्रथमा एवेति सिद्ध्यति । आद्ये सप्तर्षीणां प्रथमत्वेन तत्साहचर्यात् । द्वितीयतृतीययोर्वचनादेवेति भावेनाऽह– **पूर्वं इति ।।**

'मयि भावो येषाम्' इति व्याख्यानं प्रकृतासङ्गतम् । कारणत्वस्यात्र प्रकृतत्वादिति भावेनाऽह– **मत्त इति ।।** भावः जन्म । ननु 'मानसा जाताः' इत्यनेन भगवतः तत्कारणत्वमुच्यते । मैवम् । 'ततो मनून्' इति वचनस्य सत्त्वेन 'ब्रह्मणो मानसा जाताः' इति व्याख्येयत्वात्। तर्हि कथं न व्याहतिः? इत्यत आह– **ये त इति ।।** मत्त एव ब्रह्मान्तर्यामिणः । ब्रह्मा तु द्वारमात्रमिति भावः ।। ६ ।।

**भावबोधः (र.टि. )** तत्साहचर्यादिति ।। प्रायपाठादित्यर्थः ।।

भावदीपः (रा.टि.)– ।। **प्रियादीति** ।। प्रियव्रतादीत्यर्थः ।। ननु भूतपूर्वगत्या स्वायम्भुवादीनां मानसत्वं वा मनुत्वं वा, अन्यतरद्गौणमिति कल्प्यतामित्यत आह– **उपचारत्वेति ।। प्रकृतत्वादिति ।।** 'मत्त एव पृथग्विधाः' इत्यनेनेति भावः । **भगवतस्तत्कारणत्वमिति** । तथाच तेन 'मद्भावम्' इत्यस्य पुनरुक्ततेति भावः । **ब्रह्मण इति** ।। विरिञ्चस्येत्यर्थः ।। ६ ।।

भावरत्नकोशः (सु.टि.)– ।। **पुत्रत्ववाक्यम्** पुत्रत्वप्रतिपादकं वाक्यम् । प्रियव्रतादिपुत्रभावदशायां पूर्वदेहत्यागाभ्युपगमेऽपि भूतपूर्वगत्या मानसत्वमस्तु । मानसत्वदशायां वा मनुत्वं भाविभावाभिप्रायेणास्तु इति अन्यतरद्गौणम् ? इत्यत आह– **उपचारेति** ।। मानसशब्दस्य मनुशब्दस्य वा गौणवृत्तिकल्पनेत्यर्थः । 'अनन्यथोपपत्तिः' इति भाष्यपाठे

श्लोकः ६
'अन्यथाऽनुपपत्तिः' इत्यर्थः । भाष्यगतचशब्दार्थोक्तिः– **किञ्चेति** ।। **तत्साहचर्यात्** प्रथममन्वन्तरस्थसप्तऋषिसहपाठात् । सहपाठश्च धर्मग्राहकः 'विपराभ्यां जेः' इत्यादौ दृष्ट इति भावः । 'मद्भावाः मद्गतभावनाः' इति शङ्करभाष्यं तात्पर्यतोऽनुवदति– **मयीति** ।। **प्रकृतत्वात्** 'अहमादिर्हि देवानाम्', 'मत्त एव पृथग्विधाः' इति प्रकृतत्वात् । 'भवः उत्पत्तिः' 'भावः सत्ता' इत्यन्यत्र टीकोक्तरीत्या वैयाकरणरीत्या च भावशब्दस्य सत्तावाचित्वे 'मद्भावाः' इति सत्ताप्रदत्वलाभाद् 'विशेषकारणत्वमाह' इति प्रतिज्ञाविरोध इत्यत आह– **भावो जन्मेति** ।। 'भावः पुमान् जन्मनि स्यात्' इत्यमरकोशः ।

ननु 'मत्तो भावः' इति भाषणमयुक्तम् ? 'मानसा जाताः' इति गीताचार्येण स्वमनोजातत्वोक्त्या पुनरुक्त्यापत्तेः इति शङ्कते– **नन्विति** ।। **ब्रह्मण इति** ।। 'स आत्मानं मन्यमानः कृत्यकृत्यमिवात्मभूः' इति चतुर्मुखस्य 'ततो मनून्' इत्यत्र प्रकृतत्वादिति भावः । **व्याख्येयत्वात्** 'मानसा जाताः' इति गीतायाः । **व्याहतिः** चतुर्मुखमनोजातत्वभगवज्जातत्वोक्त्योर्विप्रतिषेधः । व्याहतिं परिहर्तुं 'मत्तः' इत्यस्यार्थमाह– **मत्त इति** ।। तर्हि भागवतविरोधः इत्यत उक्तम्– **ब्रह्मा त्विति** ।। ६,७ ।।

न केवलं भूतानां बुद्ध्यादिधर्मा मत्त एव भवन्ति, अपि तु सर्वभूतानि चेत्युच्यते– **महर्षय इति** ।। 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठस्तु महातेजाः' इति मोक्षधर्मोक्ताः पूर्वे प्रथममन्वन्तरस्थाः सप्त महर्षयः पूर्वे प्राथमिकाः चत्वारः मनवः स्वायम्भुव, स्वारोचिष, रैवत, उत्तमाः । मद्भावाः मत्तो भावः जन्म येषां ते तथोक्ताः । ये च मानसाः ब्रह्मणो मनसा जाताः चतुर्मुखस्य मनस उद्गताः । मनःशब्दात् 'तस्येदम्' इत्यण् । स एव सम्बन्ध उद्घाटितः 'जातः' इति । तेऽपि मद्भावाः मत्त एव ब्रह्मान्तर्यामिणः समुद्भूताः, ब्रह्मा तु द्वारमिति भावः । येषां मनूनां लोके इमाः वर्तमानाः प्रजाः अपत्यानि ते मद्भावा इत्यन्वयः । अनेन च विशेषणेन स्वायम्भुवाद्या एव चत्वारो मनवोऽभिप्रेता इति विज्ञायते । भविष्यतां मनूनां सावर्ण्यसञ्ज्ञकानां वर्तमानप्रजासन्तानकत्वायोगात् न तेऽत्र ग्राह्याः । एतेन 'ततो मनून् ससर्जान्ते मनसा लोकभावनान्' इति भागवते स्वायम्भुवादीनां ब्रह्ममानसपुत्रत्वावेदनात् कथं ते 'मद्भावाः' उच्यन्ते इति निरस्तम् । ब्रह्मान्तर्यामिणो मत्त एव जाताः । ब्रह्मा तु–

'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।
हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ।।'

इति शास्त्राद् द्वारमात्रमित्यभ्युपगमात् । ननु च यदा ब्रह्मपुत्रतादशायां मानसाः तदा न ते मनवः, यदा च प्रियव्रतादिपुत्रतादशायां मनवः, तदा न ते मानसाः । अतो मनुषु मानसत्वम्, मानसेषु वा मनुत्वम् असम्भव्येवेति कथं 'मद्भावा मानसा जाताः' इति विप्रतिषिद्धमुच्यत इति चेन्न । ब्रह्मपुत्रतादशायां यन्मानसं शरीरमासीत् तदपरित्यज्य स्थितानामेव प्रियव्रतादिपुत्रभावमापन्नानां मनुत्वम् । द्वितीयशरीरे जाते तत्पूर्वशरीरेणैक्यमापद्यत इत्यङ्गीकारे विप्रतिषेधशङ्काऽनवकाशादिति भाष्यटीकयोः स्फुटम् ।। ६ ।।

**भावदीपिका (श्री.टि.)**– ननु ब्रह्ममानसपुत्रत्वप्रियव्रतादिपुत्रत्वप्रतिपादकवाक्ययोर्मध्ये एकस्योपचरितार्थत्वेनाप्युपपत्तेरिति चेत्, तत्राह– **उपचारत्वेति** ।। **पूर्वेणैव** 'महर्षयः सप्त' इत्यनेनैव । **परेणैव** 'मनवः' इत्यनेनैव । **तत्साहचर्यादिति** ।। प्रायपाठादित्यर्थः । **वचनादेवेति** ।। 'पूर्वे' इति पदादेवेत्यर्थः । 'मद्भावः' इत्यस्य 'मत्तो भावः' इत्यर्थकत्वे पुनरुक्तिः इत्यभिप्रेत्य शङ्कते– **नन्विति** ।। **तत्कारणत्वं** मनुकारणत्वम् । तथा च 'मद्भावाः' इत्यनेनापि तस्यैवोच्यमानतया पुनरुक्तिरिति भावः । **ब्रह्मणः** चतुर्मुखस्य । तथा च भगवन्मनोजातत्वं नोच्यत इत्याशयः । **कथं न व्याहतिरिति** ।। ब्रह्ममनोजातत्वस्य भगवज्जातत्वस्य च विरुद्धत्वेन 'मद्भावा मानसा जाताः' इत्युक्तौ व्याहतिरित्यर्थः ।। ६,७ ।।

**भावप्रकाशः (कृ.टि.)**– ननु प्रियव्रतादिपुत्रत्वदशायां पूर्वदेहयोगेऽपि ब्रह्ममानसपुत्रत्वं भूतपूर्वगत्या युक्तम् । ततश्चौपचारिकं मानसत्वमित्यत आह– **उपचारत्वेति** ।। उपचर्यत इत्युपचारः कर्मणि घञ् । उपचरितत्वेत्यर्थः । **तत्साहचर्यादिति** । तत्सहपाठादित्यर्थः । ननु भावः सत्ता चेत्तर्हि मद्भावा इत्यनेन सत्ताप्रदत्वोक्तेः विशेषकरणत्वमाहेति प्रतिज्ञाविरोध इत्यत आह– **भावो जन्मेति** ।। **ननु मानसा इति** ।। ततश्च मत्तो भाव इति व्याख्याने पुनरुक्तिरिति भावः ।। ६ ।।

## एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
## सोऽविकम्पेन योगेन युज्यते नात्र संशयः।। ७ ।।

**भावरत्नकोशः (सु.टि.)**– उक्तमाहात्म्यपरिज्ञातुः फलमुच्यते– **एतामिति** ।। यः मम एतां 'न विदुः सुरगणाः' इत्यादिश्लोकोक्तां विभूतिं विशिष्टं भवनं सुरगणाद्यविज्ञेयतयोक्त-

श्लोकः ८

माहात्म्यम्, वक्ष्यमाणप्रकारेण विविधभवनं वा योगं बुद्ध्यादिसर्वधर्मस्रष्टृत्वोक्तिलभ्यं प्रभवपदोक्तं वा सामर्थ्यं च तत्त्वतः याथातथ्येन वेत्ति सः अविकम्पेन निश्चलेन योगेन ध्यानयोगेन युज्यते युक्तो भवति । अत्र एतस्मिन्नर्थे संशयो न ।। ७ ।।

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ।। ८ ।।**

## भाष्यम्

**सन्ति च भजन्तः केचिदित्याह– अहमित्यादिना ।। ८ ।।**

भावप्रदीपिका (प.टी.)– अजोऽनादिर्भगवानिति सामान्यविशेषाभ्यामुक्तम् । तत्कुतः ? इत्यतः श्लोकमवतारयति– **सन्ति चेति** ।। ८ ।।

**प्रमेयदीपिका** (ज.टी.)– ननु 'एतां विभूतिम्' इति परिज्ञातुः **फलमुक्तम्** । तत्किमर्थं **पुनरुच्यते** ? इत्यतस्तात्पर्यान्तरमाह– **सन्ति चेति** ।। 'उक्तफले विश्वासजननार्थम्' इति शेषः ।। ८ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **फलमुक्तमिति** ।। 'योगेन युज्यते' इत्यविकम्पयोगावाप्तिरूपं फलमुक्तमित्यर्थः । **पुनरिति** ।। 'बुद्धियोगं ददामि', 'तमो नाशयामि' इति च फलं परिज्ञातुः पुनरुच्यत इत्यर्थः । **तात्पर्यान्तरम्** न फलोक्तौ तात्पर्यम्, येन पुनरुक्तिः स्यात् । किन्तूक्तफले विश्वासजननार्थं 'सन्ति भजन्तः केचित्' इत्यर्थप्रतिपादने तात्पर्यमिति तात्पर्यान्तरमित्यर्थः ।।

उक्तफले विश्वासजननार्थं 'सन्ति च तथा भजन्तः केचित्' इत्युच्यते– **अहमित्यादिना** ।। 'प्रभवसत्ताप्रतीत्यादिकारणत्वात् प्रभवभोक्तृत्वाच्च प्रभवः' इति सप्तमभाष्यम् । 'प्रभवत्यस्मात्' इति प्रभवः उत्पादक इति वा, प्रवर्तते स्वस्वव्यापारेषु । 'प्रलयादिरपि मत्त एव' इत्यप्युपलक्ष्यते । 'माम्' इत्यनुक्तेः जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्य 'अहमेव सर्वस्य प्रभवः' इत्यादि मत्वा भजन्त इति प्रतीतिः स्यात्, तन्निवृत्त्यर्थम् 'अहं सर्वस्य प्रभवः' इत्यादिनैव 'माम्' इति सिद्धावपि, पुनः 'माम्' इत्युक्तम् । बुधाः अवगतभगवत्तत्त्वाः । भावसमन्विताः भक्त्या समुपेताः ।। ८ ।।

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।। ९ ।।**

**भावरत्नकोशः (सु.टि.)–** कथम्भूता भजन्ते **मच्चित्ताः** मय्यर्पितमानसाः । मद्गतप्राणाः मद्विषयप्राणादिचेष्टाः । बोधयन्तः मत्प्रभावं शिष्यान् अवगमयन्तः । कथयन्तः कीर्तयन्तः । 'नित्यम्' इति सर्वत्र सम्बध्यते । तुष्यन्ति विषयेष्वलम्बुद्धिमन्तो भवन्ति च इति । तत्र हेतुः रमन्ति रमयन्ते भगवदनुग्रहप्राप्तं स्वरूपसुखमनुभवन्ति च इति ।। ९ ।।

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।। १० ।।**

**भावरत्नकोशः (सु.टि.)–** य एवं भजन्तः तेषां सततयुक्तानां नित्याभियुक्तानां नित्यं मयि निबद्धमनसां प्रीतिपूर्वकं भक्तिपूर्वकं भजतां सेवमानानां ध्यायतां बुद्धियोगम् अपरोक्ष-ज्ञानरूपम् उपायं प्रीतिपूर्वकं ददामि न तु प्रसभात् । येन बुद्धियोगेन मामुपयान्ति ते ।। १० ।।

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ।। ११ ।।**

**भावरत्नकोशः (सु.टि.)–** अनाद्यज्ञानकृतसंसारबन्धसत्त्वात् कथं त्वत्प्राप्तिः ? इत्यत उक्तम्– **तेषामेवेति ।।** उक्तप्रकारकभजनवताम् अनुकम्पार्थम् अनुग्रहार्थमेव, न पुनः किमपि फलमुद्दिश्य, इत्येवकारः । अज्ञानजं तमः तम इव क्लेशरूपं संसारम् । आत्मभावस्थः स्वचित्तवृत्तौ विषयतया स्थितः सन् भास्वता विरोधिनाशनदक्षतया दीप्यमानेन, ज्ञानमेव दीपः तेन नाशयामि इति ।। ११ ।।

**अर्जुन उवाच–**

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ।। १२ ।।**

श्लोकः १२

## भाष्यम्

**ब्रह्म परिपूर्णम् । 'अथ कस्मादुच्यते परं ब्रह्म । इति। बृहत् बृहत्या बृहति बृंहयति' इति च श्रुतिः । 'बृह बृहि वृद्धौ' इति । 'परमं यो महद् ब्रह्म' इति च । विविधमासीदिति विभुः । तथा हि वारुणशाखायाम् 'विभु च प्रभु च प्रथमं मेहनावत इति स ह्येव प्राभवत् विविधोऽभवत्' इति । 'सोऽकामयत बहुः स्यां प्रजायेय' इत्यादेश्च ।। १२ ।।**

भावप्रदीपिका (प.टी.)– ब्रह्मविभुशब्दयोः सप्रमाणकमर्थभेदमाह– **ब्रह्मेति** ।। पृथिव्याख्यमेहनावतो हरे रूपं विभु प्रभु चेत्यर्थः ।।

प्रमेयदीपिका (ज.टी.)– ब्रह्मविभुशब्दावैक्यार्थपरिहाराय क्रमेण सप्रमाणकं व्याचष्टे– **ब्रह्मेति** ।। परं वस्तु ब्रह्म इति कस्मादुच्यते । बृहति पूर्णं भवति । बृंहयति पूरयति चान्यान् । बृहतेर्मनूप्रत्ययः, अमागमश्च । ईश्वरो ब्रह्मणोऽन्यः । स कथं परं ब्रह्मेत्युच्यते? इत्यत उक्तम्– **परममिति** ।। विविधम् अनेकरूपत्वेन अभवत् । मेहनावतः सेचकस्य भगवतः प्रथमं रूपं 'विभु प्रभु च' इत्येतदनूद्य व्याख्यायते । प्राभवत् समर्थोऽभवदिति प्रभुः । विविधोऽभवदिति विभुः । 'सोऽकामयत' इति विविधभवने श्रुत्यन्तरम् । 'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्' इति च स्मृतिः ।। १२ ।।

भावबोधः (र.टि.)– ।। **अमागमश्चेति** ।। मिदचोऽन्त्यात्पर इति हकारात्पूर्वममागम इत्यर्थः । **विप्रसम्भ्य इति** ।। अनेन विप्रेत्युपसर्गाभ्यां परस्य भूधातोरसंज्ञायां यौगिकार्थविवक्षायां कर्तरि डुप्रत्यये डित्वसामर्थ्यादभस्याप्यूकाररूपटेर्लोपे प्रत्ययोकारसम्बन्धे विभु प्रभ्विति रूपनिष्पत्तिरिति भावः ।। १२ ।।

भावदीपः (रा.टि.)– ।। **मनिनिति** ।। 'अन्येभ्योऽपि दृश्यते' इति सूत्रेण 'आतो मनिन्क्वनिब्वनिपश्च' इति पूर्वसूत्रादनुवृत्तमनिन्प्रत्यये दृशिग्रहणात्, अमागमे यणादेशे च रूपसिद्धेरिति भावः ।। **विप्रसम्भ्य इति** ।। वीत्याद्युपसर्गत्रयात् परतो विधातोः डप्रत्यय इत्यर्थः । डित्वात् टेर्लोपे 'विभुः, प्रभुः, सम्भूतिः' इति रूपमिति भावः ।। १२ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। बृहतेर्मनूप्रत्य इति ।।** वृद्ध्यर्थाद् बृहतेः अन्येभ्योपि दृश्यते इति मनूप्रत्यय इत्यर्थः ।। यद्यप्यत्र 'आतो मनिन्क्वनिब्वनिपश्च' इत्यतो मनिनादेरनु-वृत्तेर्बृहतेर्मनिनिति वक्तुमुचितम् । तथापि मनिन्प्रत्यये इनोर्लोपाभिप्रायेण मनूइत्येवोक्तमिति ध्येयम् ।।

**अमागमश्चेति ।।** दृशिग्रहणसामर्थ्यादिति भावः ।। तथाच बृहतेर्मनूप्रत्यये अमागमे तस्य च मित्वेन मिदचोऽन्त्यात् पर इति हकारात् पूर्वम् अमागमे 'इको यणचि ' इति यणि ब्रह्मन् इति रूपं सिद्ध्यतीति द्रष्टव्यम् ।।

यद्यप्यत्र 'बृंहेः नौच्च' इत्यौणादिकसूत्रे मनिन्प्रत्ययो नकारस्य चाकर इत्यभिहितत्वात् तत्प्रकारेणैव ब्रह्मशब्दनिष्पत्तिसम्भवे दृशिग्रहणसामर्थ्येन अमागममुपपाद्य ब्रह्मशब्दनिष्पादन-मनुचितम् । नच बृंहेः नस्याकारो विधीयते । नत्वयं बृंहिः । किन्तु बृहिरेवेत्युक्त-प्रकाराश्रयणमावश्यकमेवेति वाच्यम् । 'बृह बृहि(बृंह?) वृद्धौ' इत्येव भाष्यकारैरभिधानेन अत्रापि बृंहेरेवाश्रयणे विरोधाभावादिति ।। तथापि 'बृहजातिजीवकमलासनशब्दराशिषु' इति धात्वन्तरादपि एतद्रूपनिष्पत्तिरिति सूचनायैवमुक्तमिति द्रष्टव्यम् ।। **विप्रसम्भ्योड्वसञ्ज्ञाया-मिति ।।** अत्र भुवः सञ्ज्ञान्तरयोः इति अनुवर्तनीयम् । तथाच वि,प्र, सम् ऊह इत्येतत्पूर्वात् भुवः असञ्ज्ञायां यौगिकार्थविवक्षायां कर्तरि डुप्रत्ययो भवतीति सूत्रार्थः । तथाच वि, प्रेत्युप-सर्गपूर्वात् भवतेः डुप्रत्यये डित्वसामर्थ्यात् अभस्यापि उकाररूपटिलोपे प्रत्ययउकारसम्बन्धे विभु प्रभु इति रूपसिद्धिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)– ब्रह्मविभुशब्दौ** 'परं ब्रह्म' इत्यत्र ब्रह्मशब्दः 'अजं विभुम्' इत्यत्र विभुशब्दः ब्रह्मशब्दस्यापरिच्छेद्यवस्तुवाचित्वाद्, विभुशब्दस्य च व्यापिवस्तुवचनत्वाद् ऐकार्थ्यमिति भावः । श्रुतौ परपदम् उद्देश्यस्य, ब्रह्मपदं च विशेष्यस्य समर्पकमिति भावेना-ध्याहरन् योजयति– **परं वस्त्विति ।।** 'बृहति' इत्यनुवादः, 'पूर्णं भवति' इति व्याख्यानम् । यद्यपि बृहतिः शब्विकरण इति 'बर्हति' इति वक्तव्यम् । तथा च धातुवृत्तिः 'बर्हति' इति । तथापि छन्दस्त्वात्, सञ्ज्ञापूर्वकविधेरनित्यत्वाच्च गुणो न प्रवर्तत इति बोद्धव्यम् । **पूरयति** स्वयोग्यतानुसारेण **अन्यान्** मुक्तान् । **मनूप्रत्यय इति ।।** 'मनिन् सर्वधातुभ्यः' इत्यौणादिको मनिन्प्रत्यय इत्यर्थः । इकारनकारयोर्लोपनीयत्वाशयेन 'मनूप्रत्ययः' इत्येवोक्तम् । 'बृंहेर्नलोपश्च' इत्यौणादिकसूत्रे वृत्तिकारवचनमेवानुवदति– **अमागमश्चेति ।।** चशब्दाद् अमागमसमुच्चय इति

श्लोकः १२

भावः । बाहुलिकादमागम इत्यपि आहुः । तस्यान्त्यादचः परस्य यणादेशे 'नेड्वशि कृति' इति सूत्रकारमतेन 'वरमनादौ कृति' इति वार्तिककारमतेन च इडागमनिषेधे च 'ब्रह्म' इति रूपमिति भावः ।

'बृंहयति' इति भाष्ये 'बृहि वृद्धौ' इति धातोः नुमागमे ण्यन्तस्य रूपम् । 'बृहतेरनिटि' इति वार्तिकं प्रत्याचक्षणेन भाष्यकृता 'बृंहयति' इत्युक्तत्वाद् 'बर्हयतीति नलोपः स्यात्' इति चोद्यानवकाशः । 'दृह, दृहि, बृह, बृहि वृद्धौ' इति धातुपाठेऽपि भाष्ये 'बृहि वृद्धौ' इति पठन्तीत्युक्तिः 'पामादिभ्यो नः' इत्यादिवैयाकरणोक्तिरिव उपयुक्तमात्रग्रहणाभिप्राया । स्वामिनस्तु 'अन्येभ्योऽपि दृश्यन्ते' इति पाणिनिसूत्रे 'आतो मनिन् क्वनिप् वनिपश्च' इति सूत्राद् अनुवृत्तौ मनिन्प्रत्ययः क्वनिप्प्रत्ययो वनिप्प्रत्ययो विच्प्रत्ययश्च इत्येते अन्येभ्योऽपि धातुभ्यो भवन्तीति वृत्तावुक्तत्वाद् अत्र बृहेर्मनिन्प्रत्ययः । 'दृशिग्रहणं प्रयोगानुसरणार्थम्' इति वृत्तिवचनादमागमो यणादेश इडागमाभावश्च । सति चैवं 'ब्रह्म' इति रूपमिति व्याख्यातवन्तः ।

'परमं यो महद् ब्रह्म' इति भारतवचने यच्छब्दस्य 'तस्य लोकप्रधानस्य विष्णोः' इत्यनेनान्वयः । 'पठन्ति' इत्यनुवृत्त्यर्थश्चशब्दो भाष्ये । विविधत्वं न स्वरूपेण किन्तु बहुरूपत्वेनेति व्याचष्टे– **विविधमनेकेति** ।। 'मिह सेचने' इति धातोः निष्पन्नो मेहनाशब्दः सेचनार्थक इति भावेनाह– **सेचकस्येति** ।। श्रुतावन्वयं दर्शयन्नुत्तरवाक्यम् अवतारयति– **प्रथममित्यादि** ।। 'प्राभवत्' इत्यस्यार्थः– **समर्थोऽभवदिति** ।। 'बहु स्याम्' इति बहुभाव-श्रवणादाह– **विविधभवने श्रुत्यन्तरमिति** ।। भूधातोः कथं ह्रस्वत्वम् इत्यतः पाणिनिसूत्रेण तन्निष्पादयति– **विप्रसम्भ्य इति** ।। **स्मृतिः** पाणिनिस्मरणम् । 'वि, प्र, सम् इत्येभ्य उपसर्गेभ्यः परस्य भूधातोः डुप्रत्ययः स्याद् असञ्ज्ञायाम्' इति तदर्थः । न केवलं श्रौतनिर्देशो धातोः ह्रस्वत्वे प्रमाणम्, अपि तु पाणिनिसूत्रं चेति चकारः ।।

**गीताक्षरार्थस्तु**– सामान्येनोक्तौ विभूतियोगौ श्रुत्वा विशेषविवित्सया अर्जुनोऽपृच्छत् इत्युच्यते– **अर्जुन उवाच इति** ।। परम् उत्तमं ब्रह्म परिपूर्णं पूरयितृ च वस्तु । मुक्तगणोऽपि स्वयोग्यतापेक्षया पूर्णः स्वानुग्राह्यपूरयिता च । इत्यतः – **परमिति** ।। उत्तमत्वं चात्र स्वातन्त्र्यरूपं विवक्षितमिति ज्ञातव्यम् । परं धाम उत्तमं तेजः, उत्तमाश्रयो वा । परमं पवित्रं सकलपापपावनसमर्थं वस्तु भवान् एव ।। १२ ।।

श्लोकः १३

**भावदीपिका (श्री.टि.)– ।। ऐकार्थ्येति ।।** वृद्ध्यर्थकब्रह्मशब्दस्य देशतो वृद्ध्यर्थकत्वाद् , विभुशब्दस्यापि तदर्थकत्वाद् ऐकार्थ्यमित्यर्थः । **बृहतेरिति ।।** तथा च 'बृह वृद्धौ' इत्यस्माद्धातोर्मन्प्रत्ययेऽमागमे, मित्त्वात् हकारात्पूर्वं जाते 'बृ अह् मन्' इति जाते, इको यणादेशे, 'ब्रह् मन् ब्रह्मन्' इति प्रातिपदिकसिद्धिः । पश्चात् स्वाद्युत्पत्तौ 'ब्रह्म' इति भवति । एवमुत्तरत्रापि द्रष्टव्यम् । **ब्रह्मणः** शुद्धात् । **परममिति ।।** 'अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्' इत्याद्युक्तविशेषणविशिष्टस्यैव विष्णोः 'परमं यो महद् ब्रह्म' इत्यत्र यच्छब्देन परामर्शादिति भावः । 'मिह सेचने' इति धातोः 'सेचकस्य' इत्युक्तम् । भक्ताभिलषितसेचकस्येत्यर्थः । **विप्रसम्भ्य इति ।।** एभ्यः परस्य भूधातोरसञ्ज्ञायां यौगिकार्थविवक्षायां डुप्रत्ययो भवतीति पाणिनिसूत्रार्थः । 'विभुः', 'स प्रभु' इत्युदाहरणम् । तथा च विप्र इत्युपसर्गाभ्यां परस्य 'भू सत्तायाम्' इति धातोः कर्तरि डुप्रत्यये डित्त्वात् टीभूतस्य ऊकारस्य लोपे प्रत्ययोकारे च मिलिते सति 'विभु' 'प्रभु' इति प्रातिपदिकनिष्पत्तिर्द्रष्टव्या ।। १२-१५ ।।

**भावप्रकाशः (कृ.टि.)– ।। बृहतीति ।।** बृहेः शब्विकरणत्वेऽपि सञ्ज्ञापूर्वकविधेरनित्यत्वाद्गुणाभाव इति बोध्यम् । **मन्प्रत्यय इति ।।** सर्वधातुभ्यो मनिन्नित्युणादिसूत्रेण मनिन्प्रत्यय इत्यर्थः । नकारेकारयोः लोपाभिप्रायेण मन्नित्युक्तम् । अमागमश्च बाहुलकादिति बोध्यम् । इदं च बृहे रूपसाधनार्थमुक्तम् । यदा बृंहे रूपं तदा बृंहेरन्तर्णीतण्यर्थान्मनिन्प्रत्यये बृंहेर्नोच्चेत्युणादिसूत्रेण नकारस्याकारादेश इति बोध्यम् । **बृंह वृद्धाविति ।।** बृहीत्येव धातुपाठेपि इदितो नुम्धातोरिति नुमि सति फलितमभिप्रेत्य बृंहेत्युक्तम् । **सेचकस्येति ।।** मिह सेचन इति स्मृतेर्मेहनाशब्दस्य सेचनार्थत्वादिति भावः । **विप्रसंभ्य इति ।।** वि प्र सं एभ्यः उपसर्गेभ्यः पराद्भुवो डुः स्याद् असञ्ज्ञायामिति सूत्रार्थः । तथा च कर्तरि डुप्रत्यये डित्वाट्टिलोपे विभु प्रभुशब्दनिष्पत्तिरिति भावः ।। १२ ।।

## आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
## असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ।। १३ ।।

**भावरत्नकोशः (सु.टि.)–** किञ्च सर्वे ऋषयः ज्ञानिनो मरीच्याद्या वा तथा देवर्षिः नारदः असितदेवलनामानौ ऋषी, व्यासः पाराशर्यः पुरुषं पूर्णषड्गुणं सर्वशरीरेषु सन्तं वा, शाश्वतम् एकरूपं दिव्यं लोकविलक्षणम् आदिदेवं देवानाम् आदौ विद्यमानम्, अजं जन्महीनं

श्लोकः १४-१६

विभुं विविधभवनहेतुना विभुशव्दवाच्यं त्वा माहुः । 'अहं सर्वस्य प्रभवः' इत्यादिना स्वयं च मे मह्यं व्रवीषि व्यक्तं भाषसे ।। १३ ।।

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः।। १४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** हे केशव ब्रह्मरुद्रादिनियामक यत् माहात्म्यं वदसि एतत्सर्वम् ऋतं मन्ये । न किञ्चिदपि मृषा । हे भगवन् अतिपरिपूर्णतमज्ञानैश्वर्य-वीर्यानन्दश्रीशक्त्यादिसम्पन्न ! ते तव व्यक्तिं सामर्थ्यातिशयं देवा दानवाश्च न विदुः । 'देवदानवाः' इत्युत्तमाधमजीवोपलक्षणम् । तव सामर्थ्यं विशेषेण केऽपि न जानन्तीत्यर्थः । तव व्यक्तिम् अवतारं देवाः स्वानुग्रहार्थं कृतमपि तत्त्वेन न विदुर्वा । 'नराः स्वानुग्रहार्थं कृतमपि तत्त्वेन न विदुः' इत्यपि केचिदाहुः ।। १४ ।।

**स्वयमेवाऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ।। १५ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तव सर्वाविज्ञेयत्वे स त्वमेव स्यात् ? इत्यत उच्यते– **स्वयमेवेति** ।। हे पुरुषोत्तम त्वं स्वयमेव अन्यं वेदयितारमनपेक्ष्य आत्मना स्वभावेन स्वसामर्थ्येन वा आत्मानं स्वात्मानं वेत्थ जानासि । भूतभावन भूतोत्पादक, भूतानामीशितश्च. देवदेव देवानामपि देव देवोत्तम जगत्पते जगद्रक्षक ।। १५ ।।

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ।। १६ ।।**

## भाष्यम्

**विभूतयः विविधभूतयः ।। १६ ।।**

भावप्रदीपिका (प.टी.)– विभूतिशब्दं व्याचष्टे– **विभूतय इति** ।। १६ ।।

**प्रमेयदीपिका (ज.टी.)**– विभूतयः ऐश्वर्याणि पृष्टानि । नानारूपाणि वक्ष्यन्ते । किं केन सङ्गतम्? इत्यत आह– **विभूतय इति** ।। विविधभूतयः नानाभूतानि रूपाणि ।। १६ ।।

**भावरत्नकोशः (सु.टि.)**– चोदितासङ्गतिपरिहाराय 'विविधभूतयः' इति भाष्यमनूद्य व्याचष्टे– **विविधेति** ।। नात्र विभूतिशब्देनैश्वर्यं विवक्षितम् । किन्तु 'नानाभूतानि रूपाणि' इति नोक्तासङ्गतिशङ्केति भावः ।।

**गीताक्षरार्थस्तु**– एवं स्तुत्वा लब्धव्यमुच्यते– **वक्तुमर्हसीति** ।। अशेषेण मद्योग्यतामपेक्ष्य अनवशेषेण दिव्या आत्मनो विभूतयः विविधभूतयः नानाभूतानि रूपाणि । दुर्विज्ञेयत्वस्फोरणाय द्वितीयार्थे प्रथमा । किं मयैव वक्तव्या विभूतयः ? अन्यैरपि तज्ज्ञानं किं न स्यात् ? इत्यत उक्तम्– **दिव्या ह्यात्मविभूतय इति** ।। आत्मनो नानाभूतानि रूपाणि यतो दिव्याः अलौकिकाः, याभिर्विभूतिभिः लोकानिमान् लोकान् नियामकत्वेन त्वं व्याप्य तिष्ठसि । ता वक्तुमर्हसीति सम्बन्धः । त्वदन्यो विभूतीनां वक्ता दुर्लभ इति भावः ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– भूतिशब्दस्यैश्वर्यार्थत्वाद्विविधैश्वर्याणीति प्रतीतिं निरस्यति– **नानाभूतानीति** ।। १६ ।।

## कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
## केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ।। १७ ।।

**गीताक्षरार्थस्तु** निरन्तरमचिन्तनया विभूतिरूपाणि जानीहि । किमिति मद्वचनं प्रार्थयसे ? इत्यत उच्यते– **कथमिति** ।। त्वां सदा परिचिन्तयन् अपि अहं त्वद्वचनाभावे हे योगिन् अचिन्त्यशक्ते ! अज्ञानिबोधनसामर्थ्यातिशय ! इदं सम्बोधनम् । तव विभूतीः कथं विद्यां विजानीयाम् । अतो हे भगवन् मया केषु केषु भावेषु पदार्थेषु विभूतिरूपेण स्थितस्त्वं चिन्त्योऽसि ।। १७ ।।

## विस्तरेणाऽत्मनो योगं विभूतिं च जनार्दन ।
## भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ।। १८ ।।

श्लोकः १८

# भाष्यम्

**न जायते अर्दयति च संसारमिति जनार्दनः । तथाच बाभ्रव्यशाखायां 'स भूतः स जनार्दनः इति । स ह्यासीत् स नासीत् सोऽर्दयति' इति ।। १८ ।।**

भावप्रदीपिका (प.टी.)– जनार्दनशब्दार्थं सप्रमाणकमाह– **न जायत इति ।।**

**प्रमेयदीपिका** (ज.टी.)– 'अर्द गतौ याचने च' इति वचनादासुरजनानां नरकादिगमयितृत्वात्, जनैर्याच्यत्वाद् वा जनार्दनः' इति सङ्करः। तदप्रामाणिकं व्याख्यानम् । इदं तु श्रौतत्वादुपादेयमिति भावेनाऽह– **न जायत इति ।। नञः परनिपातः । अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणात् । अर्दयति गमयति । स ह्यासीदिति ।। भूतः अनादितः सत्तावानित्यर्थः । स नासीत् न जन्मवान् । सोऽर्दयति इति जनार्दनः ।। १८ ।।**

**भावबोधः** (र.टि.)– ननु न जायत इत्यादिव्युत्पत्तावजनार्दन इति स्यादित्यत आह– **परनिपात इति** ।। नन्वेवं सति 'नलोपो नञः' इति नलोपे द्वयोरकारयोः सवर्णदीर्घे कृतेऽजार्दन इति स्यादित्यत आह– **अत एवेति** ।। परनिपातादेवेत्यर्थः । परनिपाते सति नलोपाभावः कुत इत्यत आह– **उत्तरपद इति** ।। अलुगुत्तरपद इत्यधिकारादित्यर्थः । **गमयतीति** ।। अन्तर्णीतण्यर्थादर्द गतावित्यतः कर्तरि ल्युप्रत्यये तस्य युवरोरनाका-वित्यनादेशेऽर्दनेति स्थिते जनश्चासावर्दनश्चेति जनार्दन इति रूपमिति भावः ।। १८ ।।

**भावदीपः** (रा.टि.)– ननु 'न जायते' इति व्युत्पत्तौ 'अजः' इति भाव्यम् । 'जन' इति तु कथम्? इत्यत आह– **नञः परनिपात इति** ।। निरुक्तिबलादिति भावः । तावता कथं न लोपाभावः? इत्यत आह– **अत एवेति** ।। परनिपातत्वादेवेत्यर्थः । तत्रापि कुतः? इत्यत आह– **उत्तरेति ।। तस्येति** ।। लोपस्येत्यर्थः । 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारात् 'नलोपो नञः' इति सूत्रे 'नञो नलोपो भवति, उत्तरपदे परतः' इति पाणिन्युक्तेः । इह च जपदस्य पूर्वपदत्वेन नञ उत्तरपदपरत्वाभावान्नलोपाभाव इत्यर्थः ।। गत्यर्थ एवात्र ग्राह्यः, नञो नान्यार्थ इति भावेनाऽह– **गमयतीति** ।। परिहरतीत्यर्थः ।।

**वाक्यार्थप्रदीपः** (पां.टि.)– ननु न जः अज इति भवितव्यम् । अस्य नञ्समासत्वेन

नञ्समासे च तस्यैव प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात् 'उपसर्जनं पूर्वम्' इत्युसर्जनस्यैव पूर्वत्वनियमात् 'जन' इति तु कथमित्यत आह **नञः परनिपात इति** ।। उदाहृतप्रमाणबलाद् नञः परनिपात इत्यर्थः ।। ननु तथापि 'नलोपो नञः' इति नञो नकारस्य लोपे द्विवारं सवर्णदीर्घे जार्दन इति स्यात् , जनार्दन इति तु कथमित्यत आह– **अत एवेति** ।। नञः परनिपातादेवेत्यर्थः । परनिपातेपि नलोपाभावः कुत इत्यत आह– **उत्तरपदे तस्य स्मरणादिति** ।। नलोपो नञः इत्यत्र अलुगुत्तरपदे' इत्यतः उत्तरपद इत्यनुवृत्तेः उत्तरपदपरत एव नलोपविधानात् न जायत इति जन इत्यत्र नञः परतः उत्तरपदाभावेन नलोपाप्राप्तिरिति भावः ।

ननु जन इति नञोपि अर्दनशब्दे परतः 'नलोपो नञः' इति लोपः स्यादेवेति चेन्न । स्त्रैणार्थ इत्यत्र स्त्रीपुंसाभ्यां नञ्स्नञौ भवनाद् इति विहितस्य नञो नलोपाभावार्थं 'नलोपो नञः' इति सूत्रेण 'रात्रेः कृति विभाषा' इत्यतो अनुवृत्तायाः विभाषायाः व्यवस्थितविभाषात्वस्य न्यास एवोक्तत्वेन जनार्दन इत्यत्रापि नलोपाभावोपपत्तेरित्याहुः ।। वस्तुतस्तु प्रत्ययङित्वस्य वृद्धिस्वरयोश्चरितार्थत्वात् निपातत्रित्वस्याचरितार्थत्वात् नञ्ग्रहणेन सूत्रे प्रत्ययप्रसक्तेरावाभावात् पूर्वपदत्वेन नञः विशेषणाद्वा नञः पूर्वपदत्वाभावादेव स्त्रैणार्थ इत्यत्र नलोपाप्रसक्तिरिति पदमञ्जर्यामुक्तत्वेन स्त्रैणार्थ इत्यस्यान्यथासिद्धतया विभाषाग्रहणानुवृत्यभावेन तथा समाधानस्याशक्यत्वादिति ध्येयम् ।।

**गमयतीति** ।। अन्तर्णीतण्यर्थात् अर्द गतौ इत्यत 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणात् कर्तर्यपि ल्युटि तस्य 'युवोरनाकौ' इति अनादेशे अर्दन इति प्रातिपदिकनिष्पत्तिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)– ।। वचनात्** धातुव्याख्यानात् । 'याच्यत्वात्' इति वदन् बाहुलकात् कर्मणि ल्युटि, तस्य टित्करणसामर्थ्यात् पुंलिङ्गत्वमित्यभिसन्धत्ते । **शङ्क इति** ।। तथा च तदीयं भाष्यम् 'असुराणां देवप्रतिपक्षजनानां नरकादिगमयितृत्वात्, अभ्युदयनिश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा' इति । इदं तु 'न जायते, अर्दयति संसारम्' इति व्याख्यानं तु । तर्हि 'अजार्दन' इति स्यात् इत्यत आह– **नञ इति** ।। उपसर्जनस्य पूर्वं निपातनीयस्यापि श्रुतिबलात् परनिपातः पश्चात् प्रयोज्यत्वमित्यर्थः । तथापि 'नलोपो नञः' इति नकारलोपे सवर्णदीर्घे च 'जार्दनः' इति स्यादिति कुतो न स्यात् ? इत्यत आह–

श्लोकः १८

**उत्तरपद इति** ।। 'नलोपो नञः' नञो नकारस्य लोपो भवति उत्तरपदे परतः, 'न ब्राह्मणः अब्राह्मणः' इति सूत्रार्थोदाहरणे। अत्रैवोत्तरपदाधिकारभाष्ये 'उत्तरपद इति किम्? परमनः' इति प्रत्युदाहरणम् । एवं प्रकृतेऽपि 'जनः' इति नञः परनिपातस्य श्रौततया तस्योत्तरपदे परतोऽनुशिष्टो लोपो न भवति । नञ एव जपदादुत्तरपदत्वेन तस्यान्योत्तरपदकत्वाभावादिति भावः ।

अत्र एके चोदयन्ति । नञोऽप्युत्तरपदम् अर्दनशब्द एवास्तीति, तस्मिन् परतस्तस्य लोपः स्यादेवेति टीकोक्तो लोपाभावश्चिन्त्य इति । तन्न । नञा समस्यमानोत्तरपद एव तच्छास्त्र-प्रवृत्तेरभिमतत्वात् । तथा हि 'नलोपो नञः' इति सूत्रे 'उत्तरपदे' इत्यनुवर्तते । तत्सामर्थ्याच्च 'पूर्वपदम्' इत्येतदाक्षिप्यते । तच्च नञा विशेष्यते 'नञ्रूपं यत् पूर्वपदम्' इति । तथा च यस्मिन् समासे पूर्वपदोत्तरपदभावापन्नपदद्वयघटिते नञ् पूर्वपदम्, तस्मिन्नेव समासे यदुत्तरपदं तस्मिन् परतो नञो नकारस्य लोप इति निर्गलितार्थोऽभिमत इति, न प्रकृते नलोपप्रसक्तिः । नञा समस्यमानस्य जपदस्योत्तरपदत्वाभावाद्, अर्दनशब्दस्य च नञ्घटितसमासानन्तर्गतत्वात् । नचैवं विवक्षायाम् 'स्त्रैणार्थः' इत्यत्रार्थशब्दे परतः 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति सूत्रविहिततद्धितप्रत्ययरूपनञो नकारस्य लोपः स्यादिति पर्यनुयोगस्य, 'रात्रेः कृति विभाषा' इत्यतो विभाषाग्रहणानुवृत्तेः, तस्याश्च विभाषाया व्यवस्थितविभाषात्वाभ्युपगमेन नोक्तस्थले नलोप इति न्यासकारसमाधानमयुक्तं स्यात् । पूर्वपदत्वविवक्षयैव नलोपापादनाप्रसक्तेरिति वाच्यम् । उपायस्योपायान्तरादूषकत्वाद् । उक्तविवक्षामनभ्युपगम्य नञ्घटितसमासत्वमात्रा-श्रयणेन नञ्लोपाक्षेपसमाधाने न्यासकारेण कृते, अस्माभिस्तु पूर्वपदत्वाश्रयणेन । न्यासकारोक्त-परिहाराभिप्रायेणैव 'नगनाकादिशब्दवद् अयंशब्दो ज्ञातव्यः' इति टीकाव्याख्यानचन्द्रिकायां नारायणशब्दे नञो नलोपाभाव उक्तः ।

हरदत्तस्तु 'स्त्रैणार्थः' इत्यत्र नञो नलोपो न भवति । 'नञो नलोप' इत्यत्र निरर्थकानु-बन्धनञो ग्रहणात् । तद्धितनञस्तु सानुबन्धकस्यैवात्र ग्रहणम्, अनुबन्धस्य च वृद्धिस्वरौ प्रयोजनमिति, नञो नलोपः स्यादिति न शंक्यम् । उत्तरपदग्रहणेन पूर्वपदाक्षेपाद्वा तदप्रसक्तिः । तद्धितस्य नञोऽपदत्वादिति समाधानद्वयमभ्यधत्त । तथा च न्यासहरदत्तमतद्वयेनापि नात्र लोपशङ्केति द्रष्टव्यम् । 'गत्यर्थाकर्मक' इत्यादिना भवतेः कर्तरि निष्ठायाम् अवध्यनुक्तेः, अस्तेश्च भवत्यर्थकत्वाद् 'अनादिकालतः सत्तावान्' इति कथं लभ्यते इत्यत आह– **स ह्यासीदिति** ।। 'न जायते' इति भाष्याविसंवादायाह– **नासीन्न जन्मवानिति** ।।

**गीताक्षरार्थस्तु**– तामात्मनो विभूतिं योगं च सामर्थ्यं विस्तरेण भूयः पुनः कथय, ते अमृतं वचनामृतं शृण्वतो मे तृप्तिर्नास्ति हि । हिशब्दो भगवताऽप्येतदवगतमिति द्योतनार्थः । हे जनार्दन न जायत इति जनः, नञः परनिपातः । अत एव नलोपाभावः । उत्तरपदे तस्य स्मरणात् । 'जनेर्डः' । अर्दयति गमयति संसारमिति अर्दनः । अर्दतेर्गतिकर्मणो ण्यन्तात् ल्युप्रत्यये रूपम् । जनश्चासावर्दनश्च जनार्दनः । स्वयं जननरहितः, अन्येषां संसारं प्रापयिता चेति जनार्दनः, तत्सम्बुद्धिरिति ।। १८ ।।

**भावदीपिका (श्री.टि.)**– ननु 'न जायते' इति 'नजः' इति भाव्यम् । तथा च 'नजश्चासावर्दनश्च' इति 'नजार्दनः' इति स्यात् ? इति चेत्, तत्राह– **नञ इति** ।। तथा च 'न जायत इति नजः' इति भाव्ये नञः परनिपाते 'जनः' इति भवति । ननु तथाऽपि 'नलोपो नञः' इति नञो लोपे 'अजः' इत्येव स्यात्, तथाच 'अजार्दनः' इत्येव भवेत्? इति चेत्, तत्राह– **अत एवेति** ।। नञः परनिपातादेवेत्यर्थः । तथाऽपि कथं नलोपाभावो नेति चेत्, तत्राह– **उत्तरपद इति** ।। 'अलुगुत्तरपदे' इति पूर्वसूत्राद् 'उत्तरपदे' इत्यनुवर्त्य 'नलोपो नञः' 'नञो नस्य लोपः स्याद् उत्तरपदे परतः' इत्युक्तत्वात् । यद्यत्र 'नजः' इत्येव स्यात्, तदा 'जः' इत्युत्तरपदे परतः नञो लोपः स्यात् । न चैवम् । नञः परनिपाताङ्गीकारेण 'जनः' इत्यस्मादुत्तरत्र पदाभावात् । अतो न नञो लोपः । तथा च 'जनः' इत्युपपन्नमिति द्रष्टव्यम् । 'जनः' इत्यस्य 'अर्दनः' इत्यस्य च स्वतन्त्रभगवन्नामत्वेन 'अर्दनः' इत्यस्योत्तरपदत्वानङ्गीकारात्, नञर्थान्वयवत एवात्रोत्तरपदत्वविवक्षणादिति ध्येयम् ।। १८ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **गमयितृत्वादिति** ।। अनेन अर्दयतीत्यर्दनः । नन्यादित्वाल्ल्युः । णेरनिटीति णिलोपः । युवोरनाकावित्यनादेशः । ततो जनानामर्दनो जनार्दन इत्युक्तं भवति । **याच्यत्वाद्वेति** ।। कृत्यल्युटो बहुलमिति बाहुलकात्कर्मणि ल्युडिति भावः । ननु जायत इति जः । अन्येष्वपीति डः । ततो नञ्समासे नलोपो नञ इति नलोपे चाज इति प्रयोगः स्यादित्यत आह– **नञः परनिपात इति** ।। श्रौतत्वादिति भावः । **अत एवेति** ।। परनिपातादेवेत्यर्थः । **उत्तरपद इति** ।। नलोपो नञ इत्यत्रालुगुत्तरपद इति सूत्रादुत्तरपद इति अधिकारादिति भावः । **गमयतीति** ।। अत्र व्युत्पादनं प्रागेव कृतम् ।। १८ ।।

श्लोकः १९,२०

**श्रीभगवानुवाच–**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ।। १९ ।।**

**भावरत्नकोशः (सु.टि.)–** 'हन्त ते कथयिष्यामि' इत्यादेः 'अथवा बहुनैतेन' इत्यन्तस्य गीतावचनस्याक्षरार्थस्तु–

'द्विविधं वैभवं विष्णोः प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।
भिन्नं ब्रह्मादिर्जीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत्तिरोहितवैभवम् ।।'

इति प्रमाणसिद्धानि द्विविधानि भगवतो विभूतिरूपाणि 'वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः' इति प्रश्नस्योत्तरतया निरूपयिष्यता प्रतिज्ञा क्रियते– **भगवानुवाच हन्त त इति ।।** 'हन्त' इति हर्षेऽव्ययम् । हे कुरुश्रेष्ठ या हि दिव्या आत्मनो विभूतयः पृष्टाः ता दिव्या आत्मविभूतयः आत्मविभूतीः नानाभूतानि रूपाणि इति, द्वितीयार्थे तु प्रथमा, प्राधान्यतः प्रधानतया स्थितानि, ते तुभ्यं कथयिष्यामि । यतो मे विस्तरस्य विभूतीनां वैपुल्यस्य अन्तः अवधिः नास्ति ।। १९ ।।

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ।। २० ।।**

**भावरत्नकोशः (सु.टि.)–** विभूतिविवक्षया प्रथमम् 'एतावच्छृणु' इति स्वरूपस्थितिरुच्यते– **अहमिति ।।** गुडाकायाः निद्राया ईशो गुडाकेशः जितनिद्रः, तत्सम्बुद्धिः । कर्तव्येषु जागरूक अहमात्मा आततगुणः सर्वेषां भूतानाम् आशये अन्तर्हृदये स्थितः नियामकतया । आत्मा व्याप्तोऽपि सर्वप्राणिहृदयगुहाश्रित इति स्वामिनः । किञ्च भूतानामहम् एव आदि मध्यम् अन्तश्च सृष्टिस्थितिप्रलयहेतुः । अनेन प्रत्यक्षतः प्रतीयमानपरिच्छिन्नस्वरूपस्य तव वक्ष्यमाणदिव्यविभूतिशालित्वम् असम्भावितमिति पर्यनुयोगोऽपहस्तितः ।। २० ।।

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ।। २१ ।।**

## भाष्यम्

**विष्णुः सर्वव्यापित्वप्रवेशित्वादेः । 'विष्लृ व्याप्तौ' ,'विश प्रवेशने' इति च पठन्ति ।**

**'गतिश्च सर्वभूतानां प्रजानां चापि भारत ।**
**व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।।**
**अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत ।**
**क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसञ्ज्ञितः' इति मोक्षधर्मे ।। २१ ।।**

भावप्रदीपिका (प.टी.)– प्रत्यक्षविभूतिवाचिविष्ण्वादिशब्दान् सप्रमाणकं व्याचष्टे– **विष्णुरिति** ।। मे व्याप्तौ रोदसी तिष्ठतः मयेति ।।

प्रमेयदीपिका (ज.टी.)– द्विविधं विभूतिरूपम् । प्रत्यक्षं तिरोहितं च । अत्र विष्ण्वादिकं प्रत्यक्षमिति ज्ञापयितुं तच्छब्दान् व्याकुर्वन् 'आदित्यानामहं विष्णुः' इति विष्णुशब्दं तावत् सप्रमाणकं व्याकरोति– **विष्णुरिति** ।। 'सर्व'इति योग्यतया सम्बद्ध्यते । आदिपदेन वक्ष्यमाणार्थसङ्ग्रहः । चशब्दो धात्वन्तरसमुच्चयार्थः ।। गच्छन्त्यनेनेति गतिः । भूतानां पृथिव्यादीनां प्रजानां ब्रह्मादीनाम्। 'वी गतिव्याप्तिप्रजननकान्त्यशनखादनेषु' इत्यतो गत्यर्थात् क्नुप्रत्ययः । धातोर्ह्रस्वश्च ।।

मे मया । रोदसी द्यावापृथिव्यौ । व्याप्तौ व्याप्ते । 'विष्लृ व्याप्तौ' इत्यतः क्नुः । कान्तिः कमनीयता । 'वश कान्तौ' इत्यतो नुः । धातोरकारस्येकारः । शकारस्य षकारः । 'वी गति' इत्यतो वा कान्तिकर्मणः क्नुः ।।

अधिभूतं प्राग्व्याख्यातम् । 'विश प्रवेशने' इति ।। अतः क्नुः, षत्वं च । तदिच्छुः अधिभूतस्य जन्मादीच्छुः । कान्तिः इच्छा । अतो वयतेर्विष्टश्च पूर्ववद्रूपम् । क्रमणात् त्रिविक्रमरूपेण पादविक्षेपात् । पूर्ववद् वयतेर्गत्यर्थात् कर्तरि प्रत्ययः ।। २१ ।।

श्लोकः २१

**भावबोधः (र.टि.)– ।। सर्वेति योग्यतयेति ।।** व्याप्तिप्रवेशयोरेव धात्वर्थत्वं न तु सर्वशब्दार्थस्येत्यर्थः ।। **क्रुरिति ।।** कित्वाल्लघूपधगुणाभावे रषाभ्यामिति णत्वे विष्णुरिति रूपमित्यर्थः । क्रुरिति धातोर्ह्रस्वे कित्वाद्गुणाभावः इति । इण्कोरादेशप्रत्यययोरिति सस्य षत्वं रषाभ्यामिति णत्वं चेति भावः । **प्रागुव्याख्यातमिति ।।** 'क्षरो भावः' इत्यादिनेत्यर्थः । **क्रुरिति ।।** कित्वाद्गुणाभाव इति भावः । **कान्तिरिच्छेति ।।** कमेरिच्छार्थादित्यर्थः । **कर्तरि प्रत्यय इति ।।** कर्तरीत्यनुक्तौ गच्छन्त्यनेनेति व्युत्पत्तेर्दर्शितत्वेन पूर्वं करणप्रत्ययस्योक्तत्वात् पूर्ववदित्युक्त्या अत्रापि करणे प्रत्यय इति स्यात् । तन्निरासार्थमेवमुक्तम् । ततश्च गत्यर्था-द्वीत्यतः ष्णुप्रत्ययो धातोर्ह्रस्वश्चेत्युक्तं भवति ।। २१ ।।

**भावदीपः (रा.टि.)– ।। वक्ष्यमाणार्थेति ।।** भूताधिगमनहेतुत्वं कमनीयत्वं गमयित्वा 'अधिभूतजन्म' इत्युक्त्या पादक्रमणरूपार्थसङ्ग्रह इत्यर्थः।। **धात्वन्तरेति ।।** 'वा'धातुवत् 'वश' धातूक्तिरित्यर्थः । **क्स्नुप्रत्यय इति ।।** कित्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणाभावे 'इण् कोः' इति षत्वे 'रषाभ्यां नो णः' इति णत्वे विष्णुरिति रूपमिति भावः ।। **क्रुः इति ।।** कित्वात् 'पुगन्तलघूपदस्य च' इति गुणाभावे,णत्वे च रूपम् ।। **षकार इति ।।** तथाच 'रषाभ्यां नो णः' इति णत्वे रूपमिति भावः। निरुक्तिबलात् प्राप्तेकारस्य 'पुगन्त' इति गुणाभावो विधिबलादेवेत्यर्थः ।। **कान्तीति ।।** इच्छापर्यायकान्त्यर्थकादित्यर्थः । **प्रागिति ।।** 'भूतानि शरीरजीवानधिकृत्य तदुपकारित्वेन स्थितम् । उत्पत्तिविनाशिवस्तु तदधिभूतम्' इत्यष्टमोक्तेरिति भावः । **वयतेरिति ।।** वाधातोरित्यर्थः । **वष्टेरिति ।।** वशधातोरित्यर्थः । **कान्त्यर्थादिति** उभयशेषो ज्ञेयः । **पूर्ववदिति ।।** वयतेः तसुः, वष्टेः क्रुरिति भावः ।। **प्रत्यय इति ।।** क्स्नुप्रत्यय इत्यर्थः ।। २१ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। धात्वन्तरसमुच्चयार्थ इति ।।** 'वश कान्तौ इत्यादि धात्वन्तरसमुच्चयार्थ इत्यर्थः ।। **क्रुरिति ।।**तथाच क्रुप्रत्ये धातोः ह्रस्वत्वे कस्य इत्सञ्ज्ञायां तस्य लोपे कित्वादेव 'सार्वधातुकार्धधातुकयोः' इति गुणाभावे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'रषाभ्यामिति नस्य णत्वे विष्णुप्रातिपदिकसिद्धिरिति भावः ।। **क्रुरिति ।।** तथाच विष् इत्यस्मात् क्रुप्रत्यये कित्वात् 'पुगन्तलघूपदस्य च' इति गुणनिषेधे, उक्तरीत्या नस्य णत्वे च विष्णुरिति रूपसिद्धिरित्यर्थः ।। **नरिति ।।** तथाच वष्टेर्नुप्रत्यये निर्वचनत्वात् धात्वकारस्य इकारे शकारस्य षकारे 'रषाभ्यां इति नकारस्य णकारे विवक्षितरूपसिद्धिरिति द्रष्टव्यम् ।।

**क्ष्णुरिति** ।। निर्वचनत्वाद् धातोः ह्रस्वत्वे कित्वात् गुणाभावे आदेशप्रत्यययोः इति सस्य षत्वे णत्वे च विवक्षितरूपसिद्धिरिति ज्ञेयम् ।। **क्नुरिति** ।। कित्वाद् गुणाभाव इति भावः ।। **पूर्ववदिति** ।। गत्यर्थाद् वयतेः क्ष्णुप्रत्यये धातोः ह्रस्वत्वे षत्वादौ च विवक्षितरूपसिद्धिः । 'वष्टेश्च नुप्रत्यये धात्वकारस्य इकारे शकारस्य षकारे च निर्वचनत्वेन सम्पत्तेः रूपसिद्धिरिति पूर्ववदित्यर्थः ।।

**पूर्ववदिति** ।। गच्छन्त्यनेनेति व्युत्पत्तेः दर्शितत्वेन पूर्वं करणे प्रत्ययस्य उक्तत्वात् पूर्ववदित्युक्त्या अत्रापि करणे प्रत्ययभ्रान्तिः स्यात् । तन्निरासाय कर्तरि इत्युक्तम् । तथाच वयतेर्गत्यर्थात् क्ष्णुप्रत्ययः, धातोः ह्रस्वश्चेत्युक्तं भवति ।।

**भावरत्नकोशः (सु.टि.)–**

'द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।।
भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत्तिरोहितवैभवम् ।।'

इति अन्यत्रोक्तं हृदि कृत्वा उत्तरभाष्यमवतारयति– **द्विविधमिति** ।। 'तिरोहितं च' इत्यत्र 'इतिशब्दः' अध्याहार्यः । **विष्ण्वादिकं** विष्णु,कपिल,व्यास,राम,वासुदेवनामवाच्यम् । ज्योतिषां 'रविरंशुमान्' इत्यादिवाक्योक्तं तु तिरोहितविभूतिरूपमिति योज्यम् । भाष्ये 'विष्लृ व्याप्तौ' इत्यत्र 'दाभाभ्यां नुः' इति नुप्रत्ययेऽनुवर्तमाने 'विषेः किच्च' इति तस्य कित्त्वे, लघूपधलक्षणस्य गुणस्य 'क्ङिति च' इति निषेधे, 'रषाभ्यां नो णः' इति वा, 'ष्टुना ष्टुः' इति वा णत्वे च, 'वेवेष्टि सर्वम्' इति 'विष्णुः' इति रूपम् । 'विश प्रवेशने' इत्यत्र च 'कृहनिभ्यां क्नुः' इति विधीयमानः क्नुप्रत्ययो बाहुलकाद् विशेरपि भवति । पृषोदरादिभावेन शकारस्य षकारे पूर्ववत् णत्वे च 'विष्णुः' इति भवति । व्याप्त्यादेरेव धात्वर्थत्वादाह– **सर्वेति योग्यतयेति** ।। व्याप्त्यादौ अवधेरनुक्तेः सर्वव्यापित्वादिकमेवौत्सर्गिकं लभ्यत इति भावः । **वक्ष्यमाणेति** ।। 'गतिश्च सर्वभूतानाम्' इति वक्ष्यमाणप्रमाणार्थस्य सर्वभूतप्रजागतित्वादेः सङ्ग्रह इत्यर्थः । 'इति च' इत्यत्र भाष्ये चशब्दो 'वी गतौ', 'वश कान्तौ' इत्यादिवक्ष्यमाण-धात्वन्तरसमुच्चयार्थ इत्यर्थः ।

श्लोकः २१

'गतिश्च सर्वभूतानाम्' इति प्रमाणे सर्वभूतादिगतित्वं विष्णुशब्दार्थ इत्युच्यते । तदयुक्तमिव । विष्णुशब्दो हि कर्त्रर्थक्नुप्रत्ययान्तः । नुप्रत्ययश्च कृत्त्वात् 'कर्तरि कृत्' इति कर्तर्यनुशिष्टः । वक्ष्यति च 'कर्तरि प्रत्ययः' इति । गतिशब्दस्तु क्तिन्नन्तः, न कर्तरि निष्पादयितुं शक्यः । क्तिन्प्रकरणे 'अकर्तरि' इत्युक्तेरनुवृत्तेः । अत एव 'गम्यते' इति 'गतिः' इति कर्मणि निष्पाद्यः । कर्तृ-प्रत्ययान्तविष्णुशब्देन ऐकार्थ्यायोगात्, इत्यत आह– **गच्छन्त्यनेनेति ।। भूतानि** प्रजाश्च । नायं गतिशब्दः कर्तरि कर्मणि वा निष्पन्नः, येनोक्तदोषः स्यात् । किन्तु करणे क्तिन्प्रत्यये 'अनुदात्तोपदेशवनति,तनोत्यादीनाम्' इति मकारलोपे च सति । तथा च कर्तुः करणत्वविवक्षायां णिजन्तभावे च फलतः 'सर्वभूतगतिः' इति 'विष्णुः' इति च अनर्थान्तरमिति भावः । भूतशब्देन 'क्षरः सर्वाणि भूतानि' इत्यादाविव जीवग्रहणे 'प्रजानाम्' इति पुनरुक्तिः ? इत्यतो विवक्षित-भूतशब्दार्थमाह– **पृथिव्यादीनामिति** ।। सर्वभूतादिगतित्वं विष्णुशब्दार्थो यथा स्यात् तथा तन्निष्पादयति– **वी गतीति ।। क्स्नुप्रत्ययः** 'कर्तर्यौणादिको ग्राह्यः' इति शेषः ।

यत्तु 'ग्ला,जि, स्थश्च ग्स्नुः' इत्यत्र चशब्दस्य 'भुवश्च' इति पूर्वसूत्रोपात्तभूधातुसमुच्चाय-कत्ववद् अनुपात्तवीधातुसमुच्चायकत्वे पाणिनीय एव क्स्नुप्रत्यय इति व्याख्यानं तद् वृत्ति-भाष्यादौ क्वापि तथाऽनुक्तेर्न वैयाकरणानुमतम् । एवं सति 'वीष्णुः' इति स्यात् ? इत्यत उक्तम्– **धातोर्ह्रस्व इति** ।। 'पृषोदरादीनि यथोपदिष्टम्' इति धात्वीकारस्य विकार इकार इत्यर्थः । प्रत्ययस्य कित्त्वेन 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणस्य 'क्ङिति च' इति निषेधे, 'इण्कोः' इति वर्तमाने 'आदेशप्रत्यययोः' इति षत्वे, 'रषाभ्यां नो णः' इति णत्वे च 'विष्णुः' इति रूपमिति भावः ।

ननु रोदःशब्दो नपुंसकलिङ्गः । तत्कथं तस्य 'व्याप्तौ' इति पुंलिङ्गेन सामानाधिकरण्यम् ? इत्यत उक्तम्– **व्याप्तौ व्याप्ते इति** ।। 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति छान्दसो लिङ्गव्यत्यय इति भावः । रोदोव्याप्तिः विष्णुशब्दार्थ इत्येतत् व्युत्पादयति– **'विष्लृ व्याप्तावित्यतः क्नुः' इति** ।। 'दाभाभ्यां नुः' इति प्राप्तो नुप्रत्यय 'विषेः किच्च' इति किदनुशिष्ट इति तस्यायं निष्कृष्यानुवादः, न पुनः 'कृहनिभ्यां क्नुः' इत्यस्य, विषेस्तत्रानुपादानात् । 'विषेः किच्च' इत्याहृत्य नुप्रत्ययस्य कित्त्वानुशासनाच्च । कित्त्वेन च लघूपधगुणाभावे 'विष्णुः' इति रूपम् । रोदसोश्च योग्यतया सम्बन्ध इति भावः । 'अभ्यधिका कान्तिश्च मम यतः अतो अहं विष्णु-रित्यभिसञ्ज्ञितः' इत्यत्र कान्तिशब्देनेच्छाग्रहणे 'तदिच्छु' इत्यत्रेच्छाया वक्ष्यमाणत्वात्

पुनरुक्तिः इत्यतः कान्तिशब्दस्य विवक्षितार्थमाह– **कमनीयतेति** ।। न कामनेत्यर्थः । कान्तिशब्दार्थकमनीयतायाः विष्णुशब्दार्थत्वं दर्शयितुं व्युत्पादयति– **वश कान्तावित्यतो नुरिति** ।। दाभाभ्यां विधीयमानोऽपि बाहुलकाद् वशेरपि भवति । इकारः षकार इति द्वावपि विकारौ च निरुक्तत्वादेवेति भावः ।

अनेककल्पनानुशयादाह– **वी गतीत्यतो वेति** ।। 'वी गति, प्रजन, कान्ति, असन, खादनेषु' इति धातोः कान्तिलक्षणक्रियाभिधायिनः क्स्नुप्रत्ययः, धातोर्ह्रस्वता च पूर्ववदेवेति भावः । यत्तु विष्णुशब्दो न 'वश कान्तौ' इत्यस्य रूपम् । तथात्वे तत्र 'कान्तिरिच्छा' इति वैयाकरणैर्व्याख्यातत्वेन तद्ग्रहणप्रसङ्गात् । तथात्वे चोक्तपुनरुक्तिस्तदवस्थैव ? इत्यत आह– **वी गतीत्यतो वेति** ।। 'वश कान्तौ' इत्यत्र 'कान्तिरिच्छा' इति व्याख्यानेऽपि 'वी गति, प्रजन, कान्ति...' इत्यत्र तथा व्याख्यानाभावेन कमनीयतार्थोपपत्तेः, सापि विष्णु, शब्दप्रवृत्ति निमित्तमिति भाव इति व्याख्यानम् । तत्तु 'कान्तिरिच्छा' इति भाविटीकाविरोधात् मन्दम् ।

**प्राग्व्याख्यातमिति** ।। 'अधिभूतं क्षरो भावः' इत्यष्टमाध्याये 'भूतानि सशरीरान् जीवानधिकृत्य तदुपकारित्वेन स्थितम् उत्पत्तिनाशवद् वस्तु तदधिभूतम्' इति व्याख्यातमित्यर्थः । **क्नुः** कित्त्वाद्गुणाभावः, **षत्वं** धातुशकारस्य । **'तदिच्छुः'** इत्यत्र तच्छब्देनाधिभूतजन्मादिग्रहणे तदिच्छाऽपि विष्णुशब्दप्रवृत्तिनिमित्तमिति भावेन तदर्थं वदंस्तत्र विष्णुरूपं निष्पादयितुं 'वी गतिप्रजननकान्ति' इत्यत्रापि 'वश कान्तौ' इत्यत्रेव कान्तिरिच्छैव ग्राह्येत्याह– **तदिच्छुरधिभूतस्य जन्मादीच्छुः, कान्तिरिच्छेति** ।। अतो वयतेः इच्छार्थकवीधातोः लुग्विकरणस्यापि अस्य अन्यविकरणेन निर्देशः तस्यौत्सर्गिकत्वेन सुखोच्चारणाशयेन, गणकार्यस्यानित्यत्वाभिप्रायेण वा । तेन 'वेतेः इति वक्तव्यम्' इति चोद्यस्यानवकाशः । वष्टेः 'वश कान्तौ' इति धातोः । पूर्ववत् वयतेः क्स्नुप्रत्यये, वष्टेः क्नुप्रत्यये 'विष्णु' इति रूपमित्यर्थः । 'क्रमु पादविक्षेपे' इति धातोराह– **पादविक्षेपादिति** ।। तद्घटनायोक्तम्– **त्रिविक्रमेति** ।। पूर्ववत् 'प्रत्ययः' इति सम्बन्धः । क्स्नुप्रत्यय इत्यर्थः ।। १९-२५ ।।

प्रत्यक्षं विभूतिरूपमुच्यते– **आदित्यानामहं विष्णुरिति** ।। द्वादशादित्यानां मध्ये उरुक्रमशब्दितो विष्णुरहमस्मि । 'विष्लृ व्याप्तौ' इत्यतः क्नुप्रत्ययः, सर्वव्यापी । नियमनाय सर्वत्र प्रवेशवान् विष्णुः । 'विश प्रवेशने' इत्यतः क्नुः । शकारस्य षकारः । सर्वभूतानां

श्लोकः २१

पृथिव्यादीनां ब्रह्मादीनां प्रजानां च गमयितृत्वाद् विष्णुः । 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्यतो गतिकर्मणः क्स्नुप्रत्ययो धातोर्ह्रस्वश्च । द्यावापृथिव्यौ व्याप्नोति इति वा विष्णुः । 'विष्लृ व्याप्तौ' इत्यतः पूर्ववदेव क्नुप्रत्ययः । अभ्यधिककमनीयताशालित्वाद् वा विष्णुः । 'वश कान्तौ' इत्यतो नुप्रत्ययः । धातोरकारस्येकारः, शकारस्य षकारः । 'वी गति' इत्यतो वा कान्तिकर्मणः क्स्नुः धातोर्ह्रस्वश्च । अधिभूतनिविष्टत्वाद्वा विष्णुः । 'विश प्रवेशने' इत्यतः क्नुः षत्वं च । अधिभूतस्य जन्मादीच्छावत्त्वाद् विष्णुः । वेतेः वष्टेश्च पूर्ववद्रूपम् । त्रिविक्रमरूपेण पादविक्षेपाद्वा विष्णुः । पूर्ववद् 'वी गति' इत्यतो गतिकर्मणः कर्तरि प्रत्ययः ।

केषु केषु च भावेषु चिन्त्योऽसीति प्रश्नस्योत्तरम्– **ज्योतिषां रविरंशुमानिति** ।। प्रकाशरूपाणां भावानां मध्ये विश्वव्यापिरश्मियुक्तो रविरहमस्मि । इदं च तिरोहितविभूतिरूपम् । इतरज्योतिरपेक्षया रवेराधिक्यं ददत् तन्नामकम् । तत्र चिन्तनीयमिति हृदयम् । एवमेवोत्तर-त्रापि तिरोहितविभूतिस्थले व्याख्यानम् । विष्णुकपिलव्यासवासुदेवरामरूपाणि प्रत्यक्षविभूति-रूपाणि । इतराणि तु तिरोहितविभूतिरूपाणीति विवेको द्रष्टव्यः ।

मरीचिर्मरुतामस्मि आहङ्कारिकप्राणं विना एकोनपञ्चाशतो मरुतां मध्ये मरीचिनामा मरुदस्मीत्यर्थः । अत्र मरीचिशब्देन प्रवहदेवो ग्राह्यः । 'प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः ।' इति त्रयोदशाध्यायगीतातात्पर्यनिर्णयवचनात् । तत्र प्रधानवायुजत्वलिङ्गेन भूतवायुश्रुत्या प्रवहत्वमावेद्यते । 'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ।' इति छान्दोग्यभाष्ये, भूतवायु-शब्देन प्रवहग्रहणाच्च । किञ्च तात्पर्यनिर्णये दशमे 'उदवन्मेघचलनान्मरीचिः' इति तत्र मरीचिशब्दनिर्वचनमस्ति । तद्व्याख्यातं तट्टीकायाम् 'मरशब्दोदितोदकवान् मेघो मरी, तं चालयतीति मरीचिः' इति । तत्र मरीचिशब्दो विभूतिरूपविशेषे भगवति परममुख्यः । तत्सन्निधानपात्रत्वान्मरीचिनामकमरुति मुख्यः, 'अनिषिद्धास्तदन्येषु' इत्युक्तेः । मेघेषु स्थितत्वात् तच्चालनव्यापारवांश्च मरीचिनामकविभूतिरूपाधिष्ठानभूतः प्रवह एवाभ्युपगन्तव्यः ।

'पृथिव्यां प्रथमस्कन्ध आमेघेभ्यो य आवहः ।
द्वितीयश्चापि मेघेभ्य आसूर्यात् प्रवहस्तु सः ।।'

इति ब्रह्मवैवर्तपुराणवचनात्,

'आवहः प्रवहश्चैव विवहश्च समीरणः ।
परावहः संवहश्च ह्युद्वहश्च महाबलः ।।
तथा परीवहः श्रीमान् मरुतो भयशंसिनः ।
इत्येते कथिताः सप्त मरुतो गगने चराः ।।' इति हरिवंशे,

प्रवहस्यैव द्वितीयस्कन्धत्वावेदनाच्च । तथा चाभियुक्तसङ्ग्रहः–

'प्रधानभूतो मरुतां भूतवाय्वभिमानवान् ।
मुमुक्षुभिर्गम्य एष आतिवाहिकनामवान् ।।
प्रधानवायोः पुत्रोऽयं मरीचिरिति चोदितः ।
प्रवहो नाम देवोऽसौ विधोस्तु द्विगुणाधिकः ।।' इति ।

'मरीचिनामान्तरवान् प्रवहो मुख्यवायुजः ।
कोणाधिपः स एवोक्त आतिवाहिकनामवान् ।।' इति ।

'ततस्तु प्रवहो वायुरुक्तो नाम्ना मरीचिकः ।
कृष्णेन विष्णुना साक्षात् पार्थं बोधयता युधि ।
मरीचिर्मरुतामस्मीत्युक्तः कुन्तीसुतं प्रति ।
मरीचिनामान्तरवान् आतिवाहिकसञ्ज्ञिकः ।
कोणाधिपः स एवोक्तो भूतवाय्वभिमानवान् ।।'

इति च । 'आकाशदेवता विप्रस्ततो वायोस्सुतो मरुत्' इत्यत्र षट्प्रश्नभाष्यटीकायां मरुद्भूतं वायुदैवतेत्युक्तमरुत्तु भूतावान्तराभिमानिदेवताविशेष इति विचक्षणाः । नक्षत्राणां मध्ये शशी चन्द्रमाः अहं अस्मि, नक्षत्राणां विजातीयत्वात् । तत्स्वाम्यदातृविभूतिरूपं चन्द्रमसि वर्तत इति चिन्तनीयोऽस्मीति भावः ।। २१ ।।

**भावदीपिका (श्री.टि.)–** व्याप्तिप्रवेशनयोरेव धात्वर्थत्वादाह– **सर्वेतीति** ।। **धात्वन्तरेति** ।। वक्ष्यमाण गत्याद्यर्थाभिधायक'वी गति'इत्यादिधात्वन्तरस्येत्यर्थः । **इत्यतः** धातोः । **क्स्नुरिति** ।। गत्यर्थत्वात् 'वी' इत्यस्मात् करणे क्स्नुप्रत्यये 'लशक्वतद्धिते' इति ककारलोपे, धातोरीकारस्य ह्रस्वे इकारे, 'आदेशप्रत्यययोः' इति सस्य षत्वे, 'रषाभ्यां नो णः समानपदे' इति नकारस्य णत्वे च 'वयन्त्यनेन' इति 'विष्णुः' इति रूपम् । कित्त्वाद्गुणाभावः । अन्यथा

श्लोकः २१

'वेष्णु' इति स्यादिति भावः । **'विष्लृ व्याप्तौ' इत्यतः क्नुरिति** ।। अत्र लृकारोऽनुबन्धार्थः । तथा च व्याप्त्यर्थात् 'विष्' अस्मात् क्नुप्रत्यये, ककारलोपे, 'रषाभ्याम्...' इति नस्य णत्वे, कित्त्वाद् गुणाभावे च 'विष्णुः' इति रूपम् । **नुरिति** ।। कान्त्यर्थाद् वशधातोः नुप्रत्यये, निर्वचनत्वात् धातोरकारस्य इकारे, शकारस्य षकारे, नस्य णत्वे च 'विष्णुः' इति रूपम् । **'वी गति' इत्यतो वा कान्तिकर्मण इति** ।। कान्त्यर्थकाद् 'वी गतिव्याप्तिप्रजनकान्ति...' इति धातोर्वा क्स्नुप्रत्यये, ककारलोपे, धातोर्ह्रस्वे, सस्य षत्वे, नस्य णत्वे, कित्त्वाद् गुणाभावे च 'विष्णुः' इति रूपम् । **प्रागिति** ।। अष्टमाध्याये 'क्षरो भावः' इत्यनेनेत्यर्थः । **'विश प्रवेशने' इति** ।। विशधातोः क्नुप्रत्यये, ककारलोपे, धातोर्ह्रस्वे, सस्य षत्वे, नस्य णत्वे, कित्त्वाद् गुणाभावे च 'विष्णुः' इति रूपम् ।

**वयतेर्वष्टेश्चेति** ।। 'वी गतिप्रजनकान्ति...' इति धातोः, 'वश कान्तौ' इति धातोश्चेत्यर्थः । अनयोर्धात्वोः प्रकृतोपयोगाय कान्तिशब्दार्थ उक्तः– **कान्तिरिच्छेति** ।। तथा च 'वी' इत्यतः क्स्नुप्रत्यये, ककारलोपे, सस्य षत्वे, नस्य णत्वे, धातोर्ह्रस्वे 'विष्णुः' इति पूर्ववद्रूपम् । एवं वशधातो नुप्रत्यये धात्वकारस्येकारे, शस्य षत्वे, नस्य णत्वे च 'विष्णुः' इति पूर्ववद्रूपमित्यर्थः । 'पूर्ववत्' इत्युक्तत्वाद् अत्रापि 'गच्छत्यनेन' इति करणे क्स्नुप्रत्ययप्राप्तिपरिहाराय 'कर्तरि' इत्युक्तम् । तथा च 'वी गति...' इति गत्यर्थाद् कर्तरि क्स्नुप्रत्यये ककारस्य लोपे, सस्य षत्वे, नस्य णत्वे, धातोश्च ह्रस्वे 'विष्णु' इति रूपम् ।। १९-२५ ।।

**भावप्रकाशः (कृ.टि.)–** व्याप्त्यादेरेव धात्वर्थत्वादाह– **सर्वेति योग्यतयेति** ।। **वक्ष्यमाणेति** ।। गतिश्च सर्वभूतानामित्यत्रेत्युपस्कर्तव्यम् । **धात्वन्तरेति** ।। वेतेर्वष्टेश्च सङ्ग्राहक इत्यर्थः ।।

**गच्छन्त्यनेनेति** ।। कर्तुः करणत्वविवक्षया स्त्रियां क्तिन्निति करणे क्तिन् । अनुदात्तोपदेशेति मकारलोपश्चेति भावः । क्षरः सर्वाणि भूतानीत्युक्तार्थग्रहणे प्रजानामिति पुनरुक्तं स्यादित्यत आह– **पृथिव्यादीनामिति** ।। **क्स्नुरिति** ।। कित्वात् सार्वधातुकार्धधातुयोरिति गुणाभावः । आदेशप्रत्यययोरिति षत्वे रषाभ्यामिति वा ष्टुत्वेन वा णत्वमिति भावः । **धातोर्ह्रस्वश्चेति** ।। पृषोदरादित्वादिति भावः । ननु यदि रोदसीशब्द ईकारान्तः स्त्रीलिङ्गः यदि वा सकारान्तो नपुंसकलिङ्गः उभयथाऽपि व्याप्ताविति पुंस्त्वमयुक्तमित्यत आह– **व्याप्ते इति** ।।

**क्रुरिति** ।। कित्वाल्लघूपधगुणाभावः पूर्ववण्णत्वं चेति भावः । कान्तिशब्दस्येच्छार्थत्वे तदिच्छुरिति पुनरुक्तं स्यादित्यत आह– **कमनीयतेति** ।। ननु विष्णुरिति न वश कान्ता-वित्यस्य रूपम् । तथात्वे इच्छार्थत्वप्रसङ्गात् । कान्तिरिच्छेति शाब्दिकव्याख्यानादित्यत आह– **वी गतीत्यतो वेति** ।। **कान्तिकर्मण इति** ।। कान्तिवाचकस्येत्यर्थः । **प्रागिति** ।। अधिभूतं क्षरो भाव इत्यत्रेत्यर्थः । **षत्वं चेति** ।। पृषोदरादित्वाच्छकारस्य षत्वमित्यर्थः ।

**कान्तिरिच्छेति** ।। वश कान्तावित्यत्र शाब्दिकैस्तथा व्याख्यानादिति भावः । **वयतेरिति** ।। वी धातोरित्यर्थः । यद्यप्यस्य लुग्विकरणत्वाद्वेतेरिति वक्तव्यम् । तथाऽपि गणकार्यस्यानित्यत्वाल्लुगभावे शबिति भावः । ननु वेतेः कान्त्यर्थत्वेऽपि नेच्छार्थत्वम् । तत्र कान्तिरिच्छेति शाब्दिकैरव्याख्यानादित्यत आह– **वष्टेरिति** ।। वश कान्तावित्यस्मादित्यर्थः । **कर्तरि प्रत्यय इति** ।। गतिश्च सर्वभूतानामित्यत्र वेतेः करणे कृन्नुप्रत्ययस्योक्तत्वादत्रापि तत्प्रतीतिः स्यात् । तन्निवृत्त्यै कर्तरीत्युक्तम् ।। २१ ।।

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ।। २२ ।।**

**भावरत्नकोशः (सु.टि.)– वेदानामिति** ।। वेदानाम् ऋगादीनां मध्ये सामवेदोऽस्मि इत्यत्र सजातीयैकदेशश्रैष्ठ्यदोऽस्मीति चिन्तनीयः । वेदेषु ऋग्वेदस्याधिकत्वात् । एवमप्यत्र सामवेदस्य यद् ऋग्वेदाद् आधिक्यवचनं तत्तु सामवेदाभिमानिनः प्राणस्य ऋग्वेदाभिमानि-सरस्वत्या आधिक्यपरम् इत्युत्तरप्रस्थाने स्फुटम् । देवानां वासवः इन्द्रः अस्मि इत्यत्र देवादिषु ब्रह्मादीनामेव श्रेष्ठत्वात् सजातीयैकदेशश्रैष्ठ्यदोऽस्मीत्यर्थः । 'ऋते रुद्रादिकान् इन्द्रः सर्वदेवाधिकः स्मृतः ।' इति भागवततात्पर्यनिर्णयवचनात् । सर्वेन्द्रियेषु मनस एव प्रधानत्वात् इन्द्रियाणाम् एकादशानां मनोऽस्मीति सजातीयश्रैष्ठ्यदः, तत्र मनसि वर्तत इति चिन्तनीयः । भूतानां चेतनावतां सम्बन्धिनी चेतना ज्ञानशक्तिः तद्रूपसारवत्त्वेनोक्तः ।। २२ ।।

**रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ।। २३ ।।**

**भावरत्नकोशः (सु.टि.)– रुद्राणामिति** ।। रुद्राणाम् एकादशानां मध्ये शङ्करः

उमापतिरस्मि । सजातीयश्रैष्ठ्यदत्वेन तत्रास्मि । वित्तेशः कुबेरोऽस्मि । वसूनाम् अष्टानां पावकः सजातीयश्रैष्ठ्यदस्तत्रास्मि । शिखरिणां पर्वतानां मेरुः कनकगिरिः पूर्ववत् ।। २३ ।।

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ।। २४ ।।**

**भावरत्नकोशः (सु.टि.)– पुरोधसामिति** ।। पुरोधसां पुरोहितानां मध्ये बृहस्पतिं मां विद्धि जानीहि चिन्तय च । सेनानीनां नुडागमः छान्दसः । सेनान्याम् । यद्वा सेना-शब्दोपपदात् नयतेः औणादिके डिप्रत्यये ह्रस्वान्ततया नुडागमे, 'नामि' इति दीर्घे च 'सेनानीनाम्' इति रूपम् । देवसेनानायकानां स्कन्दोऽहम् । सरसां देवखातानां सागरः समुद्रोऽस्मि ।। २४ ।।

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः।। २५ ।।**

**भावरत्नकोशः (सु.टि.)– महर्षीणामिति** ।। महर्षीणां 'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च' इत्युक्तानाम् अन्येषां च शास्त्रोक्तानां महर्षीणां मध्ये भृगुरहम् अस्मि । गिरां वाचां पदलक्षणानां मध्ये एकमक्षरं प्रणवोऽस्मि । यज्ञानाम् अग्निहोत्रादीनां मध्ये ज्ञानयज्ञं विना जपयज्ञः जपात्मकदेवपूजारूपकर्मास्मि । इति सजातीयैकदेशश्रैष्ठ्यदविभूतिः । स्थावराणां स्थितिमतां हिमालयः हिमवान् पर्वत इति ।। २५ ।।

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ।। २६ ।।**

## भाष्यम्

**सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः । 'प्रीतिः सुखं कम् आनन्दः' इत्यभिधानात् । 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति च ।**

**'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैः बिभर्ति जायमानं च पश्येत् ।
सुखादनन्तात् पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ति'**

**इति च बाभ्रव्यशाखायाम् ।। २६ ।।**

भावप्रदीपिका (प.टी.)– तं कपिलं ऋषिं ज्ञानिनं पश्येत् । योऽग्रे प्रसूतं जायमानं च ब्रह्माणं ज्ञानैः बिभर्ति पुष्णातीत्यर्थः ।।

प्रमेयदीपिका (ज.टी.)– 'सिद्धानां कपिलो मुनिः' इति कपिलशब्दं व्याचष्टे– **सुखेति ।।** सुखरूप इति कः । पाल्यते जगदनेनेति पिः । 'पा रक्षणे' इत्यतः किः । लीयते जगदनेनेति लः ।'लीङ् श्लेषणे' इत्यस्मात् डः, 'ला आदाने' इत्यतो वा कः । ततः कर्मधारयः । कशब्दस्य सुखवाचित्वेऽभिधानं प्रयोगं च पठति– **प्रीतिरिति ।।** समग्रार्थे श्रुतिमाह– **ऋषिमिति ।।** तं भगवन्तम् ऋषिं कपिलं च पश्येत् । कथमृषिः सर्वज्ञत्वादित्युच्यते । यः प्रसूतं पूर्वकल्पेषु जातम् । जायमानं वर्तमानं च,एवमागामि च जगत् ज्ञानैः बिभर्ति जानातीति यावत् । कथं कपिलः? इत्यत उक्तम्– **सुखादिति ।।** 'यत्' शब्दद्वयस्य तम् इत्यनेनान्वयः ।। २६ ।।

भावबोधः (र.टि.)– ।। **किरिति** ।। आतो लोप इटि चेत्याकारलोपः । **ड इति** ।। डित्वाट्टेर्लोपः । **क इति** ।। आतो लोप इत्याकारलोपः ।। २६ ।।

भावदीपः (रा.टि.)– ।। **किरिति** ।। कित्वात् 'आतो लोपः' इति चेत्यकारलोप इति भावः ।। **ड इति** ।। डित्त्वात् टिलोपः ।। **क इति** ।। आतो लोपे रूपमिति भावः । कश्चासौ पिश्चासौ लश्चेति कर्मधारय इत्यर्थः ।। २६ ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **किरिति** ।। 'आतो लोप इटि च' इति आकारलोप इति भावः ।। **ड इति** ।। डित्त्वाद् टिलोप इति भावः ।। **क इति** ।। 'आतो लोप इटि च' इति आकारलोप इति भावः ।।

भावरत्नकोशः (सु.टि.)– 'सुखरूपः' इत्यनन्तरं भाष्ये 'कपिलः' इति निर्देशघटनाय शेषमाह– **इति क इति** ।। किः औणादिकः । ततश्च 'आतो लोप इटि च' इत्याकारलोप इति भावः । यद्यपि 'पाल्यते' इति भाष्ये 'पाल रक्षणे' इति धातुर्गृहीतः । तथापि 'पा रक्षणे'

इत्यस्यार्थानुवाद इति भावेन 'पा रक्षणे' इत्यतः 'किः' इत्युक्तमिति केचित् । वस्तुतस्तु 'पा रक्षणे' इत्यस्य 'णौ' इति वर्तमाने 'पातेर्लुग्वक्तव्यः' इति णिचि परतो लुगागमं, कर्मणि यकि च, 'पाल्यते' इति रूपमिति भावेन एवमुक्तम् । 'लीङ् श्लेषणे' इत्यत्र श्लेषणम् स्वस्वकारणेषु मेलनं स्वोदरसंश्लिष्टतापादनमर्थः । तस्माद्धातोः 'विभाषा लीयतेः' इत्यात्वे 'अर्तिह्री...' इति आत्वेन पुगागमे, ल्युटि 'लापनात्' इति भाष्ये रूपम् । 'लायनात्' इति क्वचित् पाठः । तत्र दीर्घत्वं छान्दसमिति आहुः । 'ला आदाने' इत्यत्र आदानम् आत्मनियम्यतापादनम् । एकत्र टिलोपः, अपरत्राल्लोप इति भावः । कर्मधारयः 'कश्चासौ पिश्चासौ लश्च' इति कर्मधारयः ।

यद्यप्यभिधाने कशब्दो नपुंसकलिङ्गो निर्दिष्ट इति 'सुखरूपम्' इति 'कम्' इत्येवानुवादः कर्तव्यः । तथापि 'कं सुखं स्वरूपत्वेनास्यास्ति' इति 'अर्शआदिभ्यः' इति मत्वर्थीयाचप्रत्यये 'कः' इति रूपमिति द्योतयितुं भाष्ये 'सुखम्' इति वक्तव्ये 'सुखरूपः' इति पुंलिङ्गप्रयोग इति तदनुसारेणैव 'कः' इति पुंलिङ्गोऽनूदितः । 'कं ब्रह्म' इति श्रुतौ कशब्दः 'सुखविशिष्टाभिधानादेव च' इति सूत्रे सुखार्थो व्याख्यात इति प्रकृतसिद्धिः । समग्रार्थे 'कपिलशब्दस्योक्ते' इति शेषः । चशब्दसमुच्चेयमाह– **आगामि चेति** ।। कथमनेन सार्वज्ञ्यलाभ इत्यत उक्तम्– **जानातीति यावदिति** ।। यच्छब्दद्वयस्य 'यो ज्ञानैः बिभर्ति', 'यं च पश्येत्' इति यच्छब्दद्वयस्य ।।

**अश्वत्थ इति** ।। सर्ववृक्षाणां मध्ये अश्वत्थः अस्मि । देवर्षीणां देवा एव सन्तोऽपि ऋषित्वं प्राप्ताः, तेषां नारदः अस्मि । चित्ररथनामा गन्धर्वः । सिद्धानां जन्मनैव सिद्धानां धर्मज्ञानवैराग्य ऐश्वर्याद्यतिशयशालिनां मध्ये कपिलः । कं सुखम्, तदेव रूपमस्यास्तीति कः । 'पाल्यते जगदनेन' इति पिः । 'पा रक्षणे' इत्यतः किः । 'लीयते जगदनेन' इति लः । 'लीङ् श्लेषणे' इत्यस्मात् डः । 'ला आदाने' इत्यतो वा कः । 'कश्चासौ पिश्चासौ लश्च' इति कर्मधारये कपिलोऽस्मि इति प्रत्यक्षविभूतिः ।। २६,३० ।।

**भावदीपिका (श्री.टि.)– ।। किरिति ।।** तथा च 'पा रक्षणे' अस्मात् किप्रत्यये, ककारलोपे, कित्त्वाद् 'आतो लोप इटि च' इति धात्वाकारलोपे, 'प् इ पि' इति रूपम् । **ड इति** ।। तथा च 'ली श्लेषणे' अस्माद् डप्रत्यये, डित्त्वात् टीभूतस्य ईकारस्य लोपे, प्रत्ययाकारसम्बन्धे च सति 'ल' इति रूपम् । **क इति** ।। कित्त्वाद् 'आतो लोप इटि च'

इति धात्वाकारलोपे, प्रत्ययाकारसम्बन्धे 'लः' इति रूपम् । **तत इति** ।। 'कश्चासौ पिश्चासौ लश्चेति कपिलः' इति कर्मधारय इत्यर्थः । 'अग्रे' इत्यस्यार्थः **पूर्वकल्पेष्विति** ।। **तमित्यनेनेति** ।। 'यो ज्ञानैर्बिभर्ति तमृषिं पश्येत्, यं सुखादिनिमित्तात् कपिलमुदाहरन्ति तं कपिलं पश्येत्' इति यच्छब्दद्वयस्य 'तम्' इत्यनेनान्वयो द्रष्टव्यः ।। २६,३० ।।

**भावप्रकाशः (कृ.टि.)**– ।। **किरिति** ।। कित्वादातो लोप इटि च इत्याकारलोप इति भावः । **पश्येदिति** ।। जानीयादित्यर्थः ।।

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ।। २७ ।।**

**भावरत्नकोशः (सु.टि.)**– **उच्चैःश्रवसमिति** ।। अश्वानां मध्ये उच्चैःश्रवसम्, उच्चैःश्रवस्सञ्ज्ञकम् अश्वं मां विद्धि जानीहि, उपास्स्व च । अमृतोद्भवं क्षीरसागरसमुद्भूतमिति देहलीदीपन्यायेनाश्वे गजे चान्वेति । ऐरावतं इरावत्या अपत्यं गजं मां विद्धि । नराधिपं राजानम् ।। २७ ।।

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ।। २८ ।।**

**भावरत्नकोशः (सु.टि.)**– **आयुधानामिति** ।। आयुधानामहं वज्रम् इति सजातीयैकदेशश्रैष्ठ्यदविभूतिः, 'सुदर्शनश्चायुधेषूत्तमः' इति वचनात् । कामान् दोग्धीति कामधुक् कामधेनुः । प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः न पुनः केवलभोगार्थः । तस्य अशास्त्रीयत्वात् । सर्पाणाम् एकशिरसां वासुकिः अस्मि ।। २८ ।।

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितृणामर्यमा चास्मि यमः संयमतामहम् ।। २९ ।।**

**भावरत्नकोशः (सु.टि.)**– **अनन्त इति** ।। नागानाम् अनेकशिरसाम् अनन्तः शेषः । यादसां जलजन्तूनां वरुणः अस्मीति । विजातीयश्रैष्ठ्यदविभूतिः । अर्यमा अर्यमनामकपितृराजः । संयमतां संयमप्रातिपदिकात् क्विप्, संयमनं कुर्वन्तः संयमन्तः, तेषां मध्ये यमः अस्मि ।। २९ ।।

श्लोकः ३०,३१

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ।। ३० ।।**

भावरत्नकोशः (सु.टि.)– प्रह्लाद इति ।। दैत्यानां मध्ये कलयतां गणयताम्, वशीकुर्वताम्, बन्धनादिकं कुर्वतां च मृगेन्द्रः सिंहः । वैनतेयः गरुडः ।। ३० ।।

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ।। ३१ ।।**

## भाष्यम्

**आनन्दरूपत्वात् लोकरमणत्वाच्च रामः । 'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद्रमते तेन रामः' इति शाण्डिल्यशाखायाम् । रश्च अमश्चेति व्युत्पत्तिः ।। ३१ ।।**

भावप्रदीपिका (प.टी.)– लोकरमणाच्चेति राम इति व्युत्पत्तिः ।।

प्रमेयदीपिका (ज.टी.)– 'रामः शस्त्रभृतामहम्' इति रामशब्दं व्याख्याति– **आनन्देति ।।** आनन्दरूपत्वात् पूर्णत्वात् इत्येकोऽर्थः । रमत इति रः । 'रमु क्रीडायाम्' इत्यतो 'ञमन्ताड्डः' इति डः । न विद्यते मा प्रमा परिच्छेदो अस्येति अमः । 'लोक' इत्यपरोऽर्थः । रमतेः घञ् । अत्र श्रुतिमाह– **आनन्देति ।।** आद्येऽर्थे विग्रहं दर्शयति– **रश्चेति ।।** रश्चासावमश्चेत्यर्थः ।। ३१ ।।

भावबोधः (र.टि.)– ।। **ञमन्तमिति** ।। यद्यप्यस्य डित्वाभावेन टिलोपो न भवति । अन्यथा रण्डेत्यादिरूपनिष्पत्त्यनुपपत्तेः । तथाऽपि उणादयो बहुलमित्युपपदलोप इति सुधोक्तरीत्याऽत्र टिलोप इति ज्ञेयम् । **घञिति** ।। रमतेरन्तर्णीतण्यर्थात् घञ्प्रत्यये ञित्वादुप-धावृद्धौ राम इति रूपमित्यर्थः ।

भावदीपः (रा.टि.)– ।। **ञमन्तादिति** ।। ञमिति ञमङणन इति पञ्चवर्णाः उच्यन्ते । 'ञमन्तात् शब्दात् डप्रत्ययः' इति सूत्रार्थः । डित्त्वात् टिलोपः ।। **घञिति** ।। 'अकर्तरि च

कारके सञ्ज्ञायाम्' इति करणे घञि सति 'अत उपधायाः' इति वृद्धौ रामेति रूपमिति भावः ॥ ३१ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ ञमन्ताड्ड इति ॥** अत्र ञमिति प्रत्याहारग्रहणं ञमङणनमिति । तथाच ञमन्ताद् डप्रत्ययो भवतीति सूत्रार्थः । ननु च नायं डित्, उत्तरत्र कित्करणात् । तत्र गुणप्रतिषेधार्थः, अन्यथा कित्करणमनर्थकं स्यात् । तस्मात् श्रवणार्थत्वमेव डकारस्य नलोपः । अत एव 'वदन्त्यनेनोद्धता जनाः' इति दण्डः' इत्यादि व्युत्पादनमुपपाद्यते। अन्यथा दण्डः चण्डः रण्डः इत्यादि रूपनिष्पत्त्यनुपपत्तिप्रसङ्गादिति चेन्न । बाहुलकादेव हि तस्य इत्सञ्ज्ञाभावस्याश्रयणीयत्वात् । तदनाश्रयणेनैव डित्त्वस्याप्युपपन्नत्वादित्यभिप्रायात् ॥ **घञिति ॥** रमतेरन्तर्णीतण्यर्थात् घञ्प्रत्यये ञित्वाद् अत उपधाया इति उपधावृद्धौ राम इति रूपनिष्पत्तिरिति भावः ॥

**भावरत्नकोशः (सु.टि.)–** गीतागतं प्रवृत्तिनिमित्तं त्रिविधमुच्यत इति प्रतीयते । तन्निरासायोक्तम्– **इत्येक इति** ॥ 'रश्च अमश्च' इति भाविभाष्यादिति भावः । **ञमन्ताड्ड इति** ॥ 'ञम्' इति ञ, म, ङ,णनानां सञ्ज्ञा । तदन्तात् धातोः डप्रत्ययो भवतीति सूत्रार्थः । 'चुटू' इति डकारलोपे, 'टेः' इति टिलोपे च 'रः' इति रूपमिति भावः । यद्यप्यत्र डप्रत्यये डकारस्येत्संज्ञा बाहुलकान्न भवति । 'दण्डः' 'गण्डः' इत्युदाहरणम् इत्युक्तं वैयाकरणैः, इति अत्रापि डप्रत्यये 'रण्डः' इत्यनभिमतरूपं स्यात् । तथापि–

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥'

इति वचनादत्र डकारेत्संज्ञाशास्त्रप्रवृत्तिरिति भावेनैवमुक्तम् । परिच्छेदः देशतः कालतो गुणतश्च । उपसर्जनत्वात् माशब्दस्य ह्रस्व इति भावेनोक्तम्– **'अमः' इति । लोकेतीति ॥** 'लोकरमणाच्च' इति भाष्यं रामशब्दस्यार्थान्तरं प्रतिपादयितुं प्रवृत्तमित्यर्थः । **रमतेर्घञिति ॥** 'रमु क्रीडायाम्' इत्यतो 'लोको रमते अनेन' इति करणे घञ्प्रत्यये 'अत उपधायाः' इति वृद्धौ च 'रामः' इति रूपम् । तथा च वक्ष्यति 'लोकश्चैतस्माद् रमते' इति । तेन 'कर्तरि घञ्प्रत्ययः 'अकर्तरि' इति प्रतिषिद्ध इति कथं राम इति रूपम्' इति चोद्यानवकाशः । अत्र उक्ते अर्थद्वये । 'निष्परीमाणः' इति श्रुतौ 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति परिशब्दे दीर्घः । 'रश्चामश्च' इति भाष्ये द्वन्द्वभ्रमं वारयितुमाह– **रश्चासावमश्चेत्यर्थ इति ॥**

श्लोकः ३१

**पवन इति** ।। पवतां पावयितॄणां पवनः वायुरस्मि । रामः 'रमु क्रीडायाम्' इत्यतः 'ञमन्तात् डः' इति कर्तरि डः । रमत इति रः । न विद्यते मा प्रमा परिच्छेदो यस्येति अमः । 'रश्चासावमश्च' इति विग्रहः । यद्वा 'रमते लोकोऽनेन' इति करणे रमेर्घञ् रामः । शस्त्रभृतां धानुष्काणां राम इति प्रत्यक्षविभूतिः । झषाणां मत्स्यानां मध्ये मकरः मत्स्यराजः । 'मकरो मत्स्यराजः' इति यादवः । मत्स्यविशेषो मकरः किल मकरो भवति । तद्विशेषश्चेति हलायुधश्च । स्रोतसां स्रवन्तीनां जाह्नवी गङ्गाऽस्मि । भगवति स्त्रीलिङ्गशब्दश्च प्रकृत्यधिकरणे समर्थितः ।। ३१ ।।

**भावदीपिका (श्री.टि.)**– 'रः' इत्यस्यार्थः– **आनन्दरूपत्वादिति** ।। 'अम' इत्यस्यार्थः– **पूर्णत्वादिति** ।। **एकोऽर्थः** रामशब्दस्य । तदुभयं क्रमेणोपपादयति– **रमत इत्यादिना ।। ञमन्ताड्ड इति** ।। अत्र 'ञम्' इति 'ञमङणनम्' इति प्रत्याहारग्रहणम् । ञमन्ताद्धातोः डप्रत्ययो भवतीत्युणादिसूत्रार्थः । तथा च 'रम्' इत्यत्र मकारस्य ञम्प्रत्याहारान्तर्गतत्वेन तदन्ताद्धातोर्डप्रत्यये, टीभूतस्य 'अम्' इत्यस्य लोपे, प्रत्ययाकारसम्बन्धे 'रः' इति रूपम् । ननु 'ञमन्तात्' इत्युणादिसूत्रविहितस्य डप्रत्ययस्य न डित्त्वं वैयाकरणानामभिप्रेतम् । 'डकारस्यानुबन्धसंज्ञा नास्ति' इत्युणादिवृत्तावेवोक्तत्वात् । अन्यथा 'दण्डः' 'रण्डः' इत्यादिरूपनिष्पत्तिर्न स्यात् । सति चैवं प्रकृते 'रण्डः' इत्येव स्यात् । कथं 'रः' इति रूपमिति चेत् । सत्यम् । 'उणादयो बहुलम्' इति बहुलग्रहणादेवैतत्सूत्रविहितस्यापि डस्य क्वचित् डित्त्वमपि प्रयोगवशादङ्गीकार्यम् । अत एवोणादिवृत्तौ 'सति प्रयोजने डकारस्यानुबन्धसंज्ञा नास्ति' इत्युक्तम् । अन्यथा 'प्रयोजनाभावादनुबन्धसंज्ञा नास्ति' इत्येवावक्ष्यत् । तेन ज्ञायतेऽनुबन्धसंज्ञाभावे डित्त्वं प्रायिकम्, क्वचित्प्रयोजने सत्यनुबन्धसंज्ञा, ततश्च डित्त्वमपि भवतीति तद्वाक्यार्थः । अतो न काऽप्यनुपपत्तिरित्यस्मदाचार्यकृतलिङ्गपादीयसुधाटिप्पण्यनुसारेण अत्रालोचनीयम् । परिच्छेद इति ।। 'माङ् माने' 'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते' इति वचनादित्यर्थः । **घञिति** ।। 'रम्' इत्यस्मात् घञ्प्रत्यये अकारमात्रं विहाय सर्वस्यापि लोपे, ञित्त्वाद् उपधावृद्धौ प्रत्ययाकारसम्बन्धे 'राम' इति रूपम् । द्वन्द्वसमासभ्रान्तिवारणाय कर्मधारयोऽयमित्याह– **रश्चसाविति** ।। ३१-३६ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **ञमन्ताड्ड इति ड इति** ।। यद्यपि शाब्दिकैर्डस्य बाहुलकाचुटू इति नेत्सञ्ज्ञेत्युक्तम् । तथा च दण्ड इतिवत् रण्ड इत्येव रूपं स्यात् । तथाऽपि

बाहुलकाश्रयणं विना वास्तवेत्सञ्ज्ञाप्राप्तिमभिप्रेत्यैतदुक्तम् । यद्वा कचित्प्रवृत्तिरित्यादिना बाहुलकस्य चतुर्विधत्वोक्तेः यदेत्सञ्ज्ञाप्रवृत्तिस्तदभिप्रायेणेदम् इति ज्ञातव्यम् । **रमतेर्घञिति** ।। रमतेऽनेन इति राम इति करणे घञ्, अत उपधाया इति वृद्धिश्चेति भावः अतो न घञः कर्तृभिन्नकारकार्थत्वविरोध इति बोध्यम् ।। ३१ ।।

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम्।। ३२ ।।**

**भावरत्नकोशः (सु.टि.)– सर्गाणामिति** ।। सृज्यन्त इति सर्गाः भूतानि, तेषाम् आदिः मध्यम् अन्तश्च तद्धेतुभूतोऽपि अहमेव । 'अहमादिश्च मध्यं च भूतानामन्त एव च' इत्युपक्रमे भूतोत्पत्तिस्थितिलयकर्तृत्वमात्रमुक्तम् । अत्र तु सृष्टिस्थितिलयलक्षणक्रियासु भगवतस्तिरोहित-विभूतिरूपाणि सन्ति उपासितव्यानीत्युच्यत इति भेद इति आहुः । केचित्तु पूर्वत्र सर्वप्राण्यु-दयादिनिमित्तत्वमुक्तम् । अत्र तु आकाशादिभूतोत्पत्त्यादिहेतुरस्मीत्युच्यत इति विशेष इत्याहुः । पूर्वोक्तं जगदुत्पत्त्यादिहेतुत्वम् अवश्यज्ञातव्यमिति विभावनयाऽत्र स एवार्थः स्मर्यत इति अपरे। अधिकश्चासावात्मा च अध्यात्मा, तद्विद्या अध्यात्मविद्या परब्रह्मविषयकज्ञानम्, तत्साधनविद्या वा। प्रवदतां वक्तृद्वारेण प्रवदनभेदानामेवेह वादजल्पवितण्डानां ग्रहणम् । प्रवदतां जल्पवितण्डादि कुर्वतामित्यपि आहुः । तन्मध्ये वा अहं तस्य तत्त्वनिर्णयहेतुत्वात् ।। ३२ ।।

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ।। ३३ ।।**

**भावरत्नकोशः (सु.टि.)– अक्षराणामिति** ।। अक्षराणां वर्णानाम् अकारोऽस्मि तस्य सर्व वाग्व्याख्येयत्वात् । सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः समासोऽस्मि । तस्योभय-पदार्थप्रधानत्वात् । अक्षयः प्रवाहरूपेणाव्ययः । धाता विधाता स्रष्टा । विश्वतोमुखः चतुर्मुखः ।। ३३ ।।

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ।। ३४ ।।**

भावरत्नकोशः (सु.टि.)– मृत्युरिति ।। सर्वहरो मृत्युश्च भविष्यताम् उत्पत्स्यमानानाम् उद्भवः उत्पत्तिः, भविष्यतां भाविकल्याणानां प्राणिनाम् उद्भवः उदयः अहम् अस्मीति । नारीणां मध्ये कीर्तिः श्रीः इत्यादयः सप्त देवतारूपस्त्रियोऽप्यहमेव ।। ३४ ।।

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहम् ऋतूनां कुसुमाकरः ।। ३५ ।।**

भावरत्नकोशः (सु.टि.)– साम्नां रथन्तर, वैरूप, वैराज, शाक्वर, रैवतनामकानां मध्ये बृहत् नामकं सामाहम् । छन्दसाम् उष्णिग्, अनुष्टुप्, बृहत्यादीनां गायत्रीनामकं छन्दोऽहम् । मासानां चैत्रादिमासानां कुसुमाकरः वसन्तः ।। ३५ ।।

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ।। ३६ ।।**

भावरत्नकोशः (सु.टि.)– द्यूतमिति ।। छलयतां छद्म कुर्वताम् । अक्षदेवनादिलक्षणं द्यूतम् । तेजस्विनां तेजोऽहम् । जयः जेतॄणाम् । व्यवसायोऽस्मि व्यवसायिनाम् । सत्त्ववतां सत्त्वं सत्त्वलक्षणसारभूतधर्मोऽस्मीत्यर्थः ।। ३६ ।।

**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ।। ३७ ।।**

## भाष्यम्

**आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात् । 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम्' इति मोक्षधर्मे ।**

भावप्रदीपिका (प.टी.)– जगति भूत्वा सूर्योऽशुभिरिव छादयामि । आ समन्तादिति व्याप्त इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– 'वृष्णीनां वासुदेवोऽस्मि' इति वासुदेवशब्दं व्याचिकीर्षुः

**वासुशब्दार्थं तावदाह– आच्छादयतीति ।। 'वस आच्छादने' इत्यत उण् । वासयति सर्वमिति वर्तते । 'वस निवासे' इत्यतो ण्यन्तादुण् । 'वसति च' इति केवलादुणेव । ततः किमायातं वासुदेवशब्दस्य? इत्यत आह– देवेति ।। तथा हि 'देवशब्दार्थम्' इत्यत्र। ततः कर्मधारयः । विश्वं समस्तं भूत्वा प्राप्य । 'भू प्राप्तौ आत्मनेपदी' इति वचनात् । सर्वभूताधिवासश्चेति तत्पुरुषो बहुव्रीहिश्च । अत्रापि देवशब्दार्थो ग्राह्यः ।।**

**भावबोधः (र.टि.)– ।। उणिति ।।** णित्वादुपधावृद्धौ वासुरिति रूपमिति भावः । एवमुत्तरपक्षद्वयेऽपि ज्ञातव्यम् ।। **केवलादिति ।।** णिजर्थरहितादित्यर्थः । तत्पुरुषो बहुव्रीहिश्चेति सर्वभूतानामधिवास इति तत्पुरुषत्वे वासयति सर्वमित्यर्थलाभात् सर्वभूतान्यधिवासः वासस्थानं यस्येति बहुव्रीहित्वे वसति च सर्वत्रेत्यर्थलाभात् उक्तार्थद्वयस्य प्रामाणिकत्वमिति भावः ।

**भावदीपः (रा.टि.)– ।। उणिति ।।** 'उणादयो बहुलम्' इति सूत्रात् अणुप्रत्यये उपधावृद्धौ रूपमिति भावः । ण्यन्तात् उण् इति 'णेरनिटि' इति णिलोपे रूपम् । **केवला-दिति ।।** अण्यन्तादित्यर्थः । **तथेहापीति ।।** अष्टमे 'दिव्यम्' इत्यस्य 'सृष्ट्यादिक्रीडादियुक्तम्, दिवु क्रीडा इति धातोः' इति भाष्यकृदुक्तेः । तथेहापि देवशब्दार्थो ग्राह्य इत्युक्तं भवति ।। **भू प्राप्ताविति ।।** भूधातुः प्राप्त्यर्थकः आत्मनेपदीति वचनार्थः ।। **तत्पुरुषो बहुव्रीहिश्चेति ।** सर्वभूतानामधिवासः आश्रयः, सर्वभूतानि अधिवासः आश्रयो यस्य स इति भावः ।। **अत्रापीति ।।** मोक्षधर्मवाक्येऽपीत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। उणिति ।।** णित्वादुपधावृद्धौ वासुरिति रूपनिष्पत्ति-रिति ।। **केवलादिति ।।** णिजर्थरहितादित्यर्थः ।। **भू प्राप्तौ आत्मनेपदीति वचनादिति ।।** प्राप्त्यर्थो भूधातुः नित्यमात्मनेपदी भवति चुरादिरिति शेषः ।। **तत्पुरुषो बहुव्रीहिश्चेति ।** सर्वभूतानामधिनिवासः इति तत्पुरुषः, सर्वभूतानि अधिवासो वासस्थानं यस्येति बहुव्रीहि-श्चेत्यर्थः ।। अत्र सर्वं वासयति सर्वत्र वसति चेति व्याख्यातार्थद्वयस्य प्रामाणिकत्वलाभाय समासद्वयाश्रयणमिति ज्ञेयम् ।

**भावरत्नकोशः (सु.टि.)–** असाङ्गत्यशङ्कापरिहारायाह– **वृष्णीनामिति ।।** 'आच्छा-दयति' इति भाष्ये 'सर्वं व्याप्नोति' 'अविद्यादिना आवृणोति वा' इति

श्लोकः ३७

कर्मनिर्णयटीकारीत्याऽर्थः । **उणिति** ।। 'कृ, वा, पा, जि, मि, स्वदि, साधि, अशूभ्य उण्' इति विधीयमान उण्प्रत्ययो बाहुलकाद् वसेरपि भवति । सति च तस्मिन् परतः, 'अत उपधायाः' इति वृद्धौ वस्तेः 'सर्वमाच्छादयति' इति 'वासुः' इति रूपमिति भावः । **ण्यन्ताद् उणिति** ।। तस्मिंश्च परतः 'अत उपधायाः' इति वृद्धौ, 'णेरनिटि' इति णिलोपे, उणो णकारलोपे च वासुरिति रूपमिति भावः । नन्वेवं सति वसतेर्वृद्धिर्न स्यात् ? तन्निमित्तस्य णिचो लुप्तत्वादिति चेन्न । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति तल्लोपेऽपि वृद्ध्युपपत्तेः । न चैवम् उणो णित्त्वं व्यर्थमिति वाच्यम् । उक्तवक्ष्यमाणप्रत्यययोर्णित्त्वस्य वृद्ध्यर्थतया कर्तव्यत्वेन, अत्राप्येकशास्त्रोक्तत्वरूपप्रत्यासत्त्या प्रतिपत्तिसौकर्याय प्राप्तस्य धातुजवासुशब्दे उकारान्तत्वाय एवमुक्तत्वात् । यथा तातङि ङित्त्वस्य गुणाभावार्थस्य प्रवृत्तौ सप्रयोजनस्यापि, 'सेर्ह्यपिच्च' इति ङित्त्वस्य सिद्धतया तत्र प्रयोजनशून्यस्यापि प्रवृत्तिः, यथा वा 'कृ, वा, पा, जि,मि, स्वदि, साधि, अशूभ्य उण्' इति सूत्रे साधयति साध्नोति वा 'साधुः' इत्युदाहरणे ण्यन्तात् केवलाद्वा विहिताणूप्रत्ययस्य णित्त्वं न किमपि प्रयोजनमावहति इति शब्दस्योकारान्तत्वसम्पादनमेव प्रयोजनमिति तस्मादुण्प्रत्ययोत्पादनम्, तद्वदेवात्रापि द्रष्टव्यम् ।

**केवलात्** अण्यन्तात् । बाहुलकाद् ण्यन्तात् प्राप्तः केवलादप्युणेव भवति, न पुनः प्रत्ययान्तरं गवेषणीयमिति एवशब्दः । **इत्यत्र** सप्तमभाष्ये । ननु भवतिः सत्तार्थः । स कथं प्राप्त्यर्थो व्याख्यायते इत्यत आह– **भू प्राप्ताविति** ।। अनेनैव वचनेन भवतेः प्राप्तिरप्यर्थोऽभिसन्धीयत इति भावः । 'सर्वं वासयति' 'सर्वत्र वसति' इत्युक्तार्थद्वयलाभायाह– **तत्पुरुष इति** ।। 'सर्वभूतानाम् अधिवासः' इति षष्ठीतत्पुरुषः । 'सर्वभूतान्यधिवासो यस्य' इति बहुव्रीहिः । एवमपि 'वासु' इत्येव स्यात्, ननु 'वासुदेवः' इति । तत्राह– **अत्रापीति** ।। मोक्षधर्मेऽपीत्यर्थः ।।

**भावदीपिका (श्री.टि.)**– ।। **उणिति** ।। तथाच णित्त्वाद् उपधावृद्धौ लोपे 'वासु' इति भवति । **ण्यन्तादिति** ।। णिजन्तादित्यर्थः । अत्र पूर्ववदेव रूपम् । **केवलात्** णिजर्थरहितादित्यर्थः। अत्रापि रूपं पूर्ववदेव । अभेदप्रतीतिवारणाय 'भूत्वा' इत्यस्यार्थमाह– **प्राप्येति** ।। भूधातोः प्राप्त्यर्थत्वे धातुसूत्रवचनं प्रमाणयति– **भू प्राप्ताविति** ।। **तत्पुरुषो बहुव्रीहिश्चेति** ।। 'सर्वभूतानाम् अधिवासः वासयिता' इत्यनेन 'सर्वं वासयति' इति प्रमापितम् । 'सर्वभूतान्येवाधिवासभूतानि यस्य' इति बहुव्रीहिणा 'वसति सर्वत्र' इत्येतत्

प्रमापितमिति ध्येयम् । अत्र वासुशब्दार्थस्यैव कथनेन देवशब्दार्थाकथनाद् 'वासुदेवस्ततोऽस्म्यहम्' इत्यनुपपन्नम् इत्यत आह– **अत्रापीति** ।।

**भावप्रकाशः** (कृ.टि.)– ।। **उणिति** ।। वस्ते आच्छादयतीति वासुः । अत उपधाया इति वृद्धिश्चेति भावः । **ण्यन्तादुणिति** ।। णेरनिटीति णिलोप इति भावः । सर्वं वासयतीति सर्वत्र वसतीत्यर्थद्वयानुगुण्यायाह– **तत्पुरुष इति** ।। **एतदिति** ।। **व्यास इति** ।। समुदायान्तर्गत स इति पदमित्यर्थः । **व्यासमित्यादीति** ।। त्यदाद्यत्वे पररूपे च व्यातमिति स्यादित्यर्थः । आदिपदे व्यासेनेत्यादेः ग्रहणम् । उत्तरत इति द्विःश्रवणादाद्यस्यार्थभेदमाह– **उपरिष्टादिति** ।। ३७ ।।

## भाष्यम्

**विशिष्टः सर्वस्मात् आ समन्तात् गतः स एवेति व्यासः । तथा चाग्निवेश्यशाखायाम् 'स व्यासो वीति तमप् वै विः सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति' इति ।**

**'यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।**
**अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति च ।। ३७ ।।**

**भावप्रदीपिका** (प.टी.)– उत्तरतः ऊर्ध्वतः ।।

**प्रमेयदीपिका** (ज.टी.)– 'मुनीनामप्यहं व्यासः' इति ।। व्यासशब्दं व्याचष्टे– **विशिष्ट इति** ।। 'सर्वस्मात् विशिष्टः' इति विशब्दार्थः । 'आ' इत्यनुवादेन 'समन्तात्' इति व्याख्यानम् । 'सः' इत्यस्य 'स एव' इति । 'सृ गतौ' 'सृप्लृ गतौ' इत्यतो वा डे रूपमेतत् । न तु तदः । व्यासमित्याद्यनुपपत्तेः । समन्ताद् गतः सर्वगत इत्यर्थः । स व्यासः । कुतः? वीति हेतोः । कोऽर्थः । तमपः अर्थो हि विशब्दः । उत्तरतः उपरिष्टात् । 'यच्च किञ्चित्' इति भगवतः सर्वगतत्वे प्रमाणम् ।। ३७ ।।

**भावबोधः** (र.टि.)– ।। **डे रूपमिति** ।। डप्रत्यये डित्वाद्धातुद्वयटिलोपे प्रत्ययाकारसम्बन्धेनोभयत्रापि स इति रूपमिति भावः । **तद इति** ।। स इत्यस्य तच्छब्दरूपत्वे व्यातं

श्लोकः ३७

व्यातेनेत्यदि स्यात् । नतु व्यासमित्यादि । आद्यस्य उत्तरत इत्यस्यार्थमाह– **उपरिष्टादिति** ॥ ३७ ॥

**भावदीपः (रा.टि.)– ॥ डे रूपमिति** ॥ डित्वात् टिलोपे सति स इति रूपम्, व्यासमित्यर्थः । **नतु तद इति** ॥तच्छब्दस्य रूपं नन्वित्यर्थः । कुत इत्यत आह– **व्यासमित्याद्यनुपपत्तेरिति** ॥ व्यासं, व्यासेन, व्यासस्मै, व्यासस्मात् इत्यादि स्यादित्यर्थः । गत्यर्थधातुजत्वे फलितमाह– **आ समन्तादित्यादि** ॥ श्रुत्यर्थमाह– **स व्यास इति** ॥ **उपरिष्टादिति** ॥ तथाच चरमस्य उत्तरत इति न पुनरुक्ततादोष इति भावः ॥ ३७ ॥

**वाक्यार्थप्रदीपः (पां.टि.)– ॥ डे रूपमिति** ॥ डप्रत्यये डित्वात् टिलोपे प्रत्ययाकारसम्बन्धेनोभयत्रापि स इति रूपसिद्धिरिति भावः ॥ तच्छब्दस्यैवेतद् रूपं किं न स्यादित्यत आह– **नन्विति** ॥ तत्र हेतुमाह **–व्यासमित्याद्यनुपपत्तेरिति** ॥ व्यासशब्दे स इत्यस्य तच्छब्दरूपत्वे व्यातं व्यातेन व्यातस्यै इत्याद्येव स्यात्, नतु व्यासमित्यादीत्यर्थः ॥

॥ इति **श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेनविरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे दशमोध्यायः** ॥

**भावरत्नकोशः (सु.टि.)–** 'उपसर्गाः क्रियायोगाभावे ससाधनक्रियावचनाः' इति वैयाकरणाभ्युपगमादाह– **विशिष्ट इति विशब्दार्थ इति** ॥ 'आङ् मर्यादाऽभिविध्योः' इत्युक्तेः अत्रापि अभिविध्यर्थस्याङोऽर्थः– **समन्तादिति** ॥ **इति** अस्य व्याख्यानम् । **डे रूपम्** 'अन्येष्वपि दृश्यते' इत्यत्र दृशिग्रहणाद् डप्रत्यये, डिति अभस्यापि टेर्लोपे च, 'सः' इति रूपमित्यर्थः । तदः 'त्यजि, यजि, तनिभ्यो डित्' इत्युणादौ निष्पन्नस्य दकारान्ततच्छब्दस्य तद्रूपत्वे बाधकमाह– **व्यासमिति** ॥ तथाच 'देवीं सरस्वतीं व्यासम्' 'व्यासेनामिततेजसा' 'व्यासाय भूम्ने' इत्यादिप्रयोगानुपपत्तिः । प्रत्युत 'त्यदादीनामः' इत्यत्वे 'व्यातम्' इत्याद्येव स्यादिति भावः । 'समन्तात्' इत्यनन्तरं भाष्ये शेषं वदन् समग्रार्थमाह– **समन्ताद्गतः सर्वगत इति** ॥ 'स व्यासः' इति प्रतीकग्रहणम् । **वीति हेतोः** 'सर्वस्माद्विशिष्टः' इति हेतोः । 'तमप् वै विः' इत्येतदवतार्य व्याचष्टे– **कुत इति** ॥ 'अधस्तात्' इत्येतत्प्रतियोगित्वेन 'उत्तरतः' इत्येतद् व्याख्यातम्– **उपरिष्टादिति** ॥ उपरितनोत्तरशब्दस्य तूत्तरदिगेवार्थ इति भावः । अनेन

दिग्व्याप्तिलाभेऽपि सर्वगतत्वं नात्र लभ्यत इत्यत उत्तरश्रुत्युदाहरणमित्याह– **यच्च किञ्चेति** ।। ३७,३८ ।।

**वृष्णीनामिति** ।। वासुदेवः 'वस्ते छादयति' इति वासुः । 'वस आच्छादने' इत्यत उण् । 'वासयति सर्वम्' इति वा वासुः । 'वस निवासे' इत्यतो ण्यन्तादुण् । 'वसति सर्वत्र' इति वा वासुः । वसतेः केवलाद् उण् । देवशब्दार्थो भाषितः सप्तमे । वासुश्चासौ देवश्च क्रीडादिगुणविशिष्टश्चेति विग्रहः । धनञ्जयः अर्जुनः । 'तथा भीमश्च पार्थेषूत्तमः' इति वचनाद् इयं सजातीयैकदेशश्रैष्ठ्यदविभूतिः । सर्वस्माद्विशिष्ट इति विशब्देनोक्तः । आ समन्तात् सः एव सर्वगत इति व्यासः । व्यापूर्वात् 'सृ गतौ' इत्यतो डः । उशनाः शुक्रः ।। ३७ ।।

**भावदीपिका (श्री.टि.)– ।। डे रूपमिति ।।** 'डे' इति सप्तमी, डप्रत्यये परे रूपमित्यर्थः । तथा च 'वि आ' इत्युपपदात् 'सृ गतौ' 'सृप्लृ गतौ' इत्यतो वा डप्रत्यये, डित्त्वात् टीभूतस्य ऋवर्णस्य, ऋप् इत्यस्य वा लोपे, प्रत्ययाकारसम्बन्धे च सति 'व्यासः' इति रूपम् । ननु 'सः' इत्येतत् 'सृ गतौ' इत्यादिधातो रूपं कुतः , तच्छब्दस्यैव रूपं कस्मान्न स्यात् ? इत्यत आह– **नतु तद इति** ।। तत्र निमित्तमाह– **व्यासमित्यादीति** ।। 'तदोः सः सावनन्त्ययोः' 'त्यद्' 'तद्' इत्यत्र स्थितयोस्तकारदकारयोः सकारादेशः स्यात्सौ परे' इति प्रथमाविभक्तावेव तकारस्य सकारादेशविधानात् 'व्यासः' इति प्रथमैकवचनसम्भवेऽपि 'व्यासौ' 'व्यासाः' 'व्यासम्' इत्यादि न स्यात् । किन्तु 'सः, तौ, ते' इत्यादिवत् 'व्यासः, व्यातौ, व्याते, व्यातम्' इत्याद्येव स्यादित्यर्थः । 'व्यासम् इत्यादि' इति द्वितीयैकवचनादिग्रहणं तु 'व्यासः' इति प्रथमैकवचनस्यैव व्याख्येयतया प्रस्तुतत्वेन तदनुसारेणेति द्रष्टव्यम् । पौनरुक्त्यपरिहारायाह– **उपरिष्टादिति** ।। ३७,३८ ।।

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ।। ३८ ।।**

**भावरत्नकोशः (सु.टि.)– ।। दण्ड इति ।।** दमयतां दमयितॄणाम्, दण्डं कुर्वतां दण्डोऽस्मि । येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः । जिगीषतां जेतुमिच्छताम्, नीतिरस्मि सामाद्युपायभूतसारधर्मप्रदोऽस्मि । गुह्यानां गोपनीयानां मध्ये मौनं मौनलक्षण-सारधर्मोऽस्मि । ज्ञानवतां ज्ञानलक्षणसारधर्मोऽहम् ।। ३८ ।।

श्लोकः ३९,४०

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ।। ३९ ।।**

भावरत्नकोशः (सु.टि.)– सर्वभूतानां बीजं कारणं च अहम् एव । यदि ज्योतिरादिषु रव्यादीनां त्वत्सन्निधानकृतं वैशिष्ट्यम्, तर्हि तदन्येषां ज्योतिरादीनां त्वत्सन्निधिर्न स्यात् । ततश्च तत्सत्तादिकं स्वत एव स्यात् ? इत्यत उच्यते मया विना यच्चराचरं भूतं स्यात् तन्नास्तीति । केचित् प्रकरणोपसंहारार्थं विभूतिसङ्क्षेप उच्यते 'न तदस्तीति' इत्यवातारयन् ।। ३९ ।।

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ।। ४० ।।**

## भाष्यम्

**मया विना यद्भूतं स्यात् तन्नास्ति ।'विश्वरूप अनन्तगते अनन्तभाग अनन्तग अनन्त ' इत्यादि मोक्षधर्मे ।। ४० ।।**

भावप्रदीपिका (प.टी.)–न तदस्ति इत्यस्यान्वयमुक्त्वा, तत्रैव प्रमाणमाह– **मयेति ।।**

प्रमेयदीपिका (ज.टी.)– 'न तदस्ति विना' इत्यत्र पदानां व्यवहितत्वादन्वयमाह– **मयेति ।।** भगवतः अनन्तै रूपैः । सर्वपदार्थव्यापित्वे प्रमाणमाह– **विश्वेति ।।** विश्वं रूपं प्रतिमा यस्यासौ विश्वरूपः । अनन्तानां गतिः आश्रयः अनन्तगतिः । अनन्ता भागाः अवताराः यस्यासौ अनन्तभागः । अनन्तान् पदार्थान् गतः अनन्तगः । अनन्तःकालाद्यपरिच्छिन्नः ।। ४० ।।

भावरत्नकोशः (सु.टि.)– ।। भगवत **इति** ।। विश्वरूपः इत्यनन्तरं 'तत्सम्बुद्धिः' इति शेषः । एवमुत्तरत्रापि । **'पदार्थान् गतः'** इत्यत्र गमेः 'गत्यर्थाकर्मक' इति कर्तरि क्तः । **कालाद्यपरिच्छिन्नः** कालदेशगुणाद्यपरिच्छिन्नः ।।

सङ्क्षेपकरणे कारणं दर्शयतोपसंह्रियते– **नान्तोऽस्तीति** ।। हे परन्तप मम दिव्यानां विभूतीनाम् अन्तः अवसानं यतो नास्ति, अत उक्तविभूतिरूपाणाम् आनन्त्यात् एष उक्तो विभूतिविस्तरः उद्देशत एव इदमिदं विभूतिरूपमिति योऽयमत्र विशेषनामनिर्देशः कृतः सोऽपि सङ्ग्रह एव ।। ४० ।।

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ।। ४१ ।।**

## भाष्यम्

**यद्यद्विभूतिमदिति विस्तरः । विष्ण्वादीनि तत्स्वरूपाण्येव । अन्यानि तु तेजोयुक्तानि । तथाच पैङ्गिखिलेषु–**

**'विशेषका रुद्रवैन्येन्द्रदेवराजन्याद्या अंशयुताऽन्यजीवाः ।**
**कृष्णव्यासौ रामकृष्णौ च रामकपिलौ यज्ञप्रमुखाः स्वयं सः' इति ।**

**'स एवैको भार्गवदाशरथिकृष्णाद्यास्त्वंशयुताऽन्यजीवाः' इति गौतमखिलेषु । 'ऋषयो मनवो देवा मनुपुत्रा महौजसः । कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ।। एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इति भागवते ऋष्यादीन् अंशयुतत्वेनोक्त्वा वराहादीन् स्वरूपत्वेनाह ।।**

भावप्रदीपिका (प.टी.)– एष तूद्देशतः इति पूर्वपरामर्शो भवतीत्याह– **यदिति** ।। प्रोक्तः इति ।। शास्त्रान्तर इत्यर्थः । मम तेजोंशसम्भवम् इति विष्ण्वादीनामप्यंशसंयुक्तत्वशङ्कां सप्रमाणकं निराचष्टे– **विष्ण्वादीनामिति** ।। विशेषकाः गरुडानन्तब्रह्माणः ।

प्रमेयदीपिका (ज.टी.)– **'एष तूद्देशतः'** इति 'एतत्'शब्दोऽनुक्रान्तपरामर्शी इति प्रतीतिनिरासार्थम् आह– **यद्यदिति** ।। वक्ष्यमाणं बुद्धिस्थमेतच्छब्देन परामृश्यते । शृङ्गग्राहिकयोक्तेरपि लक्षणोक्तेर्विस्तरत्वादिति भावः ।। विभूतिमदादिकं मम तेजोरूपेणांशेन सह भवतीत्युक्त्या विष्ण्वादीनाम् अपि भगवदंशयुक्तत्वं प्रतीयते ।

श्लोकः ४१

तेषामप्येतल्लक्षणोपेतत्वात् । तन्निवृत्त्यर्थमाह– **विष्ण्वादीनीति** ।। **तर्हि किंविषयमेतद्वाक्यम्?** इत्यत आह– **अन्यानि त्विति** ।। **कुत एतत्?** इत्यत आह– **तथा चेति** ।। **विशेषकाः गरुडानन्तविरिञ्चाः । वैन्यः पृथुः । राजन्यग्रहणेन गृहीतस्यापि पुनरुक्तिः साक्षादवतारत्वविशेषोक्तिबाधनार्थम् । कृष्णः धर्मसूनुरपि । रामः भार्गवोऽपि । अंशयुक्तत्वेनोक्त्वा 'कलाः' इत्यनेन कला इव कलाः । न स्वरूपत्वेन । 'एते स्वांशकलाः' इत्यनेन स्वरूपांशरूपा एव कलाः । नतु पूर्ववदुपचारेणेति ।।**

**भावबोधः (र.टि.)**– ।। **शृङ्गग्राहिकयेति** ।। 'आदित्यानामहं विष्णुः' इत्यादिव्यक्तिविशेषोक्तेरपि 'यद्यद्विभूतिमत्' इति लक्षणोक्तेः बहुसङ्ग्राहकत्वादिति भावः । **प्रकृतापेक्षयेति** ।। भागवते मृडयन्तीति क्रियोक्तेरिति भावः ।। ४१ ।।

**भावदीपः (रा.टि.)– ।। शृङ्गग्राहिकयेति** ।। 'आदित्यानामहं विष्णुः' इत्यादिव्यक्तिविशेषोक्तितोऽपि 'यद्यद् विभूतिमत्' इति लक्षणोक्तेरनेकसङ्ग्राहकत्वादिति भावः ।। **किंविषयमेतद्वाक्यमिति**।। 'यद्यत्' इति वाक्यम् ।। **धर्मसूनुरपीति** ।। वासुदेवः कृष्णः 'अपि' पदार्थः।। **भार्गवोऽपीति** ।। दशरथरामोऽपिपदार्थसमुच्चेयः ।। उक्तत्वेनेति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति– **कला इत्यनेनेति** ।। तेन तदर्थलाभप्रकारमाह– **कला इव कला इति** ।। 'स्वरूपत्वेनाह' इति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति– **स्वांशकला इत्यनेनेति** ।। तदर्थमाह– **स्वरूपांश एवेत्यादि** ।।

**भावरत्नकोशः (सु.टि.)– ।। वक्ष्यमाणं** बुद्धिस्थम् । 'वक्ष्यमाणतया बुद्धिस्थम्' इति तद्ग्रहणे निमित्तकथनम् । अनुक्रान्तपरामर्शित्वाभावे उपपत्तिमाह– **शृङ्गग्राहिकयेति** ।। 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' इति वचनात् ण्वुलन्तोऽयं शब्दः । 'आदित्यानामहं विष्णुः' 'वृष्णीनां वासुदेवोऽस्मि' इत्यादिरूपेण गोः शृङ्गग्रहणेनेवोक्तेरपि लक्षणोक्तेः बहुव्यक्तिग्राहकत्वाद् विस्तरोक्तित्वं स्वरसम् इति एतच्छब्देन वक्ष्यमाणस्य ग्रहणं युक्तमिति भावः । **विभूतिमदादिकं** विभूतिमत्, श्रीमद्, ऊर्जितं च **तेषां** विष्ण्वादीनाम् **एतल्लक्षणोपेतत्वात्** विभूतिमत्, श्रीमद्, ऊर्जितमित्युक्तलक्षणोपेतत्वात् । **तर्हि** विष्ण्वादिरूपाणां स्वरूपत्वे, **एतद्वाक्यं** 'यद् विभूतिमदादिकं तत् मम तेजोंशसम्भवम्' इति वाक्यम् । **कुत एतत्** विष्ण्वादीनि स्वरूपाणि, अन्यानि तु तेजोयुक्तानि इति व्याख्यानं कुतः प्रमाणात् ज्ञातव्यमित्यर्थः । विशेषक-

शब्दोऽखण्डप्रातिपदिकं व्यावर्तकवचनश्चेत् प्रकृतानुपयोगः ? इत्यतस्तदर्थमाह– **गरुडानन्तविरिञ्चा इति ।।** **विः** पक्षी गरुडः । **अनन्तः** शेषदेवः । **कः** विरिञ्च इति विवेकः । अप्रतीतेर्व्याख्याति– **वैन्यः पृथुरिति ।। विशेषोक्तीति ।।** 'जातो नारायणांशेन पृथू राजा क्षितीश्वरः' 'नवमं पार्थिवं वपुः' इत्यादिविशेषोक्त्यत्यर्थः ।

'कृष्णव्यासौ' 'रामकृष्णौ' 'रामकपिलौ' इत्यत्र कृष्णशब्दो रामशब्दश्च द्विरुपात्तः । तत्रैको वसुदेवसूनुः कृष्णः, दशरथसूनू रामश्च प्रसिद्धः । अपरः कृष्णो रामश्च कौ ? इति न प्रतीयते । अत आह– **कृष्णो धर्मसूनुरपि रामो भार्गवोऽपीति** ।। न केवलं वसुदेवसूनुः कृष्णः स्वयं भगवान् परमपुरुषः । अपि तु अन्यः कृष्णो धर्मसूनुरपि स्वयं सः । न केवलं दाशरथी रामो भगवान्, किन्त्वन्यो रामो भार्गवोऽपीति प्रत्यायनाय अपिशब्द इति स्वामिनः । अन्ये तु आद्यकृष्णशब्दार्थोक्तिः धर्मसूनुरिति, द्वितीयरामशब्दार्थोक्तिः भार्गव इति । यद्यपि धर्मात्, भृगोरप्युत्पन्न इति उत्पत्त्यादिदोषित्वात् न भगवत्त्वमिति शङ्का । तथापि,

> 'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।
> न चापि राघवाज्जातो न चापि जमदग्नितः ।
> नित्यानन्दाद्वयोऽप्येवं क्रीडतेऽमोघदर्शनः ।।'

इत्यादिशास्त्रावमर्शेन तत्सूनुत्वमपि तत्र प्रादुर्भविनैव, न तु स्त्रीपुंसमलाभियोगात्मकदेहयोगित्वेन इत्येवं निश्चीयत इत्येतमर्थमावेदयितुम् अपिशब्द इति व्याचक्षते । 'अंशयुक्तत्वेनोक्त्वा' इति भाष्ये शेषमाह– **कला इत्यनेनेति** ।। कथं तेन तल्लाभः ? इत्यतो व्याख्याति– **कला इव कला इति** ।। 'स्वरूपत्वेन' इति भाष्यप्रतीकग्रहणम् । तत्र शेषोक्तिः– **स्वांशकला इत्यनेनेति** ।। तेनोक्तार्थलाभाय व्याचष्टे– **स्वरूपांशरूपा एवेति ।। पूर्ववत्** कला इव कला इतिवत् । एकत्र कलाशब्दः, अपरत्र स्वांशकलाशब्द एव भिन्नांशत्वे स्वरूपांशत्वे च मानमिति हृदयम् ।

**भावदीपिका (श्री.टि.)– ।। अनुक्रान्तेति ।।** पूर्वोपक्रान्तेत्यर्थः । **वक्ष्यमाणमिति ।।** तथा च 'प्रोक्तो यः स उद्देशतः, एष तु वक्ष्यमाणो विस्तरः' इत्यन्वयेनार्थो द्रष्टव्यः । ननु 'एष पूर्वोक्त एव विस्तरः' इत्येतच्छब्दस्य पूर्वप्रकृतपरामर्शकत्वमेव किं न स्यात् ? इत्यत आह– **शृङ्गग्राहिकयेति ।।** 'आदित्यानामहं विष्णुः' इति व्यक्तिविशेषोक्तेरपि 'यद्यद्विभूतिमत्'

श्लोकः ४१
इति लक्षणोक्तेर्बहुसङ्ग्राहकत्वेन पूर्वोक्तस्य विस्तरत्वाभावान्नैतच्छब्दः पूर्वानुक्रान्तपरामर्शीत्यर्थः । 'विभूतिमदादिकम्' इत्यत्रादिपदेन श्रीमदादिकं ग्राह्यम् । **एतल्लक्षणेति** ।। विभूतिमत्त्वादि-लक्षणेत्यर्थः । **एतद्वाक्यम्** 'यद्यद्विभूतिमत्' इति वाक्यम् । **साक्षादवतारत्वविशेषोक्तीति** ।। 'एषा विष्णोर्भगवतः कला भुवनपावनी ।' 'विष्णुकलाऽसि वैन्य' इत्यादि साक्षाद्भगवतारत्व-प्रतिपादकभागवतादिग्रन्थविशेषोक्तीत्यर्थः ।

**धर्मसूनुरपीति** ।। यमधर्मात् नारायणहरिकृष्णानामुत्पन्नत्वेन धर्मसूनुरपि कृष्णोऽस्तीति सोऽत्र 'कृष्णव्यासौ' इत्यत्र कृष्णशब्देन ग्राह्यः । द्वितीयकृष्णशब्देन तु 'यादवकृष्णः' इति भावः । **रामो भार्गवोऽपीति** ।। भार्गवोऽपि रामोऽस्तीति सोऽत्र 'रामकपिलः' इत्यत्र राम-शब्देन ग्राह्यः । द्वितीयरामशब्देन तु 'दाशरथिः' इति भावः । 'कलाः' इत्यनेन साक्षादंशत्व-प्रतीतेः कथमेतत् ? इत्यत आह– **कला इवेति** ।। 'स्वांशकलाः' इत्यनेन कथं स्वरूपांशत्व-लाभः इत्यत आह– **स्वरूपांशरूपा एवेति** ।। **पूर्ववत्** ऋष्यादिवत् ।

**भावप्रकाशः (कृ.टि.)**– अनुक्रान्तपरामर्शित्वे बाधकमाह– **शृङ्गिग्राहिकयेति** ।। धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति ण्वुलन्तोऽयम् । **ततः** शृङ्गग्रहणेनेत्यर्थः । **विस्तरत्वादिति** ।। आदित्या नामहं विष्णुरिति व्यक्तिविशेषोक्तेरपि यद्यद्विभूतिमदिति लक्षणोक्तेः बहुसङ्ग्राहकत्वादिति भावः ।।

## भाष्यम्

**तुशब्द एवार्थे । अन्यस्तु विशेषो न कुत्राप्यवगतः । अंशत्वं तत्राप्यव-गतम् 'उद्धवर्हात्मनः केशौ' । 'मृडयन्ति' इति च बहुवचनं चायुक्तम् । न ह्यन्तराऽन्यदुक्त्वा पूर्वमपरामृश्य तत्क्रियोच्यमाना दृष्टा कुत्रचित् ।। ४१ ।।**

भावप्रदीपिका (प.टी.)– नन्वत्र वराहादीनामंशांशत्वमुक्त्वा, कृष्णस्यैव ब्रह्मत्वमुच्यत इति तुशब्दादवगम्यत इत्यत आह– **तुशब्द इति** ।। कृष्ण एव भगवानिति योजना । न वराहादीनां ब्रह्मत्वम् । किन्तु कृष्णस्यैवेति किं न स्यात् ? इत्यत आह– **अन्यस्त्विति** ।। वराहादीनामंशत्वश्रवणादयं विभाग इत्यत आह– **अंशत्वमिति** ।। इतश्च नान्यथाऽस्य योजनेत्याह– **मृडयन्तीति** ।। इन्द्रारिव्याकुलं मृडयतीत्येव स्यादित्यर्थः । अवतारा ह्यसङ्ख्येयाः इति पूर्वोक्तेनास्यान्वय इत्यत आह– **न हीति** ।। ४१ ।।

**प्रमेयदीपिका** (ज.टी.)– नन्वत्र 'एते वराहाद्याः परमपुरुषस्यांशा एव । कृष्णस्त्वंशी भगवान् स्वयमिति प्रतीयते । तत्कथम् उक्तव्याख्यानम्? अन्यथा तुशब्दानुपपत्तेरित्यत आह– **तुशब्द इति** ।। ततश्चायमर्थः । एते वराहाद्याः पुंसः स्वांशकलाः । कोऽर्थः? कृष्णः परमपुरुषो भगवान् स्वयमेव एत इति । कुत एतत्? इति चेद् उदाहृतश्रुतिसंवादात् । अर्थान्तरस्य संवादाभावाच्चेत्याह– **अन्यस्त्विति** ।। वराहादयः अंशाः । कृष्णोंऽशी इत्येवं रूपः । इतोऽप्ययं विशेषो न युक्त इत्याह– **अंशत्वमिति** ।। तत्रापि कृष्णेऽपि । किञ्चास्मिन् व्याख्याने कृष्णस्यैकस्यैव प्रकृतत्वात् । 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे' इत्युत्तरवाक्ये बहुवचनं नोपपन्नमित्याह– **मृडयन्तीति** ।। ननु बहुवचनं पूर्वोक्तैर्वराहादिभिः सम्बद्ध्यते । न कृष्णेनेति चेन्न । **'कृष्णस्तु भगवान् स्वयम्'** इति वाक्यार्थेन व्यवहितत्वात् । व्यवहितस्यापि पुनः सन्निधानाय परामर्शाभावात् । सति गत्यन्तरेऽध्याहारायोगात् । असन्निहितेनान्वयबोधस्य क्वाप्यदर्शनादिति भावेनाऽह– **न हीति** ।। 'क्रिया' इति प्रकृतापेक्षयोक्तम् । ननु सन्निधेरपि योग्यता बलवतीति चेत् सत्यम् । सन्निधिमनतिक्रम्य योग्यान्वयस्तूक्तः ।। ४१ ।।

**भावदीपः** (रा.टि.)– 'इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे' इति वाक्यात् पूर्वं 'एते वराहाद्याः' इत्यध्याहारेणास्तु परामर्श इत्यत आह– **सति गत्यन्तर इति** ।। प्रागुक्तदिशेति भावः ।। 'क्रिया' इत्युक्त्या क्रियान्यधर्मान्तरं वक्तुं शक्यमिति भ्रमनिरासायाऽह– **क्रियेति** ।। **प्रकृतमपेक्ष्योक्तमिति** ।। 'मृडयन्ति' इति क्रियाया एवात्र प्रकृतत्वादित्यर्थः ।। ४१ ।।

**भावरत्नकोशः** (सु.टि.)– ।। एते इत्यस्यार्थः– **वराहाद्या इति** ।। 'पुंसः' इत्यस्यार्थः– **परमपुरुषस्येति** ।। **उक्तं व्याख्यानं** 'ऋष्यादयोंऽशयुताः' 'वराहाद्याः स्वरूपांशरूपाः' इत्युक्तं व्याख्यानमित्यर्थः । **तुशब्देति** ।। तस्य पूर्वोक्तविशेषकत्वादिति भावः । कथमनेनोक्तान्यथाप्रतीतिप्रतीकारः ? इत्यत आह– **ततश्चायमिति** ।। 'एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इत्यस्य । 'कृष्णस्तु भगवान् स्वयम्' इति पादमवतारयति– **कोऽर्थ इति** ।। 'विष्णुर्नारायणः कृष्णः' इत्यादिलौकिकप्रसिद्धेः, 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इति वैदिकप्रसिद्धेश्च कृष्णशब्दो नारायणस्यैव वाचक इति भावेनाह– **कृष्णः परमपुरुष इति** ।।

श्लोकः ४१

एतत् 'वराहाद्याः कृष्णो भगवान् मूलरूपी स्वयमेव' इति व्याख्यानम् । **उदाहृतेति** ।। पैङ्गिखिलगौतमखिलरूपोदाहृतश्रुतिसंवादादित्यर्थः । **अर्थान्तरस्य** 'परमपुरुषस्यांशा एव वराहाद्याः, कृष्णस्तु भगवान् स्वयमंशी' इति प्रतीतार्थस्य । **कृष्णेऽपि** वासुदेवेऽपि ।

'पूर्वमपरामृश्य' इत्येतद्भाष्यार्थमाह– **व्यवहितस्यापीति** ।। **परामर्शाभावादिति** ।। 'सं ते प्राणो वायुना गच्छताम् । संयजत्रैरङ्गानि । संयज्ञपतिराशिषा' इत्यत्र 'अङ्गानि' इति बहुवचनव्यवधानेऽपि यज्ञपतिः 'सङ्गच्छताम्' इति पदस्य पुनरन्वयाभावस्य 'व्यवायान्नानुषज्येत' इति जैमिनिसूत्रे व्यवस्थापनादिति भावः । ननु 'वराहाद्याः' इत्यध्याहाराद् बहुवचनोपपत्तिः ? 'संयज्ञपतिराशिषा' इत्यत्र 'गच्छताम्' इति पदाध्याहारस्य मीमांसकैरभ्युपगमात्, इत्यत आह– **सति गत्यन्तर इति** ।। 'एते वराहाद्याः पुंसः स्वांशकलाः, कोऽर्थः ? कृष्णः परमपुरुषो भगवान् स्वयमेवैते' इति व्याख्यानरूपगत्यन्तरे सम्भवतीत्यर्थः । ननु सामान्यन्यायोपपादनावसरे 'क्रियोच्यमाना' इति कथमुक्तम् ? इत्यत आह– **क्रियेति** ।। 'मृडयन्ति' इति क्रियाप्रस्तावात् तदपेक्षया क्रियाग्रहणम् । 'धर्ममात्रमप्युच्यमानं न दृष्टम्' इत्येव तु भाष्यार्थ इति भावः । **बलवतीति** ।। 'आनन्तर्यमचोदना' इत्यधिकरणे योग्यताबलीयस्त्वस्य स्थितेरिति भाव । **उक्तः** 'ततश्चायमर्थ इत्यत्र' इति शेषः । सन्निधियोग्यतयोर्विरोधे सत्येव, सन्निध्यपेक्षया योग्यता बलवतीति, तया तद्बाधो युक्तः । अत्र तूभयोरविरोध एवेति भावः ।।

एवं विभूतीनां सङ्क्षेपमुक्त्वा सामान्यतो विस्तर उच्यते– **यद्यदिति** ।। यद्यद् विभूत्यादिमत् सत्त्वं वस्तु श्रीमत् सम्पद्युक्तम् ऊर्जितम् अभिवृद्ध्युपेतं च तत्तद् वस्तु मम तेजोंऽशसम्भवं प्रकाशरूपेणांशेन सम्भवतीति तेजोंऽशसम्भवम् एव अवगच्छ ।। ४१ ।।

**भावदीपिका (श्री.टि.)**– ।। **उक्तव्याख्यानं** वराहादिवत् कृष्णस्यापि स्वरूपांशत्वमभिप्रेत्य व्याख्यानम् । **अन्यथा** वराहादिवत् कृष्णस्याप्यंशत्वे । **तुशब्देति** ।। पूर्वोक्तवराहाद्यपेक्षया विशेषद्योतकतुशब्देत्यर्थः । 'कृष्णः' इत्यनूद्य तस्यार्थमाह– **कृष्णः परमपुरुष इति** ।। मूलरूप्येवेत्यर्थः । 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इति मूलरूपेऽपि कृष्णप्रयोगादिति ध्येयम् । **उदाहृतश्रुतीति** ।। 'वृ॒ष्णव्यासौ' इत्युदाहृतश्रुतीत्यर्थः । 'अस्मदर्थे' इति शेषः । **परामर्शेति** ।। परामर्शकशब्देत्यर्थः । इन्द्रारीत्यर्थः । 'वराहाद्या' इत्यध्याहारः क्रियत इति चेत्, तत्राह– **सतीति** ।। अस्मदुक्तरीत्येत्यर्थः । असन्निहितेनाप्यन्वयबोधोऽस्त्विति चेत्,

तत्राह– **असंनिहितेनेति** ।। **प्रकृतेति** ।। भागवते 'मृडयन्ति' इति क्रियोक्तेरित्यर्थः । वस्तुतस्तु तत्कर्तव्यमित्येव द्रष्टव्यमित्याशयः । **योग्यतेति** ।। तथा च सन्निध्यभावेऽप्यर्था-बाधलक्षणयोग्यताबलात् व्यवहितेनापि 'मृडयन्ति' इत्यस्यान्वयोपपत्तिरिति भावः । **सन्निधि-मनतिक्रम्येति** ।। अस्मद्रीत्या सन्निधियोग्यताभ्यामन्वये सम्भवति सति संनिधिमतिक्रम्य योग्यतामात्रेणान्वयः त्वदुक्तो न युक्त इति भावः ।। ४१ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **विभूतिमदादिकमिति** ।। आदिपदाच्छ्रीमदूर्जितयोः ग्रहः । **साक्षादवतारत्वेति** ।। जातो नारायणोंऽशेन पृथू राजा क्षितीश्वरः । नवमं पार्थिवं वपुरित्या-द्युक्तीत्यर्थः । उत्तरत्र स्वांशेति विशेषणान्मुख्यत्वेऽपि अत्र तदभावाद्गौणत्वमिति भावेनाह– **कला इव कला इति** ।। ननु वराहादय इत्यध्याहाराद्बहुवचनत्वोपपत्तिरित्यत आह– **सति गत्यन्तर इति** ।। ननु सामान्यन्यायोपपादनावसरे क्रियेति कथमुक्तमित्यत आह– **प्रकृतापेक्षयेति** ।। मृडयन्तीति क्रियायाः प्रकृतत्वात् तदपेक्षयेत्यर्थः । **उक्त इति** ।। ततश्चायमर्थ इत्यादिनेति शेषः ।। ४१ ।।

## अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
## विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।। ४२ ।।

।। ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ।। १० ।।

## भाष्यम्

**'किम्' इति वक्ष्यमाणप्राधान्यज्ञापनार्थम् । न तूक्तनिष्फलत्वज्ञापनाय । तथासति नोच्येत । 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं वरं को विमुच्येत बन्धात्' इति ऋग्वेदखिलेषु ।**

भावप्रदीपिका (प.टी.)–अथवा बहुना इत्यत्रान्यथाप्रतीतिं निवारयति– **किमिति** ।। ननु सर्वगतत्वज्ञाने तदन्तर्गतत्वात् पूर्वोक्तमफलमेव किं न स्यात् ? इत्यत आह– **अज्ञात्वेति** ।।

श्लोकः ४२

**प्रमेयदीपिका (ज.टी.)– 'अथवा बहुनैतेन किं ज्ञातेन' इति पूर्वोक्तव्यस्तज्ञानाक्षेपात् तस्य निष्फलत्वमिति प्रतीतिनिरासार्थमाह– किमिति ।। किमित्ययमाक्षेपो वक्ष्यमाणसर्वव्याप्तरूपज्ञानस्य उक्त रविप्रभृतिपरिच्छन्नवस्तुस्वरूपज्ञानापेक्षया प्राधान्यज्ञापनार्थमेव न तूक्तविशेषज्ञानस्य निष्फलत्वज्ञापनार्थम् । निष्फलत्वे तदुक्तिवैयर्थ्यापत्तिरित्यर्थः ।। ननु व्याप्तिज्ञानेनैव मुक्तिसम्भवाद् विशेषज्ञानं व्यर्थमेव किं न स्यात्? इत्यत आह– अज्ञात्वेति ।। 'प्रियशिरस्त्वाद्यप्राप्तिः' इत्यादिकं ध्यानापेक्षयोक्तम् । ज्ञानापेक्षया तु श्रुतिरित्यविरोधः । अथवा विशिष्टाधिकारिविषयेयं श्रुतिः ।।**

**भावबोधः (र.टि.)–** ननु सर्वस्य ज्ञेयत्वे 'प्रियशिरस्त्वाद्यप्राप्तिः' इति सूत्रविरोध इत्यत आह– **प्रियेति ।। विशिष्टाधिकारीति ।।** सूत्रं त्वल्पाधिकारिविषयमिति भावः ।। ४२ ।।

**।। इति श्रीरघूत्तमतीर्थप्रणीता गीताभाष्यटीकाभावबोधे दशमोऽध्यायः ।।**

**भावदीपः (रा.टि.)– ।। व्यस्तेति ।।** व्यासो विस्तारः विस्तरेणोक्तविभूतिज्ञानाक्षेपादित्यर्थः ।। 'आदित्यानामहं विष्णुः' इत्यादिनोक्तविष्ण्वादिज्ञानापेक्षयेति भ्रमनिरासायाऽह– **उक्तरविप्रभृतीति** ।। ननु 'तस्य प्रियमेव शिरः' इत्याद्युक्तप्रियशिरस्त्वसम्भृतिद्युव्याप्त्यादेरसर्वाधिकारिकत्वस्य सूत्रकृदुक्तेः कथम् 'अज्ञात्वैनं' इति श्रुतिः? इत्यत आह– **प्रियशिरस्त्वादीति ।। विशिष्टाधिकारीति ।।** उत्तमेत्यर्थः ।। 'यो माम्' इत्युक्तसर्वत्रहरिदर्शनस्य कथं प्राधान्यलाभः? इत्यत आह– **विशिष्टेति ।।** 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि' इति षष्ठे व्याप्तिज्ञानस्य योगक्षेमादिविशिष्टफलोक्तेरित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। व्यत्यस्तज्ञानाक्षेपात्** विस्तरेणोक्तविभूतिज्ञानस्य 'किं ज्ञातेन' इति किंशब्देनाक्षेपादित्यर्थः । **तस्य** विस्तृत्योक्तविभूतिज्ञानस्य । **रविप्रभृतीति ।।** 'ज्योतिषां रविरंशुमान्' इत्यादिनोक्तरविप्रभृतीत्यर्थः । ननु भगवद्गतसर्वधर्माणां ज्ञेयत्वे 'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि' भेदे 'वेधाद्यर्थभेदात्' इत्यादि ब्रह्मसूत्रविरोधः । तत्र 'तस्य प्रियमेव शिरः' इत्यादिशास्त्रोक्तप्रियशिरस्त्वादिगुणोपासना न सर्वेषाम्, यतो मोक्षाख्यफलतारतम्यार्थम् उपासनाया उपचयापचयौ वृद्धिह्रासौ, तारतम्यमिति यावत्, उपेयाविति भागवतगुणानामपि सर्वाधिकार्युपास्यत्वाभावस्य प्रियशिरस्त्वाद्यधिकरणे स्थितेः इत्यत आह– **प्रियशिरस्त्वादीति ।। ध्यानापेक्षयेति ।।** एतत्सूत्रस्य उपासनापादगतत्वादिति भावः ।

'अज्ञात्वैनम्' इति भाष्ये श्रवणादाह– **ज्ञानापेक्षया त्विति** ।। **विशिष्टेति** ।। उत्तमेत्यर्थः । सूत्रं तु मन्दाधिकारिविषयमिति हृदयम् । **विशेषज्ञानं** रविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानम् । **अन्यान्** व्याप्तिज्ञानायोग्यान् **अन्यथासिद्धत्वात्** बहुफलयोग्यत्वज्ञापनार्थत्वात् ।

**भावदीपिका (श्री.टि.)**– ।। **व्यस्तज्ञानेति** ।। परिच्छिन्नज्ञानेत्यर्थः । ननु यदि सर्वेषां सर्वविशेषयुक्ततया भगवज्ज्ञानाभावे मुक्त्यभावः, तर्हि 'प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे' इति सूत्रे मोक्षार्थं सर्वेषां प्रियशिरस्त्वादिगुणविशेषयुक्ततया भगवदुपासनाभावस्योक्तत्वेन तद्विरोधः स्यात् ? इत्यत आह– **प्रियेति** ।। **अज्ञात्वेति** ।। श्रुत्या यथाशक्ति सर्वविषयकज्ञानं सम्पाद्यमित्युच्यते । सूत्रेण सर्वविशेषविषयध्यानं निषिध्यत इति न विरोध इति भावः । **विशिष्टाधिकारीति** ।। 'ब्रह्मणा त्वखिलैर्गुणैः, उपास्यः सर्ववेदैश्च' इति भगवत्पादीयवचनात् ब्रह्माद्युत्तमाधिकारिविषया श्रुतिः, सूत्रं त्वल्पाधिकारिविषयम् । 'सच्चिदानन्द आत्मेति मानुषैस्तु' इति वचनादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– ननु सर्वस्य ज्ञेयत्वे प्रियशिरस्त्वाद्यप्राप्तिरिति सूत्रविरोध इत्यत आह– **प्रियशिरस्त्वादीति** ।। फलभेदार्थमुपचयापचययोः भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासा प्राप्तिः । नैव सर्वे गुणाः सर्वैरुपास्या मुक्तिभेदतः । विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णतेति वाराहोक्तेरिति सूत्रार्थः । **विशिष्टाधिकारीति** ।। सूत्रं त्वल्पाधिकारिविषयमिति भावः । ननु गुणोत्कर्षपरं वाक्यं स्तुतिः । तद्वाचित्वं च किमो नास्तीति स्तुत्यर्थत्वेनेत्ययुक्तमित्यत आह– **प्रशस्तता ज्ञापनमिति** ।। गुणोत्कर्षज्ञापनमित्यर्थः ।

## भाष्यम्

**त्वं तु बहुफलप्राप्तियोग्य इति 'तव' इति विशेषणम् । अन्यस्तुत्यर्थत्वेन प्रसिद्धश्चैकत्र किंशब्दः । 'रागद्वेषौ यदि स्यातां तपसां किं प्रयोजनम् । तावुभौ यदि न स्यातां तपसा किं प्रयोजनम्' इत्यादौ । प्राधान्यं च सिद्धमेकत्र दर्शनात् सर्वत्र भगवद्दर्शनस्य 'यो मां पश्यति सर्वत्र' इत्यादौ ।। ४२ ।।**

भावप्रदीपिका (प.टी.)– नन्वल्पोपासकानां विशेषसाफल्येऽपि, अर्जुनादीनां

श्लोकः ४२

व्याप्तोपासकानां निष्फलमेव पूर्वोक्तम् । अन्यथा तव इति वैयर्थ्यं स्यादित्यत आह– **त्वं त्विति ।।** नन्वेकत्र किंशब्देनान्यप्राधान्यस्तुतिः क्व दृष्टा ? इत्यत आह– **अन्येति ।।** भवेदेतदुक्ताद्वक्ष्यमाणप्राधान्ये । तदेव कुतः ? इत्यत आह– **प्राधान्यं चेति ।। ४२ ।।**

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमगवद्गीताभाष्यभावप्रदीपिकायां दशमोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– ननु व्याप्तज्ञानयोग्यानां विशेषज्ञानं निष्फलमेव । अन्यान् प्रति तु तदुक्तिरिति व्यवस्थाऽस्तु । 'तव' इति विशेषणसामर्थ्यादित्यत आह– **त्वं त्विति ।।** 'अतो न तव विशेषज्ञानमात्रेणालमिति ज्ञापयितुम्' इति शेषः । विशेषणस्यान्यथासिद्धत्वात् नोक्तव्यवस्थाकल्पकत्वमिति भावः ।।

ननु किं ज्ञातेन? न किमपीति शब्दादुक्तस्य नैष्फल्ये प्रतीते तदुक्तिवैयर्थ्यप्रसङ्गाद् बाधकात् निष्फलाल्पफलयोः महाफलत्वाभावसादृश्याद् गौण्या वृत्त्या उक्तस्य अप्राधान्यप्रतीतौ अर्थाद्वक्ष्यमाणस्य 'प्राधान्यप्रतीतिः' इत्युक्तम् । तत्र गौणप्रयोगे प्रयोजनं वाच्यमिति चेन्न । रूढोपचारत्वादिति भावेनाऽह– **अन्येति ।।** स्तुतिः प्रशस्तताज्ञापनम् । अर्थः प्रयोजनम् ।। स्यादिदं व्याख्यानं यदि परिच्छिन्नज्ञानात् व्याप्तज्ञानस्य प्राधान्यं प्रमितं स्यात् । तदेव कुतः? इत्यत आह– **प्राधान्यं चेति ।।** 'यो माम्' इति विशिष्टफलकथनात् । न्यायसिद्धोऽप्यर्थो वाक्यसम्मत्या दृढो भवतीत्येतदुक्तम् ।। ४२ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायां दशमोऽध्यायः समाप्तः ।। १० ।।

भावदीपः (रा.टि.)– ।। **न्यायेति** ।। आक्षेपार्थककिंशब्दप्रतीतौ अन्यथासिद्ध-प्राधान्यरूपः न्यायसिद्धोऽप्यर्थो 'यो माम्' इति वाक्यसम्मत्या दृढो भवतीति प्राधान्यं सिद्धम् इत्याद्युक्तम् इत्यर्थः ।। ४२ ।।

।। इति श्रीराघवेन्द्रयतिकृते श्रीमद्गीताभाष्यटीकाभावदीपे दशमोऽध्यायः ।।

भावदीपिका (श्री.टि.)– तर्हि तदुक्तिवैयर्थ्यम् इत्यत आह– **अन्यानिति** ।। व्याप्तज्ञानायोग्यान् प्रतीत्यर्थः । तत्र ज्ञापकमाह– **तवेतीति** ।। 'तव' इत्यर्जुनं प्रत्युच्यमानत्वेन

तस्य विशिष्टाधिकारित्वेन व्याप्तज्ञानयोग्यत्वेन तस्य विशेषज्ञाने नैष्फल्ये, 'तन्न्यायेन सर्वेषाम्' इति व्याप्तज्ञानयोग्यानाम् उक्तविशेषज्ञानं निष्फलमेवेति प्राप्तमित्यर्थः । उक्तार्थमनुवदन्नेव उत्तर-वाक्यमवतारयति– **नन्विति** ।। 'बाधकाद् गौण्या वृत्त्या' इत्यन्वयः । सादृश्यमुपपादयति– **निष्फलेति** ।। गुणोत्कर्षप्रतिपादकशब्दरूपस्तुतिग्रहणस्य अत्रासम्भवादाह– **स्तुतिरिति** ।। एवं च रागद्वेषपरिहारस्य प्रशस्ततािज्ञापनार्थत्वेन तपसा किम् ? इत्येकत्र किंशब्दप्रयोगो दृष्ट इत्यर्थः । तापसेऽपि यदि रागद्वेषौ स्यातां तदा तपसा किं प्रयोजनम्, व्यर्थमेव तदीयं तप इति यावत् । तावुभौ रागद्वेषौ यदि न स्यातां तदा तपसा किं प्रयोजनम्, तपः कृत्वा रागद्वेष-परिहारः सम्पादनीयः । स चेत् स्वतः सिद्धः, तदा तत्परिहारकं तपो व्यर्थमिति वचनार्थः । 'यो मां पश्यति' इत्यादौ कथं सर्वत्र भगवद्दर्शनस्य प्राधान्यं सिद्धमस्ति ? इत्याशङ्कायामाह– **यो मामिति** ।।

'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।।'

इत्यत्र सर्वत्र भगवदुपासकस्य सर्वदा योगक्षेमरूपविलक्षणफलकथनादित्यर्थः । ननु 'एकत्र दर्शनात् सर्वत्र दर्शनस्य प्राधान्यम्' इति न्यायेनैव व्याप्तज्ञानस्य रविप्रभृतिपरिच्छिन्नवस्तुस्थ-परमात्म ज्ञानात् प्राधान्यस्य सिद्धत्वात् 'यो माम्' इति गीतावाक्यसम्मतिः कस्मादुक्ता ? इत्यत आह– **न्यायसिद्धोऽपीति** ।। **एतदुक्तमिति** ।। 'यो मां पश्यति सर्वत्र' इत्यादावित्युक्तमित्यर्थः ।। ४२ ।।

इति यदुवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
दशम अगमदस्यामन्तमध्यायवर्यः ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावप्रदीपिकाख्यायां दशमोऽध्यायः ।।**

**भावरत्नकोशः (सु.टि.)**– ।। **उक्तस्य** रविप्रभृतिपरिच्छिन्नवस्तुस्वरूपज्ञानस्य **वक्ष्य-माणस्य** सर्वव्याप्तिज्ञानस्य । ननु गुणोत्कर्षप्रतिपादनपरं वाक्यं स्तुतिः । तद्वाचित्वं च

श्लोकः ४२

किंशब्दस्य नास्तीति 'स्तुत्यर्थत्वेन' इत्ययुक्तम् ? इत्यत आह– **स्तुतिः प्रशस्तताज्ञापनमिति ।।** ननु 'यो माम्' इति वाक्ये सर्वदर्शनमुच्यते, न पुनस्तस्याधिक्यम् इत्याशङ्क्य, 'तस्याहं न प्रणश्यामि' इति वाक्यशेषोक्तम् आधिक्ये हेतुमध्याहरति– **विशिष्टफलकथनादिति ।।** योगक्षेमवहनमेव विशिष्टं फलम्, तस्य कथनादित्यर्थः ।

ननु विशेषरूपाण्युक्तानि, 'किं ज्ञातेन' इति चोक्तम् । एतदुभयान्यथानुपपत्त्या परिच्छिन्नव्याप्तज्ञानयोः गुणप्रधानभावः प्रमितः । ततो 'यो माम्' इति वाक्योदाहरणमयुक्तम् । न च प्रमाणान्तरत्वेन तदुपन्यासः । गीतार्थस्यैव विचार्यत्वेन तद्भावायोगात्, इत्यत आह– **न्यायसिद्ध इति ।।** आक्षेपार्थककिंशब्दप्रतिपादितान्याप्राधान्यरूपन्यायसिद्धोऽप्यर्थः 'यो माम्' इति वाक्यसम्मत्या दृढो भवतीति 'प्राधान्यं च सिद्धमित्याद्युक्तम्' इति स्वामिनः ।। ४२ ।।

लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादपि अधिकविभूतिविस्तर उच्यते– **अथवेति ।।** 'अथवा' इत्ययं निपातसमुदायः पक्षान्तरे । एतेन बहुना विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठपरिच्छिन्नविभूतिरूपाणां विस्तरेण ज्ञातेन तव किं फलम् न किमपि । अत्र वक्ष्यमाणप्राधान्यज्ञापनार्थ एवाक्षेपः, न तूक्तज्ञानस्य निष्फलत्वज्ञापनार्थः । तथात्वे तस्यावचनप्रसङ्गादिति भाष्ये स्फुटम् । किं तर्हि ज्ञातव्यम् ? इत्यत उक्तम्– **विष्टभ्येति ।।** इदं प्रमाणावगतं कृत्स्नं जगत् एकांशेन ममानन्तांशानां मध्ये एकेनैवांशेन विष्टभ्य व्याप्य स्थितः । सर्वांशेन व्याप्तुं जगतां सहस्रमपि न पर्याप्तम् । अतः 'तादृशापर्यवसितव्याप्तिमानहम्' इति ज्ञानम् अत्यावश्यकम् । न चैतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तरविप्रभृतिपरिच्छिन्नवस्तुरूपरव्यादिविभूतिरूपाणां ज्ञानं व्यर्थमिति वाच्यम् । 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को हि मुच्येत बन्धात्' इति श्रुत्या प्रागुक्तज्ञानस्याप्यावश्यकत्वावगमात् । तव च महाफलाधिकारितया उभयज्ञानमप्यावश्यकम् । तेनाधिकफलसद्भावात् । तथा चोक्तम्

'अन्याधिक्यज्ञापनार्थं शुभं चाक्षिप्यते क्वचित् ।
न तावताऽस्य हेयत्वं ज्ञेयैवान्यवरिष्ठता ।
उभयं मिलितं चैव ततोऽप्यधिकशोभनम् ।।' इति ।

श्रीमद्गीताभाष्यटीकादशमाध्यायसेवया ।
तोषमायान्तु विबुधा गुणग्रहणभूषणाः ।।

श्लोकः ४२

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाव्याख्यायां भावरत्नकोशसमाख्यायां सूरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायां दशमोऽध्यायः समाप्तः ।।

**भावप्रकाशः (कृ.टि.)**– ननु यो मामिति वाक्ये सर्वत्र दर्शनमेवोच्यते । न तु तस्याधिक्यमित्याशङ्क्य तस्याहं न प्रणश्यामीति वाक्यशेषोक्तमाधिक्ये हेतुमध्याहरति– **विशिष्ट-फलकथनादिति** ।। योगक्षेमवहत्वरूपविशिष्टफलकथनादित्यर्थः । ननु विशेषरूपाण्युक्तानि किं ज्ञातेनेति चोक्तम् । एतदुभयान्यथानुपपत्त्या परिच्छिन्नव्याप्तज्ञानयोः गुणप्रधानभावः प्रथितः । ततो यो मामिति वाक्योदाहरणमयुक्तम् । न च प्रमाणान्तरत्वेन तदुक्तिः । गीतार्थस्यैव विचार्यत्वेन तद्भावायोगादित्यत आह– **न्यायसिद्ध इति** ।। ४२ ।।

।। इति श्रीमत्तिरुमलाचार्यसुतकृष्णाचार्यविरचिते प्रमेयदीपिकाभावप्रकाशे दशमोऽध्यायः ।।

## ।। अथ श्रीमद्भगवद्गीतायाम् एकादशोऽध्यायः ।।

## भाष्यम्

**यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते ।।**

भावप्रदीपिका (प.टी.)– अध्यायप्रतिपाद्यमाह– **यथेति ।।**

**प्रमेयदीपिका (ज.टी.)– एतदध्यायप्रतिपाद्यमर्थमाह– यथेति ।। दशमान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' इति व्याप्तोपासनं सङ्क्षेपेणोक्तम् । नच सङ्क्षेपेणोक्तस्य ध्यानं शक्यम्, बुद्धावनारोहात् । अतो यथाभूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति । तथाभूतस्वरूपस्थितिरर्जुनाय प्रदर्शितस्यानुवादेन अनेन एकादशाध्यायेनोच्यते । स्वरूपग्रहणेन विश्वरूपस्य मायादिना तदैव निर्माय विसृष्टत्वं निवारयति ।।**

**भावदीपः (रा.टि.)– ।। तथाभूतस्वरूपस्थितिरिति ।।** अस्य 'उच्यते' इत्यनेनान्वयः ।। 'अनुवादेन' इति अध्यायविशेषणम् ।।

**भावरत्नकोशः (सु.टि.)–** 'एतदध्याय' इत्यतः पूर्वं 'पूर्वसङ्गतिं सूचयन्' इति शेषः । तामेव भाष्यसूचितां सङ्गतिं व्यक्तीकर्तुं तदर्थमाह– **दशमान्त इति ।। ध्यानम्** उपासनम् । 'यथा' इत्यस्यार्थः– **यथाभूत इति ।।** 'श्रुते' इत्यस्य विशेष्यपूरणम्– **व्याप्तरूप इति ।। ध्यानं शक्यं भवतीति ।।** तथा च पूर्वाध्यायोक्तध्यानसमर्थनार्थत्वाद् अस्याध्यायस्य सिध्यति तेन सङ्गतिरिति भावः । 'पश्य मे पार्थ रूपाणि' इत्यादिना विश्वरूपस्य प्रदर्शनमेव कृतम्, न तु वचनम् । तत्कथं 'तथाभूतस्वरूपस्थितिरुच्यते' इत्युक्तिः? इत्यत उक्तम्– **अर्जुनाय प्रदर्शितस्यानुवादेनेति ।।** एतच्च अध्यायविशेषणम् । **उच्यते** 'अनेकबाहूदरवक्त्रनेत्रम्' इत्यादिना । 'मायादिना' इत्यत्रादिशब्देन न्यायदीपिकोक्तं प्रधानं ग्राह्यम् ।। १३ ।।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
कुर्म एकादशाध्यायटीकां भावप्रदीपिकाम् ।।

।। अनुवादेनेति ।। 'अनुवादरूपेण' इत्यर्थः ।। १ ।।

**भावप्रकाशः (कृ.टि.)– ।। व्याप्तोपासनं सङ्क्षेपेणोक्तमिति ।।** 'अथवा बहुनैतेन किं ज्ञातेन' इत्यन्यज्ञानाक्षेपार्थाद्विष्टभ्याहमित्युक्तं व्याप्तत्वं ज्ञातव्यमित्यर्थलाभादिति भावः । यद्वोपासनार्थव्याप्तं रूपं संक्षेपेणोक्तमित्यर्थः । 'पश्य मे पार्थ रूपाणि' इत्यादिना व्याप्तरूपस्थितेरनुक्तत्वादाह– **अर्जुनाय प्रदर्शितस्यानुवादेनेति** ।। अनेकबाहूदरवक्त्रनेत्रमित्यादिनेति शेषः । 'मायादिना' इत्यादिपदादविद्याग्रहणम् ।। १ ।।

## अर्जुन उवाच–

**मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ।**
**यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ।। १ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** दशमान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति व्याप्तोपासनं संक्षेपेणोक्तम् । न च संक्षेपेणोक्तस्य ध्यानं कर्तुं शक्यम्, बुद्ध्यावनारोहात् । अतो यथाभूते व्याप्तरूपे विस्तरेण श्रुते ध्यानं शक्यं भवति तथाभूतस्वरूपस्थितिः अर्जुनाय प्रदर्शितस्यानुवादेन अनेनैकादशाध्यायेन विस्तरेणोच्यत इति. पूर्वाध्यायानन्तर्यम् अर्थभेदश्चेति द्रष्टव्यम् ।

विश्वरूपं दिदृक्षुरर्जुनः प्रागुक्तमभिनन्दन् आहेत्युच्यते अर्जुन उवाच, मदनुग्रहायेत्यादि चतुःश्लोक्या । हे कमलपत्राक्ष, मदनुग्रहाय माम् अनुग्रहीतुं परमं निरतिशयं गुह्यं गोप्यम् अध्यात्मसंज्ञितम् आत्मानं भगवन्तं जीवं वाऽधिकृत्य स्थितमध्यात्मम्, तन्नामकम् आत्मज्ञानतदुपायकर्मयोग, समाधियोगप्रतिपादकम् 'अशोच्यानन्वशोचस्त्वम्' इत्यादि आषष्ठसमाप्ति यद् वचः त्वयोक्तं तेनायं बन्धुस्नेहादिरूपमोहो मम विगतः मत्तोऽपगतः ।। १ ।।

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ।। २ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अपि च हे कमलपत्राक्ष कमलस्य पत्रे इवाक्षिणी यस्येति बहुव्रीहौ अक्ष्णः षच् । त्वत्तः सार्वविभक्तिकस्तसिः, तव सकाशादेव भूतानां

सशरीरजीवानां भवाप्ययौ सृष्टिप्रलयौ । 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिना विस्तरशः विस्तरेण मया श्रुतौ अव्ययम् अक्षयं माहात्म्यमपि 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते', 'मया ततमिदं विश्वम्', 'न च मां तानि कर्माणि', 'समोऽहं सर्वभूतेषु' इत्यादौ श्रुतम् ।।२।।

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ।। ३ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** परमेश्वर ! यत् मया 'भवाप्ययौ हि भूतानाम्' इत्यादिना श्रुतम्, यथा च आत्मानमात्थ 'विष्टभ्याहमिदं कृत्स्नम् एकांशेन स्थितो जगत्' इति ब्रवीषि, एतत् द्वयमपि एवम् एव अवितथम् अर्थाव्यभिचार्येव । एवमभिनन्दता दिदृक्षितं प्रार्थ्यते– **द्रष्टुमिच्छामीति** ।। हे पुरुषोत्तम ! ऐश्वरम् अचिन्त्यशक्तिकं ते रूपं द्रष्टुमिच्छामि ।। ३ ।।

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयाऽत्मानमव्ययम् ।। ४ ।।**

## भाष्यम्

**प्रभुः समर्थः । 'नास्ति तस्मात् परं भूतं पुरुषाद् वै सनातनात्' इति मोक्षधर्मे । 'प्रभुरीशः समर्थश्च' इत्याद्यभिधानम् ।। ४ ।।**

भावप्रदीपिका (प.टी.)– मया द्रष्टुमिति प्रभो महायोगेश्वरो हरिः इत्युक्तप्रभु-हरिशब्दौ सप्रमाणकं व्याचष्टे– **प्रभुरिति** ।। ४ ।।

प्रमेयदीपिका (ज.टी.)– **'मन्यसे यदि'** इत्यत्र प्रभुशब्दो न स्वामित्वमात्रार्थः । किन्तु तवातिसामर्थ्यात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावेन प्रयुक्त इत्याशयेनाह– **प्रभुरिति** ।। ईश्वरस्य निरतिशयसामर्थ्ये प्रमाणमाह– **नास्तीति** ।। भूतं समर्थम् । प्रभुशब्दस्य समर्थार्थत्वेऽभिधानमाह– **प्रभुरिति** ।। ४ ।।

भावरत्नकोशः (सु.टि.)– 'प्रभुशब्दः प्रयुक्तः' इति सम्बन्धः । अतीन्द्रियस्य

'अतिक्रान्तमिन्द्रियम् अतीन्द्रियम्' इति, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । तस्य सामर्थ्ये प्रमाणत्वं घटयितुं भूतशब्दार्थमाह– **भूतं समर्थमिति** ।। भवतेस्सत्तार्थत्वाद् 'असमर्थस्य सत्ता न सत्ता' इति औचित्यात् सामर्थ्यार्थकत्वमिति भावः । 'तस्मात् परं भूतं नास्ति' इत्येतत् प्रमाणविरुद्धम् इत्यतो भूतशब्दात् परमध्याहरति– **भूतं समर्थमिति** इत्यपि एके ।।

**गीताक्षरार्थस्तु** 'कौतूहलपारवश्याद् अहं द्रष्टुमिच्छामि' इत्येतावतैव त्वया न प्रदर्शितव्यं तद्रूपम्, किं तर्हि; मन्यसे यदि तच्छक्यं मया द्रष्टुमिति ततः तर्हि योगिन एव योगाः, 'अर्श-आद्यच्' तेषामीश्वर, अव्ययमात्मानं स्वरूपभूतमेव, न तु मायादिना निर्मितं तद्रूपं दर्शय । 'प्रभो' इति सम्बोधनम्, तवातिसमर्थत्वात् त्वत्सामर्थ्येनैवातीन्द्रियस्यापि दर्शनमिति भावयितुम्, स्वामित्वं प्रत्याख्यापयितुं च ।। ४ ।।

**भावदीपिका (श्री.टि.)**– ।। **अतीन्द्रियस्यापि** विश्वरूपस्य । **दर्शनम्** 'मम सम्भवति' इति शेषः । प्रकृतोपयोगाय भूतशब्दार्थमाह– **भूतमिति** ।। ४ ।।

**भावप्रकाशः (कृ.टि.)**– तस्मात् परं भूतं नास्तीत्येतत् प्रमाणविरुद्धमित्यतोभूतशब्दात् परमध्याहरति– **भूतं समर्थमिति** ।। ४ ।।

## श्रीभगवानुवाच–

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।। ५ ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** एवं कौतूहलवता पार्थेन प्रार्थितेन भगवता 'विश्वरूपदर्शनं कुरु' इति विधीयते– **भगवानुवाच पश्य मे पार्थेत्यादिना** ।। शतशः सहस्रशः इत्यत्र 'सङ्ख्यैकवचनाच्च वीप्सायाम्' इति शस्प्रत्ययः । शतंशतं सहस्रंसहस्रमिति तदर्थः । एकस्यैवाभिन्नानन्तरूपात्मकत्वाद् 'रूपाणि' इति विशेषबलाद् बहुवचनम् । दिव्यानि अलौकिकानि वर्णाः शुक्लपीतादयः आकृतयः अवयवसंनिवेशविशेषाः । नानाविधा वर्णाकृतयो येषां तानि तथोक्तानि ।। ५ ।।

श्लोकः ६-९

**पश्याऽदित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याऽश्चर्याणि भारत ।। ६ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- किञ्च ममैवैकस्मिन् रूपे पश्यादित्यान् वसून् अष्टौ रुद्रान् एकादश । अदृष्टपूर्वाणि लोके शास्त्रे वा इतः पूर्वमदृष्टानि । 'भूतपूर्वः' इतिवत् समासः । बहूनि आश्चर्याणि अद्भुतानि च पश्य ।। ६ ।।

**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद् द्रष्टुमिच्छसि ।। ७ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- इह त्वया दर्शनीये मम देहे । कृत्स्नम् इत्यस्य विवरणम्– **सचराचरमिति** ।। जगद् एकस्थम् एकदेशे स्थितम् अद्य पश्य । गुडाकेश जितनिद्र इति सम्बोधनम् । यच्च अन्यत् तव योग्यं द्रष्टुमिच्छसि तच्च प्रदर्शयिष्यामीति योज्यम् ।। ७ ।।

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।। ८ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- यदुक्तम् अर्जुनेन 'मन्यसे यदि द्रष्टुं शक्यम्' इति तत्रोच्यते– **न तु मामिति** ।। अनेन लौकिकेन स्वचक्षुषा द्रष्टुं न शक्यसे न शक्तो भविष्यसि । अतो दिव्यम् अलौकिकं ददामि । ऐश्वरम् ईश्वरसम्बन्धिनं योगं सामर्थ्यातिशयम् इति ।। ८ ।।

**सञ्जय उवाच–**

**एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ।। ९ ।।**

## भाष्यम्

**हरिः सर्वयज्ञादिभागहारित्वात् । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः' इति मोक्षधर्मे ।। ९ ।।**

**प्रमेयदीपिका (ज.टी.)– 'महायोगेश्वरो हरिः' इत्यत्र हरिशब्दस्य प्रकृतोपयुक्त-मर्थमाह– हरिरिति ।। गेहेषु इष्टि गेहेषु । हरतेरिकारप्रत्ययः । श्रेष्ठः अप्राकृतः । अप्राकृतविग्रहस्य साकार स्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत् सन्निधाने किं वक्तव्यं महायोगेश्वरत्वमिति ।। ९ ।।**

**भावबोधः (र.टि.)– ।। प्रकृतोपयुक्तमिति ।।** प्रकृतमहायोगेश्वरत्वोपपादकमित्यर्थः । **इकारप्रत्यय इति ।।** ततो लघूपधगुणः , तस्य रपरत्वे च हरिरिति रूपमित्यर्थः । प्रकृतोप-योगं दर्शयति– **अप्राकृतविग्रहस्येत्यादिना** ।। ९ ।।

**भावदीपः (रा.टि.)– ।। प्रकृतोपयुक्तमिति ।।** महायोगेश्वरत्वोपपादकत्वमित्यर्थ इति भावः ।। **हरतेरिति ।।** 'हृञ् हरणे' इत्यतः 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे च हरिरिति रूपमिति भावः ।। ९ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। हरतेरिकार इति ।।** हरतेरिकारप्रत्यये गुणरपरत्वयोः सतोः हरिरिति रूपसिद्धिरित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रकृतोपयुक्तं** महायोगेश्वरत्वोपयुक्तम् । गेहशब्दमनुवदन् प्रकृतोपयुक्तमर्थं तस्याह– **गेहेष्विति ।।** प्रमाणे इडाशब्दो हविराधानानुकूलयज्ञपात्रवचनः, तत्र प्रतिपादितम् इडोपहुतं हरे हरामि, हरितः श्याम इति शिष्टपदार्थः । यज्ञेषु दीयमान-हविर्भागहरणकर्तृत्वं हरिशब्दार्थ इत्येतद् व्युत्पादयति– **हरतेरिति** ।। 'हृ, पिषि, रुहि, वृति, विदि, छिदि, कीर्तिभ्यश्च' इत्युणादिसूत्रेण 'हृञ् हरणे' इति धातोः कर्तरि इन्प्रत्यय इत्यर्थः । स्वरार्थनकारानुबन्धानुक्तिरत्र स्वरस्याविवक्षितत्वात् । ततः सार्वधातुकलक्षणे गुणे, रपरे च 'हरिः' इति रूपम् इति भावः । अप्राकृत एव हि श्रेष्ठो भवतीति भावेनोक्तम्– **श्रेष्ठोऽप्राकृत इति ।।** 'प्रकृतोपयुक्तम्' इत्युक्तं दर्शयति– **अप्राकृतविग्रहस्येति ।।** वर्णपदतात्पर्यम्– **साकारस्यैवेति ।।** 'गेहेषु' इत्यस्य तात्पर्यम्– **पूजास्थानेष्विति** ।। ९ ।।

**गीताक्षरार्थस्तु** अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति सञ्जय आहेत्युच्यते सञ्जय उवाच 'एवमुक्त्वा' इत्यादिभिः षड्भिः श्लोकैः । एवं 'पश्य मे पार्थ रूपाणि' इत्यादिनोक्तप्रकारेण । महान् योगः येषां ते महायोगाः ब्रह्माद्याः, तेषामपीश्वरः । तदिदमुपपादयितुमुक्तम्– **हरिरिति** ।।

श्लोकः १०

यज्ञे दीयमानहविर्भागहरणकर्तृत्वाद् हरिः । हरतेरिकारप्रत्ययः । अप्राकृतहरितवर्णशालित्वाच्च 'हरिः' इत्युच्यते । अप्राकृतविग्रहस्य साकारस्यैवानन्तपूजास्थानेषु स्वरूपेणैव युगपत्सन्निधाने किं वक्तव्यम् 'महायोगेश्वरत्वम्' इति विभावितं भवति । ऐश्वरम् ईश्वरस्य विद्यमानम् अनन्यसाधारणं रूपं दर्शयामास ॥ ९ ॥

**भावदीपिका (श्री.टि.)– ॥ प्रकृतोपयुक्तमिति ॥** प्रकृतमहायोगेश्वरत्वोपपादकमित्यर्थः । **इष्टीति** ॥ 'इडोपहुतम्' इति जीर्णपुस्तकपाठः । 'इडोपहूतम्' इति पाठे तु गेहेषु इष्टिगृहेषु क्रतुषु इडोपहूतम् 'इड' इति मन्त्रविशेषाणां संज्ञा । तेषु उपहूतम् प्रतिपाद्यं भागम् । यद्वा 'इडा पितुः भक्तम् इत्यन्ननामानि' इति वैदिकनिघण्टुबलाद् अन्नसंज्ञकं भागम् । अथवा इडः यज्ञः, तत्रोपहूतं दत्तमिति यावत् । भागं हरे यस्मात् तस्माद् हरिरित्यर्थः । **हरतेरिति** ॥ 'हृञ् हरणे' अस्माद् इप्रत्यये, गुणे, 'हरिः' इति रूपम् । कथमयमर्थः प्रकृतमहायोगेश्वरत्वोपपादक इत्यत आह– **अप्राकृतेति** ॥ ९ ॥

**भावप्रकाशः (कृ.टि.)– ॥ प्रकृतोपयुक्तमिति** ॥ वक्ष्यमाणार्थस्य महायोगेश्वरत्वोपपादकत्वादिति भावः । भाष्ये **इडोपहूतमिति** ॥ इडाः पक्वान्ननिर्वर्त्याः देवपितृमनुष्यभूतयज्ञाश्चत्वार पाकयज्ञाः तासूपहूतं दत्तमित्यर्थः । इडा यज्ञपात्रं तत्स्थमिति वा क्रतुशब्दो ज्योतिष्टोमादिवाची । हरितशब्दः श्यामार्थ इति बोध्यम् । **इकारप्रत्यय इति** ॥ अच इदित्युणादिसूत्रेणेति शेषः । ततः सार्वधातुकार्धधातुकयोरिति गुणे रपरत्वं चेति बोध्यम् । प्रकृतोपयोगं दर्शयति– **अप्राकृतेति** ॥ ९ ॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** तदेव रूपमुच्यते– **अनेकेति** ॥ अनेकशब्दोऽनन्तवाची । अनेकानि अनन्तानि वक्त्राणि नयनानि च यस्य तत् तथा । 'दृश्यन्तेऽत्र' इत्यधिकरणे ल्युट्, अनेकेषाम् अद्भुतानां दर्शनम् । अनेकम् अद्भुतानां दर्शनं यस्मिन्निति वा । अनेकानि दिव्यानि अलौकिकानि आभरणानि यस्य तत् तथा । दिव्यानि अनेकानि उद्यतानि वैरिवधे उन्नमनवन्ति आयुधानि यस्य तत् तथा ॥ १० ॥

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ।। ११ ।।**

## भाष्यम्

**सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् ।। ११ ।।**

भावप्रदीपिका (प.टी.)– मयटो विवक्षितार्थमाह– **सर्वेति ।।** ११ ।।

**प्रमेयदीपिका** (ज.टी.)– **'सर्वाश्चर्यमयम्'** इति केनचित् प्राचुर्यार्थो मयड्-व्याख्यातः । तदसत् । सर्वशब्देन गतार्थत्वादिति भावेनाऽऽह– **सर्वेति ।।** मयट-स्तादात्म्यार्थत्वे प्रमाणमुक्तमेव ।। ११ ।।

**भावदीपः** (रा.टि.)– ।। **प्रमाणमुक्तमिति** ।। 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इत्युक्तं सप्तमाध्याय इत्यर्थः ।। ११ ।।

**भावरत्नकोशः** (सु.टि.)– **केनचित्** 'सर्वाश्चर्यप्रायम्' इति भाषमाणेन शङ्करेण 'सर्वै-राश्चर्यैः प्रचुरम्' इति व्याचक्षाणेन केशवसाक्षिणा च । **गतार्थत्वादिति** 'सर्वैराश्चर्यैः प्रचुरम्' इत्यत्र सर्वशब्देनैव प्राचुर्यस्य लाभेन पुनर्मयटो न प्रयोजनं परव्याख्यान इति भावः । तदात्मकत्वार्थे मयडनुशासनं न प्रसिद्धव्याकरणेऽस्ति, इत्यत आह– **मयट इति** ।। उक्तं 'त्रिभिर्गुणमयैर्भावैः' इत्यत्र 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति सप्तमे ।।११।।

**गीताक्षरार्थस्तु-** धरतीति धरम्, दिव्यानां माल्यानां पुष्पाणाम् अम्बराणां च धरं धर्तृ । दिव्यो गन्धः परिमलो यस्य तद् दिव्यगन्धम् अनुलेपनम् अङ्गरागो यस्य तत् तथा । सर्वाश्चर्यमयं तादात्म्ये मयट्, सर्वाश्चर्यात्मकं देवं क्रीडादिगुणकम् अनन्तं देशतः कालतो गुणतश्च परिच्छेदहीनं विश्वतोमुखं 'विश्वत' सार्वविभक्तिकस्तसिः प्रथमार्थे, विश्वानि अनन्तानि मुखानि यस्य तत् तथा । 'अनेकवक्त्रनयनम्' इत्यनेन लब्धस्यापि पुनरुक्तिरादरेण तात्पर्य-द्योतनार्था, सर्वदिगवस्थितमुखमिति वा । 'रूपं दर्शयामास' इत्यनुषङ्गः ।। ११ ।।

**भावदीपिका** (श्री.टि.)– ।। **गतार्थत्वादिति** ।। आश्चर्यप्रचुरत्वं नाम बह्वाश्चर्यवत्त्वम् । इदं च सर्वशब्देनैव लब्धम् । अतो मयट् व्यर्थ इत्यर्थः । **उक्तमेवेति** ।। 'त्रिभिर्गुणमयैः'

इत्येतद्व्याख्यानावसरे 'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति सप्तमे प्रमाण-मुक्तमेवेत्यर्थः । 'सर्व' इति भाष्यस्य 'सर्वलोकेषु सर्वापेक्षया ये आश्चर्यभूता गुणाः, तदात्मकम्' इत्यर्थः ।। ११ ।।

भावप्रकाशः (कृ.टि.)– ।। उक्तमेवेति ।। 'त्रिभिर्गुणमयै'रित्येतद्व्याख्यावसरे 'तादात्म्यार्थे विकारार्थे' इत्यनेनेति शेषः ।। ११ ।।

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ।। १२ ।।**

## भाष्यम्

**सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रम' इत्यादिवत् प्रत्यायनार्थमेव । तथा हि ऋग्वेदखिलेषु 'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति । महातात्पर्याच्च प्राबल्यम् । नच परिमाणोक्त्या किञ्चित् प्रयोजनम् ।। १२ ।।**

भावप्रदीपिका (प.टी.)– दिविसूर्यसहस्रस्य इति भगवत्तेजसः परिमितत्वमुच्यत इत्यत आह– **सहस्रेति** । अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथाऽपि न विरोध इत्याह– **तदपीति** । साक्षात्परिमितत्वमेवार्थः किं न स्यात् इत्यत आह– **तथा हीति** । ननु वचनत्वाविशेषात् केन कस्य बाध इत्यत आह– **महातात्पर्येति** । कथं परिमाणोक्त्या महातात्पर्यविरोध इत्यत आह– **न चेति** । मोक्षार्थं प्रवृत्तशास्त्राणां परिपूर्णे ब्रह्मणि परिमाणवाचित्वे किञ्चित्प्रयोजनं नास्ति, किमु मोक्ष इत्यर्थः ।।१२।।

प्रमेयदीपिका (ज.टी.)– 'दिवि सूर्यसहस्रस्य' इति विश्वरूपस्य सहस्रसूर्योपम-प्रभत्वमुच्यते । तत्र सहस्रशब्दो दशशतवाचीति प्रतीतिनिरासार्थमाह– **सहस्रेति** ।। अनन्तसूर्योपमप्रभत्वमपि भगवनो न वास्तवम् । निरुपमत्वात् । किं तर्हीत्यत आह– **तदपीति** ।। प्रत्यायनार्थं बुद्धिप्रवेशनार्थम् एव उच्यते । यथा भगवतो दाशरथेः पाकशासनोपमपराक्रमत्वमित्यर्थः ।।

**सहस्रशब्दस्य प्रसिद्धार्थपरित्यागः कुतः? इत्यत आह– तथा हीति ।। ततस्ततः 'सूर्यादिरपि विलक्षणः' इति शेषः । कुतः श्रुत्या गीतावाक्यस्य बाधः? इति चेत् । 'शतं सहस्रम् इत्यपरिमितनामानि' इति गीतावाक्यस्य सावकाशत्वेन दौर्बल्यात् । श्रुतेः निरवकाशत्वेन प्राबल्यात् ।**

**इतश्च श्रुतेः प्राबल्यमित्याह– महातात्पर्याच्चेति ।। समस्तागमानां महाप्रयोजनाय यद्भगवति महातात्पर्यं श्रुतेस्तदानुकूल्याद् गीतावाक्यस्य तत्प्रातिकूल्यादित्यर्थः । कथं गीतावाक्यस्य तत्प्रातिकूल्यम् ? इति चेत् । किं भगवतः परिमितप्रभत्वमेव वस्तुतः? उतापरिमितप्रभस्याऽप्यत्र सहस्रसूर्योपमप्रभत्वमुच्यते ? नाद्यः । सकलश्रुति-स्मृतीतिहासपुराणविरोधात् । द्वितीये त्वपरिमितस्य परिमाणोक्त्या किञ्चिदपि प्रयोजनं न सिद्ध्यति । कुतो महत्? इत्याह– नचेति ।। १२ ।।**

**भावरत्नकोशः (सु.टि.)–** 'निभ, सङ्काश, नीकाश, प्रतीकाश, उपमादयः' इत्युक्तेः, उपमशब्दः सदृशार्थः । उपमाशब्दस्य दीर्घान्तस्यापि 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वे 'उपमप्रभत्वम्' इति युक्तम् । तदपि अनन्तसूर्योपमप्रभत्वमपीति भाष्यपदार्थः । 'बुद्धि-प्रवेशार्थम्' इत्यत्र बुद्धेः प्रवेशो विषयीकरणलक्षणः । पाकशासनस्य देवेन्द्रस्य विक्रमः पराक्रम इव पराक्रमो यस्येति विग्रहाभिप्रायेणोक्तम्– **पाकशासनोपमपराक्रमत्वमिति** ।। पाकशासन-पराक्रमोपमपराक्रमत्वमित्यर्थः । भावप्रदीपिकायां तु अस्तु वा सहस्रशब्दस्य प्रसिद्धार्थत्वम् । तथापि न दोष इत्याह 'तदपीति' इत्यवतारितं 'तदपि' इति भाष्यम् । **प्रसिद्धार्थः** दशशतानि । 'सूर्यादितोऽप्यनन्ततेजाः परमः' इत्युक्ते सावधिकानन्तसूर्योपमतेजस्त्वं न निवारितं स्यात्, इत्यतः प्रमाणे शेषमाह– **विलक्षण इति शेष इति** ।। भाष्ये 'इति'शब्दात् परं 'श्रूयते' इत्यध्याहृतस्य 'तथाहि' इत्यत्रत्य'हि'शब्देनान्वयो द्रष्टव्यः । एवं च 'प्रसिद्धार्थ-परित्यागः कुतः' इति गमनिकाटीका सुघटा भवति । 'दौर्बल्यात्' 'प्राबल्यात्' इति पञ्चम्यन्तशब्दद्वयस्य 'श्रुत्या गीतावाक्यस्य बाध' इत्यन्वयः । **महाप्रयोजनाय** मोक्षरूपाय **तत्प्रातिकूल्यं** महातात्पर्यप्रातिकूल्यम् । **अत्र** गीतायां **किञ्चित्** अल्पं **महत्** मोक्षरूपम् ।।

**गीताक्षरार्थस्तु** विश्वरूपस्य निरुपमस्यापि प्रत्यायनार्थम् अनन्तसूर्योपमत्वमुच्यते– **दिवीति** ।। दिवि अन्तरिक्षे सूर्याणां सहस्रस्य अनन्तस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः

श्लोकः १३-१५

प्रभा या तर्हि सा महात्मनः विश्वरूपस्य भासः प्रभायाः कथञ्चित् सदृशी स्यात् । एवमनन्तसूर्योपमप्रभत्वमपि भगवतो न वास्तवम्, निरुपमत्वात् । किमर्थं तर्ह्येतदुच्यत इति चेत् 'पाकशासनविक्रमो दाशरथिः' इतिवत् प्रत्यायनार्थमेव । परमार्थतस्तु 'अनन्तशक्तिः परमोऽनन्तवीर्यः सोऽनन्ततेजाश्च ततस्ततोऽपि' इति शास्त्रात् सूर्यादिरपि विलक्षणो निरुपम एव भगवानिति भावः । 'एवंविधं रूपं दर्शयामास' इति पूर्वेणान्वयः ।। १२ ।।

**भावदीपिका (श्री.टि.)– ।। न सिध्यतीति ।।** विशिष्टाधिकारिणामित्यर्थः । कुतो महत् 'प्रयोजनं सिध्यति' इति वर्तते ।। १२ ।।

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तथा ।। १३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताश्लोकद्वयार्थस्तु** ततः किमासीत् इत्यत उच्यते– **तत्रेति** ।। तस्मिन् भगवता प्रदर्शिते देवदेवस्य शरीरे विश्वरूपे अनेकधा चेतनाचेतनभेदेन देवमानवादिभेदेन वा प्रविभक्तं कृत्स्नं जगद् एकस्थम् एकदेशस्थितमेव तदाऽपश्यत् ।। १३ ।।

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ।। १४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** दर्शनानन्तरं किमकरोत् ? इत्यत उच्यते– **तत इति** ।। हृष्टानि पुळकितानि रोमाणि यस्यासौ तथोक्त इति ।। १४ ।।

## अर्जुन उवाच–

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ।।१५।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** 'धनञ्जयोऽभाषत' इत्युक्तभाषणमेव विविच्योच्यते– **अर्जुन उवाच .... पश्यामि** इत्यादि सप्तदशभिः । तत्रापि दृष्टविश्वरूपस्यार्जुनस्य दृष्टानुवादव्याजेन स्तवनप्रकार उच्यते– **पश्यामीति** ।। देव , स्तुत्य, भूतविशेषाः

प्राणिभेदाः ब्रह्माणं चतुर्मुखं कमलासनस्थं कमलासने ब्रह्मणि स्थितम् ईशं रुद्रं दिव्यान् लोकविलक्षणान् उरगान् वासुकिप्रभृतिसर्पान् तव देहे पश्यामि ।। १५ ।।

**अनेकबाहूदरवक्त्रनेत्रं**
**पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं**
**पश्यामि विश्वेश्वर विश्वरूप ।। १६ ।।**

## भाष्यम्

**अनेकशब्दोऽनन्तवाची । 'अनन्तबाहुम्' इति च स्वयं वक्ष्यति । 'सर्वतः पाणिपादं तत्' इत्यादि च । 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः' इति ऋग्वेदे । 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् ।सं बाहुभ्यां नमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः'इति यजुर्वेदे च ।**

भावप्रदीपिका (प.टी.)– अनेकवक्त्रनयनम् इत्यत्र अनेकशव्दो न द्व्याद्यर्थ इति सप्रमाणकमाह– **अनेकेति ।**

प्रमेयदीपिका (ज.टी.)– 'अनेकवाहूदरवक्त्रनेत्रम्' इत्यत्रानेकशब्दस्य द्व्यादौ पर्यवसानाद् विवक्षितमर्थमाह– **अनेकेति** ।। अनेन **'अनेकवक्त्रनयनम्'** इत्यपि व्याख्यातम् । कुत एतत्? इत्यत आह– **अनन्तेति** ।। 'सर्वतः' इत्यस्यार्थः तात्पर्य-निर्णयेऽवगन्तव्यः । इत्यादि च वक्ष्यति । बाहुभ्यां प्रधानाभ्यां पतत्रैः पतत्रसदृशैरितर-वाहुभिः सं धमति अग्न्यादिभूतानि संयोजयतीति प्रत्येकमन्वयः । सं नमति इत्यस्याप्ययमेवार्थः ।।

भाववोधः (र.टि.)– ।। तात्पर्यनिर्णय इति ।।

श्लोकः १६

'सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्'

इत्यत्रेत्यर्थः । ध्माऽग्निसंयोग इति धातुव्याख्यानमभिप्रेत्याह– **अग्न्यादिभूतानीति** ।। अनेन द्यावाभूमी जनयन् सन् तदर्थं त्रिवृत्करणं करोतीत्यर्थ उक्तो भवति ।। **प्रत्येकमन्वय इति** ।। बाहुभ्यां संधमति पतत्रैः संधमतीति प्रत्येकमित्यर्थः । **अयमेवार्थ इति** ।। धातूनामनेकार्थत्वात्समित्युपसर्गयोगाच्चेति भावः ।

**भावदीपः (रा.टि.)– ।। तात्पर्यनिर्णय इति ।।**

'सर्वतः पाणिपादादिः यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान्'

इत्यनेन त्रयोदशोक्तादवगन्तव्य इत्यर्थः । **'इत्यादि च'** इति भाष्ये **'वक्ष्यति'** इत्यनुषङ्गमाह– **इत्यादि च वक्ष्यतीति ।। प्रत्येकमिति ।।** 'बाहुभ्यां संधमति' 'पतत्रैः संधमति' इति प्रत्येकमित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** ।। एतत् अनन्तवाचित्वम् । सर्वतः पाणिपादत्वं प्रकृतानुपयुक्तं किमित्युच्यते ? इत्यत प्राह– **सर्वत इत्यस्यार्थ इति** ।। 'सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् । केशादिष्वपि सर्वत्र कृष्णकेशो हि यादव ।। 'इति श्लोके केशादिसर्वावयवेषु पाणिपादादिशक्तिमत्त्वस्य कृष्णकेशावतारे कृष्णे दृष्टत्वात् 'सर्वतः पाणिपादाद्यवयवं ब्रह्म' इत्येकमर्थमुक्त्वा,

'अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान् ।।'

इति श्लोके पाणिपादादिसकलावयवयुक्तैः परमाणुरूपैः सर्वत्र स्थितत्वात् 'सर्वपाणिपादादि-

मद् ब्रह्म' इत्यर्थान्तरमुक्तम् । तत्र द्वितीयेऽर्थे अणूनामपि रूपाणां पाणिपादादियुक्तानां सर्वत्रावस्थानोक्त्या अवयवानामप्यानन्त्यम् अर्थसिद्धमिति भगवतः पाणिपादाद्यनन्तावयवसद्भावे वचनमिदं प्रमाणीकृतमिति भावः । 'सर्वतः पाणिपादम्' इत्यादेः 'अनन्तपाणिपादम्' इत्यर्थः, 'सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च' इति वक्ष्यमाणाभिधानादवगन्तव्य' इत्यनुक्तिस्तु, 'विश्वतश्चक्षुः' इत्येतत् समानन्यायेन शिष्यैरेवोहनीयत्वाभिप्रायेण ।

भाष्यपदमनूद्य अनुवर्तयितव्यं पदं दर्शयति– **इत्यादि च वक्ष्यतीति** ।। चशब्दः 'वक्ष्यति' इत्यस्य अनुकर्षणार्थ इति भावेनैवमुक्तमित्यपि आहुः । 'प्रधानाभ्याम्' इति शेषपूरणम् । 'परत्र पतत्रशब्दः प्रयुज्यमानः सादृश्यं गमयति' इति भावेनोक्तम्– **पतत्त्रसदृशैरिति** ।। पतत्त्रशब्देन च पक्षिपक्ष उच्यते । छन्दसि व्यवहितानामप्युपसर्गत्वादाह– **सन्धमतीति** ।। 'ध्मा शब्दाग्निसंयोगयोः' इति धातोराह– **अग्न्यादिभूतानीति** ।। द्यावाभूम्यादिजननार्थम् अग्न्यादीनां त्रिवृद्भावमापादयतीति भावः । 'छन्दसि परेऽपि' इति 'सम्' इत्यस्य उपसर्गत्वे आवृत्त्यैव उपसर्गस्य क्रियावृत्तिर्भविष्यतीति भावेनोक्तम्– **प्रत्येकमन्वय इति** ।। 'बाहुभ्यां सन्धमति', 'पतत्त्रैः सन्धमति' इति प्रत्येकमुपसर्गाभ्यां क्रियापदान्वय इत्यर्थः । **अयमेवार्थ इति** ।। अग्न्यादिभूतानि संनतानि करोति एकीभावयतीत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ।। **द्व्यादौ** द्वित्र्यादिसङ्ख्यायाम् । ननु 'सर्वतः पाणिपादं तत्' इत्यादौ अनन्तबाह्वाद्यप्रतिपादनात् कथमुदाहरणम् ? इत्यत आह– **सर्वत इत्यस्येति** ।।

सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान् ।।

इति तात्पर्यनिर्णयेऽवगन्तव्यः । **इतरेति** ।। अप्रधानेत्यर्थः । 'ध्मा शब्दाग्निसंयोगयोः' इति धातुव्याख्यानमभिप्रेत्याह– **अग्न्यादीति** ।। अनेन 'द्यावाभूमी जनयन् सन् तदर्थं त्रिवृत्करणं करोति' इत्यर्थ उक्तो भवति । **प्रत्येकमिति** ।। 'बाहुभ्यां सन्धमति', 'पतत्त्रैः सन्धमति' इति प्रत्येकमित्यर्थः । 'सम्' इत्युपसर्गद्वयसद्भावादिति भावः । **अयमेवेति** ।। 'सन्धमति' इत्यस्य योऽर्थ उक्त अयमेवार्थः । धातूनामनेकार्थत्वात्, 'सम्' इत्युपसर्गबलाच्च । उपसर्गाणां कचित् धात्वर्थबाधकत्वात् । 'धात्वर्थं बाधते कश्चित्' इति वचनादिति भावः ।

श्लोकः १६

**गीताक्षरार्थस्तु अनेकेति** ।। अनेकानि अनन्तानि बाहवः उदराणि वक्त्राणि नेत्राणि यस्य तम् । दृष्टविश्वरूपानुवादत्वाद् अस्य 'अनेकवक्त्रनयनम्' इत्यनेन न पुनरुक्तिः । सर्वतः देशतोऽनन्तानि असङ्ख्यातानि रूपाणि यस्य तम् अनन्तरूपम् । हे विश्वरूप पूर्णरूप ते अन्तम् अवसानं न पश्यामि, न मध्यं पश्यामि, न पुनरादिं च पश्यामि, इति प्रत्येकं क्रियाऽन्वयाभिप्रायेण नञ् त्रिरुक्तः । आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धावपि 'नान्तं न पुनस्तवादिं पश्यामि' इत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय 'न मध्यम्' इत्युक्तम् ।। १६ ।।

**भावदीपिका (श्री.टि.)– ।। प्रथमार्थ इति ।।** तथा च 'विश्वमनन्तं चक्षुर्यस्यासौ विश्वतश्चक्षुः' इत्यादिरर्थो द्रष्टव्यः । **अन्यथा** परममहत्परिमाणाभावे । **तदयोगात्** अनन्तबाह्वादित्वायोगात् । **तत्** परममहत्परिमाणम् । **अवच्छेदकेति** ।। 'मेरुहिमवदादिमहत्त्ववत् महत्त्वम्' इति इयत्तारूपावच्छेदकस्य अत्राश्रवणेन अवान्तरमहत्त्वग्रहणासम्भवादित्यर्थः । **तत्रेति** ।। 'अनादिमत्परम्' इत्यादौ 'सर्वमावृत्य तिष्ठति' इति परममहत्त्वस्य, सर्वशब्दस्यानन्तार्थत्वेन 'सर्वतः पाणिपादं तत्' इत्यनन्तावयवत्वस्य चोक्तेरित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। तात्पर्यनिर्णय इति ।।**

सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।
केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ।
अणोरणुतरै रूपैः पाणिपादादिसंयुतैः ।
सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवानित्यत्रेत्यर्थः ।

ध्माशब्दाग्निसंयोगयोरित्युक्तेः धात्वर्थान्तर्गताग्निपदमुपलक्षकम् । अन्तर्भावितण्यर्थश्च धातुरिति भावेन व्याचष्टे– **अग्न्यादीति** ।। अनेन भूम्यादिजननार्थं त्रिवृत्करणं करोतीत्युक्तं भवति । समित्युपसर्गद्वयश्रवणात् तदनुरोधेनाह– **प्रत्येकमिति** ।। बाहुभ्यां सन्धमति पतत्रैः सन्धमतीति प्रत्येकमित्यर्थः । आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यतीत्युक्तेरिति भावः । **एवमेवार्थ इति** ।। धातूनामनेकार्थत्वादिति भावः ।।

## भाष्यम्

**विश्वशब्दश्चानन्तवाची । 'सर्वं समस्तं विश्वं चानन्तं पूर्णमेव च' इत्यभिधानात् । 'अनन्तपादं तमनन्तबाहुमनन्तवक्त्रं पुरुरूपमेकम्' इति च बाभ्रव्यशाखायाम् । महत्त्वाद्युक्तिस्तु तदात्मकत्वेनापि भवति । अन्यथा 'अनादिमत्परं ब्रह्म' इत्याद्ययुक्तं स्यात् । एकत्र त्वनन्तान्यस्य रूपाणीत्यनन्तरूपः । अन्यत्र त्वपरिमाण इति । उक्तं ह्युभयमपि ।। 'परात् परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपम्' इति यजुर्वेदे ।।**

भावप्रदीपिका (प.टी.)– विश्वतश्चक्षुः इत्यादौ न चक्षुरादेरानन्त्यं श्रूयत इत्यत आह– **विश्वेति** । स्पष्टश्रुतिं चात्राह– **अनन्तेति** । अनन्तबाह्वादिमत्त्वे रूपं महत् ते इत्यवान्तरपरिमाणं कथम् ? इत्यत आह– **महत्त्वेति** । द्विभुजादिरूपिणः कथं सर्वगतत्वम् ? देहस्यान्तवत्त्वनियमादित्यत आह– **अन्यथेति** । पश्यामि त्वां सर्वतोऽनन्तरूपम्, त्वया ततं विश्वमनन्तरूप इति अनन्तरूपशब्दस्य सप्रमाणकमर्थभेदमाह– **एकत्रेति** । महतो महत्त्वे प्रकृतिसाम्यमेव स्यात् । नानन्त्यमित्यत आह– **अव्यक्तस्येति** ।

प्रमेयदीपिका (ज.टी.)– एतयोर्मन्त्रयोः प्रकृतानुपयोगादयुक्तमुदाहरणमित्यत आह– **विश्वशब्दश्चेति** ।। तथाच प्रथमार्थे तसिरित्युक्तं भवति ।। स्पष्टार्था चात्र श्रुतिमाह– **अनन्तपादमिति** ।। यदि भगवान् अनन्तबाह्वादिः तदा परममहत्परिमाणः स्यात् । अन्यथा तदयोगात् । नच तद्युक्तम् । 'रूपं महत्ते' इति महत्त्वमात्रोक्तेः । तथा 'वहुवक्त्रनेत्रम्' इति बहुत्वमात्रोक्तेः, अनन्तबाह्वादित्वोक्तिश्चानुपपन्नेत्यत आह– **महत्त्वादिति** ।। स्यादयं विरोधो यदि भगवद्रूपस्य महत्त्वमात्रं तदवयवानां च वहुत्वमात्रमुच्येत । न चैवम् । अवच्छेदकाश्रवणात्। महत्त्वबहुत्वोक्तिस्तु परममहत्त्वात्मकत्वेनानन्तावयवत्वेन च सह सम्भवति । परममहति महत्त्वस्यानन्ते च बहुत्वस्यान्तर्भावादित्यर्थः ।।

अवच्छेदकानुक्तावप्यवान्तरमहत्त्वादिग्रहणे को दोषः? इत्यत आह– **अन्यथेति** ।।

श्लोकः १६

**तत्र परममहत्त्वस्यानन्तावयवत्वस्य चोक्तेरिति भावः । 'पश्यामि त्वा सर्वतोऽनन्तरूपं त्वया ततं विश्वमनन्तरूप' इति अनन्तशब्दद्वयस्य माहात्म्यातिशयसूचनायार्थभेदमाह– एकत्र त्विति ।। अपरिमाणः अपरिच्छिन्न इति अनन्तरूप इति सम्बन्धः ।। स्यादिदं व्याख्यानं, यदीदं द्वयं प्रामाणिकं स्यादित्यत आह– उक्तं हीति ।। महान्तं महत् । 'महतो महान्तम्' इति 'अनन्तमपरिच्छिन्नपरिमाणं रूपमस्य' इत्युक्तार्थे प्रमाणम् । एकम् अभिन्नमपि । अनन्तरूपमिति अनन्तान्यसङ्ख्यान्यस्य रूपाणि इत्यत्र ।।**

**भावबोधः (र.टि.)– ।। तत्रेति ।।** बहिरन्तश्च भूतानामिति परममहत्त्वस्य सर्वतः पाणिपादं तदित्यादिनाऽनन्तावयवत्वस्य चोक्तेरित्यर्थः ।

**भावदीपः (रा.टि.)– ।। प्रकृतेति ।।** अनेकशब्दोऽनन्तत्ववाचीति प्रकृतार्थेत्यर्थः ।। **विश्वशब्दश्चेतीति ।।** उदाहृतश्रुतिद्वयगत इति ज्ञेयम् ।। **अवच्छेदकेति ।।** महत्तत्त्वतोऽहङ्कारादितत्त्वतो वा त्रिगुणं चतुर्गुणमित्यादिरूपेण वा, 'पृथिव्या ज्यायान् नु दिवो ज्यायान्' इत्यादिरूपेणावच्छेदकाश्रवणादित्यर्थः ।। **तत्रेति ।।** 'अनादिमत्परं ब्रह्म' इत्याद्युक्तिप्रकरणे 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य, 'सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम्' इति प्रकृत्याः अनन्तावयवत्वस्य त्रयोदशोक्तेरित्यर्थः । 'महान्तम्' इत्यस्य रूपविशेषणत्वादाह– **महान्तं महदिति ।। इत्यत्रेति ।।** 'प्रमाणम्' इत्यनुषङ्गः ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रथमार्थ इति ।।** 'विश्वतः विश्वं चक्षुः अक्षि यस्यासौ विश्वतश्चक्षुः' इति प्रथमाविभक्त्यर्थे तसिप्रत्यय इत्यर्थः । **अनन्तबाह्वादिरिति ।।** यद्यपि श्रुतावनन्तपादत्वम् आदौ श्रुतम् इति तदेवादावुपादातव्यम् । तथापि 'अनन्तबाहुम् इति च वक्ष्यति' इति भाष्यकारवचनाभिप्रायेणैवमुक्तम् । **परमेति ।।** परममहत् परिमाणं यस्य सः परममहत्परिमाण इति विग्रहः । **अन्यथा** परममहत्त्वलक्षणपरिमाणाभावे । **तदयोगात्** अनन्तबाह्वादित्वायोगात् । **तत्** परममहत्परिमाणत्वम् । **अवच्छेदकेति ।।** 'घटात्' 'गजात्' 'गिरेः महत्' इति, 'चतुर्वक्त्रात् षड्वक्त्रात् दशवक्त्रात् बहुवक्त्रनेत्रम्' इत्येवम् अवध्यश्रवणात्, परममहत्परिमाणत्वमेव भगवद्रूपस्य. तदवयवानां चानन्तत्वमेव सिध्यतीति भावः । 'महत्त्वादि' इत्यत्रत्यादिशब्दार्थः– **बहुत्वेति ।। तत्र** भाष्योपात्ते 'अनादिमत् परं ब्रह्म' इति वचने । ब्रह्मशब्देन देशापरिच्छेदसिद्ध्या महत्त्वपरिमाणस्य प्राप्तेस्तत्र परत्वविशेषणबलात् परममहत्त्वस्य, तथा 'बहिरन्तश्च भूतानाम्' इति आदिपदोपात्तवचने परममहत्त्वस्य, 'सर्वतः पाणिपादं तत्'

इत्यत्र अनन्तावयवत्वस्य चोक्तेरित्यर्थः । 'सर्वतः पाणिपादम्' इत्यत्र सर्वशब्द-स्यानन्तार्थत्वादिति भावः ।

अनन्तरूपशब्दद्वयस्य'पश्यामि त्वां सर्वतोऽनन्तरूपम्', 'विश्वमनन्तरूप' इति गीतागतानन्तरूपशब्दद्वयस्येत्यर्थः । परममहत्त्वपरिमाणस्योक्तत्वाद् अपरिमाणत्वोक्तिर्विरुद्धा ? इत्यतोऽपरिमाणशब्दार्थमाह– **अपरिच्छिन्न इति** ।। इतिपदमनूद्यान्वयं दर्शयति– **इतीति** ।। **इदं द्वयम्** अनन्तरूपत्वम्, अपरिच्छिन्नरूपत्वमितीदं द्वयम् । 'यत्' इत्यस्य क्लीबत्वाद् श्रुतौ 'महान्तम्' इत्यत्र लिङ्गविभक्तिव्यत्यय इति भावेनोक्तम्– **महान्तं महदिति** ।। 'मह पूजायाम्' इत्यत औणादिके झप्रत्यये 'झोऽन्तः' इत्यन्तादेशे धातोः छान्दसे आकारे च 'महान्तम्' इति वेदे रूपम् इति भावेन महदिति व्याख्यातमित्यपि आहुः ।

नारायणानुवाकभाष्ये तु महान् अन्तः आभोगो यस्य तत् महान्तमिति व्युत्पाद्य क्लीबत्वं निर्व्यूढम् । 'महतो महान्तम्' इत्यंशस्य 'अनन्तरूपम्' इत्यस्य चापरिच्छिन्नत्वे प्रमाणत्वमिति स्पष्टयितुमुक्तम्– **महतो महान्तमिति** ।। 'अस्येति' इत्यनन्तरं चशब्दो योज्यः । एकं 'परंज्योतिः' इत्यत्रत्यम् 'एकं स्वस्मिन्नभेदतः' इति भागवततात्पर्यं मनसि निधाय 'एकमभिन्नमपि' इत्युक्तम् । 'अनन्तरूपम्' इत्येतद् अनन्तसङ्ख्याकरूपत्वेऽपि प्रमाणमिति योजयति– **अनन्तरूपमित्यनन्तान्यसङ्ख्यानीति** ।। इत्यत्र उक्तार्थे प्रमाणमिति सम्बन्धः ।

**भावप्रकाशः (कृ.टि.)– ।। तत्रेति** ।। बहिरन्तश्च भूतानामिति परममहत्त्वस्य सर्वतः पाणिपादं तदित्यादिनाऽनन्तावयवत्वस्य चोक्तेरित्यर्थः । परिमाणमात्रशून्यत्वे परमहत्त्वोक्ति-विरोध इत्यत आह– **अपरिच्छिन्न इति** ।। परिमाणशब्दो भावसाधन इति भावः । यदिति क्लीबत्वोपपत्त्यर्थमाह– **महदिति** ।।

## भाष्यम्

**अव्यक्तस्यानन्तत्वादेव महतो महत्त्वेऽपरिमितत्वं सिद्ध्यति । 'महान्तं च समावृत्य प्रधानं समवस्थितम् । अनन्तस्य न तस्यान्तः सङ्ख्यानं चापि विद्यते' इत्यादित्यपुराणे । तानि चैकैकानि रूपाण्यनन्तानीति चैकत्र भवति । 'असङ्ख्याताः ज्ञानकास्तस्य देहाः सर्वे परीमाणविवर्जिताश्च' इति हि ऋग्वेद**

श्लोकः १६

**खिलेषु । 'यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ' इति च । 'कृष्णस्य गर्भजगतोऽतिभरावसन्न पार्ष्णिप्रहारपरिरुग्णफणातपत्रम्' इति च भागवते ।**

भावप्रदीपिका (प.टी.)– अव्यक्तमहत्त्वे प्रमाणमाह– **महान्तं चेति** । पश्यामि त्वां सर्वतोऽनन्तरूपम् इत्यस्य प्रकारान्तरेण सप्रमाणकमर्थभेदमाह– **तानि चेति** । ज्ञानकाः ज्ञानानन्दस्वरूपाः । हृद्गतादिरूपस्य सर्वगतत्वादि युक्तिविरुद्धम् । अत उपचारमात्रमित्यत आह– **यावानिति** ।

प्रमेयदीपिका (ज.टी.)– ननु 'महतो महान्तम्' इति महत्तत्त्वात् महत्त्वमेवोच्यते । न त्वनन्तत्वम् । ततश्च 'यदेकमव्यक्तम्' इत्यव्यक्तव्यापित्ववचनात् तत्साम्यमेव सिद्ध्यति इत्यत आह– **अव्यक्तस्येति** ।। महतो महत्त्वे अव्यक्तव्यापित्वे चेत्यपि ग्राह्यम् । अव्यक्तस्यानन्तत्वं कुत इत्यत आह– **महान्तं चेति** ।। अनन्तस्य विष्णोः प्रतिमाभूतस्य तस्य अन्तः परिमाणं परिच्छेदः कार्यतः सङ्ख्यानं सङ्ख्यापरिच्छेदोऽपि न विद्यते । प्रकारान्तरेणानन्तरूपशब्दद्वयस्यार्थभेदमाह– **तानि चेति** ।। एकस्यानन्तरूपशब्दस्यानन्तसङ्ख्यारूपार्थत्वे स्थिते सति एकत्र अनन्तरूपशब्दे । तानि च अनन्तसङ्ख्यानि रूपाणि प्रत्येकमपरिच्छिन्नपरिमाणानीत्यर्थो भवतीत्यर्थः ।।

अत्र प्रमाणमाह– **असङ्ख्याता इति** ।। **ज्ञानकाः** ज्ञानानन्दात्मकाः ।। अयं बहिर्व्याप्तः आकाशः परमात्मा यावान् यावत्परिमाणः तावान् एव एषः अन्तर्हृदये स्थितः परमात्मा इत्यर्थः ।। गर्भे जठरे जगद्यस्यासौ तथोक्तः । **अवसन्नः** अवनतः । गर्भजगत्त्वेन अपरिच्छिन्नपरिमाणत्वं लभ्यते ।।

भावरत्नकोशः (सु.टि.)– ।। **अनन्तत्वम्** अपरिच्छिन्नत्वम् । 'महतः' इत्यवच्छेदकश्रवणादिति भावः । साम्यमेव न तु निरवधिकमहत्त्वम् इत्येवकारः । अवच्छेदकश्रवणेऽपि परममहत्त्वोपगमे को दोष इत्यत आह– **यदेकमव्यक्तमित्यव्यक्तव्यापित्ववचनादिति** ।। अव्यक्तशब्देनैव 'आनुमानिकम्' इति न्यायेन अव्यक्तशरीरकस्य तद्व्याप्तिमत एव भगवतोऽभिधानाभ्युपगमाद्, अव्यक्तं यावद्देशव्यापि तावद्देशव्याप्तिलाभेन परिच्छेदेऽव्यक्तसाम्यमेव

सिध्यति, नतु ततोऽधिकपरिमाणम् इति, न परममहत्त्वम् इष्टं लभ्यत इति भावः । भाष्ये शेषोक्तिः– **अव्यक्तव्यापित्वे चेति** ।। अनन्तत्वाद् अपरिच्छिन्नत्वाद् अपरिमेयत्वम् अपरिच्छिन्नत्वम्, भगवतः सिध्यतीति भाष्यार्थः ।

अव्यक्तस्यानन्तत्वं कथम् ? इत्यतस्तद्धटयति– **अनन्तस्य विष्णोः प्रतिमाभूतस्येति** ।। **तस्य** प्रधानस्य । अन्तशब्दस्य विनाशार्थत्वं निर्णयार्थत्वं वा न प्रकृतानुसारि इत्यतो विवक्षितमर्थमाह– **परिमाणं परिच्छेद इति** ।। मूलप्रकृतेरेकत्वसङ्ख्याशालित्वात् कथं 'सङ्ख्यानं न विद्यते' इत्युक्तम् ? इत्यतः तद्धटयति– **कार्यत इति** ।। अन्तशून्यस्याप्यव्याकृताकाशस्य एकत्वेन सङ्ख्यानमस्ति, तद्वत् सङ्ख्यानं वा न विद्यत इति विकल्पार्थो वाशब्दः । **अनन्त-सङ्ख्यारूपार्थत्वे** अनन्तसङ्ख्यालक्षणार्थकत्वे । **अत्र** रूपाणां प्रत्येकमपरिच्छिन्नपरिमाणत्वे । ज्ञानं कम् आनन्दश्च एषां स्वरूपतया स्तः, इति मत्वर्थीयाचूप्रत्ययान्तत्वमभिप्रेत्यार्थमाह– **ज्ञानानन्दात्मका इति** ।। 'परीणामः' इति भाष्ये परेः 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घः । आकाशाधिकरणन्यायेन महायोगविद्वद्रूढिभ्याम् आकाशशब्दस्य भगवद्वाचित्वादाह– **आकाशः परमात्मेति** ।। 'यत्तदेतेभ्यः परिमाणे वतुप्' इति स्मरणादाह– **परिमाणवानिति** ।। 'अग्निश्च वायुश्च' इति श्रुतौ 'समाहितौ' इति व्यत्यासेनान्वयः । अवसन्नशब्दस्य प्रसिद्धार्थत्वं बहुमान-विरुद्धमिति विवक्षितमर्थमाह– **अवनत इति** ।। तस्य प्रकृतोपयोगसिद्धये आह– **गर्भजग-त्त्वेनेति** ।।

**भावदीपिका (श्री.टि.)**– ।। **अव्यक्तव्यापित्वेति** ।। 'यदेकमव्यक्तम्' इत्यव्यक्ता-भेदव्यपदेशस्य तद्व्यापित्वाभिप्रायकत्वादित्यर्थः । **तत्साम्यम्** अव्यक्तसाम्यम् । **सङ्ख्येति** ।। 'अव्यक्तकार्याणि एतावन्ति' इति सङ्ख्यापरिमितिरित्यर्थः । 'अन्तर्हृदय आकाशः' इत्यत्राकाश शब्दार्थः– **परमात्मेति** ।। पुनरुक्तिपरिहारायाह– **अनन्तस्येत्यादिना** ।। **अवनत इति** ।। तथा च गर्भजगतः कृष्णस्य अतिभारेणावसन्नश्चासौ पार्ष्णिप्रहारपरिरुग्णफणातपत्रश्च, तम् इति विग्रहः । द्वितीयायाः 'दृष्ट्वाऽहिराजमुपसेदुरमुष्य' इत्युत्तरार्धेनान्वयः ।।

**भावप्रकाशः (कृ.टि.)**– ननु महत्तत्वात् महत्त्वोक्त्याऽव्यक्तसाम्यमेव हि सिद्ध्यतीति कथमव्यक्तापेक्षया न्यूनाधिकभावस्यापि सम्भवादित्यत उक्तम्– **अव्यक्तव्यापित्वस्य वचना-दिति** ।। तथा च श्रुतावव्यक्तपदं तद्व्याप्यर्थकं सर्वं जलं लवणमितिवदिति भावः । महतो

श्लोकः १६

महत्त्व(मात्रेण)परिमाणापरिमेयत्वसिद्धेरभावादाह– **अव्यक्तव्याप्तित्वे चेत्यपीति** ।। अनन्तस्य तस्यान्तो नेति साध्याविशिष्टतेत्यत आह– **विष्णोः प्रतिमाभूतस्येति** ।। अन्तो नाशो नेति व्याख्यानं प्रकृतानुपयुक्तमित्यत आह– **परिमाणपरिच्छेद इति** ।।

ननु प्रधानस्य 'अजामेकाम्' इत्येकत्वोक्तेः कथं सङ्ख्यानं न विद्यते इत्युच्यत इत्यतोऽध्याहृत्य व्याचष्टे– **कार्यत इति** ।। अनेनाव्याकृताकाशवदेव मूलप्रकृतेः परममहत्त्वमेकत्वं चेति सूचितम् । तेन राशिरूपेण व्याप्तत्वमेकत्वं च व्यक्तिरूपेण तु सङ्ख्यानन्त्यमणुत्वं चेत्यपास्तम् । व्यक्तितः सङ्ख्याऽनन्त्ये 'कार्यतः' इति शेषोक्तेर्वैयर्थ्यात् । उक्तं चाव्याकृताकाशादिवद्व्याप्तत्वं समयपादीयसुधायां न केवलं कालाकाशेश्वरेष्वेव परिमाणोत्कर्षापकर्षयोरानन्त्यमस्ति । किन्तु प्रकृत्यादौ सर्वगते परममहति द्रव्यान्तरेऽपीति । एकत्वं तत्रैव टीकायां तृतीयाध्याये मूलप्रकृतेरेकत्वादित्यादिनोक्तम् । किञ्च राशिव्यक्तिरूपाभ्यां व्याप्तत्वाणुत्वोक्तौ राशौ व्याप्तत्वमेव व्यक्तौ त्वणुत्वमेवेत्युभयानन्त्यमुक्तं स्यादित्यनुव्याख्यानविरोधः । तत्रैकस्मिन्नेव परिमाणोत्कर्षापकर्षानन्त्यप्रतिपादनात् । नच राशिव्यक्त्योरत्यन्ताभेदेनान्योन्यधर्मसमावेशान्न विरोध इति वाच्यम् । तथा सत्यव्याकृताकाशवदेव व्याप्तत्वाणुत्वप्राप्त्या नाममात्रे विवादपरिशेषापत्तेः । तयोर्भिन्नाभिन्नत्वोपगमेनान्योन्यधर्मसमावेशोक्तौ च तन्तुपरिमाणस्यापि पटे सत्त्वप्रसङ्गात् ।

नन्वपरिमितप्रधानस्यादिकार्यजनने कात्स्न्र्येन प्रवृत्तौ आदिकार्यस्याप्यपरिमितत्वापातः । एकदेशेन तु न प्रवृत्तिः । अपरिमितद्रव्यस्य निरवयत्वनियमादिति चेन्न । अपरिमितद्रव्यस्य भिन्नावयवभावेन निरंशत्वेप्यभिन्नावयवसत्वेनैकदेशेन प्रवृत्तिसम्भवात् । तस्यैकदेशस्यांशाभिन्नत्वेन पुनः कात्स्न्र्यपक्षोक्तदोषस्याघटितघटकेश्वरशक्त्यैव परिहार्यत्वात् । यथोक्तम् 'अपरिमितस्य कृत्स्न्यैकदेशविकल्पानुपपत्तेश्च । अस्माकं तु ईश्वरशक्त्यैवोपपद्यते' इति । इदमपि व्यक्तितः परममहत्त्वे ज्ञापकम् । राशितो व्याप्तत्वे एकदेशप्रवृत्तिसम्भवेनेश्वरशक्तेरुपयोगाभावात् । न च प्रकृतेः सूक्ष्मत्वोक्तिविरोधः । महदादिसूक्ष्मविषयत्वात् । मूलप्रकृतिविवक्षायां अप्रतिपाद्यत्वेनोपपत्तेश्च । न च लिङ्गदेहस्य षोडशकलात्मकत्वविरोधः । एकत्वे षोडशत्वाभावादिति वाच्यम् । तासां कलानां मूलप्रकृतिभिन्नेन्द्रियादिसूक्ष्मजातीयत्वात् । न च तत्त्वसूक्ष्माणां मूलप्रकृतिभिन्नत्वे मानाभावः । सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृताद्यंशैरुपचयमात्रं क्रियत इति तत्त्वसङ्ख्यानटीकोक्तेरेव मानत्वादित्यलम् ।

## भाष्यम्

**न च तदयुक्तम् । अचिन्त्यशक्तित्वाद् ईश्वरस्य । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' इति च श्रीविष्णुपुराणे । 'नैषा तर्केण मतिरापनेया' इति श्रुतिः ।**

भावप्रदीपिका (प.टी.)– अत्रैव प्रमाणमाह– **अचिन्त्या इति ।**

प्रमेयदीपिका (ज.टी.)– कृष्णादीनामप्यपरिच्छिन्नपरिमाणत्वं वदन्तो वक्तव्याः । या तत्राल्पपरिमाणप्रतीतिः सा किं भ्रान्तिरुत प्रमितिरिति । तत्र आद्ये क्रियादेः द्विभुजचतुर्भुजादेश्च मिथ्यात्वं स्यात् ।। न द्वितीयः । युगपदेकत्राल्पानल्पपरिमाण-समावेशस्यायुक्तत्वात् । अतोऽपरिच्छिन्नपरिमाणोक्तिरुपचारमात्रमिति चेत् किमिद-मनेकपरिमाणत्वस्यायुक्तत्वं किमन्यत्रादर्शनेनासम्भावितत्वम्, उत 'नायमल्पानल्प-परिमाणोपेतो द्रव्यत्वात्' 'नायं परममहत्परिमाणोऽल्पपरिमाणत्वात् पटवत्' इत्यादि-युक्तिविरुद्धत्वम्, अथातिप्रसङ्गदुष्टत्वम्, किं वाऽप्रामाणिकत्वम् ? नाद्य इत्याह– **न चेति ।।** अघटितघटनाशक्त्युपेते किं नामासम्भावितमिति भावः । न द्वितीयः । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति भावेनाऽऽह– **अचिन्त्या इति ।। एषा** ब्रह्मविषया । **अपनेया** निराकार्या ।।

**भावबोधः (र.टि.)**– ।। **तत्रेति** ।। 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य सर्वतः पाणिपादं तदित्यादिनाऽनन्तावयवस्य चेत्यर्थः ।।

**भावदीपः (रा.टि.)**– शङ्कते **कृष्णादीनामिति** ।। **क्रियादेरिति** ।। गमनागमन-गृहप्रवेशकटकाद्याभरणधारणादेरित्यर्थः ।। **अतिप्रसङ्गदुष्टत्वमति** ।। रणे 'बहिरन्तश्च भूतानाम्' इति परममहत्त्वस्य।। **अपाणिपादेति** ।। विकल्पनानन्तरं विरुद्धधर्माणां भगवत्यश्रुतत्वमिति कल्प्येत ।।

**भावरत्नकोशः (सु.टि.)**– 'पश्यामि त्वाम्' इत्याद्युक्त्यभिप्रायेण शङ्कते– **कृष्णा-दीनामपीति** ।। 'ईश्वरस्याचिन्त्यशक्तित्वात्' इत्यस्य तात्पर्यम्– **अघटितेति** ।। 'अयुक्तम्' इत्यस्य तात्पर्यम्– **असम्भावितमिति** ।। 'श्रुतेस्तु शब्दमूलत्वात्' इत्यधिकरणन्यायेनाह–

श्लोकः १६

**युक्त्यगोचरत्वेनेति** ।। 'भावाः धर्माः अणुत्वमहत्त्वादयः तान् विरुद्धतया तर्केण न योजयेत्' इति भाष्यार्थः । श्रुतिगततर्कशब्दार्थः– **युक्त्येति** ।। **ब्रह्मविषया** ब्रह्मगतविरुद्धधर्मावगाहिनी ।

**भावदीपिका (श्री.टि.)–** शङ्कते– **कृष्णादीनामिति** ।। **क्रियादेरिति** ।। अल्पपरिमाणोपेते मूर्त एव क्रियायाः सत्यत्वेनापरिच्छिन्नपरिप्रमाणेऽमूर्ते क्रियाया गगनादाविवायोगेन कृष्णादेर्वस्तुतोऽपरिच्छिन्नपरिमाणत्वे परिदृश्यमानक्रियाया भवन्मते मिथ्यात्वं स्यात्, तच्चानिष्टं भवतामिति भावः । **अपनेयेति** ।। अत्र 'आ' 'अप' इति विरुद्धोपसर्गद्वयं न विवक्षितम्, 'आनेया न भवति' इत्यर्थस्य 'अचिन्त्याः' इति प्रमाणेनैव लब्धत्वात् । अतः 'अपनेया' इत्येवोक्तम् ।

**भावप्रकाशः (कृ.टि.)–** शङ्कते– **कृष्णादीनामपीति** ।। **क्रियादेरिति** ।। आदिपदेन वेगादिगुणग्रहः । **इत्यादियुक्तीति** ।। नायमल्पपरिमाणः परममहत्त्वादिति युक्तिरादिशब्दग्राह्या । आ अपेत्युपसर्गद्वयमित्यभिप्रेत्याह– **अपनेयेति** ।।

## भाष्यम्

**अतिप्रसङ्गस्तु महातात्पर्यवशाद् वाक्यबलाच्चापनेयः ।**

भावप्रदीपिका (प.टी.)– यद्ययुक्तमप्यचिन्त्यशक्त्या घटते, तर्हि हरेर्ब्रह्माद्यभेदः स्यादित्यत आह– **अतिप्रसङ्गस्त्वति** ।।

प्रमेयदीपिका (ज.टी.)– **अतिप्रसङ्गोऽपि 'किं यदीश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात् तदा निर्दुःखो दुःखी च स्यात्' इतीश्वरमधिकृत्य स्यात् ? उत 'प्राणादयोऽपि तथा स्युः । ततश्च 'अणुश्च' इत्यादिका तद्विषयवाक्यव्यवस्था नाङ्गीक्रियते' इत्यन्यदधिकृत्य स्यात्? आद्यं दूषयति– अतिप्रसङ्गस्त्विति ।। अविशेषमाश्रित्य ह्ययमतिप्रसङ्गः । न चासावस्ति । निर्दोषानन्तगुणत्वे हरेः श्रुतीनां महातात्पर्येण दुःखादेः तद्विरोधात् परिमाणद्वयस्य तु तदविरोधाद् दुःखादेरप्रमाणिकत्वात् परिमाणद्वयस्य तूक्तवक्ष्यमाणवाक्यसिद्धत्वादिति भावः ।।**

भावबोधः (र.टि.)– ।। **वाक्यव्यवस्थेति** ।। 'प्राण एवाधस्तात्, प्राण उपरिष्टात्'

इत्यादिमहत्त्वप्रतिपादका 'अणुनैतत्सृज्यतेऽणुनैतद्धार्यते' इत्यणुत्वप्रतिपादकवाक्ययोः 'स वा एष प्राणोऽणुर्महन्नामाऽन्तर्वा अणुर्बहिर्महान्' इत्यादिप्रमाणप्रतिपादिता व्यवस्थेत्यर्थः ।

**भावदीपः (रा.टि.)– ।। 'अणुश्च' इत्यादिकेति ।।** 'अणवश्च' इत्यादिसूत्रग्रहः । 'अणुश्च' इति सूत्रे 'प्राण एव अधस्तात्' इति 'प्राणा एव अणवः' इति प्राणव्याप्तत्वाणुत्व-श्रुत्योः बाह्यान्तरवायुरूपप्राणरूपविषयतया व्यवस्था उक्ता । 'अणवश्च' इति सूत्रे 'अणुभिः पश्यति' इति 'दिवीव चक्षुराततम्' इति श्रुत्या प्राणानामणुत्वव्याप्तत्वश्रुत्योः स्वरूपप्रकाश-विषयतया व्यवस्थोक्तेत्यर्थः **।। उक्तेति ।।** 'अनन्तरूप' इत्याद्युक्तवाक्येत्यर्थः । **वक्ष्य-माणेति ।।** 'व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादिवक्ष्यमाणवाक्येत्यर्थः ।।

**भावरत्नकोशः (सु. टि.) तथा स्युः** विरुद्धधर्मवन्तः स्युः । अत्रेष्टापत्ति-परिहारायोक्तम्– **तथा चेति ।। तद्विषयेति ।।** 'अणुश्च' इति सूत्रे 'प्राण एवाधस्तात् प्राण उपरिष्टात्' इत्यादिना प्राणस्य व्याप्तिः प्रतीयते । 'अणुनैतत्सृज्यते अणुनैतद्धार्यते' इत्यणिमा च । एवं विरुद्धार्थप्रतिपादकयोः वाक्ययोरप्रामाण्यपरिहाराय 'स वा एषोऽणुर्महान्नाम, अन्तर्वा अणुः बहिर्महान्' इत्यादिना व्याप्त्यणुत्वयोर्व्यवस्थाऽङ्गीकृता, सा च न स्यात्, इति । **अन्यत्** प्राणादिवस्तु अधिकृत्य इत्यर्थः । **'हरेरेव'** इत्येवशब्दो 'निर्दोषानन्तगुणत्व एव' इति सम्बध्यते । **तद्विरोधात्** महातात्पर्यविरोधात् । **परिमाणद्वयस्य** अणुत्वमहत्त्वलक्षण-परिमाणद्वयस्य ।

**भावदीपिका (श्री.टि.)– ।। प्राणादयोऽपि तथा स्युरिति ।।** विरुद्धपरिमाणद्वयोपेता स्युरित्यर्थः । तथाच यदि ईश्वरो विरुद्धपरिमाणद्वयोपेतः स्यात् तदा प्राणादयोऽपि तथा विरुद्ध-परिमाणद्वयोपेता स्युः, न चेष्टापत्तिः । तथात्वे 'प्राण एव अधस्तात्, प्राण उपरिष्टात्' इत्यादिमहत्त्वप्रतिपादकवाक्यस्य 'अणुनैतत् सृज्यते, अणुनैतद् धार्यते, प्राणो वा अणुः' इत्यणुत्वप्रतिपादकवाक्यस्य परस्परविरोधपरिहाराय 'स वा एष प्राणोऽणुः महान् नाम, अन्तर्वाऽणुः बहिर्महान्' इति विरुद्धपरिमाणद्वयप्रतिपादकवाक्ययोः या व्यवस्था 'अणुश्च' इति सूत्रे कृता सा नाङ्गीक्रियेतेति भावः । **अविशेषमिति ।।** समानन्यायादित्यर्थः । यत्रेश्वरस्य विरुद्धपरिमाणद्वयोपेतत्वं तत्र विरुद्धनिर्दुःखोपेतत्वमिति विशेषतो व्याप्त्यभावादिति भावः । **तद्विरोधात्** महातात्पर्यविरोधात् । **तदविरोधात्** महातात्पर्याविरोधादित्यर्थः । तदुभयं क्रमेणोपपादयति– **दुःखादेरिति ।। वक्ष्यमाणवाक्येति ।।** 'गुणा श्रुताः' इति वाक्येत्यर्थः ।।

श्लोकः १६

**भावप्रकाशः (कृ.टि.)– ।। वाक्यव्यवस्थेति ।।** 'प्राण एव अधस्तात्, प्राण उपरिष्टात्' इति 'अणुनैतत् सृज्यते, अणुनैतद् धार्यते, प्राणो वा अणुः' इति च वायौ महाणुत्वप्रतिपादकवाक्ययोः 'स वा एष प्राणोऽणुः महान् नाम, अन्तर्वाऽणुः बहिर्महान्' इति वाक्यात् या व्यावस्था कृता सा न स्यादित्यर्थः ।।

## भाष्यम्

**नहि घटवत् कश्चिदपि पदार्थो न दृष्ट इत्येतावता प्रमाणदृष्टः सन् निराक्रियते । केषुचित् पदार्थेषु वाक्यव्यवस्थाऽचिन्त्यशक्तित्वाभावाद् अङ्गीक्रियते ।**

**'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।**
**चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ।।**
**एवं परेऽन्यत्र श्रुताश्रुतानां गुणागुणानां च क्रमाद् व्यवस्था'**

**इति जाबालखिलश्रुतिश्च ।**

भावप्रदीपिका (प.टी.)– न केवलमचिन्त्यशक्त्या न युक्तिविरोधः, किन्तु पदार्थवैचित्र्याच्चेत्याह– **न हीति** । पदार्थवैचित्र्ययुक्त्या विरुद्धघटने क्वापि विरुद्ध-वाक्यानां विषयव्यवस्था न कार्येत्यत आह– **केषुचिदिति** । विष्णोरेवाचिन्त्य-शक्तिर्नान्येषामित्यत्र प्रमाणमाह– **गुणा इति** ।।

प्रमेयदीपिका (ज.टी.)– विपर्ययापर्यवसायी चायं प्रसङ्ग इति भावेनाऽह– **नहीति** ।। यदि घटः पृथुबुध्नोदराकारः स्यात् तर्हि पदार्थो न स्यात् । तथाविधस्य पदार्थस्य कस्याप्यदृष्टत्वादिति प्रसङ्गो यथा न युक्तः । भवति च पदार्थः, तस्मात् पृथुबुध्नोदराकारो न भवतीति विपर्ययस्य प्रमाणबाधितत्वेनापर्यवसानात् । तथात्वेन तस्य धर्मिग्राहकप्रमाणदृष्टत्वात् । तथा प्रकृतेऽपीति । एतेनानुमानानां कालात्ययापदिष्टत्वं चोक्तं भवति ।। प्राणादिकमधिकृत्यातिप्रसङ्ग इति द्वितीयं निराकरोति– **केषुचिदिति** ।। अत्रापि सम्भावनाहेतुभावाभावाभ्यां विशेषादविशेषोऽसिद्ध इति भावः ।।

चतुर्थं निरस्यति– **गुणा इति ।।** श्रुताः अश्रुताः अपि सुविरुद्धाः अन्यत्र सह अदृष्टाः । अविरुद्धाश्च । तथा गुणा इव दोषाः श्रुताश्च अश्रुताश्च नैव सन्ति । किन्तु अज्ञैः मिथ्यादृष्टिभिः हि तथा सन्तीति प्रतीताः । एवं परे ईश्वरे स्थितिः । ततः अन्यत्र तु श्रुताश्रुतानां प्रमाणान्तरसिद्धानां च गुणदोषाणां व्यवस्था अवस्थानम् । तच्च क्रमात् उत्तमेषु गुणबाहुल्यं दोषाल्पत्वम्, मध्यमेषूभयसाम्यम्, अवरेषु दोषबाहुल्यं गुणाल्पत्वमिति । तदेवमसम्भावनाद्यभावान्न भगवत्यपरिच्छिन्नपरिमाणत्वोक्तेः उपचरितत्वं कल्प्यम् ।।

**भावबोधः (र.टि.)–** सुविरुद्धाश्चेति चशब्दसमुच्चयमाह– **अविरुद्धाश्चेति ।।**

**भावदीपः (रा.टि.)– ।। अत्रापीति ।।** ईश्वर इव प्राणादावप्यणुत्वमहत्वाभ्युपगमविषयेऽप्यचिन्त्यशक्तिकत्वरूपसम्भावनाहेतुभावाभावाभ्यामित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– प्रसङ्गः** तर्कः । विपर्यये पर्यवसानस्य तर्काङ्गत्वादिति भावः । कुत एतत् ? इत्यत आह– **भवति चेति ।। तथात्वेन** पृथुबुध्नोदराकारत्वेन । प्रकृतेऽपि न युक्तः । **एतेन** अतिप्रसङ्गे धर्मिग्राहकप्रमाणविरोधकथनेन । **अनुमानानां** 'नायम् अल्प.. अनल्प...' इत्यादि टीकोक्तानुमानद्वयस्य, आदिपदोपात्तस्य 'ईश्वरो न विरुद्धधर्मद्वयवान् वस्तुत्वात् सम्प्रतिपन्नवत्', 'नेश्वरो महापरिमाणवान् क्रियावत्त्वात्' इत्यादिरूपानुमानस्य वेत्यर्थः । **कालात्ययापदिष्टत्वं** बाधितविषयत्वम् । ईश्वरस्य युक्त्यगोचरत्वेन तदनवकाशादिति पूर्वोत्तरदूषणसमुच्चयार्थश्चकारः ।

**अत्रापि** प्राणादिपक्षेऽपि सम्भावनाहेतुभावाभावाभ्यामचिन्त्यशक्तिकत्वरूपस्य विरुद्धधर्मवत्त्वे सम्भावनाहेतोर्भगवति भावात्, प्राणादावभावादित्यर्थः । **चतुर्थम्** अप्रामाणिकत्वकल्पम् । 'अश्रुता अपि' इत्यनन्तरं 'रमादिचिन्त्यास्तदचिन्त्याः' इति तत्त्वप्रकाशिकोक्तार्थोऽनुसन्धेयः । विरोधस्य सहानवस्थानरूपत्वाद् ईश्वरे सहावस्थितानां कथं विरुद्धत्वम्? इत्यत आह– **अन्यत्र सहादृष्टा इति ।।** चशब्दसमुच्चेयमाह– **अविरुद्धा इति ।।** 'ज्ञानानन्दादयः सन्ति' इति सम्बन्धः । तथाशब्दलब्धमर्थमाह– **इव दोषा इति ।।** अत्रापिशब्दार्थोक्तिश्च– **अश्रुताश्चेति ।।** अज्ञैः ज्ञानिविरुद्धैरित्यस्यार्थः– **मिथ्यादृष्टिभिरिति ।।** स्मिनो वैकल्पिकत्वात् 'परे' इति युक्तं भाष्ये । तस्यार्थः– **परमेश्वर इति ।।** 'स्थितिः' इति शेषोक्तिः । **'व्यवस्था'** इति

श्लोकः १६

वक्ष्यमाणस्यार्थोक्तिर्वा । 'श्रुताश्रुतानाम्' इत्यत्र द्वन्द्वे अश्रुतानां श्रुतिभिन्नप्रमाणसिद्धानाम् इत्यर्थ इति भावेनाह– **प्रमाणान्तरसिद्धनां चेति** ।। 'गुणागुणानाम्' इत्यस्यार्थः– **गुणदोषाणामिति** ।। अत्र व्यवस्थाशब्दः 'केषुचिद्गुणा एव, केषुचिद्दोषा एव' इति विभागार्थको न भवति, देवादिष्वपि दोषदर्शनादिति भावेनान्यथा तदर्थमाह– **व्यवस्था अवस्थानमिति** ।। 'क्रमादेवं मन्तव्यम्' इत्युक्तक्रममेवाह– **उत्तमेष्वित्यादि** ।। भाष्ये 'श्रुतेश्च' इत्यनन्तरं 'नाप्रामाणिकत्वं परममहत्त्वादेः' इति शेषो वक्तव्यः । **असम्भावनाद्यभावादिति** ।। अचिन्त्यशक्तिसद्भावेन असम्भावनाऽभावात्, युक्तिविरोधाभावात्, अतिप्रसङ्गदोषाभावादप्रामाणिकत्वाभावाच्चेत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ।। **प्रमाणेति** ।। प्रत्यक्षेत्यर्थः । **तथात्वेनेति** ।। घटादेः पृथुबुध्नोदराकारवत्त्वेनेत्यर्थः । **तथेति** ।। एवं प्रकृतेऽपि । 'न भवति चेश्वरो निर्दुःखो दुःखी इत्युभयधर्मवान्, दुःखस्य प्रमाणविरुद्धत्वात्, तथा च विरुद्धपरिमाणद्वयोपेतोऽपि न भवति' इति विपर्ययपर्यवसानम् 'गुणाः श्रुताः' इत्यादिप्रमाणविरोधेनायुक्तम् । तथात्वेन धर्मिग्राहकमानसिद्धत्वादित्यर्थः । **एतेन** धर्मिग्राहकमानविरोधेन । **अनुमानानाम्** द्रव्यत्वाल्पपरिमाणत्वादीनाम् ।

**अत्रापीति** ।। अत्रापि अविशेषमाश्रित्य हि अतिप्रसङ्गो वाच्यः । न चासौ सम्भवति । ईश्वरे विरुद्धपरिमाणद्वयसम्भावकाचिन्त्यशक्तेः भावात्, प्राणादौ च तदभावादित्यर्थः । 'सुविरुद्धाश्च' इति चशब्दाभिप्रायमाह– **अविरुद्धाश्चेति** ।। तमेव क्रमं दर्शयति– **उत्तमेष्वित्यादिना** ।। **तदिति** ।। अपरिच्छिन्नपरिमाणोक्तेरुपचरितत्वम् । **आद्यन्ताभावोक्तेः** परिच्छिन्नपरिमाणाभावोक्तेः । **न मध्यमिति** ।। मध्यशब्दस्यापि मध्यमपरिमाणरूपपरिच्छिन्नपरिमाणार्थकत्वेन पुनः 'न मध्यम्' इति पुनः परिच्छिन्नपरिमाणाभाववचनम् उपचारत्वपरिहारायैव, द्विरुक्तेरादरार्थत्वदर्शनादित्याशयः । **मध्येति** ।। मध्यावस्थेत्यर्थः । **तदभावोक्त्या** आद्यन्ताभावोक्त्यैव । **तदभावसिद्धेः** तन्निरूपितमध्यावस्थाऽभावसिद्धेः । ननु 'अनन्तरूपम्' इति पूर्णरूपत्वोक्तेः 'विश्वरूपम्' इति पुनरुक्तिः इत्यतोऽन्यतात्पर्याभावज्ञापनाय 'अभ्यासरूपम्' इति तात्पर्यं हृदि निधायाह– **एतच्चेति** ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– ननु विरोधस्य सहानवस्थानरूपत्वादीश्वरनिष्ठत्वेऽविरुद्धत्वं कथमित्यत आह– **अन्यत्र सहादृष्टा इति** ।। चशब्दार्थमाह– **अविरुद्धाश्चेति** ।। श्रुताश्रुतानामित्यत्राश्रुतपदं पर्युदासगर्भत्वात् नञिव युक्तन्यायेनाश्रुतभिन्नतत्सदृशार्थकम् । ततश्च

प्रमाणान्तरसिद्धत्वलाभ इति भावेनाह– **प्रमाणान्तरसिद्धानां चेति** ।। केषुचिद्गुणा एव केषुचिद्दोषा एवेति विभागार्थत्वव्यवस्था शब्दस्यायुक्ता । देवादिष्वपि दोषदर्शनादित्यत आह– **अवस्थानमिति** ।। १६ ।।

## भाष्यम्

**उपचारत्वपरिहाराय 'न मध्यम्' इति । अन्यथा आद्यन्ताभावेनैव तत्सिद्धेः । विश्वरूपः पूर्णरूपः । 'स विश्वरूपोऽनूनरूपो यतोऽयं सोऽनन्तरूपो न हि नाशोऽस्ति तस्य' इति शाण्डिल्यशाखायाम् ।। १६ ।।**

भावप्रदीपिका (प.टी.)– इतश्च नोपचारो भगवद्रूपस्य सर्वगतत्वाभिधान इत्याह– **उपचारत्वेति** । मध्याभावमात्रपरोऽयंशब्द इत्यत आह– **अन्यथेति** । विश्वं रूपं यस्येत्यन्यथाप्रतीतिनिरासाय विश्वरूपपदं सप्रमाणकं पूर्वोक्तपूर्णगुणदृढीकरणपरतया व्याचष्टे– **विश्वेति** ।। १६ ।।

प्रमेयदीपिका (ज.टी.)– अर्जुनेनापि तन्निराकृतमिति भावेनाऽह– **उपचारत्वेति** ।। 'नान्तं न पुनस्तवादिं पश्यामि' इत्याद्यन्ताभावोक्तेरुपचरितत्वपरिहाराय 'न मध्यम्' इत्युक्तम् । मध्यनिराकरणार्थमेव तत् किं न स्यादित्यत आह– **अन्यथेति** ।। उपचारत्वपरिहारार्थत्वाभावे । 'तद्वैयर्थ्यं स्यात्' इति शेषः । कुतः? आद्यन्तसापेक्षत्वात् मध्यस्य तदभावोक्त्यैव तदभावसिद्धेः । 'विश्वं महदादिकं रूपं स्वरूपमस्य' इति प्रतीतिं सप्रमाणकं निवारयति– **विश्वरूप इति** ।। एतच्चाभ्यासरूपमिति मन्तव्यम् ।। १६ ।।

**भावबोधः** (र.टि.)– नन्वनन्तरूपमिति पूर्णरूपत्वोक्तेः पुनरुक्तिरित्यत अन्यतात्पर्यज्ञापनाय अभ्यासरूपमिति तात्पर्यं मनसि निधायाह– **एतच्चाभ्यासरूपमिति** ।।१६।।

**भावदीपः** (रा.टि.)– पूर्वोक्तानन्तरूपपदेन विश्वरूपपदस्यापौनरुक्त्याय तात्पर्यद्योतकाभ्यासोऽयम् इत्याह– **एतच्चेति** ।। 'विश्वरूप' इति पुनर्वचनमभ्यासात्मकमित्यर्थः ।। १६ ।।

**भावरत्नकोशः** (सु.टि.)– 'नान्तं न मध्यं न पुनस्तवादिम्' इत्यस्य कृष्णं प्रति अर्जुनवाक्यत्वादाह– **अर्जुनेनापीति** ।। तत् उपचरितत्वम् । उपचारशब्दिताया गौण्या वृत्तेः

श्लोकः १७

शब्दधर्मत्वादाह– **आद्यन्ताभावोक्तेरिति** ।। तत् 'मध्यम्' इति वचनम् । **परिहारार्थत्वाभावे** परिहारप्रयोजनकत्वाभावे । 'तत्सिद्धेः' इति हेतोः. साध्यं पूरयति– **तद्वैयर्थ्यं स्यादिति शेष इति** ।। वैयर्थ्यमुपपादयितुं शङ्कामाह– **कुत इति** ।। **तदभावसिद्धेः** मध्याभावसिद्धेः, इत्यनन्तरम् 'इत्यर्थः' इति शेषः । पूर्वार्धे 'अनन्तरूपम्' इति पूर्णत्वापरपर्यायानन्तत्वसिद्धेः विश्वरूपपदेन पूर्णत्वोक्तौ पुनरुक्तिः स्यात् । ततः प्रातीतिकं व्याख्यानं न युक्तम् ? इत्यत आह– **एतच्चाभ्यासरूपमिति** ।। अनन्तरूपपदोक्तापरिच्छिन्नत्वरूपपरिपूर्णत्वे तात्पर्यज्ञापनायैव गीतायां विश्वरूपपदम् अभ्यासरूपतया प्रयुक्तम्, नतु महदादिविश्वात्मकत्वद्योतनाय इति भाष्यकारीयं व्याख्यानमेव युक्तम् । विश्वरूपः अनूनरूपः पूर्णरूप इति प्रमाणसिद्धत्वात् । प्रातीतिकव्याख्यानं तु अप्रामाणिकत्वात् 'विश्वेश्वर' इति पूर्वपदविरुद्धत्वाच्च नादरणीयमिति भावः । तथा च तात्पर्यनिर्णये 'अन्यत् तात्पर्यज्ञापनाभ्यासरूपम्' इति । प्रमाणे 'न हि नाशोऽस्ति' इत्युक्त्या अनन्तरूपपदस्य अनन्तशब्दितनाशशून्यत्वम् अर्थान्तरमपि विभावितं भवति ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– ननु अनन्तरूपमिति पूर्णरूपत्वोक्तेः पुनरुक्तिरित्यत आह– **एतच्चाभ्यासरूपमिति** ।। पूर्णत्वे तात्पर्यद्योतकोऽभ्यासोऽयं । ततो न पुनरुक्तिरिति भावः ।।

**किरीटिनं गदिनं चक्रिणं च**
**तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्**
**दीप्तानलार्कद्युतिमप्रमेयम् ।। १७ ।।**

## भाष्यम्

**अनलार्कद्युतिम् इत्युक्ते मितत्वशङ्कामपाकरोति– अप्रमेयमिति ।।**

भावप्रदीपिका (प.टी.)– ननु पुनः अप्रमेयपदेनापि पूर्णत्वोक्तेः पुनरुक्तिरित्यत आह– **अनलेति** ।। १७ ।।

प्रमेयदीपिका (ज.टी.)– ननु 'अनलार्कद्युतिम्' इत्युक्तत्वात् 'सहस्रशब्दोऽनन्त-

**वाची'** इत्याद्युक्तमयुक्तमिति चेन्न । एतदेवाऽऽशङ्क्य **प्रत्यायनार्थमेवैतदुक्तम्** । **वस्तुतस्त्वपरिच्छिन्नद्युतिरेव भगवानिति स्वयमेवोक्तत्वादित्याह– अनलेति ।।** इत्युक्ते **जातां द्युतेः मितत्वशङ्काम् । एतच्च सविशेषणविशेषणत्वाद् द्युत्या सम्बद्ध्यते** ।। १७ ।।

**भावबोधः (र.टि.)–** नन्वप्रमेयमिति विश्वरूपस्यैवाप्रमेयत्वमुच्यते न तु द्युतेरिति कथं द्युतेर्मितत्वशङ्कानिरासस्तेनेत्यत आह– **एतच्चेति** ।। १७ ।।

**भावदीपः (रा.टि.)– ।। सहस्रेति ।।** 'दिवि सूर्यसहस्रस्य' इति गीतास्थसहस्रशब्दः अनन्तत्ववाची इत्यादि प्राग्भाष्योक्तमयुक्तमित्यर्थः ।। **एतच्चेति** ।। अप्रमेयविशेषणत्वमित्यर्थः । **द्युत्येति** ।। 'सविशेषणे हि विधिनिषेधौ' इति न्यायात् । तथाच द्युतेर्मितत्वशङ्कानिरासो व्यक्त इति भावः ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रत्यायनार्थं** बुद्धिप्रवेशार्थम् एव **एतत्** अनलार्कद्युतित्वमुक्तमित्यर्थः । 'उक्ते' इत्यन्तमनूद्य अनन्तरं पूरणीयमाह– **जातां द्युतेरिति** ।। ननु 'अप्रमेयम्' इत्येतद् विश्वरूपविशेषणम्, तेन कथं द्युतेर्मितत्वशङ्कानिरासः । न ह्युत्पलविशेषणेन नैल्येन पद्मस्य नीलवस्तुव्यावृत्तिः सम्पादयितुं शक्या, इत्यत आह– **एतच्चेति** ।। 'अप्रमेयम्' इति विशेषणं सविशेषणविशेषणत्वात् विशिष्टविशेषणत्वात्, सविशेषणे भगवति अप्रमेयत्वविशेषणविधिः प्रवर्तमानो विशेष्ये तात्पर्याभावे विशेषणम् उपसंक्रामति । यथा 'सप्तदशारत्नीत्वविधिः' वाजपेये तात्पर्याभावे तदन्तर्भूते तद्विशेषणे पशुयागे संक्रामति, तथाऽप्रमेयत्वमपि अनन्तरूपविश्वरूपादिपदेनैव परिमितत्वाभावलाभेन भगवति तात्पर्यरहितं सत् तद्विशेषणं द्युतिम् उपसंक्रामति, नैल्यं तु न सविशेषणविशेषणम् इति वैषम्याद् भवति । तेन द्युतेर्मितत्वनिरास इति भावः ।।

**गीताक्षरार्थस्तु-** 'गदिनम्' इत्यत्र 'शिखादिभ्यश्च' इति गदाशब्दाद् आकारान्तादपीनिः । दुर्निरीक्ष्यं कृच्छ्रेण निरीक्षणीयम्, दर्शनानर्हमित्यर्थः । 'दीप्तानलार्कद्युतिम्' इत्युक्ते जातां मितत्वशङ्काम् अपाकर्तुम् 'अप्रमेयम्' इति विशेषणम् । 'अपरिच्छिन्नद्युतिम्' इति तात्पर्यम् ।। १७ ।।

**भावदीपिका (श्री.टि.)– ।। सहस्रशब्दः** 'दिवि सूर्यसहस्रस्य' इत्यत्र स्थितः ।

श्लोकः १८,१९

**प्रत्यायनार्थम्** बुद्ध्यारोहार्थम् । ननु भगवतोऽप्रमेयत्वोक्त्या कथं द्युतेर्मितत्वशङ्कापरिहारः इत्यत आह– **एतच्चेति** ।। अप्रमेयत्वरूपविशेषणम् अनलार्कद्युतिरूपविशेषणविशिष्टस्य भगवतो विशेषणं भवत् विशेष्ये वैयर्थ्याख्यबाधाद् विशेषणीभूतद्युत्या सम्बध्यते । एवं चोक्तशङ्कापरिहार इत्यर्थः ।। १७ ।।

**भावप्रकाशः (कृ.टि.)**– नन्वप्रमेयमिति विश्वरूपस्यैवाप्रमेयत्वमुच्यते न तु द्युतेरिति कथं तेन द्युतेर्मितत्वशङ्कानिरास इत्यत आह– **एतच्चेति** ।। सविशेषणे हीति न्यायादिति भावः ।। १७ ।।

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ।।१८।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** अक्षरम् अक्षरशब्दवाच्यं ब्रह्म त्वम् एव परमं वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । परं निधानं प्रकृष्ट आश्रयः, अव्ययः ह्रासहीनः, शाश्वतः शश्वद्भवः, धर्मः निवृत्तिधर्म इति यावत्, तस्य गोप्ता रक्षिता । 'वैदिकधर्माविता' इति विवृतिकृतः । सनातनः चिरन्तनः । मे मतः, 'मतिबुद्धिपूजार्थेभ्यश्च' इति 'मे' इति षष्ठी ।। १८ ।।

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ।।१९**

## भाष्यम्

**'शशिसूर्यनेत्रम्' इत्यपि 'अहं क्रतुः' इत्यादिवत् । 'तदङ्गजाः सर्वसुरादयोऽपि तस्मात्तदङ्गेत्यृषिभिस्तुतास्ते' इति ऋग्वेदखिलेषु ।'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' इतिच । बहुरूपत्वाद् बह्वाश्रयत्वं तेषां युक्तम् ।। १९ ।।**

भावप्रदीपिका (प.टी.)– शशिसूर्यादीनां कथं भगवदङ्गैक्यमुच्यते ? इत्यत आह–

**शशीति** । भगवदङ्गजन्यत्वात् तदाश्रयत्वाच्चैक्यव्यपदेश इत्यर्थः । ननु कथं रुद्रादीनां मनोनयनादिबह्माश्रयत्वजन्यत्वे ? इत्यत आह– **बह्विति** ।। १९ ।।

**प्रमेयदीपिका (ज.टी.)**– **'शशिसूर्यनेत्रम्'** इत्युक्तत्वात् कथं विश्वरूपशब्दस्यान्यथा व्याख्यानम्? इत्यत आह– **शशीति** ।। इत्यादिवत् व्याख्येयम् । जन्यजनकभावेन आश्रयाश्रयिभावेन वाऽभेदोक्तिः इत्यर्थः । कुत एतत्? इत्यत आह– **तदङ्गजा इति** ।। तदङ्ग इत्यविभक्तिको निर्देशः, सम्बुद्धिर्वा । अभेदे बाधकं चाह– **चन्द्रमा इति** ।। चक्षोः चक्षुषः । नन्वत्र चन्द्रमसो मनोजातत्वं तदाश्रयत्वं चोच्यते । गीतायां तु नेत्राश्रयत्वादि । तथाऽन्यत्र **'दंष्ट्रार्यमेन्दू'** इति । तत्कुतो न विरोध इत्यत आह– **बह्विति** ।। १९ ।।

**भावदीपः (रा.टि.)**– ।। **अन्यत्र** 'दंष्ट्रार्यमेन्दूडुगणा द्विजानि' इति द्वितीयस्कन्धे आद्येऽध्याये ।। १९ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **शशीति** ।। 'शशिसूर्यनेत्रम्' इति चन्द्रसूर्ययोर्भगवन्नेत्रत्वं गीयते । तच्च विश्वरूपशब्दस्य पूर्णरूपार्थत्वे न युज्यते, युज्यते तु जगदात्मकत्वार्थत्वे, इति कथं भाष्यकारीयं व्याख्यानमित्यर्थः । भाष्यपदमनूद्य शेषमाह– **इत्यादिवद् व्याख्येयमिति** ।। शशिसूर्यौ शशिसूर्यसत्ताप्रतीत्यादिकारणे नेत्रे यस्य, शशिसूर्यौ शशिसूर्याश्रयौ नेत्रे यस्येति वा व्याख्येयमित्यर्थः । तदेतदाह– **जन्यजनकभावेनेति** ।। **जनकभावः** सत्ताप्रतीत्यादिकारणत्वम् । दृष्टश्च जन्यजनकभावेऽभेदव्यपदेशः 'ब्राह्मणोऽस्य मुखमासीत्' इत्यत्र, 'इग्यणः सम्प्रसारणम्' इति सूत्रे सम्प्रसारणात् जातो वर्णः सम्प्रसारणम् इत्यादौ । आश्रयाश्रयिभावेनैक्यव्यपदेशश्च 'तत्त्वमसि' इत्यत्र, 'समर्थः पदविधिः' इति सूत्रे समर्थपदाश्रितत्वात् पदविधिरुपचारेण समर्थपदेनोच्यत इत्यत्र च ।।

यद्यपि 'अहं क्रतुः' इत्यत्र, 'रसोऽहम्' इत्यत्र, 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यत्र च क्रत्वादिसत्ताप्रतीत्यादिकारणत्वात्, तद्भोक्तृत्वात्, तत्रोपास्यत्वाच्च 'क्रतुरहम्' इत्याद्यैक्यव्यपदेश इत्युक्तम्, न पुनराश्रयाश्रयिभावेनापि तद्व्यपदेश उक्तः । तथापि सत्ताप्रतीत्यादिकारणत्वेनात्राभेदोक्तिः 'तदङ्गजाः' इति प्रमाणादाश्रयितव्येति तद्दृष्टान्तोक्तिः । आश्रयाश्रयिभावेनाभेदकथनं तु

श्लोकः १९

'प्रतिमापेक्षयाऽङ्गानि भूरादीनि स्वरूपतः ।
तदाश्रितानि तज्जानि बह्वङ्गत्वं बहुत्वतः ।।'

इति भागवततात्पर्योदाहृतप्रमाणानुसारेणेति मन्तव्यम् ।

'तदङ्गानि स्तुताः' इति वक्तव्ये 'तदङ्ग' इति कथमुक्तम् ? इत्यत आह– **तदङ्गेत्यविभक्तिक इति** ।। 'न लोपः प्रातिपदिकान्तस्य' इत्यादाविव लुप्तविभक्तिक इत्यर्थः । 'सुपां सुलुक्' इति स्मरणादिति भावः । **सम्बुद्धिर्वेति** ।। चन्द्रसूर्यादिदेवानुद्दिश्य प्रत्येकं 'हे विष्ण्वङ्ग' इत्येवं सम्बोधनानुकूलप्रथमैकवचनान्तेन सम्बोध्य, स्तुताः शशिसूर्यादिदेवा इत्यर्थ इति वा व्याख्येयमित्यर्थः । उपलक्षणमेतत् । तदङ्गप्रातिपदिकात् परस्य जसः 'सुपां सुलुक्' इत्यादिना आदादेशे 'विश्वा भूतानि' इत्यादाविव 'तदङ्गाः तदङ्गानि' इत्यर्थ इत्यादि द्रष्टव्यमित्यपि आहुः । न केवलम् अमुख्याभेदस्याङ्गीकार्यत्वे साधकम्, मुख्याभेदाङ्गीकारे बाधकं चेति चशब्दः ।

'चक्षेः शिच्च' इत्युसिप्रत्यये शितोऽनार्धधातुकतया ख्यात्रादेशाभावे 'चक्षुषः' इति स्यात्, कथं 'चक्षोः' इति इत्यत आह– **चक्षोश्चक्षुष इति** ।। वेदे रूपम् अनुकूलप्रत्ययोत्पादनेनोह्यमिति हृदयम् । 'तदाश्रितानि तज्जानि' इत्युदाहृतप्रमाणं मनसि निधायोक्तम्– **मनोजातत्वं तदाश्रयत्वं चेति** ।। 'नेत्राश्रयत्वादि' इत्यत्रादिशब्देन नेत्रजन्यत्वं ग्राह्यम् । इदं च सिद्धान्तरीत्या । भाष्योक्तं बहुरूपं घटयितुमाह– **तथाऽन्यत्रेति** ।। 'सूर्याचन्द्रमसौ दंष्ट्राऽऽश्रितौ' इति भागवत इत्यर्थः । भाष्ये **'तेषाम्'** इत्यस्य सूर्यादिदेवानामित्यर्थः ।। १९ ।।

**गीताक्षरार्थस्तु- अनादीति** ।। 'अनादिमध्यान्तम्' इत्यत्र परिमाणेतरगुणानन्त्यमेवोच्यते न तु परिमाणानन्त्यम्, तस्य 'नान्तं न मध्यम्' इत्युक्तत्वादिति तात्पर्यनिर्णये व्यक्तम् । शशिसूर्यौ नेत्रे यस्य स तथा, तम् इत्यत्र, 'दीप्तहुताशवक्त्रम्' इत्यत्र च जन्यजनकभावेनाश्रयाश्रयिभावेन वाऽभेदोक्तिः । तपन्तं तापयन्तम् ।। १९ ।।

**भावदीपिका (श्री.टि.)– ।। अन्यथा व्याख्यानमिति** ।। शशिसूर्ययोरेव नेत्रत्वोक्ते 'विश्वं रूपं यस्य' इत्येव विश्वरूपशब्दस्य व्याख्येयतया 'पूर्णरूपः' इत्यन्यथाव्याख्यानं कथमित्यर्थः । **अविभक्तिकेति** ।। 'यस्मात् सुरादयस्तदङ्गजाताः, तस्मात् तदङ्ग' इति ते

देवाः स्तुताः 'तदङ्गाः' इति स्तुता इत्यर्थः । **सम्बुद्धिर्वेति** ।। तथा च तदङ्गजत्वाद् ऋषिभिः 'हे तदङ्ग' इति देवाः स्तुता इत्यर्थः । सम्बुद्ध्येकवचनं देवसमुदायापेक्षयेति ज्ञेयम् । 'नेत्राश्रयत्वादि' इत्यादिपदेन तज्जन्यत्वं ग्राह्यम् । **अन्यत्रेति** ।। द्वितीयस्कन्धभागवते इत्यर्थः ।। १९ ।।

**भावप्रकाशः (कृ.टि.)–** ननु यस्मात्सर्वसुरादयोऽपि तदङ्गजाः तस्मादृषिभिस्तदङ्गानीति स्तुता इति वक्तव्ये तदङ्गेति कथमुक्तमित्यतो द्वेधोपपत्तिमाह– **तदङ्गेतीत्यादिना** ।। **सम्बुद्धिरिति** ।। चन्द्रसूर्यादिकमुद्दिश्य प्रत्येकं हे तदङ्गेति सम्बुद्धिरित्यर्थः । **दंष्ट्रार्यमेन्दू इति** ।। सूर्यचन्द्रौ दंष्ट्राजन्यौ तदाश्रितौ चेत्यर्थः ।। १९ ।।

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ।।२०।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु द्यावापृथिव्योरिति** ।। द्यावापृथिव्योरिदमन्तरम् एकेनैव रूपेण त्वया व्याप्तम्, सर्वाः दिशश्च रूपान्तरैः व्याप्ताः । 'त्वया' इत्यनेनैकत्वस्य सिद्धावपि 'एकेन' इत्युक्तिः 'अन्तरिक्षव्यापिरूपमेकम्, दिग्व्यापिरूपाणि बहूनि' इति विवेकप्रत्यायनार्था । तथा च श्रुतिः 'द्यावापृथिव्योरन्तरङ्गः स एकरूपेण चान्यैः सर्वगतः स एकः' इति । हे महात्मन् अक्षुद्रविग्रह तव इदमुग्रं भयङ्करम् अद्भुतं रूपं दृष्ट्वा लोकत्रयं लोकत्रयस्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तजनाः प्रव्यथितं भगवतः किञ्चिदुग्रत्वात् तद्दर्शिनां भयं समुत्पतितम् । यद्वा विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तददृष्ट्वाऽपि मनसाऽनुसन्धाय स्थितानां भये जाते सति तद्द्रष्टाऽर्जुन 'अहमिवैतेऽपि दृष्ट्वा बिभ्यति' इति बुद्धिर्जाता । अतो 'लोकत्रयं दृष्ट्वा प्रव्यथितम्' इत्याहेति योज्यम् । अत्र 'दृष्ट्वाऽद्भुतम्' इत्यादिना विश्वरूपदर्शनस्य यद्भयहेतुत्वमावेदितं तत् न सर्वेषां सर्वदा, किन्तु केषाञ्चित्, कारणवशादेव । तथा च श्रुतिः 'प्रीयन्ति केचित्तस्य रूपस्य दृष्टौ बिभेति कश्चिदम्यसे सर्वतृप्तिः' इति । एवं तद्दर्शनस्य भयहेतुत्वनियमाभाव इव लोकत्रयस्य दर्शननियमाभावोऽपि द्रष्टव्यः । तथा च तात्पर्यनिर्णये

त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोः विश्वरूपं स्वयोग्यत्वानुरूपतः ।।

श्लोकः २१,२२

प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेककदा भवेत् ।।
तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ।।
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ।। इति ।। २० ।।

**अमी हि त्वां सुरसङ्घा विशन्ति**
**केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ।। २१ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अमी इति** ।। अमी आपरोक्ष्येण निर्दिष्टा मुक्ताः सुरसङ्घास्त्वां विशन्ति । किञ्च 'त्वां विशन्ति' इति स्वेच्छया भगवत्प्रवेश उच्यते । स च मुक्तग्रहण एव युक्तः । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्' इति वचनात्, तेन 'पश्यामि देवांस्तव देव देहे' इत्यनेन न पौनरुक्त्यम् । तत्रामुक्तानामभिप्रेतत्वात् । प्राञ्जलयः कृतसम्पुटकरयुगलाः त्वां गृणन्ति स्तुवन्ति । 'स्वस्ति अस्तु जगते' इत्युक्त्वा महर्षीणां सिद्धानां च सङ्घाः पुष्कलाभिः सम्पूर्णार्थाभिः ।। २१ ।।

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ।।२२।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** किञ्च रुद्रादित्या विश्वे देवाः ऊष्मपाः पितरः असुराः तद्योग्यासुराः विस्मिताः विस्मयमापन्नाः सन्तः ।। २२ ।।

**रूपं महत् ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ।।२३।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** विस्मये निमित्तमुच्यते– **रूपं महत्ते इति** ।। बह्वीभिः दंष्ट्राभिः करालं भीषणं 'वीक्षन्ते' इत्युक्तवीक्षणं 'दृष्ट्वा' इत्यनूद्य तत्कार्यमुच्यते–

'लोकाः प्रव्यथितास्तथाऽहमिति ।। अत्र लोकशब्दः लोकत्रयशब्द इव व्याख्यातव्यः । अहमपि तथा प्रव्यथितः ।। २३ ।।

**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ।। २४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तत्र कारणम्– **नभःस्पृशमिति** ।। त्वा त्वां दृष्ट्वा हि इति स्वानुभवसिद्धतोच्यते । प्रव्यथितः अन्तरात्मा मनो यस्यासौ तथोक्तः । धृतिं न विन्दामि धैर्यं न लभे शमम् उपशमं मनस्तुष्टिं च । विष्णुशब्दार्थो दशम उक्तः ।। २४ ।।

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ।।२५।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** कस्मात् ? **दंष्ट्राकरालानीति** ।। दंष्ट्राकरालानि दंष्ट्राभिर्विकृतानि अत एव भयानकानि कालानलसन्निभानि प्रलयानलसदृशानि । पारवश्यादियमुक्तिः– **दिशो न जान इति** ।। शर्म सुखम् । जगन्निवास जगदाधार ।। २५ ।।

**अमी च त्वा धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ।। २६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अमी च त्वेति** ।। अमी दुर्योधनप्रभृतयः । सूतपुत्रः कर्णः । योधमुख्यैः भटप्रधानैः सह त्वरमाणाः वक्त्राणि विशन्ति । ननु धृतराष्ट्रपुत्रादीनां भगवन्मुखप्रवेशोन्मुखचेष्टाऽभावात् कथं 'अमी च त्वा धृतराष्ट्रस्य पुत्राः' इत्याद्युच्यते ? इति चेदुच्यते भगवन्मुखप्रवेशानुन्मुखचेष्टानामपि भगवन्मुखचेष्टयैव तत्र प्रवेशाद् उपचारेण 'विशन्ति' इति प्रयोगो युज्यते । प्रलयोदकप्रवेशानुन्मुखचेष्टानां प्रजानां तच्चेष्टयैव तत्र प्रवेशे 'प्रविष्टा उदकं प्रजाः' इति प्रयोगवत् । भगवन्मुखचेष्टयैव तत्र प्रवेशश्चेत् धार्तराष्ट्रसेनाया एव स भवेत् । भगवन्मुखानां तदभिमुखत्वात् । अतः 'सहास्मदीयैः' इत्ययुक्तं स्यादिति चेन्न । सेनामध्यगतभगव-

श्लोकः २७-२९

न्मुखानाम् उभयाभिमुखत्वाद् उभे सेने तत्र प्रविशत इति 'सहास्मदीयैः' इति वचनोपपत्तेः ॥ २६ ॥

**भावप्रकाशः (कृ.टि.)– गीतायाममी च त्वा धृतराष्ट्रस्य पुत्रा इति** । पुत्राः ते वक्त्राणि विशन्तीत्यन्वयः, न च त्वेत्यस्यानन्वयः । त्वा त्वरमाणाः त्वत् प्रति धावन्त इत्युपपत्तेरिति बोध्यम् । तु आ इति पदच्छेदः । आ इत्यस्य विशन्तीत्यनेनसम्बन्ध इत्यप्याहुः ॥ २६ ॥

**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥**

भावप्रकाशः (कृ.टि.)– **गीताक्षरार्थस्तु** ननु युद्धोपक्रम एव चूर्णितोत्तमाङ्गतया अन्यैरदृष्टाः कथमर्जुनेन 'मया तथा संदृश्यन्ते' इत्युच्यते 'केचिद्विलग्नाः' इत्यादिना इति चेत्, ये तस्मिन्नेव मुहूर्ते मरिष्यमाणास्तेषामेवात्र ग्रहणाद् युद्धोपक्रमे एवैवमुक्तिर्युक्ता । विशीर्णत्वेनापि तस्य सूक्ष्मदृष्टिगोचरत्वाद् अन्येषां तथा दर्शनाभावश्च युक्तः । 'दिव्यं ददामि चे चक्षुः' इत्यादेरन्यादृष्टदर्शनं च युक्तम् । अन्येषां तददर्शने, अर्जुनस्य दिव्यदृष्टितयाऽन्यादृष्टदर्शने च दृष्टान्तोऽभिहितस्तात्पर्यनिर्णये 'यथा भिन्नमपि घटादिकं यावत् पृथङ् न पतति तावन्मन्ददृष्टीनां न ज्ञायते, यथा पुरूरवसो जरा अश्विभ्यामेव दृष्टा' इति च ॥ २७ ॥

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥**

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** अभिविज्वलन्ति अभितो दीप्यमानानि नरलोकवीराः मनुष्यलोकशूराः भीष्मादयस्ते किमर्थं प्रविशन्ति, कथं च ? इत्यत उच्यते–

**यथा प्रदीप्तं ज्वलनमिति** ।। पतङ्गाः शलभाः । अबुद्धिपूर्वप्रवेशे नदीदृष्टान्तः, बुद्धिपूर्वप्रवेशे पतङ्गदृष्टान्त इति आहुः । ततः किम् ? इत्यत उच्यते– **लेलिह्यस इति** ।। ज्वलद्भिः वदनैः लोकान् ग्रसमानः अदन्, लेलिह्यसे अतिशयेन स्वादयसि । किञ्च हे विष्णो तव भासो दीप्तयः तेजोभिः स्फुरणैः समग्रं जगद् आपूर्य व्याप्य, उग्राः तीव्राः सत्यः प्रतपन्ति प्रकर्षेण तापयन्ति ।। २८,२९ ।।

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ।। ३० ।।**

## भाष्यम्

**'मातापित्रोरन्तरङ्गः स एकः रूपेण चान्यैः सर्वगतः स एकः' इति वारुणश्रुतेः । एकेनैव द्यावापृथिव्योरन्तरं व्याप्तो भवति । 'पश्य मे पार्थ रूपाणि' इति बहूनि रूपाणि प्रतिज्ञातानि । मातापितरौ च पृथिवीद्यावौ। 'मा नो माता पृथिवी दुर्मतौ धात्' 'मधु द्यौरस्तु नः पिता' इत्यादि प्रयोगात् ।**

भावप्रदीपिका (प.टी.)– द्यावापृथिव्योरित्येकरूपमेव श्रूयते । अतः कथमनन्तरूपत्वम् ? इत्यत आह– **मातापित्रोरिति** । एवं श्रुतिसद्भावात् द्यावा-पृथिव्योरन्तरमेकेनैव रूपेण व्याप्तो रूपान्तरेण दिशश्च सर्वा इत्येवार्थः । इतश्चानन्तत्व-मित्यत इत्याह– **पश्येति** । एतच्छ्रुतौ द्यावापृथिवीव्याप्तिर्न श्रूयत इत्यत आह– **मातापितरौ चेति** ।

प्रमेयदीपिका (ज.टी.)– 'द्यावापृथिव्योरिदमन्तरं हि' इत्यत्र 'त्वया' इत्यनेनै-वैकत्वस्य सिद्धत्वात् 'एकेन' इति व्यर्थमित्यतः प्रमाणपूर्वकं तदभिप्रायमाह– **मातापित्रोरिति** ।। बहुत्वेऽपि सः एकः अभिन्नः । अनेन दिशश्च सर्वाः रूपान्तरै-रित्युक्तं भवति । तदयुक्तम् । विश्वरूपस्य 'द्रष्टुमिच्छामि ते रूपम्' इत्यादिनैक-

श्लोकः ३०

त्वावगतेरित्यत आह– **पश्येति** ।। ऐक्यापेक्षयैकवचनमिति भावः । **'मातापित्रोः'** इति श्रुतिः प्रकृतानुपयोगिनी कथमुदाहृता। **'द्यावापृथिव्योः'** इत्यनभिधानादित्यत आह– **मातापितरौ चेति** ।। माता पृथिवी नः अस्मान् दुर्मतौ मा धात् न दध्यात् । नः अस्माकं मधु सुखहेतुः अस्तु ।।

**भावबोधः (र.टि.)– ।। अनेनेति ।।** 'अन्यैः सर्वगतः' इति इत्यनेनेत्यर्थः ।। ३० ।।

**भावदीपः (रा.टि.)– ।। विश्वरूपेति ।।** पुनर्वचनमित्याद्यात्मकेत्यर्थः ।। **अनेनेति ।।** 'अन्यैः सर्वगतः' इति कथनेनेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** अभेदोक्तेः प्रसक्तिं दर्शयितुमुक्तम्– **बहुत्वेऽपीति** ।। बहुरूपत्वेऽपीत्यर्थः । 'एकं स्वस्मिन्नभेदतः' इत्यन्यत्रोक्तेरिति भावः । **अनेन** 'सर्वगतः' इत्यनेन । **रूपान्तरैः** व्याप्ताः । **'इत्यादिना'** इत्यत्रादिशब्देन 'परमं रूपमैश्वरम्' इत्याद्येक-वचनान्तपदग्रहः । **ऐक्यापेक्षया** रूपाणामभेदेन तदपेक्षया, 'इच्छामि ते रूपम्' इत्यादि एकवचनम् इति न तद् बहुरूपविरोधीत्यर्थः । **दुर्मतौ** दुष्टबुद्धिविषये । दुष्टबुद्धियुक्तान् न कुर्यात् इत्यर्थः ।

**भावदीपिका (श्री.टि.)– ।। इत्यनेनैव** इत्येकवचनेनैव । **अनेन** 'अन्यैः सर्वगत' इत्यनेन । **रूपान्तरैः** 'व्याप्ता' इति शेषः । इत्यादिना एकवचनेन । **द्यावापृथिव्योरिति ।।** 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तम्' इति गीतोक्तार्थस्य श्रुतावनभिधानादित्यर्थः ।

## भाष्यम्

**ननु नियमतो भयप्रदं तत्स्वरूपम् । नारदस्य तदभावात् । केषाञ्चित् तथा दर्शयति भगवान् । 'प्रीयन्ति केचित् तस्य रूपस्य दृष्टौ बिभेति कश्चिदभ्यसे सर्वतृप्तिः' इति वारुणशाखायाम् । ननु तं सर्वे पश्यन्ति । अदृष्ट्वाऽपि तन्निरूप्य भये द्रष्टुस्तथा प्रतिभाति । तथा च गौतमखिलेषु**

**'दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद् बिभ्यतो दृष्टवत्ते ।**
**पश्यन्ति तन्न्यस्तचक्षुर्मुखांश्च तस्मिन्नेवैते मनसो गतत्वात्' इति ।।**

भावप्रदीपिका (प.टी.)– ननु दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा इति भगवद्दर्शनं दुःखहेतुतयोच्यत इत्येतत्सप्रमाणकं परिहरति– **न त्वति** । अभ्यसे अभ्यास इत्यर्थः । ननु दृष्ट्वा लोकाः प्रव्यथिता इति सर्वेषां भगवद्दर्शनमुच्यते । तत्कथमित्यत आह– **न त्वति** । दृष्टपूर्वविश्वरूपाणां तदा दर्शनाभावेऽपि तन्निरूप्य भये जाते द्रष्टुरर्जुनस्य द्रष्टा बिभेतीति भातीत्यर्थः । अत्र प्रमाणमाह– **तथा चेति** । देवं दृष्ट्वा मोदमानास्ते नान्यत् पश्यन्ति । अदृष्ट्वाऽप्येतद् भयात् दृष्टवद्बिभ्यतः, तस्मन्नेव तन्न्यस्तचक्षुर्मुखानित्यन्वयः ॥

प्रमेयदीपिका (ज.टी.)– 'दृष्ट्वाऽद्भुतम्' इत्यादिना विश्वरूपदर्शनस्य भयहेतुत्वमुच्यते । तन्न सर्वेषां सर्वदा । किन्तु केषाञ्चित् कारणविशेषात् कदाचिदेवेति सप्रमाणकं तदभिप्रायमाह– **न त्विति** ॥ अभ्यसे अभ्यासे सति सर्वेषां तृप्तिः आनन्द एवेत्यर्थः । एवं तद्दर्शनस्य भयहेतुत्वनियमाभावमभिधाय लोकत्रयस्य दर्शनाभावं चाह– **नत्विति** ॥ किन्तु 'त्रिलोकेषु स्थितैर्भक्तैः' इत्युक्तप्रमाणेन कैश्चिदेव । तदभिप्रायश्च लोकत्रयशब्द इति भावः । प्रकारान्तरेण लोकत्रयम् इत्यस्याभिप्रायमाह– **अदृष्ट्वाऽपीति** ॥ विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसां तत् अदृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्य तथाऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति प्रतिभाति इति अतः लोकत्रयं दृष्ट्वा 'प्रव्यथितम्' इत्याह इत्यर्थः ॥

अत्र श्रुतिसम्मतिमाह– **दृष्ट्वेति** ॥ देवं विश्वरूपं दृष्ट्वा मोदमानाः ते एतेऽर्जुनादयः तद्ध्यायिनः पश्यन्ति । कथम्भूतान्? अदृष्ट्वाऽपि तन्निरूप्य एतद्भयाद् बिभ्यतो भयचिह्नवतः तस्मिन्नेव विश्वरूपे मनसो गतत्वात् तन्न्यस्तचक्षुर्मुखांश्च दृष्टवत् दृष्टवन्त इवेत्यर्थः ॥ २०-३० ॥

भावदीपः (रा.टि.)– ॥ **'अभ्यसे'** इत्यनुवादः, **'अभ्यासे सति'** इति व्याख्यानम् ॥ 'नतु तं सर्वे पश्यन्ति' इति भाष्ये आकाङ्क्षितं तात्पर्योक्तवचनेन पूरणायाऽह– **किन्त्विति** ॥ 'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् । दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः' इत्युक्तप्रकारेणेत्यर्थः ॥ **निरूप्य** अनुसन्धायेत्यर्थः ॥ ३० ॥

**भावरत्नकोशः** (सु.टि.)– ॥ **कारणविशेषात्** अनभ्यासरूपकारणविशेषात् । अभिपूर्वाद् 'असु क्षेपणे' इत्यतो 'घञर्थे कविधानम्' इति कप्रत्यये वेदे अभ्यसशब्द इति

श्लोकः ३०

भावेनाह– **अभ्यसे अभ्यास इति** ।। 'न तु' इत्यादिपूर्वभाष्यनिष्कर्षं दर्शयन् 'नतु तम्' इत्युत्तरत्र भाष्यमवतारयति– **एवमिति** ।। **तद्दर्शनस्य** विश्वरूपदर्शनस्य । **इत्युक्तप्रकारेणेति** ।।

'त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः ।।

इति तात्पर्यनिर्णयोदाहृतप्रमाणोक्तप्रकारेणेत्यर्थः । **कैश्चिदेवेति** ।। 'दृष्टः' इति शेषः । भाष्यानुसारेण 'किन्तु केचिदेव पश्यन्ति' इति प्रथमायां वक्तव्यायामपि 'कैश्चिदेव' इति तृतीयाप्रयोगः 'त्रिलोकेषु' इत्युदाहृतप्रमाणानुसारादिति द्रष्टव्यम् । **तदभिप्रायः** लोकत्रयस्थितविश्वरूपदर्शनयोग्यप्रतिबन्धकहीनभक्तविशेषाभिप्रायः ।

**पुंसां** योग्यपुरुषाणाम् । **निरूप्य** अनुसन्धाय । **तद्द्रष्टुः** भयवत्पुरुषद्रष्टुः । भाष्यगततथापदार्थः– **तथाऽहमिवेति** ।। **प्रतिभातीत्यत इति** ।। 'प्रतिभाति' इति हेतोः । 'लोकत्रयं प्रव्यथितम्' इत्याह अर्जुन इत्यर्थः । **तद्ध्यायिनः** पुंसः । 'भयाद्बिभ्यते' इति कथम्, अभेदात्, इत्यत उक्तम्– **भयचिह्नवत इति** ।। 'दृशिर् प्रेक्षणे' इत्यतः क्तवतुप्रत्यये दृष्टवच्छब्दः । तस्मात् 'देवपथादिभ्यश्च' इति स्वार्थे विहितकन्प्रत्ययस्य लुपि, 'सुपां सुलुक्' इति द्वितीयाया लुकि च 'दृष्टवत इव' इत्यर्थको 'दृष्टवत्' इति शब्द इति भावेनाह– **दृष्टवत् दृष्टवत इवेति** ।। यद्वा 'तत्र तस्येव' इति लक्षणस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यातत्वात्, 'घटवदिति युज्यते' इति विष्णुतत्त्वनिर्णयटीकारीत्या इह द्वितीयासमर्थाद् वतिः । दृष्टशब्दश्च 'दृष्टं दर्शनमेषाम्' इति मत्वर्थीयाच्प्रत्ययान्ततया दर्शनवत्पुरुषपर इति व्याख्येयम् ।

केचित्तु 'पूर्ववत्सनः' इति सूत्रे 'पूर्ववत्' इति वतिस्तृतीयान्तात्, न पञ्चम्यन्तात्, लक्षणाभावात् । तथा च 'ब्राह्मणेन तुल्यं वैश्यादधीतः' इत्युक्ते 'ब्राह्मणादिव वैश्यादधीतः' इति पञ्चम्यर्थोऽवगम्यते, तथेहापि 'पूर्वस्मादिव सन्नन्तादपि आत्मनेपदम् इत्यर्थो लभ्यते' इति हरदत्तवचनाद् अत्रापि 'ब्राह्मणेन तुल्यं पश्यति' इत्यत्र यथा द्वितीया तृतीयार्थमन्तर्भावयति, तथा 'दृष्टवत्' इत्यत्र 'दृष्टैः दर्शनवद्भिस्तुल्यं पश्यन्ति दृष्टवत इव पश्यन्ति' इत्यर्थो लभ्यत इति भावेन 'दृष्टवत् दृष्टवत इव' इत्युक्तमिति व्याचक्षते । अन्ये तु 'वत्' इति न वतिप्रत्ययः, किन्तु अव्ययप्रातिपदिकान्तरमेव साम्यार्थकम् । 'वत्, वा, यथा, तथा, इव, एवम्' इत्यमरपाठात् । प्रातिपदिकाव्ययपर्याये प्रत्ययग्रहणस्यानुचितत्वाच्च । एवं च दृष्टशब्दस्या-

जन्तस्य 'वत्' इति साम्यार्थकाव्ययेन 'सुप् सुपा' इति समासे दृष्टवच्छब्द एव 'दृष्टवत इव' इत्यर्थक इति भावेनैवमुक्तमिति वदन्ति । अपरे तु क्तवतुप्रत्ययान्तो दृष्टवच्छब्दो लुप्त-विभक्तिकः । लुप्तोपमा चात्र विवक्षितेति भावेन 'दृष्टवत इव' इत्युक्तम् इत्याहुः ।। २० ।।

**भावदीपिका (श्री.टि.)– ।। तत्** विश्वरूपस्य भयहेतुत्वम् । **सर्वेषाम्** भक्तानां च । **केषाञ्चित्** भक्तानाम् । **कारणविशेषात्** तदानीं भगवतो भूभारहरणार्थम् उद्युक्तत्वरूपकारण-विशेषात् । **कदाचिदेव** 'भयहेतुत्वम्' इति वर्तते । **त्रिलोकेष्वित्यादि ।।**

त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।
दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः ।।
प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।
दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ।
तस्मिन् काले तु भूमेश्च भारहारार्थमुद्यमात् ।
उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ।।
अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।
श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ।।

इति प्रमाणोक्तप्रकारेणेत्यर्थः । **तदभिप्रायश्चेति ।।** अर्जुनादवरैः यैर्भक्तैः विश्वरूपदर्शनयोग्यैः तदानीमर्जुनाय प्रदर्शितं रूपमपरोक्षतो दृष्ट्वा भीतम्, तादृग्भक्तविशेषाभिप्रायेणेत्यर्थः । **पुंसाम्** तद्योग्यपुरुषविशेषाणाम् । **चेतसि निरूप्य स्थितानाम्** अपरोक्षतो दर्शनार्थं ध्यानं कुर्वताम् इत्यर्थः । भये जाते सति यदा अर्जुनाय विश्वरूपं प्रदर्शितं तदैव तद्ध्यायिनामपि हृदि भय-विशेष उत्पन्न इत्यर्थः । **तद्द्रष्टुरिति ।।** भयविशेषसंयुक्तान् तद्ध्यायिनो द्रष्टुरित्यर्थः । कृष्णदेहे सर्वस्यापि जगतोऽर्जुनेन दृष्टत्वेन तदानीमेते ध्यायिनोऽपि कृष्णदेहे अर्जुनेन दृष्टा इति भावः । 'तथा' इत्यनूद्य तस्यार्थमाह– **तथाऽहमिवेत्यादि ।। इत्यतः** एतादृशभक्ताभिप्रायेण । पूर्वं विश्वरूपदर्शनवतोऽर्जुनाद् अवराः भक्ताः लोकत्रयशब्देन गृहीताः । इदानीं तु विश्वरूपा-नपरोक्षज्ञानिनः तद्ध्यायिनो भक्ता इति द्रष्टव्यम् ।

**तद्ध्यायिनः** विश्वरूपध्यानं कुर्वतो भक्तजनान् । कथंभूतान् ध्यायिनः अदृष्ट्वाऽपि 'विश्वरूपम्' इति शेषः । **तन्निरूप्य** **तद्विश्वरूपं** चेतसि निरूप्य । **एतद्भयात्** चेतसि निरूप्य

श्लोकः ३१

ध्यानकरणाद् जाताद् भयात् । 'बिभ्यतः' इत्यत्र 'दृष्टवत्' इति दृष्टान्त उक्तः, तत्र कर्मणि क्तप्रत्ययमङ्गीकृत्य दृष्टविश्वरूपवत्, इत्यन्यथाप्रतीतेराह– **दृष्टवन्त इवेति** ।। विश्वरूपं दृष्टवन्तो जना यथा बिभ्यति एवं बिभ्यतः तद्ध्यायिनोऽर्जुनादयः पश्यन्तीत्यर्थः । क्रियातौल्ये वतिरिति द्रष्टव्यम् ।। ३० ।।

भावप्रकाशः (कृ.टि.)– ।। **अनेनेति** ।। अन्यैः सर्वगत इत्यनेनेत्यर्थः । **त्रिलोकेषु स्थितैरिति** ।। त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् । दृष्टं विष्णोः विश्वरूपं स्वयोग्यत्वानुसारत इति तात्पर्यनिर्णयोक्तप्रकारेणेत्यर्थः । **कैश्चिदेवेति** ।। दृष्टमिति शेषः । उक्ततात्पर्यानुसारेण तृतीयाप्रयोगः । नन्वभेदाद्भयाद्बिभ्यत इति कथमित्यत आह– **भयचिह्नवत इति** ।। ननु तद्ध्यायिनः पश्यन्तीत्यनेन ध्यायिनां दृष्टत्वं लब्धं तत्कथं वतिप्रयोग इत्यत आह– **दृष्टवत इवेत्यर्थ इति** ।। तथा च दृष्टवदिति क्तवतुप्रत्ययान्तं लुप्तविभक्तिकं लुप्तोपमा चेयमिति भावः ।। ३० ।।

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम्**
**।। ३१ ।।**

## भाष्यम्

**धर्मान्तरज्ञानार्थमेव को भवानिति पृच्छति– आख्याहीति ।। यथा कश्चित् कञ्चित् नामादिकम् । जानन्नपि जातिज्ञानार्थं पृच्छति 'कस्त्वम्' इति । यदि तमेव न जानाति तर्हि 'विष्णो' इत्येवं सम्बोधनं न स्यात् । 'त्वमक्षरम्' इत्यादि च ।। ३१ ।।**

भावप्रदीपिका (प.टी.)– अतिभयङ्करत्वान्नायं विष्णुरित्यभिप्रेत्य पृच्छतीत्यन्यथाप्रतीतिनिरासाय प्रश्नार्थमाह– **धर्मान्तरेति** । धर्मज्ञानार्थं कीदृश इति विहाय क इति प्रश्नः कुत्र दृष्ट इत्यत आह– **यथेति** । स्वरूपमेव पृच्छत इति किं न स्यात् ? इत्यत आह– **यदीति** ।। ३१ ।।

प्रमेयदीपिका (ज.टी.)– **स्वरूपमेवाज्ञात्वा तद्धर्मान्** वाऽयं पृच्छतीत्यन्यथा-

प्रतीतिनिरासार्थम् आह– **धर्मान्तरेति** ।। तर्हि 'किंधर्मान्तरो भवान्' इति प्रश्नेन भाव्यम् । 'को भवान्' इति तु न युज्यत इत्यत आह– **यथेति** ।। अन्येषां व्यवहारात् नाम प्रत्यक्षेण रूपादिकं जानन्नपि जातिज्ञानार्थं यथा कश्चित् कश्चित् कस्त्वमित्येव पृच्छति । तथाऽर्जुनो भगवन्तं तद्धर्मांश्च जानन्नपि धर्मान्तरज्ञानार्थं को भवानित्येव पृच्छतीत्यर्थः । प्रश्नव्याख्यानस्य वर्तमानत्वाद्वर्तमाननिर्देशः । उग्रं रूपं दृष्ट्वा रुद्रो वा यमो वाऽयमिति स्वरूप एव सन्दिहानस्य प्रश्नः किं न स्यादित्यत आह– **यदीति** ।। तत्स्वरूपमेवेत्यर्थः । 'भासस्तवोग्राः प्रतपन्ति विष्णो' इति । तर्हि धर्मविषयोऽयं प्रश्नोऽस्तु । ततश्चान्तरशब्दो न युक्त इत्यत आह– **त्वमिति** ।। यदि भगवद्धर्मान्न जानीयात् तर्हि 'त्वमक्षरं परमम्' इत्यादि वर्णनं न स्यात् । अतो भगवन्तं तद्धर्मांश्चाक्षरत्वादीन् ज्ञात्वा तदन्यधर्मज्ञानार्थमेव प्रश्न इत्येवमुक्तमित्यर्थः ।। ३१ ।।

**भावबोधः (र.टि.)–** ।। **कैश्चिदेवेति** ।। दृष्टमित्यर्थः । **त्रिलोकेष्विति** ।। उदाहृत-तात्पर्यानुरोधात्तृतीयाप्रयोगः । नन्वर्जुनप्रश्नस्य भाष्यसमानकालीनत्वाभावात् पृच्छतीति कथं वर्तमाननिर्देश इत्यत आह– **प्रश्नव्याख्यानस्येति** ।। ३१ ।।

**भावदीपः (रा.टि.)–** नाम्ना ज्ञानोपायमाह– **अन्येषां व्यवहारान्नामेति** ।। 'जानन्' इत्यन्वयः ।। 'अप्राक्षीत्' इति भूतनिर्देशे कार्ये कथं 'पृच्छति' इति भाष्योक्तिः इत्यत आह– **प्रश्नव्याख्यानस्येति** ।। ३१ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु प्रारब्धापरिसमाप्तक्रियोपलक्षिते काले वाच्य एव वर्तमाने लडिति लट्विधेः प्रश्नस्य चातीतत्वात् अपृच्छदिति वक्तव्यम् । पृच्छतीति कथमित्यत आह– **प्रश्नव्याख्यानस्येति** ।।

**भावरत्नकोशः (सु.टि.)–** ।। **स्वरूपमेवेति** ।। 'स्वरूपाज्ञानेन स्वरूपमेव पृच्छति', 'धर्मसामान्याज्ञानेन धर्मान् वा पृच्छति' इत्यन्यथाप्रतीतीत्यर्थः । 'कथञ्चित्' इत्यस्यार्थः 'अन्येषां व्यवहारात्' इति 'प्रत्यक्षेण' इति च ।। 'नामादिकम्' इत्यत्रादिपदार्थोक्तिः– **रूपादिकमिति** ।। **धर्मान्तरज्ञानार्थं** स्वाज्ञातधर्मविशेषज्ञानार्थम् । भावप्रदीपिकायां तु 'यत एवमुग्रस्वभावः अतः' इति शङ्करभाष्यं हृदि निधायातिभयङ्करत्वाद् 'नायं विष्णुः' इत्यभिप्रेत्य

श्लोकः ३१

पृच्छतीत्यन्यथाप्रतीतिनिरासाय प्रश्नार्थमाह– **धर्मान्तरेति** ।। धर्मज्ञानार्थं 'कीदृशः' इति विहाय 'कः' इति प्रश्नः क दृष्टः इत्यत आह– यथेति इति भाष्यवाक्यद्वयमवतारितम् । 'पप्रच्छ' इति भाषणीये 'पृच्छति' इति कथं भाषणम् ? इत्यत आह– **प्रश्नव्याख्यानस्येति** ।। व्याख्यान-गतं वर्तमानत्वं व्याख्येये उपचर्यत इति भावः । 'तमेव' इति भाष्यपदं कृतचोद्यपरिहाराय व्याचष्टे– **तत्स्वरूपमेवेति** ।। 'विष्णो इति सम्बोधनम्' इति भाष्ये सम्बोधनस्थलप्रदर्शना-योक्तम्– **भास इति** ।। **तर्हि** यदि स्वरूपप्रश्नो न युक्तः, तर्हि **धर्मविषयः** धर्मसामान्यविषयः, **अन्तरशब्दः** 'धर्मान्तरज्ञानार्थम्' इति भाष्यगतोऽन्तरशब्द इत्यर्थः ।।

**गीताक्षरार्थस्तु** ज्ञातभगवत्स्वरूपेण परिज्ञाततदीयगुणकर्मणा चार्जुनेन स्वाज्ञातगुणकर्म-विषयप्रश्नः क्रियते– **आख्याहि मे क इति** ।। अन्यथाप्रश्नगमनिका भाष्यटीकादौ पराकृता । एवम् उग्ररूपो भवान् कः किंधर्मकः । आद्यम् आदौ भवं भवन्तं विज्ञातुं विशेषाकारेण ज्ञातुम् इच्छामि । यतः तव प्रवृत्तिं व्यापारं न प्रजानामि सामान्यतो जानन्नपि प्रकर्षेण न जानामीति ।। ३१ ।।

**भावदीपिका (श्री.टि.)– ।। स्वरूपमेवेत्यादिना ।।** भगवत्स्वरूपमज्ञात्वा तत्स्वरूपमेव पृच्छति, स्वरूपज्ञानेऽपि तद्धर्माज्ञानात् तद्धर्मान् वा पृच्छतीत्यर्थः । **नाम** ज्ञानोपायकथनम् । **अन्येषां व्यवहारादिति** ।। आदिपदार्थमाह– **रूपादिकमिति** ।। **रूपम्** शरीरम् । ननु भाष्ये 'पृच्छति' इत्यनुपपन्नम् ? अर्जुनप्रश्नस्य भाष्यसमानकालीनत्वाभावात्, 'अपृच्छत्' इति वक्तव्यत्वात्, इत्यत आह– **प्रश्नेति** ।। 'विष्णो' इति सम्बोधनं कुत्रास्ति ? इत्यतस्तद्दर्शयति– **भास इति** ।। **प्रश्नोऽस्त्विति** ।। सर्वथा धर्मानज्ञात्वैव धर्मविषयः प्रश्नोऽस्त्वित्यर्थः । वर्णनम् अक्षरत्वादिधर्मसंयुक्ततया प्रतिपादनम् । **इत्येवमुक्तमिति** ।। तथा च 'धर्मान्तरं पृच्छति' इत्यत्रान्तरशब्दो युक्त इत्याशयः ।। ३१ ।।

**भावप्रकाशः (कृ.टि.)– ।। किंधर्मान्तर इति ।।** कानि धर्मान्तराणि यस्येति बहुव्रीहिः । नामज्ञाने कारणमाह– **व्यवहारादिति** ।। रूपादिज्ञाने तदाह– **प्रत्यक्षेणेति** ।। ननु पृच्छतीति भाष्यकृत्प्रयोगकालेऽर्जुनप्रश्नस्याभावात् कथं वर्तमाननिर्देश इत्यत आह– **प्रश्नेति** ।। तथा च व्याख्यानगतं वर्तमानत्वं व्याख्येये उपचर्यवर्तमाननिर्देश इत्यर्थः ।। ३१ ।।

**श्रीभगवानुवाच–**

**कालोऽस्मि लोकक्षयकृत् प्रवृद्धो**
**लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वा न भविष्यन्ति सर्वे**
**येऽवस्थिताः प्रत्यनीकेषु योधाः ।। ३२ ।।**

भावरत्नकोशः (सु.टि.)– 'कालोऽस्मि' इत्यादिश्लोकत्रयाक्षरार्थस्तु एवमर्थितस्य भगवत उत्तरमिदम्– **भगवानुवाच– कालोऽस्मीत्यादि** ।। कालशब्दो जगद्बन्धनच्छेदनज्ञानादिनाना-धर्मविशिष्टभगवद्वाची । 'उग्ररूपः किमर्थः' इति प्रश्नस्य परिहारः– **लोकक्षयकृदिति** ।। **प्रवृद्धः** वृद्धेर्धात्वर्थत्वेऽपि साऽत्र देशतः कालतश्च सदातनी विवक्षितेति परिपूर्णः अनादिनित्य इति वा । लोकस्य क्षयकृद्भवान् इह युद्धमण्डले विद्यमानान् जनान् युगपद्बहून् प्रत्यक्षत एव संहर्तुं प्रवृत्तोऽस्मीत्यत 'इह' इति विशेषोक्तिः । पार्थानामपि संहरणे किं प्रवृत्तः ? नेत्युच्यते– **ऋतेऽपीति** ।। त्वां धर्मादिपाण्डवान्, अश्वत्थामानम्, कृतवर्माणं च ऋते इति समुच्चयार्थोऽपि-शब्दः । त्वा त्वाम् ऋते इत्यत्र, 'ऋते द्वितीया च' इति चान्द्रसूत्रात् द्वितीया । 'प्रत्यनीकेषु' इत्यत्र सेनाद्वयस्यापि प्रत्यनीकत्वं परस्परतयाऽवगन्तव्यम् । अक्षोहिण्यादीनां बहुत्वाद् बहुवचनम् । सर्वे योद्धारः सेनाद्वयगता अपि ।। ३२ ।।

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ।। ३३ ।।**

## भाष्यम्

**कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वभगवद्धर्मवाची । 'कल बन्धने' 'कल च्छेदने' 'कल ज्ञाने' 'कल कामधेनौ इति हि पठन्ति । प्रसिद्धश्च स शब्दो भगवति ।**

**'नियतं कालपाशेन बद्धं शक्र विकत्थसे ।**
**अयं स पुरुषः श्यामो लोकस्य हरति प्रजाः ।**

श्लोकः ३३

**बद्ध्वा तिष्ठति मां रौद्रः पशुं रशनया यथा'**

**इति मोक्षधर्मे विष्णुना बद्धो बलिर्वक्ति ।**

**'विष्णौ चाधीश्वरे चित्तं धारयन् कालविग्रहे' इति भागवते ।।**

भावप्रदीपिका (प.टी.)– ननु परिहारे गुणाकथनात् कथं गुणप्रश्नः ? इत्यत आह– **कालेति** । ननु कालशब्दस्य रुद्रादिवाचित्वमेव किं न स्यादित्यत आह– **प्रसिद्धश्चेति** ।

प्रमेयदीपिका (ज.टी.)– एवं तर्हि 'कालोऽस्मि' इत्युत्तरमयुक्तम् । धर्मानुक्तेरित्यत आह– **कालेति** ।। धर्मविशिष्टभगवद्वाचीत्यर्थः । कुत एतदित्यत आह– **कलेति** ।। यथा कामधेनुः सर्वार्थान् ददाति तथाऽयमपि धातुः सर्वार्थवाचीत्यर्थः । तथाच अस्मादण् । कर्तरि घञ् वा । 'जगत्' इति च योग्यतया सम्बद्ध्यते । भवत्वयं बन्धनादिधर्मवद्वावाची । भगवद्वाची तु कुतः । अन्यत्र रूढत्वादित्यत आह– **प्रसिद्धश्चेति** ।। बद्धं मां प्रति विकत्थसे । आत्मानं तु श्लाघसे । कः कालः? अयम् । कथम्? श्यामः प्रजाः हरति । बद्ध्वा तिष्ठति रौद्रश्चेति । अत्र कथं विष्णुवाचित्वनिश्चयः? इत्यत आह– **विष्णुनेति** ।। कालनामा विग्रहो यस्यासौ तथोक्तः ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **अणिति** ।। तथाच णित्त्वादुपधावृद्धौ काल इति रूपसिद्धिरित्यर्थः ।। **कर्तरि घञिति** । अकर्तरि च कारके इत्यस्य नञा निर्दिष्टत्वेन अनित्यत्वात् कर्तर्यपि ञित्वादुपधावृद्धौ विवक्षितरूपसिद्धिरिति भावः ।।

भावरत्नकोशः (सु.टि.)– ।। एवं **तर्हि** 'धर्मान्तरज्ञानार्थमेव प्रश्नकरणम्' इति पक्षे । **धर्मानुक्तेरिति** ।। कालशब्दस्य रूढ्या यमसमयरूपधर्मिविशेषसमर्पकत्वादिति भावः । धर्मवाचकत्वे 'कालोऽस्मि' इति सामानाधिकरण्यानुपपत्तिः इत्यत आह– **धर्मविशिष्टेति** ।। **अयमपि धातुरिति** ।। यद्यपि प्रसिद्धधातुपाठे 'कल शब्दसङ्ख्यानयोः' इति भौवादिक एकः, 'कल गतौ सङ्ख्याने च' इति चुरादावदन्तोऽपरः, 'कल विक्षेपे' इति तत्रैवान्य इति त्रिविध एव कलधातुर्लक्ष्यते । तथापि चिरन्तनव्याकरणाद्यनुसारिसर्वज्ञभाष्यकारवचनप्रामाण्यात्, 'कलिः कामधेनुः' इति लोकप्रसिद्ध्यनुसाराच्चेयमुक्तिः । **अणिति** ।। कलते बध्नाति, छिनत्ति, जानातीति वा काल इति कर्तरि औणादिकेऽणूप्रत्यये उपधावृद्धौ च निष्पन्नः कालशब्दः

जगद्बन्धकत्वादिगुणविशिष्टं भगवन्तं वक्तीति भावः । **घञ्वेति** ।। 'कृत्यल्युटो बहुलम्' इत्यत्र बहुलग्रहणात् तस्य च सर्वोपाधिव्यभिचारार्थत्वात् 'अकर्तरि' इति शास्त्रप्रवृत्तौ कालशब्द इत्यर्थः ।

**अन्यत्र** यमसमयादौ । 'मां श्लाघसे' इत्यन्वयस्यानवसरत्वाद् उक्तम्– **मां प्रतीति** ।। 'श्लाघसे' इत्यत्र कर्मोक्तिः– **आत्मानमिति** ।। 'कत्थ श्लाघायाम्' इति धातुः । **क इति** ।। 'कालपाशेन' इत्यत्र कालशब्देन विवक्षित कालः क इति प्रश्नः । परिहारः– **अयमिति** ।। **अयं कालः** स पुरुषः परमात्मेत्यर्थः । **कथं** केन प्रवृत्तिनिमित्तेन कालशब्दवाच्य इत्यर्थः । श्यामः इति प्रथमं कालशब्दप्रवृत्तिनिमित्तम्, 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यभिधानात् । प्रजाः हरति इति द्वितीयम्, 'कल च्छेदने' इति धातोः । न्यायदीपिकायां 'कल संहरणे' इत्यपि पठितम् । बद्ध्वा तिष्ठति 'बन्धकः' इति तृतीयम्, 'कल बन्धने' इति पाठात् । **रौद्रः** उग्ररूपश्चेत्यर्थः । अत्रत्य'इति'शब्दः 'श्यामः' इत्यादौ प्रत्येकं सम्बद्ध्यते । 'कालो विग्रहो यस्य' इति विग्रहे प्रकृतोपयोगः न स्फुटं प्रतीयते, इत्यतोऽभिप्रेतं विग्रहं दर्शयति– **कालनामेति** ।।

**भावदीपिका (श्री.टि.)–** 'केन धर्मान्तरेण विशिष्टस्त्वम्' इति प्रश्ने, 'अहं कालोऽस्मि' इति कथनमसङ्गतम् ? कालशब्दस्य भगवद्धर्मवचित्वे 'जगद्बन्धनादिधर्मोऽस्मि' इत्युत्तरस्यासङ्गतत्वात्, प्रत्ययविशिष्टस्यातदर्थत्वाच्चाह– **धर्मविशिष्टेति** ।। **अणित्यादि** ।। 'कल' इत्यस्माद् अणि णित्त्वात्, घञि ञित्त्वाद्वा 'अत उपधायाः' इति उपधावृद्धौ, प्रत्ययाकारसम्बन्धे च सति 'कालः' इति रूपम् । **अन्यत्रेति** ।। क्षणलवादावित्यर्थः । **श्लाघसे** स्वात्मस्तुतिं करोषि । **कथम्** केन निमित्तेन कालशब्दवाच्यः । 'कल कामधेनुः' इति धातोः 'श्यामो रौद्रश्च' इति कालशब्दार्थकथनं युक्तम् । 'कालश्यामलमेचका' इत्यभिधानाच्च श्यामत्वं कालशब्दार्थ इति च द्रष्टव्यम् । 'प्रजाः हरति', 'मां बद्ध्वा तिष्ठति' इत्यपि कालशब्दार्थकथनं युक्तम् । 'कल च्छेदने' 'कल बन्धने' इति धातोरिति ज्ञेयम् । प्रमाणे 'लोकस्य रौद्रः भयङ्करः' इत्यन्वयो द्रष्टव्यः ।

**भावप्रकाशः (कृ.टि.)–** धर्मवाचित्वे कालोऽस्मीति सामानाधिकरण्यानुपपत्तिरित्यत आह– **धर्मविशिष्टेति** ।। **अणिति** ।। कलतेऽसाविति कालः । औणादिकोऽण् उपधावृद्धिश्चेति

श्लोकः ३३

भावः । **कर्तरि घञ् वेति** । घञः कर्तृभिन्नकारकार्थत्वेऽपि कृत्यल्युटो बहुलमित्यत्र बहुलमिति योगविभागेन कृन्मात्रस्यार्थव्यभिचारोक्तेः कर्तरीत्युक्तम् ।

।। **श्लाघस इति** ।। कत्थ श्लाघायामित्युक्तेरिति भावः । **कथमिति** ।। केन प्रवृत्तिनिमित्तेन कालशब्दवाच्य इत्यर्थः । श्याम इत्येकं प्रवृत्तिनिमित्तं कृष्णे नीलासितश्यामकालश्यामलमेचका इत्यमरोक्तेः । **प्रजा हरतीति** ।। द्वितीयं कल च्छेदन इत्युक्तेः । वध्वा तिष्ठतीति तृतीयं कलबन्धन इति धातोरिति विवेकः । **रौद्रश्चेति** ।। रौद्रं तु उग्रममी त्रिषु इत्यमरोक्तेरुग्र इत्यर्थः । अस्मिन् पक्षे कालशब्दः प्रकृतपुरुषे गौणः 'कालो दण्डधरः' इत्यमरोक्तेः । यमवाचिनः कालशब्दस्य तन्निष्ठेग्रत्व गुणयोगेन प्रकृते प्रयोगादिति । भाष्ये रशनाशब्दो रज्जुवाची ।

## भाष्यम्

**प्रवृद्धः परिपूर्णोऽनादिर्वा । 'ऋतं च सत्यं चाभीद्धात्' इति हि श्रुतिः । 'एतन्महद्भूतम् ' इति च ।'प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम' इतिच । नतु वर्धनम् । 'नासौ जजान न मरिष्यति नैधतेऽसौ' इति हि भागवते । 'यस्य दिव्यं हि तद्रूपं क्षीयते वर्धते न च' इति मोक्षधर्मे ।।**

भावप्रदीपिका (प.टी.)– प्रवृद्धः इत्यन्यार्थनिवारणायाह– **प्रवृद्ध इति** । तत्र विष्णोः पूर्णत्वानादित्वे प्रमाणमाह– **ऋतमिति** । वृद्धिरेवार्थः किं न स्यात् ? इत्यत आह– **नत्विति** ।

प्रमेयदीपिका (ज.टी.)– 'प्रवृद्धः' इति कादाचित्की वृद्धिः प्रतीयते । अत आह– **प्रवृद्ध इति** ।। वृद्धिः धात्वर्थः । सा च प्रशब्देन देशतः कालतश्च सदातनी विवक्षितेति भावः। 'अनादिः' इति नित्यस्याप्युपलक्षणम् । भूताधिकारे विहितस्य क्तस्य कुतः सार्वकालिकत्वम्? प्रयोगदर्शनादिति भावेनाऽह– **ऋतं चेति** ।। इद्धात् भूतमितिवदित्यर्थः । अत्रापि सार्वकालिकत्वानिश्चय इत्यतो भगवतो दीप्तेः सत्तायाश्च सदातनत्वे श्रुतिसद्भावादित्याह– **प्रविष्णुरिति** ।। विष्णुः तवसः देशकालपरिच्छिन्नात् सूर्यादेः तेजसः स्तवीयान् अतिशयिततेजोरूपो भवति । अत एव ह्यस्य स्थविरस्य अनादिकालीनस्य त्वेषमिति नाम । असाधारण्येन हि व्यपदेशाः भवन्तीत्यर्थः ।।

**अस्त्वेवं तथाऽपि 'प्राग् अल्पः सन्निदानीं वृद्धिं गतः' इति, अत्रार्थः किं न स्यादित्यत आह– न त्विति ।। तुशब्दो विशेषणार्थः । विक्रियारूपं वर्धनं प्रवृद्धशब्दप्रवृत्तिनिमित्तं न भवति । भगवति भावविकाराणां प्रतिषिद्धत्वात् । भगवतो विक्रियारूपवृद्ध्यभावेऽपि तद्रूपस्य भवतु इति। तत्राह– यस्येति ।।**

**भावबोधः (र.टि.)–** प्रयोगं श्रुतिद्वयगतपदद्वयमुदाहृत्य दर्शयति – **इद्धाद्भूतमितिवदिति** ।। ननु इद्धादित्यस्य सार्वकालिकदीप्तिविशिष्टादिति भूतमित्यस्य सार्वकालिकसत्ताविशिष्टमिति च न सम्प्रपन्नम् । प्रवृद्ध इति गीतायामिवात्रापि निष्ठामात्रश्रवणादित्याशङ्क्य तत्परिहारकत्वेनोत्तरश्रुतिमवतारयति– **अत्रेति** ।। ननु दीप्तेः सूर्यादिसाधारण्यात् त्वेषमित्येतस्यैव नाम कथमित्यत आह– **असाधारण्येनेति** ।। सार्वकालिकत्वरूपासाधारण्येनेत्यर्थः । **भावविकाराणामिति** ।। जायते, अस्ति, विपरिणमते, विवर्धते, अपक्षीयते, विनश्यतीति षड्भाविकाराणामित्यर्थः ।। ३३ ।।

**भावदीपः (रा.टि.)–** ।। **प्रवृद्ध इतीति** ।। 'लोकक्षयकृत् प्रवृद्धः' इति गीतास्थप्रवृद्धपदेनेत्यर्थः ।। **भूताधिकार इति** ।। तृतीयस्य द्वितीयपादे 'भूते' इति सूत्रमधिकृत्य 'निष्ठा' इति सूत्रेण विहितस्य निष्ठासञ्ज्ञकक्तप्रत्ययस्येत्यर्थः । 'इद्धात्' इति, 'भूतम्' इतिच पदोपेतश्रुतिद्वयोक्तेः प्रकृतोपयोगाय तात्पर्यमाह– **इद्धात् भूतमितिवदित्यर्थ इति** ।। 'ञि इन्धी दीप्तौ' इत्यस्य क्तप्रत्ययान्तस्य पञ्चम्यन्तस्य 'इन्धात्' इति रूपम् । तत्र यथोक्तप्रत्ययान्तस्य 'सदा दीप्तात्' इत्यर्थः । 'भू सत्तायाम्' इत्यस्य क्तप्रत्ययान्तस्य सर्वदा विद्यमानमित्यर्थः । तथेहापि 'सदा प्रवृद्धः' इत्यर्थ इति भावः । अस्यैव त्वेषमिति नाम कुत इत्यत आह– **असाधारण्येनेति** ।। तवसापि तवीयस्त्वेनेत्यर्थः ।। **भावविकाराणामिति** ।। अस्ति, जायते, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षण्णां पदार्थविकाराणां 'निर्विकारोऽक्षरः शुद्धः' इत्यादिना निषिद्धत्वादित्यर्थः ।। ३३ ।।

**भावरत्नकोशः (सु.टि.)–** निष्ठाया भूतार्थत्वस्यौत्सर्गिकत्वाशयेनोक्तम्– **कादाचित्कीति** ।। 'अनादि' इति प्रागभावाप्रतियोगित्वमेव प्रतीयते, न तु सदातनी वृद्धिः इत्यत उक्तम्– **अनादिरिति नित्यत्वस्येति** ।। ध्वंसाप्रतियोगित्वस्यापीत्यर्थः । **भूताधिकार इति** ।। 'भूते' इत्यधिकारसूत्रं 'भूते काले' इत्यधिकृत्य 'गत्यर्थाकर्मक' इति सूत्रे कर्तरि विहितः यः

श्लोकः ३३

क्तप्रत्ययः तेन 'अतीतकालावच्छिन्नदीप्तिकर्तुः' इत्येव प्रतीतेरौचित्यात्, सार्वकालिकत्वं कुतः प्रमाणादित्यर्थः । परिहरति– **प्रयोगदर्शनादिति** ।। प्रथमश्रुतिः 'परिपूर्णत्वे', द्वितीयश्रुतिः 'अनादित्वे' इति विवेकं हृदि कृत्वा तयोर्निदर्शनपरत्वं दर्शयति– **इद्धाद् भूतमितिवदिति** ।। **दीप्तेः** 'इद्धात्' इत्यत्र प्रकृतिभूतधात्वर्थस्य, **सत्तायाः** 'भूतम्' इत्यत्र भूधात्वर्थस्य । **अत एव** अतिशयिततेजोरूपत्वादेव । ननु 'त्विष दीप्तौ' इति धातोर्निष्पन्नः त्वेषशब्दः दीप्तिमन्मात्रसाधारण इति कथं भगवन्नामत्वं स्यात् ? इत्यत आह– **असाधारण्येनेति** ।।

ननु वर्धनं धात्वर्थः, तत्कथं 'न' इति भाष्यते इत्यत आह– **तुशब्द इति** ।। विशिष्टमेव धात्वर्थं दर्शयति– **विक्रियारूपं वर्धनमिति** ।। तत्र हेतुः– **भगवति भावविकाराणामिति** ।। जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति इति प्रसिद्धानां षण्णां पदार्थविकाराणां 'निर्विकारोऽक्षरः शुद्धः' इत्यादिशास्त्रेण अभावावेदनादित्यर्थः । भगवतः मूलरूपस्य तद्रूपस्य तदवतारस्य भवतु विक्रिया । **अस्तीति ज्ञायत इति** ।। विशेषनिषेधस्य शेषाभ्यनुज्ञानपरत्वादिति भावः ।

**भावदीपिका** (श्री.टि.)– ।। **कादाचित्कीति** ।। भूतार्थकक्तप्रत्ययान्तप्रवृद्धपदेन अतीतकालीना वृद्धिः प्रतीयत इत्यर्थः । **धात्वर्थः** वृधुधात्वर्थः । 'वृधु वर्धने' इति धातोरिति ज्ञेयम् । भाष्ये 'परितः सर्वतः पूर्णः' इति देशतो वृद्धिरुक्तेति ज्ञेयम् । अनादित्वेऽप्यन्तवत्त्वं किं न स्यात् ? प्रागभाववत्, इत्यत आह– **अनादिरिति** ।। यद्वा 'न मरिष्यति' इति प्रमाणेऽधिकम् ? अतस्तदनुसारेणाह– **अनादिरिति** ।। शङ्कते– **भूतेति** ।। 'प्रवृद्धः' इत्यत्र प्रशब्देन वृद्धेः सार्वकालिकत्वं लभ्यते, क्तप्रत्ययेन च तद्बाध्यते । अतः कथं तयोः सामानाधिकरण्यम् । नच वाच्यं क्तप्रत्ययस्यापि सार्वकालिकार्थत्वात् प्रशब्दः तस्यैवानुपचरितत्वद्योतक इति । 'भूते' इत्यधिकृत्य क्तप्रत्ययस्योक्तत्वेन सार्वकालिकार्थत्वायोगादिति भावः । उत्तरमाह– **प्रयोगेति** ।। सार्वकालिकार्थेऽपि क्तस्य प्रयोगदर्शनात् प्रशब्दस्तस्यैवानुपचरित्वद्योतक इति भावः ।

श्रुतिद्वयगतपदमुदाहृत्य प्रयोगं दर्शयति– **इद्धाद् भूतमिति** ।। 'ऋतं च सत्यं चाभीद्धात् तपसोऽध्यजायत' इत्यत्र 'इन्धी दीप्तौ' इति धातोः सार्वकालिकदीप्तिविशिष्टात् तपसः भगवत इत्यर्थः । 'एतत्' इति श्रुतौ 'भूतम्' इत्यस्य सार्वकालिकसत्ताविशिष्टमित्यर्थः । तथाच

'इद्धात्' इति 'भूतम्' इति क्तप्रत्ययान्ताभ्यामपि शब्दाभ्यां सार्वकालिकी दीप्तिः सत्ता च प्रतिपादिता, तद्वत् प्रवृद्धशब्देनापीत्यर्थः । 'अतिशायने तरबीयसुनौ' इतीयसुन्प्रत्ययस्य अतिशयार्थत्वादाह– **अतिशयितेति ।। अत** एव अतिशयेन तेजोरूपत्वादेव । 'अनादि-कालीनस्य' इत्युक्त्या सत्तायाः सदातनत्वमुक्तमिति द्रष्टव्यम् । ननु त्वेषशब्दोदितदीप्तेः सर्वसाधारण्यात् कथं भगवत एव 'त्वेषम्' इति नाम इत्यत आह– **असाधारण्येनेति** ।। सार्वकालिकत्वरूपातिशयाख्यासाधारण्येनेत्यर्थः । **विशेषणार्थ इति** ।। वर्धने विशेषणद्योतक इत्यर्थः । तदेव विशेषणं दर्शयति– **विक्रियारूपमिति** ।। कुतः इत्यत आह– **भगवति भावविकाराणामिति** ।। अस्ति, जायते, ह्रसते, वर्धते, क्षीयते, अपक्षीयत इति षडूर्मिसंज्ञ-कानां पदार्थविकाराणामित्यर्थः । **भगवतः** मूलरूपस्य । **तद्रूपस्य** कृष्णस्य ।

**भावप्रकाशः (कृ.टि.)– ।। सदातनीति** ।। अविकारिणीत्यर्थः । भ्रान्तः शङ्कते– **भूताधिकार इति** ।। तेनाकर्मकाद्वर्धतेः गत्यर्थाकर्मकेति क्तस्य विधानात् कथमेतच्चोद्यमिति निरस्तम् । भूत इत्यधिकृत्य निष्ठेति सूत्रेण विहितोऽयं क्त इति भ्रान्तेनैवं शङ्कनात् । ननु क्तस्य सार्वकालिकत्वं कुत इत्याक्षेपे प्रयोगदर्शनादित्युक्तम् । तथा च ऋतं चेत्यादेः पूर्वेणान्वय इत्यत आह– **इद्धादिति ।। दीप्तेरिति** ।। इद्धशब्दे या प्रकृतिः तदर्थस्येत्यर्थः । **सत्ताया इति** ।। भूतशब्दप्रकृत्यर्थस्येत्यर्थः । तथा चेद्धाद्भूतमित्यत्र यथा दीप्त्यादेः सार्वकालिकत्वात् क्तो न भूताधिकारविहितः किन्तु गत्यर्थाकर्मकेति विहितस्तथा प्रकृतेऽपीति भावः । ननु दीप्तिः सूर्यादिसाधारणत्वात् कथमस्यैव त्वेषमिति नामेत्यत आह– **असाधारण्येनेति** ।। दीप्तिः सूर्याद्यपेक्षयाऽतिशयितत्वात् सार्वकालिकत्वाच्चासाधारण्यमिति भावः । **विशेषणार्थ इति** ।। वैलक्षण्यार्थ इत्यर्थः । तदेवाह– **विक्रियेति ।। भावविकाराणामिति** ।। 'षड् भाविकारा इति ह स्माह वार्ष्यायणिः । जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति' इति निरुक्तोक्तानां विक्रियारूपाणां जननादिधात्वर्थानामित्यर्थः । उपादानस्य कारकव्यापारात् कार्यरूपतापत्तिर्जनिः । स्वरूपधारणमस्तित्वम् । धर्मलक्षणावस्थानामन्यथात्वं विपरिणामः । अवयवोपचयो वृद्धिः । अवयवापचयोऽपक्षयः । परिदृश्यमानविशेषरूपापगमेन कार्योपादानरूपेण पर्यवसानं विनाशः । अनेन प्रकारेण जननादीनां भावविकारत्वं ज्ञातव्यम् । भावस्य विकारा भावविकाराः तेषामिति हेत्वर्थगर्भमेतत् । भगवति लोकप्रसिद्धं जननादिकं नास्ति जन्मादीनां भावविकारत्वात् । भगवति च निर्विकारोऽक्षर इत्युक्त्या विक्रियाभावावगमात् ।।

श्लोकः ३३

## भाष्यम्

**'न कर्मणा' इति तु कर्मणाऽपि न किमु स्वयमिति । लोकान् समाहर्तुमिह विशेषेण प्रवृत्तः । भ्रात्रादींश्च ऋते इति अपिशब्दः । प्रत्यनीकत्वं तु परस्परतया । सर्वेऽपि हि न भविष्यन्ति । अक्षोहिण्यादिभेदेन बहुवचनं युक्तम् ।। ३२,३३ ।।**

भावप्रदीपिका (प.टी.)– ननु न कर्मणा वर्धते नो कनीयान् इति कर्मणा न वृद्धिरिति विशेषनिषेधात् स्वेच्छया वृद्धिरित्यत आह– **नेति** । सर्वत्र विष्णोरेव संहारकर्तृत्वादिहेति को विशेषः ? इत्यत आह–**लोकानिति** । अपिशब्दकृत्यमाह– **भ्रात्रादीनिति** । प्रत्यनीकेषु इति कौरवसेनागतानां नाशश्रवणात् कथं पाण्डवसैन्यस्यापि किञ्चिदवशेष उच्यते ? इत्यत आह– **प्रत्यनीकत्वमिति** । कुत एवम् ? इत्यत आह– **सर्वेति** । तर्हि प्रत्यनीकयोरिति स्यादित्यत आह– **अक्षौहिणीति** ।। ३२ ।।

प्रमेयदीपिका (ज.टी.)– ननु 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतौ कर्मनिमित्तवृद्धिप्रतिषेधनात् वृद्धिमात्रमस्तीति ज्ञायते । अन्यथा विशेषणवैयर्ध्यात् । तथा च सत्प्रतिपक्षमुक्तं वाक्यमित्यत आह– **नेति** ।। 'न कर्मणा' इति विशेषनिषेधस्तु वृद्धिलक्षणविक्रियाकारणत्वेन । सम्भावितेन कर्मणाऽपि यदा न वर्धते तदा स्वयं कर्मणा विना न वर्धते इति किमु वक्तव्यमिति वृद्धिलक्षणविक्रियाकारणत्वमात्रनिषेधाय कैमुत्यप्रदर्शनार्थम् इत्यन्यथोपपन्नमित्यर्थः ।।

ननु सर्वत्र भगवानेव लोकानां संहर्ता । तस्मात् 'इह' इति व्यर्थमित्यत आह– **लोकानिति** ।। युगपत् बहून् प्रत्यक्षत एवेति विशेषेण। युधिष्ठिरादीनामवशिष्टत्वात् कथं 'त्वामृते' इत्येवोक्तम्? इत्यत आह– **भ्रात्रादींश्चेति** ।। अपिशब्दः 'द्योतयति'इति शेषः ।।

अस्मत्प्रतिकूलेष्वनीकेष्ववस्थिता योधा न भविष्यन्तीत्युक्ते का पाण्डवादीनां प्राप्तिः; येन 'ऋतेऽपि त्वा' इत्युच्यन्त इत्यत आह– **प्रत्यनीकत्वं त्विति** ।। 'सेनाद्वयस्यापि' इति शेषः । कुत एवं व्याख्यानम्? इत्यत आह– **सर्वेति** ।। सेनाद्वयगता अपीत्यर्थः ।

'प्रत्यनीकेषु' इति बहुवचनं कथम्? इत्यत आह– **अक्षोहिणीति** ।। भेदेन बहुत्वेन ।। ३२,३३ ।।

**भावदीपः (रा.टि.)– ।। उक्तं वाक्यमिति ।।** 'प्रवृद्धः परिपूर्णः' इत्यादि वाक्यमित्यर्थः ।। ३३ ।।

**भावरत्नकोशः (सु.टि.)– ।। उक्तं वाक्यम्** 'यस्य दिव्यं हि' इति वाक्यम् ।। 'स्वयम्' इत्यस्यार्थः– **कर्मणा विनेति ।। अन्यथोपपन्नमिति ।।** अतो नोक्तं वाक्यं सत्प्रतिपक्षमिति भावः । 'विशेषेण' इति भाष्यं विशदयति– **युगपद् बहून् प्रत्यक्षत एवेति विशेषेणेति** ।। 'लोकान् समाहर्तुमिह प्रवृत्तः' इत्युक्ते शङ्कोन्मिषति 'किं त्रिलोकस्थान् सर्वान् जनानपि संहर्तुं प्रवृत्तोऽसि' इति । तस्याः परिहारः 'येऽवस्थिताः प्रत्यनीकेषु योधाः त एव न भविष्यन्ति' इति । सति चैवं 'त्वां विना न भविष्यन्ति' इत्युक्तिः अप्रसक्तप्रतिषेधरूपा स्यात्, इति शङ्के– **अस्मत्प्रतिकूलेष्विति ।। येन** प्राप्तिसत्त्वेन । एकस्मिन् सैन्ये आनुकूल्यस्यैव सिद्धत्वात् प्रातिकूल्यं कथम् ? इत्यत आह– **सेनाद्वयस्यापीति** ।। भाष्यगतहिशब्दस्य हेत्वर्थकत्वमभिसन्धायाह– **कुत इति** ।। एवं 'प्रत्यनीकत्वं तु परस्परतया' इत्येवम् । 'त्रिलोकस्था अपि' इति प्रतीतिनिरासायाह– **सेनाद्वयगता अपीति** ।। यतः सेनाद्वयगता अपि न भविष्यन्ति, अतः प्रत्यनीकत्वम् उक्तविधया व्याख्येयमिति भावः । भेदे बहुवचनस्याननुशासनादाह– **भेदेन बहुत्वेनेति** ।। व्यापकेन व्याप्यलक्षणेति भावः ।।

यतोऽहमेव लोकान् समाहर्तुं प्रवृत्तः, तस्माद् वैरिजये सन्देहानास्कन्दनाद् 'युध्यस्व' इत्युच्यते– **तस्मादिति** ।। उत्तिष्ठ योद्धुं सन्नद्धो भव । शत्रून् इतराजेयान् जित्वा यशो लभस्व प्राप्नुहि । समृद्धं राज्यं भुङ्क्ष्व च । एते च पूर्वमेव मयैव निहताः वियोजितप्राणप्रायाः । निहतप्रायत्वं नाम अपहृतायुष्ट्वेन अत्यासन्नमरणत्वम् । तान् प्रत्यक्षतो हन्तुं प्रवृत्तं मां प्रति त्वं निमित्तमात्रम् । स्वातन्त्र्येण हन्तृत्वाभावाद् इयमुक्तिः । पश्चादपि त्वयि स्थित्वा अहमेव हनिष्यामीति भावः । वामेन हस्तेन शराणां क्षेप्ता सव्यसाची ।। ३३ ।।

**भावदीपिका (श्री.टि.)– ।। विशेषणेति ।।** 'कर्मणा' इति विशेषणेत्यर्थः । 'विशेष-निषेधः शेषविध्यनुज्ञापकः' इति न्यायादिति भावः । **उक्तवाक्यम्** 'नासौ जजान', 'यस्य दिव्यं हि' इति वाक्यद्वयम् । 'स्वयम्' इत्यनूद्य 'कर्मणा विना' इति व्याख्यानम् । 'विशेषेण'

इत्यस्यार्थमाह– **युगपदिति** ।। इतरकाले क्रमेणाल्पान् अप्रत्यक्षत एव संहरति, इह तु अस्मिन् काले तु नैवम् इत्याशयः । **अनीकेषु** कौरवसेनासु । इत्युक्ते पाण्डवसेनागतेन भगवतेत्यर्थः । **प्राप्तिः** 'मरणस्य' इति शेषः । **एवमिति** ।। प्रत्यनीकत्वं तु परस्परतयेत्यर्थः । **सेनाद्वयेति** ।। कुरुपाण्डवसेनेत्यर्थः । तथा च 'भ्रात्रादीन् ऋते' इत्यत्र पाण्डवसेनासु भ्रात्रादीन् ऋते केऽपि न भविष्यन्ति । कौरवसेनासु तु कृपाश्वत्थामकृतवर्माख्यान् त्रीन् ऋते केऽपि न भविष्यन्तीति द्रष्टव्यम् । **बहुत्वेनेति** ।। कौरवाणानेकादश, पाण्डवानां सप्त इत्यष्टादशत्वेनेत्यर्थः ।।३२,३३।।

भावप्रकाशः (कृ.टि.)– ननु तथाऽपि बहुवचनमयुक्तम् । तद्वाच्याभावादित्यत आह– **बहुत्वेनेति** ।। पतिः सेनामुखं गुल्मः गणः वाहिनी चमूः अनीकिनी अक्षौहिणीत्येवमनीकप्रभेदानां बहुत्वेनेत्यर्थः । एतल्लक्षणं तु । नैकेभैकरथाश्वापत्तिः पञ्च पदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् । सेना मुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्यक्षौहिणीत्यमरकोशे द्रष्टव्यम् ।। ३३ ।।

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेताऽसि रणे सपत्नान् ।।**

**सञ्जय उवाच–**

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ।।३५।।**

## भाष्यम्

**'योऽस्य शिरश्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यति' इति तत्पितुर्वराद् जयद्रथोऽपि विशेषेणोक्तः । 'सवरा वासवी शक्तिः' इति कर्णः ।।**

भावप्रदीपिका (प.टी.)– ननु द्रोणभीष्मयोर्विरिञ्चावेशिनोः विशेषोक्तौ जयद्रथकर्णयोः किमर्था सेत्यत आह– **योऽस्येति** ।।

प्रमेयदीपिका (ज.टी.)– 'यद्वा जयेम यदि वा नो जयेयुः' इत्यस्य सन्देहेऽपि प्रवृत्तिर्युक्ता । पक्षद्वयेऽपि फललाभादिति 'हतो वा' इत्युत्तरमुक्तम् । इदानीं तव

**पराजयशङ्काऽपि नास्तीत्युच्यते– द्रोणं चेति ।। तत्र द्रोणस्य धनुर्विद्याचार्यत्वेन, भीष्मस्य स्वच्छन्दमृत्युत्वेन चाशङ्काविषयत्वाद्युक्तं योधवीरसमुदायात् पृथक्कृत्य स्वशब्देन ग्रहणम् । जयद्रथस्य कर्णस्य च कुतः? इत्यत आह– योऽस्येति ।। अस्य जयद्रथस्य तच्छिरः तस्य पातयितुः शिरः भेत्स्यति भेत्स्यते । तत्पितुः जयद्रथपितुः । शक्तिः 'अस्ति कर्णस्य' इति शेषः । कर्णः 'विशेषेणोक्तः' इति वर्तते ।। ३४,३५ ।।**

**भावरत्नकोशः (सु.टि.)– ।। 'हतो वा' इति** श्लोकेन उत्तरम् इति सम्बन्धः । तत्र श्लोके **आशङ्काविषयत्वात्** वधानर्हत्वात् ज्येष्ठत्वशङ्काया विषयत्वात्, **स्वशब्देन** स्वासाधारण-द्रोणादिशब्देन । **कुतः** 'स्वशब्देन ग्रहणम्' इति वर्तते । ननु भाष्ये 'भेत्स्यति' इति कथं परस्मैपदम् ? यावता प्रकृते द्वैधीभावलक्षणां भिदिक्रियां प्रति शिरसः कर्मत्वम्, 'कर्मस्था च भिदेः क्रिया' इति पाणिनीयवचनात्, शिरसश्चात्र कर्तृत्वं विवक्षणीयम् । **जयद्रथपितुरिति** ।। जयद्रथपित्रा 'स्वपुत्रशिरः पातयितुः शिरः स्वयमेव द्वैधीभावं प्राप्स्यति' इति वरप्रदानात् । तथा च भारते–

'धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ।
तस्यापि शतधा मूर्धा पतिष्यति न संशयः ।।'

इति । एवं च भिदिक्रियाकर्मणः 'कर्मवत् कर्मणा तुल्यक्रियः' इति कर्तृत्वे 'भावकर्मणोः' इत्यात्मनेपदमेव युक्तम्, 'मोक्ष्यते वत्सः स्वयमेव' इतिवत् ? इत्यत आह– **भेत्स्यतीति भेत्स्यत इति** ।। भाष्ये परस्मैपदम्, छन्दस्तुल्यत्वाद् युक्तमिति भावः । यद्यपि भिदेः कर्मस्था क्रिया द्विधा भवनम्, सैव इदीनां कर्तृस्था न तुल्या । तथापि 'कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्यैव क्रियातुल्यताव्यवहारः' इति वैयाकरणैरभ्युपगतमिति द्रष्टव्यम् । 'शक्तिः' इत्यनूद्य तत्राध्याहार्यमाह– **अस्ति कर्णस्येति** ।। विशेषेण स्वासाधारणशब्देन ।। ३४ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** 'यद्वा जयेम यदि वा नो जयेयुः' इत्यस्य सन्देहेऽपि प्रवृत्तिर्युक्ता । पक्षद्वयेऽपि फलभावादिति 'हतो वा' इत्युत्तरमुक्तम् । इदानीं तव पराजयशङ्काऽपि नास्तीत्युच्यते– **द्रोणं चेति** ।। तत्र द्रोणस्य धनुर्विद्याचार्यत्वेन, भीष्मस्य स्वच्छन्दमृत्युत्वेन अवध्यत्वशङ्काविषयत्वाद् युक्तं योधवीरसमुदायात् पृथक्कृत्य स्वशब्देन

श्लोकः ३४,३५

ग्रहणम् । जयद्रथस्य **कर्णस्य** च कुतस्तत् ? इति शङ्का 'योऽस्य जयद्रथस्य शिरश्छिन्नं भूमौ पातयति तस्य पातयितुः शिरो भिन्नं भविष्यति' इति जयद्रथपितुर्वराज्जयद्रथोऽपि विशेषेणोक्तः, 'सवरा वासवी शक्तिरस्ति कर्णस्य' इति कर्णोऽपि तथोक्त इति भाष्यादौ परिहृता । अर्जुने स्थित्वा स्वस्यैव हन्तृत्वात् 'मया हतेषु त्वमेव हन्ता' इति व्यवहारविषयो भवेति भगवतोच्यते– **मया हताननिति** ।। हतान् हतप्रायान् त्वं जहि छिन्धि मा व्यथिष्ठाः भयं मा कार्षीः । जेतृशब्दस्तृन्नन्त इति 'सपत्नान्' इति द्वितीया ।।

ततो यद् वृत्तं तद् धृतराष्ट्रं प्रति सञ्जय आहेत्युच्यते– **सञ्जय उवाच– एतच्छ्रुत्वेति** ।। एतत् पूर्वश्लोकत्रयात्मकं केशवस्य ब्रह्मरुद्रादिनियामकस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः सगद्गदं भयाविष्टस्य दुःखाभिघातात्, स्नेहाविष्टस्य च हर्षोत्कर्षाद् अश्रुपूर्णनेत्रत्वे सति यः श्लेष्मणा कण्ठावरोधः, तेन वाचाम् अपाटवं मन्दत्वं यत्र शब्दे स गद्गदः, तेन सह वर्तत इति 'सगद्गदम्' इति क्रियाविशेषणम् । भीतभीतः भीतादपि भीतः पुनःपुनः भयाविष्टचेताः प्रणम्य प्रह्वो भूत्वा आह ।। ३४,३५ ।।

**भावदीपिका (श्री.टि.)– ।। पक्षद्वयेऽपीति ।। हतो वेतीति ।।** 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इत्यनेनेत्यर्थः । **आशङ्काविषयत्वादिति** ।। एतादृशानां जयो मम कथं स्यात् ? इत्यर्जुनशङ्काविषयत्वादित्यर्थः । एतद्धातोरात्मनेपदित्वादाह– **भेत्स्यत इति** ।। ३४,३५ ।।

**भावप्रकाशः (कृ.टि.)– ।। इत्यस्य** हतो वेत्यत्तुरमिति सम्बन्धः । ननु भिदिर्विदारण इत्युक्तत्वात् भिदेर्द्विधाभवनानुकूलव्यापारवाचित्वे विप्रकृतेन तत्परत्वम् । तच्छिरः स्वयमेव भेत्स्यत इति जयद्रथपित्रा वरप्रदानेन द्विधा भवनानुकूलव्यापाराश्रयकर्त्रन्तराभावात् किन्तु द्विधाभवनमात्रपरत्वम् । द्विधाभवने च शिरसः कर्तृत्वमेव । स्वतन्त्रः कर्तेति लक्षणात् । शिरसः च कर्मवद्भाव आवश्यकः । कर्मवत्कर्मणा तुल्यक्रिय इति तदुक्तेः । एवं च कर्मणि कारकवत्कर्मकर्तरि लकारेऽपि भावकर्मणोरित्यात्मनेपदे सति मोक्ष्यते वत्सः स्वयमेवेतिवच्छिरो भेत्स्यत इति स्यात् । भेत्स्यतीति परस्मैपदं तु कथमित्यत आह– **भेत्स्यत इति** ।। ननु कर्मवत्सूत्रे कर्मस्थया क्रियया तुल्यक्रियस्य कर्तुः कर्मवत्त्वमुक्तम् । प्रकृते द्विधाभवनस्यैकस्यैव कर्तृकर्मोभयगतत्वात् कथं तुल्यत्वम् । उच्यते । कर्मस्थत्वकर्तृस्थत्वरूपोपाधिभेदेन द्विधाभवनस्याप्यौपाधिकभेदसम्भवात् तुल्यत्वोपपत्तेरिति ।। ३४ ।।

**अर्जुन उवाच–**

**स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः**
**॥ ३६ ॥**

## भाष्यम्

**यदेतद् वक्ष्यमाणं तत् स्थाने युक्तमेवेत्यर्थः । अग्नीषोमाद्यन्तर्यामितया जगद्धर्षणाद् हृषीकेशः । केशत्वं त्वंशूनां तन्नियतत्वादेः । प्रमाणं तु 'शशिसूर्यनेत्रम्' इत्यत्रोक्तम् । हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेशः । तेषां विशेषतः ईशत्वं च 'यः प्राणे तिष्ठन्'इत्यादौ सिद्धम् ।**

भावप्रदीपिका (प.टी.)– स्थाने इति पदार्थान्वयौ दर्शयति– **यदेतदिति** । हृषीकेशपदार्थमाह– **अग्नीति** । अग्नीषोमसूर्यान्तर्यामितया तदंशुभिः स्वकेशैर्जगद्धर्षणादेरित्यनेन हर्षाः केशा यस्येति विग्रहः सूचितः । सूर्याद्यंशूनां भगवत्केशत्वं कथम् ? इत्यत आह– **केशत्वमिति** । तन्नियतत्वादिना तदभेदोक्तिरित्येतत्कुत इत्यत आह– **प्रमाणं त्विति** । हृषीकेशपदस्यार्थान्तरमाह– **हृषीकाणामिति** । सर्वेशस्येन्द्रयेशत्वं किं विशिष्याभिधीयते ? इत्यत आह– **तेषामिति** ।

प्रमेयदीपिका (ज.टी.)– 'स्थाने' इत्येतत् 'युक्तम्' इत्यर्थेऽव्ययं चास्ति । अस्ति च सप्तम्यन्तं पदम् । तत् किमत्राभिप्रेतम्? कथं चास्यान्वयः? इत्यत आह– **यदिति ॥ स्थाने** विषये एवेति वा बहुमानस्थाने त्वयीति वा योजनायां साध्याहारत्वमिति भावः । हृषीकेशशब्दस्य प्रकृतोपयुक्तमपूर्वमर्थमाह– **अग्नीति** ॥ अत्राऽग्येनादिशब्देन सूर्यो गृह्यते । द्वितीयेन बोधनस्थापने । 'अग्न्याद्यंशुभिः स्वकेशैः' इति शेषः ॥ **जगद्धर्षणादेरिति** ॥ बोधनस्थापनाभ्यां जगद्धर्षणादित्यर्थः । सूर्याद्यंशूनां कथं भगवत्केशत्वम्? इत्यत आह– **केशत्वं त्विति** ॥ तन्नियतत्वतज्जन्यत्वादिना तादात्म्योक्तिरित्यत्र किं प्रमाणमित्यत आह– **प्रमाणं त्विति** ॥ इत्यत्र एतद्व्याख्यानावसरे ॥

श्लोकः ३६

**अनेन वक्ष्यमाणं वाक्यं विवृतं भवति । तथा चाग्न्यादिषु स्थित्वा स्वकेशनियतैस्तदंशुभिः जगतः बोधनस्थापनाभ्यां हर्षणादियुक्तं भवति । हृष्यतेः कीप्रत्ययः । हृष्यो हर्षहेतवः केशाः अस्येति हृषीकेशः । नानेन प्रसिद्धोऽर्थस्त्याज्य इति भावेन तमप्याह– हृषीकाणामिति ।। ननु जगदीशस्य विशेषत इन्द्रियेशत्वं कथमित्यत आह– तेषामिति ।। पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरकत्वेनेति भावः ।।**

**भावबोधः (र.टि.)–।। प्रकृतोपयुक्तमिति ।।** जगत्प्रहृष्यतीत्यत्र हेतुतयोपयुक्तमित्यर्थः । सूर्याचन्द्रमसाविति प्रमाणानुसारेणाद्यादिशब्दार्थमाह– **अत्राद्येनेति ।।** बोधयन् स्थापयंश्चेति प्रमाणानुसारेणाह– **द्वितीयेनेति ।।** 'केशैर्मे अंशुसंज्ञितैः' इति प्रमाणानुरोधेनापेक्षितमध्याहरति– **अग्न्याद्यंशुभिरिति ।।** 'बोधनात्स्थापनाच्चैव जगतो हर्षसम्भवात्' इति प्रमाणानुसारेण जगद्धर्षणादित्येतद्व्याचष्टे– **बोधनस्थापनाभ्यामिति ।। एतद्व्याख्यानवसर इति ।।** 'तदङ्गजाः सर्वसुरादयोऽपि' इत्यादिरूपप्रमाणमित्यर्थः । **अनेनेति ।।** तन्नियतत्वादेरित्यनेन वक्ष्यमाण केशैर्मे अंशुसंज्ञितैरित्येतद्वाक्यं मत्केशनियतत्वजन्यत्वाश्रितत्वादिना निमित्तेन मे केशैरंशुसंज्ञितैः किरणैरिति विवृतं भवतीत्यर्थः । अग्नीषोमादिवाक्यद्वयलब्धमर्थमाह– **तथा-चेत्यादिना ।। कीप्रत्यय इति ।।** कित्वाल्लघूपधगुणाभाव इति भावः ।।

**भावदीपः (रा.टि.)– ।।** स्थान इत्यनुवादः, विषय एवेति व्याख्या । हर्षानुरागविषयभूत एव त्वयीति योजनायामित्यर्थः ।। **प्रकृतोपयुक्तमिति ।।** 'जगत् प्रहृष्यति' इति गीतोक्तार्थे 'हृषीकेश' इति हेतुगर्भतया पूर्वमर्थमित्यर्थः । प्रसिद्धेन्द्रियेशत्वादर्थादन्यत्वात् 'अपूर्वम्' इत्युक्तम् ।। वक्ष्यमाणप्रमाणानुरोधेन क्रमादादिपदद्वयार्थमाह– **अत्राद्येनेति ।। अनेनेति ।।** नियतत्वादिकथनेनेत्यर्थः । 'केशैर्मे अंशुसञ्ज्ञितैः' इति वाक्यं 'केशनियतैरंशुभिः' इत्यादिरूपेण विवृतमित्यर्थः ।। **कीप्रत्यय इति ।।** कित्त्वात् 'पुगन्तस्य लघूपधस्य च' इति गुणाभावे हृषीकेश इति रूपमिति भावः ।। **नानेनेति ।।** अपूर्वार्थकथनेनेत्यर्थः ।। ज्ञानेन्द्रियकर्मेन्द्रियाभिप्रायेणाह– **ज्ञानक्रियेति ।।**

**वाक्यार्थप्रदीपः (पां.टि.)– ।। कीप्रत्यय इति ।।** कित्त्वाल्लघूपधगुणाभाव इति भावः ।

**भावरत्नकोशः (सु.टि.)–** 'युक्तमित्यर्थेऽव्ययम्' इति वदन् 'युक्ते द्वे साम्प्रतं स्थाने' इत्यभिधानम् अभिसन्धत्ते । 'स्थाने युक्तमेवेत्यर्थः' इति वदन् भाष्यकारः परकीययोजनायां

दूषणं सूचयतीति भावेन परभाष्यमनुवदंस्तत्र दूषणं दर्शयति– **स्थाने विषय एवेति** ।। युक्तः विषयो भगवानित्यर्थः । तथा च शङ्करः 'विषयविशेषणं स्थान इति युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्च' इति । **साध्याहारत्वमिति** ।। आद्ये पक्षे 'विषयः' इत्यस्य, द्वितीये 'बहुमान' इत्यस्य 'त्वयि' इत्यस्य चाध्याहार्यत्वात् परव्याख्यानेऽध्याहार एव दोष इत्यर्थः । **प्रकृतोपयुक्तमिति** ।। 'जगत्प्रहृष्यति' इत्येतदुपपादकमित्यर्थः । **अपूर्वमिति** ।। यद्यपि 'हर्षात् सुखात् सुखैश्वर्यात् हृषीकेशत्वमश्नुते' इति सभापर्वणि हृषीकेशत्वं प्रसिद्धम् । तथाप्यग्न्याद्यंशुनियामकैः स्वकेशैः जगद्धर्षणमप्रसिद्धमिति एवमुक्तम् ।

'सूर्याचन्द्रमसौ' इति वक्ष्यमाणप्रमाणे सूर्यग्रहणादाह– **सूर्यो गृह्यत इति** ।। बोधनस्थापने 'गृह्येते' इति योज्यम् । ननु 'हृष्यः केशा अस्य' इति ह्यत्राभिप्रेतम् । नैतद्युक्तम् । केशशब्दस्य भाष्ये अश्रवणात्, इत्यतो भाष्यमनुवदन् शेषमाह– **अग्न्याद्यंशुभिः स्वकेशैरिति** ।। **अग्न्याद्यंशुभिः** अग्नीषोमसूर्यांशुभिः । 'बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात्' इत्युक्त्यनुसारेण भाष्यं योजयति– **बोधनस्थापनाभ्यां जगद्धर्षणादिति** ।। भाष्यादिपदार्थः तज्जन्यत्वम्, टीकादिपदार्थः तदाश्रितत्वम् । **व्याख्यानावसरे** 'तदङ्गजाः सर्वसुरादयोऽपि तस्मात् तदङ्गेत्यृषिभिः स्तुतास्ते' इति तज्जन्यत्वादिना तादात्म्योक्तिः इत्यत्र **प्रमाणम्** ऋग्वेदखिलवचनरूपम् उक्तमित्यर्थः । **अनेन** 'तन्नियतत्वादेः' इति भाषणेन, **वक्ष्यमाणं** 'केशैर्मे अंशुसञ्ज्ञितैः' इति वाक्यं 'केशनियतैरंशुभिः' इति व्याख्यातं भवतीत्यर्थः । 'अग्न्यादि' इत्यादिभाष्यस्य 'केशत्वं त्वंशूनाम्' इति भाष्यस्य च, निर्गलितमर्थं दर्शयति– **तथा चेति** ।। **तदंशुभिः** अग्नीषोमसूर्यकिरणैः **हर्षणात्** हर्षोत्पादनात् । हृष्यतेः 'हृष तुष्टौ' इत्यस्माद् 'अन्तर्णीतण्यर्थात्' इति शेषः । **कीप्रत्यय इति** ।। यद्यप्युणादौ 'यापोः कित् द्वे च' इति यातेः पातेश्च विधीयमान ईप्रत्ययः किच्च भवतीति, ताभ्यामेव कीप्रत्ययो विहितः । तथापि बाहुलकाद् हृष्यतेरपि भवति । कित्त्वाच्च लघूपधगुणाभावे वातप्रमीशब्द इव हृषीशब्दो ज्ञातव्य इति भावः । अनेन अपूर्वार्थकथनेन **तमपि** प्रसिद्धमर्थमपि । तथा च हरिवंशेषु–

'हृषीकाणीन्द्रियाण्याहुः तेषामीशो यतो भवान् ।
हृषीकेशस्ततो विष्णो ख्यातो वेदेषु पठ्यते ।।' इति ।

'अन्तरो यमयति' इत्यनेन सिद्धं विशेषत ईश्वरत्वमुपपादयति– **पुरुषार्थेति** ।। ज्ञानेन्द्रिय

श्लोकः ३६

कर्मेन्द्रियाभिप्रायेणेयमुक्तिः । श्रुतौ प्राणशब्दो प्राणाभिमानिदेवतावचन इति नवमटीकातोऽवसेयमिति सङ्गतमेवैतच्छ्रुत्युदाहरणम् । **'इत्यादौ'** इत्यादिशब्देन 'यो वाचि तिष्ठन्, यश्चक्षुषि तिष्ठन्' इत्यादिवाक्यपरिग्रहः ।

**भावदीपिका (श्री.टि.)– ।। सप्तम्यन्तं पदम्** भूम्यादिस्थानवाचीत्यर्थः । **विषय एवेति** ।। तथा च 'तव प्रकीर्त्या सामर्थ्येन जगत् स्थाने स्वविषय एव प्रहृष्यति, अनुरज्यते, न त्वन्यविषये । यद्वा जगत् स्थाने शब्दादिविषय एव प्रहृष्यति, तत्रैवानुरज्यते' इति गीतार्थो द्रष्टव्यः । **बहुमानेति** ।। तथा च 'तव प्रकीर्त्या तव कीर्तनेन जगत्प्रहृष्यति, तथा बहुमानस्थाने त्वयि अनुरज्यते च' इति गीतार्थो द्रष्टव्यः । **साध्याहारत्वमिति** ।। 'विषय एव' इति एवशब्दस्य, बहुमानशब्दस्य, 'त्वयि' इतिशब्दस्य चाध्याहारप्रसङ्गादित्यर्थः । 'सूर्याचन्द्रमसौ' इति प्रमाणानुसारेणाह– **अत्राद्येनेति** ।। 'बोधयन् स्थापयन्' इति प्रमाणानुसारेणाह– **द्वितीयेनेति** ।।

'बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात्' इति प्रमाणानुसारेणाह– **बोधनस्थापनाभ्यामिति** ।। 'सूर्याद्यंशुभिः स्वकेशैः' इति शेषस्य पूरितत्वेन तदुपरि शङ्कते– **सूर्याद्यंशूनामिति** ।। 'गीतायामुक्तम्' इत्यन्यथाप्रतीतेः 'इत्यत्र' इत्यस्यार्थमाह– **एतद्व्याख्यानेति** ।। 'तदङ्गजाः सर्वसुरादयोऽपि' इति प्रमाणं तत्रोक्तमस्तीति भावः । **अनेनेति** ।। 'तन्नियतत्वादेः' इत्यनेन **वक्ष्यमाणं** 'केशैर्मे अंशुसंज्ञितैः' इत्येतद्वाक्यं मत्केशनियतत्वतज्जन्यत्वाश्रितत्वादिना निमित्तेन **अंशुसंज्ञितैः** किरणसंज्ञितैर्मे केशैरिति विवृतं भवतीत्यर्थः । 'अग्नीषोमादि' इति वाक्यद्वयलब्धमाह– **तथा चेत्यादिना** ।। 'अग्नीषोमकृतैः' इत्यत्र दीर्घषत्वयोः प्राप्तिः कथम् ? इति चेदुच्यते 'अग्नेः स्तुत्स्तोमसोमाः' अग्निशब्दात्परेषां स्तुत् ,स्तोम, सोमानां सस्य षत्वं स्यात् । अग्निस्तुत् 'स्तु' इत्यत्रत्यसस्य षत्वे तकारस्य षत्वनिमित्तकष्टुत्वे 'अग्निष्टुत्' इति भवति । अग्निष्टोमः । अत्रापि पूर्ववद् रूपम् । अग्नीषोमौ । नन्वग्निशब्दात् परसोमशब्दे स्थितस्य सस्य षत्वे, 'अग्निषोमौ' इति स्यात्, दीर्घः कथम् ? इति चेदुच्यते अस्मिन्नेव सूत्रे वार्तिकम् 'अग्नेर्दीर्घात् सोमस्येष्यते' इति । अग्निशब्दात्परस्य सोमस्य तत्रत्यसकारस्य षत्वमिष्यत इति यत् तत् दीर्घान्ताग्निशब्दात्परस्यैव, न तु ह्रस्वान्ताग्निशब्दादिति वार्तिकार्थः । तथा च 'अग्नीषोमौ' इति युक्तमिति ध्येयम् । **कीप्रत्यय इति** ।। 'हृष्' अस्मात् कीप्रत्यये, ककारलोपे, 'हृषी' इति रूपम् । कित्त्वाद्गुणाभावो द्रष्टव्यः । अन्यथा 'हर्षी' इति स्यात् ।

'हृषी हृष्यौ हृष्य' इति हृषीशब्दस्य बहुवचनम्– **हृष्य इति** ।। **कथमिति** ।। केन निमित्तेनोच्यत इत्यर्थः । तत्र हेतुः– **जगदीशस्येति** ।। **ज्ञानक्रियाशक्तीति** ।। ज्ञानेन्द्रियाणां ज्ञानशक्तिप्रेरकत्वेन, कर्मेन्द्रियाणां कर्मशक्तिप्रेरकत्वेनेत्यर्थः । श्रुतौ प्राणशब्दो घ्राणेन्द्रियवाचीति द्रष्टव्यम् ।

**भावप्रकाशः (कृ.टि.)**– ।।**अव्ययं चास्तीति** ।। अव्ययवर्गे युक्ते द्वे साम्प्रतं स्थान इत्यमरोक्तेरिति भावः । **विषय एवेतीति** ।। स्थान इति विषयविशेषणम् । ततश्च तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन जगत्प्रहृष्यति अनुरज्यते चेति यत् तत्स्थाने विषय एव युक्ते विषय एवेत्येकोऽर्थः । युक्तेः हर्षादिर्विषयो भवान् यत ईश्वरः सर्वभूतसुहृच्चेति योजनाया-मित्यर्थः । **साध्याहारत्वमिति** ।। आद्यपक्षे विषय इति द्वितीये त्वयीत्यध्याहारापात इत्यर्थः । **प्रकृतोपयुक्तमिति** ।। जगत्प्रहृष्यतीत्येतदुपपादकमित्यर्थः । सूर्याचन्द्रमसाविति वाक्यार्थानु-सारेणाह– **अत्राद्येनेति** ।। बोधयन् स्थापयंश्चेवेत्येतदनुरोधेनाह– **द्वितीयेनेति** ।। केशैर्मे अंशुसञ्ज्ञितैरित्येतदनुसृत्याह– **अग्न्याद्यंशुभिरिति** ।। बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् इत्येतदाश्रित्याह– **बोधनस्थापनाभ्यामिति** ।। यद्वा ननु हृष्यः केशा अस्येत्यभिप्रेतम् । नचानेन तल्लाभः केशानामेवानुक्तेरित्यत आह– **स्वकेशैरिति शेष इति** ।। ननु स्वकेशानां हर्षकत्वमनुपलम्भबाधितमित्यत उक्तम्– **अग्न्याद्यंशुभिरिति** ।। ननु तथाऽपि प्रकृतनिर्वचनोप-युक्ततया हर्षणमात्रे वक्तव्ये आदिपदं व्यर्थमित्यतो हर्षणनिमित्तबोधकत्वात् सार्थक्यमिति भावेनाह– **बोधनस्थापनाभ्यामिति** ।।

**तज्जन्यत्वादिनेति** ।। आदिपदेन तदाश्रितत्वसङ्ग्रहः । **एतद्व्याख्यानावसर इति** ।। तदङ्गजाः सर्वसुरादयोऽपीत्यादिनेति शेषः । **अनेनेति** ।। तन्नियतत्वादेरित्यनेनेत्यर्थः । **वक्ष्यमाणमिति** ।। केशैर्मे अंशुसञ्ज्ञितैरिति वाक्यमित्यर्थः । **हृष्यतेरिति** ।। अन्तर्भावित-ण्यर्थादिति शेषः । अन्तर्णीतण्यर्थाद्धृषतुष्टावित्यस्माद्धृष्यन्तीत्यर्थे कीप्रत्यये कित्त्वाल्लघूपध-गुणाभावे हृषीशब्दो वातप्रमीशब्दवत् द्रष्टव्य इति भावः ।।

## भाष्यम्

**'न मे हृषीकाणि पतन्त्यसत्पथे' इत्यादिप्रयोगाच्च । इतरोऽर्थो मोक्षधर्मे सिद्धः ।**

श्लोकः ३६

**'सूर्याचन्द्रमसौ शश्वत् केशैर्मे अंशुसञ्ज्ञितैः ।**
**बोधयन् स्थापयंश्चैव जगदुत्पद्यते पृथक् ।।**
**बोधनात् स्थापनाच्चैव जगतो हर्षसम्भवात् ।**
**अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।।**
**हृषीकेशोऽहमीशानो वरदो लोकभावनः ।।' इति च ।। ३६ ।।**

भावप्रदीपिका (प.टी.)– हृषीकशब्दस्येन्द्रियवाचित्वे प्रयोगं दर्शयति– **नेति ।** प्रथमार्थे प्रमाणमाह– **इतर इति ।** सूर्यश्चन्द्रमा अग्निश्च । सूर्यो जगद्बोधयन्नुत्पद्यते इत्यादिपृथगन्वयः । अग्नीषोमसूर्यांशुगतमहेशकृतैरेभिः कर्मभिर्बोधनस्थापनादिभिर्जगतो हर्षसम्भवद् हृषीकेश इत्यर्थः ।। ३६ ।।

**प्रमेयदीपिका (ज.टी.)–** हृषीकशब्दस्येन्द्रियवाचित्वं कुतः? इत्यत आह– **नेति ।।** पूर्वेण समुचितस्यास्य व्याख्यानसमर्थनहेतुत्वात् चशब्दः । आद्येऽर्थे प्रमाणमाह– **इतरोऽर्थ इति ।।** अग्निश्च जगत् बोधयन्तो स्थापयन्तश्च पृथक् स्वावसरे उत्पद्यन्ते उदयं गच्छन्ति । सूर्यकृतैश्च । अत्रापि पूर्ववद् बोधनादेर्हेतुहेतुमद्भावो ज्ञातव्यः । ईशानत्वा-दावप्युक्तो हेतुः ।। ३६ ।।

**भावबोधः (र.टि.)–** अग्नीषोमकृतैरिति वक्ष्यमाणानुरोधादाह– **अग्निश्चेति ।।** अत एवैतदनुरोधात्सूर्यकृतैश्चेति तत्रापि वक्ष्यति । **अत्रापीति ।।** यद्यपि कर्मभिरिति समप्रधानभावेन बोधनस्थापनहर्षणान्युक्तानि । तथाऽपि बुद्ध्या विवेकेन बोधनस्थापनयोर्हर्षणं प्रति हेतुत्वं द्रष्टव्यमित्यर्थः । **ईशानत्वादावपीति ।।** आदिपदेन वरदत्वलोकभावनत्वयोर्ग्रहणम् । जगद्धर्षणहेतुबोधनस्थापनकर्तृसूर्यादिनियामकत्वरूप इत्यर्थः ।

**भावदीपः (रा.टि.)–** ।। **समर्थनहेतुत्वाच्चशब्द इति** ।। अनेन हेतुना द्वितीय-व्याख्याने सिद्धे सत्येव पूर्वेण अपूर्वार्थकथनेनास्य समुच्चयः सिद्धो नान्यथेति तदभिप्रायोऽयं चशब्द इत्यर्थः ।। 'सूर्याचन्द्रमसौ' इत्यनन्तरं शेषमाह– **अग्निश्चेति** ।। एकवचनं बहुवचनार्थ इत्युपेत्याऽह– **बोधयन्त इत्यादि** ।। 'अग्नीषोमकृतैः' इत्यनन्तरं शेषमाह– **सूर्यकृतैश्चेति ।। पूर्ववदिति** ।। 'कर्मभिः' इति सामान्येनाक्तावपि पूर्वबोधनस्थापनयोः हर्षणहेतुत्वं द्रष्टव्यम् इत्यर्थः ।। **ईशानत्वादावपीति** ।। 'ईशानो वरदो लोकभावनः' इत्युक्तेशानत्ववरदत्वलोक-भावनत्वेशसूर्यादिषु स्थित्वा जगद्धर्षणहेतुबोधनस्थापनकरणरूपोक्तो हेतुरित्यर्थः ।। ३६ ।।

**भावरत्नकोशः (सु.टि.)– ।। हृषीकाणि** इन्द्रियाणि **असत्पथे** अधर्ममार्गे न पतन्ति 'न भारती मेऽङ्ग मृषोपलभ्यते' इति भागवते ब्रह्मणो वचनम् । भाष्ये 'इत्यादिप्रयोगाच्च' इत्यत्रादिशब्देन 'हृषीकं विषयीन्द्रियम्' इति प्रसिद्धाभिधानग्रहः । **पूर्वेणेति ।।** 'इन्द्रियाणा-मीशत्वात्' इति हेतुना समुच्चितस्य अस्य भागवतप्रयोगस्य 'इन्द्रियाणामीशत्वाच्च हृषीकेशः' इति द्वितीयव्याख्यानसमर्थनं प्रति हेतुत्वात् तदभिप्रायेणायं चशब्दो भाष्य इत्यर्थः ।

'अग्नीषोमकृतैः' इत्युपरिश्रवणात् 'सूर्याचन्द्रमसौ' इत्यत्राग्निरपि ग्राह्य इत्याह– **अग्निश्चेति ।।** अनेन 'बोधयन्' इत्याद्येकवचनं भाष्ये युक्तमिति विभावितं भवति । एवं सति 'सूर्याचन्द्रमसौ' इति द्विवचनस्य नान्वयः इत्याशङ्क्य 'बोधयन्' इत्यादेस्तात्पर्यमाह– **जगद्बोधयन्त इति ।।** 'सूर्याचन्द्रमसावग्निश्च इति एते त्रयो जगद् बोधयन्त स्थापयन्तश्च' इति योजना द्रष्टव्येति भावः । **स्वावसरे** प्रतिस्वं प्रजादानसमये । 'उत्पद्यते' इत्यस्य तात्पर्यम्– **उत्पद्यन्त इति ।।** प्रकृतोपयोगायाह– **उदयं गच्छन्तीति ।।** 'सूर्याचन्द्रमसौ' इत्युपक्रमाद् 'अग्नीषोमकृतैः' इत्यत्र सूर्योऽपि संयोज्य इत्याह– **सूर्येति ।।** ननु 'अग्नीषोमकृतैः कर्मभिः' इति बोधनस्थापनहर्षणानां समप्राधान्येन 'उदयं गच्छन्ति' इति साध्ये हेतुभावः प्रतीयते । स चायुक्तः । बोधनस्थापनाभ्यां जगद्धर्षणस्य प्रस्तुतत्वात्, इत्यतोऽत्रापि जगद्बोधनस्थापनयोर्हर्षणं प्रति हेतुत्वम्, हर्षणं तु हेतुमदिति बुद्ध्या विवेकेन कार्यकारणभावो ज्ञातव्य इत्यर्थः । **ईशानत्वादौ** ईशानत्वे वरदत्वे लोकभावनत्वे च जगद्बोधनस्थापनहेतुकहर्षापादकत्वरूपो हेतुरित्यर्थः ।। ३६ ।।

**गीताक्षरार्थस्तु** 'आह' इत्येतदेवोच्यते **अर्जुन उवाच 'स्थाने'** इत्याद्येकादशभिः । हे हृषीकेश अग्नीषोमसूर्येषु स्वकेशनियतैस्तदंशुभिर्जगतो बोधनस्थापनाभ्यां हर्षणात् हृषीकेश । हृष्यतेः कीप्रत्ययः । 'हृष्यः हर्षहेतवः केशा अस्य' इति हृषीकेशः, तत्सम्बुद्धिः । 'हृषीकेश' इत्येतद् 'जगत्प्रहृष्यति' इत्यस्योपपादकम् । हृषीकाणाम् इन्द्रियाणामीश इति वा हृषीकेशः, तत्सम्बुद्धौ, 'पुरुषार्थोपयुक्तज्ञानक्रियाशक्तिप्रेरक' इति तात्पर्यम् । तव प्रकीर्त्या त्वन्माहात्म्य-कीर्तनेन जगत् प्रहृष्यति अनुरज्यते अनुरागवत् च भवति इत्येतत् स्थाने 'युक्तमेव' इत्यर्थेऽव्ययमिदम् । किञ्च रक्षांसि भीतानि दिशः प्रद्रवन्ति प्रतिद्रवन्ति, तच्च 'स्थाने' इत्यादि योज्यम् ।। ३६ ।।

श्लोकः ३६

**भावदीपिका (श्री.टि.)–** हृषीकशब्दस्येन्द्रियवाचित्वे पूर्वमभिधानस्यानुक्तत्वात् समुच्चयार्थकश्चशब्दो व्यर्थः ? इत्यत आह– **पूर्वेणेति** ।। जगदीश्वरस्य विशेषत इन्द्रियेशत्वोक्तौ निमित्ताभावात् 'हृषीकाणाम् इन्द्रियाणाम्' इति व्याख्यानमयुक्तमिति शङ्कायाम्, 'तेषाम्' इत्यनेन निमित्तोक्त्या तद्व्याख्यानं समर्थितम् । तथा हृषीकशब्दस्येन्द्रियवाचित्वे प्रमाणाभावाच्च, इदं व्याख्यानमयुक्तम् इति शङ्कायां प्रमाणोक्त्याऽपि तद्व्याख्यानं समर्थ्यत इत्येवं पूर्वेण समुचितस्यास्य प्रमाणस्योक्तव्याख्यानसमर्थकत्वात् चशब्दो युक्त इत्यर्थः । 'अग्नीषोमकृतै' इति वक्ष्यमाणप्रमाणानुसारेण 'सूर्याचन्द्रमसौ' इत्यनन्तरम् अध्याहार्यमाह– **अग्निश्चेति** ।। तथा च 'सूर्यचन्द्रादय' इत्यर्थो द्रष्टव्यः । तर्हि 'बोधयन्' इत्याद्येकवचनायोगादाह– **बोधयन्त इत्यादि** ।। 'सूर्याचन्द्रमसौ' इत्येतदनुसारेणाह– **सूर्यकृतैश्चेति** ।। 'कर्मभि' इति समप्रधानभावेन बोधन, स्थापन, हर्षणानाम् उक्तत्वात् बुद्ध्या विवेकेन बोधनस्थापनयोर्हर्षणं प्रति हेतुत्वं द्रष्टव्यमित्याह– **अत्रापीति** ।। न केवलं भाष्ये, किं नाम प्रमाणेऽपीत्यर्थः । **ईशानत्वादावपीति** ।। आदिपदेन वरदत्वलोकभावनत्वयोर्ग्रहणम् । जगद्धर्षणे बोधनस्थापनकर्तृसूर्यादिनियामकत्वरूपः पूर्वोक्त एव हेतुर्द्रष्टव्य इत्यर्थः ।। ३६ ।।

**भावप्रकाशः (कृ.टि.)–** अग्नीषोमकृतैरित्युपसंहारादाह– **अग्निश्चेति** ।। नन्वेभिः कर्मभिरिति कथं बोधनादीनां समप्राधान्यमुक्तम् । बोधनादिति पूर्ववाक्यविरोधादित्यत आह– **अत्रापीति** ।। बुद्ध्या विवेकेनेति शेषः । **उक्तो हेतुरिति** ।। जगद्धर्षकत्वरूप इत्यर्थः ।।३६।।

**कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत् तत्परं यत् ।। ३७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** कथं स्थाने ? इत्याशङ्कायाम्, उत्तरमुच्यते– **कस्मादिति** ।। महांश्चासावात्मा महात्मा, तत्सम्बुद्धिः महात्मन् । अत्र महच्छब्दः पूर्णवाची । आत्मशब्दश्च 'यच्चाप्नोति' इत्यादिस्मृतेः आप्ति, आदान, विषयानुभव, नित्यसत्तारूपार्थचतुष्टयवचनः । पूर्णाप्त्यादिमान् इत्यर्थः । ते कस्मात् न नमेरन् त्वां न नमस्कुर्युः । तत्र हेत्वर्थगर्भविशेषणम् गरीयसे गुरुतराय । ब्रह्मणः चतुर्मुखस्यापि आदिकर्त्रे इति, अनन्त अपरिच्छिन्न । सदसद्भावात्मकं विश्वं त्वमेव त्वदधीनसत्तादिकमेव, तत्परं भावाभावात्मकविश्वाभ्यां परम् उत्तमं यद् अक्षरं तदपि त्वमेव ।। ३७ ।।

श्लोकः ३८-४०

**त्वमादिदेवः पुरुषः पुराणः त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ।।३८।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** किञ्च त्वम् आदिदेवः देवानामादिः, पुरि शयनात् पुरुषः, पुराणः चिरन्तनः । 'निधीयतेऽस्मिन्' इति निधानम् आश्रयः । वेत्ता वेदिता ज्ञाता असि । वेद्यं वेदनकर्म वस्तुजातं च त्वमेव त्वदधीनमेव वेद्यं परमं वेद्यं स्वरूपात्मकं च त्वमेव । वेत्ता 'विद विचारणे' इत्यस्माद् अनिट्कात् 'विचारयिता' इति वा । परं धाम तेजश्च त्वमेव । अनन्तरूप अनन्तम् कालतोऽन्तहीनं रूपमस्येति अनन्तरूपः, तत्सम्बुद्धिः । 'नान्तं न मध्यं न पुनस्तवादिं पश्यामि' इति परिमाणानन्त्यस्योक्तत्वात्, 'त्वया ततं विश्वम्' इति पुनरुक्तिः इति चेन्न । 'नान्तं पश्यामि' इत्युक्ते नेश्वरस्य परिमाणानन्त्यं सिध्यति, इत्यपि प्रतीतेः तन्निवृत्त्यर्थं 'न केवलमहं न पश्यामि', किन्तु 'त्वया ततं च विश्वम्' इत्युक्तत्वेन सप्रयोजनत्वाद् न पुनरुक्तिरिति तात्पर्यात् । तथापि 'पश्यामि त्वां सर्वतोऽनन्तरूपम्' 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादि पुनरुक्तिरिति चेन्न । एतद्वाक्यजातस्य विष्णोर्देशतः कालतो गुणतश्चानन्त्ये स्वस्य महातात्पर्यज्ञापनार्थाभ्यासरूपत्वेन सप्रयोजनत्वाद् इत्युत्तरप्रस्थाने व्यक्तम् ।। ३८ ।।

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ।।३९।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अपि च 'वायुः यमः अग्निः वरुणः शशाङ्कः प्रजापतिः दक्ष,कश्यपादिः । वाय्वादेः सत्ताप्रवृत्तिप्रतीतयस्त्वदधीनाः' इत्यर्थः । 'वायुर्बल-ज्ञानयोगाच्छशाङ्कोऽतिसुखाङ्कितः' इति वचनाद् वाय्वादिशब्दमुख्यार्थ इति वा । प्रपितामहः पितामहः चतुर्मुखः, तस्यापि पिता प्रपितामहः, चतुर्मुखजनक इत्यर्थः । बहुशो नमस्कार-क्रियाभ्यावृत्तिगणनं कृत्वसुचोच्यते । 'पुनश्च भूयोऽपि' इति श्रद्धाभक्त्यतिशयभरितत्वमात्मनो दर्शयति ।। ३९ ।।

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ।।४०**

श्लोकः ४१

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तथा नमः पुरस्तात् पूर्वस्यां दिशि ते तुभ्यं नमोऽस्तु । सर्वतः सर्वासु दिक्षु विद्यमानाय ते नमः । सर्व परिपूर्ण अनन्तं वीर्यं सामर्थ्यमस्य, तत्सम्बुद्धिः । अमितो विक्रमः पराक्रमो यस्य स तथा । वीर्यवानपि कश्चिच्छस्त्रादिविषये न पराक्रमते, मन्दपराक्रमो वा दृश्यते । त्वं तु अनन्तवीर्यश्च अमितविक्रमश्चेति स्तुतिः । ननु 'सर्वं खल्विदं ब्रह्म' इत्यादेः सर्वस्य जगतो ब्रह्मात्मकत्वात् 'त्वमस्य विश्वस्य परं निधानम्', 'त्वया ततं विश्वम्' इत्याद्ययुक्तम् ? इत्यतः श्रुतिगतसर्वशब्दो व्याक्रियते सर्वं समाप्नोषि ततोऽसि सर्व इति ।। यतस्त्वं सर्वं विश्वं व्याप्नोषि, ततः सर्वोऽसि 'सर्वं खल्विदं ब्रह्म', 'पुरुष एवेदं सर्वम्', 'सर्वं ह्येतद् ब्रह्म' इत्यादिवाक्येषु श्रुतसर्वशब्दवाच्योऽसीत्यतः 'इदं ब्रह्म सर्वजगद्व्यापि खलु' इत्यादिरूपेण श्रुत्यर्थो ज्ञेयः, नतु जगदात्मकत्वेनेत्यभिप्रायः ।। ४० ।।

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वाऽपि ।।४१।।**

## भाष्यम्

**कथं 'स्थाने' इति? तदाह– कस्मादित्यादिना ।। पूर्णश्चासावात्मा च इति महात्मा । आत्मशब्दश्चोक्तो भारते 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य सन्ततो भावः तस्मादात्मेति भण्यते' इति ।। तत्परं सदसतः परम् । 'असच्च सच्चैव यद्विश्वं सदसतः परम्' इति भारते ।। ३७-४१ ।।**

भावप्रदीपिका (प.टी.) सर्वे **नमस्यन्तीत्यादि** युक्तमित्युक्तम् । तत्कथं युक्तम् ? इत्यत उत्तरश्लोकमवतारयति– **कथमिति** । युक्तत्वप्रदर्शनपरतया महात्मपदं व्याचष्टे– **पूर्णश्चेति** । कोऽर्थ आत्मशब्दस्य इत्यत आह– **आत्मेति** । उक्तो व्याख्यातः । सदसच्छब्दस्तन्नियामकत्वाद्यभिप्रायेणेति भावेन तत्परशब्दार्थं सप्रमाणकमाह– **तदिति** ।।

प्रमेयदीपिका (ज.टी.)– **'सर्वे नमस्यन्ति'** इत्येतद्युक्तमिति स्वयमेवोक्त्वा कस्माच्च ते न **नमेरन्** इति विरुद्धं कथं पृच्छति? इत्यत आक्षेप एवायमिति ज्ञापयितुं तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमवतारयति– **कथमिति** ।। इति **'शङ्कायाम्'** इति शेषः । **तत्** तस्या उत्तरम् । **'महात्मन्** अक्षुद्रचित्त' इत्यल्पार्थप्रतीतिनिरासार्थमाह– **पूर्णश्चेति** ।। 'आत्मा जीवः' इति प्रतीतिं वारयितुमाह– **आत्मेति** ।। **उक्तः** निरुक्तः ।।

**यत् यस्मात् । आप्नोतेः मनिन् । पकारस्य च तकारः । आङ्पूर्वाद् दाञः स एव प्रत्ययः। आकारलोपः, तत्वम् । आङ्पूर्वाददो मन्, तत्वं च ।। इह देहे । सन्ततो भावः नित्या सत्ता। आङ्पूर्वात् तनोतेः ड्मन् । सदसदात्मकं विश्वं त्वमेवेति सत्तादिप्रदत्वादेवोच्यते । न त्वन्यथा। तथासत्युत्तरवाक्यविरोधादिति भावेन तत्पठित्वा सप्रमाणकं व्याचष्टे– तत्परमिति ।। ३७-४१ ।।**

**भावबोधः (र.टि.)– ।। अदो मन्निति ।।** सवर्णदीर्घश्च तत्त्वमिति पूर्वमत्र च दकारस्येत्यर्थः ।। **ड्मन् इति ।।** डित्त्वाट्टिलोप इति भावः ।। ३७ ।।

**भावदीपः (रा.टि.)– ।। युक्तमितीति ।।** स्थानपदेनेत्यर्थः ।। 'तदाह' इत्यत्र 'तत्' इत्यनूद्य तस्या इति प्रकृतिपदमुक्त्वा 'आह' इत्यतः पूर्वम् 'उत्तरम्' इति शेषमाह– **तत् तस्या उत्तरम् इति ।।** शङ्काया इत्यर्थः ।। 'तस्मात्' इत्यग्रे श्रवणात् सर्वोऽपि यच्छब्द-प्रतिनिरुक्तिहेत्वर्थ इति भावेनाऽह– **यत् यस्मादित्यादिना ।।** अर्थचतुष्टयेऽपि क्रमेण व्युत्पत्तिं दर्शयति– **आप्नोतेः इत्यादिना ।।** 'मनिन्' इति पाठः साधुः । 'मन्' इत्येव पाठे तु 'हलन्त्यम्' इति नकारलोपेन भाव्यतया नकारान्तशब्दताऽस्य न स्यात् ।। **दाञ इति ।।** 'दाञ्...' इति धातोरित्यर्थः ।। **तत्वमिति ।।** लुप्ताकारदकारस्य तकार इत्यर्थः ।। **आङ्पूर्वात् तनोतेः मनिति ।। तत्वमिति ।।** दकारस्य तकारभाव इत्यर्थः ।। **तनो-तेरिति ।।** 'तनु विस्तारे' इति धातोः, 'अद भक्षणे' इति धातोः डमनुप्रत्यये डित्वात् टिलोपे आत्मेति रूपमिति भावः ।। **उत्तरवाक्येति ।।** 'तत्परम्' इति वाक्ये इत्यर्थः ।। ३७-४१ ।।

**वाक्यार्थप्रदीपः (पा.टि.)– ।। पकारस्येति ।।** निर्वचनत्वादिति भावः ।। **स एव प्रत्यय इति ।।** मन्प्रत्यय एवेत्यर्थः ।। **आकारलोप इत्यादि ।।** निर्वचनत्वादिति हृदयम् ।। **तत्वमिति ।।** दकारस्य तकार इत्यर्थः ।। **ड्मन्निति ।।** डित्वात् टिलोप इति भावः ।।

**भावरत्नकोशः (सु.टि.)– ।।** 'स्थाने' इत्येदन्ताव्ययार्थः 'युक्तम्' इति । विरुद्धम् 'न नमेरन्' इत्यत्र यत्प्रतीतम् अनमनम्, तत् कस्मान्निमित्तात् इति नमस्काराभावं सहेतुकं पृच्छतीत्यर्थः । **तस्याः** शङ्कायाः । भाष्ये 'पूर्णश्च' इत्यतः पूर्वं 'महान्' इति वक्तव्यम् । तदर्थः 'पूर्ण इति' इति व्याख्याने व्याससमासयोरवैरूप्यं भवतीति द्रष्टव्यम् । **निरुक्तः** प्रकृति-प्रत्यययोरर्थप्रदर्शनेन व्याख्यातः । **आप्नोतेः** 'आप्लृ व्याप्तौ' इति धातो मनुप्रत्ययः । 'मनिन्

श्लोकः ४१

सर्वधातुभ्यः' इति शास्त्रविहितमनिन्प्रत्यय इत्यर्थः । 'मुक्तानुबन्धस्तु' टीकोक्तः । ननु 'आप्मा' इति स्यात् इत्यत आह– **पकारस्येति** ।। पृषोदरादिभावात् पकारस्य तकारो विकार इति भावः । **दात्रः** 'डुदाञ् दाने' इत्यस्मात् **स एव** मनप्रत्ययः । **आकारलोपः** धात्वाकारलोपः । **तत्वं** दकारस्य तकारः, पृषोदरादित्वात् । **अदेः** 'अद भक्षणे' इति धातोः मन् मनिन् तत्वम् धातुदकारस्य तकारादेशः । **तनोतेः** 'तनु विस्तारे' इत्यतः ड्मन् । मनिन्प्रत्ययो डित्कर्तव्यः । 'कार्यात् विद्यादनुबन्धम्' इति वचनात् । डित्त्वाच्च टिलोपे आत्मा नित्यसत्ताशालीति लभ्यत इति भावः । **सत्तादिप्रदत्वात्** सदसत्सत्ताप्रतीत्यादिप्रदत्वादेव । **अन्यथा** सदसत्स्वरूपाभेदेन ।। ३७ ।।

**गीताक्षरार्थस्तु** एतादृशमाहात्म्यं भगवन्तं त्वां प्रति यद् अपराद्धम्, तत्क्षन्तव्यमित्युच्यते– **सखेतीत्यादिना** ।। सखा समानवया इति मत्वा प्रसभं हठेन यदुक्तम् हे कृष्ण हे यादव हे सखेति ।। सन्धिरार्षः । तव महिमानं माहात्म्यरूपम् इदम् 'अहं सर्वस्य जगतः प्रभवः' इत्यादिनोक्तं जगत्स्रष्टृत्वादिकम् अजानता बलिष्ठत्वाद्यल्पमहिमज्ञानेऽपीदृशं जगत्प्रभवादिमहामाहात्म्यम् अपरिजानतेत्यर्थ इति विवृतिकृतः । स्वामिनस्तु 'इदम् इमं महिमानम्' इति लिङ्गव्यत्ययेन व्याकृतवन्तः । 'तव महिमानम्', 'इदं च विश्वरूपमजानता' इति कस्यचिद् व्याख्यानं चशब्दसंयोजनाद् विश्वरूपदर्शनवतोऽर्जुनस्य तदपरिज्ञानकल्पनाच्चायुक्तम् । मया प्रमादाद् अनवधानात् प्रणयेन स्नेहेनापि वा यदुक्तम् ।। ४१ ।।

**भावदीपिका (श्री.टि.)– ।। युक्तमिति ।।** 'स्थाने' इत्यादिनेत्यर्थः । **आक्षेप इति ।।** 'कस्मान्न नमेरन्' 'किन्तु नमेरन्नेव' इत्याक्षेपणमेवेत्यर्थः । 'यच्चाप्नोति' इत्याद्यं व्याख्यानमुपपादयति– **आप्नोतेर्मन्निति** ।। तथा च 'आप्लृ व्याप्तौ' लृकारोऽनुबन्धार्थः । अस्मात् मनप्रत्यये निर्वचनात् पकारस्य तकारे 'आत्मन्' इति प्रातिपदिकनिष्पत्तिः । पश्चात् स्वाद्युत्पत्तौ 'आत्मा' इति भवतीति द्रष्टव्यम् । एवमुत्तरत्रापि । यदादत्ते सम्यग्ददातीति द्वितीयं व्याख्यानमुपपादयति– **आङ्पूर्वादिति** ।। तथा चाङ्पूर्वात् 'दा दाने' इत्यस्मात् मनप्रत्यये, धात्वाकारलोपे, दकारस्य तकारे च 'आत्मन्' इति रूपम् । 'यच्चात्ति विषयानिह' इति तृतीयं व्याख्यानमुपपादयति– **आङ्पूर्वकादिति** ।। तथा चाङ्पूर्वकात् 'अद भक्षणे' अस्मात् मनप्रत्यये दकारस्य तत्वे, अकः सवर्णे दीर्घे च 'आत्मन्' इति रूपम् । 'यच्चास्य सन्ततो भावः' इति चतुर्थं व्याख्यानमुपपादयति– **आङ्पूर्वकादिति** ।। तथा चाङ्पूर्वकात् 'तनु

विस्तारे' अस्मात् ङ्मनुप्रत्यये डित्त्वात् टीभूतस्य 'अन्' इत्यस्य लोपे च 'आत्मन्' इति रूपम् । **उत्तरवाक्येति** ।। 'त्वं सदसत्'इत्यस्माद् यदुत्तरं वाक्यं 'तत्परम्' इति । तद्विरोधादित्यर्थः ।। ३७ ।।

**भावप्रकाशः (कृ.टि.)– ।। अकारलोप इति ।।** पृषोदरादिरयमिति भावः । **तत्त्वमिति** ।। पृषोदरादित्वादेव दकारस्य तकार इत्यर्थः । एवमग्रेऽपि ।। ३७ ।।

**यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथ वाऽप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम्**
**।। ४२ ।।**

## भाष्यम्

**एकस्त्वमेव कारयिता नान्योऽस्ति, अथापि ।। ४२-४९ ।।**

भावप्रदीपिका (प.टी.)– त्वमहं चैकोऽथ वाऽपि लोकतः क्षामय इत्यन्यथा-प्रतीतिनिरासाय, एकोऽथ वा इत्येतद्व्याचष्टे– **एक इति** । यद्यपि नावज्ञेयोऽसि सर्वोत्कृष्टत्वात् । तथाऽप्यसत्कृतोऽसीत्यर्थः ।।

प्रमेयदीपिका (ज.टी.)– 'एकः परोक्षः' इति क्लिष्टं व्याख्यानमिति ज्ञापयितुं तदर्थमन्वयं च दर्शयति– **एक इति ।।** आद्याक्षरग्रहणेन 'ए'शब्दः एकस्य द्योतकः । क इति कशब्दः कारयितृत्वद्योतकः । अन्तर्णीतण्यर्थात् करोतेर्डः । अथापि एवम-सत्कारार्होऽप्यसत्कृतोऽसि ।। ४२-४९ ।।

भावबोधः (र.टि.)– ।। करोतेर्ड इति ।। डित्वाट्टिलोपे क इति स्थिते ए चासौ कश्चेति एक इत्यर्थः । तच्चोक्तम् 'एकस्सर्वाधिको ज्ञेय एक एव करोति यत्' इति ।

।। इति श्रीरघूत्तमतीर्थप्रणीता भावबोधाभिधा टिप्पणी एकादशोऽध्यायः ।।

भावदीपः (रा.टि.)– ।। अथापीति ।। भाष्यपदानुवादः ।। ४२-४९ ।।

श्लोकः ४२

**वाक्यार्थप्रदीपः (पां.टि.)–** ।। **करोतेर्ड इति** ।। डित्वाट्टिलोपे क इति रूपे सिद्धे एचासौ कश्चेति इत्यर्थः ।।

।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां विद्याधीशतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे एकादशोध्यायः ।।

**भावरत्नकोशः (सु.टि.)–** 'एकः परोक्षः सन् असत्कृतोऽसि' इति शङ्करभाष्यं दूषयितुं भाष्यमित्याह– **एक इति** ।। **क्लिष्टमिति** ।। 'एके मुख्यान्यकेवलाः' इत्यभिधानात्, 'एकशब्दोऽयं बह्वर्थः' इति भाष्यात्, 'एक,मुख्य, असहाय, प्रधान, प्रथम,समानार्थः' इति कैयटवचनाच्च नानार्थः । तत्रान्यार्थायोगाद् एक अन्यो यः कोऽपीत्यर्थः, 'परोक्षः' इति यावदिति वक्तव्यत्वात् क्लिष्टमित्यर्थः । **एशब्दः** एकशब्दस्य द्योतकः । कथम् ? आद्यक्षरग्रहणेन एकशब्दे आद्यक्षरम् एशब्दः, तद्ग्रहणेन । 'आसीत्' इत्यस्य द्योतकः 'आ इदम्' इत्यत्र 'आ' इति वर्णो यथेत्यर्थः । डः 'डप्रकरणे अन्येष्वपि दृश्यते' इति वचनप्राप्तडप्रत्ययः । 'एकः सर्वोत्तमो ज्ञेय एक एव करोति यत्' इत्येक इति तात्पर्ये । भावप्रदीपिकायां तु 'त्वमहं च एक एव, अथवा लोकरीत्या त्वां क्षामये' इति प्रतीतिनिरासाय एकोऽथवेति व्याचष्टे एक इति' इत्यवतारितम् 'एकस्त्वमेव' इति भाष्यम् । 'अथापि' इत्यनुवादः 'एवम्' इति व्याख्या ।।

**गीताक्षरार्थस्तु-** किञ्च 'यच्चापहासार्थमसत्कृतोऽसि' इत्यत्र एकः आद्यक्षरग्रहणेन एशब्दः एकस्य द्योतकः । अन्तर्णीतण्यर्थात् करोतेः डप्रत्ययः,' एकत्वाद् ए', 'कारयितृत्वात् कः' इति एकः सर्वोत्तमः, सर्वव्यापारकारयिता च इत्यसत्कारानर्हत्वे हेतुः । अथापि एवमसत्कारानर्होऽपि असत्कृतः परिभूतः असि । तत् तदपराधजातं समक्षं तव पुरतः क्षामये क्षमां कारयामि । अप्रमेयम् अपरिमेयप्रभावम् ।। ४२ ।।

**भावदीपिका (श्री.टि.)–** 'परोक्षो बाह्येन्द्रियागोचर' इत्यर्थ इति आहुः । तन्न । प्रकृतासङ्गतत्वाद् । वस्तुतः 'एकः परोक्षः' इत्युक्त्या 'परोक्षावस्थायाम्' इति लभ्यते । तथा च 'समक्षम् असमक्षं चासत्कृतोऽसि' इत्यर्थो द्रष्टव्यः । **आद्याक्षरग्रहणेनेति** ।। 'एकोऽथवा' इति गीतायाम् 'ए'इत्याद्याक्षरग्रहणेनेत्यर्थः । **करोतेर्ड इति** ।। अन्तर्णीतण्यर्थात् 'कृञ् करणे' अस्मात् डप्रत्यये डित्त्वात् टीभूतस्य ऋवर्णस्य लोपे, प्रत्ययाकारसम्बन्धे च सति 'कः' इति रूपम् ।। ४२ ।।

**भावप्रकाशः (कृ.टि.)– क्लिष्टमिति** । दृष्टत्वादिति भावः ।। **एशब्द इति** ।। यथाऽपशब्दः साधुशब्दस्मारकस्ततोऽर्थोबोधः तथा एशब्दः एकशब्दस्मारकः ततोऽर्थधीरिति केचित् । अन्ये तु एकशब्दस्य द्योतकत्वोक्तेः नामैकदेशग्रहणे नामग्रहणमिति न्यायेनैकदेशेन समग्रशब्दो लक्ष्यते । तेन तदर्थो लक्ष्यत इत्येशब्द एकत्व(विशिष्ट)पर इत्याहुः ।। ४२ ।।

।। इति उमर्जीकृष्णाचार्यविरचितः गीताभाष्यभावप्रकाशे एकादशोऽध्यायः ।।

**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ।। ४३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** असत्कारानर्हत्वादौ हेत्वन्तरोक्त्याऽपि विविच्योच्यते– **पितेति** ।। अस्य लोकस्य पूज्यश्च । अतो गरीयान् गुरुतरो गुरुः, अत्युत्तमो गुरुः । कस्माद्गरीयान् गुरुः इत्येतदुच्यते– **न त्वत्समोऽस्तीति** ।। त्वत्समः तव तुल्यो नास्ति, त्वत्सम एव तावदन्यो नास्ति, कुतः एव अन्योऽभ्यधिकः स्यात् । न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमः, तादृशः प्रभावः महिमा यस्य तस्य सम्बुद्धिः । निरतिशयमहिमन् इत्यर्थः ।। ४३ ।।

**तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ।। ४४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यत एवं तस्मात् कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य भक्तिश्रद्धाद्यतिशयेन नत्वा ईड्यं स्तुत्यं त्वां प्रसादये प्रसादोन्मुखं करोमि । सख्युः मित्रस्यापराधं सखा निरुपाधिकसख इव, 'प्रियाया अर्हसि' इति वक्तव्ये 'प्रियायार्हसि' इत्यार्षः सन्धिः । सोढुं क्षन्तुम् अर्हसि 'अपराधम्' इति शेषः ।। ४४ ।।

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ।। ४५ ।।**

श्लोकः ४६-४८

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं क्षमामाप्य अभिमतं प्रार्थ्यते– **अदृष्टपूर्वमिति** ।। इन्द्ररूपेण पूर्वं दृष्टत्वेऽपि, अर्जुनेन तदधमैर्वा पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितोऽस्मि । प्रव्यथितं प्रचलितम् । ततो मम व्यथानिवृत्तये तदेव रूपं दर्शय । तद्दर्शयितुं प्रसीद च ।। ४५ ।।

**किरीटिनं गदिनं चक्रहस्तम् इच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ।। ४६ ।।**

**भावरत्नकोशः (सु.टि.)–** किं तद्रूपम् ? उच्यते– **किरीटिनमिति** ।। गदिनं शिखादित्वाद् इनिः, गदावन्तम् । यस्मादेवं तस्मात् तेनैव रूपेण भव । 'अनन्तरूपगोपनेन तदेव प्रकाशय' इति तात्पर्यम् । सहस्रबाहो अनन्तबाहो विश्वमूर्ते पूर्णविग्रहेति ।। ४६ ।।

**श्रीभगवानुवाच–**

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ।। ४७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** भक्त्यतिशयोत्पादनाय भगवता विश्वरूप-दर्शनस्य दौर्लभ्यमुच्यते– **भगवानुवाच मयेति** ।। आत्मयोगात् स्वसामर्थ्यात् तेजोमयम् अलौकिकतेजःस्वरूपं विश्वं पूर्णगुणम् अनन्तं देशकालापरिच्छिन्नं त्वदन्येन न दृष्टपूर्वम् इत्यनेन 'तेनैवार्जुनेनेतःपूर्वमिन्द्रशरीरेण दृष्टम्' इत्युच्यत इति ज्ञायते । 'त्वदन्येन' इत्यत्रान्यशब्देन ब्रह्मादिविश्वरूपदर्शिव्यतिरिक्ता अर्जुनादधमाः ग्राह्या इत्यन्यत्र स्पष्टम् । यद् रूपं तत् तव परं दर्शितम् इत्यन्वयः । तेन विश्वरूपेतरकृष्णादिरूपेष्वपरत्वशङ्का पराकृता भवति । यद्वा 'परम् उत्तमम्' इति विश्वरूपे परत्वोक्तिरज्ञानिविवक्षया, नतु ब्रह्मादिमहाज्ञानिविवक्षया । तेषां कृष्णादावपि परत्वप्रतीतेः इत्यन्यतोऽवसेयम् ।। ४७ ।।

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ।। ४८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अर्जुनावराणां स्वतस्तथा दर्शनाभावेऽपि वेदादिसाधनैस्तथा तैर्दृश्यतामित्याशङ्क्य त्वदवरैर्वेदादिसाधनैरपि त्वद्वत् न द्रष्टुं शक्यत इत्युच्यते– **न वेदयज्ञाध्ययनैरिति** ।। वेदैः यज्ञैः अग्निहोत्रादिभिः अध्ययनैः स्वाध्यायैः । क्रियाभिः नित्यनैमित्तिककर्मभिः । उग्रैः क्रूरैः तपोभिः कृच्छ्रादिभिः एवंरूपः एवंविधम् अत्यद्भुतं रूपमस्येति स तथा नृलोके मनुष्यलोके । त्वदन्येन त्वत्तोऽवरेण त्वद्वद् द्रष्टुम् अशक्यः । भगवतः सर्ववैलक्षण्यद्योतनाय 'शक्योऽहम्' इति सन्धिर्न कृतः ।। ४८ ।।

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ।।४९।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** 'भयेन च प्रव्यथितम्' इत्यत्रोत्तरम्– **मा ते व्यथेति** ।। घोरं संहर्तृतया क्रूरं तदेवेदं रूपं यत्त्वया प्रार्थितम् ।। ४९ ।।

**सञ्जय उवाच–**

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ।। ५० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवमुक्तो भगवान् अपेक्षितरूपमदर्शयदिति सञ्जय आहेत्युच्यते– **सञ्जय उवाच– इत्यर्जुनमिति** ।। अर्जुनं प्रति इति उक्तप्रकारेण उक्त्वा कृष्ण एव 'स्वकं रूपं न विश्वरूपम्' इति भ्रान्तलोकप्रतीत्यनुवादेनोच्यते– **स्वकं रूपमिति** ।। प्रमाणप्रतीत्या तु विश्वरूपमपि स्वकमेवेति मन्तव्यम् । सौम्यवपुः अक्रूरविग्रहः ।। ५० ।।

## भाष्यम्

**स्वकं रूपं तु भ्रान्तप्रतीत्या । अन्यथा तदपि स्वकमेव । प्रमाणानि तूक्तानि पुरस्तात् ।। ५० ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये एकादशोऽध्यायः ।। ११ ।।

श्लोकः ५०

भावप्रदीपिका (प.टी.)– कृष्णरूपस्य स्वकं रूपम् इति स्वकीयत्वोक्तेर्न विश्वरूपो हरिरिति प्रतीतिं पराकरोति– **स्वकमिति** । विश्वरूपस्यास्वकीयत्वमेव किं न स्यात् ? इत्यत आह– **प्रमाणानीति** । द्वितीयाध्यायान्ते ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्गीताभाष्यभावप्रदीपिकायां एकादशोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– 'स्वकं रूपं दर्शयामास' इति कृष्णरूपस्य स्वकत्वविशेषणाद् विश्वरूपं न स्वकमिति प्रतीतिः स्यात् । अत आह– **स्वकमिति** ।। कृष्णः स्वकं रूपं न विश्वरूपमिति भ्रान्तप्रतीत्यनुवादेनोच्यत इत्यर्थः । कुत एतत्? इत्यत आह– **अन्यथेति** ।। प्रमाणप्रतीत्येत्यर्थः । कानि तानि प्रमाणानि? इत्यत आह– **प्रमाणानीति** ।। द्वितीयान्ते ।। ५० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां श्रीजयतीर्थमुनिविरचितायां प्रमेयदीपिकायामेकादशोऽध्यायः समाप्तः ।।

भावदीपः (रा.टि.)– तस्यार्थः 'एवमित्यादि भाष्यं योजयति– **कृष्ण इत्यादिना** ।। 'उच्यते' इत्यन्वयः ।।

।। इति श्रीराघवेन्द्रयतिविरचिते प्रमेयदीपिकाभावदीपे एकादशोध्यायः ।।

भावरत्नकोशः (सु.टि.)– 'भ्रान्तिप्रतीत्या' इति भाष्यं भ्रान्त्याकारं प्रदर्शयन् व्याचष्टे– **स्वकं रूपं न विश्वरूपमिति भ्रान्तिरूपप्रतीत्यनुवादेनेति** ।। 'उच्यते' इति शेषः । **प्रमाणप्रतीत्या** प्रमाणरूपप्रतीत्या । **तदपि** विश्वरूपमपि । **स्वकं** स्वशब्दस्याकचि स्वकम्, स्वमित्यर्थः । 'द्वितीयान्ते' इत्यतः पूर्वं 'पुरस्तात्' इति भाष्यपदं योज्यम् । 'पुरतः' इत्यर्थप्रतीतिनिवारणायैवं व्याख्यातम् । तत्र

'परिपूर्णानि सर्वाणि समान्यखिलरूपतः ।
तथाऽप्यवेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि हि ।
परावरं वदन्तो वै ह्यभक्तानां विमोहनम् ।।' इति ।

'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।
न चाणुमात्रं भिन्नानि तथाप्यन्यान् विमोहसि ।।' इति ।

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ।।' इति ।

इत्यादीनि प्रमाणान्युदाहृतानि ।।

भक्तिस्वरूपमेव प्रदर्श्यते– **मत्कर्मकृदिति** ।। मत्तोषणार्थं कर्म कुर्वन्, अहमेव परमः सर्वोत्तमो यस्य स तथा । सङ्गवर्जितः ऐहिकामुष्मिकफलस्नेहहीनः । सत्सु सर्वभूतेषु निर्वैरः निर्गतं वैरं शत्रुभावः यः स भक्तः स एव मामेति जानाति, अपरोक्षयति, प्रविशति चेति ।। ५५ ।।

यो वासुदेवोऽर्जुनाय विश्वरूपमदर्शयत् ।
अनुग्रहेण सोऽयं मां कटाक्षेणाभिवीक्षताम् ।।
श्रीमद्गीताभाष्यटीकैकादशाध्यायसेवया ।
तोषमायान्तु विबुधा गुणग्रहणभूषणाः ।।
श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ।।
नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमस्ते नृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमस्ते व्यासराम ।।
आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।
विश्वरूपाध्यायभाष्यटीकायाः सेवयाऽनया ।
यदर्जितं महापुण्यं तदवाप्नोतु मे गुरुः ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाटिप्पण्यां भावरत्नकोशसमाख्यायां सूरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायामेकादशोऽध्यायः समाप्तः ।।**

**भावदीपिका (श्री.टि.)– ।। न विश्वरूपम्** 'स्वकं रूपम्' इति वर्तते । **भ्रान्तिप्रतीतीति** ।। लोकानां भ्रान्तिरूपा या प्रतीतिरित्यर्थः । 'भ्रान्तप्रतीति' इति पाठे 'भ्रान्तानां प्रतीतिः' इत्यर्थो द्रष्टव्यः । **प्रमाणप्रतीत्या** प्रमाणजन्यप्रतीत्या । 'प्रमाणरूपप्रतीत्या' इति यावत् । **द्वितीयान्त इति** ।।

श्लोकः ५१,५२

परिपूर्णानि सर्वाणि समान्यखिलरूपतः ।
तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि तु ।।
परावरं वदन्त्येवं ह्यभक्तानां विमोहनम् ।। इति गारुडपुराणवचनस्य वा,

रामकृष्णादिरूपाणि परिपूर्णानि सर्वदा ।
न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि ।।

इत्यादिनारदीयवचस्य च द्वितीयाध्यायान्ते उदाहृतत्वादित्यर्थः ।। ५०-५५।।

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
समगमदियमत्रैकादशाध्याय अन्तम् ।।

।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावप्रदीपिकाख्यायामेकादशोऽध्यायः ।।

## अर्जुन उवाच–

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ।। ५१ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** विश्वरूपगोपनेन कृष्णरूपं दर्शयता भगवता आश्वासितोऽस्मि इत्युच्यते– **अर्जुन उवाच– दृष्ट्वेदमिति** ।। किञ्चिन्मनुष्यवद् दृश्यमानत्वाद् मानुषं सौम्यम् अक्रूरम् । 'न जायते, अर्दयति संसारमिति च जनार्दनः' इति पूर्वमेव भाष्यकृता जनार्दनशब्दो व्याख्यातः । सचेताः प्रसन्नचित्तः संवृत्त जातः अस्मि । प्रकृतिं स्वस्थतां गतः । 'गत्यर्थाकर्मक' इति कर्तरि क्तः । गतवानस्मि ।। ५१ ।।

## श्रीभगवानुवाच–

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ।। ५२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** भयङ्कररूपं किमिति भवता प्रदर्शितम् इत्यतो विश्वरूपदृष्टेर्महिमोच्यते– **भगवानुवाच– सुदुर्दर्शमिति** ।। यत् मम रूपं त्वं दृष्टवानसि अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो ये देवास्तेऽपि यद् अदृष्टवन्तस्तत् इदं सुदुर्दशम् 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति दृशेः खल्प्रत्यये सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शम् । केषाञ्चित्सुखेन केषाञ्चिदुःखेन दर्शनीयमित्यर्थः । देवैरपि यद्दर्शनं चिराभिलषितं तदिदं विश्वरूपं तव शत्रुवधे निमित्तत्वज्ञापनाय त्वां प्रति दर्शितमिति भावः । एवं योजने च 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिण एव वर्तन्ते, न तु पश्यन्ति, इत्युक्तत्वात् कथमर्जुनादुत्तमैरधमैश्च विश्वरूपस्य दृष्टत्वमुच्यते' इति शङ्का निरस्ता भवति ।। ५२ ।।

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।। ५३ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु** 'सुदुर्दर्शत्वं न वेदयज्ञाध्ययनैः' इत्युक्तम् । तद्विविच्यते– **नाहमिति** ।। मां यथा दृष्टवानसि तथाविधविश्वरूपवान् अहं वेदैः तपआदिभिश्च न द्रष्टुं शक्यः ।। ५३ ।।

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।। ५४ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु**तर्हि केनोपायेन द्रष्टुं शक्य इत्यत उच्यते– **भक्त्या त्विति** ।। इतरोपायवैशेष्यद्योतनाय तुशब्दः । 'यादृशी तत्र भक्तिः स्यात् तादृश्यन्यत्र नैव चेत्, अनन्यभक्तिः' इति वचनात् । अनन्यया अनितरसाधारण्या तत्त्वेन याथात्म्येन ज्ञातुं द्रष्टुम् अपरोक्षीकर्तुं प्रवेष्टुं च ।। ५४ ।।

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।। ५५ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपसन्दर्शनयोगो नाम एकादशोऽध्यायः ।। ११ ।।

## ।। अथ श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः ।।

**अर्जुन उवाच–**

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ।। १ ।।**

## भाष्यम्

**अव्यक्तोपासनाद्भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये । तदुपासनमपि मोक्षसाधनं प्रतीयते । 'श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ' (ऋ.७.४.४.४) इति ।।**

भावप्रदीपिका (प.टी.)– अध्यायार्थमाह– **अव्यक्तेति** । ननु ब्रह्माद्युपासना-भगवदुपासनयोराधिक्यमपृच्छन्नव्यक्तभगवदुपासनयोरुत्तमं किमिति पृच्छति ? इत्यत आह– **तदिति** । मोक्षसाधनत्वे साम्यप्रतीत्या प्रश्न इत्यर्थः । श्रीसमाराधनार्थं जातस्तदर्थं गुरुसेवायै निरियाय । स च श्रियं श्रियः स्तोतृभ्यो वयः शुश्रूषया ददाति । एवं श्रियं प्रति वसन्तो बहवो गुरुशिष्याः मुक्तिमगमन् । तत्र च मिथुने द्वन्द्वे समीहितानि सत्यानि भवेयुरिति ।

प्रमेयदीपिका (ज.टी.)– एतदध्यायप्रतिपाद्यमर्थमाह– **अव्यक्तेति ।। अव्यक्तं** श्रीः । **तदुपायं** भगवदुपासनोपायम् । तदुपायप्रदर्शनं च भगवदुपासनाधिक्य-समर्थनार्थमित्येकार्थता । षट्कान्तर्भावश्च । अर्जुनस्य प्रश्नसङ्गतिप्रदर्शनेनैवानन्तर्य-लक्षणाऽपि सङ्गतिर्ज्ञायते ।।

ननु भगवदुपासनमिवाव्यक्तोपासनमपि यदि मोक्षसाधनत्वेन प्रमितं स्यात्, तदा तत्साधकाधिक्यविषयः संशयः स्यात् । तदेव कुतः? तथा कथमयं संशयमूलोऽर्जुनस्य प्रश्नः? न हि भिन्नफलसाधनसाधकानां निर्धारणार्थः प्रश्नो युज्यते । किन्तु साध्य-निर्धारणार्थ एव । नच तथा प्रकृतो 'यावानर्थः'(२.४६) इत्यादिना निरस्तत्वादित्यत आह– **तदुपासनमपीति** ।। श्रियं प्रति **वसाना** वसन्तः, तामाच्छाद्य स्थित्वा वा

**उपासीना इति यावत् । तेषां समिथा समीहितानि सत्यानि भवन्ति । मितद्रौ समुद्रे क्षीराब्धौ ।।**

**भावबोधः (र.टि.)–।। प्रश्नसङ्गतिप्रदर्शनेनैवेति ।।** 'एवंशब्देन दृष्टश्रुतरूपं 'मत्कर्म-कृत्' इत्यादि प्रकारश्च परामृश्यते' इत्यनेनेत्यर्थः । ननु त्वदुपासकानां वा फलमुत्तमम्, अव्यक्तोपासकानां वा फलमुत्तममिति साध्यनिर्धारणाभिप्रायेणैव साधकनिर्णयार्थः प्रश्न इत्यत आह – **न च तथा प्रकृत इति** ।। तथात्वे के वा उत्तमफलका इति के वोत्तमा इति वा भवेन्न तु योगवित्तमा इतीति भावः । तदभिप्रायेण प्रश्नकरणासम्भवे हेतुमाह – **यावानर्थ इति** ।। मोक्षव्यतिरिक्तस्वर्गादिः सर्वस्यापि फलस्य मोक्षादवरत्वस्य तत्रोक्तेः प्रश्नस्य सिद्धार्थता स्यादिति भावः । **वसन्त इति** ।। निवासार्थकस्य वसतेः परस्मैपदित्वनियमादिति भावः । यथाश्रुतमङ्गीकृत्याप्यर्थमाह – **तामिति** ।। आच्छादनार्थकस्य वसतेः आत्मनेपदित्वादिति भावः ।

**भावदीपः (रा.टि.)–** प्रतिपाद्यभेदेनाध्यायभेदमाशङ्क्य भगवदुपासनोत्तमतैव प्राधान्येन प्रतिपाद्यते । तदुपायस्तु तादर्थ्येन । अतो नानेन दोष इति भावेनाऽह–**तदुपायप्रदर्शनं चेति** ।। **षट्केति** ।। भगवन्माहात्म्योक्तिपरत्वाद् अस्याध्यायषट्कस्य तदुपपादनेनोत्तमत्वोक्तेश्च तन्महिमोक्तौ पर्यवसानादिति भावः ।। **अर्जुनस्य प्रश्नसङ्गतीति** ।। 'एवं सततयुक्ताः' इति गीतायामेवंशब्देन दृष्टश्रुतरूपभगवत्परामर्शेन प्रश्नकरणस्य अग्रे भाष्ये व्याख्यानात् पूर्वानन्तर्य-मस्य सिद्धमिति भावः ।। **तत्साधकेति** ।। अव्यक्तोपासनानुष्ठातुराधिक्यविषय इत्यर्थः ।। भिन्नश्रीतत्वोपासनायां मोक्षेतरफलकत्वं मन्वान आह– **नहीति** ।। **भिन्नेति** ।। भिन्नविभिन्न-फले मोक्षतदितरफलके ये साधने भगवदव्यक्तयोरुपासने तत्साधकानां तदनुष्ठातॄणां मध्ये कोऽधिक इति निर्धारणार्थ इत्यर्थः ।। **साध्यनिर्धारणार्थ एवेति** ।। उपासनाजन्यफलद्वयमध्ये किमुपासनायाः फलमधिकमिति साध्यनिर्धारणार्थ एव प्रश्नो युज्यत इत्यर्थः ।। अस्तु तथैव प्रकृत इत्यत आह– **नच तथेति** ।। कुतः? इत्यत आह– **यावानिति** ।। 'यावानर्थ उदपाने सर्वतः सम्प्लुतोदके'(२.४६) इत्यादिना द्वितीये एव मोक्षेतरफलस्यानुत्तमत्वोक्तेः, अव्यक्तो-पासनस्य च मोक्षेतरफलकत्वात् साध्ये सन्देहस्यैवायोगेन तदुत्तमत्वनिर्धारणार्थोऽपि प्रश्नो न युक्त इत्यर्थः ।। 'वस निवासे' 'वस आच्छादने' इति धातुद्वयरूपमित्युपेत्य क्रमादर्थावाह– **वसाना इत्यादिना** ।। वसतेरात्मनेपदं छान्दसमिति भावः ।। **क्षीराब्धाविति** ।। 'अमृतत्वमायन्' इत्यन्वय इति भावः ।।

श्लोकः १

**भावरत्नकोशः (सु.टि.)**– 'अस्मिन्नध्याये' इति भाषणादाह– **एतदिति** ।। द्वादशेत्यर्थः । अव्यक्तशब्देन प्रधानग्रहणे तस्याचेतनया तदुपासनमनुचितमिति तस्य भगवदुपासनाधिक्यं प्रति अवधित्वभाषणमयुक्तम् इत्यतोऽत्राभिप्रेतम् अव्यक्तशब्दार्थमाह– **अव्यक्तं श्रीरिति** ।। अभिमान्यधिकरणन्यायेन श्रीदेव्या अव्यक्तपदमुख्यार्थत्वाद् युक्तं तदुपासनस्यावधित्वभाषणमिति भावः । तच्छब्दस्य प्रकृतोभयपरत्वभ्रमं व्युदसितुमाह– **तदुपायं भगवदुपासनोपायमिति** ।।

ननु भगवदुपासनाधिक्ये तदुपायप्रदर्शने च तात्पर्येऽर्थभेदादध्यायस्यैकवाक्यता न स्यात् । किञ्च द्वितीयषट्कान्तर्भूतद्वादशाध्याये भगवन्महिमा वर्णनीयः । यदभाषत 'उत्तरैरध्यायै-र्भगवन्माहात्म्यमाह' इति । न हि भगवदुपासनोपायप्रदर्शनं भगवन्महिमा भवतीति, न षट्कान्तर्भावोऽस्य इत्यत आह– **तदुपायप्रदर्शनं चेति** ।। अव्यक्तोपासनाधिकोपासन-विषयत्वमेव भगवतो महिमा, तत्समर्थनार्थं प्रवृत्तं भगवदुपासनोपायप्रदर्शनं तच्छेष इति शेषिणः प्रधानस्यैकत्वादध्यायस्यैकवाक्यता, द्वितीयषट्कान्तर्भावलक्षणसङ्गतिश्चास्याध्यायस्य युक्तेत्यर्थः । अस्याध्यायस्य पूर्वाध्यायानन्तर्यलक्षणाऽपि सङ्गतिर्भाषितेत्याह– **अर्जुनप्रश्नप्रदर्शनेनेति** ।। 'एवंशब्देन दृष्टश्रुतरूपं "मत्कर्मकृत्" इत्यादि प्रकारश्च परामृश्यते' इति भाषणेन एवंभूतं त्वामेवंप्रकारेण उपेता उपासते इत्येवं शब्दार्थस्य विभावना । तस्य च पूर्वपरामर्शकत्वात् पूर्वाध्यायोक्तविश्वरूपभगवदुपासने इतराधिक्यस्यात्र उच्यमानत्वात् पूर्वाध्यायानन्तरभावोऽ-स्याध्यायस्य ज्ञायत इत्यर्थः ।

**तत्साधकाधिक्यविषय इति** ।। मोक्षसाधकानां भगवदुपासकानाम् अव्यक्तोपासकानां च मध्ये भगवदुपासकाः श्रेष्ठाः, आहोस्विद् अव्यक्तोपसकास्तथा इत्येवमाधिक्यविषयः संशयः साधकबाधकप्रमाणाभावेन स्यादित्यर्थः । **तदेव** अव्यक्तोपासनस्य मोक्षसाधनत्वमेव । **कुतः** प्रमाणात् । मास्तु संशयः, अस्तु च प्रश्नः इत्यत आह– **तथा चेति** ।। प्रश्नस्य हि संशयो मूलम् । तदभावे स एवानुपपन्नः । कारणं विना कार्योदयस्यायोगादिति भावः । ननू-पासनयोर्भिन्नफलकत्वेऽपि तत्साधनाधिक्यविषयकः संशयः किमिति न स्यात् इत्यत आह– **नहीति** ।। भिन्नयोः फलयोः ये साधने क्लृप्ते तत्साधकानां तन्निष्पादयतां पुंसाम् । **निर्धारणार्थ इति** । प्रश्नो हि निर्धारणार्थः । निर्धारणं च जातिगुणक्रियादिभिः सजातीयसमुदायाद् एकदेशस्य विवेचनम् । नच भिन्नफलकत्वे द्वयोः साधनयोः साजात्यमिति, कुतः तत्साधकानां सजातीय-त्वम् । अतो न युक्तः प्रश्न इत्यर्थः । किन्निर्धारणार्थः प्रश्नः इति पृच्छति– **किन्त्विति** ।। परिहरति– **साध्येति** ।। **साध्यं** फलम् ।

नन्वेवं प्रकृते साध्यनिर्धारणार्थ एव साधकाधिकविषयप्रश्नोऽस्तु इत्याशङ्क्य निराह– **न चेति** ।। भगवदुपासकानां फलम् उत्तमम् उत अव्यक्तोपासकानाम् इति साध्यनिर्धारणार्थः प्रश्नो न युज्यते । कुतः,

'यावानर्थ उपादाने सर्वतः सम्प्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।।

इति द्वितीयाध्याये ज्ञानफलं महासमुद्रोदकमिव महत्, ज्ञानेतरसाधनसाध्यं फलं तु कूपोदकमिवात्यल्पम् इति भगवज्ज्ञानसाध्यमोक्षेतरफलस्य अव्यक्तोपासनादिरूपसाधनसाध्यस्य मोक्षाद् अवमत्वनिर्धारणेन आधिक्यगोचरसंशयस्यैव निरस्तत्वेन, तन्मूलप्रश्नस्य कारणाभावादित्यर्थः ।

'श्रियं वसाना' इत्यत्र श्रीदेव्युपासनस्य मोक्षसाधनत्वरूपप्रकृतार्थप्रत्यायकत्वसिद्धयेऽध्याहरति– **प्रतीति** ।। 'वस निवासे' इत्यस्य आत्मनेपदं छान्दसमिति भावेनोक्तम्– **वसन्त इति** ।। प्रतिपदाध्याहारे 'वसानाः' इत्यनन्वितम् इत्यत उक्तम्– **वसन्त इतीत्यपि केचित्** । अध्याहारव्यत्ययाश्रयणानुशयादाह– **तामाच्छाद्येति** ।। 'वस आच्छादने' इत्यस्येदं रूपमिति भावः । व्याख्यानद्वयेऽपि तात्पर्योक्तिः– **उपासीना इति यावदिति** ।। तथा च प्रकृतसिद्धिरिति भावः । 'समीण' इत्युणादौ संशब्द उपपदे इणो धातोः थक्प्रत्यये 'समेति, समीयते वाऽसौ' इति समिथः अग्निः संभ्रमो वेति वैयाकरणैरुक्तत्वात् समिथशब्दः संभ्रमार्थः । संभ्रमशब्दश्च समीहितार्थ इति भावेन समिथशब्दात् परस्य जसश्छन्दसि आकारादेशमुपेत्य, तमनूद्य व्याचष्टे– **समिथा समीहितानीति** ।। सम्पूर्वस्य 'ईह चेष्टायाम्' इत्यस्य पृषोदरादिभावेन समिथा समीहितानीत्युक्तमित्यपि आहुः । सत्यशब्दाज्जस आकारे छन्दसि 'सत्या' इति रूपमिति भावेनाह– **सत्या सत्यानीति** ।। 'हरिमितयोर्द्रुवः' इत्युणादौ 'मितशब्दोपपदाद् द्रवतेः कुप्रत्ययः, डिच्च' इत्युक्त्वा 'मितद्रुः समुद्रः' इत्यभिधानेन मितशब्दोपपदस्य 'द्रु गतौ' इत्यस्य 'मितद्रुः' इति रूपम् । 'मितं द्रवति' इति योगार्थस्य च वृद्धिह्रासराहित्येन गमनवति समुद्र एव सम्भवमभिप्रेत्याह– **मितद्रौ समुद्र इति** ।। समुद्रमात्रे 'अमृतत्वमायाति' इति श्रुतमोक्षप्राप्त्यनुपपत्तेरुक्तम्– **क्षीराब्धाविति** ।।

प्रस्थानान्तरे तु 'यः पुरुषः श्रीसमाराधनार्थे जातोऽसौ तदर्थमेव गृहान्निर्गतो भवति ।

श्लोकः १
स श्रियम् उपदेष्टृभ्यः गुरुभ्य एव स्वस्य वयो धत्ते' इति श्रुतिशेषार्थमुक्त्वा 'मितद्रौ' इत्यस्य गुरुशिष्याख्यमिथुने इत्यर्थ उक्तः । भावप्रदीपिकायां च श्रीसमाराधनार्थं गुरुसेवायै निरियाय । स च श्रियम् । श्रियः, जरितृभ्यः स्तोतृभ्यो वयः शुश्रूषया दधातीति श्रुतिशेषो व्याख्यातः ।

**भावदीपिका (श्री.टि.)**– प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे । क्रियते द्वादशाध्याय-टीका भावप्रदीपिका ॥

॥ **श्रीरिति** ॥ तथा च नाव्यक्तं जडप्रकृतिरिति भावः । ननु भगवदुपासनाधिक्य-तदुपायप्रदर्शनरूपार्थद्वयप्रतिपादकत्वेन एतदध्यायस्यैकवाक्यता न स्यात् । भगवन्माहात्म्या-प्रतिपादकत्वेन षट्कान्तर्भावश्च न स्यात्? इत्यत आह– **तदुपायेति** ॥ तथा च प्रधान-प्रमेयस्यैकत्वेनैकवाक्यतेति भावः । **षट्केति** ॥ भगवदुपासनाधिक्यप्रदर्शनस्यापि सर्वाधिको-पासनाविषयत्वरूपभगवन्महिमप्रदर्शनरूपत्वात् षट्कान्तर्भावसिद्धिरित्याशयः । पूर्वेण सङ्गतिः कस्मान्न प्रदर्शिता इत्यत आह– **अर्जुनेति** ॥ गीतायाम् एवंशब्देन पूर्वाध्यायोक्तप्रकारवाचकेन आनन्तर्यलणाऽपि सङ्गितिर्दर्शितेत्यर्थः । न केवलमन्तर्भावलक्षणा सङ्गतिरिति अपिशब्दः ।

प्रश्नस्य संशयमूलकत्वात्, प्रकृते च संशयायोगात्, नार्जुनप्रश्नो युक्तः इत्याशयेन शङ्कते– **नन्विति** ॥ **तत्साधकाधिक्यविषय इति** ॥ मोक्षसाधनसाधकाधिक्यविषयकः । तदेव मोक्ष-साधनत्वेन प्रमितत्वमेव । नन्वव्यक्तोपासनस्य मोक्षसाधनत्वेन प्रमित्यभावेऽपि तत्साधकोत्तमत्व निर्धारणार्थः प्रश्नः किं न स्यात् ? इत्यत आह– **नहीति** ॥ **निर्धारणार्थः** उत्तमत्व-निर्धाणार्थः । भिन्नानि फलानि येषां तानि भिन्नफलानि, एवम्भूतानि यानि साधनानि, तत्साधकानामित्यर्थः ।

तर्हि कथं प्रश्नः कर्तव्यः? इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **साध्येति** ॥ अव्यक्तोपासना भगवदुपासनाभ्यां साध्ये ये फले, तयोर्मध्ये किं फलमुत्तमम् इति साध्य-स्योत्तमत्वनिर्णयार्थ एव प्रश्नो युज्यत इत्यर्थः । न तर्हि त्वदुपासकानां वा फलमुत्तमम् उताव्यक्तोपासकानां फलमुत्तममिति साध्यस्योत्तमत्वनिर्धारणार्थ एव प्रश्नोऽस्तु इत्यत आह– **न च तथा प्रकृत इति** ॥ तथात्वे 'के वोत्तमफलकाः' इत्येव भवेत्, ननु 'के योगवित्तमाः' इति । अतो गीतायां प्रश्नस्य साध्यस्योत्तमत्वनिर्धाणार्थत्वं न प्रतीयत इति भावः ।

किञ्च साध्यस्योत्तमत्वनिर्धारणार्थः प्रश्न एव न सम्भवति, मोक्षेतरस्य स्वर्गादेः सर्वस्यापि फलस्य मोक्षाद् अवरतायाः द्वितीयाध्याये प्रतिपादितत्वेन तत्प्रश्नस्य सिद्धार्थत्वात्, इत्याशयेनाह– **यावानर्थ इत्यादिनेति ।। आहेति ।।** अव्यक्तोपासनस्यापि मोक्षसाधनत्वेन श्रुत्यादौ प्रतीतत्वेन, भगवदुपासनाव्यक्तोपासनयोरेकफलकत्वेन एकफलसाधनसाधकोत्तमत्वविषये संशयप्राप्त्या, तन्मूलक स्तेषां 'के योगवित्तमाः' इति प्रश्नो युक्त इत्याशयेनाहेत्यर्थः । निवासार्थकस्य वसतेः परस्मैपदित्वनियमेन शानचः प्राप्त्यभावेन 'वसानाः' इत्ययुक्तमित्यत आह– **वसन्त इति ।। तामाच्छाद्येति ।।** हृदये तामाच्छाय स्थिताः । आच्छादनार्थस्य वसतेरात्मनेपदित्वेन युक्तः शानजिति भावः । व्याख्यानद्वयेऽपि फलितमाह– **उपासीना इति ।।** मितं द्रवति वेलामतिक्रम्य न गच्छतीति मितद्रुः इति पदार्थं हृदि निधाय तदर्थमाह– **मितद्रौ समुद्र इति ।।**

**भावप्रकाशः (कृ.टि.)– ।। एकार्थतेति ।।** प्रधानार्थैक्यादिति भावः ।। **षट्कान्तर्भाव इति ।।** अधिकोपासनाविषयत्वरूपमहिम्नो वर्णनादिति भावः ।। नन्वन्तरसङ्गतिः कुतो नोक्तेत्यत आह– **अर्जुनप्रश्नेति ।।** एवंशब्देन दृष्टश्रुतरूपं मत्कर्मकृत् इत्यादिप्रकारश्च परामृश्यत इत्यनेनेत्यर्थः ।। तथाच पूर्वाध्यायोक्तविश्वरूपोपासने इहाधिक्यस्योच्यमानत्वाद् अनन्तरसङ्गतिरिति भावः ।। ननूपासनयोर्भिन्नफलत्वेपि तत्साधकाधिक्यविषयः संशयः किं नस्यादित्यत आह– **नहीति ।।** निर्धारणार्थ इति हेतुगर्भविशेषणम् । प्रश्नो हि निर्धारणार्थः । निर्धारणं नाम गुणक्रियादिभिः सजातीयसमुदायादेकदेशस्य पृथक्करणम् । नच भिन्नफलत्वे द्वयोः साधनयोः साजात्यम् । तत्कुतः तत्साधकानां साजात्यम् । अतो न प्रश्नो युक्त इति ।।

ननु तर्हि स्वर्गमोक्षरूपभिन्नफलसाधनसाधकाधिक्यप्रश्नोयं किं न स्यादित्याशयेन पृच्छति– **किं त्विति ।।** उत्तरमाह– **साध्येति ।।** नन्वेवं प्रकृतेऽपि साध्यनिर्धारणार्थ एव साधकाधिक्यप्रश्नोऽस्त्वित्यत आह– **न चेति ।। यावनर्थ इत्यादिनेति ।।** तत्र सर्वस्यापि मोक्षातिरिक्तफलस्य मोक्षावरत्वोक्तेः । साध्यस्य निर्धारितत्वेन तदर्थप्रश्नो न युक्तः । सिद्धार्थतापातादिति भावः । ननु वासस्याकर्मकत्वात् वसन्त इति व्याख्यानपक्षे श्रियमिति कर्मणि द्वितीयाऽयुक्तेत्यतः कर्मप्रवचनीययोगे द्वितीयेयमिति भावेनाह– **श्रियं प्रतीति ।।** ननु 'वसाना' इति न 'वस निवासे' इत्यस्य रूपम् । तस्य नित्यपरस्मैपदित्वेन वसाना इति शानजाख्यात्मनेपदविरोधात् । प्रतिशब्दाध्याहारापाताच्चेत्यरुचेराह– **तामाच्छाद्येति ।।** वस आच्छादन इति धातोरिति भावः । ननु पक्षद्वयेऽपि अव्यक्तोपासनस्य मोक्षसाधनत्वालाभ इत्यत आह–

श्लोकः १

**उपासीना इति यावदिति** ।। यद्यपि 'समीण' इत्युणादिसूत्रेण सम्पूर्वादिणः थक्प्रत्यये निष्पन्नः समिथशब्दो युद्धवाचीति वेदभाष्यादावुक्तम् । तथाऽपि तद्ग्रहणे माहात्म्यातिशयालाभादभीष्टमात्रपरत्वमभिभावेनाह– **समीहितानीति** ।। मितशब्दोपपदाद् द्रु गतावित्यस्मात् 'हरिमितयोः द्रुवः' इत्युप्रत्ययो डिच्च । ततश्च मितं द्रवतीति योगार्थस्य वृद्धिह्रासविवर्जिते समुद्र एव सम्भवादाह– **समुद्र इति** ।। समुद्रमात्रे अमृतत्वमायन् इत्याद्युक्तमोक्षादिप्राप्तिः कथमित्यत आह –क्षीराब्धाविति ।। अन्यत्रापि वृत्तेरिति ।। 'ताश्चेन्द्रधर्मनासत्यसंश्रयात् श्रिय ईरिताः' इति वचनाच्छचीशामलादिष्वपि प्रवृत्तेरित्यर्थः ।।

## भाष्यम्

**'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' (कठ. १.३.५) इति च । अव्यक्तं च महतः परम् । 'महतः परमव्यक्तम्' (३.११) इत्युक्तपरामर्शोपपत्तेः । 'उपास्य तां श्रियमव्यक्तसञ्ज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः' इति सामवेदे आग्निवेश्यशाखायाम् ।**

भावप्रदीपिका (प.टी.)– अनाद्यनन्तमित्यत्राव्यक्तोपासनान्न मोक्षः श्रूयते इत्यत आह– **अव्यक्तं चेति** । तं महतः परमिति परामर्शस्तदोपपद्यते, यदि महतः परमित्युक्तस्य भवेत्, अन्यस्य महतः परत्वेनाप्रकृतत्वादित्यर्थः ।

प्रमेयदीपिका (ज.टी.)– श्रीशब्दस्यान्यत्रापि प्रवृत्तेरव्यक्तविषयामेव श्रुतिं पठति– **अनादीति** ।। निचाय्य सम्पूज्य निशाम्य वा । अत्रापि नाव्यक्तं श्रूयत इत्यत आह– **अव्यक्तं चेति** ।। चोऽवधारणे । कुत एतत्? परमात्मनोऽपि तत्सम्भवादित्यत आह– **महत इति** ।। अत्र हि 'तं महतः परम्' इति परामर्शो दृश्यते । स चोक्तस्यैव भवति । अव्यक्तमेव च **महतः परमव्यक्तम्** इति महतः परत्वेनोक्तम् । अतोऽत्राप्यव्यक्तग्रहणे तम् इत्ययं महतः परमव्यक्तम् इत्युक्तस्य परामर्श इत्युपपद्यते । अन्यथाऽनुक्तपरामर्शः प्रसज्यते । परमात्मा तु न महतः पर इत्युक्तः । किन्तु 'अव्यक्तात् पुरुषः परः' इत्येवेत्यर्थः । श्रुतिद्वयार्थसङ्ग्राहिकां स्पष्टां चात्र श्रुतिमुदाहरति– **उपास्येति** ।।

**भावदीपः (रा.टि.)– ।। अन्यत्रापीति ।।** 'शंरूपे तु रतेर्वायौ श्रीरित्येव च कार्त्यते' इति वाण्यामपि वृत्तेरित्यर्थः । अथवा 'त्रैलोक्यां बुभुजे श्रियम्'इति **षष्ठस्कन्धे** ऐश्वर्येऽपि प्रयोगादिति भावः ।। **अव्यक्तविषयमिति ।।** पूर्वपक्षरीत्येति भावः । वायुदर्शन इति धातुपाठेऽप्यनेकार्थत्वमुपेत्याह– **सम्पूज्येति ।। निशाम्येति ।।** श्रवणादिकृत्वेत्यर्थः ।। **तदिति ।।** 'यो बुद्धेः परतस्तु सः' इत्यादाविवाव्यक्तपुरुषस्यापि महतः परत्वसम्भवादित्यर्थः ।। **अत्र हीति ।।** विचार्यवाक्ये **अन्यथेति** विचार्यवाक्यस्थतच्छब्दस्य हरेः परामर्शः इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। अन्यत्रापि** 'शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता' इत्यादिना वाणीदेव्यादौ, 'शोभासम्पत्तिपद्मासु श्रीर्लक्ष्मीः' इत्यभिधानेन कान्तिसम्पत्त्यादौ च । **अव्यक्तविषयां** श्रीदेवीमात्रपराम् । 'चायृ पूजानिशामनयोः' इति धातु– व्याख्यानादाह– **सम्पूज्य निशाम्य वेति ।।** 'निशामनम् दर्शनम्' इति धातुवृत्तौ व्याख्यानात् 'दृष्ट्वा' इत्यर्थः । **एतत्** 'अव्यक्तमेव महतः परम्' इत्येतत् । **तत्सम्भवात्** महतः परत्वसम्भवात् । **अत्र** 'अनाद्यनन्तम्' इति वाक्ये **परामर्शः** तच्छब्देन । **स च** परामर्शः अयं शब्दः । **अन्यथा** 'महतः परमव्यक्तम्' इत्युक्ताव्यक्तपरामर्शानभ्युपमे । 'परमात्मनोऽपि तत्सम्भवाद्' इत्युक्तदोष-मुद्धरति– **परमात्मा त्विति ।। इत्येवमिति ।।** अव्यक्तादपि परत्वेनोक्तः, न पुनः साक्षा-न्महतः परत्वेन इति महतः परत्वलिङ्गेन परमात्मन्यनवकाशेनात्राव्यक्तमेव प्रतिपत्तव्यमित्यर्थः ।

**भावदीपिका (श्री.टि.)– ।। अन्यत्रापीति ।।** भारत्यां शचीश्यामलारूपास्वित्यर्थः । 'शंरूपे तु रतेर्वायौ श्रीरित्येव च कीर्त्यते ।''ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः'इति वचनात् । **सम्पूज्य निशाम्य वेति ।।** 'चायृ पूजानिशामनयोः' इति धातोरिति भावः । **तत्सम्भवात् ।।** महत्परत्वेनाव्यक्तत्वसम्भवादित्यर्थः । **अत्र हीति ।।** 'अनाद्यनन्तम्' इति श्रुतौ । तमित्ययं शब्दः । **इत्येवेति ।।** अव्यक्तपरत्वेनैवोक्त इत्यर्थः । **सङ्ग्राहिकामिति ।।** 'श्रियमव्यक्तसंज्ञाम्' इत्यनेन 'श्रियं वसानाः' 'अनाद्यनन्तम्' इति श्रुतिद्वयार्थस्य सङ्ग्रहीतत्वा-दित्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** चायृ पूजानिशामनयोरित्युक्तेर्द्वेधाऽर्थमाह– **सम्पूज्य निशाम्य वेति ।।** अव्यक्तोपासनं न मोक्षसाधनं भगवदितरोपासनत्वाद् ब्रह्माद्युपासनवदिति युक्ति-सूचनायोक्तन्यायादिति न्याग्रहणम् । **युक्तमिति ।।** तथा चोक्तानुमाने जन्मादिमद्वस्तु-विषयत्वमुपाधिरिति भावः ।

श्लोकः १

## भाष्यम्

**महच्च माहात्म्यं तस्या वेदेषूच्यते ।**

**'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।**
**तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्'**

**(ऋ.८.६.१६.६)।**

**'चतुःशिखण्डा युवतिः सुपेशा..... वयुनानि वस्ते' इति च ।।**

भावप्रदीपिका (प.टी.) श्रूयमाणमव्यक्तोपासनस्य मोक्षसाधनत्वं स्तुतिमात्रं किं न स्यात् इत्यत आह– **महच्चेति ।** महामहिमत्वेनाप्राकृतत्वादित्यर्थः । **घृतप्रतीका** अतिस्निग्धदेहा । वयुनानि प्रति वस्ते वसति ज्ञानविषयो भवति । **यत्र** यस्यां विषये ।

प्रमेयदीपिका (ज.टी.)– नन्वेवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वमुपचरितमेव । 'अन्तवत्तु फलं तेषाम्' (७.२३) इत्युक्तन्यायात् । अतो नास्य सन्देहहेतुत्वमित्यत आह– **महच्चेति ।। तस्याः** श्रियः । युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनतायामुपचरितत्वकल्पनम् । तेषां जननमरणादिमत्त्वेनासम्भवात्। श्रियस्तु महामाहात्म्यवत्त्वेन वेदोक्तत्वाद् असम्भवाभावाद् वास्तवमेव तदुपासनस्य मोक्षसाधनत्वमित्यर्थः । **सुपेशा** सुरूपा । **घृतप्रतीका** दीप्ताङ्गी । **वयुनानि** ज्ञानानि **वस्ते** आच्छादयति । ज्ञानालङ्कृतेति यावत् । **सुपर्णा** सुष्टु परमानन्दौ **वृषणा** सेचकौ द्विरूपो भगवानेव । **यत्र** यस्यां विषये । अत्र नित्ययौवनं ज्ञानमयत्वं सर्वदेवतापूज्यत्वं च प्रतीयते । एवमुत्तरत्र ।।

भावबोधः (र.टि.)– ।। दीप्ताङ्गीति ।। 'तेजो वै घृतं प्रतीकं देह उद्दिष्टः' इति वचनादिति भावः ।

भावदीपः (रा.टि.)– ।। **इत्युक्तन्यायादिति** ।। 'कामैस्तैस्तैर्हृतज्ञाना भजन्ते अन्यदेवताः' इत्युक्त ब्रह्माद्यन्यदेवताभजकानां 'तेषाम्' इति परामृश्य 'अन्तवत्तु फलम्' इति सप्तमोक्तन्यायादित्यर्थः ।। **नास्येति** ।। अव्यक्तोपासनं मुक्तिसाधनमित्यस्योपासकाधिक्यविषय-

प्रश्नबीजसंशयहेतुत्वेत्यर्थः । भाष्ये शेषमाह– **तस्याः श्रिय इति** ।। **एवमुत्तरत्रेति** ।। 'चतुःशिखण्डा' इति श्रुतावित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– ननु अव्यक्तोपासनस्य मोक्षहेतुत्ववचनम् उपचरितार्थकम् अन्तवत्फलकोपासनागोचरवस्तुविषयत्वाद् ब्रह्माद्युपासनस्य मोक्षहेतुत्ववचनवत् । न चासिद्धिः, दृष्टान्ते साधनवैकल्यं चेति वाच्यम् । 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' इति ब्रह्माद्युपासने अन्तवत्फलकत्वस्य भगवतैवोक्तत्वेन, तत्समानन्यायेन अव्यक्तं भजतामपि फलमन्तवदेव इति निश्चयेन सन्देहायोगाद्, 'भगवदुपासका अधिका उताव्यक्तोपासका अधिकाः' इति प्रश्न एवानुपपन्न इति भावेन शङ्कते– **नन्वेवमित्यादिना** ।। **उपचरितम्** स्तुतिमात्रमेव । वेदोक्तमहामाहात्म्यवदितरवस्तुगोचरत्वम्, जननमरणादिदोषवद्वस्तुगोचरत्वं वा उक्तानुमाने उपाधिरिति भावेन तस्य साध्यव्यापकतामुपपादयति– **युक्तमिति** ।। **असम्भवात्** जननमरणाद्यभावरूपानन्तफलात्मकमोक्षसाधनत्वासम्भवात् । तथा चोपाधिः साध्यव्यापक इति भावः । साधनाव्यापकतामाह– **श्रियस्त्विति** ।। **असम्भवाभावात्** मोक्षदानसामर्थ्या-सम्भवाभावात् । **वास्तवमेव** न पुनरुपचरितम् ।

भाष्ये 'चतुष्कपर्दा' इत्यस्य चत्वारः कपर्दाः जटाजूटशब्दिताः शिखण्डा यस्याः सा तथोक्ता, वेणीचतुष्टयशालिनीत्यर्थः । यद्यपि 'कपर्दोऽस्य जटाजूटः' इत्यमरः पिनाकिजटाबन्धे कपर्दशब्दमभ्यधत्त । तथापि 'कपर्दस्तु जटाजूटे देवदेवस्य शूलिनः' इत्युक्त्वा 'दृश्यते च जटाजूटमात्रे स्याच्च वराटके' इत्यभिदधत् केशवः जटाजूटमात्रमपि कपर्दशब्दार्थ इत्युक्तवान् । इति युक्त एवोक्तोऽर्थः । 'सुपेशा' इत्यत्र पेशःशब्दः सकारान्तो रूपार्थक इति भावेनाह– **सुपेशाः सुरूपेति** ।। शोभनरूपेत्यर्थः । अत एव पेशःशब्दः षोडशसु रूपनामसु पठितः । तथा च केशवः 'पेशो रूपे हिरण्ये' इति पेशःशब्दं रूपहिरण्यार्थमभ्यधत्त । 'घृ क्षरणदीप्त्योः' इति धातोः, 'अङ्गं प्रतीकोऽवयवः' इत्यभिधानाच्चाह– **दीप्ताङ्गीति** ।। 'घृताः दीप्ताः प्रतीकाः अङ्गानि यस्याः सा घृतप्रतीका' इति, व्याससमासाविति भावः । भावप्रदीपिकायां तु 'स्निग्धदेहा' इत्यर्थ उक्तः ।

'माया वयुनं ज्ञानम्' इति प्रज्ञानामसु पाठाद् 'वयुनं ज्ञानम्' इति ईशावास्यभाष्याच्चाह– **वयुनानि ज्ञानानीति** ।। 'वस आच्छादने' इति धातोराह– **वस्ते आच्छादयतीति** ।।

श्लोकः १

'ज्ञानान्याच्छादयति' इत्यस्य 'ज्ञानानि तिरोधापयति' इति विरुद्धमतिकृत्त्वादाह– **ज्ञानालङ्कृतेति** ।। भावप्रदीपिकायां तु वयुनानि प्रति वस्ते वसति ज्ञानविषयो भवति इति व्याख्यातम् । 'सुपर्णा' इत्यत्र द्विवचनस्य 'सुपां सुलुक्' इत्यादिना आकारादेशः । पृषोदरादिभावेन परशब्दान्त्यलोपः 'णो हि निर्वृतिवाचकः' इति वचनात् णकार आनन्दार्थ इति भावेन व्याचष्टे– **सुपर्णौ सुष्ठु परमानन्दाविति** ।। 'वृषु सेचने' इति धातोः 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इत्यौणादिके कनिन्प्रत्यये, 'वा षपूर्वस्य निगमे' इति पक्षे दीर्घाभावे, द्विवचनस्य पूर्ववदाकारे च 'वृषणा' इति रूपमिति भावेन तदर्थमाह– **वृषणा सेचकाविति** ।। सर्वाभीष्टानां वर्षितारावित्यर्थः । नन्वेकस्यां श्रीदेव्यां 'निषेदतुः निषण्णौ बभूवतुः' इत्युक्तम् । सङ्गतत्वं कथं द्वयोः पुरुषयोर्युज्यत इत्यत आह– **द्विरूपो भगवानेवेति** ।। तस्यां सङ्गतो भगवानेक एव । द्विवचनं तु गुहाधिकरणन्यायेन रूपद्वयाभिप्रायेणोपपन्नमिति नोक्तचोद्यमिति भावः । **यस्यां विषये** यामुद्दिश्येत्यर्थः । अनेन किं महामाहात्म्यमुक्तम् इत्यत आह– **अत्रेति** ।। 'चतुष्कपर्दा' इति श्रुतौ 'युवतिः' इत्यत्रावध्यनुक्तेर्नित्यतालाभ इति भावेनोक्तम्– **नित्ययौवनमिति** ।। 'वयुनानि वस्ते' इत्यस्य तात्पर्यम्– **ज्ञानमयत्वमिति** ।। 'यत्र देवा दधिरे भागधेयम्' इत्यस्य तात्पर्यम्– **सर्वदेवपूज्यत्वमिति** ।। **उत्तरत्र** 'अहं रुद्रेभिः' इत्यादि श्रुतौ ।

**भावदीपिका (श्री.टि.)– ।। अन्तवदिति** ।। भगवदन्यदेवतोपासनस्य प्रतीतमपि मोक्षसाधनत्वम् उपचरितम् इत्युक्तत्वादित्यर्थः । **इत्युक्तन्यायादिति** ।। यद्यपि 'योयो यांयां तनुम्' इति ब्रह्माद्यन्यदेवतोपासनस्यैव प्रकृतत्वेन तदुपासकानामेवान्तवत्फलत्वमुक्तम्, नाव्यक्तोपासकानाम् । तथाऽपि अव्यक्तभजनस्य अन्तवत्फलत्वमपि अत्राभिप्रेतम्, न्यायसाम्यादित्याशयः । **अत इति** । भगवदव्यक्तोपासनयोः मोक्षसाधनत्वाप्रतिपादकवाक्ययोः समबलत्वाभावादित्यर्थः । तेषां ब्रह्मादीनाम् ।। **असम्भवादिति** । तदुपासनस्य मोक्षसाधनत्वासम्भवादित्यर्थः । **वास्तवमेवेति** ।। नोपचरितमित्यर्थः । अतः सन्देहहेतुत्वं युक्तमित्याशयः । 'तेजो वै घृतम्', 'घृ क्षरणदीप्त्योः', 'प्रतीकं देह उद्दिष्टः' इति वचनमभिप्रेत्य 'दीप्ताङ्गी' इत्युक्तम् । 'सुष्ठु परः णः यस्य' इति विग्रहमभिप्रेत्योक्तं– **सुष्ठ्विति** ।। 'णश्च निर्वृतिवाचकः' इति वचनादिति भावः ।

नन्विमौ द्वौ कौ इत्यत आह– **द्विरूप इति** ।। 'गुहां प्रविष्टौ' इत्युक्तरीत्या

'आत्माऽन्तरात्मा' इति द्विरूपो भगवानेवात्रोच्यत इत्यर्थः । 'चतुष्कपर्दा' 'चतुःशिखण्डा' इति श्रुतिद्वये कपर्दशिखण्डाशब्दाभ्यां वेणीकृतकचभर उच्यत इति द्रष्टव्यम् । अत्र किं माहात्म्यमुक्तं तस्याः ? इत्यत आह– **अत्रेति** ।। 'युवतिः' इत्यनेन नित्ययौवनम्, 'वयुनानि वस्ते' इत्यनेन ज्ञानमयत्वम्, 'यत्र देवाः' इति सर्वदेवतापूज्यत्वं च प्रतीयत इत्यर्थः । उपलक्षणमेतत् । 'तस्याम्' इत्यनेन मुख्यतो हरिसन्निधानास्पदत्वं च प्रतीयत इति द्रष्टव्यम् । **एवमिति** ।। 'अहं रुद्रेभिः' इत्यादावपि यन्माहात्म्यमुच्यत इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– भाष्ये चतुष्कपर्देति ।।** यद्यपि कपर्दोस्य जटाजूट इत्यमरोक्तेः कपर्दशब्दो रुद्रजटाबन्धवाची तथाऽपि बाधाज्जटाबन्धमात्रपरः तथा च जटाबन्धचतुष्टयोपेतेत्यर्थः । एतच्च व्यासप्रतिमावदुन्नेयमित्याहुः । लक्ष्म्या जटावत्त्वं च व्याप्तजटां च बुद्ध्येति वक्ष्यमाणश्रुतिसिद्धम् । वेणीचतुष्टयवतीत्यर्थ इत्यप्याहुः ।। **दीप्ताङ्गीति** ।। घृ क्षरणदीप्त्योरिति धातोर्घृतशब्दो दीप्त्यर्थः । अङ्गं प्रतीकोऽवयव इत्यमरोक्तेः । प्रतीकशब्दोऽङ्गवाचीति भावः । **ज्ञानानीति** ।। माया वयुनं ज्ञानमिति प्रज्ञानामसु पाठादिति भावः । वस आच्छादन इति धातोराह– **आच्छादयतीति** ।। ज्ञानानां पटादिवदाच्छादनकर्मत्वाभावादाह– **ज्ञानेति** ।। **सुष्ठ्विति** ।। सुपर्णः सुपरानदादित्युक्तेरिति भावः । वृष सेचन इत्युक्तेराह– **सेचकाविति** ।। **उत्तरत्रेति** ।। चतुःशिखण्डेत्यत्रेत्यर्थः ।

## भाष्यम्

**'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः' इत्यारभ्य**

**'अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।**
**तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम् ।**
**मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ।**
**अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि ।**
**यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ।**
**अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ ।**
**अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे ।**
**परो दिवा पर एना पृथिव्यैतावती महिना सम्बभूव' (ऋ.१०.१२५)**

श्लोकः १

**इत्यादि च । 'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया' (म.ना.उ.१३.२) इति च ॥**

भावप्रदीपिका (प.टी.)– **चिकितुषी** कर्त्री । ज्ञानसाधनवस्तूनां सङ्गमनी । भूरिस्थानेषु नित्येष्वादितः । स्थात्राम् इति भूरि विशन्ती नु त्राणाय मां देवा अचिन्तयन् कया... स मयेत्यादि । मामवमन्तारः उपक्षयं नाशं प्राप्नुवन्ति ॥ प्रसिद्धं शृणु श्रियम् ॥

प्रमेयदीपिका (ज.टी.)– रुद्राद्यैः परिवृता । **राष्ट्री** राज्ञी । **यज्ञियानां** यज्ञार्हाणां **वसूनां** पदार्थानां देवानां वा **सङ्गमनी** सङ्गमयित्री । **प्रथमा चिकितुषी** अनादितः सर्वत्र कृतनिवासा । **पुरुत्र** पुरुस्थानेषु । **व्यदधुः** कृतवन्तः पूजार्थं प्रतिष्ठापितवन्तः । **भूरिस्थात्रां** स्वतो भूरिस्थानेषु स्थिताम् । देवानावेशयन्तीम् । 'योऽन्नमत्ति स मयैवात्ति' इत्त्यादि । ये **अमन्तवः** निरपराधास्ते **मामुपक्षयन्ति** मत्समीपे वसन्ति । **श्रुधि** शृणु । **श्रुतः** प्रसिद्धः । **श्रद्धिवं** श्रद्धेयम् । यमुग्रं रुद्रं कर्तुं कामये तं तमुग्रं कृणोमि करोमीत्यादि । **सुमेधां** सुमेधसम् । 'रुद्राय' इत्यादि चतुर्थी द्वितीयार्थे । **ब्रह्मद्विषे** संहारकाले ब्राह्मणादिसर्वप्राणिद्विषम् । यद्वा ब्रह्मद्विषां शरवे हिंसकं **हन्तवा** उ हन्तुमेव । **अस्य** जगतः पितरं हिरण्यगर्भं मूर्धनि सर्वाधिक्ये । **योनिः** कारणम् । 'दिवा' इत्यादि तृतीया पञ्चम्यर्थे । **एना** एतस्याः । **महिना** महिम्ना अहम् **तावती** एतावती सम्बभूव इत्यादिनोच्यते ॥

भावदीपः (रा.टि.)– ॥ इत्यादि चेति भाष्यस्य पूर्वेणान्वयमाह– इत्यादिनोच्यत इति ॥

वाक्यार्थप्रदीपः (पां.टि.)– ॥ **कृणोमि करोमीत्यादि** ॥ 'व्यत्ययो बहुलम्' इति विकरणव्यत्ययः । ततः श्नोरपित् सार्वधातुकत्वेन ङित्वात् तस्मिन् परतः क्ङिति च इति धातोः गुणनिषेधे मिपः पित्वेन ङित्वात् तस्मिन् परतः श्नोः गुणे कृणोमि इति रूपसिद्धिरित्यभिप्रेत्य करोमीति प्रतिपदोपादानम् ॥

**भावरत्नकोशः (सु.टि.)**– 'अहं रुद्रेभिः' इत्यादि महालक्ष्मीवाक्यम् । 'अम्भृणी

वागात्मानां तुष्टाव' इति वचनादिति ज्ञेयम् ।। 'रुद्रेभिः' इत्यस्य छन्दसि भिस ऐस्त्वाभावः । 'एकादशरुद्रैः उरुक्रमव्यतिरिक्तैरेकादशादित्यैः, दशभिर्विश्वेदेवैश्च चरामि' इत्युक्ते श्रीदेव्याः स्वव्यापारेषु चरणे रुद्रादीनां तृतीयया हेतुत्वं प्रतीतं बहुमानविरुद्धमिति 'सहयुक्तेऽप्रधाने' इति तृतीया, न पुनः 'हेतौ' इति भावेन तत्रापेक्षितमध्याहरति– **रुद्राद्यैः परिवृतेति** ।। परिवारभूतै रुद्रैः सह चरामीति तात्पर्यम् । 'राजृ दीप्तौ' इत्यतः 'ष्ट्रन् सर्वधातुभ्यः' इत्यौणादिके ष्ट्रन्प्रत्यये, व्रश्चादिलक्षणे जकारस्य षत्वे, 'ष्टुना ष्टुः' इति ष्टुत्वे, प्रत्ययस्य षित्त्वात् 'षिद्गौरादिभ्यश्च' इति ङीषि च 'राष्ट्री' इति रूपमिति भावेन तदनूद्यार्थमाह– **राष्ट्री राज्ञीति** ।। 'यज्ञार्हाणाम्' इति वदन् यज्ञशब्दाद् अर्हार्थे 'यज्ञर्त्विग्भ्यां घखञौ' इति घप्रत्यय इत्यभिसन्धत्ते । 'वसु तोये धने मणौ' इत्यभिधानेन वसुशब्दस्य धनवाचिनोऽपि सामान्य-वचनत्वमत्रेति भावेनाह– **वसूनां पदार्थानामिति** ।।

> 'आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि ।
> सर्वदेवसमाख्या स्याद् द्वादशाष्टादिकेष्वपि ।।'

इति शब्दनिर्णयानुरोधेनार्थान्तरमाह– **देवानां वेति** ।। सम्पूर्वाद् गमेः 'सङ्गम्यन्ते देवा अनया' इति करणे ल्युटि, सङ्गमनीशब्द इति भावेन तस्य फलितार्थमाह– **सङ्गमयित्रीति** ।। 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाद् अन्तर्णीतण्यन्ताद् गमेः कर्तरि ल्युटि 'सङ्गमनी' इति रूपम् इति तदर्थमाह– 'सङ्गमयित्री' इत्यपि आहुः ।। 'प्रथमा' इत्यस्य तात्पर्यम्– **अनादित इति** ।। 'चिकितुषी' इत्यस्यार्थः– **कृतनिवासेति** ।। **'सर्वत्र'** इति योग्यताबललब्धम् । 'कित निवासे' इति धातोर्लिटि तस्य 'क्वसुश्च' इति क्वस्वादेशे. 'लिटि धातोः' इति द्वित्वे, हलादिशेषे, 'कुहोः' इति ककारस्य चकारे, उगित्त्वात् ङीपि, 'वसोः संप्रसारणम्' इति वस्योत्त्वे, 'सम्प्रसारणाच्च' इति पूर्वरूपत्वे 'आदेशप्रत्यययोः' इति प्रत्ययावयवसकारस्य षत्वे च 'चिकितुषी' इति रूपमिति भावः ।

भावप्रदीपिकायां तु 'कित निवासे' इत्ययं करणेऽपि प्रवर्तत इति भावेन प्रवृत्तं 'कर्ता चिकित्वान्' इत्यृग्भाष्यं मनसि निधाय 'चिकितुषी कर्त्री' इति व्याख्यातम् । 'पुरुत्र पुरुस्थानेषु' इति वदन् 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति पुरुशब्दात् सप्तमीसमर्थात् तद्धितः त्राप्रत्यय इत्यभिप्रैति । विपूर्वाद् धाधातोः करोत्यर्थाल्लङि 'व्यदधुः' इति रूपम्, तदर्थः– **कृतवन्त इति** ।।

श्लोकः १

**'तां** तथाभूताम्, मा मां देवाः बहुषु स्थानेषु कृतवन्तः' इत्यस्य तात्पर्यम्– **पूजार्थं प्रतिष्ठापितवन्त इति** ।। 'भूरिस्थानेषु स्थिताम्' इति वदन् छन्दस्त्वात् त्रास्थावर्णयोः पौर्वापर्वव्यत्यासेन 'भूरिस्थात्राम्' इति पदम् इत्यभिसन्धत्ते । भूरिशब्दात् त्राप्रत्ययः 'देवमनुष्य' इत्यत्र बहुलग्रहणाद् 'बहुत्रा जीवतो मनः' इत्यादौ बहुशब्दादिवोत्पादनीय इति हृदयम् । भूरिशब्दात्परस्य सप्तमीबहुवचनस्य सुपः 'सुपां सुलुक्' इत्यादिना लुकि 'भूः' इति रूपम् । तस्यार्थः– **भूरिस्थानेष्विति** ।। 'देवान्' इति शेषः । **इत्यादीति** ।। यो विपश्यति विविधं पश्यति, प्राणिति चेष्टते । य एवोक्तं शृणोति स मयैव मदनुग्रहेणैव विपश्यतीत्येवं योज्यमित्यर्थः ।

'ते' इति श्रवणाद्यच्छब्दमध्याहरति– **ये इति** ।। 'आगोऽपराधो मन्तुश्च' इत्यभिधानात् मन्तुशब्दोऽपराधवचन इति तदर्थमाह– **अमन्तवो निरपराधा इति** ।। 'क्षि निवासगत्योः' इति धातोराह– **वसतीति** ।। भावप्रदीपिकायां तु माम् अमन्तवः अवमन्तारः, उपक्षियन्ति नाशं प्राप्नुवन्तीति व्याख्यातम् । 'श्रुशृणुपृकृवृभ्यः छन्दसि' इति हेर्धिः, विकरणाभावश्च, इति वेदे 'श्रुधि' इति रूपम् । तदर्थमाह– **शृण्विति** ।। वेदपदमनूद्यार्थमाह– **श्रुतः प्रसिद्ध इति** ।। 'ज्ञानभक्तिवैराग्यादिगुणसम्पन्नतया प्रख्यात' इति साधुवर्गसम्बोधनम् । 'श्रद्धिवम्' इति पदं 'श्रद्धेयम्' इति व्याकुर्वन् एकारस्य इकारः, यकारस्य वकारो विकार इत्यभिसन्धत्ते । **अहं** अग्रणीः, **स्वयं** साक्षात्, **इदं** वक्ष्यमाणं **वदामि** देवैर्मानुषैरपि **जुष्टं** सत्यमित्युपलालितम् । किं तत् ? इत्यत उच्यते– **यं कामय इति** ।। 'उग्रः कपर्दी श्रीकण्ठः' इत्यभिधानात् 'उग्रो भस्मधरो नग्नः कपालीति शिवस्य च विशेषनामानि' इति वचनाच्चाह– **उग्रं रुद्रमिति** ।। **कृणोमि** 'व्यत्ययो बहुलम्' इति विकरणव्यत्ययः, 'करोमि' इत्यर्थः । **इत्यादीति** ।। 'यं ब्रह्माणं कर्तुं कामये, यं च ऋषिं कर्तुं कामये, तं ब्रह्माणम् ऋषिं करोमि' इत्येवं योजनीय-मित्यर्थः । शोभना मेधा यस्यासौ तथेति बहुव्रीहौ 'नित्यमसिच् प्रजामेधयोः' इत्यसिच्-प्रत्ययविधानादाह– **सुमेधसमिति** ।। वेदे अमि पूर्वरूपमकृत्वा सवर्णदीर्घ एवाश्रित इति भावः । 'धनुरातनोमि ज्याकर्षणेन विस्तारयामि' इत्युक्तधनुरुन्मुक्तशरलक्ष्यत्वं घटयितुं तस्याग उच्यते– **संहारकाल इति** ।। विष्णुतत्त्वनिर्णयटीकायाम् 'पञ्चममुखच्छेदात् ब्रह्मद्विषम्' इति व्याख्यातम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति वचनमनुरुन्धानः, 'एकवचनं बहुवचनार्थे' इति भावेनाह– **ब्रह्मद्विषमिति** ।। 'शृ हिंसायाम्' इत्यतः कर्तरि उप्रत्यय इति भावेनोक्तम्–

**हिंसकमिति** ।। हन्तेः तुमर्थे तवैप्रत्ययः, उशब्दश्चैवार्थः, इति भावेनाह– **हन्तुमेवेति** ।। 'नतु भीषयितुम्' इत्येवकारतात्पर्यम् ।

**अहं** जनाय जनस्य, **समदं** हर्षं, **कृणोमि** करोमि । **अहं** द्यावापृथिवीपदोपलक्षितान् ऊर्ध्वाधर लोकान् धारणाय **आविवेश** । विशेः 'छन्दसि लुङ्लङ्लिटः' इत्यपरोक्षेऽपि लिट् । सर्वाधिक्ये सर्वोत्कृष्टतयेति यावत् । **सुवे** जनयामि । न केवलं पदे स्थापयामि । एवंभूतायाः ममापि **योनिः** कारणं **समुद्रे अप्सु** अपामन्तस्तिष्ठति । स्त्रीणां पतिनामग्रहणमनुचितम् इति शिक्षणाय 'नारायणः' इत्यनुक्त्वा 'आपो नाराः' इत्यादिनोक्तं तदर्थमेवाहेति विष्णुतत्वनिर्णय-टीका ।। स्वात्मानं प्रति नारायणस्य कारणत्वमुपपादयितुम् उक्तम्– **ततो वितिष्ठ इति** ।। यस्मादहं **ततः** परमेश्वराद् **वितिष्ठे** उत्थिता उत्पन्ना, तस्माद् असौ मम योनिः । अहं तु **विश्वानि** भुवनानि तद्विवरणम् **अमुं द्याम्** उपरितनलोकान् **उत** अधस्तनलोकांश्च **वर्ष्मणा** बलेन शरीरेण च **उपस्पृशामि** वशीकरोमि व्याप्नोमि च इत्यृग्भाष्यटीका । 'अहं विश्वानि भुवनानि आभरमाणोऽपि वातो वायुरिव प्रवामि 'वा गतिगन्धनयोः' सञ्चरामि । सर्वमुत्पाद्य तत्र वर्तमानाऽपि तद्दोषलिप्ता न भवामि इति तात्पर्यमिति स्वामिनः ।

उक्तं स्वमाहात्म्यं भगवदाधिक्योक्तिपूर्वकम् उपसंहरन्तं 'परो दिवा' इत्यर्धर्चं व्याचष्टे– **'दिवा' इत्यादीति** ।। 'सुपां सुपो भवन्ति' इति वक्तव्यादिति भावः । योऽयं मम योनिरन्तः समुद्र उक्तो भगवान् स दिवः परः उत्तमः । 'द्वितीयाटौस्स्वेनः' इति तृतीयैकवचने एतच्छब्दस्य एनादेशे, टायाश्च डादेशे निष्पन्नस्य 'एना' इत्यस्य 'एनया' इत्यर्थे तृतीयायाः पञ्चम्यर्थत्वात् तदनूद्यार्थमाह– **एना एतस्या इति** ।। 'परः' इत्यन्वयः । **एतावती** परिमिता **सम्बभूव**, पूर्ववत् अपरोक्षेऽपि लिटि सम्भूतवतीत्यर्थः । 'इत्यादि च' इति भाष्यपदमनूद्य तस्य 'वेदेषूच्यते' इत्यत्रत्येन 'उच्यते' इत्यनेनान्वय इत्याह– **इत्यादि चोच्यत इति** ।। 'त्वया जुष्टः' इति भाष्योपात्तश्रुतौ 'मेधा देवी जुषमाणा, न आगात्' इति पूर्वमन्त्रे प्रकृता मेधाशब्दितज्ञानस्वरूपा श्रीदेवी 'देवि' इति सम्बोध्यते । हे देवि त्वया **जुष्टः** अनुगृहीतः **पुमान्** ऋषिः ज्ञानी भवति । त्वया जुष्टः पुमान् **ब्रह्म** ब्रह्मपदवीम् आरूढो भवति । त्वया **जुष्टः आगतश्रीः** त्वया जुष्टः प्राप्तसम्पत्तिः भवतीति ब्रह्मादिपददातृत्वमाहात्म्यं प्रतीयत इति **प्रकृतसिद्धिः** ।

श्लोकः १

**भावदीपिका (श्री.टि.)–** 'अहं रुद्रेभिः' इत्यादि महालक्ष्मीवाक्यम् । 'अम्भ्रणी वागात्मानां तुष्टाव' इति वचनादिति ज्ञेयम् ।। 'रुद्रेभिः' इत्यादेरर्थमाह– **रुद्राद्यैरिति** ।। 'रुद्रेभिः' इत्यत्र भिस ऐस्त्वाभावश्छान्दसो द्रष्टव्यः । **राज्ञीति** ।। 'राजृ दीप्तौ' इति धातोः 'दीप्ता' इत्यर्थः । **सङ्गमयित्रीति** ।। यजमानं प्रति प्रापयित्रीत्यर्थः । 'कित निवासे' इति धातुमभिप्रेत्याह– **कृतनिवासेति** ।। **पुरुत्रेति** ।। 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति पुरुशब्दात् द्वितीयासप्तम्योस्त्रादेशो विहितः । यथा 'पुरुत्रा वन्दे पुरूणि वन्दे' इत्यर्थः । 'पुरुत्रा रमे पुरुस्थानेषु रमे' इत्यर्थ इत्युदाहृतत्वाच्चेति द्रष्टव्यम् । स्थाधातोः ष्ट्रन्प्रत्यये सति 'स्थात्रा' इति भवतीत्याशयेनाह– **भूरिस्थानेषु स्थितामिति** ।। करवीरप्रभृतिक्षेत्रेष्वित्यर्थः । तथा च 'भूरिस्थात्राम्' इत्यस्य भूरिषु स्थानेष्वित्यर्थः । 'स्थिताम्' इति शेषोक्तिरिति द्रष्टव्यम् । **इत्यादीति** ।। 'यो विपश्यति स मयैव मत्प्रेरणयैव' इत्यादि द्रष्टव्यमित्यर्थः । **वसन्तीति** ।। 'क्षि निवासगत्योः' इति भावः । **श्रद्धेयं** यत्र वस्तुनि यस्य श्रद्धा तदित्यर्थः । **यद्वा ब्रह्मद्विषमिति** ।। चतुर्मुखपश्चममुखच्छेत्तृत्वात् तद्वैरिणमित्यर्थः । **हिंसकमिति** ।। 'शृ हिंसायाम्' । ब्रह्मद्विट्त्वादेव हिंसकमित्यर्थः ।**सर्वाधिक्य इति** ।। सर्वाधिक्यतया सुवे इत्यर्थः । **एतावती** परिच्छिन्ना । **इत्यादि चेच्यत इति** ।। रुद्रादिपरिवृतत्वसर्वदेवताप्रतिष्ठाप्यत्वरुद्रादिपददातृत्वब्रह्मोत्पादकत्वादिरूपं महन्माहात्म्यं तस्या उच्यत इत्यर्थः । 'त्वया जुष्टः' इति वाक्यस्यायमर्थः । लक्ष्मीं प्रति वेदपुरुषो वक्ति हे देवि! त्वया **जुष्टः** 'जुषी प्रीतिसेवनयोः' इति धातोः त्वत्प्रीतिविषयो यः स **ऋषिः** ज्ञानी भवति । किञ्च त्वया जुष्टो ब्रह्मा भवति । किञ्च त्वया गतश्रीश्च भवति । 'त्रयो वै गतश्रियः श्रुश्रुवान् ग्रामणी राजन्यः' इति यजुर्वेदवचनात् । श्रवणशीलो ब्राह्मणः श्रुश्रुवान्, ग्रामे कुसीदादिना स्वजीवनं नयतीति ग्रामणीः वैश्यः, राजन्यः क्षत्रिय इत्येते त्रयो गतश्रीशब्दवाच्याः । तथा च ब्राह्मणादिवर्णत्रयं त्वयैव भवतीत्यर्थः । वेदाध्ययनरूपासाधारणधर्मवत्तया त्रयाणामेव ग्रहणम्, 'असाधारण्येन व्यपदेशा भवन्ति' इति द्रष्टव्यमिति सम्प्रदायविदः । 'ब्रह्मा गतश्रीर्भवति' इति व्याख्यानं तु तृतीयस्य 'त्वया' इत्यस्य वैयर्थ्यापत्त्या चिन्त्यम् ।

**भावप्रकाशः (कृ.टि.)–** अहं रुद्रेभिरित्यर्थस्य तात्पर्यार्थमाह– **रुद्राद्यैः परिवृतेति** ।। राजतेऽसाविति राष्ट्री । राजृ दीप्तावित्यतः कर्मणि ष्ट्रन्नित्याद्युक्तत्वेऽपि धात्वन्तरादपि अर्थान्तरेऽपि बाहुलकात् ष्ट्रन् । औणादिको वा । ततो व्रश्चेति षत्वे षित्वात् ङीषि च राष्ट्री

इति रूपम् । एवञ्च राज्ञी इत्यर्थात् लभ्यत इत्याशयेनोक्तम्– **राष्ट्री राज्ञीति** ।। **यज्ञार्हाणा-मिति** ।। यज्ञर्त्विग्भ्यां घखञाविति यज्ञशब्दादर्हार्थे घप्रत्ययो घस्येयादेशश्चेति भावः । आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि । सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपीति शब्द-निर्णयानुसारेणाह– **देवानां चेति** ।। प्रथमेत्यस्यार्थः– **अनादित इति** । सर्वत्रेति योग्यतया लभ्यते । चिकितुषीत्यस्यार्थः– **कृतनिवासेति** । कित निवासेति धातोर्लिट् तस्य क्वसुश्चेति क्वसुरादेशः । लिट्कार्यं द्वित्वं अभ्यासचर्त्वं च, उगित्वात् ङीपि वसोः सम्प्रसारणमिति सम्प्रसारणम्, सम्प्रसारणाच्चेति पूर्वरूपञ्च ततश्चिकितुषी इति रूपमिति भावः । **पुरुस्थाने-ष्विति** ।। बहुस्थानेष्वित्यर्थः । देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योः बहुलमिति पुरुष-शब्दात् त्राप्रत्यय इति भावः । 'आगोऽपराधो मन्तुश्च' इत्यमरोक्तेराह– **निरपराधा इति** ।। द्वेषाद्यपराधरहिता इत्यर्थः । क्षियन्तीत्यस्यार्थः– **निवसन्तीति** । क्षि निवासगत्योरिति धातोरिति भावः । 'नित्यमसिच्प्रजामेधयोः' इति मेधाशब्दान्तबहुव्रीहेरसिच्प्रत्ययोक्तेराह– **सुमेधसमिति** ।।

## भाष्यम्

**इति शङ्का कस्यचिद् भवति । अतो जानन्नपि सूक्ष्मयुक्तिज्ञानार्थं पृच्छति– एवमिति ।। एवंशब्देन दृष्टश्रुतरूपं 'मत्कर्मकृत्' (११.५५) इत्यादिप्रकारश्च परामृश्यते । अव्यक्तं प्रकृतिः । 'महतः परमव्यक्तम्' (कठ. ३.१२) इति प्रयोगात् ।**

> **'यत् तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।**
> **प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' (भाग.३.२७.११)**

**इति च भागवते । अक्षरं च तत् । 'अक्षरात् परतः परः' (आथर्वण. २.१.२) इति श्रुतेः ।**

भावप्रदीपिका (प.टी.) इत्यव्यक्तोपासनस्यापि मोक्षसाधनत्वप्रतीतेः किमधिकम् ? इति शङ्का कस्यचिद् भवति । तां परिहर्तुं पृच्छति– **सूक्ष्मेति** ।। कारणान्तरम् । एवंशब्देन सततयुक्तत्वं परामृश्यत इति शङ्कां निराकरोति– **एवमिति** ।। तथा चैवम्भूतं त्वामेवमुपासत इत्यर्थो भवति ।

श्लोकः १

**प्रमेयदीपिका** (ज.टी.)– भवत्वेवं ततः किम्? असन्दिग्धतया भगवन्तमेवोपासीनस्यार्जुनस्य कथमयं संशयः ? येनैवं पृच्छतीत्यत आह– **इतीति** ।। यत एवं भगवदुपासनस्येवाव्यक्तोपासनस्यापि विनोपचारेण मोक्षसाधनत्वं प्रतीयत इति तस्मात् मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठाः? इति साधकबाधकप्रमाणाभावेन शङ्का संशयः कस्यचिद् अविदिततत्त्वस्य भवति । अतस्तदनुजिघृक्षया भगवदुपासका एव श्रेष्ठा इति जानन्नप्यर्जुनः पृच्छतीत्यर्थः ।।

अथवा जानन्नपि तत्र स्वाविदितयुक्तिज्ञानार्थं संशयमाहृत्य पृच्छतीत्याह– **सूक्ष्मेति** ।। योग्यतावशाद् एवम्भूतं त्वामेवं प्रकारेणोपासत इत्युभयत्रैवंशब्दस्यअन्वय इत्याशयवान् आह– **एवमिति** ।। दृष्टं श्रुतं च रूपं यस्य ब्रह्मणः तत्तथा । अव्यक्ताक्षरशब्दयोरपव्याख्यानं निराकर्तुमर्थं तावदाह– **अव्यक्तमिति** ।। प्रकृतिश्चेतना । त्रिगुणं त्रिगुणाभिमानित्वात् । सदसदात्मकं कार्यकारणाभिमानित्वात् । अविशेषम् अकार्यम् । ततः प्रधानं प्राहुः । विशेषवत् कार्यवत् । ततः प्रकृतिं प्राहुः । तत् प्रकृत्याख्यं तत्वम् । परतः परः अत्युत्तमः । अत्र **'अव्यक्तम्'** इति विशेष्यवाची । **'अक्षरम्'** इति विशेषणवाची । **'अव्यक्तासक्तचेतसाम्'**,**'अव्यक्ता हि गतिः'** इत्यादिवचनात् । अतो व्युत्क्रमेण व्याख्यानम् । विशेषणोपादानं च देवतान्तरवैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थम् । एतदेव भाष्यकृता 'महच्च' इत्यादिना प्रपञ्चितम् ।।

**भावबोधः** (र.टि.)– ननु 'ये चाप्यक्षरमव्यम्' इति गीताक्रममुल्लङ्घ्याव्यक्तशब्दस्यादावक्षरशब्दस्य चान्ते व्याख्यानं किमर्थमित्यत आह–**अन्ते इति** ।। ननु येचाव्यक्तमित्येव वक्तव्यम् । अक्षरमिति अव्यक्तविशेषणं गीतायां किमर्थमित्यत आह– **विशेषणोपादानमिति** ।। देवतान्तरवैलक्षण्ये सिद्धे देहनाशाभावरूपवैलण्येत्यर्थः । **प्रपञ्चितमिति** ।। अक्षरमित्युपलक्षणमित्यभिप्रेत्येति भावः ।

**भावदीपः** (रा.टि.)– ।। 'त्वयेति च' इति भाष्यस्य 'तदुपासनमपि मोक्षसाधनं प्रतीयते' इति पूर्वभाष्येण अन्वयमुपेत्यार्थमाह– **यत एवमिति** ।। इतिपदानुवादेनार्थमाह– **इति तस्मादिति** ।। पञ्चम्यन्ताक्षरशब्दस्य चित्प्रकृतित्वलाभाय 'परतः परः' इत्यस्याभिप्रेतार्थमाह–

**अत्युत्तम इति** ।। गीतास्थयोरक्षराव्यक्तशब्दयोर्व्युत्क्रमेण व्याख्याने बीजमाह– **अत्राव्यक्त-मितीति** ।। **देवतान्तरेति** ।। ब्रह्मादिदेवतोपास्तेर्मुक्तिहेतुत्वस्योपचरितत्वेऽपि नाव्यक्तोपास्ते-स्तथात्वमिति वैलक्षण्येत्यर्थः ।। **एतदेवेति** ।। अक्षरपदप्रदर्शितं वैलक्षण्यमेवेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– एवम् उक्तरीत्या देव्या माहात्म्यं भवतु, ततः किम् । न किमपि सिध्यतीति उक्तमेवोपपाद्यते– **असन्दिग्धतयेति** ।। भाष्यगतेतिशब्दस्य हेत्वर्थत्वं संशयप्रकारसमर्थकत्वं च स्फोरयितुमाह– **यत एवमिति** ।। प्रकारार्थमाह– **के श्रेष्ठा इतीति** ।। **तदनुजिघृक्षया** अविदिततत्त्वपुरुषानुग्रहेच्छया । अधिष्ठानयाथात्म्यनिश्चयवतोऽपि अविदिततत्त्वलोकानुजिघृक्षया प्रश्न इति प्रश्नोपपत्तिमुक्त्वा, प्रकारान्तरेणापि प्रश्नोपपत्तिं भाषत इत्याह– **अथवेति** ।। **तत्र** स्वविदिते 'भगवदुपासका एव श्रेष्ठाः' इत्यर्थे । **योग्यतावशात्** प्रतीतान्वयस्य प्रमाणविरोधाभावो योग्यता, तद्वशात् । दृष्टं श्रुतं च यद्रूपं तद् एवंशब्देन परामृश्यत इति कर्मधारये गीतायां प्रथमान्तस्यान्वयाभावः । बहुव्रीहिपक्षे दृष्टश्रुतरूप इति गीतानुसारेण पुंलिङ्गत्वापत्तिः इत्याशङ्क्य बहुव्रीहिपक्षमङ्गीकृत्य तत्रोक्तं दोषं परिहर्तुमाह– **दृष्टं श्रुतं रूपं यस्य ब्रह्मणः तत् तथेति** ।। 'एवं एवम्भूतं दृष्टश्रुतरूपयुक्तब्रह्मशब्दवाच्यार्थाभिन्नं त्वामुपासते' इति गीतायामन्वय इत्याशय इति भावः ।

'प्रयोगात्' इति भाष्ये महतः परत्वलिङ्गेन पुरुषावरत्वलिङ्गेन चाव्यक्तशब्देन चेतनप्रकृतिरेव ग्राह्येति भावः । श्रीदेव्यां त्रिगुणत्वादिकम् अभिमान्यधिकरणन्यायेन घटयति– **त्रिगुण-मित्यादिना** ।। अविशेषत्वं प्रधानशब्दवाच्यत्वे, विशेषवत्त्वं प्रकृतिशब्दवाच्यत्वे हेतुरिति भावेनोक्तम्– **तत इत्यादिना** ।। भाष्ये 'भागवते' इत्यतः परं 'प्रयोगादव्यक्तं प्रकृतिः' इत्यनुवृत्त्या योज्यम् । 'प्रकृतिः' इति प्रकृतत्वेऽपि क्लीबत्वं घटयितुमाह– **प्रकृत्याख्यं तत्त्वमिति** ।। श्रीतत्वमित्यर्थः । नानेन वचनेन श्रीतत्वस्याक्षरशब्दार्थत्वं सिध्यति । 'अक्षरात्परं किञ्चिद्वस्तु, ततोऽपि भगवान्' इत्येवात्र प्रतीतेः इत्यतो व्याचष्टे– **परतः परोऽत्युत्तम इति** ।। प्रथमान्तात् तसिना 'परः परः' इति लाभे शब्दाधिक्यादर्थे अत्यतिशयो लभ्यत इति भावः । 'अक्षरात् परतः' इति पञ्चम्योः सामानाधिकरण्ये जडप्रकृत्यादेरुत्तमाच्छ्री-तत्वात् पर इत्युक्ते अत्युत्तम इति लभ्यत इति भावेनेयमुक्तिरित्यपि आहुः । अदृश्य-त्वाधिकरणसूत्रभाष्यादौ तु 'अक्षरात् परतः' इत्यत्र अक्षरशब्दो जडप्रकृत्यर्थो व्याख्यातः ।

श्लोकः १

'इति च श्रुतेः' इति भाष्ये चशब्देन 'कूटस्थोऽक्षर उच्यते' 'लक्ष्मीरक्षरदेहत्वाद् अक्षरा; तत्परो हरिः' इत्यादिवचनसमुच्चय इति आहुः ।

ननु 'ये चाप्यक्षरमव्यक्तम्' इति गीताक्रमानुसारेण अक्षरशब्दं व्याख्यायाव्यक्तशब्दो व्याख्यातव्यः । तत्कुतो व्युत्क्रमेण व्याख्यानम् इत्यतस्तत्र बीजं वक्तुमाह– **अत्रेति** ।। वैपरीत्ये नियामकमाह– **अव्यक्तासक्तेति** ।। अतः विशेष्यसमर्पकतया प्राधान्यात् । ननु 'अव्यक्तोपासकाः श्रेष्ठाः, भवदुपासका वा' इति प्रश्नकरणसम्भवात्, किम् 'अक्षरम्' इति विशेषणोपादानकृत्यम् ? इत्यत आह– **विशेषणोपादानं चेति** ।। **देवतान्तरवैलक्षण्येनेति** ।। अक्षरदेहत्वं ह्यक्षरशब्दप्रवृत्तिनिमित्तम् । तच्चाव्यक्तशब्दितश्रीदेव्यामेव, 'लक्ष्मीरक्षरदेहत्वादक्षरा' इति वचनात् । ब्रह्मादिदेवतान्तरस्य तु नाक्षरदेहत्वम्, 'ब्रह्मा शिवः सुराद्याश्च शरीरक्षणात् क्षराः' इति वचनात् । तथा च 'इतरविलक्षणमहिमश्रीदेव्युपासकाः श्रेष्ठाः' इति प्रश्नः सम्भवतीति । तत्सम्भावनार्थं विशेषणमुपात्तमित्यर्थः । तर्हि देवतान्तरवैलक्षण्यस्य गीतायामेव स्पष्टमावेदनात् प्रश्नसम्भावनार्थं 'महच्च माहात्म्यम्' इत्यादि भाष्ये व्यर्थम् इत्यत आह– **एतदेवेति** ।। अक्षरशब्देन इतरमाहात्म्यम् उपलक्षणतया गृहीत्वा तस्य नानाश्रुत्यादिप्रदर्शनेन विभावनात् 'प्रपञ्चितम्' इत्युक्तम् ।

**भावदीपिका (श्री.टि.)**– ।। **मार्गद्वयेनेति** ।। अव्यक्तोपासनभगवदुपासनरूपमार्गद्वयेनेत्यर्थः । **साधकबाधकेति** ।। केषाञ्चिच्छ्रेष्ठत्वसाधकम्, तदनङ्गीकारे बाधकं च प्रमाणं नास्तीति साधकबाधकप्रमाणाभावे संशयस्य न्यायप्राप्तत्वादित्यर्थः । **आहृत्येति** ।। बुद्धिपूर्वकं स्वस्मिन्नाहृत्येत्यर्थः । तथा चाहार्यसंशयोऽयमिति भावः । **योग्यतावशात्** अर्थाबाधवशात् । **निराकर्तुमिति** ।। 'परं तु ब्रह्म' इत्यत्रेत्यर्थः । ननु 'ये चाप्यक्षरमव्यक्तम्' इति गीताक्रममुल्लङ्घ्य अव्यक्तशब्दस्यादौ, अक्षरशब्दस्यान्ते व्याख्यानं किमर्थम् इत्यत आह– **अत्रेति** ।। 'अतस्तदेव प्रधानम्' इति शेषः । **विशेषणेति** ।। 'अतस्तदप्रधानम्' इति शेषः । प्राधान्यमेवोपपादयति– **अव्यक्ता हीति** ।। **इत्यादिवचनादिति** ।।

विशेष्यवाच्यव्यक्तपदस्यैवोत्तरत्रानुवृत्तेः इत्यर्थः । ननु 'ये चाप्यव्यक्तम्' इत्यनुक्त्वा 'अक्षरम्' इत्यव्यक्तविशेषणं कस्मादुपात्तम्? इत्यत आह– **विशेषणेति** ।। 'य त्वां पर्युपासते', 'ये चापि ब्रह्मान्यदेवतास्तेषां के योगवित्तमाः?' इति प्रश्नमकृत्वा 'ये

चाप्यक्षरमव्यक्तम्' इत्यव्यक्तोपासकोत्तमत्वविषयक एव प्रश्नः कुतः ? इत्याशङ्कापरिहाराय 'लक्ष्मीरक्षरदेहत्वादक्षरा' इत्युक्तदहनाशाभावरूपदेवतान्तरवैलक्षण्येन तद्विहाय अव्यक्तोपासकोत्तमत्वविषयप्रश्नस्य सम्भवार्थं विशेषणोपादानमित्यर्थः । **एतदेवेति ।।** अक्षरशब्दोक्तदेवतान्तरवैलक्षण्यमेवेत्यर्थः ।

**भावप्रकाशः (कृ.टि.)–** पृच्छतीत्यत्र सूक्ष्मयुक्तिज्ञानार्थमित्येतद्धेत्वन्तरमिति भावेनाह– **अथवेति ।।** ननु दृष्टं च श्रुतं यद्रूपं दृष्टश्रुतरूपमिति यदि कर्मधारयः तदैवंशब्दो विशेष्यपर इत्यापन्नम् । तथाच गीतायामनन्वयः । पर्युपासनस्य द्विकर्मत्वाभावात् । एवम्भूतमित्युक्तविशेषणालाभाच्चेत्यत आह– **दृष्टं श्रुतश्चेति ।।** जडप्रकृतिग्रहणे प्रश्नो लक्ष्म्युपासनविषयो न स्यादित्यत आह– **चेतनेति ।।** अभिमानिव्यपदेश इति न्यायेन लक्ष्म्यां त्रिगुणत्वादिकं घटयति– **त्रिगुणमित्यादिना ।।** ननु येचाप्यक्षरमव्यक्तम् इति पाठक्रमादक्षरशब्दं व्याख्यायाव्यक्तशब्दो व्याख्येयः । तत्कुतो व्युत्क्रम इत्यत आह– **अत्रेति ।। देवतान्तरवैलक्षण्येति ।।** अक्षरशब्देन देहनाशाभावोक्तेः तस्य च देवतान्तरेऽभावादिति भावः । तर्हि देवतान्तरवैलक्षण्यस्य गीतायामेवोक्तत्वात् प्रश्नसम्भावनार्थं महच्चेत्यादिभाष्येण वैलक्षण्योक्तिव्यर्थेत्यत आह– **एतदेवेति ।। प्रपञ्चितमिति ।।** अक्षरशब्दोपलक्षितमाहात्म्यप्रतिपादनात्प्रपञ्चनम् ।।

## भाष्यम्

**परं तु ब्रह्म न हि भगवतोऽन्यत् । 'आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे' (२.२.३४) इति भागवते ।**

**प्रमेयदीपिका (ज.टी.)– अन्ये तु 'ये त्वां भगवन्तं वासुदेवमुपासते ये चाप्यक्षरमव्यक्तं परं ब्रह्म तेषां के योगवित्तमाः' इति व्याचक्षते । तदसदित्याह– परं त्विति ।। 'आनन्दम्' इत्यादेः पूर्वेणोत्तरेण चान्वयो द्रष्टव्यः । तथाच ये त्वां पर्युपासते ये च त्वामित्युक्तं स्यात् । तथा चोन्मत्तप्रलापत्वप्रसङ्ग इति भावः ।।**

**भावबोधः (र.टि.)– ।। पूर्वेणोत्तरेण चान्वय इति ।।** 'उपैति शान्तिमानन्दम्' इति पूर्वेण वासुदेवे एतां गतिमित्युत्तरेण चेति भागवतगतेन चोत्तरेण चान्वय इत्यर्थः ।।

**भावदीपः (रा.टि.)– ।। पूर्वेणोत्तरेण चेति ।।** द्वितीयस्कन्धे द्वितीयाध्याय एव

श्लोकः १

'उपैति शान्तिमानन्दम्' (भाग २.२.३४) इति पूर्वेण 'एतां गतिम्' इत्युत्तरेणेत्यर्थः ।। अयमर्थः । देवानां स्वस्वोत्तमदेवप्राप्तिद्वारा भगवति सायुज्यमुक्त्युक्तिप्रस्तावे 'तेनात्मना आत्मानमुपैति शान्तिम्' इति पूर्ववाक्ये हरिः शान्तिशब्दितचित्प्रकृतिस्थम् आनन्दमात्मानं स्वात्मानमेव तेनात्मना विरिञ्चेन सहोपैति । स आनन्दमयः पूर्णानन्दो हरिः द्विपरार्धावसाने सर्वान्तर्यामिणि ब्रह्मणि स्वमूलरूपमुपैति । एवं स्वस्वबिम्बद्वारेण हरिं प्रविष्टानामपुनरावृत्तिः। एतां गतिं भगवतो गतिं गतो यः स वै 'पुनर्नेह विषज्जते अङ्ग' इति उत्तरवाक्येणोच्यते । यो भागवतो वासुदेवे एतां सायुज्यलक्षणां गतिं गतः सः इह संसारे न विषज्जत इति । तथाच अपुनरावृत्तिप्राप्तिहेतुः वासुदेवः कथं न परब्रह्मेति भावः ।।

**भावरत्नकोशः (सु.टि.)–** 'परं तु ब्रह्म भगवतो वासुदेवादन्यदस्ति । तद्विषयौ च पूर्वोत्तरार्धौ' इति शङ्करव्याख्यानं न युक्तम् । यतो भागवते परब्रह्मवासुदेवयोरभेद एव आवेदित इति भाष्यार्थः स्फुटत्वान्नोक्तः । ननु भागवतवाक्यम् अन्वयाभावेनाबोधकत्वादमानम् इत्याशङ्क्याह– **आनन्दमित्यादेः पूर्वेणोत्तरेण चान्वयो द्रष्टव्य इति** ।। 'आनन्दम्' इति द्वितीयान्तपदस्य 'तेनात्मनाऽऽत्मानमुपैति शान्तिम्' इति पूर्वश्लोकगतेन 'शान्तिम् आनन्दमुपैति' इति क्रियापदेनान्वयः । 'आनन्दमयः' इति प्रथमान्तपदस्य 'वासुदेवे एतां गतिं गतो नेह विषज्जते' इति तत्तात्पर्यनिर्णयोक्तरीत्या उत्तरार्धे श्रुतेन 'न विषज्जते' इति क्रियापदान्तेनान्वय इत्यर्थः ।

तथा चायं श्लोकार्थः– 'स भूतसूक्ष्मेन्द्रियसन्निकर्षात्' इति पूर्वश्लोके 'सः' इति परामृष्टो भगवान् ज्ञानी च विज्ञानतत्वं विज्ञानतत्वाभिमानिदेवतागतं विज्ञाननामानं याति । तेन विज्ञानतत्वं गतेनात्मना भगवता, गुणसन्निरोधं गुणानां सत्वरजस्तमसां सम्यग् अत्यन्तं निरोधः वैधुर्यं यस्मिन् तम् निर्गुणम् आत्मानं भगवन्तं याति, तेनात्मना शान्तिं शान्तिशब्दवाच्यचित्प्रकृतिस्थितम् आनन्दम् आनन्दनामानम् आत्मानं भगवन्तमुपैति । तथा च आनन्दमयः भगवत्प्रसादोद्रिक्तपरमानन्दमूर्तिः सन् अवसाने द्विपरार्धावसाने सर्वात्मके सर्वान्तर्यामिरूपाभिन्ने, बृंहणात् स्वस्य योग्यतानुसारेण भक्तानां बृंहयितृत्वाच्च ब्रह्मशब्दवाच्ये वासुदेवे एतां ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवं परमात्मानम् आविश्य वारिस्थम् तत्समन्विताः अग्निस्थं तद्युताश्चैव तेन नीताश्च वायुगं नभोगतं तेन नीताः मनःस्थं तद्युतास्तथा ततो बुद्धिस्थम् ईशेशं

ततोऽहङ्कारगं हरिं , ततो विज्ञाननामानं महत्तत्वगतं हरिं तत आनन्दनामानम् अव्यक्तस्थं जनार्दनं प्राप्ता नावृत्तिमायान्तीति शास्त्रोक्तां गतिं सायुज्यलक्षणां मुक्तिं गतः । 'गत्यर्थाकर्मक' इत्यादिना गमेः कर्तरि क्तः, गतवान् यो भागवत आत्यन्तिकभगवद्भक्तिमान् स ज्ञानिजीवः पुनरिह संसारे न विषज्जते नावर्तत इति यावत् । वैशब्दात् 'न स पुनरावर्तते' इति श्रुतिप्रसिद्धिमाहेति ।

भागवतटीकायां तु– ''आनन्दमयः पूर्णानन्दो विष्णुः सर्वात्मके सर्वान्तर्यामिणि ब्रह्मणि स्वमूलरूपे 'विहरति' इति शेषः । इत्येषा देवानां मुक्तिरिति भावः । एवं स्वस्वबिम्बद्वारेण भगवन्तं प्रविष्टानां पुनरावृत्तिर्नास्तीत्याह– **वासुदेव इति** ।। यो भागवतो आत्यन्तिकभक्तः वासुदेवे एतां सायुज्यलक्षणां गतिं गतः स ब्रह्मादिजीवसङ्घः न विषज्जते । वैशब्देन आनन्द-सञ्ज्ञकेनापि ब्रह्मणा न जीवस्यैक्यम्, समुद्रे प्रविष्टनदीवदिति दर्शयति'' इति व्याख्यातम् । दीपिकायां तु गुणसन्निरोधं निर्गुणं वासुदेवमिति तात्पर्ये द्वितीयान्तं पूर्वान्वितमेकं वाक्यम् । 'एतां गतिं गतो नेह विषज्जते' इत्यपरं वाक्यमिति, वाक्यद्वयं पठित्वा तद्द्वयं चोपपादितोप-पादकपरतया व्याख्याय भागवतगतसप्तम्यन्तवासुदेवपदस्य 'प्रविशति' इत्यध्याहृतक्रियापदेनान्वय इत्युक्तम् ।

एवं च भागवते भगवतो वासुदेवस्यैव परब्रह्मत्वावेदनान्न परव्याख्यानं शोभां बिभर्तीति भाष्यभाव इत्याह– **तथा चेति** ।। **उन्मत्तप्रलापत्वप्रसङ्गः** अर्जुनप्रश्नस्य । 'अशब्दमस्पर्श-मरूपमव्ययम्' इत्यादिश्रुतेरिति ।। यद्यप्यत्र श्रुतौ रूपशब्दः शब्दस्पर्शप्रायपाठात् शुक्लपीतादि-गुणवाचकः । तथा च तत्वप्रकाशिका 'शब्दादिगुणशून्यम्' इति । एवंच विग्रहाभावे नेदं प्रमाणं भवति । तथापि महत्त्वसमानाधिकरणोद्भूतरूपाभावे करचरणादिमद्देहवत्त्वम् अयुक्तमेव इत्येतत् श्रुतिसामर्थ्यादवगन्तव्यमिति भावः । 'स्वभावाकृतिसौन्दर्यवपुष्षु श्लोकशब्दयोः रूपम्' इत्यभिधानाद् अत्र रूपशब्दः आकारार्थश्चेति भावेन वा अत्रैतच्छ्रुत्युदाहरणम् । आदिपदेन 'अपाणिपादो जवनः' 'तदपाणिपादम्' इत्यादिश्रुतिपरिग्रहः । **एतत्** उन्मत्तप्रलापत्वप्रसञ्जनम् । **'ईदृशम्'** इति भाष्यपदस्य 'करचरणादिमत्' इत्यर्थः । 'पुरस्तात्' इत्यत्र भाष्ये कथमन्यथा सर्वपुराणादिप्रसिद्धाकृतिर्भगवत उपपद्येत । 'न चान्यद् भगवत उत्तमं ब्रह्म' इत्यादिना 'द्वितीयान्ते' इति शेषः । **पराभ्युपगतस्य** निराकारत्वेन पराभ्युपगतस्य । तथा च द्वितीयान्ते

श्लोकः १
भाष्यम् 'न च तद् ब्रह्मणोऽशरीरत्वादेतत् कल्प्यम्, तस्यापि शरीरश्रवणात्, आनन्दरूपममृतम्' इत्यादि । 'तस्य पराभिमतस्य ब्रह्मणः' इति हि तत्र टीका ।

भावदीपिका (श्री.टि.)– ।। **वासुदेवम्** सगुणम् । **परं ब्रह्म** निर्गुणम् । **पूर्वेणोत्तरेण चेति** ।। द्वितीयस्कन्धगतस्य 'आनन्दम्' इत्यादेः 'उपैति शान्तिमानन्दम्' इति पूर्वेण 'वासुदेवे एतां गतिं भागवतो गतः' इत्युत्तरेण चान्वय इत्यर्थः । **तथा चेति** ।। भगवतः परब्रह्मणश्चैकत्वादित्यर्थः । प्रसङ्गः 'प्रश्नस्य' इति शेषः ।

## भाष्यम्

**रूपं चेदृशं साधितं पुरस्तात् । उपासनं च तथैव कार्यम् । 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' (यजु.सं) इत्यारभ्य 'तमेवं विद्वानमृत इह भवति' नान्यः पन्था अयनाय विद्यते' इति साभ्यस्ता । आदित्यवर्णत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः ।।**

भावप्रदीपिका (प.टी.)– अव्यक्ताक्षरशब्दाभ्यां निर्गुणं ब्रह्म इत्यपव्याख्यादूषणाय अव्यक्तादिपदं सप्रमाणकं व्याचष्टे– **उपासनं चेति** । तमेवं विदित्वा इत्यभ्यासः । आदित्यवर्णत्वसहस्रशिरस्त्वाद्युक्तौ .. निर्गुणमिति प्रश्नार्थः किं न स्यात् ? इत्यत आह– **आदित्येति** । वृथेति बाधकाभावात् ।

प्रमेयदीपिका (ज.टी.)– ननु भगवान् करचरणादिमद्रूपवान् । परं ब्रह्म तु नेदृशरूपवत् । 'अशब्दमस्पर्शमरूपम्' इत्यादि श्रुतेः । अतः कथमेतत्? इत्यत आह– **रूपं चेति** ।। पराभ्युपगतस्य ब्रह्मणोऽपीति शेषः । अस्तु भगवानेव परं ब्रह्म । किन्तु ये त्वामेवं साकारमुपासते ये चाव्यक्तं निराकारं तेषां के योगवित्तमाः? इति प्रश्नार्थ इत्यत आह– **उपासनं चेति** ।। तथैव रूपवत्तयैव । स्यादयं प्रश्नार्थः, यदि रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यं स्यात् । नत्वेतदस्ति । किन्तु रूपवत्तयैव । अन्यस्य मिथ्योपासनत्वेनानर्थहेतुत्वादिति भावः ।।

कुत एतत्? इत्यत आह– **सहस्रेति** ।। 'आरभ्य' इत्यनेन 'ब्राह्मणोऽस्य मुखम्' इत्यादेः 'आदित्यवर्णं तमसः परस्तात्' इत्यादेश्च ग्रहणम् । अभ्यासशब्देन

श्लोकः १

**तत्फलनियमो लक्ष्यते। श्रुतिः साकारोपासनं मोक्षसाधनमाह' इति शेषः । नन्वत्रोच्यमान आदित्यवर्णत्वादिः आकारः अतमस्कत्वादिसादृश्यादुपचरित एवेत्यत आह— आदित्येति ।। वृथा बाधकेन** विना । उपचर्यत इत्युपचारः ।।

**केचित् 'सहस्रशीर्षा' इत्यादिकं हिरण्यगर्भविषयमिति मन्यन्ते । अतस्तद्विधूयेश्वरविषयतया स्वमतं गृहीतुम् 'आदित्य' इत्याद्युक्तम् ।।**

**भावबोधः (र.टि.)–** ननु यदि भाष्यस्य साकारत्वोपपादन एव तात्पर्यं तर्ह्याकारान्तरप्रतिपादक 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिकमेवोदाहर्तव्यम् । 'तमेवं विद्वान्' इत्यादि 'नान्यः पन्था' इति वाक्योदाहरणं त्वनुपपन्नमित्यत आह– **अभ्यासशब्देनेति** ।। एवं सहस्रशीर्षत्वादिना तं पुरुषपदवाच्यं परमात्मानं विद्वान् अमृतो मुक्तो भवति । अन्यः निराकारोपासनरूपः पन्था अयनाय न विद्यते इति विवक्षितार्थकेन 'तमेवं विद्वान्' इति वाक्येन प्रतिपादितः फलनियम इत्यर्थः । एवं चास्याः श्रुतेरनेकधाऽकारप्रतिपादकत्वेन साकारत्वे साम्यत्वमस्ति । तथाऽपि तथैवेति साकारत्वेनोपासनं, न तु निराकारत्वेनेति यः प्रतिज्ञातोऽर्थः तत्साधकत्वसिद्ध्यर्थं तमेवेति वक्ष्यमाणवाक्योदाहरणमिति भावः । ततश्च तात्पर्यानुपपत्तिर्लक्षणाबीजं प्रतिज्ञातार्थसाधकत्वसिद्धिः प्रयोजनमिति ज्ञातव्यम् ।

ननूपचारस्य शब्दवृत्तित्वेन कथमादित्यवर्णत्वादिरुपचारत्वेनेत्युक्तिरित्यत आह – **उपचर्यत इति** ।। ननूदाहरणानुसारेण सहस्रशीर्षत्वादिरिति च वक्तव्ये कुत आदित्यवर्णत्वादिरित्युक्तमित्यत आह– **केचिदिति** ।।

**भावदीपः (रा.टि.)–** उपासनाफलवाक्यमुक्त्वा, 'सा अभ्यासा' इत्युक्तिः अयुक्तेत्यत आह– **अभ्यासशब्देनेति** ।। 'कथं सा अभ्यासा' इत्यस्य तं पुरुषमेवं सहस्रशीर्षत्वादिप्रकारेण विद्वान् अमृतो भवति । नान्यो मार्गोऽस्ति मोक्षाय इति, रूपवत्तयोपासनस्य फलनियमोक्तिरूपेत्यर्थः । 'साभ्यासा' इत्यस्याकाङ्क्षां पूरयति– **श्रुतिरित्यादिना** ।। उपचारशब्दः कर्मणि व्युत्पन्नः । अत आदित्यवर्णत्वादिश्चोपचारत्वेनेत्युक्तमिति भावेनाऽह– **उपचर्यत इतीति** ।। अन्यथा शब्दधर्मत्वादुपचारकल्पनस्यात्र अनन्वयः स्यादिति भावः।। 'सहस्रशीर्षा' इति वक्तव्ये 'आदित्य' इत्याद्युक्तेर्बीजमाह– **केचिदिति**।। श्रुत्यर्थस्य गहनत्वाद्विवेकमाह– **मुमुक्षुभिरिति** ।। 'को ध्येयः' इति शेषोक्तिः । एवमग्रेऽपि ।।

श्लोकः १

**भावरत्नकोशः (सु.टि.)–** 'एवम्' इति गीतापदार्थः– **साकारमिति ।।** परचोदित-प्रश्नार्थोऽनेन कथं दूषित इत्यतो भाष्यभावमाह– **स्यादिति ।। एतत्** रूपवत्त्वारूपवत्त्वाभ्यां भगवदुपासनं कार्यमिति एतत्, तथा मानाभावादिति भावः । अरूपत्वेन भगवदुपासने को दोषः इत्यत आह– **अन्यस्येति ।। अनर्थहेतुत्वादिति ।।** 'अचेतनासत्यायोग्यानि अनुपास्यानि अफलत्वविपर्ययाभ्याम्' इति शास्त्रात् 'अन्यथोपासका ये तु तमोऽन्धं प्राप्नुवन्ति' इत्यादिवचनाच्चेति भावः । **एतत्** रूपवत्तयैवोपासनं कार्यमित्येतत् । 'ब्राह्मणोऽस्य मुखम्' इत्यत्र मुखरूपाकारश्रवणाद् 'आदित्यवर्णम्' इति विग्रहोपस्थानाच्चाह– **ब्राह्मणोस्येत्यादि ।।** नन्वेकप्रकारासकृदुक्तिः अभ्यासः । न च 'सहस्रशीर्षा' इत्यादावसकृदुक्तिरस्ति । तत्कथ-मभ्यासशब्द इत्यत आह– **अभ्यासशब्देनेति ।। तत्फलम्** अभ्यासफलम्, **नियमः** अवधारणम् । लक्षणाबीजसम्बन्धद्योतनाय 'तत्फलम्' इत्युक्तम् । अभ्यासस्य हि 'इदमित्थ-मेव' इत्यवधारणं फलम् । 'तमेवम्' इति वाक्येन च, **तं** पुरुषम्, **एवं** 'सहस्रशीर्षा' इत्यादिना प्रकारेण विद्वान् अमृतो भवति, मोक्षाय साधनान्तरं नास्तीति आवेदनान्मोक्षाय रूपवत्तयैव भगवदुपासनं कार्यम्, न निराकारतयेत्यवधारणं प्रत्याययितुं भाष्ये 'साभ्यासा' इत्युक्तमिति भावः ।

केचित्तु 'तत्फलनियमो लक्ष्यते' इति पठन्तः आकारवत्तयैवोपासने मोक्षफलम्, न निराकारतयोपासने इति तत्फलनियमोऽभ्यासपदेन लक्षणया ग्राह्य इत्यर्थ इत्याहुः । 'साभ्यासा' इत्यनन्तरं भाष्ये शेषमाह– **श्रुतिः साकारोपासनं मोक्षसाधनमाहेति शेष इति ।।** भाष्ये 'इत्यारभ्य' इत्यनन्तरं 'पठ्यमाना' इत्यपि शेषो वक्तव्यः, तेन ल्यबुपपत्तिः । अतमस्कत्वादि-सादृश्यात् तमःशून्यत्वसुवर्णत्वतेजीयस्त्वादिसादृश्यात् । ननूपचारो गौणी वृत्तिः । वृत्तिश्च शब्दधर्मः । यदाहुः–

'तस्मात् परमुख्यत्वं विष्णावन्यत्र मुख्यता ।
उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ।।' इति ।

तत्कथमादित्यवर्णत्वादिरूपेऽर्थे उपचारशब्द इत्याशङ्क्य, कर्मणि घञन्तोऽयमुपचारशब्द इति युज्यतेऽर्थेऽप्युपचारशब्द इत्याह– **उपचर्यत इतीति ।।** ननु प्रथमोपस्थितत्वात्, तथैव भाष्ये पाठाच्च 'सहस्रशीर्षत्वादिश्च न वृथोपचारत्वेनाङ्गीकार्यः' इति भाषणीयम्, तत्किमर्थम्

'आदित्यवर्णत्वादिश्च' इत्युक्तमित्यत आह– **केचिदिति** ।। **हिरण्यगर्भविषयमिति** ।। 'तस्माद्विराडजायत' इति ब्रह्माण्डोत्पादकत्वलिङ्गात् प्रजापतिश्रुतेश्चेति भावः ।

**भावदीपिका (श्री.टि.)**– ।। **रूपं** शरीरम् । **एतत्** तयोरैक्यम् । **पराभ्युपगतस्येति** ।। 'निर्गुणत्वेन' इति शेषः । **भाष्ये पुरस्तादिति** ।। 'न च तद् ब्रह्मणोऽशरीरत्वादेतत्कल्प्यम्, तस्यापि शरीरश्रवणात्' इत्यादिना द्वितीयाध्यायान्त इत्यर्थः । **एवं साकारमिति** ।। 'अनेकबाहूदरवक्त्रनेत्रम्' इत्यादिपूर्वोक्तप्रकारेण साकारमित्यर्थः । **अन्यस्य** निराकारतयोपासनस्य । **इत्यादेः** आकारप्रतिपादकवाक्यस्येत्यर्थः ।

ननु यदि भाष्यस्य साकारत्वोपपादन एव तात्पर्यं तर्ह्याकारान्तरप्रतिपादकं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिकमेवोदाहर्तव्यम्, 'तमेवं विद्वान्' इति वाक्योदाहरणं त्वनुपपन्नम् । एकप्रकारासकृदुक्तिरूपाभ्यासश्चात्र नास्ति इत्यत आह– **अभ्यासशब्देनेति** ।। 'एवं सहस्रशीर्षत्वाद्याकारवत्तया तं पुरुषपदवाच्यं परमात्मानं विद्वान् अमृतः मुक्तो भवति । अन्यः निराकारोपासनरूपः पन्था अयनाय न विद्यते' इत्यर्थकेन 'तमेवं विद्वान्' इति वाक्येनान्यव्यवच्छेदेन प्रतिपादितो यः साकारोपासनया मोक्षाख्यफलनियमः सोऽत्राभ्यासपदेन लक्ष्यत इत्यर्थः । एवञ्च यद्यप्यस्याः श्रुतेरनेकाकारप्रतिपादकत्वेन साकारत्वे साभ्यासत्वमस्ति । तथाऽपि 'उपासनं च तथैव कार्यम्' इति वाक्येन साकारत्वेनैवोपासनं कार्यम्, नतु निराकारत्वेनेति यः प्रतिज्ञातार्थः तत्साधकत्वसिद्ध्यर्थं 'तमेव' इति वाक्योदाहरणमिति भावः । तथा च तात्पर्यानुपपत्तिर्लक्षणाबीजम् । प्रतिज्ञातार्थसाधकत्वसिद्धिः प्रयोजनमित्युक्तं भवति । शेषमाह– **श्रुतिरिति** ।।'साभ्यासा' इत्यतः परं शेषमाहेति इति । यद्वा एकप्रकारासकृदुक्तिरूपमुख्याभ्यासस्यात्राभावादाह– **अभ्यासशब्देनेति** ।। **अतमस्कत्वादीति** ।। आदित्यस्यान्धकारशून्यत्वाद् अतमस्कत्वम्, ब्रह्मणस्तु अविद्याशून्यत्वादिति ध्येयम् । ननूपचारस्य शब्दवृत्तित्वादादित्यवर्णत्वादेरर्थस्य कथमुपचारत्वोक्तिः इत्यत आह– **उपचर्यते** इति ।। शब्देनोपचारवृत्त्या प्रतिपाद्यत इत्यर्थः । तथा चादित्यवर्णत्वादिरुपचरितो न भवतीति भावः ।

ननु 'सहस्रशीर्षा पुरुषः' इत्यादेरुदाहृतत्वात् तदनुसारेण 'सहस्रशीर्षत्वादिः' इति वक्तव्ये 'आदित्यवर्णत्वादिः' इति कस्मादुक्तम्? इत्यत आह– **केचिदिति** ।। **हिरण्यगर्भः** विराट् ।।

**भावप्रकाशः (कृ.टि.)**– ।। **अनर्थहेतुत्वादिति** ।। 'अचेतनासत्यायोग्यान्यनुपास्यान्य-

फलत्वविपर्ययाभ्याम्' इत्युक्तेरिति भावः । ननु 'सहस्रशीर्षा' इत्यादि श्रुतौ एकप्रकारासकृदुक्तिर्नास्ति । तत् कथं साभ्यासेत्युक्तमित्यत आह– **अभ्यासशब्देनेति** ।। शक्यसम्बन्धप्रदर्शनायोक्तम्– **तत्फलेति** ।। **नियम इति** ।। अवधारणमित्यर्थः । तमेवं विद्वानिति श्रुतौ पूर्वोक्तमुखाद्याकारवन्तम् आदित्यवर्णत्वादिविशिष्टं च जानन् मुक्तो भवति । मुक्त्यर्थं साधनान्तरं नास्तीत्यवधारणादिति भावः । ननु शब्दवृत्तिविशेषस्यैवोपचारत्वं न त्वादित्यवर्णत्वादेरर्थस्येत्यत आह– **उपचर्यत इतीति** ।। कर्मणि घञिति भावः । ननु पाठक्रमात् सहस्रशीर्षत्वादिरिति वक्तव्ये कथमादित्यवर्णत्वादिरित्युक्तमित्यत आह– **केचिदिति** ।।

## भाष्यम्

**तथा च सामवेदे सौकरायणश्रुतिः 'स्थाणुर्ह वै प्राजापत्य स प्रजापतिं पितरमेत्य उवाच– 'मुमुक्षुभिः साधुभिः पूतपापैः किमु ह वै तारकं तारवाच्यम् । ध्यानं च तस्याप्ररुचेः कथं स्यात् ध्येयश्च क पुरुषोऽलोमपादः' इति । तं होवाच 'एष वै विष्णुः तारकोऽलोमपादो ध्यानं च तस्याप्ररुचेर्वदामि । सोऽनन्तशीर्षो बहुवर्णः सुवर्णो ध्येयः स वै लोहितादित्यवर्णः । श्यामोऽथ वा हृदये सोऽष्टबाहुरनन्तवीर्योऽनन्तबलः पुराणः ।।' इति । अरूपत्वादेस्तु गतिरुक्ता । पुरुषभेदश्च प्रश्नादौ प्रतीयते। 'त्वां पर्युपासते', 'ये चाप्यक्षरमव्यक्तम्' इत्यादौ ।। १ ।।**

भावप्रदीपिका (प.टी.)– सविचारे सावयवतावध्येयत्वोक्तेश्चोपासनं तथैव कार्यमित्याह– **तथा चेति** । **राधुभिः** राधनशीलैः । किं तारवाच्यं संसारतारकम् ? इति प्रश्नस्यैष परिहारः । ध्येयश्च कः इत्यस्य ध्येयः स वै इति परिहारः । अलोमपादोऽसौ कथं ध्येयः इत्यस्य– **अलोमपादोऽपि ध्येय इत्याह इति परिहारः** । लोमपादादिशून्यस्यापि नानवयविनो ध्यानं युक्तमित्यभिप्रायः । तर्हि अरूपमव्ययम् इत्यादेः का गतिरित्यत आह– **अरूपत्वादेरिति** । इतश्च सशरीरं वाऽशरीरं वेत्यर्थो न भवतीत्याह– **पुरुषेति** ।। भगवदुपासनस्यैवाधिक्येऽपि किमव्यक्तोपासकस्य श्रुतो मोक्षो नास्तीत्याशङ्कोत्तरत्वेन श्लोकद्वयमवतारयति भवन्त्वति ।।

प्रमेयदीपिका (ज.टी.)– उपचारानर्हां चात्र श्रुतिमाह– **तथा चेति** ।। **स्थाणुः**

रुद्रः । **प्राजापत्यः** प्रजापतेरपत्यम् । **साधुभिः** साधकैः तारकं संसारस्य । **तारः** ओङ्कारः । **आप्तरुचेः** व्याप्ततेजसः । 'लोम' इति केशवचनम् । 'लोमपाद' इति द्वन्द्वः । न विद्यन्ते लोमान्तपादाद्यवयवाः यस्यासावलोमपादः । तं स्थाणुम् उवाच प्रजापतिः । **सुवर्णः** सुवर्णवर्णः । अत्र मुमुक्षुभिः को ध्येयः इत्येकः प्रश्नः । तारवाच्यं तारकं वस्तु किमिति द्वितीयः ।।

तस्य ध्यानं कथं स्यात्? किं साकारतया उत निराकारत्वेन? नाद्यः । अलोमपादो ह्यसावुच्यते । न द्वितीयः, बुद्ध्यावनारोहात् इति तृतीयः । तत्राद्यद्वितीययोरर्थतो न भेदः । तारकस्यैव मुमुक्षुध्येयत्वादित्यभिप्रेत्य द्वयोरेकमेवोत्तरमाह 'यः त्वया मुमुक्षु-ध्येयः तारकः पृष्टः एष विष्णुः' इति । 'यद्यप्यसावलोमपाद उच्यते तथाऽपि तस्य साकारतयैव ध्यानं वदामि' इति तृतीयस्य ।।

यदि ब्रह्म साकारमेव तद्ध्यानं च तथैव कार्यं, तर्हि 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादेः का गतिः? इत्यत आह– **अरूपत्वादेस्त्विति** ।। लौकिकरूपाद्यभावरूपा । एतेन अलोमपाद इत्यस्याभिप्रायोऽप्युक्तो भवति । इतोऽपि न परोक्तः प्रश्नार्थ इत्याह– **पुरुषेति** ।। एवं हि व्याख्याने ध्येयस्यैव ध्यानं द्वेधेत्युक्तं स्यात् । अत्र तु ध्येयौ पुरुषौ द्वौ प्रतीयेते । अतश्च नैवमित्यर्थः । प्रश्नस्य एकध्येयविषयतया कथञ्चि-द्व्याख्यानेऽप्युत्तरं निरवकाशमित्याशयेनादिग्रहणं कृतम् ।।

किञ्च साकारोपासनेन विशुद्धाशये निराकारमुपास्ते इत्येकस्यैव क्रमेण ध्येयद्वयमिति परेषां सिद्धान्तः । अत्र तूपासकपुरुषभेदः प्रतीयते । ततोऽपि नान्योऽर्थ इत्याह– **पुरुषेति** ।। उत्तरापव्याख्याननिराकरणं तु तात्पर्यनिर्णय इत्युक्तमेव व्याख्यानमिति स्थितम् ।। १,२ ।।

भावबोधः (र.टि.)– ।। **यस्यासाविति** ।। अनेन 'अलोमपादो ध्यानं च' इत्याद्यकं वाक्यमित्युक्तं भवति । **कथञ्चिदिति** ।। त्वामेवं विश्वरूपाध्यायोक्तप्रकारेण ये उपासते, ये चाक्षरमव्यक्तत्वान्निर्गुणत्वेनेति यावदिति विशेषणविशेष्यभावेन योजनयैकध्येयविषयत्वे कर्तुं शक्येऽप्युत्तरार्धे त्वामित्यस्यानुवर्तनीयत्वप्रसङ्गः, अव्यक्तमित्येतावता पूर्णत्वेनाक्षरमिति विशेषणवैय्यर्थ्यप्रसङ्गश्चेत्यभिप्रेत्य कथञ्चिदित्युक्तम् । **निरवकाशमिति** ।। परमते

श्लोकः १

सगुणोपासकेभ्यो निर्गुणोपासकानामेवोत्तमत्वात्, अत्र च 'ते मे युक्ततमा मताः' इति भगवदुपासकानामेवोत्तमत्वोक्त्याऽव्यक्तस्य भगवदवरत्वप्राप्त्या 'सर्वत्रगम्' इत्यादिनाऽव्यक्तस्य सधर्मकत्वोक्त्या निर्गुणत्वविरोधेन च ध्येयपुरुषादिभेदं विना मयीत्याद्युत्तरं निरकाशमित्यर्थः । **उत्तरापव्याख्याननिराकारणमिति** ।। ये तु ते मे युक्ततमा मताः' 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽपि अव्यक्तोपासकानामाधिक्यं वदन्ति, ते त्वपलापकत्वादेव अतिसाहसिकत्वात्सुशोच्या एवेति **तात्पर्यनिर्णय** इत्यर्थः ।। १,२ ।।

**भावदीपः (रा.टि.)**– ।। **तृतीयस्येति** ।। 'उत्तरम्' इत्यनुकर्षः ।। **एवं हि व्याख्यानमिति** ।। 'अस्तु भगवानेवायं परं ब्रह्म' इत्यादिना प्रागुक्तव्याख्यानमित्यर्थः ।। **एकध्येयेति** ।। विशेष्यैक्याभिप्रायेणेति भावः ।। **निरवकाशमिति** ।। ध्यानद्वयस्य उत्तमाधमरूपफलभेदोक्त्या ध्येयद्वयस्यैव प्रतीतेरिति भावः ।। **तात्पर्यनिर्णय इति** ।। 'ये तु तेमे युक्ततमा मताः' (१२.२) 'मय्येव मन आधत्स्व' (१२.७) इत्यादौ भगवतोक्तेऽप्यव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादतिसाहसिकत्वात् सुशोच्या इत्यादिना ग्रन्थेनेत्यर्थः ।। १,२ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **उपचारानर्हाम्** उपचारशङ्कानर्हाम् । 'स्थाणू रुद्रः' इत्यत्र 'ढ्रलोपे पूर्वस्य दीर्घः' इति दीर्घः । **प्रजापतेरपत्यमिति** ।। 'दितिअदितिआदित्यपत्युत्तरपदात् ण्यः' इति प्रजापतिशब्दाद् अपत्येऽर्थे ण्यप्रत्यय इति भावः । वेदे 'राध साध संसिद्धौ' इत्यतः कर्तरि उप्रत्यये 'साधुशब्दः' इति भावेन तदर्थमाह– **साधकैरिति** ।। भावप्रदीपिकायां तु 'ताच्छील्यादर्थादुन् तथा' इति शास्त्रात् ताच्छील्यविशिष्टे कर्तर्युन्प्रत्ययमङ्गीकृत्य 'राधनशीलैः' इत्युक्तम् । 'संसारस्य' इति तु शेषः । 'तारवाच्यम्' इत्यत्र तारशब्दार्थः– **ओंकार इति** ।। 'तरन्त्यनेन संसारम् इति तारः' इति सुधा ।

ननु साकारतया भगवदुपासनं न कर्तुं शक्यम् । तस्य 'अलोमपादत्वात्' इति वक्तुम् 'अलोमपादो ह्यसौ उच्यते' इति श्रुत्युक्तमयुक्तम् । लोमयुक्तपादत्वाभावेऽपि साकारोपासनोपपत्तेः इत्याशङ्क्य 'तनूरुहं रोम लोम' इत्यभिधानेनाङ्गरुहवाचिनोऽपि लोमशब्देन शिरोरुहकेशग्रहणम्, चरणवाचिना पादशब्देन चाङ्घ्रिग्रहणम्, ताभ्यां च लोमपादपदाभ्यां केशान्तपादादिसर्वावयवाः लक्षणया विवक्षिताः । तत्र च कर्मधारयादेरसम्भवात् 'लोमानि पादौ च' इति द्वन्द्वानन्तरं नञा समासे, अलोमपादशब्देन सकलावयवराहित्यं निराकारत्वं लभ्यत इति,

'अयुक्तं साकारोपासनम्' इति युक्त एव 'कथम्' इत्याक्षेप इति भावेनाह– **लोमेति केशवचनमित्यादिना ।।** 'बहुवर्णः' इत्युक्तं बहुवर्णत्वं विशदयितुम् 'सुवर्ण', 'लोहितादित्यवर्ण''श्याम' इत्युक्तम् । तत्र लोहितादित्यवर्णत्वं श्यामत्वं च सुज्ञानम् । 'सुवर्णः' इति च शोभनवर्णत्वमात्रं प्रतीयते, नतु वर्णविशेष इत्यतोऽत्र प्रकृतोपयोगार्थमाह– **सुवर्णवर्ण इति ।।** रुग्मवर्ण इति प्रसिद्धेरियमुक्तिः । श्रुतौ कति प्रश्नाः, कति चोत्तराणीति न ज्ञायते, इत्यतो विवेकं दर्शयति– **अत्र मुमुक्षुभिरित्यादिना ।।** अनेनैवातिव्यवहितानां पदानामन्वयश्च दर्शितो भवति । **तारवाच्यम्** ओङ्कारवाच्यम् **तारकं** संसारस्य । **द्वितीयः** 'प्रश्नः' इत्यनुवर्तते । **असौ** ध्येयः पुरुषः । **तृतीयः** प्रश्नः । शब्दतो भेदस्य स्फुटमवभासादुक्तम्– **अर्थत इति ।।** तदेवाह– **यस्त्वयेति ।। तृतीयस्य** 'प्रश्नस्य उत्तरमाह' इत्यनुवर्तते ।

'ध्यानं च तस्य' इति शेषः । **तथैव** साकारतयैव । 'गतिरुक्ता' इति भाष्ये 'द्वितीयान्ते' इति शेषः । **अभिप्राय इति ।।** 'अलोमपादः' इत्यस्य लौकिककेशपादाद्यवयवराहित्यं विवक्षितमित्यभिप्रायः । **प्रश्नार्थः** 'ये त्वामेवं साकारमुपासते, ये चाप्यव्यक्तं निराकारम्' इत्यादिनोक्तः । **द्वेधा** 'साकारत्वेन निराकारत्वेन' इति द्वेधा । **अत्र** 'त्वां पर्युपासते ये चाप्यक्षरम्' इति गीतायां **पुरुषौ** महापुरुष, अक्षरशब्दितकूटस्थपुरुषश्चेति द्वौ पुरुषौ । वासुदेवे पुरुषत्वस्य सुप्रसिद्धत्वात्, 'अक्षरात् परतः परः', 'अक्षरादपि चोत्तमः' इत्यादावक्षरशब्दस्य च कूटस्थपुरुषार्थत्वादिति भावः । **एकध्येयविषयतयेति ।।** ये त्वाम् एवं साकारमुपासते, ये चाप्यव्यक्तं निराकारं त्वामिति विशेष्यैक्याभिप्रायेण प्रश्न इत्येकध्येयविषयतयेत्यर्थः । उत्तरार्धे 'त्वाम्' इत्यस्यानुवृत्तिप्रसङ्गः, 'अव्यक्तम्' इत्यनेनैव पूर्तौ 'अक्षरम्' इत्यस्य वैयर्थ्यप्रसङ्गश्च आच्छादनीय इति भावेनोक्तम्– **कथञ्चिदिति ।। उत्तरं निरवकाशमिति ।।** 'ते मे युक्ततमा मताः' इति, यत् 'स्वात्मोपासका एवोत्तमाः' इति भगवता वक्ष्यमाणम् अर्जुनप्रश्नस्योत्तरम्, न तत् निर्गुणोपासकोत्तमत्वपरतया शक्यं व्याख्यातुम् । 'मय्यावेश्य मनो ये माम्' इत्यस्मच्छब्देन वासुदेवस्यैव ग्राह्यतयाऽन्यत्रानवकाशादिति भावः ।

परोक्तप्रश्नार्थे दूषणान्तरपरत्वेन 'पुरुषभेदः' इति भाष्यमेव प्रकारान्तरेणावतारयति– **किञ्चेति ।। विशुद्धाशयः** परिशुद्धान्तःकरणः । **एकस्यैव** उपासकस्य, **द्वयं** सगुणोपासनं निर्गुणोपासनमिति उपासनद्वयम् । **उपासकपुरुषभेद इति ।।** 'ये त्वां पर्युपासते' 'ये चाप्यक्षरमव्यक्तम्' इति चशब्दोह्यसमुच्चयस्य समुच्चेयपुरुषभेदाविनाभावादिति भावः । ननु यदुक्तम्

श्लोकः १

'उत्तरं निरवकाशम्' इति न तद् युक्तम् । यतः शङ्करः ये त्वक्षरोपासका सम्यग्दर्शिनः निवृत्तैषणा ते तावत्तिष्ठन्तु । तत्र यद्वक्तव्यम् अक्षरोपासकानां श्रैष्ठ्यं तदुपरिष्टात् 'ये त्वक्षर-मनिर्देश्यमव्यक्तम्' इत्यत्र वक्ष्यन् विश्वरूपपरमेश्वरोपासकान् योगवित्तमान् भगवानुवाच 'मय्यावेश्य' इत्युत्तरार्ध इति व्याचख्यौ । प्रश्नश्च परिहारानुसारेण योज्य इति न भाष्यकारीयं प्रश्नव्याख्यानं युक्तम् इत्यत आह– **उत्तरापव्याख्याननिराकरणं त्विति** ।। 'ये तु 'ते मे युक्ततमा मताः' 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽपि अव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वाद् अतिसाहसिका इति सुशोच्या एव' इति गीतातात्पर्यनिर्णये 'ते मे युक्ततमा मताः' इति भगवदुपासकानाम् उत्तमत्वमुक्त्वा, 'मय्येव' इति मदुपासकानामुत्तमत्वात् 'मदुपासक एव भव' इति स्फुटमुक्तत्वाद् अव्यक्तोपासकानामाधिक्यं वदतामपलापकत्वमेव । ततश्च साहसिकत्वादहो नष्टा एते इति शोकविषयत्वमेव । नतु परिहारं वक्तुं प्रतिवादित्वमिति शङ्करकृतं प्रत्युत्तरापव्याख्यानं प्रत्याख्यातमिति भाष्यकारीयं प्रश्नव्याख्यानमेव स्थितमित्यर्थः ।।

**गीताक्षरार्थस्तु–** श्रीदेवीशब्दिताव्यक्तोपासनाद् भगवदुपासनस्य उत्तमत्वसिद्ध्ये भगवदुपासनोपायप्रदर्शनमस्मिन्नध्याये क्रियते । तदुपायप्रदर्शनं च भगवदुपासनाधिक्यज्ञापनार्थमेव इत्यध्यायस्यैकवाक्यता, आधिक्योपासनगोचरत्वलक्षणभगवन्माहात्म्यस्य प्रतिपिपादयिषितत्वात् तन्माहात्म्यप्रतिपादनपरषट्कान्तर्भावश्च । 'एवं सततयुक्ता ये' इत्यर्जुनप्रश्नसङ्गतिप्रदर्शने-नैवानन्तर्यलक्षणाऽपि सङ्गतिर्ज्ञायते ।

तत्र तावत् 'तमेवं विद्वानमृत इह भवति', 'तमेव विदित्वाऽतिमृत्युमेति', 'तरति शोकमात्मवित्' इत्यादौ भगवज्ज्ञानस्य मोक्षसाधनत्वं प्रतीयते । ज्ञानं च नोपासनं विना निष्पद्यत इति तदुपासनमपि मोक्षसाधनमेष्टव्यम् । श्रूयते च 'मुमुक्षुभिः साधुभिः पूतपापैः' इति भगवदुपासनं मोक्षहेतुरिति । तथा च यथा भगवदुपासनं मोक्षसाधनं तथा श्रीदेव्युपासनमपि, 'श्रियं वसाना अमृतत्वमायन्', 'अनाद्यनन्तनं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'उपास्य तां श्रियमव्यक्तसञ्ज्ञां भक्त्या मृत्योर्मुच्यते सर्वबन्धैः' इत्यादौ मोक्षसाधनं प्रतीयते । न चैवं प्रतीयमानमप्यव्यक्तोपासनस्य मोक्षसाधनत्वम् उपचरितमेव, 'अन्तवत्तु फलं तेषाम्' इत्युक्त-न्यायेन ब्रह्माद्युपासनस्येव तदुपासनस्याप्यन्तवत्फलत्वादिति वाच्यम् । वैषम्यात् ।

युक्तं ब्रह्माद्युपासनस्य मोक्षसाधनताया उपचरितत्वकल्पनम् । तेषां जननमरणादिदोषवत्त्वेन तदुपासनस्य जननमरणादिराहित्यरूपमोक्षसाधनत्वस्यासम्भवात् । श्रीदेव्यास्तु

श्लोकः १

'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते',
'चतुःशिखण्डा युवतिः सुपेशाः', 'अहं रुद्रेभिर्वसुभिश्चरामि',
'यं कामये तंतमुग्रं कृणोमि', 'अहं सुवे पितरमस्य मूर्धन्'
'परो दिवा पर एना', 'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगतश्रीरुत त्वया',
'त्वया जुष्टश्चित्तं विन्दते वसु'

इत्यादौ नित्ययौवनज्ञानमयत्वसर्वदेवपूज्यत्वादिमहामाहात्म्यवत्त्वेन आवेदिताया मोक्षहेतुज्ञान विषयत्वासम्भवाभावाद्, वास्तवमेव तदुपासनस्यापि मोक्षसाधनत्वमिति भगवदुपासना अव्यक्तोपासनरूपमार्गद्वयेन एकमेव मोक्षरूपं फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति साधक-बाधकप्रमाणाभावात् संशयः कस्यचिद् अविदिततत्त्वस्य पुंसो भवतीति तदनुजिघृक्षया 'भगवदुपासका एव श्रेष्ठाः' इति जानन्नप्यर्जुनः तत्र स्वविदिते युक्तिजिज्ञासया वा परकीय-संशयाध्याहारेण अपृच्छदित्युच्यते– अर्जुन उवाच – **एवं सततयुक्ता इति** ।।

ये भक्ताः सततयुक्ताः नैरन्तर्येण भगवति मनोयोगवन्तः सन्तः एवम् एवंभूतं दृष्टश्रुतरूपवन्तं त्वामेवं 'मत्कर्मकृन्मत्परमः' इत्याद्युक्तप्रकारेण पर्युपासते, ये चाप्यक्षरं देहतोऽपि क्षरण-रहितमिति विशेषणं देहक्षरणवद्भ्यो ब्रह्मादिदेवेभ्यो वैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्थमुपात्तम् । अव्यक्तं चित्प्रकृतिं पर्युपासते भक्तिश्रद्धातिशयेन ध्यायन्ति तेषां मध्ये के योगवित्तमाः अतिशयेन मोक्षोपायज्ञेषु श्रेष्ठाः 'इति'शब्दोऽध्याहर्तव्यः । तस्य च 'उवाच' इत्यन्वयः ।।१।।

**भावदीपिका (श्री.टि.)**– 'राध साध संसिद्धौ' इति धातोः 'साधकैः' इत्युक्तम् । **ओङ्कार इति** ।। 'तरन्ति अनेनानिष्टनिचयम्' इति तार ओङ्कार इत्यर्थः । **द्वन्द्व इति** ।। 'लोमानि च पादाश्च' इति द्वन्द्व इत्यर्थः । **आद्यद्वितीययोरिति** ।। मुमुक्षुभिः को ध्येयः, तारवाच्यं किम् इत्याद्यद्वितीयप्रश्नयोः शब्दतो भेदेऽपि नार्थतो भेदः । कुतः इत्यत आह– **तारकस्यैवेति** ।। तारवाच्यस्यैवेत्यर्थः । **यद्यप्यसाविति** ।। तथा च 'अलोमपादो ध्यानं च' इत्याद्येकं वाक्यमित्युक्तं भवति । तथा च निराकारस्यैव ध्येयत्वं न मन्तव्यमित्याह– **तथाऽपीति** ।।

**एतेनेति** ।। लौकिकरूपाद्यभाववत्तयाऽरूपत्वाद्युक्तेर्गतिकथनेनेत्यर्थः । **अभिप्राय इति** ।। लौकिकलोमपादादिरहित इत्याभिप्राय उक्तो भवतीत्यर्थः । **एवं हीति** ।। 'ये त्वां साकारत्वेन

श्लोकः १

निराकारत्वेनोपासते' इति व्याख्यान इत्यर्थः । ओमिति चेत् तत्राह– **अत्रेति** ।। गीताया-मित्यर्थः । **एकध्येयेति** ।। त्वामेवं विश्वरूपाध्यायोक्तप्रकारेण ये साकारतयोपासते, ये चाप्यक्षरमव्यक्तं त्वां निर्गुणत्वेनोपासत इति योजनया एकध्येयविषयतया व्याख्यान इत्यर्थः । एवं व्याख्याने उत्तरार्धे 'त्वाम्' इत्यस्यानुवर्तनीयत्वप्रसङ्गः । 'अव्यक्तम्' इत्येतावता पूर्णत्वेन 'अक्षरम्' इति विशेषणान्तरोपादानवैयर्थ्यप्रसङ्गश्च इत्यभिप्रेत्य 'कथञ्चित्' इत्युक्तमिति ज्ञेयम् । **उत्तरं निरवकाशमिति** ।

परमते सगुणोपासकेभ्यो निर्गुणोपासकानामेवोत्तमत्वाद् अत्र च 'ते मे युक्ततमा मताः' इति भगवदुपासकानामेवोत्तमत्वोक्त्याऽव्यक्तस्य निर्गुणस्य भगवदवरत्वप्राप्त्या 'सर्वत्रगम्' इत्यादिना अव्यक्तस्य सधर्मकत्वोक्त्या निर्गुणत्वविरोधेन च ध्येयपुरुषादिभेदं विना 'मय्यावेश्य' इत्याद्युत्तरम् अवकाशशून्यमित्यर्थः । एकस्यैव उपासकस्य । प्रतीयते 'सततयुक्ता ये', 'ये चापि' इत्यनेनेत्यर्थः एवं प्रश्नवाक्यापव्याख्यानं निराकृत्य 'भगवानुवाच मय्यावेश्य' इत्याद्युत्तरापव्याख्यानिराकरणम् अत्र कस्मान्न कृतम्? इत्यत आह– **उत्तरापव्याख्यान-निराकरणमिति** ।। ये तु 'ते मे युक्ततमाः', 'मय्येव मन आधत्स्व' इत्यादौ भगवतोक्तेऽपि, अव्यक्तोपासकानामाधिक्यं वदन्ति ते त्वपलापकत्वादेवातिसाहसिकत्वात् सुशोच्या एव' इति तात्पर्यनिर्णये निराकृतमित्यतोऽत्र न निराकृतमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। प्रजापतेरपत्यमिति ।।** 'दित्यदित्यादित्यपत्युत्तरपदाण्य' इति ण्यप्रत्यये आदिवृद्धिर्यस्येति चेति इकारलोपश्चेति भावः । **साधकैरिति** ।। राध साध संसिद्धावित्यस्मादुण् इति भावः । ननु साकारतया भगवद्ध्यानमयुक्तमित्यत्र निरवय-वत्वहेतुसूचनार्थम् 'अलोमपादो हि' इत्युक्तमित्यभिप्रेतम् । नच लामशब्देन 'तनूरुहं लोम रोम' इत्यमरोक्तार्थग्रहणे निरवयवत्वलाभः, वक्ष्यमाणन्यायेन पादादिलोमान्तयत्किञ्चिदवयवराहित्य-लाभेपि शीर्षादिसर्वावयवराहित्यालाभादित्यत आह– **लोमेति केशवचनमिति** ।। 'कचः केशः शिरोरुह' इत्यमरोक्तार्थलक्षणकमित्यर्थः । कर्मधारयादेर्बाधादाह– **द्वन्द्व इति** ।। ननु द्वन्द्वस्य नञा सह तत्पुरुषे लोमादिभिन्नत्वलाभः, बहुव्रीहौ त्ववयवद्वयराहित्यलाभः । तथाऽपि प्रकृतोपयुक्तं निरवयवत्वं न लभ्यत इत्याशङ्क्य प्रत्याहारन्यायेन लोमपादग्रहणात् बहुव्रीहौ नानुपपत्तिरिति भावेनाह– **न विद्यन्त इति** ।। लोमपादशब्दयोर्लोमान्तपादादिलक्षणत्वादिति

भावः । नच नियामकाभावाद्वैपरीत्येन लोमादेः पादान्तस्य च लक्षणा किं न स्यादिति वाच्यम् । पादकेशयोरुत्पत्तिक्रमस्यैव नियामकत्वात् । यथोक्तम्–

'द्वाभ्यां बाह्वंघ्र्याद्यङ्गविग्रहः । नखरोमास्थिचर्मादिलिङ्गच्छिदोद्भवस्त्रिभिः ' इति ।

ननु 'बहुवर्णाः' इत्युक्तबहुवर्णात्वं व्याख्यातुं 'सुवर्णः लोहितादित्यवर्णः श्यामः' इत्युक्तम् । तत्र सुवर्ण इत्यस्य शोभनवर्ण इत्यर्थत्वे वर्णविशेषालाभो लोहित्यादिसाहचर्यविरोधश्चेत्यतो लक्षणमाश्रित्याह– **सुवर्णवर्ण इति** ।। रुग्मवर्णमित्युक्तेरिति भावः । **कथंचिदिति** ।। ये त्वामेवं साकारमुपासते ये चाप्यव्यक्तं निराकारं चेति परकीयव्याख्याने त्वामित्यस्यानुवर्तनीयत्वाद् अक्षरमित्यस्य वैयर्थ्यप्रसङ्गाच्च कथञ्चिदित्युक्तम् ।

**निरवकाशमिति** ।। 'ते मे युक्ततमा मताः' इति प्रतिवचनेऽव्यक्तोपासकापेक्षया भगवदुपासकानामुत्तमत्वमुक्तम् । नच परमते तद्युक्तम् । निराकारोपासकेभ्यः साकारोपासकानामधमत्वाङ्गीकारात् । अत उत्तरं निरवकाशमित्यर्थः । ननु 'मय्यावेश्य' इत्युत्तरश्लोके वासुदेवोपासकानां युक्ततमत्वमभिधाय 'ये त्वक्षरम्' इत्यादिना परब्रह्मोपासकानां 'ते प्राप्नुवन्ति मामेव' इति भगवत्स्वरूपत्वमुक्तम् । 'ज्ञानी त्वात्मैव मे मतम्' इति समाख्यानात् । ततश्च प्रतिवचनानुरोधात् प्रश्नवाक्यमप्युक्तार्थमेव । अतो न भवदीयं व्याख्यानं युक्तमित्यत आह– **उत्तरापव्याख्यानेति** ।। 'ते मे युक्ततमाः' इति भगवता स्वोपासकानामुत्तमत्वमुक्त्वा 'मय्येव मन आधत्स्व' इत्यनेन मदुपासकानामेवोत्तमत्वात् मदुपासक एव भवेति स्फुटमुक्तत्वाद् ब्रह्मोपासकानामाधिक्यं वदताम् अपलापकत्वमेवेत्यादि निराकरणमित्यर्थः ।। १,२ ।।

## श्री भगवानुवाच–

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ।। २ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** एवं सन्दिह्य कृतप्रश्नस्य 'मदुपासका एवोत्तमाः' इति परिहार उच्यते– **भगवानुवाच– मयीति** ।। ये मयि मन आवेश्य समाधाय नित्ययुक्ताः नित्योद्योगशालिनः परया उत्तमया श्रद्धया आस्तिक्यबुद्ध्या उपेताः सन्तो मामुपासते ते मे 'मतिबुद्धिपूजार्थेभ्यश्च' इति षष्ठी, मम युक्ततमाः साधकतमाः मताः । अत्रापि 'इति' शब्दोऽध्याहार्यः ।। २ ।।

श्लोकः ३,४

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ।। ३ ।।**

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।। ४ ।।**

## भाष्यम्

**भवन्तु त्वदुपासका एवोत्तमाः । इतरेषां तु किं फलमित्यत आह– ये त्वित्यादिना ।। अनिर्देश्यत्वं चोक्तं भागवते मायायाः 'अप्रतर्क्याद-निर्देश्यादिति केष्वपि निश्चयः' (भाग.१.१७.१९) इति । ईश्वरस्तु दैवशब्दे-नोक्तः 'दैवमन्ये परे' (४.२५) इत्यत्र । उक्तं च सामवेदे काषायणश्रुतौ 'नासदासीन्नो सदासीत्तदानीम्' इति । 'न महाभूतं नोपभूतं तदाऽसीत्' इत्यारभ्य 'तम आसीत्तमसा गूह्ळमग्रे' इति । 'तमो ह्यव्यक्तमजरम-निर्देश्यमेषा ह्येव प्रकृतिः' इति ।**

भावप्रदीपिका (प.टी.)– अनिर्देश्यत्वं परब्रह्मधर्मः, कथमव्यक्तस्येत्यत आह– **अनिर्देश्यत्वं चेति** । अत्रेश्वरः अनिर्देश्यपदोक्तः किं न स्यात् इत्यत आह– **ईश्वरस्त्वति** । श्रुतावपि मायाया अनिर्देश्यत्वं सिद्धमित्याह– **उक्तं चेति** ।

प्रमेयदीपिका (ज.टी.)– एवं तर्हि 'मय्यावेश्य'(१२.२) इत्यनेनैव मदुपासका एव उत्तमा इति प्रश्नस्योत्तरं जातम् । किमुत्तरेण वाक्येन? इत्यत आह– **भवन्तु इति** ।। आक्षेपगर्भोऽयमभ्युपगमः । न युक्तं त्वदुपासकानामेवोत्तमत्वमिति भावः । तदुपपादनाय पृच्छति– **इतरेषामिति** ।। अव्यक्तोपासकानां किं फलं मोक्षोऽस्ति वा न वा । नचेदुदाहृतवाक्यविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वम्? फलसाम्यादिति भावः ।।

नन्वेषां विशेषणानां ब्रह्मणोऽन्यत्रासम्भवात् कथम् 'इतरेषां किं फलम्?' इत्यस्योत्तरत्वेन एतदवतारः इत्यतोऽक्षराव्यक्तत्वयोः मायायामुपपादितत्वात् तदन्यानि

तत्रोपपादयन् अनिर्देश्यत्वं तावदुपपादयति– **अनिर्देश्यत्वं चेति ।।** शब्दागोचरत्वम् । **'धर्मस्य मम पादभङ्गः'** इत्यन्वयः ।। नन्वत्रापीश्वरोऽस्त्वनिर्देश्य इत्यत आह– **ईश्वरस्त्विति ।।** दैवं पादभङ्गकारणमाहुः । तथा च पुनरुक्तिः स्यादिति भावः । नच दैवशब्दोऽदृष्टवाची । तस्य 'अपरे कर्म' इति पृथगुक्तत्वात् ।।

मायाया अनिर्देश्यत्वे स्पष्टं च प्रमाणमाह– **उक्तं चेति ।।** महाभूतमाकाशवायुरूपम् । उपभूतं तेजोऽब्भूलक्षणम् । तदा प्रलये । अजरमित्यादिकं प्रलये अवस्थानस्योपपादकम् । नच 'एतद् ब्रह्म' इति प्रदर्शनाय 'एषा ह्येव प्रकृतिः' इत्युदाहृतम् ।।

**भावबोधः (र.टि.)– ।। धर्मस्य मम पादभङ्ग इत्यन्वय इति ।।**

'केचिद्विकल्पवचसः आहुरात्मानमात्मनः ।
दैवमन्ये परे कर्म स्वभावमिति चापरे'

इत्यत्र यथाऽऽत्मनः पादभङ्गे कारणमिति शेषः पूरणीयः, तथाऽत्रापि 'अप्रतर्क्याद-निर्देश्याद्धर्मस्य मम पादभङ्ग इति केष्वपि निश्चयः' इति शेषपूरणेन योजनीयमित्यभिप्रेत्यैवमुक्तमिति ज्ञातव्यम् ।

**भावदीपः (रा.टि.)– ।। उदाहृतवाक्येति ।।**'श्रियं वसाना' इत्यादिश्रुतीत्यर्थः ।। **'धर्मस्य मम पादभङ्गः' इत्यन्वय इति ।।** प्रथमस्कन्धे वृषभरूपधर्मस्य परीक्षितश्च संवादरूपे सप्तदशेऽध्याये 'कोऽवृश्चत्तव पादांस्त्रीन् सौरभेय चतुष्पदः' इति परीक्षित्कृतप्रश्नं प्रति एकपादस्थितवृषरूपो धर्मो उत्तरमुक्तवान् । 'दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् । अप्रतर्क्यात्' इत्यादिना । तत्र पञ्चम्यन्तस्य साकाङ्क्षत्वात् धर्मस्य मम पादभङ्ग इति शेषोक्त्या श्लोकेऽन्वयो बोध्य इत्यर्थः ।। 'दैवम्' इत्यादिवाक्येऽप्याकाङ्क्षां शेषोक्त्या पूरयति **पादभङ्गेत्यादि ।।** सच्छब्दार्थस्यैवाकाशवायुरूपस्यैव श्रुतावुक्तेरसच्छब्दार्थं स्वयमाह **तेजोऽब्भूलक्षणमिति ।। असम्भवादिति।।** अनुत्पद्यमानादित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।।** एवम् उक्तरीत्यैव यदि व्याख्यानं 'त्वदुपासका एवोत्तमाः' इति पक्षस्याभ्युपगमे, 'अव्यक्तोपासकानां किं फलम्' इति फलप्रश्नोऽनुपपन्नः ? प्रश्नस्योत्तरितत्वात्, इत्यत आह– **आक्षेपेति ।।** आक्षेपभङ्ग्याऽयम् अभ्युपगम इति नाभ्युपगमाभिप्रायमिदं

श्लोकः ३,४

भाष्यम् । किन्त्वाक्षेपतात्पर्यकमिति भावेन तमेवाक्षेपं दर्शयति– **न युक्तमिति** ।। **तदुपपादनाय** भगवदुपासकानाम् उत्तमत्वाभावोपपादनाय. । **उदाहृतश्रुतीति** ।। 'श्रियं वसाना अमृतत्वमायन्' इत्युदाहृतश्रुतिविरोध इत्यर्थः । **एषां** 'ये त्वक्षरमनिर्देश्यम्' इति श्लोकोक्तानामष्टानां विशेषणानाम्, **इतरेषां** भगवदुपासकेतरेषाम् अव्यक्तोपासकानाम्, **मायायां** प्रकृतिशब्दितश्रीदेव्याम्, अक्षरं च तत् 'अक्षरात्परतः परः' इत्यादिना, 'अव्यक्तं प्रकृतिः', 'महतः परम्' इत्यादिना च, भाष्ये एवोपपादितत्वादित्यर्थः । **तदन्यानि** 'अनिर्देश्यम्' 'सर्वत्रगम्' इत्यादीनि विशेषणानि । **तत्र** मायायाम् । नन्वनिर्देश्यत्वं निर्देशायोग्यत्वम्, निर्देशशब्दश्च 'बालोऽङ्गुलिनिर्देशेन मातापितरावावेदयति' इत्यादौ प्रदर्शनेऽपि **दृष्टः** । अप्रदर्शनीयत्वं चातीन्द्रियसाधारणमिति कथमिदं मायाविशेषणं स्यात् इत्यतोऽत्र विवक्षितमनिर्देश्यत्वं व्याख्याति– **शब्दागोचरत्वमिति** ।। वेदाद्यगोचरापरिमितस्वरूपमित्यर्थः । यद्वा अनिर्देश्यत्वं नाम मनसोऽप्यगोचरत्वं चेत् 'पर्युपासते' इति व्याहतम् । मनसाऽवलोकनरूपत्वादुपासनस्येत्यत आह– **शब्दागोचरत्वमिति** ।। शब्दगोचरमहिम्नोऽपि भगवदुपास्यत्वमिव मायाया अप्युपास्यत्वं नायुक्तमिति भावः ।

भागवतवचने पञ्चम्यन्तं साकाङ्क्षम् अनन्वितम् । अतस्तदन्वयं दर्शयति– **धर्मस्य ममेति** ।।

'कोऽवृश्चत्तव पादांस्त्रीन् सौरभेय चतुष्पद' इति ।

'तपः शौचं दया सत्यमिति पादाः कृते कृताः ।
अधर्माङ्गैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ।।'

इत्यादि पूर्वोत्तरग्रन्थपर्यालोचनायां लभ्यस्य धर्मस्य मम पादभङ्ग इत्यस्य श्रुतप्रायत्वाद् 'अध्याहृतेनान्वयः' इत्यनुक्त्वा 'इत्यन्वयः' इति साम्मुग्ध्येनोक्तम् । केचित्तु 'केचिद्द्वैकल्प्यवचस आहुरात्मानमात्मनः' इत्यतोऽनुवृत्तस्य 'आत्मनः' इत्यस्यार्थः 'धर्मस्य मम' इति, 'पादभङ्गः' इत्येव त्वध्याहार इत्याहुः ।

शूद्ररूपकलिपीडितं छिन्नत्रिपादं वृषभरूपं वृषभशब्दवाच्यं धर्मं दृष्ट्वा, 'हे वृषभ! कस्मात्तव पादभङ्गो जातः' इति परीक्षिता प्रश्ने कृते, तत्रोत्तररूपं धर्मवाक्यम्–

'न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ।
पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ।।

केचिद्वैकल्पवचस आहुरात्मानमात्मनः ।
दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ।।
अप्रतर्क्यादनिर्देश्याद् इति केष्वपि निश्चयः ।
अत्रानुरूपं राजर्षे विमृश स्वमनीषया ।।' इति ।

हे पुरुषर्षभ ! परीक्षिद्राज ! यतः पुरुषाद् जीवानां क्लेशबीजानि स्युः, तं पुरुषम् 'अयमेव' इति न जानीमः न निर्धारयामः । कुतः ? यतो वाक्यभेदविमोहिताः । के ते वाक्यभेदाः तव मोहकाः इत्यत्रोच्यते– **केचिदित्यादि** ।। वैकल्पं विकल्पसमूहोपेतं वचो येषां ते तथोक्ताः । सन्देहापादकवचनाः केचिद् आत्मनः जीवस्य आत्मानं स्वात्मानं क्लेशबीजमाहुः । अन्ये दैवम् ईश्वरम् आत्मनः जीवस्य क्लेशबीजं प्रकरणात् पादभङ्गादिक्लेशकारणमाहुः । परे कर्म अदृष्टं तथाऽऽहुः । अपरे प्रभुम् अप्रतिहतसामर्थ्यं स्वशब्दार्थभगवदुद्भवं कालं तद्बीजमाहुः । अवेद्यलक्षणत्वाद् अप्रतर्क्याद् अनिर्देश्याद् शब्दागोचरात् प्रधानादात्मनः क्लेशः, प्रकृतापेक्षया धर्मस्य मम पादभङ्गः श्रीतत्वहेतुक इति केष्वपि पुरुषेषु निश्चयः । अत्र एतेषूक्तेषु क्लेशस्थानेष्वनुरूपं वेदशास्त्रोक्ततयोचितं त्वमेव विमृश स्वमनीषया इति भागवते माया-शब्दितश्रीदेव्याम् अप्रतर्क्यत्वमुक्तमिति न ब्रह्मणोऽन्यत्राप्रतर्क्यत्वविशेषणासम्भव इति भावः । भागवतटीकायां तु 'अप्रतर्क्यादनिर्वाच्यात्' इत्यादि पठित्वा, अनन्तत्वात् सर्वात्मना अप्रतर्क्यात् तर्काविषयाद् अनिर्वाच्यात् प्रधानात् क्लेशपरम्परा जीवानां भवतीति व्याख्यातम् ।

**अत्रापि** 'अप्रतर्क्यादनिर्देश्यात्' इति भागवतवाक्येऽपि । 'दैवमन्ये' इत्यत्र 'आहुः' इत्यनुवर्त्य तस्य प्रकरणलभ्यपदेनान्वय इति भावेनोक्तम्– **देवं पादभङ्गकारणमाहुरिति** ।। 'दैवमन्य इत्यत्र' इत्येव भाषणीये 'यत्परे' इत्यप्यभाषत, तत् शङ्कान्तरपरिहारायेति भावेनाह– **न चेति** ।। पूर्वप्रमाणे विशेष्यस्य संयोज्यत्वादाह– **स्पष्टं चेति** ।। असत्सच्छब्दव्याख्यानम्– **'महाभूतम् उपभूतम्' इति** ।। तदिदं पदद्वयमपि 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्, वायुरन्तरिक्षं चासत्' इति भगवत्पादैः अन्यत्रोदाहृतां श्रुतिं मनसि निधाय व्याचष्टे– **महाभूतमित्यादि** ।। अन्नं पृथिवी । तथा च तत्वोद्योतटीका 'असत् वाय्वन्तरिक्षाख्यम् । सच्च पृथिव्यप्तेजोरूपम्' इति । 'अव्यक्तम्' इत्यस्यादित्वेऽपि 'अजरमित्यादिकम्' इत्युक्तिः 'क्षरणशून्यत्वं प्रलये अवस्थानस्य स्फुटमुपपादकम्, इतरद् अर्थात्' इत्यावेदयितुम् ।

श्लोकः ३,४

एतत् 'अव्यक्तमक्षरमनिर्देश्यम्' इति श्रुत्युक्तम् अनिर्देश्यम् । श्रुतौ 'एषा' इति स्त्रीलिङ्गं प्रकृतिपदापेक्षया । 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा' इति यथा । भाष्ये 'प्रकृतिरिति' इत्यस्य 'उक्तं च' इति पूर्वेणान्वयः । तेन 'आरभ्य' इति ल्यबुपपद्यते ।

**भावदीपिका (श्री.टि.)– ।। प्रश्नस्य** 'इत्युत्तरं जातम्' इत्यन्वयः । पूर्वोक्तोपन्यासस्य साक्षेपगर्भत्वमेव दर्शयति– **न युक्तमिति ।। उदाहृतश्रुतीति ।।** 'श्रियं वसाना अमृत्वमायन्' इत्युदाहृतश्रुतीत्यर्थः । **फलेति ।।** मोक्षरूपफलेत्यर्थः । **एषाम्** अक्षरत्वानिर्देश्यत्वादीनाम् । **उपपादितत्वादिति ।।** 'अव्यक्तं प्रकृतिः', 'अक्षरं च तत्' इत्यादिनेत्यर्थः । **अप्रतर्क्यादिति ।।** प्रथमस्कन्धे पादत्रयेणावस्थितगोरूपधर्मस्य वचनम् । **अप्रतर्क्यात्** अनुमानागोचरात् । पञ्चम्या अन्वयं दर्शयति– **धर्मस्य ममेति ।।** तथा च 'अप्रतर्क्याद् अनिर्देश्याद् धर्मस्य मम पादभङ्ग इति केष्वपि निश्चयः' इति शेषपूरणेनान्वयो द्रष्टव्य इत्यर्थः । **ईश्वरस्त्वितीति ।।**

केचिद्वैकल्प्यवचस आहुरात्मानमात्मना ।
दैवमन्ये परे कर्म स्वभावमिति चापरे ।।

इत्यत्र वाक्ये दैवशब्देनेश्वर उक्त इत्यर्थः । 'दैवमाहुः' इत्युक्ते 'किमाहुः' इत्याशङ्कायाम् अध्याहार्यं दर्शयति– **दैवं पादभङ्गकारणमाहुरिति ।। तथा चेति ।।** अनिर्देश्यपदेनापीश्वरोक्तावित्यर्थः । **एतदिति ।।** अव्यक्ताजरादिशब्दवाच्यमित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)– ।। उदाहृतेति ।।** श्रियं वसाना इत्याद्युदाहृतेत्यर्थः । **धर्मस्य ममेति ।।** शूद्ररूपकलिपीडितं छिन्नत्रिपादं वृषभरूपं धर्मं दृष्ट्वा परीक्षिता कस्मात् तव पादभङ्गो जात इति पृष्टे वृषभरूपधर्मवाक्यमिदम् । तत्र 'केचिद्वैकल्पवचस आहुरात्मानमात्मनः' इत्यतोऽनुवृत्तस्यात्मन इत्यस्यार्थः– **धर्मस्य ममेति ।।** 'पादभङ्ग इत्यध्याहारे' इति बोध्यम् । एवमग्रेऽपि बोध्यम् । **अपरे कर्मेति ।।** तथा चैवं पाठः । 'देवमन्ये परे कर्म स्वभावमिति चापरे । अप्रतर्क्यात्' इति ।।

## भाष्यम्

**सर्वगा अचिन्त्यदिलक्षणा हि सा । तथा हि मोक्षधर्मे– 'नारायणगुणाश्रयाद् अजरामराद् अतीन्द्रियाद् अग्राह्याद् असम्भवतः असत्याद्**

**अहिंस्रात् ललामाद् द्वितीयप्रवृत्तिविशेषाद् अवैरादक्षयाद् अमराद् अजराद् अक्षराद् अमूर्तितः (सर्वव्यापिनः) सर्वस्याः सर्वकर्तुः शाश्वततमसः' इति ।।**

भावप्रदीपिका (प.टी.)– सर्वगतत्वादिधर्मपञ्चकं च मायायां प्रमाणतः साधयति– **सर्वगेति ।** नारायणं गुणतयाऽऽश्रयत इति । असति प्रधाने स्थितम्– **असत्यम् ।** द्वितीयप्रवृत्तिविशेषात् नारायणानन्तरिकप्रवृत्त्याख्यविशेषतः । अक्षे रमत इत्यक्षरम् । सर्वप्रेरकत्वादिना **सर्वस्याः ।** एतस्मात् परमपुरुषो जात इत्यन्वयः ।

प्रमेयदीपिका (ज.टी.)– इदानीं 'सर्वत्रगम्' इत्यादिकं मायायामुपपादयितुमाह– **सर्वगेति ।।** भावप्रधानो निर्देशः । स्वरूपवाची वा लक्षणशब्दः । नारायणगुणः तदिच्छादिलक्षणः आश्रयो यस्य तत्तथोक्तम् । अनेन ब्रह्मणो व्यावृत्तिः । 'अजरात्' 'अमरात्' इति जडप्रधानादेः । तस्य तत्प्राप्त्यभावात् । अग्राह्यात् मनसोऽप्यगोचरात् इत्यनेन 'अचिन्त्यम्' इति सिद्ध्यति । 'असम्भवतः' 'अक्षयात्' 'अक्षरात्' इति ध्रुवत्वसिद्धिः । असति प्रलये भवम् **असत्यम् । ललामं** प्रधानम् । द्वितीया भगवदेकाधीना प्रवृत्तिः विशेषो यस्य तत्तथा । **अमूर्तितः** प्राकृतदेहरहितात् । सर्वस्याः सर्वगायाः इति छान्दसो लिङ्गव्यत्ययः । अनाद्यविद्याभिमानित्वात् **शाश्वततमसः ।** 'पुरुषोऽभूत्' इत्यन्वयः ।।

भावबोधः (र.टि.)– 'सर्वगा' इत्यनेन पौनरुक्त्यपरिहारार्थं व्याचष्टे– विश्वगतमिति ।। ३ ।।

भावरत्नकोशः (सु.टि.)– ।। उपपादयितुं 'तथा हि' इत्यादिना । **भावेति ।।** 'सर्वगत्वाचिन्त्यत्वादि' इति भावप्रधान इत्यर्थः । **स्वरूपेति ।।** पूर्वव्याख्याने तु लक्षणशब्दो साधारणधर्मरूपविशेषणवाची इति भावः । 'पुरुषोऽभूत्' इति तत्र वक्ष्यमाणसृष्ट्यानुगुण्यायोक्तम्– **तदिच्छालक्षण इति ।।** गुणान्तरपरित्यागेनेच्छाग्रहणम् इच्छाधीनत्वरूपास्वातन्त्र्यद्योतनायेत्यपि आहुः । 'तथोक्तम्' इत्यनन्तरं 'तस्मात्' इति योज्यम् । **अनेन** 'नारायणगुणाश्रयात्' इति विशेषणेन । **ब्रह्मणः** परब्रह्मणः । नारायणगुणाश्रयत्वं जडप्रकृतिकालादेरपि सम्भवतीति तद्ग्रहणं व्युदसितुमाह– **अजरादमरादितीति ।।** 'व्यावृत्तिः' इति वर्तते । **तत्प्राप्त्यभावात्** जडत्वेन जरामरणप्राप्त्यभावात् । तथा चाप्रसक्तप्रतिषेधापत्तेरिति भावः ।

श्लोकः ३,४

'मनसोऽपि' इति वदन् पूर्वत्र इन्द्रियपदं द्रव्येन्द्रियपरम् इत्यभिसन्धत्ते । **असम्भवतः** अनुपपद्यमानस्य **अक्षयात्** अपक्षयादिलक्षणोर्मिशून्यात् **अक्षरात्** शरीरहानिरहितात् इति विशेषणत्रयेण न विद्यन्ते सन्ति वस्तूनि यस्मिन् स असन् प्रलयः, 'तत्र भवः' इत्यर्थे 'अव्ययात् त्यप्' इत्यत्र योगविभागात् त्यप्प्रत्ययः, 'तद्धिताः' इति बहुवचनज्ञापितो यत्प्रत्ययो वा । भत्वाद् जश्त्वाभाव इति भावेनाह– **असति प्रलये भवमसत्यमिति** ।। 'असति प्रलये भावात्' इति तृतीयतात्पर्यवचनाद् असच्छब्दः प्रलयार्थः, ततो भवार्थे 'दिगादिभ्यो यत्' इत्यपि आहुः । **ललामं प्रधानमिति** ।। तथा च रभसः–

'ललाम च ललामं च भूषा वलयवाजिषु ।
चिह्नप्रभावपुण्ड्रेषु प्रधाने ध्वजशृङ्गयोः ।।' इति ।

द्वितीयत्वं वैवक्षिकम्, कथं विशिष्योच्यते इत्यतो विवक्षितार्थमाह– **भगवदैकाधीनेति** ।। प्रवृत्तिर्विशेषः, प्रवृत्तिरेव विशेषः असाधारणधर्मो यस्य श्रीतत्त्वस्य तत्तथा 'द्वितीयप्रवृत्तिविशेषम्, तस्मात्' इति शेषः । 'न विद्यते मूर्तिः तनुर्यस्य तदमूर्तिः, तस्माद् अमूर्तितः' इत्यत्र मूर्तिशब्दविवक्षितमर्थमाह– **प्राकृतेति** ।। 'सर्वस्याः' इत्यस्यार्थः– **सर्वत्रगाया इति** ।। अनेन 'सर्वत्रगम्' इति मायाविशेषणं सिध्यति । छन्दसि सुप्तिङुपग्रहलिङ्गनराणां व्यत्ययानुशासनस्य 'छन्दसि वा' इति योगविभागेन व्याख्यानादाह– **छान्दस इति** ।। शाश्वततमस्त्वं घटयितुमाह– **अनादीति** ।।

भावप्रदीपिकायां तु 'नारायणं गुणतयाऽऽश्रयते' इति 'नारायणगुणाश्रयः' 'अक्षे रमते' इत्यक्षरम् । असति प्रधाने स्थितमसत्यम्, द्वितीयप्रवृत्तिविशेषात् नारायणानन्तरिकप्रवृत्त्याख्य-विशेषतः सर्वप्रेरकत्वादिना सर्वस्या इति व्याख्यातम् । पञ्चम्यन्तस्य मोक्षधर्म एव श्रुतेन पदान्तरेणान्वय इत्याह– **पुरुष इति** ।। हिरण्यगर्भ इत्यर्थः ।

**भावदीपिका (श्री.टि.)**– लक्षणशब्दस्यासाधारणधर्मवचनत्वात् सर्वगादीनां लक्षणत्वा-भावादाह– **भावप्रधान इति** ।। **ब्रह्मणः** परब्रह्मणः । तथा चात्र प्रकृतिरेव प्रतिपाद्येत्याशयः । कुतो जडप्रधानमहदादेर्व्यावृत्तिः इत्यत आह– **तस्य तत्प्राप्नोति** ।। अजरामृतत्वाख्यविशेषणं जडप्रधानादेर्न सम्भवति । तस्य जरादिप्राप्त्यभावेन निषेधायोगादित्यर्थः । **ध्रुवत्वेति** ।। उत्पत्त्यभावस्य, स्वरूपतो देहतश्च नाशाभावस्य विशेषणत्रयेणोक्तत्वात् ध्रुवत्वसिद्धिरित्यर्थः । भवं स्थितम् । तथा च 'अत्रत्यम्' 'तत्रत्यम्' इतिवत् 'असति भवं स्थितम् असत्यम्' इति

'तत्र भवः' इति तद्धितप्रत्ययान्तः शब्द इत्यर्थः । **प्रधानमिति** ।। तथा च 'ललामात्' इत्यस्य 'ब्रह्माद्यपेक्षया प्रधानात्' इत्यर्थः । ननु 'शाश्वततमसः' इति विशेष्यस्य नपुंसकलिङ्गत्वात्, 'अजरात्' इत्यादिवत् 'सर्वस्मात्' इति स्यात् इत्यत आह– **छान्दस इति ।। पुरुषोऽभूदिति** ।। अनाद्यविद्यागुणत्रयात्मिका प्रकृतिः, तदभिमानित्वाच्छाश्वततमः-शब्दवाच्याया मायायाः सकाशात् पुरुषः पुन्नामा ब्रह्माऽभूदित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। स्वरूपवाचीति** ।। 'लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यते' इति तृतीयस्कन्धतात्पर्योक्तेरिति भावः । षष्ठीसमासस्य बाधादाह– **नारायणगुण इति** ।। पुरुषोऽभूदिति वक्ष्यमाणसृष्ट्यानुगुण्याय व्याचष्टे– **तदिच्छेति** ।। विशेषणकृत्यमाह– **अनेन ब्रह्मण इति** ।। परब्रह्मण इत्यर्थः । नारायणेच्छोपजीवकत्वस्य तत्र बाधादिति भावः । **तत्प्राप्त्यभावादिति** ।। जडत्वेन जरादिप्रसक्त्यभावादित्यर्थः । **अक्षरादितीति** ।। देहनाश-शून्यादित्यर्थः । असति प्रलये भवमिति तृतीयस्कन्धतात्पर्योक्तेः प्रलयवाचकादसच्छब्दात् तत्र भव इत्यर्थे दिगादिभ्यो यदिति यत् । भत्वाज्जश्त्वाभावश्चेति भावः ।

'लक्ष्मभूषापुण्ड्रपुच्छश्रेष्ठलिङ्गाश्वलिङ्गिषु ।
ध्वजे प्रभावे पुरुषे ललामोऽस्त्री ललाम वा'

इत्युक्तेर्ललामशब्दस्यानेकार्थत्वात् प्रकृतोपयुक्तमर्थमाह– **प्रधानमिति** ।। एकापेक्षया अन्यत्र द्वितीयत्वसद्भावादिशेषोक्त्ययोग इत्यत आह– **भगवदेकेति** ।।

## भाष्यम्

**'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' (मनु.१.५) इति मानवे ।**

**'कूटस्थोऽक्षर उच्यते' (१५.१६) इति वक्ष्यति । कूटे आकाशे स्थिता कूटस्था । 'आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता' इति हि ऋग्वेदखिलेषु । 'सा सर्वगा निश्चला लोकयोनिः सा चाक्षरा विश्वगा विरजस्का' इति सामवेदे गौपवनशाखायाम् ।। ३,४ ।।**

भावप्रदीपिका (प.टी.)– प्रलय इदम् अव्यक्ताख्यतमः सर्वतः आसीदभूत् ।

श्लोकः ३,४

न जातम् । सृष्टिकाल इव प्रवृत्यभावात् प्रसुप्तमिव । अत्रार्थादुक्तविशेषणसिद्धिः । कूटस्थत्वे प्रमाणमाह– **कूटस्थ इति** । कूटस्थशब्दस्यार्थं सप्रमाणकमाह– **कूट इति** । सर्वगतत्वादित्यस्य स्पष्टश्रुत्या समर्थयति– **सेति** ।।

**प्रमेयदीपिका (ज.टी.)–** इदं प्रसिद्धं **तमः** मायाख्यं प्रलये सर्वतः प्रसुप्तमिव निर्व्यापारमासीत् । **अभूतम्** अजातम् । 'अप्रज्ञातम्' इत्यादिना प्रत्यक्षानुमानागमवेद्यत्वाभाव उच्यते । अवेद्यलक्षणत्वात् 'अप्रतर्क्यम्' । अनेन सर्वत्रगमचिन्त्यं ध्रुवमिति सिद्ध्यति । गीतावाक्येन कूटस्थत्वं नित्यत्वं चेत् 'ध्रुवम्' इति पुनरुक्तिः । कूटमनृतं तिष्ठत्यस्मिन्नित्यसम्भवीत्यत आह– **कूट इति** ।। कूटशब्दस्य आकाशवाचित्वेऽभिधानं प्राक् पठितम् । तथाऽपि दार्ढ्याय श्रुत्युदाहरणम् । श्रुत्यनुसारेण स्त्रीलिङ्गम् ।। 'सा सर्वगा' इत्युक्तार्थे स्पष्टं प्रमाणम् । **निश्चला** स्वपदादभ्रष्टा । विश्वं गतमाश्रितमस्यामिति **विश्वगा** । एतानि चोक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वाङ्गीकारसमर्थनार्थानीति ज्ञेयम् ।। ३,४ ।।

**भावदीपः (रा.टि.)–** ।। **इत्यादिनेति** ।। अप्रज्ञान्तमलक्षणमविज्ञातमिति पादत्रयेणेत्यर्थः ।। **अनेनेति** ।। 'आसीत्' इत्यादि पदेनेत्यर्थः ।। **सर्वगेति** ।। सर्वतः सर्वगतत्वस्य 'अप्रज्ञातम्' इत्यादिना, अचिन्त्यत्वस्य 'अभूतम्' इत्यनेन ध्रुवत्वस्य प्रतीतेरिति भावः ।। इति **सिद्ध्यतीति** ।। इति गीतोक्तं प्रमेयं सिद्ध्यतीत्यर्थः । **प्राक्पठितमिति** ।। षष्ठे अध्याये 'सा सर्वगता' इति स्पष्टं प्रमाणमित्यन्वयः । कुत्रेत्यत उक्तम्– **उक्तार्थ इति** ।। सर्वगमचिन्त्यत्वादिना गीतोक्तसर्वगतत्वाद्यर्थ इत्यर्थः । **इति विश्वगेति** ।। तथाच न 'सर्वगा' इत्यनेन पौनरुक्त्यमित्यर्थः ।। ननु 'ये त्वक्षरमनिर्देश्यम्' इत्यादि विशेषणान्यव्यक्तस्य किमर्थमुक्तानि। येन महता प्रयत्नेनानिर्देश्यत्वं चोक्तम् । भगवतः इत्यादिना कथमिति पर्यन्तभाष्येणाव्यक्ते तत्समाधानं कृतमित्यतो गीतोक्ताव्यक्तविशेषणानामुपयोगमाह– **एतानि चेति** ।। एतेन अव्यक्तं विशेष्यम्, अन्यानि तद्विशेषणानीति सूचितम् ।। ३,४ ।।

**भावरत्नकोशः (सु.टि.)–** मायायाः प्रकृतत्वादसाङ्गत्यपरिहाराय आह– **तमो मायाख्यमिति** ।। इवशब्दोक्तसादृश्योक्तिः– **निर्व्यापारमिति** ।। 'इत्यादिना' इत्यत्रादिपदेन 'अलक्षणम्' 'अविज्ञेयम्' इत्यनयोर्ग्रहणम् । तत्र प्रकर्षेण, रेखोपरेखादिमत्तया वस्त्ववगाहि

यत् प्रत्यक्षं तदवेद्यत्वम् 'अप्रज्ञातम्' इत्यनेनोच्यते । लक्षणस्य केवलव्यतिरेकिविधया, 'अयं गौर्भवितुमर्हति सास्नादिमत्त्वात्' इत्यादौ अनुमानत्वदर्शनाद् 'अलक्षणम्' इत्यनुमानावेद्यत्व-सिद्धिः । 'अविज्ञेयम्' इत्यनेन च 'तम आसीत्', 'अजामेकाम्' इत्यादिनाऽऽगमेन सामान्यतो ज्ञेयत्वेऽपि विशेषाकारेण ज्ञेयत्वाभाव एवोच्यत इत्यागमवेद्यत्वाभावसिद्धिरिति भावः । **अवेद्य-लक्षणत्वात्** प्रत्यक्षानुमानागमावेद्यस्वरूपत्वात् । किमनेन वचनेन प्रकृतिविशेषणम् आवेदित-मासीत् इत्यत आह– **अनेनेति** ।। 'बह्वीं प्रजां जनयन्तीं सरूपाम्' इति मायायां सव्यापारत्वावेदनात् प्रसुप्तशक्तिरयुक्ता इत्यतः शेषमाह– **प्रलय इति** ।। 'सर्वतः सर्वस्मादपि व्यापारात् प्रसुप्तम्' इति सर्वव्यापारादुपरतत्वमुच्यते । तथा 'सर्वतः सर्वत्रासीत्' इत्यनेन गीतोक्तं 'सर्वगम्' इति विशेषणं प्रत्यक्षानुमानागमावेद्यतया मनसोऽप्यगोचर इति, अचिन्त्यम् अभूतमजातं प्रलयेऽप्यासीदित्यनेन ध्रुवत्वं च सिध्यतीत्यर्थः ।

केचित्तु 'अलक्षणम्' इत्येतत् व्यर्थम् । 'भगवदेकाधीनत्वसर्वगतत्वाचिन्त्यत्वादिलक्षणा च सा' इति भाष्ये लक्षणाभिधानाद् बाधितार्थं च इत्यतोऽप्रतर्क्यत्वे साध्ये हेत्वर्थगर्भमिदं विशेषणमिति न वैयर्थ्यादिशङ्केति भावेनाह– अवेद्यत्वलक्षणत्वादप्रतर्क्यमिति व्याकुर्वते । भावप्रदीपिकायां तु – प्रलये इदमव्यक्ताख्यं तमः सर्वत आसीद् अभूतमजातम्, सृष्टिकाल इव प्रवृत्त्यभावात् प्रसुप्तमिव । अत्रार्थाद् उक्तविशेषणसिद्धिरिति मनुवचनं व्याख्याय, मायायां कूटस्थत्वमस्तीति कुतो ज्ञातव्यम् इत्यतोऽत्र प्रमाणमुच्यते कूटस्थोऽक्षर उच्यत इति पुरुषोत्तमयोगे वक्ष्यति भगवान्' इति भाष्यमवतारितम् । तदिदमयुक्तम्, इति शङ्कते– **गीतावाक्येनेति** ।। नित्यत्वम् आद्यन्तशून्यत्वं चेद् 'विवक्षितं तर्हि' इति शेषः । 'कूटं यन्त्रेऽनृते राशौ' इति विश्वाभिधानादाह– **कूटमनृतमिति** ।। 'तिष्ठत्यस्मिन्' इति वदन् कूटशब्दोपपदे तिष्ठतेः 'घञर्थे कविधानम्' इत्यधिकरणे कप्रत्ययः 'आतो लोप इटि च' इत्याकारलोपः, उपपदसमासश्च इत्यभिसन्धत्ते । **असम्भवीति** ।। सत्येकमूर्तौ श्रीदेव्याम् अनृतावस्थानम् असम्भवदुक्तिकमिति नेदं विशेषणम् । 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणम्' इति भावः ।

कूटशब्दस्याकाशवाचित्वेऽपि किं प्रमाणमिति चोद्यापनोदायाह– **कूटशब्दस्येति** ।। 'यद्यपि' इति शेषः । **प्राक्** 'कूटं खं विदलं व्योम' इति षष्ठाध्याये 'कूटस्थः' इति भाष्ये

श्लोकः ३,४

'सुपि स्थः' इत्यत्र योगविभागात् तिष्ठतेः कप्रत्ययो द्रष्टव्यः । 'कूटे स्थितं कूटस्थम्' इत्येव भाषणीयम् । तत्कथं स्त्रीलिङ्गम् इत्यत आह– **श्रुत्यनुसारेणेति** ।।

।। **उक्तेऽर्थे** सर्वगतत्वे अचलत्वे च । मोक्षधर्मे 'सर्वस्याः सर्वगायाः' इति, मनुवचने 'सर्वतः सर्वत्रासीत्' इति च व्याख्यातत्वात् स्पष्टमित्युक्तम् । 'सा सर्वगता' इति स्पष्टं प्रमाणमित्यन्वयः । 'न चलेत् स्वात् पदाद्यस्मादचला श्रीः' इति तात्पर्यनिर्णयोक्तिं हृदि निधायाह– **स्वपदादभ्रष्टेति** ।। अनेन 'सर्वगा' इत्यनेन निश्चलत्वस्य लाभाद् आर्थिक-पुनरुक्तिरिति परिहृतम् । 'सर्वगा' इत्यनेनापौनरुक्त्यायाह– **विश्वमिति** ।। गमेरनेकार्थ-त्वाश्रयणेन तात्पर्यगत्या वा आह– **गतमाश्रितमिति** ।। 'गच्छतीति गम्' निरुपपदादपि गमेः 'अन्येष्वपि दृश्यते' इति डः । ततः 'विश्वं गं यस्याम्' इति सप्तम्यर्थे बहुव्रीहिरिति भावः । गीतायामेतावताम् अव्यक्तविशेषणानामस्ति प्रयोजनमित्याह– **एतानि चेति** ।।

**गीताक्षरार्थस्तु–** नन्वव्यक्तोपासकानां किं फलम् । मोक्षोऽस्ति न वा । न चेद् उदाहृत-श्रुतिविरोधः । आद्ये कथं त्वदुपासकानामुत्तमत्वम् । फलसाम्यात्, इत्याशङ्क्य, अव्यक्तो-पासकानां मोक्षमङ्गीकृत्य सहेतुकं स्वोपासकानाम् उत्तमत्वमुच्यते– **ये त्विति त्रिश्लोक्या** । अक्षरं देहतोऽप्यविनाशि । अनिर्देश्यं शब्दागोचरम् । सर्वत्रगं 'सर्वत्र गच्छति' इति गमेर्डप्रत्यये सर्वदेशव्यापि । अचिन्त्यं मनसोऽप्यगोचरम् । कूटस्थं 'कूटं खं विदलं व्योम' इत्यभिधानात् कूटम् आकाशम्, तत्राभिमानितयाऽवस्थितम् । 'सुपि स्थः' कः । अचलं स्वपदादभ्रष्टम् । ध्रुवं नित्यम् । एतानि चाव्यक्तविशेषणानि तदुपासनस्य मोक्षसाधनत्वसमर्थनार्थानीति ज्ञेयम् ।।

एवंविधमव्यक्तं चित्प्रकृतिम् इन्द्रियग्रामम् इन्द्रियसमूहं सन्नियम्य विषयेभ्यः सम्यगुपसंहृत्य, सर्वत्र समबुद्धयः षष्ठाध्यायोक्तप्रकारेण जीवचिदादिसाम्यज्ञानवन्तः सन्तः पर्युपासते सर्वेन्द्रियाति-संयमादिसाधनसम्पत्त्या ध्यायन्ति ते मामेव प्राप्नुवन्ति मोक्षं प्रतिपद्यन्ते ।। ३,४ ।।

**भावदीपिका (श्री.टि.)–** ।। **प्रत्यक्षेत्यादि** ।। 'अप्रज्ञातम्' इत्यनेन 'प्रत्यक्षा-वेद्यत्वम्', 'अलक्षणम्', 'अप्रतर्क्यम्' इत्यनेन 'अनुमानावेद्यत्वम्', 'अविज्ञेयम्' इत्यनेन 'आगमावेद्यत्वम्' उच्यत इति द्रष्टव्यम् । अनुमानावेद्यत्वप्रतिपादकेऽप्रवर्क्यत्वे अलक्षणत्वं हेतुरुच्यते, इत्याशयेनाह– **अवेद्यलक्षणत्वादिति** ।। लक्षणस्यैव हेतूकर्तव्यत्वेन तस्यावेद्यत्वे हेतोरज्ञानासिद्धिप्राप्त्याऽनुमानायोगादिति भावः । **अनेनेति** इत्यनेन ।। 'प्रसुप्तमिव' इत्यनेन

'सर्वगत्वम्', 'अप्रज्ञातम्' इत्यादिना 'अचिन्त्यत्वम्', 'अभूतम्' 'ध्रुवत्वम्' सिद्ध्यतीति द्रष्टव्यम् ।

**गीतावाक्येन** 'कूटस्थम्' इत्यनेन । **असम्भवीति** ।। महालक्ष्म्याम् अनृताख्यदोषाभावादित्याशयः । **प्राक् पठितमिति** ।। 'कूटं खं विदलं व्योम सन्धिराकाश उच्यते' इति षष्ठाध्याये इत्यर्थः । **आकाशे स्थितत्वं** लक्ष्म्या अव्याकृताकाशाभिमानित्वादिति ज्ञेयम् । ननु गीतानुसारेण 'कूटे आकाशे स्थितं कूटस्थम्' इति वक्तव्ये **'कूटस्था'** इति कथं भाषितम् इत्यत आह– **श्रुत्यनुसारेणेति** ।। 'आकाशे संस्थिता' इत्यादिश्रुत्यनुसारेणेत्यर्थः । **स्वपदेति** ।। भगवद्वक्षोरूपात् स्वस्थानात् कदाऽप्यभ्रष्टेत्यर्थः । 'सर्वगा' इत्यनेन पौनरुक्त्यपरिहाराय व्याचष्टे– **विश्वं गतमिति** ।। **समर्थनार्थानीति** ।। लक्ष्म्या एतादृशमहामहिमोपेतत्वेन तदुपासनस्य मोक्षसाधनत्वं युक्तमित्यर्थः ।। ३,४ ।।

**भावप्रकाशः (कृ.टि.)– ।। अप्रज्ञातमित्यादिनेति ।।** आदिपदेनाप्रतर्क्यमविज्ञेयमित्यनयोः संग्रहः अलक्षणमित्येतद्व्यर्थमनर्थं चेत्यत आह– **अवेद्येति** ।। हेत्वर्थगर्भत्वान्न वैयर्थ्यम् । नञो वेद्यतापरत्वान्नानर्थक्यमिति भावः । **नित्यत्वं चेदिति** ।। 'एकरूपतया तु यः । कालव्यापी स कूटस्थः' इत्यमरोक्तेरिति भावः । **कूटमनृतमिति** ।। 'कूटं यन्त्रेऽनृते राशौ' इति विश्वोक्तेरिति भावः । **तिष्ठत्यस्मिन्निति** ।। **कूटशब्दे उपपदे घञर्थे कविधानमिति** ।। तिष्ठतेरधिकरणे कः, आतो लोप इटि चेत्यलोपः । उपपदसमासश्चेति भावः । **असम्भवीति** ।। लक्ष्म्या अनृताश्रयत्वायोगादिति भावः । यद्वा अनृतस्यात्यन्तासत्त्वेन तदाश्रयत्वासम्भवादिति भावः । भाष्ये **कूट आकाशे स्थितेति** ।। कूटशब्दोपपदात्तिष्ठतेः सुपीति योगविभागात् कप्रत्यय इति भावः । 'सर्वगा' इत्यनेन निश्चलत्वस्यार्थतो लाभादार्थिकपुनरुक्तिरित्यत आह– **स्वपदादिति** ।। 'सर्वगा' इत्यनेन पुनरुक्तिनिरासायाह– **विश्वं गतमिति** ।। गच्छतीति गम् । निरुपपदादपि गमेरन्येष्वपि दृश्यत इति डः । सर्वोपाधिव्यभिचारार्थापिशब्दात् । ततो विश्वं गं यस्यामिति सप्तम्यर्थे बहुव्रीहिरिति भावः ।। ३–४ ।।

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।। ५ ।।**

श्लोकः ५

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** ननु त्वदुपासकानामिव अव्यक्तोपासकानामपि तत्प्राप्तिरूपमोक्षसद्भावे उभयेषां फलसाम्यात् कथं त्वदुपासकानामुत्तमत्वम् इत्यत उच्यते– **क्लेशोऽधिकतर इति** ।। अव्यक्ते विष्णुं विनाकृतश्रीतत्वे आसक्तचेतसां क्लेश अधिकतरः अत्यन्ताधिकः । अव्यक्ता अत्राव्यक्तशब्दोऽव्यक्तोपासनं लक्षयति । तेन च तद्वाचकत्वं लक्ष्यते । 'गम्यते मोक्षोऽनेन' इति व्युत्पादनाद् उपायः गतिः । अव्यक्तोपासनद्वारको मत्प्राप्तिलक्षणमोक्षमार्गः । अव्यक्तोपासनानन्तरभाविभगवदुपासनं देहवद्भिः प्राकृतकायैः पुरुषैः दुःखं यथा भवति तथा अवाप्यते । 'यतः क्लेशोऽधिकतरस्तेषां पृथक् श्रियमुपासताम्' इत्यादिप्रमाणप्रसिद्धमेतदिति हिशब्दः । 'अयमेव भगवदभिप्रायः, नान्यः' इत्येतत्तु भाष्यटीकयोः स्फुटम् ।। ५ ।।

## भाष्यम्

**कथं तर्हि त्वदुपासकानामुत्तमत्वम्? इत्यत आह– क्लेश इति ।। अव्यक्ता गतिः दुःखं ह्यवाप्यते ।।**

भावप्रदीपिका (प.टी.)– ननु यद्युभयोरपि मोक्षः, तर्हि कथं त्वदुपासकानामाधिक्यम् इत्याशङ्कोत्तरत्वेनोत्तरश्लोकद्वयमवतारयति– **कथमिति** । क्लेशः इत्युक्तार्धेन परोत्तरार्धान्वयमुक्त्वाऽर्थं चाह– **अव्यक्तेति** ।।

प्रमेयदीपिका (ज.टी.)– ननु 'इतरेषां किं फलम्?' इत्यस्य प्रश्नस्य 'ते प्राप्नुवन्ति मामेव' इत्युत्तरं दत्तम् । तत्किमुत्तरेण? इत्यत आह– **कथमिति** ।। पूर्ववाक्ये पक्षग्रहणमात्रं कृतम् । नतु तत्राभिप्रेतस्य दोषस्य परिहारः । अतः पूर्वपक्षिणा अभिप्रायोद्घाटने कृते तत्समाधानम् आहेति भावः । **तर्हि** उभयेषां फलसाम्ये ।। यद्यप्येषा शङ्का पूर्ववाक्ये परिहृता । पर्यादिशब्दप्रयोगात् । तथा च वक्ष्यति । तथाऽपि साध्यस्यानुक्तत्वाद्धेतुवचनं स्वरूपकथनं मन्यमानस्य भवत्येव पुनः शङ्का । उत्तरार्धे पदानां व्यवहितत्वादन्वयाप्रतीतौ तमाह– **अव्यक्तेति** ।। अनेन 'दुःखम्' इत्यस्य क्रियाविशेषणत्वमुक्तम् ।।

भावबोधः (र.टि.)– ।। **वक्ष्यतीति** ।। तदेतत्सर्वमित्यनेनेत्यर्थः । **साध्यस्येति** ।। अव्यक्तोपासकानां क्लेशाधिक्यलक्षणाधमत्वरूपसाध्यस्येत्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **पूर्ववाक्ये** मामेवेति वाक्ये, अव्यक्तोपासनपक्षस्य ग्रहणमात्रम् अङ्गीकारमात्रम् इत्यर्थः ।। तर्हीति भाष्यानुवादः, उभयेषाम् इत्यादि व्याख्या ।। भगवदुपासकानाम् अव्यक्तोपासकानां चेत्यर्थः ।। **पूर्ववाक्य इति** ।। 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते' इति वाक्य इत्यर्थः।। **पर्यादीति** ।। 'परिशब्दं सन्नियम्य इत्यत्र संशब्दः, 'क्लेशोऽधिकतरस्तेषाम्' इत्यत्र तरशब्दप्रयोगादित्यर्थः ।। परिशब्दादिप्रयोगाद् अव्यक्तोपासने भगवदुपास्तौ भवेदित्यर्थः । तावता कथं परिहृतः? इत्यतः पर्यादिशब्दप्रयोगादव्यक्तोपासनस्य भगवदुपास्तितः अतिकष्टत्वसूचनमित्येतत् भाष्यकार एव '**अतिशयोपासन**' इत्यादिना परिसन्तरपूशब्दैः प्रतीयते' इत्यन्तेन वक्ष्यतीत्याह– **तथा च वक्ष्यतीति** ।। **साध्यस्येति** ।। क्लेशाधिक्यलक्षणफलस्येत्यर्थः ।। **हेत्विति** ।। इन्द्रियसंयमनसर्वत्रसमबुद्धित्वसर्वभूतहितत्वरूपाव्यक्तोपासनहेतुवचनमित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– ।। **इतरेषाम्** अव्यक्तोपासकानां **इत्यस्य** गमनिकाभाष्यकृत्प्रश्नस्य, **पूर्ववाक्ये** 'क्लेशोऽधिकतरः' इत्यतः पूर्ववाक्ये । **पक्षग्रहणमात्रम्** 'ते प्राप्नुवन्ति इति मोक्षः फलमस्ति' इत्येतावन्मात्रम् । मात्रपदव्यावर्त्यम्– **न त्विति** ।। 'दोषस्य फलं मोक्षोऽस्ति न वा, न चेदुदाहृतश्रुतिविरोधः' इत्यादिनोक्तस्य परिहारः 'कृतः' इति लिङ्गव्यत्ययेनान्वयः । **अभिप्रायेति** ।। अव्यक्तोपासकानामपि मोक्षः फलमस्ति चेत् कथं त्वदुपासकानाम् उत्तमत्वं फलसाम्यादित्यभिप्रायोद्घाटने कृते सति अव्यक्तोपासनेन मोक्षसम्पादनं क्लेशोदर्कमिति न साम्यमिति समाधनमित्यर्थः । 'तर्हि' इत्यनुवादः, 'उभयेषां फलसाम्ये' इति व्याख्या । **एषा शङ्का** फलसाम्ये कथं त्वदुपासकानाम् उत्तमत्वमिति शङ्का । **पूर्ववाक्ये** 'ते प्राप्नुवन्ति मामेव' इत्यत्र अव्यक्तोपासका अपि मोक्षमेव प्राप्नुवन्ति, किन्तूक्तप्रकारेणोपासनेन, इन्द्रियग्रामातिनियमनेन, सर्वत्र समबुद्धित्वेन, सर्वभूतहितरतत्वादिसुष्ठ्वाचारेण च सम्पादिताव्यक्तप्रसादा एव सन्तः । कुत एतत् । 'पर्युपासते, सन्नियम्येन्द्रियग्रामम्' 'सर्वत्र समबुद्धयः, सर्वभूतहिते रताः' इति वाक्येषु परिसमादिशब्दप्रयोगात् । एवं नानाविधदुस्सम्पादाङ्गसम्पन्नाव्यक्तोपासनशालिना समन्ततोऽहमेव प्राप्यः । एवंविधक्लेशोदर्काङ्गसाकल्यवैधुर्येणापि मामुपासीनानाम् अहमेव प्राप्य इत्यतो मदुपासका एवोत्तमा इति लाभात् परिहृता इत्यर्थः । **वक्ष्यति** 'तदेतत्सर्वम्' इत्यनुपदमेव भाष्यकारः । **साध्यस्य** 'अव्यक्तोपासका अधमाः' इत्यभिमतसाध्यस्य । 'अव्यक्ता हि गतिर्दुःखम्' इति हिशब्दोपलब्धवचनेन साध्यमूहितुं

श्लोकः ५

शक्यम् । 'अव्यक्तोपासनमेतादृशं हि' इति प्रसिद्धस्वरूपकथनम् इति मन्यमानस्य हेतुवचनत्वानवबोधादित्याह– **हेतुवचनमिति** ।। **व्यवहितत्वात्** हिपदेन दुःखपदेन च अन्वयविरोधिना व्यवहितत्वात् ।

**भावदीपिका (श्री.टि.)– ।। पक्षग्रहणमात्रमिति** ।। इतरेषामव्यक्तोपासकानां किं फलम् इति प्रश्ने, 'अव्यक्तोपासकानां मत्प्राप्तिरूपमोक्षलक्षणं फलं भवति' इति पक्षग्रहणमात्रं कृतमित्यर्थः । मात्रपदव्यावर्त्यं दर्शयति– **न त्विति** ।। 'तर्हि फलसाम्यात् त्वदुपासकानामुत्तमत्वं न स्यात्' इति यस्तत्र दोषोऽभिहितः, तत्परिहारो न कृत इत्यर्थः । **अभिप्रायेति** ।। 'कथं तर्हि' इत्यनेनेत्यर्थः । **उभयेषामिति** ।। त्वदुपासकानाम् अव्यक्तोपासकानां च भगवत्प्राप्तिलक्षणफलसाम्य इत्यर्थः । **एषा शङ्का** 'कथं तर्हि' इति शङ्का कथं परिहृता इत्यत आह– **पर्यादीति** ।। 'अव्यक्तं पर्युपासते' 'सन्नियम्येन्द्रियग्रामम्' इति पर्यादिशब्दप्रयोगेण । अव्यक्तोपासनस्य कठिनत्वावगमात् 'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते' इत्यत्र 'उपासते' इत्येवोक्त्या भगवदुपासनस्य सुलभत्वावगमात्, असुलभाव्यक्तोपासनकर्त्रपेक्षया सुलभभगवदुपासनकर्तॄणामुत्तमत्वं प्राप्तमेवेत्यर्थः । **वक्ष्यतीति** ।। 'तदेतत्सर्वम्' इत्यत्रेत्यर्थः । **साध्यस्येति** ।। अव्यक्तोपासका अधमाः अधिकक्लेशवत्त्वात् । न चासिद्धो हेतुः । 'अव्यक्तोपासका अधिकक्लेशवन्तः, असुलभाव्यक्तोपासनकर्तृत्वात्' इत्याद्यनुमानमभिप्रेतम् । तेन चाधमत्वं सिद्ध्यतीति तत्र पर्यादिशब्दप्रयोगेनोक्तः असुलभाव्यक्तोपासनकर्तृत्वरूपो हेतुः अव्यक्तोपासकानां स्वरूपकथनार्थमेव प्रयुक्तः, नतु तेषां क्लेशवत्त्वरूपसाध्यसाधनायेति प्रतीतिः स्यात् । साध्यस्य पूर्वमनुक्तत्वात् । ततश्चाधमत्वं न सिद्ध्येत् । अतः एवंप्रतीतिमतः 'कथं तर्हि' इत्युक्तशङ्का भवत्येव । अतोऽत्र परिहाराय साध्यमुच्यत इति भावः । **अनेनेति** ।। 'दुःखं हि' इति हिशब्देनेत्यर्थः । **क्रियेति** ।। 'अव्यक्ता हि गतिर्दुःखं यतः स्यात्तथा तदुपासकैराप्यते' इत्यर्थ उक्तो भवति ।।

**भावप्रकाशः (कृ.टि.)– ।। वक्ष्यतीति** ।। तदेतत्सर्वमित्यादिनेति शेषः । **साध्यस्येति** ।। अव्यक्तोपासकानामधमत्वरूपसाध्यस्येत्यर्थः ।

## भाष्यम्

**गतिः मार्गः । अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखम् अवाप्यत इत्यर्थः ।।**

**प्रमेयदीपिका (ज.टी.)**– गतिशब्दस्य अकर्तरि कारके भावे च प्रयोगादत्र विवक्षितमर्थमाह– **गतिरिति** ।। गम्यते अनेनेति व्युत्पादनाद् उपायो गतिरित्यर्थः । ननु मार्गस्याव्यक्तत्वं कथमुच्यते? कुतश्च गम्यार्थता गतिशब्दस्य त्यज्यते? इत्यत आह– **अव्यक्तेति** ।। अव्यक्तोपासनं द्वारमुपायो यस्यासौ तथोक्तः । अव्यक्तोपासनानन्तरभावि यद् भगवदुपासनं तदेवमुच्यते । अनेनाव्यक्तशब्दः तदुपासनं लक्षयति । तेन च तद्द्वारकत्वं लक्ष्यते । गम्यार्थतायां च गतिशब्दस्याव्यक्ताख्यं गम्यमित्युक्तं स्यात् । नच तद्युक्तम् । 'ते प्राप्नुवन्ति मामेव' इति भगवत्प्राप्तेरुक्तत्वादित्युक्तं भवति ।।

**भावबोधः (र.टि.)**– ।। **अकर्तरीति** ।। कर्तृकारकव्यतिरिक्ते कर्मादिकारक इत्यर्थः । **तदेवमुच्यत इति** ।। गम्यतेऽनेनेति व्युत्पत्त्या गतिरित्युच्यते इत्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **अकर्तरीति** ।। कर्तृभिन्ने कर्मकरणादिकारके भावार्थे च प्रयोगादित्यर्थः । 'अकर्तरि च कारके सञ्ज्ञायाम्' इति सूत्रे 'भावे' इत्यनुवृत्तेरिति भावः । **एवमुच्यत इति** ।। अव्यक्ता गतिरित्येवमुच्यत इत्यर्थः । तल्लाभप्रकारमाह– **अनेनेति** ।। अव्यक्तेत्यादिभाष्येणेत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **अकर्तरि च कारक इति** ।। 'स्त्रियां क्तिन्' इति क्तिन्विधायकसूत्रे 'अकर्तरि च कारके' इत्यनुवृत्त्या कर्तृव्यतिरिक्तकर्मादिकारके घञपवादकतया क्तिन्विधावपि कर्तृकारके तदविधेः 'अकर्तरि' इति विशेषणमत्रोपात्तमिति ज्ञेयम् ।।

**भावरत्नकोशः (सु.टि.)**– ।। **अकर्तरीति** ।। 'स्त्रियां क्तिन्' इत्यत्र कर्तृभिन्ने कारके, भावे च इत्यनुवृत्तेरिति भावः । 'गम्यतेऽनेन' इति वदन् करणे क्तिन्प्रत्ययमभिप्रैति । **कथमिति** ।। अव्यक्तशब्दस्य प्रधाने रूढत्वादिति भावः । अव्यक्तोपासनस्य भगवत्प्राप्तिरूपमोक्षमार्गत्वं स्पष्टयितुमाह– **अव्यक्तोपासानन्तरभावीति** ।। **एवमुच्यते** 'अव्यक्ता गतिः' इत्येवमुच्यते । कथं मार्गस्याव्यक्तत्वम् , कुतश्च गतिशब्दस्य गम्यार्थतात्यागः इति कृतचोद्यद्वयं भाष्यभावोक्त्या परिहरन् 'तदेवमुच्यते' इत्येतद् विशदयति– **अनेनेति** ।। 'अव्यक्तोपासन..' इत्यादिभाष्येणेत्यर्थः । 'इत्युक्तं भवति' इत्यन्वयः । लक्षणाबीजसम्बन्धं दर्शयितुमुक्तम्– **तदुपासनमिति** ।। **तेन च** अव्यक्तोपासनलक्षणेन च । **लक्ष्यते** अव्यक्तशब्दगतलक्षित-

श्लोकः ५

लक्षणावृत्त्या गृह्यते । अनेन 'कथमव्यक्तत्वं मार्गस्य' इति चोद्यं परिहृतम् । 'गम्यार्थतायाम्' इत्यनेन च 'कुतः' इति चोद्यं निरस्तमिति ज्ञातव्यम् ।

**भावदीपिका (श्री.टि.)– ।। अकर्तरि कारक इति ।।** 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृभिन्ने कारके क्तिन्प्रत्ययविधानात्, क्तिन्प्रत्ययान्तो गतिशब्दः कर्तृव्यतिरिक्तकर्मकरणार्थकः । यथा 'सा परा गतिः' इत्यत्र 'गम्यते' इति कर्मव्युत्पत्त्या गम्यवाची गतिशब्दः, 'शास्त्रं गतिः' इत्यादौ 'गम्यतेऽनेन' इति व्युत्पत्त्या ज्ञानकारणार्थवाची दृष्ट इत्यर्थः । **भावे चेति ।।** 'समीचीना गतिर्ह्यस्य' इत्यादौ गमनं गतिरिति भावेऽपि प्रयोगो दृष्ट इत्यर्थः । **उपायः** मार्गः । तथा च करणव्युत्पत्त्या गतिशब्देनोपायो गृह्यत इत्यर्थः । **गम्यार्थता** 'कर्मव्युत्पत्त्या' इति शेषः । **एवमुच्यत इति ।।** 'गम्यतेऽनेन' इति व्युत्पत्त्या 'अव्यक्ता हि गतिः' इत्युच्यत इत्यर्थः । **भगवत्प्राप्तेरिति ।।** 'अव्यक्तोपासकानामपि' इति शेषः । ततश्च नाव्यक्तस्य गम्यत्वमिति भावः ।।

**भावप्रकाशः (कृ.टि.)– ।। अकर्तरीति ।।** स्त्रियां क्तिन् इत्यनेन कर्तृभिन्नकारके भावे च क्तिनोऽविधानात् । गतिशब्दस्य च क्तिन्नन्तत्वादिति भावः । अव्यक्तापरोक्ष्यमप्यव्यक्तोपासनजन्यो भगवत्प्राप्त्युपायः । तत्र च वक्ष्यमाणं महादुःखमित्याह– **अव्यक्तोपासनान्तरभावीति ।। एवमुच्यत इति ।।** गतिरित्यनेनोच्यत इत्यर्थः । **अनेनेति ।।** अव्यक्तोपासनेत्यादिभाष्येणेत्यर्थः ।

## भाष्यम्

**अतिशयेन उपासनं सर्वेन्द्रियनियमनसर्वसमबुद्धिसर्वभूतहितेरतत्वातिसुष्ठ्वाचारसम्यग्विष्णुभक्त्यादिसाधनसन्दर्भम् ऋते न अव्यक्तापरोक्ष्यम् । तदृते च न विष्णुप्रसादः । सत्यपि तस्मिन् न सम्यग् भगवदुपासनं ऋते । नर्ते च तं मोक्षः । विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इति क्लेशिष्ठोऽयं मार्ग इति भावः । तथाऽप्यपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येव प्रयोजनम् । तत्रापि योऽव्यक्तापरोक्षे प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदपरोक्षमेव भवतीति द्वितीय-**

**मधिकम् । इन्द्रियसंयमाद्यूनभावेऽप्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चाति-सौकर्यमिति भक्तानां भगवदुपासने । इतरत्र तु (च) क्लेशोऽधिकतरः ।।**

भावप्रदीपिका (प.टी.)– कथमव्यक्तोपासनद्वारकमार्गे दुःखम् इत्यत आह– **अतिशयेति** । अव्यक्तप्रसादस्य दुरापाद्यत्वे किमायातं तद्वारकभगवत्प्राप्तिमार्गस्य ? इत्यत आह– **तदिति** । तदनेन भवतीत्येव । तेन किम् इत्यत आह– **सत्यपीति** । तस्मिन्नव्यक्तापरोक्षे सत्यपि भगवदुपासनमृते न भगवत्प्रसादः, तमृते न मोक्ष इत्यर्थः । क्लेशिष्ठत्वस्य प्रतियोगिसापेक्षत्वात् तस्य कथं सौकर्यम् ? इत्यत आह– विनाऽपीति । नन्वेवमस्य मार्गस्यातिक्लेशिष्ठत्वेऽननुष्ठेयत्वमेव स्यादित्यत आह– **तथाऽपीति** । तर्हि भगवदुपासनमार्गस्य प्रयोजनस्याभावात् साम्यमेवेत्यत आह– **तत्रापीति** । द्वितीयं श्रीपतित्वेन भगवदुपासनम् । इतश्च न साम्यमित्याह– **इन्द्रियेति** ।

प्रमेयदीपिका (ज.टी.)– अत्र पूर्वार्धेऽस्य मार्गस्याधिकतरक्लेशवत्त्वं प्रतिज्ञाय कथमित्यतस्तत्प्रसिद्धम् इत्युत्तरार्धेनोक्तम् । तत्प्रसिद्धिं विवृणोति– **अतिशयेति** ।। षष्ठोक्तप्रकारेण सर्वसमबुद्धिः । ततः किम्? इत्यत आह– **तदृते चेति** ।। अयोग-व्यवच्छेद एवायमुक्तो न तु तावन्मात्रेणेत्याह– **सत्यपीति** ।। तस्मिन् अव्यक्तापरोक्ष्ये सति विष्णुप्रसाद इति वर्तते । ततोऽपि किम्? इत्यत आह– **नर्ते चेति** ।। तं विष्णुप्रसादम् । अस्त्वेवम् अव्यक्तोपासनद्वारकभगवत्प्राप्तिमार्गप्रकारः । तथाऽपि कथमत्राधिकतरः क्लेश इत्यत आह– **विनेति** ।। अव्यक्तोपासनमार्गम् । अयम-व्यक्तोपासनद्वारकः । एवं तर्हि किमिति प्रवृत्तो येनार्जुनेनाशङ्कितः? इत्यत आह– **तथाऽपीति** ।। एवं तर्हि मार्गयोः साम्यमेव। अनेन प्रयोजनेन क्लेशस्य समाधाना-दित्यत आह– **तत्रापीति** ।। अव्यक्तोपासनद्वारके मार्गेऽपि । द्वितीयं भगवदुपासने दुःखपाक्षिकमेतत् । 'ऊनेन वा'इत्युक्तत्वात् । इतश्चाव्यक्तोपासनद्वारके मार्गे भगव-दुपासनात् क्लेशोऽधिकतर इत्याह– **इन्द्रियेति** ।। नातिप्रसादमेति इत्यतः परमेक इतिशब्दः, द्वावपि हेतौ प्रकारार्थौ वा ।।

भावबोधः (र.टि.)– ।। **आद्यमिति** ।। भगवदुपासकानामपि भगवद्विशेषणत्वेना-व्यक्तोपासनस्य सत्त्वादिति भावः ।।

श्लोकः ५

**भावदीपः (रा.टि.)– ।। प्रसिद्धमिति ।।** हिशब्दस्य तत्र श्रवणादिति भावः ।। **षष्ठोक्तप्रकारेणेति** ।।'सुहृन्मित्रार्युदासीन' इत्याद्युक्तप्रकारेणेत्यर्थः ।। **अयोगेति** ।। अव्यक्तापरोक्षस्य भगवत्प्रसादजनने यो योगः हेतुत्वाभावः तद्व्यवच्छेदक एवायम्, नतु तदेव प्रसादसामग्री । किन्तु कारणान्तरम् इत्यपेक्षितमित्याहेत्यर्थः । 'अज्ञावबद्धास्तु' इत्युक्तदिशा भगवदुपासावर्जनत्वेन श्रियोप्युपास्यत्वात् कथं 'तद्विना' इत्युक्तिः इत्यत आह– **अव्यक्तो-पासनद्वारकमार्गमिति** ।। भगवदुपास्तितः प्राक् पृथगुपासनमित्यर्थः ।। **अयम्** इत्यनुवादः, **अव्यक्त** इत्यादि व्याख्या । तत्रापीत्यस्यार्थं वदन्नेव द्वितीयपदेनान्वयमाह–**अव्यक्तेत्यादिना ।।** ननु तावता प्रयोगेन इत्युक्तत्वाद् दुःखं तत्रापि सममेवेत्यत आह **भगवदिति ।। द्वारकेति ।।** अध्याहृतचकारात् पूर्वतनश्चेत्यर्थः । यद्वा श्रूयमाणौ द्वावित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। अत्र** 'क्लेशोऽधिकतरः' इति गीतायां **तत्** अधिकतर-क्लेशवत्त्वम् । ननु सर्वसमबुद्धित्वं न मुमुक्षुविशेषणं भवितुमर्हति । विषमाणां साम्यावबोधस्य 'विषमाणां समा तथा' इति शास्त्रप्रतिषिद्धत्वात्, इत्यत उक्तम्– **षष्ठोक्तेति ।।** जीवानां चिद्रूपत्वेन तदन्तर्यामिणो भगवतो गुणपूर्णत्वादिना, सुहृदादिनिष्ठसुहृत्त्वादेर्हरिनिमित्तकत्वेन च साम्यमवबोद्धव्यमिति षष्ठाध्यायोक्तप्रकारेणेत्यर्थः । 'हिते रतत्व..' इति भाष्ये सर्वभूतहिते रतत्वम् आसक्तत्वम् । 'साधनसन्दर्भम् ऋते' इत्यादिभाष्यटीकयोः 'ऋते द्वितीया च' इति चान्द्रसूत्रेण द्वितीयाविभक्तिः । तेन 'अन्यारादितरर्ते' इति ऋतशब्दयोगे पञ्चम्या भाव्यम् इति चोद्यानवकाशः ।

**ततः किम्** अव्यक्तापरोक्ष्याभावात् किमनिष्टमित्यर्थः । 'अव्यक्तोपासनमृते न विष्णु-प्रसादः' इति भाष्ये अव्यक्तापरोक्षज्ञानस्य भगवत्प्रसादे अयोगः हेतुत्वाभावः, तद्व्यवच्छेद एवाव्यक्तापरोक्षज्ञानं विष्णुप्रसादजनने साधनं भवत्येव इत्ययमर्थ एवोक्तो न पुनरव्यक्तापरोक्ष-ज्ञानमेव विष्णुप्रसादजनकम् इत्यभिप्रेतमित्यभिसन्धाय उत्तरभाष्यमवतारयति– **अयोगव्यवच्छेद** इति ।। विष्णुप्रसादस्याव्यवहितत्वात् तदुपस्थितिव्युदासायाह– **तस्मिन्नव्यक्तापरोक्ष्य** इति ।। अव्यवहितपरामर्शः प्रकृते बाधादयुक्त इति हृदयम् । 'ऋते' इत्यनन्तरमनुवर्तनीयमाह– **विष्ण्विति ।। अत्र** अव्यक्तोपासने । ननु 'उपास्य तां श्रियमव्यक्तसञ्ज्ञां भक्त्या मर्त्यो मुच्यते सर्वबन्धैः' इति श्रीदेव्या उपास्यत्वस्य

'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।
शपेदुपासिताऽप्येषा श्रीस्तांस्तद्धरितत्त्ववित् ।।'

'तद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा ।।' इति ।

'तथापि सर्वपरमां सर्वदोषविवर्जिताम् ।
ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।
विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ।।'

इति शास्त्रेण श्रीदेव्या भगवद्विशेषणत्वेनोपास्यत्वस्य चावेदनात् कथं भाष्ये 'विनाऽव्यक्तोपासनम्' इति श्रीदेव्युपासनानादरः इत्यत आह– **आद्यमिति** ।। भगवदुपासनात् प्राक्काले करणीयत्वेनाभिमतमित्यर्थः । तथा चान्यत्र 'यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम्' इति । भाष्यपदमनूद्यार्थमाह– **अयमिति** ।। मार्गः भगवत्प्राप्त्युपाय इति भाष्यार्थः ।

**एवं तर्हि** उक्तरीत्याऽधिकक्लेशवत्त्वे, **किमिति** केन प्रयोजनेन, अव्यक्तोपासनद्वारको भगवत्प्राप्तिरिति मार्गः प्रवृत्तः । 'यद्यपि क्लेशोदर्कः, तथापि' इति भाष्यार्थः । **एवं तर्हि** उक्तरीत्या सौकर्यरूपप्रयोजनसद्भावे । तत्कुतः इत्यत उक्तम्– **अनेनेति** ।। सुकरणरूपेणेत्यर्थः । भावप्रदीपिकायां तु द्वितीयं 'श्रीपतित्वेन भगवदुपासनम्' इत्युक्तम् । **ऊनेन वेत्युक्तत्वादिति** ।। तावता प्रयासेन यदि भगवन्तमुपास्ते तदा भगवदापरोक्ष्यमेव भवतीति पाक्षिकमेव ऊनेन वा प्रयासेन भगवदुपासनेन तदापरोक्ष्यमेव भवतीति स्वयमेवोक्तत्वादित्यर्थ इत्याहुः । 'इतरत्र क्लेशोऽधिकतरः' इति भाविभाष्यार्थमाह– **अव्यक्तोपासनद्वारके मार्गे भगवदुपासनात् क्लेशोऽधिकतर इति** ।। 'भगवदुपासनक्लेशोऽधिकतरः' इति पाठेऽप्युक्त एवार्थः । **एक इति शब्द इति** ।। 'अध्याहर्तव्यः', 'आकृष्य योजनीयो वा' इति शेषः । **द्वौ** योजित एकः, 'ददाति' इत्यत्र श्रुतोऽपर इति द्वौ अपि इतिशब्दौ, 'नातिप्रसादमेति' इति हेतोः, 'देवो ददाति' इति च हेतोरिति हेतुसमर्पकावित्यर्थः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधानादिति भावः । **प्रकारेति** ।। **इति** एवंप्रकारेण 'इतरत्र क्लेशोऽधिकतरः' इत्येवंप्रकारेणातिसौकर्यमिति प्रकारार्थावित्यर्थः ।

**भावदीपिका (श्री.टि.)**– ।। **उत्तरार्धेन** 'अव्यक्ता हि' इत्यनेन । **षष्ठोक्तेति** ।। 'जीवचितः' इतः परमात्मनः सर्वस्य तन्निमित्तकत्वस्य च सर्वत्रैकरूप्येण इत्याद्युक्त-

श्लोकः ५

प्रकारेणेत्यर्थः । नन्वव्यक्तापरोक्ष्यम् ऋते न विष्णुप्रसादः, किं त्वव्यक्तापरोक्ष्येणैव इत्यव्यक्तापरोक्ष्यमात्रस्यैव विष्णुप्रसादसाधनत्वमुक्तम् । उत्तरत्र तु 'सत्यपि' इत्यनेन भगवदुपासनस्य तत्साधनत्वमुच्यते । अतो व्याहतिः इत्यत आह– **अयोगेति ।।** अव्यक्तापरोक्ष्यं विष्णुप्रसादसाधनं न भवतीति नेत्येवम् अव्यक्तापरोक्ष्ये विष्णुप्रसादसाधनत्वायोग एव व्यवच्छिद्यत इत्यर्थः । **नन्विति ।।** अन्ययोगव्यवच्छेदो न भवतीत्यर्थः । तेन न व्याघात इति भावः । ननु भगवदुपासकानामपि भगवद्विशेषणत्वेनाव्यक्तोपासनसद्भावात् 'विना' इत्याद्ययुक्तम् इत्यत आह– **आद्यमिति ।।** भगवदविशेषणत्वेन केवलाव्यक्तोपासनमित्यर्थः । 'प्रवृत्तोऽयं मार्गः' इति शेषः ।

**भाष्ये सुकरमिति ।।** 'दृष्टा च सा भक्तिमतीव विष्णौ दत्त्वोपास्तौ सर्वविघ्नान् च्छिनत्ति' इति वक्ष्यमाणप्रकारेण सुकरमित्यर्थः । **साम्यमेवेति ।।** नाव्यक्तोपासनद्वारकमार्गे क्लेश इत्यर्थः । कुत इत्यत आह– **अनेनेति ।।** भगवदुपास्तौ सर्वविघ्नपरिहारेण सौकर्यरूपप्रयोजनेनेत्यर्थः । **दुःखं** महता प्रयासेनाव्यक्तापासनं कार्यमित्येकं दुःखम्, अनन्तरं पुनरायासेन भगवदुपासनं कार्यमिति द्वितीयमधिकमित्यर्थः । अव्यक्तापरोक्ष्ये यावान्प्रयासस्तावता प्रयासेनैव भगवदुपासनं कार्यमित्ययं न नियम इत्याह– **पाक्षिकमिति ।।** अयमप्येकः पक्ष इत्यर्थः । कुत इत्यतः पक्षान्तरस्यापि तत्रैवोक्तत्वादित्याह– **ऊनेन वेति ।।** यावान् अव्यक्तापरोक्ष्ये प्रयासस्तदपेक्षया ऊनेन वेत्यर्थः । तत्र न्यूनताप्रयुक्तापराधं भगवान् क्षमते, 'अपि चेत्सुदुराचारः' इत्युक्तत्वादिति ध्येयम् । **एक इतिशब्द इति ।** 'ददातीति' 'सौकर्यमिति' इति इतिशब्दद्वयस्य सत्त्वाद् एकस्य 'नातिप्रसादमेति' इत्यतः परं सम्बन्ध इत्यर्थः । **द्वावपीत्यादि ।।** 'देवी नातिप्रसादमेति' इति हेतोरिति प्रकारेण वा, 'स्वयमेव प्रयत्नेन ददाति' इति हेतोरिति प्रकारेण वा भक्तानां भगवदुपासने सौकर्यमित्यर्थः । **भगवतः** कृष्णस्य । भाष्ये 'तदेतत्सर्वम्' इत्यस्य 'अतिशयेनोपासनम्' इत्याद्युक्तं सर्वमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। षष्ठोक्तेति ।।** जीवानां चिद्रूपत्वेन तदन्तर्यामिपरमात्मनो गुणपूर्णत्वादिना सुहृदादिनिष्ठसुहृत्वादेः भगवन्निमित्तकत्वेन च साम्यमिति षष्ठोक्तप्रकारेणेत्यर्थः । ननु 'तत्पतिं पुरुषोत्तमम् । विज्ञायोपासते नित्यं तेहि युक्ततमा मताः' इत्युक्तेः भगवद्विशेषणत्वेनाव्यक्तोपासनमावश्यकम् । तत्कथमव्यक्तोपासनं विना भगवदुपासकानां मोक्ष इत्युच्यत इत्यत आह– **आद्यमिति ।। ऊनेन वेत्युक्तत्वादिति ।।** नच 'ऊनेन वा' इति

पक्षेऽव्यक्तोपासनद्वारकमार्गे कथमधिकतरक्लेश इति वाच्यम् । भगवदुपासने तदनुकूल एक एव प्रयत्नः । अव्यक्तोपासने तु पूर्वं तदनुकूलप्रयत्नः । ततो भगवदुपासनार्थं यत्न इति द्वौ यत्नौ । अतः क्लेशाधिक्यमित्याशयात् ।

## भाष्यम्

**तदेतत्सर्वं 'पर्युपासते' 'सन्नियम्य' 'अधिकतर' इति परि, सन्, तरप्शब्दैः प्रतीयते ।।**

भावप्रदीपिका (प.टी.)– नन्वतिशयोपासनेत्यादि गीतानुक्तमेव कथमुच्यते इत्यत आह– **तदेतदिति** ।।

प्रमेयदीपिका (ज.टी.)– कुतोऽयं भगवतो भावः? इत्यत आह– **तदेतदिति** ।। उपलक्षणमेतत् । 'सर्वत्र समबुद्धयः' इत्यादिनेत्यपि द्रष्टव्यम् । अत्र 'परि' इत्यनेनोपासनस्यातिशयः । सम्' इत्यनेन इन्द्रियनियमस्यातिशयः । 'सर्वत्र' इत्यादिना सर्वेत्यादिकम् । तरपा अतिसुष्ठ्वाचारादिकम् । 'अव्यक्ता गतिः' इत्यनेन 'तदृते च' इत्यादि व्यवधानम् 'मामेव' इत्यवधारणेन तथाऽपीत्यादिकं प्राप्नुवन्तीति स्वातन्त्र्योक्त्येन्द्रियसंयमादौ इति देवतासहायाभावः । भगवदुपासने त्वेतदभावो यथा गीतोक्तः तदुत्तरत्र प्रदर्शयिष्यते ।।

भावबोधः (र.टि.)– ननु सर्वसमबुद्धित्वादेः परिसमृतरशब्दैरप्रतीतेः कथमेतत्सर्वमित्युक्तमित्यत आह **उपलक्षणमेतदिति** ।। **तस्येति** ।। क्लेशाधिक्यं विना सुष्ठ्वाचाराद्यसिद्धेरिति भावः। **अव्यक्ता हि गतिरित्यनेनेति** ।। गतिशब्दोक्तभगवदुपासनस्य लक्षितलक्षणया अव्यक्तशब्देनाव्यक्तद्वारकत्वरूपव्यवधानस्योक्तेरिति भावः । **अवधारणेनेति** ।। अव्यक्तोपासकाः मामेव प्राप्नुवन्ति । ननु मध्ये प्रयासान्तरमनुभवन्तीत्युक्त्या अव्यक्तापरोक्ष्यभगवत्प्राप्तिमध्यस्थभगवदुपासने सौकर्यसूचनादिति भावः । **इन्द्रियेति** ।। इन्द्रियसंयमाद्यूनभाव इत्यादिभाष्योक्तदेवतासाहाय्याभाव इत्यर्थः ।

भावदीपः (रा.टि.)– प्राग् भक्तस्य समबुद्धित्वादेर्लाभायाह– **उपलक्षणमेतदिति** ।। **तरपेति** ।। 'क्लेशोधिकतरः' इत्यत्र तरपेत्यर्थः ।। **व्यवधानमिति** ।। भाष्योक्तं मोक्षस्य

व्यवधानम् अव्यक्ता हि गतिः इति गीतावाक्येन प्राक्टीकोक्तलक्षितलक्षणादिव्याख्यानरीत्या लब्धमित्यर्थः ।। **अवधारणेनेति** ।। तेन भगवदुपासनासौकर्यद्वारा तत्प्राप्तिसूचनादिति भावः ।। **इन्द्रियसंयमादीति** ।। 'इन्द्रियसंयमनाद्यूनभावे' इत्यादि भाष्यवाक्येन उक्तोपास्यदेवीरूपदेव्या साहाय्याभाव इति भावः ।। आप्नुवन्तीति स्वातन्त्र्योक्त्या लब्ध इत्यर्थः ।। नन्वस्तु अव्यक्तोपासने भाष्योक्तक्लेशप्रकारः गीतोक्तपदवाक्यैः उक्तदिशा लब्धः । भगवदुपासने तु 'तत्रापि' इत्यादिना भाष्योक्तक्लेशाभावस्तु कथं गीतापदैर्लब्धः इत्यत आह– **भगवदुपासने त्विति** ।। 'एतत्' इत्युक्तक्लेशाभावो 'मदुपासकानां भक्तानाम्' (१२.७) इत्यादि भाष्यव्याख्यानावसरे प्रदर्शितं दृश्यत इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– भाष्ये 'सर्वम्' इति कथम् । परिसमूतरपूशब्दैस्त्रयाणामेव प्रतीतेरित्यत आह– **उपलक्षणमिति** ।। 'इत्यादिना च' इत्यत्रादिशब्देन 'सर्वभूतहिते रताः', 'अव्यक्ता गतिः', 'मामेव प्राप्नुवन्ति' इत्येतेषां ग्रहणम् । 'तदेतत्सर्वम्' इति भाष्योक्तं विवेचयति– **तत्रेत्यादिना** ।। 'सर्वत्र समबुद्धयः' इत्यनेन 'सर्वभूतहिते रताः' इत्यनेन च सर्वेत्यादिकं सर्वसमबुद्धिः, सर्वभूतहितत्वं च । अतिसुष्ठ्वाचारादिकं सुष्ठ्वाचारः सम्यग्विष्णु-भक्त्यादिसाधनसन्दर्भ इत्यादि । 'तदृते च न विष्णुप्रसादः, सत्यपि तस्मिन्' इत्यादि भाष्योक्तं व्यवधानम् इत्यादिकम् अपरोक्षीकृताव्यक्तानां सुकरं भगवदुपासनमित्येतत् । **स्वातन्त्र्यो-क्त्येति** ।। 'प्राप्नुवन्ति' इत्याख्यातार्थो हि कर्ता, कर्ता च स्वतन्त्रः । 'स्वतन्त्रः कर्ता' इत्युक्तेरिति भावः । **इन्द्रियसंयमादीति** ।। **देवतेति** ।। 'इन्द्रियसंयमाद्यूनभावे अत्युपास-कस्यापि देवी नातिप्रसादमेति' इति भाष्योक्तः श्रीदेवीरूपदेवताप्रसादशब्दितसाहाय्याभावः । 'उपासकस्यातिशयः' इत्यादेः प्रथमान्तस्य 'प्रतीयते' इति भाष्यपदेन प्रत्येकं सम्बन्धः । **एतदभावः** एतावत्प्रयासाभावः । **उत्तरत्र** मदुपासकानां भक्तानां न कश्चित् क्लेश इति भाष्ये ।

**भावदीपिका (श्री.टि.)**– ननु सर्वत्र समबुद्धित्वादेः परिसमूतरपूशब्दैरप्रतीतेः कथमेतत् 'सर्वम्' इत्युक्तम्? इत्यत आह– **उपलक्षणमेतदिति** ।। 'इत्यादिना' इत्यादिपदेन 'सर्वभूतहिते रताः' इत्यस्य ग्रहणम् । उपलक्षितमर्थमुपपादयति– **सर्वत्रेत्यादिनेति** ।। **सर्वेत्यादिकमिति** ।। सर्वत्र समबुद्धिसर्वभूतहितेरतत्वेत्युक्तं प्रतीयत इत्यर्थः । **तरपेति** ।। 'अधिकतरः' इत्युक्ततरपेत्यर्थः । **अव्यक्ता गतिरित्यनेनेति** ।। गतिशब्दोक्तभगवदुपासनस्या-व्यक्तशब्देन लक्षितलक्षणयाऽव्यक्तोपासनद्वारकत्वरूपव्यवधानस्योक्तत्वादिति भावः ।

**अवधारणेनेति** ।। 'अव्यक्तोपासका मामेव प्राप्नुवन्ति, नतु मध्ये प्रयासान्तरमनुभवन्ति' इत्युक्त्या अव्यक्तापरोक्ष्यभगवत्प्राप्तिमध्ये भगवदुपासने सौकर्यसूचनादिति भावः । **इन्द्रियेति** ।। 'इन्द्रियसंयमाद्यूनभावे' इत्यादिभाष्योक्तदेवतासाहाय्याभाव इत्यर्थः । 'उपासकस्य इन्द्रियसंयमाद्यूनभावे देवी नातिप्रसादमेति' इत्युक्ते उपासकस्य सम्पूर्णेन्द्रियसंयमादौ सति प्रसादमेतीति प्राप्ते, अव्यक्तोपासकैः स्वस्वेन्द्रियनियमनं स्वैरेव कर्तव्यम् । तत्र च न देवतासहायोऽस्ति । ईश्वरोपासकानां त्विन्द्रियनियमने तदभिमानिदेवताप्रेरणद्वारा ईश्वर एव सहकारीति भावः । नन्वेवमव्यक्तोपासकानां क्लेशातिशयः, गीतायां भगवदुपासकानं तदभावो न प्रतीयते । अतः 'तदेत्सर्वम्' इति कथमुक्तम् इत्यत आह– **भगवदुपासने त्विति** ।। **उत्तरत्रेति** ।। 'मदुपासकानां भक्तानाम्' इत्यादिनेत्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– सर्वसमबुद्धित्वसर्वभूतहितेरतत्वयोः लाभार्थमाह– **उपलक्षणमिति** ।। इत्यादिनेत्यादिपदात् सर्वभूतहिते रता इत्यस्य सङ्ग्रहः । तदेतत् सर्वं परीत्यादिभिः प्रतीयत इत्युक्तम् । तत्र केन किं प्रतीयत इत्यत आह– **तत्रेति** ।। सर्वत्र प्रतीयत इति मूलपदेनान्वयः । **तरपेति** ।। परीत्यादिनैवोपासनातिशयादेः प्रतिपादनलाभेऽपि पुनस्तरप्प्रयोगेणातिसुष्ठ्वाचारविष्णुभक्त्यादिकं प्रतीयते । अन्यथा तद्वैयर्थ्यादिति भावः । **अव्यक्ता गतिरित्यनेनेति** । अव्यक्तगतिशब्दयोः प्रतीतार्थानुपपत्त्या लक्षणाकरणव्युत्पत्तिस्वीकारे तत्पर्यालोचनया व्यवधानं प्रतीयत इत्यर्थः । **अवधारणेति** ।। अव्यक्तोपासका मामेव प्राप्नुवन्ति, न तु प्रयासान्तरमनुभवन्तीत्युक्त्याऽव्यक्तापरोक्ष्यभगवत्प्राप्तिमध्यस्थभगवदुपासने सौकर्यसूचनादिति भावः । **स्वातन्त्र्योक्तेरिति** । लिङा तावत् कर्तृत्वमुक्तम् । तच्च स्वातन्त्र्यमेव । स्वतन्त्रः कर्तेत्युक्तेः । स्वातन्त्र्यं च परानपेक्षत्वम् । तथा च प्राप्तावितरसहायाभावो गम्यते । अत्र चोपास्यदेवता लक्ष्मीरेव नेतरा । प्रकृतत्वात् । अत उपास्यदेवतासहायाभावः प्रतीयत इत्यर्थः ।

## भाष्यम्

**सामवेदे माधुच्छन्दसशाखायां चोक्तम् ।**

**'भक्ताश्च येऽतीव विष्णावतीव जितेन्द्रियाः सम्यगाचारयुक्ताः ।**
**उपासते तां समबुद्धयश्च तेषां देवी दृश्यते नेतरेषाम् ।**

श्लोकः ५

**दृष्टा च सा भक्तिमतीव विष्णौ दत्त्वोपास्ते सर्वविघ्नान् छिनत्ति ।**
**उपास्य तं वासुदेवं विदित्वा ततस्ततः शान्तिमत्यन्तमेति' ।। इति ।**

**उक्तं च सामवेदे आयास्यशाखायाम्–**

**'प्रसन्नो भविता देवः सोऽव्यक्तेन सहैव तु ।**
**यावता तत्प्रसादो हि तावतैव न संशयः ।।**
**न तत्प्रसादमात्रेण प्रीयते स महेश्वरः ।**
**तस्मिन् प्रीते तु सर्वस्य प्रीतिस्तु भवति ध्रुवम् ।।**
**यद्यप्युपासनाधिक्यं तथाऽपि गुणदो हि सः ।**
**मुक्तिदश्च स एवैको नाव्यक्तादिस्तु कश्चन' इति ।।**

भावप्रदीपिका (प.टी.)– प्रमाणैश्चैतत्सर्वं साधयति– **सामवेद इति । ततः** तदनन्तरं वासुदेवात् । **अव्यक्तादेः** मध्ये ।

प्रमेयदीपिका (ज.टी.)– आगमान्तरसिद्धत्वाच्चायं भवति भगवदभिप्राय इत्याह– **सामवेद इति ।।** तेषाम् इत्यादि षष्ठी तृतीयार्थे । **विदित्वा** साक्षात्कृत्य । **ततः** वेदनात् प्रसन्नात् **ततः** वासुदेवात् । यावता प्रयासेन तत्प्रसादोऽव्यक्तप्रसादः । सर्वस्यापीति द्वितीयः तुशब्दोऽपिशब्दार्थे । आधिक्यशब्देन न्यूनत्वमप्युपलक्ष्यते । न्यूनाधिकयोरन्यत्र प्रत्यवायहेतुत्वात् ।। नाव्यक्तादेरिति पाठे मध्येत्युपस्कर्तव्यम् ।।

भावबोधः (र.टि.)– ।। **द्वितीयस्तुशब्द इति** ।। प्रीतिशब्दात्पर इत्यर्थः । भगवत उपासनाधिक्ये गुणदत्वस्य सौलभ्याप्रयोजकत्वादाह– **न्यूनत्वमपीति** ।। एतदेवाभिप्रेत्य पूर्वं भाष्ये ऊनेन वेत्युक्तमिति भावः । **अन्यत्रेति** ।। अव्यक्तविषय इत्यर्थः । अव्यक्तोपासकस्यापि देवी नातीव प्रसादमेतीत्युक्तत्वादिति भावः ।

भावदीपः (रा.टि.)– 'तथापि' इत्यस्य घटनायाऽह– **न्यूनत्वमप्युपलक्ष्यत इति** ।। भगवदुपासनस्य न्यूनाधिकत्वादावपि 'तथाऽपि सः भगवान् गुणदः' इति योजनेति भावः ।। अन्यत्र अव्यक्तादौ ।। **इत्युपस्कर्तव्यमिति** ।। अव्यक्तादेर्मध्ये कश्चन न मुक्तिद इति योजनेति भावः ।।

**भावरत्नकोशः (सु.टि.)– ।। अयम्** अस्मदुक्तः । **इत्यादिषष्ठी** 'तेषाम्' 'इतरेषाम्' इत्युभयत्र श्रुता । 'कर्तृकरणयोस्तृतीया' इति तृतीयानुशासनादिति भावः । अपरोक्षज्ञानस्यैव प्रसादद्वारा शान्तिशब्दितमोक्षहेतुत्वस्य शास्त्रार्थत्वाद् वेदनशब्दस्य सामान्यपरस्यापि, 'उपासनानन्तरभाविवेदनं साक्षात्कारः' इति वक्तव्यत्वाचाह– **विदित्वा साक्षात्कृत्येति** ।। 'ततः' 'ततः' इत्यनयोर्विवक्षितमर्थं विवेकेन दर्शयति– **ततो वेदनात् प्रसन्नात् ततो वासुदेवादिति** ।। भावप्रदीपिकायां तु 'ततः तदनन्तरम्, ततः वासुदेवात्' इत्युक्तम् । 'यावता' इत्यतः परं भाष्ये शेषपूरणम्– **आयासेनेति** ।। 'तत्प्रसादः' इत्यत्र तच्छब्दार्थमाह– **अव्यक्तेति** ।। तावतैव प्रयासेन देवः प्रसन्नो भविता भविष्यति, न संशय इति भाष्येऽन्वयः । द्वितीयप्रीतिशब्दात् परः तुः अपिशब्दार्थे वर्तमानः 'सर्वस्यापि' इति सम्बध्यत इति भावेनोक्तम्– **सर्वस्यापीति** ।। अव्यक्तादेरपीत्यर्थः ।

ननूपासनाधिक्येन चेद् भगवान् अपरोक्षज्ञानलक्षणगुणदो भक्तानाम्, तर्हि भगवदुपासने सौकर्यमुक्तम् अनुपपन्नम् । 'यद्यपि' इति पदमस्वरसं चेत्यत आह– **आधिक्यशब्देनेति** ।। यद्यप्युपासनायां न्यूनत्वमाधिक्यं वाऽस्तु । तथापि भगवान् गुणद एव, तत्कथम् इत्यत आह– **न्यूनाधिकयोरिति ।। अन्यत्र** अव्यक्तविषये । 'प्रत्यवायहेतुत्वात्' इत्यत्र प्रत्यवायशब्द इष्टाप्राप्तिरूपो विवक्षितः । अव्यक्तविषये न्यूनोपासनेव अधिकोपासनाऽपि न तदापरोक्ष्यरूपेष्टाप्राप्तिहेतुः । 'इन्द्रियसंयमनाद्यूनभावे सत्युपासकस्यापि देवी नातिप्रसादमेति । देवस्तु तानि साधनानि भक्तिमतः स्वयमेव ददाति' इति परमश्रद्धामात्रयुक्तानां सुष्ठ्वाचारादेरूनत्वेऽपि भगवत्प्रसादः सम्भवतीति भाषितत्वाद् भगवदुपासने सौकर्यम्, 'यद्यपि' इत्यस्य 'स्वारस्यं च' इति भावः । 'मुक्तिदस्तु स एवैको नाव्यक्तादेस्तु कश्चन' इति क्वचिद्भाष्यं पठ्यते । तत्र पक्षे षष्ठ्यन्वयायाह– **नाव्यक्तादेरिति पाठ इति** ।। अस्मिन् पक्षे भाष्ये तुशब्दोऽप्यर्थकश्च । 'नापि' इति सम्बध्यते । 'मध्ये तु' इति वा । तथा च भावप्रदीपिका 'अव्यक्तादेर्मध्ये' इति ।

**भावदीपिका (श्री.टि.)–** 'तेषामित्यादि' इत्यत्रादिपदेन 'इतरेषाम्' इत्यस्य ग्रहणम् । **तृतीयार्थ इति** ।। तथा च 'तैर्दृश्यते, नेतरैः' इति कर्तरि षष्ठीत्युक्तं भवति । प्रीतिशब्दात् परतः तुशब्दोऽपिशब्दार्थः 'सर्वस्य' इत्यनेन सम्बध्यत इत्यभिप्रेत्याह– **सर्वस्यापीति** ।। भगवदुपासनाधिक्ये गुणदत्वस्य सौलभ्याप्रयोजकत्वादाह– **न्यूनत्वमिति** ।। उपासनान्यूनत्वमपि लक्षणया ग्राह्यमित्यर्थः । एतदेवाभिप्रेत्य पूर्वं भाष्ये 'ऊनेन वा' इत्युक्तमिति भावः । ननु

श्लोकः ५
न्यूनोपास्तौ प्रत्यवायप्राप्त्या कथं तस्याः भगवत्प्रसादाख्यगुणदत्वम् इत्यत आह– **न्यूनाधिकयोरिति** ।। न्यूनाधिकोपासनयोः अन्यत्र अव्यक्तविषय एव प्रत्यवायहेतुत्वम्, न भगवद्विषय इत्यर्थः । अत एव 'इन्द्रियसंयमनाद्यूनभावेऽत्युपासकस्य देवी नातिप्रसादमेति' इत्याद्युक्तमिति द्रष्टव्यम् ।

**भावप्रकाशः (कृ.टि.)**– उपासनाधिक्यं भगवतो गुणदत्वे तन्त्रं चेत् कथं भगवदुपासने सौलभ्यमित्यत आह– **न्यूनत्वमपीति** ।। **अन्यत्रेति** ।। अव्यक्तविषय इत्यर्थः । **प्रत्यवायेति** ।। प्रत्यवायोऽत्रादृष्टाप्राप्तिः । अत्युपासकस्यापि देवी नातिप्रसादमेतीत्युक्तत्वादिति भावः । फलेभ्यो यातीतिवत् क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी इति भावेनाह– **तमुद्दिश्येति** ।। फलितकथनमेतत् । तं प्रसादयितुमित्यर्थः । **नियत इति** ।। त्यब्नेर्ध्रुव इति वार्तिकोक्तेः नित्यशब्दस्य ध्रुवत्वार्थावगमादिति भावः ।

## भाष्यम्

**'ममात्मभावमिच्छन्तो यतन्ते परमात्मना' इति मोक्षधर्मे श्रीवचनम् ।**

**'धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।**
**प्रश्रिते दानशीले च सदैव निवसाम्यहम् ।' (म.भा.१२.२२८.२६)**

**इति च । महतः परं तु ब्रह्मैव । तथा हि भगवता सयुक्तिकमभिहितम् ।**

**'वदतीति चेन्न प्राज्ञो हि' (ब्र.सू. १.४.५)**

**'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' (ब्र.सू. १.४.७) इत्यादि ।**

**'तम्' इति पुल्लिङ्गाच्चैतत्सिद्धिः । महतः परत्वं त्वव्यक्तपरस्य भवत्येव । तथा चाग्निवेश्यशाखायाम्'अनाद्यनन्तं महतः परं ध्रुवम्' इति 'परो हि देवो पुरुहूतो महत्तः' इति ।**

भावप्रदीपिका (प.टी.)– **ममात्मभावं** मदुपासनद्वारात्मना मोक्षम् । श्रीवचनमित्युत्तरत्रापि सम्बन्धः । तस्मिन्निवसामि इति तस्य प्रत्यक्षा स्यामित्यर्थः ।

नन्वव्यक्तोपासकानां मोक्षाय पुनर्भगवदुपासनं न युक्तम् । अनाद्यनन्तम् इत्याद्युदाहृत-श्रुतिविरोधादित्यत आह– **महत इति** । श्रियं वसाना इत्यादिश्रुतिर्भगवदुपासनद्वारा अव्यक्तोपासनस्यामृतत्वसाधनपरा । महतः परम् इत्यादिश्रुतिस्तु भगवत्परैवेत्यर्थः । इयं श्रुतिः कुतो भगवद्विषयेत्यत आह– **तथाहीति** । एतत्सरित्यस्य वाक्यस्य ब्रह्मपरत्वसिद्धिः । नतु तमिति महतः परमित्युक्तपरामर्शः । सन्निहितभगवत्परामर्श-सम्भवादिति । महत्परत्वलिङ्गादत्राव्यक्तं किं न स्यात् ? इत्यत आह– **महदिति** । भगवत्परत्वेनैतच्छ्रुतेः श्रुत्यन्तरेण व्याख्याततत्वाच्च ब्रह्मपरेयं श्रुतिरित्याह– **तथा चेति** ।

**प्रमेयदीपिका (ज.टी.)**– मम उपासनेन आत्मभावं कैवल्यम् । परमात्मने तमुद्दिश्य । अस्य वाक्यस्य कथं प्रकृतोपयोगः? इत्यत उक्तम्– **श्रीवचनमिति** ।। **नित्ये** नियते । **ब्रह्मण्ये** ब्रह्मणि साधौ । **निवसामि** प्रसन्ना भवामि । इति च 'श्रीवचनम्' इति सम्बन्धः । पूर्वं शङ्काहेतुत्वेन श्रियं वसाना इत्यादीनि वाक्यान्युदा-हृतानि । तेष्विदमेकं नाव्यक्तविषयमिति वस्तुस्थितिमाह– **महत इति** ।। 'अनाद्यनन्तं महतः परम्' इति वाक्यप्रतिपाद्यमिति यावत् । अत्राभ्युच्चययुक्तिं चाह– **तमिति** ।। ननु 'उक्तपरामर्शोपपत्तेः' इति पूर्वपक्षेऽपि युक्तिरुक्तेत्यतः साऽन्यथासिद्धे-त्याह– **महत इति** ।। तथा चोक्तवक्ष्यमाणबलात् 'अव्यक्तात् पुरुषः परः' इत्युक्त-स्यायं परामर्श इति भावः । श्रुत्यन्तरेणैवं व्याख्यानाच्चैतद्वाक्यं तत्परमित्याह– **तथा चेति** ।। पुरुभिः हूतः **पुरुहूतः** ।।

**भावबोधः (र.टि.)**– ननु महतः परमव्यक्तम्' इत्यव्यक्तस्यापि महतः परत्वोक्तेः कथं ब्रह्मैवेत्यवधारणमित्यतः अभिप्रायमाह– **अनाद्यनन्तमिति** ।। **पूर्वपक्षे इति** ।। अव्यक्ताङ्गी-कारपक्षे इत्यर्थः ।।

**भावदीपः (रा.टि.)**– 'तत्र साधुः' इति यत्प्रत्यय इत्युपेत्याह– **ब्रह्मणि साधाविति** ।। अन्यथासिद्धमेव व्यनक्ति– **तथा चोक्तेति** ।। 'वदतीति च' इत्यादि प्रागुक्तसूत्रबलात्, वक्ष्यमाणश्रुतिबलाच्चेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– 'मम' इत्यनन्तरं मोक्षधर्मे शेषमाह– **उपासनेनेति** ।। आत्मनः जीवचैतन्यस्य भावः अवस्थितिः इत्यस्यार्थोक्तिः– **कैवल्यमिति** ।। तादर्थ्यार्थक-

श्लोकः ५

चतुर्थीभावोक्तिः— **तमुद्दिश्येति** ।। 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति 'आत्मने' इति चतुर्थी, आत्मानं प्रसादयितुमित्यर्थः । 'तमुद्दिश्य' इति तु फलितप्रदर्शनमिति आहुः । **श्रीवचनमितीति** ।। तथा च मदुपासनद्वारको मोक्षमार्गः क्लेशोदर्क इति भाव आवेदितो भवतीति हृदयम् ।

'धर्मेषु नित्यः' इत्यत्र नित्यशब्दो ध्रुवार्थ इति । तस्य प्रकृतोपयुक्तमर्थमाह— **नियत इति** ।। 'तत्र साधुः' इति ब्रह्मशब्दाद् यत्प्रत्यय इति भावेनोक्तम्— **ब्रह्मणि साधाविति** ।। ननु 'चिकितुषी प्रथमा' इति श्रीदेव्या अनादितः सर्वत्र कृतनिवासत्वस्य श्रुतिसिद्धस्य किमिति 'तत्रैव निवसाम्यहम्' इत्यवध्यनुवादः इत्यतस्तदभिप्रेतमाह— **प्रसन्ना भवामीति** ।। अस्य च श्रीवचनस्य 'ब्रह्मण्ये सम्पादितभगवत्प्रसाद एव भक्तेऽहं प्रसन्ना भवामि' इति स्वप्रसादकामेनापि भगवत्प्रसाद एवापादनीय इत्यभिप्रायावेदनात् प्रकृतोपयोग इति भावेनोक्तम्— **इति च श्रीवचनमिति सम्बन्ध इति** ।। भावप्रदीपिकायां तु 'निवसामि' इत्येतत् 'प्रत्यक्षा स्याम्' इति व्याख्यातम् । भाष्ये ब्रह्मणो महतः परत्ववचनं प्रकृतानुपयुक्तम् इत्यतः तद्भावं वक्तु-मवतारयति— **पूर्वं शङ्काहेतुत्वेनेति** ।। **इदं** 'अनाद्यनन्तं महतः' इति वाक्यम् । इतरवाक्यानाम् अव्यक्तपरत्वं सम्मतम् । अस्य तु न तत्परत्वम्, किन्तु ब्रह्मपरत्वमेवेति भावेनोक्तम्— **वस्तुस्थितिमिति** ।। 'नैतद्वाक्यमव्यक्तविषयम्' इत्येतद् अत्र न प्रतीयते इत्यतो भाष्य-भावमाह— **अनाद्यनन्तमिति** ।। केचित्तु ननु कथं 'ब्रह्मैव' इत्यवधारणम् ? 'महतः परम-व्यक्तम्' इति श्रुतावव्यक्तस्यापि महतः परत्वावेदनाद्, इत्यत आह— अनाद्यनन्तं महतः परम् इति वाक्यप्रतिपाद्यम् इति इत्यप्यवतारयन्ति ।

भाष्योदाहृतब्रह्मसूत्राक्षरार्थस्तु— यदुक्तमव्यक्तस्य मोक्षार्थं ज्ञेयत्ववचनं नास्तीति, तद् ज्ञेयत्वावचनम् अव्यक्तस्यासिद्धम् । यतो 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इति महत्परत्वलिङ्गावेदिताव्यक्ततत्त्वस्य मोक्षार्थं ज्ञेयत्वं वदति श्रुतिः इति चेन्न । हि यस्मात् प्राज्ञः विष्णुरेव तत्रोच्यते । सर्वतः परे भगवति महतः परत्वं युक्तम् । प्राज्ञस्य प्रतिपाद्यत्वं च 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति विष्णुप्रकरणाद्विज्ञायते । इतश्च प्राज्ञ एव निचाय्यवाक्योक्त इत्युच्यते— **त्रयाणामेवेति** ।। आद्यः चशब्दः 'न केवलं प्रकरणात्, किन्तु युक्त्यत्यन्तरादपि' इति समुच्चयार्थः । अन्त्यः प्रश्नोपन्याससमुच्चयार्थः । 'प्राज्ञः' इत्यनुवर्तते । बुद्धिस्थत्वाद् 'एतदुपनिषदि' इत्यन्वेति । एवं 'वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम्'

इति, 'स्वर्ग्यमग्निं नचिकेतः प्रजानन्' इति, 'देवैरत्रापि विचिकित्सितं किल' इत्येवंप्रकारेण त्रयाणां पितृसौमनस्यस्वर्ग्याग्निब्रह्मणामेवोपन्यासो यतः, अतश्च प्राज्ञ एव तत्रोच्यते, 'त्रयाणामेव' इति कुत इत्यत उक्तम्– **प्रश्नश्चेति** ।। 'सुमना यथा स्याद्वीतमन्युः' इति, 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तम्' इति, 'येयं प्रेते विचिकित्सा मनुष्ये' इति चैतत्त्रितयविषय एव प्रश्नश्च यतः, अत उपन्यासस्त्रयविषयः । प्रश्नस्यादित्वेऽपि प्रतिवचनस्थनिचाय्यवाक्यस्य प्रधानपरत्वशङ्कनात् तन्निरासाय उपन्यासस्यादावुक्तिः । 'त्रयाणामेव च' इत्येव पूर्तौ 'एवम्' इत्युक्तिः, त्रयमध्ये प्रधानस्य न निवेश इति दर्शयितुम्, उपन्यासस्योक्तत्रयविषयत्वसिद्ध्यै प्रश्नोक्तिरिति ।

'कूटस्थोऽक्षर उच्यते' इत्यादाविव अत्राप्यस्तु पुंलिङ्गम् इति परः परिहर्तुमुत्सहेतापि, इति हृदि निधायोक्तम्– **अत्राभ्युच्चययुक्तिमिति** ।। **एतत्सिद्धिः** एतद्वाक्यस्य भगवत्परत्वसिद्धिः इति भाष्यार्थः । **पूर्वपक्षे** अव्यक्तपरत्वपक्षे । **युक्तिरुक्तेति** 'अनाद्यनन्तम्' इति वाक्ये हि 'तं महतः परम्' इति परामर्शो दृश्यते । स चोक्तस्यैव भवति । अव्यक्तमेव च 'महतः परमव्यक्तम्' इति महतः परत्वेनोक्तम् । अतोऽत्राप्यव्यक्तग्रहणे 'तम्' इत्ययं 'महतः परमव्यक्तम्' इत्युक्तस्य परामर्श इत्युपपद्यते । अन्यथाऽनुक्तपरामर्शः प्रसज्येत । परमात्मा तु 'न महतः परः' इत्युक्तः, किन्तु 'अव्यक्तात्पुरुषः परः' इत्येवम्, इति अन्यविषयत्वव्युदासेन अव्यक्तविषयत्वे युक्तिरुक्ता पूर्वभाष्य एवेत्यर्थः । महतः परादव्यक्तात् परस्य भगवतो महतः परत्वं सुगममेवेति विभावयितुं भाष्ये एवशब्दः । **अन्यथासिद्धा** अप्रयोजिका । 'अनुक्तपरामर्शः प्रसज्येत' इत्युक्तदोषमुद्धर्तुं भाष्यभावमाह– **तथा चेति** ।। **उक्तं** ब्रह्मसूत्रम् । **वक्ष्यमाणम्** 'अनाद्यनन्तं महतः परं ध्रुवम्' इति, 'परो हि देवः' इति श्रुतिवाक्यम् । **अयमिति** ।। पुंलिङ्गशब्दः । **एतद्वाक्यम्** 'अनाद्यनन्तम्' इति वाक्यम् । ननु 'पुरुहूतः' इति पुरन्दरः प्रसिद्धः । तत्कथमत्र भगवत उक्तिरित्यत उक्तम्– **पुरुभिरिति** ।। पुरुशब्दो हि बहुनाम 'हूतः' इति च शब्दार्थकस्य ह्वयतेर्निष्ठायां रूपम् । 'अनन्तैर्वेदैः शब्दितः प्रतिपादितः' इति लभ्यत इति । प्राज्ञप्रयोगेनाज्ञरूढिबाधे भगवत एव प्रतिपत्तिरिति भावः ।

**भावदीपिका (श्री.टि.)– ।। ममेति ।। ब्रह्मणि** ब्राह्मणे । **शङ्काहेतुत्वेनेति** ।। संशयहेतुत्वेनेत्यर्थः । ननु 'महतः परमव्यक्तम्' इत्यव्यक्तस्यापि महतः परत्वोक्तेः कथं 'ब्रह्मैव' इत्यवधारणम् इत्यत आह– **अनाद्यनन्तमिति** ।। 'कूटस्थोऽक्षर उच्यते'

श्लोकः ५

इत्यव्यक्तेऽपि पुंल्लिङ्गनिर्देशस्य सत्त्वेन 'तम्' इति पुंल्लिङ्गनिर्देशरूपयुक्तेः स्वातन्त्र्येणाभिप्रेतार्थसाधकत्वाभावादाह– **अभ्युच्चयेति** ।। एवं सूत्रसिद्धार्थोपोद्बलकतयोपन्यासार्हेत्यभिप्रायः । **भाष्ये वदतीति चेदित्यादि** ।। 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति ज्ञेयत्वं वदतीति चेन्न । प्राज्ञः परमात्मा हि तत्रोच्यते 'अणोरणीयान् महतो महीयान्' इति तस्यैव महतो महत्त्वम् । सर्वस्मात्परस्य महतोऽपि परत्वं युज्यत इति 'वदतीति चेत्' इति सूत्रार्थः । 'त्रयाणामेव पितृसौमनस्यस्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च' इति 'त्रयाणाम्' इति सूत्रार्थश्च श्रीमद्भाष्योक्तरीत्याऽनुसन्धेयः । **उक्तपरामर्शेति** ।। अव्यक्तं च महतः परम् । 'महतः परमव्यक्तम्' इत्युक्तपरामर्शोपपत्तेरिति ग्रन्थेनेत्यर्थः । **पूर्वपक्षे** अव्यक्तपरत्वाङ्गीकारपक्षे । **अयं परामर्शः** 'तम्' इत्ययं परामर्शः । पुरुभिः ब्रह्माद्यैर्हूतः यज्ञादावाहूत इत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। ब्रह्मणि साधाविति ।।** तत्र साधुरिति यत्प्रत्यय इति भावः । प्रकृतानुपयोगादाह– **वस्तुस्थितिमिति** ।। ननु कथं ब्रह्मैवेत्यवधारणम् । महतः परमव्यक्तमिति श्रुतावव्यक्तस्यापि महतः परत्वोक्तेरित्यत आह– **अनाद्यनन्तमिति** ।। **पूर्वपक्ष इति** ।। अव्यक्तपरत्वपक्ष इत्यर्थः । ननु पुरुहूतः पुरन्दरः । तदैक्यं भगवतः कथमित्यत आह– **पुरुभिर्हूत इति** ।। बहुभिः प्रतिपादित इत्यर्थः ।

## भाष्यम्

**न चाव्यक्तरूपं भगवता निषिद्धम् । भारतादौ साधितत्वात् । 'ॐ शरीररूपकविन्यस्तगृहीतेः ॐ' (ब्र.सू.१.४.१) इत्यादौ तु साङ्ख्यप्रसिद्धं निषिध्य वैदिकमव्यक्तमेवोक्तम् । तथा च सौकरायणश्रुतिः–**

**'शरीररूपिकाऽशरीरस्य विष्णोः यतः प्रिया सा जगतः प्रसूतिः' इति ।**

**सुव्रतानां क्षिप्रं महदैश्वर्यं ददाति देवी न देव इति विशेषः ।**

**'सुवर्णवर्णां पद्मकरां च देवीं सर्वेश्वरीं व्याप्तजडां च बुद्ध्वा ।**
**सैवेति वै सुव्रतानां तु मासान्महाविभूतिं श्रीस्तु दद्यान्न देवः'**

**इति ऋग्वेदखिलेषु ।। ५ ।।**

भावप्रदीपिका (प.टी.) नन्वव्यक्तस्वरूपमेव नास्ति सूत्रकृता निषिद्धत्वात् । अतो दूरोत्सारितस्तदुपासनस्य मोक्षसाधनत्वादिविचार इत्यत आह– **न चेति** । भारतादावव्यक्तं साधयन् कथं शरीररूपकेति प्रत्याचख्यौ ? इत्यत आह– **शरीरेति** । एतत्सूत्रेऽपि आनुमानिकम् इति साङ्ख्यप्रसिद्धिं स्वतन्त्रकारणं प्रधानं नेति निषिद्ध्य शरीररूपकपदेन वैदिकमव्यक्तं साधितमेवेत्यर्थः । शरीररूपकपदेनाव्यक्तं कुत इत्यत आह– **तथा चेति** । तस्मादव्यक्तोपासकानां पुनर्ब्रह्मोपासनमपेक्षितमेवेति तत्राधिकदुःखमित्यर्थः। तर्हि पुनरव्यक्तमार्गो नानुष्ठेय एवापन्न इत्यत आह– **सुव्रतानामिति** । सैव स्वात्मानं बुद्ध्वा बोधयित्वा महाविभूतिं दद्यात् । कथमिति ? मासान् ध्याता इत्यर्थः ।। ५ ।।

प्रमेयदीपिका (ज.टी.)– नन्वव्यक्तं नाम तत्त्वमेव नास्तीति सूत्रकृतोक्तम् । ततस्तदभिमानिन्यव्यक्ताख्या देवताऽपि नास्ति । तत्कथं तद्विषयतया व्याख्यानम्? इत्यत आह– **नचेति** ।। तर्हि तत्कथं सूत्रितम्? इत्यत आह– **शरीरेति** ।। साङ्ख्यप्रसिद्धं प्रधानमिति स्वतन्त्रं मुख्यतः शब्दवाच्यमित्यर्थः । वैदिकमिति भगवदधीनं तत्सम्बन्धेन शब्दवाच्यमित्यर्थः। अत्र श्रुतिं चाह– **तथा चेति** ।। प्राक् 'तथाप्यपरोक्षीकृताव्यक्तानाम्' इत्यादिनैकं प्रयोजनमुक्तम् । अपरं च सप्रमाणकमाह– **सुव्रतानामिति** ।। बुद्ध्वेत्युक्तप्रकारेणोपासीनायेति शेषः । एतत्प्रयोजनं गीतायां न सूचितमिति न तत्रैवोक्तम् ।। ५ ।।

भावबोधः (र.टि.)– ।। **तत्त्वमेव नास्तीति** ।। तदावेदकाव्यक्तादिशब्दस्य भगवति समन्वयप्रतिपादने तत्र प्रमाणाभावेनार्थान्नास्तीत्युक्तमिति भावः । सुव्रतत्वस्य बोधसाधनत्वेन( सुव्रतानां तु अस्य बोधसाध्यत्वेन) तदुत्तरत्वाभावान्न तेन समानकर्तृतोपपत्तिरिति भावेनाह– **उपासीनायेति** ।। इत्येव प्रसन्ना भवत्येवेत्यर्थ इति भावः ।।

भावदीपः (रा.टि.)– ।। **व्याख्यानमितीति** ।। गीतावाक्यानामित्यर्थः ।। **एकं प्रयोजनमिति** ।। भगवदुपासनासौकर्यरूपमित्यर्थः ।। बोधमात्रस्य महाभूतहेतुत्वादाह– **बुद्ध्वेत्युक्तप्रकारेणेति** ।। 'सर्वेन्द्रियसंयमन' इत्यादिनोक्त प्रकारेणेत्यर्थः ।। ५ ।।

भावरत्नकोशः (सु.टि.)– ।। **सूत्रकृतोक्तम्** 'आनुमानिकमप्येकेषामिति चेन्न' इति

श्लोकः ५

सूत्रकृतोक्तम् । तत्राव्यक्तादिशब्दानां भगवति समन्वयसमर्थनेन अन्यस्याव्यक्तपदार्थस्य तेनानभ्युपगमाद् अनुमानादेः प्रतिपक्षादिग्रस्तत्वसम्भवेन तत्र प्रमाणाभावे वस्त्वेव न सिध्यतीति भावः । **तद्विषयतया** 'ये चाप्यक्षरमव्यक्तम्' इति प्रश्नवाक्यस्याव्यक्ततत्त्वविषयतया । 'अव्यक्तं प्रकृतिः' इति भाष्ये कथं व्याख्यानमित्यर्थः । भावप्रदीपिकायां तु– नन्वव्यक्तस्वरूपमेव नास्ति, सूत्रकृता प्रतिषिद्धत्वात्, अतो दूरोत्सारितस्तदुपासनस्य मोक्षसाधनत्वविचारः इत्यत आह 'न चेति' इति भाष्यमवतारितम् । **कथमिति** ।। भारतादावव्यक्ततत्त्वं साधयन् सूत्रकारः कथमनुमानिकासूत्रे प्रत्याचक्षीतेत्यर्थः । मतद्वयेऽप्यव्यक्तं धर्मी एवेति अस्ति , कथं निषेध्यम् इत्यतः 'साङ्ख्यप्रसिद्धं प्रधानं निषिध्य' इत्यस्य तात्पर्यमाह– **स्वतन्त्रं मुख्यतः शब्दवाच्यमिति** ।। 'अव्यक्तम्' इति प्रकृतेऽपि यत् प्रधानशब्दं प्रायुङ्क्त, तस्येदं तात्पर्यम् – अव्यक्तं स्वरूपतोऽस्ति, किन्तु प्रधानं स्वतन्त्रं कारणम्, प्रधानं परममुख्यवृत्त्या अव्यक्तादिशब्दवाच्यं च न इत्यव्यक्तं प्रधानं नेति धर्मनिषेध एव तात्पर्यं सूत्रकारस्य, न तु तत्त्वस्वरूपविषयेऽपीति विभावितं भवति । **तत्सम्बन्धेन** भगवत्सम्बन्धेन । **शब्दवाच्यम्** अव्यक्तशब्दवाच्यम् । तथा च भावप्रदीपिकायाम् एतत्सूत्रेऽपि 'आनुमानिकम्' इति साङ्ख्यप्रसिद्धं प्रधानं स्वतन्त्रं कारणं न, इति प्रतिषिध्य, शरीररूपकपदेन वैदिकमव्यक्तं साधितमेवेति ।

ब्रह्मसूत्राक्षरार्थस्तु– आनुमानिकमपि अनुमानगम्यं प्रधानादिकमेव एकेषाम् 'अव्यक्तात् पुरुषः परः', 'जीवा एव तु दुःखिनः' इत्यादिशाखासु अव्यक्तजीवादिशब्दवाच्यमुच्यत इति चेन्न । अव्यक्तादिशब्दैः परममुख्यया वृत्त्या विष्णोरेवोच्यमानत्वात् । कुत एतत् । यतः 'अव्यक्तमचलं शान्तम्' इति श्रुतिः 'अव्यक्तोऽक्षर उच्यते' इति स्मृतिश्चाव्यक्तं ब्रह्मेति दर्शयति । विष्णोरेवाव्यक्तशब्दवाच्यत्वे कथमन्यत्र प्रयोग इत्यत उक्तम्– **शरीरेति** ।। ''शरीरस्य रूपमिव रूपं यस्य तत् शरीररूपम्, कुत्सितं शरीररूपं शरीररूपकम् प्रधानादि । तत्र विन्यस्तस्य अवस्थितस्य विष्णोरव्यक्तपदेन गृहीतेः अव्यक्तादिशब्दवाच्यब्रह्मसम्बन्धाद् अव्यक्तादिशब्दव्यवहारोऽन्यत्र द्रष्टव्य इति भावः । वैपरीत्यं किं न स्यात् इत्यतः– **शरीरपदम्** । यथा शरीरं पुरुषतन्त्रं तथा प्रधानाद्यपि विष्णुतन्त्रमिति गुणयोगात् 'शरीरम्' इति वक्तुमुपात्तम् । तच्च मुख्यशरीरं न भवतीति वक्तुं कप्रत्ययेन कुत्सयामास । 'तदवस्थितगृहीतेः' इति वाच्ये 'विन्यस्त' इत्युक्तिः 'प्रधानादिविशिष्टस्यैवाव्यक्तादिपदेन गृहीतिः, न केवलस्य' इति विभावयितुम्'' इति तन्त्रदीपिकायां स्फुटमिति ।

**अत्र** भगवदधीनत्वे तत्सम्बन्धेन तच्छब्दवाच्यत्वे च न केवलं सूत्रम्, श्रुतिं चेति चशब्दः । **सा** अव्यक्तशब्दवाच्या प्रकृतिः **अशरीरस्य** प्राकृतशरीररहितस्य विष्णोः **शरीररूपिका** शरीरमिव भगवदधीना । अमुख्यशरीरं च शरीरशब्दे गौणी वृत्तिरत्रेति वक्तुं गुणयोग उच्यते– **यतः प्रियेति ।।** या जगतः प्रसूतिः प्रसवित्री सा च सा इति श्रुत्यर्थः । असाङ्गत्यपरिहारायोत्तर-भाष्यमवतारयति– **प्रागिति ।। एकं प्रयोजनं** भगवदुपासनसौकर्यरूपम् । ननु 'बुद्ध्वा दद्यात्' इत्यनन्वितम् । बोधदानयोर्भिन्नकर्तृकत्वात् । 'बुद्ध्वा सुव्रतानाम्' इत्यप्यनन्वयम् । सुव्रतस्य बोधात् पूर्वभावित्वेन बोधानन्तरत्वायोगाद्, इत्यतः क्त्वान्तस्याध्याहृतेनान्वय इति वदन् इतिशब्दार्थं च दर्शयति– **बुद्ध्वा इत्युक्तप्रकारेणेति ।।** 'सुवर्णवर्णाम्' इत्याद्युक्तविशेषणसम्पन्न-त्वेनोपासीनानाम् उपासनं कुर्वतामित्यर्थः । 'उपासीनाय' इति पाठे **सुव्रतानां** सर्वेन्द्रियाति-नियमनादिशोभनव्रतयुक्तानां भक्तानां मध्ये **उपासीनाय** पुरुषाय देवी महाभूतिं दद्यादिति योजना । केचित्तु 'उपासीना ये' इति पठित्वा 'ये उपासीनास्तेषां सुव्रतानाम्' इत्यन्वय इति व्याचक्षते । अपरे तु इतिशब्दार्थं वदन् बोधेऽन्तरङ्गोपायमध्याहरति– 'बुद्ध्वेत्युक्तप्रकारेण उपासनयेति शेष इति' इत्यवतार्य, 'बुद्ध्वेति त्त्वान्तस्य सुव्रतानामित्यन्वयः' इति व्याकुर्वन्तः 'उपासनया' इति पठन्ति । भावप्रदीपिकायां तु– सैव श्रीर्देवी स्वात्मानं बुद्ध्वा बोधयित्वा महाभूतिं सुव्रतानां दद्यात् । कथम् । 'मासाद्ध्याता' इत्युक्तम् । सुव्रतानामेव देवी महदैश्वर्यं ददाति, न देव इति च विशेष इत्येतदपि प्रयोजनम् । तथापि 'अपरोक्षीकृताव्यक्तानाम्' इति च व्याख्यानान्तरमेव वक्तव्यम् । व्यवधानेनात्र किमित्युच्यते इत्यतोऽत्र निमित्तमाह– **एतत्प्रयोजनमिति** ।। ५ ।।

**भावदीपिका (श्री.टि.)– ।। तत्त्वमेव नास्तीति ।।** 'आनुमानिकमप्यकेषामिति चेन्न, शरीरूपकविन्यस्तगृहीतेः दर्शयति च' इति सूत्रेण तदावेदकाव्यक्तशब्दस्य भगवति समन्वयप्रतिपादने तत्र प्रमाणाभावेनार्थान्नास्तीत्युक्तमिति भावः । **तद्विषयतयेति** ।। 'ये चाप्यक्षरमव्यक्तम्' इति प्रश्नवाक्यस्याव्यक्तविषयतया कथं व्याख्यानमित्यर्थः । तत्सूत्रं तत्स्वरूपनिषेधकम् 'आनुमानिकम्' इति सूत्रमित्यर्थः । **एकं प्रयोजनमिति** ।। अव्यक्तो-पासनद्वारकभगवत्प्राप्तिमार्गस्य निर्विघ्नतया भगवदुपास्तिसौकर्यरूपप्रयोजनमित्यर्थः । **उपासीना ये इति ।।** तेन समानकर्तृकत्वलाभ इत्याशयः । ननु इदं प्रयोजनं 'तथाऽपि' इति वाक्यानन्तरं 'तत्रापि' इत्यतः पूर्वमेव वक्तव्यम् । व्यवधानेनात्रोक्तौ किंनिमित्तम् इत्यत आह– **एतत्प्रयोजनमिति ।। ५ ।।**

श्लोकः ६,७

**भावप्रकाशः (कृ.टि.)– ।। तत्त्वमेव नास्तीति ।।** आनुमानिकमिति सूत्रेणाव्यक्त-वाचकशब्दानां भगवति समन्वयोक्तेरव्यक्तप्रतिपादकागमाभावात् । अनुमानस्य च प्रतिपक्षादि-प्रसरेणाप्रवृत्तेरिति भावः । ननु तत्तद्वाद्यभिप्रेतप्रकारभेदेऽपि प्रधानमेकमेव । तत्कथं साङ्ख्य-प्रसिद्धं प्रधानमित्याद्युक्तमित्यत आह– **स्वतन्त्रमिति** ।। भगवदधीनमिति च सैवेतीत्युक्तेति-शब्दस्यार्थं समानकर्तृकतानिर्वाहकाध्याहारं च दर्शयति– **बुध्येत्युक्तप्रकारेणोपासीना ये इति** ।। ये उपासीनास्तेषां सुव्रतानामित्यन्वयः । उपासीनायेति टीकायां चतुर्थ्यन्तपाठं भाष्ये एतीति पाठं चाश्रित्य भावबोधे उपासीनाय इत्येव प्रसन्ना भवत्येवेत्युक्तमिति मन्तव्यम् ।।५।।

**ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ।। ६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** मदुपासकानाम् अव्यक्तोपासकानामिव न क्लेशो मोक्षापादन इत्युच्यते– **ये तु सर्वाणीति द्वाभ्याम्** ।। 'तु'शब्दः अव्यक्तोपासकेभ्यो भगवदुपासकानां वैशेष्यद्योतकः । ये तु सर्वाणि स्वाश्रमोचितानि कर्माणि सन्न्यस्य 'सर्वस्वतन्त्रो हरिरेव मयि स्थित्वा स्वपूजात्वेन स्वदत्तकर्तृतासम्पन्नेन मया कारयति' इत्यनुसन्धाय मत्पराः अहं पर उत्तमो येषां ते तथोक्ताः । मम सर्वोत्तमत्वं जानन्तः, अनन्येन न विद्यतेऽन्यः स्वातन्त्र्येण भजनीयो यस्मिन् सोऽनन्यः, तेन योगेन उपायेन भक्तिलक्षणेन मां ध्यायन्तः चिन्तयन्त उपासते ।। ६ ।।

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ।। ७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** तेषां मय्यावेशितचेतसां समाहितमानसानाम् अहं मृत्युरूपसंसारसागरात् न चिरात् शीघ्रम् उद्धर्ता भवामि । अत्र 'अनन्येनैव योगेन' इत्यादिना 'विनाऽव्यक्तोपासनं भवत्येव मदुपासकानां मोक्षः' इति, 'उपासते' इत्येवोक्त्या 'अतिशयोपासनाद्यभावः' इति, 'न चिरात्' इत्यनेन 'अव्यक्तोपासनद्वारके मार्गेऽपि योऽव्यक्ता-परोक्षे प्रयासस्तावता प्रयासेन यदि मामुपास्ते ऊनेन वा तदा मदापरोक्ष्यमेव भवति' इति, 'तेषामहं समुद्धर्ता भवामि' इत्यनेन 'इन्द्रियसंयमाद्यूनभावे अत्युपासकस्यापि देवी

नातिप्रसादमेति । अहं तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददामि' इति च प्रतीयत इति 'न भगवदुपासकानाम् अव्यक्तोपासकानामिव क्लेशभूमा' इत्यव्यक्तोपासकेभ्यो भगवदुपासका एवोत्तमा इति विभावितं भवतीति भाष्यटीकयोः स्फुटम् ।। ७ ।।

## भाष्यम्

**मदुपासकानां भक्तानां न कश्चित् क्लेश इति दर्शयति– ये त्वित्यादिना ।। उक्तं च सौकरायणश्रुतौ**

**'उपासते ये पुरुषं वासुदेवमव्यक्तादेरीप्सितं किंनु तेषाम्' इति ।**

**'तेषामेकान्तिनः श्रेष्ठाः ते चैवानन्यदेवताः ।**
**अहमेव गतिस्तेषां निराशीः कर्मकारिणम्' इति च मोक्षधर्मे ।।६,७।।**

भावप्रदीपिका (प.टी.)– ननु विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्ष इत्यादि गीतानुक्तमेव किमित्युक्तम् ? इत्याशङ्क्य, उत्तरश्लोकानवतार्य तदर्थं श्रुति-स्मृतिभ्यां समर्थयति– **मदुपासकानामिति** ।। तेषां चतुर्विधभक्तानां मध्ये ।

प्रमेयदीपिका (ज.टी.)– नन्वव्यक्तोपासकानां क्लेशातिशयो गीतायां प्रतीयते । भगवदुपासकानां तु तदभावो न प्रतीयते । अतः 'तदेतत् सर्वं' इति कथमुक्तम्? इत्यत आह– **मदुपासकानामिति** ।। 'भक्तानाम्' इत्यनेन नान्यत्रात्यन्तमादरमिति सूचयति । अत्र 'अनन्येनैव योगेन' इत्यादिना विनाऽव्यक्तोपासनम् इत्येतत् प्रतीयते । उपासत इत्येवोक्त्य अतिशयोपासनाद्यभावः । 'नचिरात्' इत्यनेन तत्रापीत्यादिकम् । 'तेषामहं समुद्धर्ता भवामि' इत्यनेन देवस्त्वित्यादिकम् । आगामिगीतावाक्यमपेक्ष्य प्राक् बुद्ध्यारोहाय तदुक्तमिति ।। अत्र श्रुत्यादिसम्मतिं चाह– **उक्तं चेति** ।। तेषाम् आर्तादीनाम् । मध्ये गतिः साधनादिसम्पादकः ।। ६,७ ।।

भावबोधः (र.टि.)– ।। **अन्यत्रेति** ।। इन्द्रियसंयमनादावित्यर्थः । **आगामीति** ।। अत एव भगवदुपासने त्वेतदभावो यथा गीतोक्तस्तदुत्तरत्र दर्शयिष्यत इति तद्भाष्य-व्याख्यानावसर एवोक्तम् । **आर्तादीनामिति** ।। मोक्षधर्मे पूर्वमार्तादीनां प्रकृतत्वादिति भावः ।

श्लोकः ६.७

ननु ते प्राप्नुवन्तीत्युक्तरीत्याऽव्यक्तोपासकानामपि स्वयमेव प्राप्य इत्यहमेव गतिर्गम्यो नत्वन्यस्तेषामेकान्तिनामिति विशेषोक्त्ययोगाद्गतिशब्दस्य गम्यार्थतानुपपत्तौ प्रकृतोपयुक्तमर्थान्तर-माह– **साधनादीति** ।। ६,७ ।।

**भावदीपः (रा.टि.)**– ।। **कथमुक्तमिति** ।। अव्यक्तोपासकानां क्लेशस्य भगव-दुपासकानां तदभावस्य च प्रागुक्तत्वेन तदुभयस्यापि 'तदेतत्सर्वम्' इति भाष्येण परामर्शात् परिसंतरशब्दैः क्लेशस्यैव ज्ञापिततया क्लेशाभावे गीतास्थज्ञापकान् भाष्ये प्रदर्श्य तावत् सर्वपरिसंतरशब्दैः प्रतीयत इति कथमुक्तमित्यर्थः **नान्यत्रेति** ।। इन्द्रियसंयमनादावित्यर्थः ।। भगवदुपास्तौ क्लेशो नेति प्राक् भाष्योक्तक्लेशाभावे गीतास्थं ज्ञापकं स्वयमाह– **अत्रानन्ये-नैवेत्यादिना** ।। 'इत्येतत्' इति प्राग्भाष्योक्तमित्यर्थः ।। **अभावः** इत्यनन्तरं 'प्रतीयते' इत्यनुषङ्गः ।। ननु भगवदुपासने क्लेशाभावोपपादनं भाष्येऽत्रैव कर्तव्यम्, प्रागेव क्लेशोपपादन-प्रस्तावे कस्मात् कृतम्? इत्यत आह– **आगामिगीतावाक्यमिति** ।। **तदुक्तमिति** ।। भगवदुपास्तौ क्लेशेनेत्येतदित्यर्थः ।। **आर्तादीनामिति** ।। मोक्षधर्मे पूर्वत्र आर्तजिज्ञास्वर्था-र्थ्यादीनां प्रस्तुतत्वादेवमुक्तम् ।। प्रकृतोपयोगायार्थमाह– **गतिः साधनादिसम्पादक इति** ।। ६,७ ।।

**भावरत्नकोशः (सु.टि.)**– ।। 'क्लेशोऽधिकतरः' इति गीतायाम्, **तदभावः** क्लेशातिशया-भावः । **तदेतत्सर्वमितीति** ।। ''तदेतत्सर्वं 'पर्युपासते' 'सन्नियम्य' 'अधिकतरः' इति परिसमृतरशब्दैः प्रतीयते'' इति पूर्वभाष्ये कथमुक्तमित्यर्थः । **अन्यत्र** इन्द्रियसंयमनादौ । **सूचयतीति** ।। 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्' इति । 'भक्तिरेव प्रधानम्' इति भक्तपदेन सङ्क्षिप्य वक्तीत्यर्थः । **इत्येतत्** 'विनाऽव्यक्तोपासनं भवत्येव भगवदुपासकानां मोक्षः' इत्येतत् । **अनन्येन** न विद्यते अन्यः उपासितवयो यस्मिन् स तथा । तेन योगेन उपायेनेत्यनेन प्रतीयत इत्यर्थः । अतिशयेनोपासनाद्यभावः 'प्रतीयते' इति वर्तते । **इत्यादिकम्** तत्रापि योऽव्यक्तापरोक्षे प्रयासः तावता प्रयासेन यदि भगवन्तमुपास्ते ऊनेन वा तदा भगवदापरोक्ष्यमेव भवतीति द्वितीयमधिकम् इत्येतत् 'न चिरात्' इत्यनेन प्रतीयते । **'देवस्त्वित्यादिकम्'** इत्यत्रादिशब्देन देवस्तुतानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यं भक्तानां भगवदुपासन इति समग्रवाक्यग्रहः प्रतीयत इति सम्बन्धः ।

नन्वत्र कर्तव्यं भगवदुपासनसौकर्योपपादनं भाष्यकारैः किमिति पूर्वमुक्तम् इत्यतः, तथा भाषणस्य प्रयोजनमाह– **आगामीति** ।। तत् भगवदुपासकानां क्लेशो नास्तीति प्रमेयम् । **अत्र** भगवदुपासकानां क्लेशाभावे । अव्यक्तादेः सकाशात् ईप्सितम् आप्तुमिष्टं किं नु स्यात्, न किमपीति श्रुतिखण्डार्थः । मोक्षधर्मे – 'चतुर्विधा मम जना भक्ता एवं हि मे श्रुतम्' इत्यार्तादीनां प्रकृतत्वादुक्तम्– **तेषामार्तादीनामिति** । निर्धारणे षष्ठी इयमिति भावेनोक्तम्– **मध्य इति** ।। श्रेष्ठाः । कुतः ? यतः सर्वोत्तमत्वेन भजनीयेतरदेवताहीना । अनेनाव्यक्ताद्यु-पासनापादनीयफलाभिसन्धिरहिता इति प्रकृतसिद्धिः । 'तेषां निष्कामकर्मिणामहमेव गतिः गम्यः' इत्यर्थत्वे प्रकृतासङ्गतिः स्यात् ? इत्यतो देवस्तु तानि साधनानि भक्तिमतः स्वयमेव ददातीति चातिसौकर्यं भगवदुपासन इत्युक्तार्थस्थापनाय प्रवृत्तम् 'अहमेव गतिस्तेषाम्' इति वाक्यमिति भावेन गतिशब्दस्य विवक्षितार्थमाह– **गतिः साधनादिसम्पादक इति** ।। गम्यते प्राप्यते साधनजातम् अनेनेति कर्तरि करणत्वोपचारेण गतिरित्युक्तिः, इति विवक्षितार्थसिद्धिरिति भावः । **'सम्पादकः'** इति फलितप्रदर्शनमित्येके ।। ६,७ ।।

**भावदीपिका (श्री.टि.)**– ।। **भक्तानामित्यनेनेति** ।। भक्तावेवादरसूचनेनेत्यर्थः । **अन्यत्रेति** ।। इन्द्रियसंयमनादावित्यर्थः । **विनेति** ।। 'विनाऽव्यक्तोपासनं भवत्यत्र भगवदुपासकानां मोक्षः' इति पूर्वोक्तमित्यर्थः । **इत्येवेति** ।। 'परि' इत्युपसर्गं विनेत्यर्थः । ननु 'विनाऽव्यक्तोपासनम्' इत्यादिकस्य 'ये तु' इति गीताभिप्रायरूपत्वात् एतच्च श्लोकव्याख्यानावसर एव तद्वक्तव्यम्, न पूर्वम् इत्यत आह– **आगामीति** ।। श्रुतौ 'तेषाम् अव्यक्तादेः सकाशादीप्सितं फलं किं नु, न किमपि, सर्वमपीप्सितं वासुदेवादेव भवति' इत्यर्थः । **आर्तादीनां मध्य इति** ।। मोक्षधर्मे पूर्वमार्तादीनां प्रकृतत्वादिति भावः । निराशीष्ट्वेन कर्मकारिणामेकान्तिनाम् अहमेव गतिः प्राप्य इत्यर्थो न युक्तः । 'ते प्राप्नुवन्ति' इति अव्यक्तोपासकानामपि भगवत्प्राप्तिसद्भावेन 'तेषाम्' इति विशिष्योक्त्ययोगात्, 'देवस्तु तानि साधनानि' इति प्रकृतार्थानुपपादकत्वेनासङ्गतत्वाच्च इत्यतः प्रकृतोपयोगितयाऽर्थमाह– **साधनादिसम्पादक इति** ।। अनेन 'देवस्तु' इत्यादिकं प्रमापितं भवतीति ज्ञेयम् ।। ६,७ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **अन्यत्रेति** ।। इन्द्रियसंयमनादावित्यर्थः । ननु भगव-दुपासने सौकर्योपपादनमत्रैव कार्यम्। श्लोकार्थे ज्ञाते उक्तोपपादनस्य सुज्ञानत्वात् । नतु पूर्वत्रेत्यत आह– **आगामीति** । मोक्षधर्मे चतुर्विधा मम जनाः भक्ता एवं हि मे

श्लोकः ८-१०

श्रुतमित्यार्तादीनां पूर्वं प्रकृतत्वादाह– **आर्तादीनामिति** ।। ननु अव्यक्तोपासकानामपि भगवानेव गम्यः । तत्किमहमेव गतिस्तेषां इति विशिष्योच्यत इत्यत आह– **साधनादीति** ।। ६ ।।

## मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
## निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ।। ८ ।।

**भावरत्नकोशः(सु. टि.)– गीताक्षरार्थस्तु–** एवं मदुपासनस्योत्तमत्वात् तदेव कुरु, तदलाभे मां जानीहि तदभावे चाभ्यासयोगेन मां जानीहि, तदभावे च मत्कर्मपरमो भव, तदशक्तौ च मद्योगमाश्रितः फलत्यागं कुर्वित्युच्यते– **मय्येव मन आधत्स्वेत्यादि चतुः-श्लोक्या** ।। मय्येव नत्वन्यत्र मन आधत्स्व स्थापय । मदुपासनमेव कुरु, नान्योपासनम् । तदलाभे मयि बुद्धिं निवेशय मत्तत्त्वनिश्चयम् आपादय । अत ऊर्ध्वं तत्त्वनिश्चयानन्तरभा-विध्यानजनितापरोक्षज्ञानोत्पत्त्यनन्तरं मयि निवसिष्यसि निवत्स्यसि निश्चयेन मयि वासं करिष्यसि निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्स्यसीति यावत् ।। ८ ।।

## अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
## अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ।। ९ ।।

**भावरत्नकोशः(सु. टि.)– गीताक्षरार्थस्तु– अथेति** ।। अथ मयि स्थिरम् अचञ्चलं यथा तथा समाधातुं स्थापयितुं न शक्नोषि चेत्, ततः तर्हि, अभ्यासयोगेन विष्णुशास्त्र-श्रवणमननावृत्तिरूपोपायेन माम् आप्तुं ज्ञातुम् इच्छ निश्चेतुं प्रयतस्व ।। ९ ।।

## अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
## मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि।। १० ।।

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु–** अभ्यासे शास्त्रश्रवणमननावृत्तौ अप्य-समर्थोऽसि चेत् मत्कर्मपरमः मत्पूजात्मकानि कर्माणि परमाणि उत्तमानि यस्य सः भव । मत्प्रीत्युद्देश्यककर्मानुष्ठानतत्परो भव । ततः किं सिद्ध्येत् इत्यत उच्यते– **मदर्थमिति** ।। कर्माणि कुर्वन्नपि सिद्धिम् 'कर्मणा ज्ञानमातनोति', 'ज्ञानेनामृतीभवति' इति शास्त्रात् ज्ञानं मोक्षं वा ।। १० ।।

**अथैदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ।। ११ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु–** एतत् मत्प्रीत्युद्देश्यकं कर्म मद्योगं योऽन्यदेवादिपूजनं कृत्वा हरावर्पयति । 'स तु तद्योगमात्रवान्' इति शास्त्रोक्तम् । अन्ते मयि समर्पणलक्षणं मत्कर्मत्वोपायम् । ततः तर्हि यतात्मवान् शुद्धचित्तः सन् सर्वकर्मफलत्यागं कुरु ।। ११ ।।

**श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद् ध्यानं विशिष्यते ।**
**ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ।। १२ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु–** 'ध्यानालाभे ज्ञानम्, तदलाभे शास्त्राभ्यासः' इत्येतत् समर्थ्यते– **श्रेयो हीति** ।। ज्ञानं श्रवणमननजन्यपरोक्षतत्त्वनिश्चयरूपम्, अभ्यासात् केवलाभ्यासात्, अज्ञानपूर्वकात् श्रवणमननावृत्तिलक्षणशास्त्राभ्यासात् श्रेयः श्रेष्ठम् । ज्ञानात् ज्ञानमात्रात् ध्यानं ज्ञानसहितध्यानं विशिष्यते श्रेयः । 'ध्यानात्कर्मफलत्यागो विशिष्यते' इत्यनेन त्यागस्य प्रशस्तत्वलक्षणा स्तुतिरेवाभिप्रेयते, न तु प्रतीतोऽर्थो ग्राह्य इति व्याख्यानं भाष्यटीकयोः स्पष्टम् । अथवा ध्यानात् केवलात् त्यागरहितात् ध्यानात् कर्मफल-त्यागः कर्मफलरागत्यागसहितं ध्यानमिति लक्षणया ग्राह्यम् । 'सर्वाधिकं ध्यानमुदाहरन्ति' इति शास्त्रात् । यद्वा कर्मफलत्यागः ध्यानसाहित्येनोपस्कृतो विशिष्यत इति योज्यम् । त्यागात् कर्मफलत्यागात् अनन्तरम् अपरोक्षज्ञानमात्रव्यवधाने शान्तिः मोक्षो भवति ।। १२ ।।

## भाष्यम्

**अज्ञानपूर्वादभ्यासाद् ज्ञानमेव विशिष्यते । ज्ञानमात्रात् सज्ञानं ध्यानम् । तथाच सामवेदे अनभिम्लानशाखायाम्–**

**'अधिकं केवलाभ्यासाज्ज्ञानं तत्सहितं ततः ।**
**ध्यानं ततश्चापरोक्षं ततः शान्तिर्भविष्यति ।।' इति ।**

श्लोकः ११,१२

**'ध्यानात् कर्मफलत्यागः' इति तु स्तुतिः । अन्यथा कथमसमर्थोऽसीत्युच्येत? 'तयोऽस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते' इति चोक्तम् ।**

**सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्ती परात्मन् ।**
**कर्माफलाकाङ्क्षमथो विरागः त्यागश्च न ज्ञानकलाफलार्हः'**

**इति काषायणशाखायाम् ।**

भावप्रदीपिका (प.टी.)– ज्ञानेन सम्भवतोऽभ्यासस्य कथं ज्ञानसाधनत्वमुच्यते ? ध्यानसाध्यज्ञानस्य च कथं तदवमत्वं श्रेयो हि इत्यनेनेत्यत एतत्सप्रमाणकं व्याचष्टे– **अज्ञानेति । तत्सहितं ततो ध्यानमिति ।** ज्ञानमात्रात् ज्ञानसहितं ध्यानमधिकमित्यर्थः । ध्यानात् कर्मफलत्यागः इत्यन्यथाप्रतीतिमुपपत्तिवचनाभ्यां वारयति– **ध्यानादिति ।**

प्रमेयदीपिका (ज.टी.)– ननु ज्ञानमभ्यासस्य साधनम् । तत्कथं ततः श्रेयः? इत्यत आह– **अज्ञानेति ।।** एवेति ।। केवलम् । 'ज्ञानाद् ध्यानं विशिष्यते' इत्यसत् । सध्यानस्यापि ज्ञानस्य सम्भवात् । अज्ञानपूर्वस्य ध्यानस्य सम्भवाच्चेत्यत आह– **ज्ञानमात्रादिति ।।** उपपत्तिलब्धमर्थं श्रुत्याऽपि द्रढयति – **तथा चेति ।।** तत्सहितं ज्ञानसहितं ध्यानम् । ततो ज्ञानमात्राद् अधिकम् । ध्यानात् कर्मफलत्यागो विशिष्यत इत्येतद् अन्यथाप्रतीतिनिरासाय व्याख्याति– **ध्यानादिति ।।**

त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते । न प्रतीतार्थे तात्पर्यमित्यर्थः । कुतः ? इत्यत आह– **अन्यथेति ।।** 'अथैतदप्यशक्तोऽसि कर्तुम्' इति । ध्यानात् प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथमन्यथा ध्यानादाधिक्ये सत्युपदिश्येतेत्यर्थः । कर्मसन्न्यासात् कर्मफलरागसन्न्यासात् कर्मयोगोऽपि विशिष्यते । किमुत ध्यानयोगः । वक्ष्यमाणकर्मादिसर्वाधिक्यम् । परात्मन् परमात्मनि विषये । विरागः शोभनाध्यासाभावः ।।

**भावबोधः (र.टि.)–** 'ज्ञानाद्ध्यानं विशिष्यते' इत्यत्र ज्ञानमात्रात् सज्ञानं ध्यानमिति भाष्ये ज्ञानध्यानशब्दयोः किमर्थं विशेषपरत्वमुच्यत इत्यतस्तन्निवर्तनीयाशङ्कामाह–

**ज्ञानाद्ध्यानमितीति ।।** असत् बाधितार्थकमित्यर्थः । कुत इत्यत आह– **सध्यानस्यापीति ।।** केवलज्ञानवत् सध्यानस्यापि ज्ञानस्य पुरुषविशेषे सम्भवात् सामान्यवाचकज्ञानशब्दस्य सध्यानज्ञानपरत्वे ततः केवलस्य विशिष्टस्य वा ध्यानस्योत्तमत्वासम्भवात् इति भावः । नन्वस्तु तत एव बाधकाद् ज्ञानशब्दः केवलज्ञानपर इति चेत्, तथाप्यनुपपत्तिरित्याह– **अज्ञानपूर्वस्येति ।।** कस्मिंश्चित्पुरुष इत्यर्थः । ततश्च सामान्यवाचकध्यानशब्दस्याज्ञानपूर्वध्यानपरत्वे 'अज्ञात्वा ध्यायिनो ध्यानाद् ज्ञानमेव विशिष्यते' इत्यज्ञानिध्यानतः केवलज्ञानस्योत्तमत्वप्रतिपादकप्रमाणविरोधेन अज्ञानपूर्वध्यानस्य केवलज्ञानादुत्तमत्वासम्भवादिति भावः । **उपपत्तिलब्धमिति ।।** पूर्वोक्तान्यथानुपपत्तिरूपोपपत्त्या ज्ञानाद्ध्यानमित्यत्र ज्ञानशब्दस्य केवलज्ञानपरत्वं ध्यानशब्दस्य सज्ञानध्यानपरत्वं लब्धमित्यर्थः । 'तयोस्तु कर्मसन्न्यासाद्' इति गीतावाक्यं प्रकृतोपयोगितया व्याचष्टे– **कर्मफलरागसन्न्यासादिति ।।** अफलाकाङ्क्षमित्यनेनैकार्थतापरिहाराय विरागशब्दार्थमाह– **शोभनाध्यासाभाव इति ।।**

**भावदीपः (रा.टि.)–** एवशब्दः केवलार्थ इत्याह– **एवेति ।। केवलमिति ।।** ध्यानं विना कृतमित्यर्थः ।। **उपपत्तीति ।।** ज्ञानपूर्वाभ्यासात् केवलज्ञानस्य, सद्ध्यानज्ञानात् केवलध्यानस्य श्रेयस्त्वायोगरूपोपपत्त्या अज्ञानपूर्वाद् अभ्यासादज्ञानं केवलज्ञानात् सज्ज्ञानध्यानं श्रेय इत्यर्थो लब्ध इत्युपपत्त्या लब्धमित्युक्तम् ।। अन्यथा इति भाष्यानुवादः,ध्यानादाधिक्ये सति इति व्याख्या ।। प्रकृतोपयोगाय अनूद्यार्थमाह– **कर्मसन्न्यासादिति ।। वक्ष्यमाणेति ।।** उत्तरार्धे वक्ष्यमाणं यत्कर्मविरागत्यागाख्यं सर्वं ततोऽधिकमित्यर्थः ।। अफलाकाङ्क्षम् इत्यनेन त्यागपदेन वा एकार्थनिरासायाह– **विराग इति ।।**

**भावरत्नकोशः (सु.टि.)–** ननु श्रवणमननात्मकशास्त्राभ्यासात् तज्जन्यतत्त्वनिर्णयात्मकज्ञानस्य फलरूपत्वादाधिक्यं सिद्धमेव । तत्किमर्थं 'श्रेयो हि ज्ञानमभ्यासात्' इत्यत्राभ्यासपदं विशेषपरतया भाष्ये व्याख्यायते इत्याशङ्क्य व्याख्यानबीजमाक्षेपं प्रदर्शयति– **ननु ज्ञानमभ्यासस्येति ।।** ज्ञानं श्रवणमननजन्यपरोक्षतत्त्वनिश्चयः । अभ्यासो नाम शास्त्राभ्यासः, उपासनापरपर्यायः । 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी' इत्युक्तेः । स च द्विविधः श्रवणमननजन्यतत्त्वज्ञानपूर्वभावी तदुत्तरभावी चेति । तत्राद्यः श्रवणमननरूपः । तथा च तत्वप्रकाशिका– 'यामाहुः श्रवणमनने' इति । द्वितीयो निदिध्यासनावान्तरलक्षणः ।

श्लोकः ११,१२

'.... निदिध्यासनया भवेत् ।

द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम्· । एकं ध्यानं हरेरन्यत् ...'

इति तन्त्रसारसङ्ग्रहवचनात् । अत्र च द्वितीय एवाभ्यासशब्देन ग्राह्यः । तथा च ज्ञानमभ्यासस्य साधनमिति युज्यत इति ज्ञातव्यम् । कथमिति न हि फलात् साधनं श्रेय इति भावः । 'केवलाभ्यासात्' इत्युपरितनवचनानुसारेणाह– **एवेति केवलमिति** ।। ध्यानं विना कृतमित्यर्थः । ज्ञानपूर्वः ज्ञाननिष्पन्नः, स न भवतीति अज्ञानपूर्वः, तस्मादिति भाष्यार्थः ।

ननु श्रवणजन्यतत्त्वज्ञानाद् ध्यानस्योत्तमत्वं सिद्धमेव । अपरोक्षज्ञानान्तरङ्गत्वात् । तत्कुतो भाष्ये ज्ञानध्यानशब्दौ विशेषपरौ व्याख्यायेते इत्यतस्तन्निवर्त्यशङ्कां दर्शयति– **ज्ञानाद्ध्यानं विशिष्यत इत्यसदिति** ।। ज्ञानमात्रस्य ध्यानादधमत्वम्, तस्यैव तस्मादुत्तमत्वं चायुक्त-मित्यर्थः । अधमत्वायोगे युक्तिमाह– **सध्यानस्यापीति** ।। अत्र सर्वत्र ज्ञानशब्देन श्रवण-मननजन्यतत्त्वनिर्णयो ग्राह्य इत्युक्तमेव । उत्तमत्वायोगे युक्तिमाह– **अज्ञानपूर्वस्येति** ।। 'श्रवणमननसमकालीनस्य' इत्यर्थ इति आहुः ।

केचित्तु 'सध्यानस्यापि ज्ञानस्य सम्भवात्, अज्ञानपूर्वस्य ध्यानस्यासम्भवाच्च' इत्यपि पाठो दृश्यते, तत्र सध्यानस्य ध्यानासहितस्येत्यर्थः । ध्यानं च निरन्तरचिन्तनम् । तच्च ज्ञानमन्तरा न सम्भवत्येवेति भाव इति अपरे । केचित्तु 'ज्ञानमभ्यासस्य साधनम्' इत्यत्र ज्ञानशब्देन ध्यानप्रकारज्ञानं ग्राह्यम् । तच्च ज्ञानस्य साधनमित्यर्थः । भाष्ये 'अज्ञानपूर्वादभ्यासात्' इत्यत्र ध्यानप्रकारज्ञानशून्याद् ध्यानावृत्तिरूपाभ्यासादित्यर्थः । 'ज्ञानाद् ध्यानम्' इत्यत्रापि ध्यान-प्रकारज्ञानाद् ध्यानमित्यर्थः । तथा च षष्ठाध्याये न्यायदीपिका– 'सम्यग्ध्यानप्रकाराज्ञस्य ध्यानतो ध्यानप्रकारज्ञानमेवोत्तमम्, ध्यानप्रकारज्ञानसहितं ध्यानं ध्यानप्रकारज्ञानमात्रतोऽधिकम्' इति व्याचक्षते । तदभव्यम् । 'अभ्यासस्य साधनम्' इत्यत्राभ्यासपदास्वारस्यात् । अभ्यास-पदस्य ध्यानावृत्तिपरत्वे च 'तदभावे चाभ्यासयोगेन मां जानीहि' इति न्यायदीपिकाविरोधः । नहि ध्यानावृत्त्या भवदभिमतं ध्यानप्रकारज्ञानं भवति । 'ज्ञानं ध्यानस्य साधनम्' इति टीकावाक्यविन्यासापातः । शास्त्राभ्यासेऽभ्यासशब्दस्येव ध्यानावृत्तौ तस्याप्रयोगाद्, ध्यानाभि-प्रायकत्वे 'श्रेयो हि ज्ञानमाध्यानात्' इति गीतापाठापत्तिश्चेति अपरे । भावप्रदीपिकायाम् ज्ञानेन सम्भवतोऽभ्यासस्य कथं ज्ञानसाधनत्वमुच्यते । ध्यानसाध्यज्ञानस्य च कथं तदवमत्वं 'श्रेयो

हि' इत्यनेनोच्यते इत्येतत् सप्रमाणकं व्याचष्टे– 'अज्ञानपूर्वादभ्यासादिति' इत्यादिभाष्यमवतारितम् ।

**उपपत्तिलब्धमिति** ।। ज्ञानध्यानशब्दयोः सामान्यपरत्वाभावे या उपपत्तिरभिहिता तया लब्धं ज्ञानमात्रात् सज्ञानध्यानमित्यर्थः । पदानां व्यवहितत्वाद् विवक्षितमन्वयं दर्शयति– **तत्सहितमित्यादि** । 'कस्य स्तुतिरिति न ज्ञायते' इत्यतोऽन्वयप्रतियोगिप्रदर्शनपूर्वं स्तुतिशब्दार्थमाह– **त्यागस्य प्रशस्तत्वमेवेति** ।। **एतत्** 'कर्मपरमः' इति प्रकृतं कर्म । 'कर्म कर्तुमशक्तः' इति सम्बन्ध इत्यभिसन्धानेन 'कर्तुम्' इत्यन्तमुपात्तम् । **प्रत्यवरे** अत्यधमे । 'अन्यथा' इत्यनुवादः, 'ध्यानाधिक्ये सति' इति व्याख्या । ननु सन्न्यासकर्मयोगयोर्मध्ये कर्मसन्न्यासात् कर्मानुष्ठानविषये द्वेषादिवर्जनरूपात् कर्मयोगः भगवदर्पणबुद्ध्या कर्मानुष्ठानलक्षणो विशिष्ट इत्येवमेतस्य वचनस्य पञ्चमे व्याख्यातस्य कथं प्रकृतार्थप्रत्यायकत्वम् इत्याशङ्क्य प्रकृतोपयोग्यर्थान्तरमाह– **कर्मफलरागसन्न्यासादिति** ।। सन्न्यासः त्यागः, कर्मयोगः भगवदर्पणबुद्ध्या कर्मानुष्ठानं विशिष्यत इत्युक्तिमात्रेण प्रकृतार्थस्य ध्यानयोगोत्तमत्वस्यालाभात् तद्घटनायाह– **किमुत ध्यानयोग इति** ।। **वक्ष्यमाणेति** ।। उत्तरार्धे कर्मविरागत्यागानां वक्ष्यमाणत्वात् तदपेक्षया ध्यानमधिकमित्यर्थः । सम्बुद्धिभ्रान्तिनिरासायाह– **परमात्मनीति** ।। 'कर्माफलाकाङ्क्षम्' इत्यनेन अपौनरुक्त्यायाह– **शोभनाध्यासाभाव इति** ।। अशोभने विषये शोभनत्वभ्रान्ती रागः, विशब्दश्च नञर्थः । नञश्चाभावोऽर्थ इति भावः । 'न ध्यानकलाफलार्हा' इति भाष्यस्य, ध्यानस्य या कला, तस्याः यत्फलम्, तदपि कर्मविरागत्यागापादयितुमर्हन्तीत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ।। **अभ्यासः** ध्यानम् । **तत्कथमिति** ।। न हि फलात् साधनं श्रेय इति भावः । **एवेति केवलमिति** ।। ध्यानप्रकारमज्ञात्वा कृताद् अभ्यासाद् ध्यानाद् ज्ञानमेव केवलम् ध्यानप्रकारज्ञानमेव विशिष्यत इत्यर्थः । अत्र सर्वत्रापि ज्ञानशब्देन ध्यानप्रकारज्ञानमेव विवक्षितमिति ध्येयम् । ननु 'ज्ञानमात्रात् सज्ञानं ध्यानम्' इति भाष्येण 'ज्ञानाद्ध्यानं विशिष्यते' इत्यत्रत्ययोर्ज्ञानध्यानशब्दयोः किमिति विशेषपरत्वमुच्यते इत्यतः तन्निवर्तनीयामाशङ्कामाह– **ज्ञानाद्ध्यानमितीति** ।। असद् बाधितार्थकमित्यर्थः । कुत इत्यत आह– **सध्यानस्यापीति** ।। केवलज्ञानवत् सध्यानस्यापि ज्ञानस्य पुरुषविशेषे सम्भवेन सामान्यवाचकज्ञानशब्दस्य सध्यानज्ञानपरत्वे, ततः केवलस्य ध्यानस्योत्तमत्वासम्भवादिति भावः ।

श्लोकः ११,१२

नन्वस्तु तर्हि अत एव बाधकाद् ज्ञानशब्दः केवलज्ञानपर इति चेत् तथाप्यनुपपत्तिरित्याह– **अज्ञानपूर्वस्येति** ।। कस्मिंश्चित्पुरुष इत्यर्थः । ततश्च सामान्यवाचकध्यानशब्दस्य अज्ञान-पूर्वध्यानपरत्वे 'अज्ञात्वा ध्यायिनो ध्यानात् ज्ञानमेव विशिष्यते' इत्यज्ञानिध्यानतः केवल-ज्ञानस्यैवोत्तमत्वप्रतिपादकप्रमाणविरोधेन ज्ञानपूर्वध्यानस्य केवलज्ञाना-दुत्तमत्वासम्भवादिति भावः ।

**उपपत्तिलब्धमिति** ।। पूर्वोक्तान्यथानुपपत्तिरूपोपपत्त्या 'ज्ञानाद्ध्यानम्' इत्यत्र ज्ञान-शब्दस्य केवलज्ञानपरत्वम्, ध्यानशब्दस्य सज्ञानध्यानपरत्वं लब्धमित्यर्थः । **प्रत्यवरे** अत्यन्तनीचे इत्यर्थः । **ध्यानादाधिक्ये सति** कर्मफलत्यागस्येत्यर्थः । 'कथमुपदिश्येत' इत्यन्वयः । **नीचत्वाभिप्रायेण** 'अन्ते' इति शेषः । किन्तु 'अभ्यासयोगेन' इत्यतः पूर्वं त्यागस्योपदेशः स्यादिति भावः । 'तयोस्तु कर्मसन्यासात्' इति वाक्यं प्रकृतोपयोगितया व्याचष्टे– **कर्मफलरागसन्यासादिति** ।। **कर्मयोगोऽपीति** ।। ध्यानात्प्रत्यवरोऽपीत्यर्थः । **वक्ष्यमाणेति** ।। 'कर्माफलाकाङ्क्षम्' इत्यत्रेत्यर्थः । 'अफलाकाङ्क्षम्' इत्यनेनैकार्थ्यपरिहाराय विरागशब्दार्थमाह– **शोभनेति** ।। 'विषयेषु' इति शेषः ।

**भावप्रकाशः (कृ.टि.)–** ननु श्रवणमननात्मकशास्त्राभ्यासात् तज्जन्यतत्त्वनिर्णयात्मक-ज्ञानस्याधिक्यं सिद्धमेव । तत्किमर्थं श्रेयो हि ज्ञानमभ्यासादित्यभ्यासपदं विशेषपरतया भाष्ये व्याख्यातमित्याशङ्क्य व्याख्यानबीजमाक्षेपं दर्शयति– **ननु ज्ञानमिति** ।। श्रवणमननजन्य-स्तत्त्वनिर्णय इत्यर्थः । अभ्यासो नाम शास्त्राभ्यासः । स द्विविधः । श्रवणमननजन्यतत्त्व-ज्ञानपूर्वभावी तदुत्तरभावी च । आद्यः श्रवणमननरूपः । 'यामाहुः श्रवणमनने' इति तत्त्वप्रकाशिकोक्तेः । अन्त्यो निदिध्यासनावान्तररूपः ।

> '.............निदिध्यासनया भवेत् ।
> द्विविधा सा च सम्प्रोक्ता विष्णुशास्त्रावमर्शनम् ।
> एकं ध्यानं हरेरन्यच्चत्वार्यङ्गानि तत्र च'

इति तन्त्रसारोक्तेः । तत्रान्त्यः 'अभ्यासस्य' इत्यनेन ग्राह्यः । एवञ्च ज्ञानस्याभ्यास-हेतुत्वलाभ इति बोध्यम् । ननु श्रवणादिजन्यतत्त्वज्ञानाद्ध्यानस्योत्तमत्वं सिद्धमेव । तत्कुतो भाष्ये ज्ञानध्यानशब्दयोः विशेषपरत्वव्याख्यानमित्यतस्तन्निवर्त्यशङ्कामाह– **ज्ञानात् ध्यान-मितीति** ।। ज्ञानसामन्यस्याधमत्वं ध्यानसामान्यस्योत्तमत्वं चायुक्तमित्यर्थः ।

अधमत्वायोगे हेतुमाह– **सध्यानस्यापीति** ।। अत्र सर्वत्र ज्ञानशब्देन श्रवणमनन-जन्यतत्त्वनिर्णयो विवक्षित इत्यवधेयम् । उत्तमत्वायोगयुक्तिमाह– **अज्ञानपूर्वस्येति** ।। श्रवणादिसमकालध्यानस्येत्यर्थः । अन्ये तु । **ज्ञानमभ्यासस्येति** ।। ध्याप्रकारज्ञानं ध्यानस्य साधनमित्यर्थः । भाष्ये 'अज्ञानपूर्वादभ्यासात् ' इत्यस्य ध्यानप्रकारज्ञानशून्याद्ध्यानादित्यर्थः । **ज्ञानाद्ध्यानमिति** ।। ध्यानप्रकारज्ञानात् ध्यानमित्यर्थः । **एवं ज्ञानस्येति** ।। 'अज्ञानपूर्वस्य' इत्यपि व्याख्येयम् । तदुक्तं न्यायदीपिकायां षष्ठे । सम्यग्ध्यानप्रकारज्ञानस्य ध्यानतो ध्यानप्रकारज्ञानमेवोत्तमम् । ध्यानप्रकारमानसहितध्यानं ध्यानप्रकारमात्रतोऽधिकमिति ततो युक्तमुक्तमित्याहुः ।।

**उपपत्तीति** ।। ज्ञानध्यानशब्दयोः सामान्यपरत्वाभावे या युक्तिरुक्ता तल्लब्धं ज्ञानमात्रात् सज्ञानं ध्यानमित्यर्थः । ननु स्तुत्यर्थवादत्वेऽपि आप्तोक्तगीतायाः कथं प्रामाण्यं प्रतीतार्थ-बाधादित्यत आह– **त्यागस्येति** ।। तथाच लक्ष्यार्थे प्रामाण्यमिति भावः । प्राशस्त्य-लक्षणाप्रकारश्च प्रागेवोपपादितः । ननु कर्मसंन्यासो नाम यदि कर्माननुष्ठानं तदा 'ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति' गीताविरोधः इत्यत आह– **कर्मफलरागेति** ।। 'अफलाकाङ्क्षम्' इत्यनेन पुनरुक्तिनिरासायाह– **शोभनेति** ।।

## भाष्यम्

**वाक्यसाम्येऽप्यसमर्थविषयत्वोक्तेस्तात्पर्याभावः इतरत्र प्रतीयते । ध्यानादिप्राप्तिकारणत्वाच्च त्यागस्तुतिर्युक्ता ।**

भावप्रदीपिका (प.टी.)– ननु 'तयोस्तु कर्मसंन्यासात्' 'ध्यानात् कर्मफलत्यागः' इत्यनयोर्वचनत्वाविशेषात् कथमेकेनान्यस्य स्तुतिपरत्वकल्पनम् ? इत्यत आह– **वाक्येति** । इतश्चास्य स्तुतिपरतैवेत्याह । ननु त्यागस्योक्तगुणाभावे स्तुतिरपि कथं युक्ता इत्याशङ्क्याह– **ध्यानादिति** । ध्यानात् कर्मफलत्यागग्रहणे ध्यानादाधिक्यं न युक्तमेवेत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ननु 'तयोस्तु' इति 'सर्वाधिकम्' इति च द्वयोरपि वाक्यत्वात् कथं तद्विरोधेन 'ध्यानात्' इति वाक्यस्य स्वार्थे तात्पर्याभावः व्याख्यातः?

श्लोकः ११,१२

इत्यत आह– **वाक्येति ।।** वाक्यत्वेन साम्येऽप्युपपत्तिसाहित्येन प्राबल्यादित्यर्थः । **इतरत्र** 'ध्यानात्' इति वाक्यस्य प्रतीतेऽर्थे ।। युक्त्यन्तरं चाह – **ध्यानादीति ।।** त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन 'परीक्ष्य लोकान्' इत्यादावुच्यते । नच फलात्साधनं श्रेयः । अतोऽपीयं स्तुतिरेवेत्यर्थः । अनेन लक्ष्यार्थोऽपि निष्कृष्योक्तो भवति ।

**भावबोधः (र.टि.)– ।। उपपत्तिसाहित्येनेति ।।** कर्मफलत्यागोपदेशस्य ध्यानप्रत्यवरकर्मयोगासमर्थपुरुषविषयत्वोक्त्यन्यथानुपपत्तिरूपात् ध्यानात् कर्मफलत्यागस्य अवरत्वसाधिकया उपपत्त्या साहित्येनेत्यर्थः । **लक्ष्यार्थ इति ।।** प्रशस्तत्वरूपो लक्ष्यार्थः ।

**भावदीपः (रा.टि.)– ।। उपपत्तीति ।।** अन्यथा कथम् असमर्थोसीत्युच्येत इत्यत्रोक्तोपपत्तिसाहित्येनेत्यर्थः ।। **अनेनेति ।।** 'ध्यानादिप्राप्ति' इत्यादिभाष्येण प्रशस्तत्वरूपो लक्ष्यार्थः, ध्यानादिप्राप्तिकारणत्वेनेति निष्कृष्योक्तो भवतीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। उपपत्तिसाहित्येनेति ।।** ध्यानात् प्रत्यवरे कर्मयोगेऽप्यशक्तस्य कर्मफलत्यागः कथं ध्यानादाधिक्ये सत्युपदिश्येत' इति या कर्मफलत्यागस्य ज्ञानादधमत्वस्याधिका युक्तिरुक्ता, तत्साहित्येनेत्यर्थः । इदं च 'असमर्थविषयत्वोक्तेः' इत्यस्य तात्पर्यकथनम् । 'इतरत्र' इत्यनुवादः, 'ध्यानात्' इत्यादि व्याख्या । भाष्यस्थादिपदार्थोक्तिः– **ज्ञाननिवृत्तकर्मेति ।।** इयं 'ध्यानात् कर्मफलत्यागो विशिष्यते' इत्युक्तिः । **अनेन** 'ध्यानादिप्राप्तिकारणत्वेन' इति भाष्येण **लक्ष्यार्थः** 'ध्यानात् कर्मफलत्याग इति तु स्तुतिः' इति प्रशस्तत्वं लक्ष्यत इत्युक्तः । प्रशस्तत्वं च गुणवत्त्वं गुणश्च ध्यानादिप्राप्तिकारणत्वरूप इति निष्कृष्योक्त इत्यर्थः ।

**भावदीपिका (श्री.टि.)– ।। उपपत्तिसाहित्येनेति ।।** ध्यानात् कर्मफलत्यागस्यावरत्वसाधिकया कर्मफलत्यागोपदेशस्य ध्यानप्रत्यवरकर्मयोगासमर्थपुरुषविषयत्वोक्त्यन्यथानुपपत्तिरूपोपपत्त्या सहितत्वेनेत्यर्थः । **युक्त्यन्तरं चेति ।।** चशब्दोऽन्यथाऽनुपपत्तिरूपयुक्तिसमुचयार्थः । **त्यागो हीति ।।** त्यागानन्तरं निवृत्तकर्मानुष्ठानेऽन्तःकरणशुद्धिवैराग्यद्वारा ज्ञानोत्पत्तौ सत्याम् अनन्तरं ध्यानमिति क्रमोऽत्र द्रष्टव्यः । **लक्ष्यार्थ इति ।।** 'ध्यानात् कर्मफलत्याग इति च स्तुतिः' इत्यनेन प्रशस्तत्वरूपो यो लक्ष्यार्थ उक्तः स ध्यानादिकारणत्वरूप इति निष्कृष्योक्त इत्यर्थः । ध्यानादिकारणत्वेन प्रशस्तत्वमित्याशयः ।

**भावप्रकाशः (कृ.टि.)– ।। उपपत्तीति ।।** कर्मफलत्यागोपदेशस्य ध्यानाधमकर्मयोगा-समर्थपुरुषविषयत्वोक्त्यन्यथानुपपत्तिरूपा या कर्मफलत्यागस्य ध्यानाधमत्वसाधिकोपपत्तिः तत्साहित्येनेत्यर्थः । **लक्ष्यार्थ इति ।।** ध्यानात् कर्मफलत्याग इत्यनेन प्रशस्तत्वं लक्ष्यत इत्युक्तम् । प्रशस्तत्वं नाम गुणवत्त्वम् । स च गुणो ध्यानादीति वाक्येन ध्यानादि-प्राप्तिकारणत्वरूप तथानिष्कृष्योक्त इत्यर्थः ।

## भाष्यम्

**केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम् । ध्यानयुक्तत्याग एव चात्रोक्तः । अन्यथा कथं त्यागाच्छान्तिरनन्तरम् उच्यते? कथं च ध्याना-दाधिक्यम्? तथाच गौपवनशाखायाम् 'ध्यानात्तु केवलात् त्यागयुक्तं तदधिकं भवेत्' इति ।**

भावप्रदीपिका (प.टी.)– ननु तर्हि त्यागोनमित्येव वक्तव्यम्, ध्यानत्यागयो-र्ध्यानस्यैव प्राधान्यादित्यत आह– **केवलेति ।** एवमप्यर्थे केवलत्यागग्रहणं स्तुतिरेव भवति । यथा भृत्येन युक्तो राजा जेता इत्युक्ते राज्ञः प्राधान्येऽपि भृत्यस्तुतिरेव भवति । तथैवेत्यर्थः । केवलत्यागग्रहणे स्तुतिपरध्यानादिकारणत्वगुणेनेत्युक्तम् । इदानीमर्थान्तरोक्तौ गुणान्तरेणापि स्तुतिर्युक्तेति वा आह– **केवलेति ।।**

प्रमेयदीपिका (ज.टी.)– प्रकारान्तरेण व्याख्याति– **केवलेति ।।** त्यागरहितात् ध्यानात् ।। ननु कुतो 'ध्यानात्' इति केवलस्य निर्धारणम्, कुतश्च कर्मफलत्यागः इति तत्सहितध्यानलक्षणा । त्यागस्य वा ध्यानसाहित्येनोपस्कार इत्यतः प्रतिज्ञापूर्वकमाह– **ध्यानेति ।।** त्यागयुक्तं ध्यानं ध्यानयुक्तः त्याग इति द्विविधोक्त्योक्तं प्रकारद्वयं सूचयति । **अन्यथा** केवलत्यागाङ्गीकारे ।। 'कथं च' इत्यत्रापि 'अन्यथा' इति वर्तते । न केवलमन्यथाऽनुपपत्त्याऽयमर्थः सिद्धः । किं तर्हि श्रुत्याऽपीत्याह– **तथा चेति ।।** आद्यामन्यथाऽनुपपत्तिमुपपादयति– **न हीति ।।** 'ततश्च आपरोक्ष्यम्' इत्युक्तश्रुति-विरोधादिति भावः । उक्ताङ्गीकारे कथमेतदनुपपत्त्यभाव इत्यत आह– **भवति चेति ।।** त्यागादिति सम्बन्धः । ज्ञानमात्रव्यवधानेति भावः । द्वितीयानुपपत्तिस्तु 'तयोस्तु' इत्युपपादितैव ।।

श्लोकः ११,१२

**भावबोधः (र.टि.)– ।। ध्यानादिकारणत्वरूप इति ।।** निष्कृष्योक्त इत्यर्थः । **प्रकारद्वयमिति ।। त्यागयुक्तं ध्यानमिति ।।** ध्यानस्य विशेष्यत्वेन प्रधानतया त्यागशब्द-लक्ष्यत्वसूचनेन लक्षणपक्षं ध्यानयुक्तस्त्याग इति ध्यानस्य विशेषणतया प्राधान्यसूचनेनोपस्कार-पक्षं सूचयतीत्यर्थः ।। १२ ।।

**भावदीपः (रा.टि.)– ।।** 'ध्यानात् कर्मफलत्यागः' इति गीतायां 'ध्यानात्' इत्यस्य केवलाद् ध्यानात् इति, 'त्यागः' इत्यस्य ध्यानयुक्तत्याग इति कुतो ज्ञायते इति शङ्कते– **ननु कुत इति ।। द्विविधोक्त्येति ।।** भाष्ये प्रमाणे च मिलित्वेति भावः **।। उक्तमिति ।।** अवतारिकायां स्वेनोक्तमित्यर्थः ।। **अन्यथा** इत्यनुवादः, **केवल** इत्यादि व्याख्या ।। **अन्यथाऽनुपपत्त्येति ।।** त्यागाच्छान्त्युक्त्यन्यथानुपपत्त्या ध्यानादाधिक्यानुपपत्त्या चेत्यर्थः ।। **इत्युक्तेति ।।** प्रागुदाहृतश्रुतीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रकारान्तरेणेति ।।** 'स्तुतिः' इति पूर्वं स्तावकत्व-रूपेणैकेन प्रकारेण 'ध्यानात् कर्मफलत्यागः' इति वचनं व्याख्यातम् । इदानीम् **अन्येनापि** 'केवलात् त्यागरहिताद् ध्यानात् त्यागः ध्यानयुक्तत्यागोऽधिकः' इति प्रकारेण व्याख्या-तीत्यर्थः । **कुत इति ।। ध्यानशब्दस्य** ध्यानसामान्यवाचिनः 'त्यागरहितात् ध्यानात्' इति विशेषविषयत्वनिश्चयः कस्माद्धेतोरित्यर्थः । 'कर्मफलत्याग इति' इत्यनन्तरम् 'अत्र त्याग-शब्देन' इति शेषः । लक्षणाबीजसम्बन्धप्रदर्शनाय– **'तत्सहित' इत्युक्तम्** । फलत्याग-सहितेत्यर्थः । **उपस्कारः** ध्यानयुक्तत्याग इति विशेषणम् । **प्रकारद्वयमिति ।।** त्यागशब्देन 'त्यागसहितध्यानलक्षणः' इत्येवमेकः प्रकारः, 'ध्यानयुक्तत्यागः' इति त्यागस्य ध्यानयुक्तत्वरूप उपस्कार इत्यपरः प्रकार इति प्रकारद्वयम् । त्यागशब्दव्याख्यानप्रकारद्वयमित्यर्थ इति आहुः । **केवलत्यागाङ्गीकारे** ध्यानं विना त्यागाङ्गीकारे । **अन्यथानुपपत्त्या** 'अन्यथा कथम्' इत्यादि-भाष्योक्त्या, त्यागाच्छान्त्युक्त्यन्यथानुपपत्त्या, ध्यानादाधिक्योक्त्यन्यथानुपपत्त्या च । **आद्याम्** 'अन्यथा कथम्' इत्युक्ताम् । त्यागानन्तरमेव मुक्तिः कुतो न भवति इत्यतोऽत्र भाष्य-काराभिप्रेतं हेतुमाह– **ततश्चेति ।।** 'ततश्चापरोक्ष्यम्, ततः शान्तिर्भविष्यति' इत्यनुपदमेवोक्त-श्रुतिविरोधादित्यर्थः । **उक्तार्थाङ्गीकारे** 'केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम्' इत्यर्थाङ्गी-कारे ।। **इति सम्बन्ध इति ।।** 'कथं त्यागाच्छान्तिः' इति पूर्वभाष्यगतस्य 'त्यागात्' इत्यस्य

'ध्यानयुक्तात्' इत्यत्र विशेष्यतया सम्बन्ध इत्यर्थः । **प्रकरणवशप्राप्तस्य** 'त्यागात्' इत्यस्य 'संयोजनम्' इत्यर्थ इति अन्ये ॥

ननु ध्यानयुक्तत्यागस्य मोक्षसाधनत्वभाषणमयुक्तम् ।'ततश्चापरोक्ष्यं, ततः शान्तिः' इत्युदाहृतश्रुतौ ध्यानानन्तरभाव्यपरोक्षज्ञानसाध्यत्वावेदनात् शान्तेः, इत्यत आह– **ज्ञानमात्रेति** ॥ 'न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इति वचनादिति भावः । **द्वितीया** 'कथं च ध्यानादाधिक्यम्' इत्युक्ता । **तयोस्त्वितीति** ॥ 'तयोस्तु कर्मसन्न्यासात् कर्मफलरागन्यासात् कर्मयोगो विशिष्यते, न ध्यानयोगः' इति प्रमाणोदाहरणेन उपपादिता इत्यर्थः ।

**भावदीपिका (श्री.टि.)**– ॥ **त्यागरहितादिति** ॥ सकामनया क्रियमाणादित्यर्थः । **केवलस्येति** ॥ त्यागरहितस्येत्यर्थः । येन 'केवलध्यानात्' इति व्याख्यायत इति भावः । **तत्सहितेति** ॥ त्यागमात्रे शक्तस्य त्यागपदस्य तत्सहितध्याने लक्षणा कुतः। येन 'फलत्यागयुक्तं ध्यानम्' इति व्याख्यायत इत्यर्थः । 'फलत्यागयुक्तं ध्यानम्' इति भाष्यस्य 'ध्यानयुक्तः कर्मफलत्यागः' इत्यप्यर्थस्याभिप्रेतत्वात् तदुपर्याशङ्कते– **त्यागस्य वेति** ॥ 'कुतश्च' इति वर्तते । **प्रकारद्वयमिति** ॥ 'त्यागयुक्तं ध्यानम्' इति ध्यानस्य विशेष्यत्वेन प्रधानतया त्यागपदलभ्यत्वसूचनेन लक्षणापक्षम्, 'ध्यानयुक्तस्त्यागः' इति ध्यानस्य विशेषणतया अप्राधान्यसूचनेनोपस्कारपक्षं च सूचयतीत्यर्थः । **केवलेति** ॥ केवलत्यागाङ्गीकारे त्यागाच्छान्त्युक्तिरयुक्तेत्यर्थः । **वर्तत इति** ॥ तथा च केवलत्यागस्य ध्यानादाधिक्योक्तिश्च न सम्भवतीति भावः । **अन्यथाऽनुपपत्त्येति** ॥ त्यागाच्छान्त्युत्त्यन्यथाऽनुपपत्त्या ध्यानादाधिक्योत्त्यन्यथानुपपत्त्या चेत्यर्थः । **ततश्चेति** ॥ 'ततश्चापरोक्ष्यम्, ततः शान्तिर्भविष्यति' इत्यनुपदम् उदाहृतश्रुतिविरोधादित्यर्थः ।

**उक्तार्थेति** ॥ ध्यानयुक्तत्यागेत्यर्थः । ननु ध्यानयुक्तत्यागादपि न शान्तिपदोदिता मुक्तिर्युक्ता । 'ततः शान्तिर्भविष्यति' इत्युदाहृतश्रुतिविरोधादेवेत्यत आह– **ज्ञानमात्रेति** ॥ अपरोक्षज्ञानेत्यर्थः । 'ततश्चापरोक्ष्यम्' इत्युक्तत्वादिति भावः । **द्वितीयेति** ॥ ध्यानादाधिक्योत्त्यन्यथाऽनुपपत्तिः । **उपपादितैवेति** ॥ 'अन्यथा कथमसमर्थोऽसीत्युच्यते इत्यनेन' इति शेषः ॥

**भावप्रकाशः (कृ.टि.)**– ध्यानं ततश्चापरोक्ष्यमिति प्रमाणविरोधादाह– **ज्ञानमात्रेति** ॥

श्लोकः ११,१२
द्वितीयेति ।। कथं च ध्यानादित्यनेनोक्तेत्यर्थः । तयोस्त्वितीति ।। 'तयोस्तु कर्मसंन्यासात्' इत्युदाहृतगीतावाक्येनेत्यर्थः ।। १२ ।।

## भाष्यम्

**नहि त्यागमात्रानन्तरमेव मुक्तिर्भवति । भवति च ध्यानयुक्तात् । केवलत्यागस्तुतिरेवमपि भवति । यथाऽनेन युक्तो जेता नान्यथेत्युक्ते ।।**

भावप्रदीपिका (प.टी.) ननु कथं केवलत्यागग्रहे 'त्यागाच्छान्तिः' इत्ययुक्तम्, तस्यापि मोक्षहेतुत्वात् इत्यत आह– **न हीति** । त्यागयुक्तध्यानाभ्युपगमेऽप्येतत्कुतो युक्तम् ? इत्यत आह–**भवति चेति** ।

**प्रमेयदीपिका** (ज.टी.)– ननु 'अथैतदप्यशक्तोऽसि' इत्यनेन केवलत्यागो विहितः। तत्प्ररोचनाय 'श्रेयो हि' इति तस्य स्तुतिरुपक्रान्ता । नच केवलध्यानात् तत्फलत्यागयुक्तं ध्यानमधिकमिति व्याख्याने केवलत्यागस्तुतिर्लभ्यते । किन्तु तद्युक्तस्य ध्यानस्यैव । अतः पूर्वसङ्गतत्वात् पूर्वमेव व्याख्यानं युक्तम् । नतु द्वितीय-मसङ्गतेरित्यत आह– **केवलेति ।।** यथा अनेन भृत्येन युक्तो राजा रिपूणां जेता नाऽन्यथा इत्युक्ते भृत्यस्य स्तुतिर्लभ्यते । तथैवमप्यस्मिन्नपि व्याख्याने केवल-त्यागस्तुतिर्युक्ता । ध्यानस्य ध्यानान्तराधिक्ये तत्साहाय्यस्य हेतुत्वेनोक्तत्वादित्यर्थः ।। १२-१५ ।।

**भावदीपः** (रा.टि.)– ।। **पूर्वसङ्गतत्वादिति** ।। 'अथैतत्' इति वाक्योक्तत्याग-विधिसङ्गतत्वात् **पूर्वं** प्राचीनमेव व्याख्यानं युक्तमित्यर्थः ।। **असङ्गतेरिति** ।। त्यागस्तुते-रप्राप्तेरिति भावः ।। **व्याख्यानेति** ।। येन केनचिदिति निमित्तोक्त्या तस्य व्याख्यानता-प्रतीतेरिति भावः ।। १२–१५ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **केवलत्याग इति** ।। 'सर्वकर्मफलत्यागं कुरु' इति तत्रैव श्रवणादिति भावः । **तद्युक्तध्यानस्यैव** त्यागयुक्तध्यानस्यैव । 'स्तुतिर्लभ्यते' इति वर्तते । पूर्वसङ्गतत्वात् । 'अथैतदप्यशक्तोऽसि तर्हि कर्मफलत्यागं कुरु' इति पूर्ववाक्योक्तत्यागप्ररोच-नार्थत्वेन सङ्गतत्वात् । 'ध्यानात् कर्मफलत्याग इति तु स्तुतिः' इति यत् पूर्वव्याख्यानं

तद्युक्तम् । ननु 'केवलं ध्यानात् कर्मफलत्यागयुक्तं ध्यानमधिकम्' इति द्वितीयं व्याख्यानम् । केवलत्यागप्ररोचनपरत्वायोगेनासङ्गतत्वादित्यर्थः । 'अनेन' इत्यत्र विशेष्यपूरणम्– **'भृत्येन'** **इति** । एवमपि इत्यनुवादः, 'अस्मिन्नपि' इति व्याख्या । **तत्साहाय्यस्य** त्यागसाहाय्यस्य ।। १२-१५ ।।

**भावदीपिका (श्री.टि.)– ।। विहित इति ।।** 'सर्वकर्मफलत्यागं ततः कुरु' इत्येवोक्तत्वादिति भावः । **तद्युक्तेति** ।। त्यागयुक्तेत्यर्थः । **पूर्वसङ्गतत्वादिति** ।। 'अथैतदप्यशक्तोऽसि' इति पूर्ववाक्यविहितकेवलत्यागप्ररोचकत्वेन सङ्गतत्वात्, 'ध्यानात् कर्मफलत्याग इति च स्तुतिः' इति च पूर्वव्याख्यानमेव युक्तम्, न तु 'केवलध्यानात् फलत्यागयुक्तं ध्यानमधिकम्' इति द्वितीयं व्याख्यानम् । केवलत्यागप्ररोचकत्वाभावेना-सङ्गतत्वात् इत्यर्थः । **ध्यानान्तरात्** त्यागरहितात् केवलध्यानात् । **तत्साहाय्यस्य** कर्मफलत्यागसाहाय्यस्य ।। १२-१५ ।।

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
## निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।। १३ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** 'ये तु सर्वाणि कर्माणि' इत्यादि प्रपञ्च्यते– **अद्वेष्टेत्याद्यष्टश्लोक्या ।।** 'सर्वभूतानाम्' इति कर्मणि षष्ठी । भगवदविरोधिषु भूतेषु स्वात्मनो व्यथाहेतुमपि न किञ्चिद् द्वेष्टि य सः तथा । सर्वाणि भूतानि दयनीयानि येषां ते सर्वभूताः, महान्तः तेषां महताम् अद्वेष्टा । 'उत्तमेष्वात्मनो नित्यं मात्सर्यं परिवर्जयेद्' इति शास्त्रात् । स्वोत्तमेषु अपराधहीन इत्यर्थ इत्यप्याहुः । मैत्रः मित्रस्येदं मैत्रं मित्रत्वम्, 'तदस्यास्ति' इति मत्वर्थीयोऽर्शआद्यच्, स्वसमेषु सत्सु स्वात्मनीव स्नेहवान् । करुणः अधमेषु दया करुणा, तद्वान् पूर्ववदच् । 'समेषु स्वात्मवत् स्नेहः सत्स्वन्यत्र ततो दया' इति शास्त्रम् । निर्ममः 'मम' इति ममत्वार्थकमव्ययम् । भगवदधीनेषु स्वगोत्रपुत्रकलत्रादिषु स्वकीयत्वाभिमानो ममत्वम्, तत् निर्गतं यस्मात् स तथोक्तः । निरहङ्कारः कर्तव्येषु कर्तृत्वाध्यासहीनः । अविद्य-मानानात्मगुणाभिमानः अहङ्कारः, तद्रहित इति स्वामिनः । समदुःखसुखः हेयतया दुःखसमं वैषयिकसुखं यस्य स तथा । अपकारिण्यपि क्रोधासमुत्थितिः । क्षमा सा अस्यास्तीति शिखादिभावात् इनौ क्षमी ।। १३ ।।

श्लोकः १४-१७

**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।। १४ ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु–** सन्तुष्टः यदृच्छालब्धेन योगी ध्यानरूप-ज्ञानोपायवान् यतात्मा निगृहीतचित्तः दृढनिश्चयः अप्रामाण्यशङ्काकलङ्करहिततत्त्वनिश्चयवान् । अर्पितमनोबुद्धिः 'बुध्यतेऽनया' इति बुद्धिर्वाक् । मानसं वाक् च मय्येव अर्पिते यस्य स तथा । मनःशब्देन मननम्, बुद्धिशब्देन मनोवृत्तिविशेषो निदिध्यासनं गृह्यत इत्यपि आहुः । मद्भक्तः च स मे प्रियः ।। १४ ।।

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो य स च मे प्रियः ।। १५ ।।**

**भावरत्नकोशः(सु. टि.)– गीताक्षरार्थस्तु–** किञ्च, 'यस्मात्' इति 'भीत्रार्थानां भयहेतुः' इत्यपादानता । नोद्विजते उद्वेगं न प्राप्नोति । 'हर्षमर्षभयोद्वेगैः' इत्यत्र हर्षः प्रियलाभे अन्तःकरणस्योन्नाहः । अमर्षः असहिष्णुता, भयं त्रासः, उद्वेगः मनोवैकल्यम्, तैर्मुक्तः, चशब्दात् 'भक्तश्च' इति समुच्चीयते ।। १५ ।।

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।। १६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** अपि च अनपेक्षः काम्यकर्मफलाभि-लाषरहितः शुचिः बाह्याभ्यन्तरशुद्धिमान्, उदासीनः कर्तव्य उपकारे अपकारे वा उपेक्षाबुद्धिमान्, गतव्यथः परकृतापकारैरनवाप्तमनःपीडः, सर्वारम्भपरित्यागी सर्वेषां कर्मणाम् आरम्भं परित्यक्तुं शीलमस्यास्तीति तथा ।। १६ ।।

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ।। १७ ।।**

## भाष्यम्

**'सर्वारम्भपरित्यागी' इत्यादेः सामान्यविशेषव्याख्यानव्याख्येयभावेन**

**अपुनरुक्तिः । हर्षादिभिर्मुक्त इत्युक्ते कादाचित्कमपि भवतीति 'यो न हृष्यति' (१२.१७) इत्युक्तम् । उपचारपरिहारार्थं पूर्वम् ।।**

**भावप्रदीपिका** (प.टी.)– सर्वारम्भ...इत्यादौ प्रतीतपुनरुक्तिं परिहरति– **सर्वेति** । ननु यो न हृष्यति इत्यनेन सर्वदा हर्षाद्यभावसिद्धिश्चेत्, किं हर्षामर्ष... इति वाक्येन ? इत्यत आह– **उपचारेति** ।

**प्रमेयदीपिका** (ज.टी.)– पुनरुक्तिदोषमाशङ्क्य परिहरति– **सर्वेति** ।। 'सर्वारम्भ-परित्यागी','शुभाशुभपरित्यागी' इत्यादौ **सामान्यविशेषभावेन** ।। 'सन्तुष्टः सततं' 'सन्तुष्टो येन केनचित्' इत्यादौ **व्याख्यानव्याख्येयभावेन** ।। 'हर्षामर्षभयोद्वेगैर्मुक्तः', 'यो न हृष्यति' इत्यत्र नोक्तं प्रकारद्वयं सम्भवतीत्यत आह– **हर्षादिभिरिति** ।। निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीत्याशङ्क्य क्रियाप्रबन्धे विहितेन लटा प्रतिपादयतीत्यर्थः ।।

**भावबोधः** (र.टि.)– ।। **सामान्यविशेषभावेनेति** ।। शुभाशुभशब्दयोरारम्भविशेष-वाचकत्वादिति भावः । **व्याख्यानव्याख्येयभावेनेति** ।। 'येन केनचित्' इति निमित्तकथनेन पूर्वोक्तमेव सन्तुष्टत्वं व्याख्यायत इत्यर्थः । ननु 'अद्वेष्टा' इत्याद्युक्तद्वेषादिवर्जनादेः भगव-द्विषयत्वासम्भवात् कथं तद्विषयमित्युक्तमित्यत आह– **तदुपासनाङ्गत्वादिति** ।। १६ ।।

**भावदीपः** (रा.टि.)– ।। **क्रियाप्रबन्ध इति** ।। तृतीयाध्यायतृतीयपादे 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति सूत्रम् । तस्यार्थः– भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विवक्षितौ । तयोः प्रतिषेधः क्रियते । अनद्यतने च प्रत्ययविधिर्न भवति । क्रियाप्रबन्धे सामीप्ये च गम्यमाने क्रियाणाम् । प्रबन्धक्रिया क्रियाप्रबन्धः । सातत्येनानुष्ठानं कालानाम्, सामीप्यं तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भद्रमन्नमदात्, यावज्जीवं भृतः अन्नं दास्यति, यावज्जीवं युक्तः अध्यापिपत्, यावज्जीवं युक्तो अध्यापयिष्यति । सामीप्ये तु 'येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनादधीत । 'सोमेनायष्ट । स ग्राममदादधिपतये यममावास्यागामिना एतस्या यक्ष्यति असङ्गां दास्यति उपाध्यायः अग्निना दास्यति सोमेन अग्निना अधीते इत्यादीन्युदाहरणानि ।। अद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्येव वक्तव्ये नानद्यतनवदिति चेति द्वौ प्रतिषेधौ प्राप्तस्याप्यनुज्ञानायेत्युक्तम् । 'भूतभविष्यानद्यतनवत् प्रत्ययौ न भवतः' इत्युक्त्या अद्यतने लटः

श्लोकः १४-१७

अप्रतिषेधात् क्रियाप्रबन्धे लडित्युक्तम् । तथा च हृष्यतीति सन्ततहर्षवान् इत्यर्थो भवतीति भावः ।। **अपव्याख्यां** 'हृष्यति' इत्युक्त्या अद्यतनो हि ईश्वरः उपासकानाम् इति ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। क्रियाप्रबन्धे लडिति ।।** तृतीयाध्यायतृतीयपादीये 'नानद्यतनवत् क्रियाप्रबन्धे सामीप्यां अद्यतनवद्वचने हि विधानम् । तत्र लडवधिप्रसङ्गः । 'लुङ् लृटोश्च यथाकालम्' इत्यादिना नञ्द्वयप्रयोजनप्रतिपादकवार्तिके क्रियासातत्यानुष्ठानरूपक्रिया-सम्बन्धे द्योत्ये अनद्यतनवत्प्रत्ययान्निषिध्य भूतवर्तमानभविष्यदद्यतनप्रत्ययान् लुङ्लृट् एव स्वस्वकालप्राप्तानभ्यनुज्ञातुं नञ्द्वयमित्यर्थस्य प्रतिपादितत्वेन क्रियाप्रबन्धेन विहितेन लटा इत्युक्तमिति ध्येयम् ।। 'वर्तमाने लट्' इति सूत्रे 'नित्यवृत्ते च' इति निरन्तरं प्रवृत्तं मान-क्रियायां 'पर्वतास्तिष्ठन्ति आकाशस्तिष्ठति इत्यादि प्रयोगसिद्ध्यर्थं क्रियासातत्ये लट्विधानात् इत्यर्थ इति तु तत्वम् ।।

**भावरत्नकोशः (सु.टि.)–** ।। **व्याख्यानेति** ।। 'सन्तुष्टः सततं योगी' इत्यत्रोक्तः सन्तोषो न यादृशतादृशः, किन्तु येन केनचिद्दैवलब्धेन प्राप्त इति व्याख्यानभावेनापुनरुक्तिरिति व्याख्यातव्यमित्यर्थः । भूताधिकारे निष्ठाप्रत्ययानुशासनादिति भावेनोक्तम्– **अतीतत्वेति ।।**

**भावदीपिका (श्री.टि.)– ।। सामान्यविशेषेति** ।। शुभाशुभशब्दयोः आरम्भविशेष-वाचकत्वादिति भावः । **व्याख्यानेति** ।। 'येन केनचित्' इत्याधिक्योक्तेरिति भावः । **निष्ठेति** ।। 'क्तक्तवतू निष्ठा' इति सूत्रात् 'मुक्तः' इत्यत्रत्येन भूतार्थकक्तप्रत्ययेनेत्यर्थः । **कालान्तरे** वर्तमानकाले भविष्यत्काले चेत्यर्थः । ननु तर्हि 'न हृष्यति' इत्यादिलटा वर्तमानकालीन-निषेधलाभेऽपि, अतीतभविष्यत्कालयोः हर्षादिकं भविष्यतीति शङ्का स्यादेव? इत्यत उक्तम् – **क्रियाप्रबन्ध इति ।। क्रियाप्रबन्धः** क्रियासातत्यम् । तत्रार्थे नित्यप्रवृत्ते चेति वार्तिकविहितेन लटेत्यर्थः । तथा च 'मुक्तः' इत्यस्य 'सततं हर्षादिशून्यः' इत्यर्थो लभ्यत इति द्रष्टव्यम् ।

**भावप्रकाशः (कृ.टि.)– ।। परित्यागीत्यादाविति** ।। आदिपदाद् 'अद्वेष्टा समः शत्रौ च मित्रे च' इत्यादेः संग्रहः । **सन्तुष्टो येन केनचिदित्यादाविति** । आदिपदेन 'क्षमी, सम-दुःखसुखः' इति सङ्ग्रहः । **व्याख्यानेति** । 'येन केनचित्' इति निमित्तकथनाद् व्याख्यान-त्वम् । **अतीतत्वप्रतीत्येति** ।। भूताधिकारे निष्ठाप्रत्ययोक्तेरिति भावः ।। **क्रियाप्रबन्ध इति** ।। क्रियासातत्य इत्यर्थः । यथा तिष्ठन्ति पर्वताः स्रवन्ति नद्य इत्यादौ अवस्थानादेः

सदातनत्वेन भूतभविष्यत्वाभावात् तत्प्रतियोगिकवर्तमानत्वस्याप्यभाव इति वर्तमाने लडित्यस्याप्रवृत्तेर्नित्यप्रवृत्ते च कालाविभागादिति वार्तिकेन लट् तथेहापि हर्षस्य नित्यं विद्यमानत्वं हृष्यतीति लडिति भावः । वार्तिकार्थस्तु नित्यं विद्यमाने अवस्थानादिरूपव्यापारे भूतं भविष्यद्वर्तमानमिति कालविभागज्ञानाभावात् सदातनक्रियावाचकाद्धातोः लट् वाच्य इति बोध्यः । यद्यपीदं वार्तिकं प्रत्याख्यातम् । तथाऽपि नाञ्झलावित्यादिवच्छब्दव्युत्पादने एतदुपादानं न विरुद्धम् । प्रत्याख्यानपक्षेऽपि पर्वतादिकालीनराजादिस्थितिगतस्य प्रारब्धापरिसमाप्तत्वरूपवर्तमानत्वस्य पर्वतादावप्यारोपात् यथा नित्यप्रवृत्तेऽपि लट् तथैवात्रापीति न कश्चिद्दोषः ॥ १६ ॥

## भाष्यम्

**आधिक्यज्ञापनाय भक्त्यभ्यासः । 'ये तु सर्वाणि कर्माणि' (१२.६) इत्यादेः प्रपञ्च एषः ॥ १६,१७ ॥**

भावप्रदीपिका (प.टी.)– भक्तिमान् यः मद् भक्तः इत्यादिना बहुवारभक्त्युक्तेः कृत्यमाह– **आधिक्येति** । साधनेषु भक्तिरित्यर्थः । **अद्वेष्टा** इत्याद्यसङ्गतं साधनं किमुच्यते ? इत्यत आह– **ये तु इति** ॥ १६,१७ ॥

प्रमेयदीपिका (ज.टी.)– तर्हीदमेवास्तु किं तेन? इत्यत आह– **उपचारेति** ॥ सिद्धेऽर्थे वचनमुपचारं तात्पर्यद्योतनेन परिहरतीत्यर्थः । **'यो मद्भक्तः'** इति भक्तिः पुनः पुनरुच्यते । तत्प्रयोजनमाह– **आधिक्येति** ॥ **'अद्वेष्टा'** इत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेषः । **'अद्वेष्टा'** इत्यादेः सङ्गत्यदर्शनात् तामाह– **ये त्विति** ॥ प्रपञ्चः तदुपलक्षितस्याभिधानम् ॥ **'अक्षरोपासकानधिकृत्यैतदुच्यते'** इत्यसत् । सन्निहितसम्बन्धे सति व्यवहितसम्बन्धग्रहणायोगात् **'यो मद्भक्तः स मे प्रियः'** इत्यादिवचनाच्च ॥ १६,१७ ॥

भावदीपः (रा.टि.)– ॥ **एतदिति** ॥ **अद्वेष्टा** इत्यादिकमित्यर्थः । **सन्निहितेति** ॥ **येन सर्वाणि** इति भगवद्रूपकाः सन्निहिताः तैर्व्यवहिताः 'ये त्वक्षरम्' इत्यक्षरोपासका इति भावः ॥ **इत्यादिवचनाच्च** । इत्यस्य 'इत्यसत्' इत्यनेनान्वयः ॥ १६ ॥

श्लोकः १७

**भावरत्नकोशः (सु.टि.)**– ।। **तर्हीति** ।। 'यो न हृष्यति' इत्यनेन सर्वदा हर्षाद्यभावसिद्धिर्यदि तर्हीत्यर्थः । **इदं** 'यो न हृष्यति' इति वाक्यम् । **तेन** 'हर्षामर्ष...' इति वाक्येन । **सिद्धेऽर्थे** सदातनहर्षाद्यभावे लटा प्रतिपादितेऽपि । **वचनम्** 'हर्षामर्षा' इति हर्षाद्यभाववचनम् । **यो मद्भक्त इतीति** ।। अत्र 'इति'शब्दः आद्यर्थे 'भक्तिमान् यः' इति द्विरभिधाने, 'भक्तिमान् मे प्रियः' इत्यत्र चेत्यर्थः । कस्य किंप्रतियोगिकम् आधिक्यमिति न ज्ञायत इत्यतः तत्स्फोरणाय शेषमाह– **अद्वेष्टेतीति** ।। **तदुपलक्षितस्येति** ।। 'ये तु सर्वाणि कर्माणि' इत्यत्र यत् सर्वकर्मसन्न्यासपदेन, मत्परपदेन, 'मां ध्यायन्तः' इत्यनेन चोक्तं साधनं नैतावतैव पर्याप्तम् । किन्त्वन्यदपि उक्तपदैरुपलक्षणया ग्राह्यमिति भावेन 'अद्वेष्टा' इत्यादिना तदभिधत्त इति युक्तं 'प्रपञ्चः' इति भाषणमिति भावः । भाष्ये 'एषः' इत्यस्य 'अद्वेष्टा' इत्यादिश्लोकसन्दर्भ इत्यर्थः ।

यत्तु अत्र शङ्करः– अक्षरोपासकानां सम्यग्दर्शननिष्ठानां सन्न्यासिनां त्यक्तसर्वैषणानां 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षादमृतत्वसाधनं वक्ति– भगवान् इति 'अद्वेष्टा' इत्यादेः सङ्गतिमभ्यधत्त, तदसदिति भावेनाह– **अक्षरोपासकानिति** ।। निर्गुणब्रह्मोपासकानित्यर्थः । **एतत्** 'अद्वेष्टा' इत्यादिनोक्तं साधनजातम् । **सन्निहितेति** ।। 'ये तु सर्वाणि कर्माणि मयि सन्न्यस्य' इति सन्निहितमच्छब्दितभगवदुपासकान् अधिकृत्यैतदिति सङ्गतौ सम्भवत्याम्, 'ये त्वक्षरमनिर्देश्यम्' इति दूरस्थनिर्गुणसम्बन्धग्रहणमयुक्तमित्यर्थः । अर्थदोषं चाह– **यो मद्भक्त इति** ।। 'मयि सन्न्यस्य मत्पराः' इत्युक्तस्यैव 'यो मद्भक्तः स मे प्रियः' इति प्रत्यभिज्ञानाच्च, 'अद्वेष्टा' इत्यादौ भगवदुपासका एव ग्राह्याः, न पुनरक्षरोपासका इति भाष्योक्तसङ्गतिरेव युक्तेति भावः ।।

**गीताक्षरार्थस्तु**– 'हर्षमर्षभयोद्वेगैर्मुक्तः' इत्यत्र निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्षादिकं भवतीति शङ्कां परिहर्तुमुक्तम्– **यो न हृष्यतीत्यादि** ।। क्रियाप्रबन्धे विहितं लटं प्रयुञ्जानस्य सदातनहर्षाद्यभावोऽभिसंहितः । 'सर्वारम्भपरित्यागी' इति यदुक्तं तद्विशेषपरमित्युच्यते– **शुभाशुभपरित्यागीति** ।। तथा च सामान्यविशेषभावेनापुनरुक्तिः । 'सन्तुष्टो येन केनचित्' इत्यस्य च व्याख्यानव्याख्येयभावेनापुनरुक्तिरित्याकरे स्फुटम् ।। १७ ।।

**भावदीपिका (श्री.टि.)**– ।। **इदम्** 'यो न हृष्यति' इत्येतत् । **किं तेनेति** ।।

हर्षामर्षभयोद्वेगैः इत्युक्तेन । सिद्धेर्थ इति । ओ न हृष्यति इत्येननैवातीतकालीनहर्षनिषेधरूपेर्थे सिद्धेपि पुनः 'हर्षादिभिर्मुक्तः' इति यद्वचनम्, तत् 'यो न हृष्यति' इति वाक्यस्य सार्वकालिकहर्षाभावप्रतिपादने तात्पर्याभावाद् उपचाररूपत्वमेवेति शङ्कायाम्, तस्य तत्र तात्पर्यद्योतने तदर्थप्रतिपादने उपचारं परिहरतीत्यर्थः । 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायादिति भावः ।

ननु 'ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः' इत्यादिप्रपञ्चनरूपत्वम् 'अद्वेष्टा' इत्यस्य सम्भवति । द्वषादिवर्जनस्य सन्न्यासत्वात् । 'मय्यर्पित' इत्यादेश्च 'मत्पराः' इत्युक्तविवरणरूपत्वात् । 'मैत्रः करुणः' इत्यादीनां तूक्तविवरणरूपत्वाभावात् कथं 'इत्यादेः प्रपञ्च एषः' इत्युक्त? इत्यत आह– **तदुपलक्षितस्येति** ।। 'ये तु' इति वाक्ये उपलक्षणया मैत्र्यादयोऽत्रोच्यमानाः सर्वेऽपि धर्मा उपासकानामुक्ताः सन्ति । अतो 'ये तु' इति वाक्योपलक्षितस्य मैत्र्यादेरभिधानम् प्रपञ्चनम् अत्र स्पष्टतः क्रियत इत्यर्थः । **अक्षरोपासकानिति** ।। 'ये त्वक्षरम्' इत्युक्तनिर्गुणोपासकानित्यर्थः । **एतत्** 'अद्वेष्टा' इत्यादि गुणजातम् । **सन्निहितेति** ।। 'ये तु' इति सन्निहितभगवदुपासकसम्बन्धे सति सम्भवति सतीत्यर्थः । अत एव 'ये तु इत्यादेः प्रपञ्च एषः' इत्युक्तमिति भावः । **यो मद्भक्त इति** ।। 'ये तु' इत्युक्तभगवदुपासकस्यैव 'अद्वेष्टा' इत्यादिनोच्यमाना गुणाः, नाक्षरोपासकस्य । अद्वेष्टृत्वादिगुणवतो 'यो मद्भक्तः' इति भगवद्भक्तत्वाभिधानादिति भावः ।। १६-१९ ।।

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।। १८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** समः प्रियाप्रियलाभे उत्सेकानुत्सेकहीनः, सङ्गवर्जितः फलस्नेहरहितः ।। १८ ।।

**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ।। १९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** तुल्ये निन्दास्तुती यस्य स तथा निन्दास्तुत्युपनतिनिबन्धनविकारहीनः, मौनी नियतवाक्, अनिकेतः आवासभूम्यभिमानहीनः,

श्लोकः २०

भगवदाश्रयो वा । 'यो मद्भक्तः स मे प्रियः' इत्यादौ भक्तिरभ्यस्यते तस्येदं प्रयोजनम् ये भागवतधर्मा उक्ताः तेषु सर्वेष्वपि भक्तिरेवाधिकेति ज्ञापनम् ।। १९ ।।

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।। २० ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ।। १२ ।।

**भाष्यम् पिण्डीकृत्योपसंहरति— ये तु धर्म्यामृतमिति ।। धर्मो विष्णुः, तद्विषयं धर्म्यम्, अमृतं मृत्यादिसंसारनाशकं चेति धर्म्यामृतम् । श्रत् आस्तिक्यम् । 'श्रन्नामाऽस्तिक्यमुच्यते' इत्यभिधानम् । तद्धधानाः श्रद्दधानाः ।। २० ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये द्वादशोऽध्यायः ।।

भावप्रदीपिका (प.टी.)अन्त्यश्लोकमवतार्य व्याचष्टे— **पिण्डीकृत्येति** । साधनम् इति शेषः ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीमद्भगवद्गीताभाष्यभावप्रदीपिकायां द्वादशोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– 'ये तु' इत्युक्तमेव किमर्थमुच्यते? इत्यत आह— **पिण्डीकृत्येति** ।। धर्म्यामृतम् इत्येतदप्रतीतार्थं व्याख्यातुं धर्मशब्दं तावद्व्याख्याति— **धर्म इति** ।। तद्विषयं तदुपासनाङ्गत्वात् । धर्मादनपेतं धर्म्यं, धर्मश्च विष्णुः । नादृष्टम् । प्रवृत्तस्यासम्भवात् । निवृत्तस्यैतत्साधनत्वात् । इदानीम् अमृतशब्दं व्याकुर्वन् धर्म्यामृतमिति कर्मधारयोऽयमित्याह— **धर्म्यमिति** ।। न मृतम् अमृतम् । नञ् विरुद्धार्थे । मृतशब्दश्चोपलक्षक इत्यर्थः । **श्रद्दधानाः** इत्येतद् व्युत्पादयति— **श्रदिति** ।। 'श्रत्शब्दस्योपसङ्ख्यानम्' इत्युपसर्गत्वेनोपसङ्ख्यायमानस्यापि अस्य सत्त्ववाचित्वम् अविरुद्धम् उपसर्गत्वस्य कार्यविशेषार्थत्वात् ।। २० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां
जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां द्वादशोऽध्यायः समाप्तः ।। १२ ।।

**भावबोधः (र.टि.)– ।। प्रवृत्तस्यासम्भवादिति ।।** प्रवृत्तस्य द्वेषादिवर्जनविरोधित्वेन तदनपेतत्वासम्भवादिति भावः । **निवृत्तस्येति ।।** 'कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति निवृत्तकर्मणो द्वेषादिवर्जनसाधनत्वसिद्धेरित्यर्थः । तथाच द्वेषादिवर्जनस्य तदर्थरूपतदन-पेतत्वासम्भवादिति भावः । **सत्त्ववाचित्वमिति ।।** द्रव्यवाचित्वमित्यर्थः । किमर्थं तर्ह्युप-सर्जनसंज्ञेत्यत आह **उपसर्गत्वस्येति ।।** प्राग्धातोरिति पूर्वनिपातः । आतश्चोपसर्ग इत्यत्राङ्प्रत्ययरूपकार्यविशेषार्थत्वादित्यर्थः ।। २० ।।

**।। इति श्रीरघूत्तमतीर्थप्रणीता भावबोधाभिधा टिप्पणी द्वादशोऽध्यायः ।।**

**भावदीपः (रा.टि.)–** ननु ज्ञानमेव भगवद्विषयकं संसारनाशकम् । नतु 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भगवति सर्वकर्मसमर्पणादिकम् । तत्कथमुच्यते इदं सर्वकर्मसन्न्यसनादिकं धर्मविषयममृतं चेति । अत आह **तदुपासनाङ्गत्वादिति ।।** यो प्रभावश्च' इति वक्तुमित्यादि भाष्यदिशेति भावः ।। (भावादि प्रकृत्योर्गतिशून्यत्वे परिणामोन्मुखत्वादिरूपप्रवृत्तिस्तु सम्भव-तीति भावः।।) **प्रवृत्तस्येति ।।** काम्यकर्मणो भगवदर्पणादेरसम्भवाद् अमृतहेतुत्वाभावाच्चेत्यर्थः।। **निवृत्तस्येति ।।** निष्कामकर्मणो हर्षामर्षादिसाधनत्वेन तत्साध्यानामेव प्रागुक्ततया तेषामेव अत्रेदंपदेन ग्राह्यत्वादिति भावः ।। आदिपदतात्पर्यमाह **–अमृतशब्दश्चेति ।।** 'सुखदुःख' इत्यादिबन्धस्योपलक्षक इत्यर्थः ।। **इत्युपसर्गत्वेनेति ।।** वार्तिके उपसर्गत्वेन सङ्गृह्यमाणस्यापि आस्तिक्यरूपवस्तुवाचित्वमर्थः । उपसर्गत्वोक्तेः 'प्राग्धातोः' इति सूत्रेण विहितप्राक्प्रयोगादि-रूपकार्यविशेषमात्रार्थत्वेन उपसर्गवदसत्ववाचित्वाभावाद् व्यर्थं न भवतीति सत्वावाचित्व-मविरुद्धमित्यर्थः इति ।।

**।। श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिविरचिते श्रीमद्गीताभाष्यटीकाभावदीपे द्वादशोऽध्यायः ।। १२ ।।**

**वाक्यार्थप्रदीपः (पां.टि.)–** 'उपसर्गाः क्रियायोगे' इत्यस्मिन् सूत्रे 'श्रच्छब्दस्योप-सङ्ख्यानम्' इति वार्तिककृता उपसर्गत्वेन श्रच्छब्दस्योपसङ्ख्यातत्वेन तस्योपसर्गत्वात् कथं श्रत् आस्तिक्यमिति द्रव्यार्थत्वेन व्याख्यातमित्यत आह– **श्रच्छब्दस्येति ।। कार्यविशेषार्थ-त्वादिति ।।** यथा अजुपसर्गात् इति अजन्तादुपसर्गात् पास्यदा इत्यस्य त इत्यादेशविधानेन 'मरुद्भिर्दतो मरुत्' इत्यत्र दा इत्यस्योपसर्गत्वाभावेन त इत्यादेशप्राप्त्या द्रव्यवाचकस्यापि

श्लोकः २०

महच्छब्दस्य अचुउपसर्गात् त इति तत्वसिद्ध्यर्थमेव उपसर्गाः क्रियायोगे इत्यत्रोपसङ्ख्यानम् , तथा श्रच्छब्दस्यानुपसर्गत्वे श्रद्धा इत्यत्र आतश्चोपसर्गे इति आङ्विध्यसम्भवेन आङ्विध्यर्थमेवोपसङ्ख्यानात् नासत्वार्थकत्वम् । अत एव मरुन्नयतीत्यादौ त्वं शब्दद्वयेपि उपसर्गे घोः किः इति निपातसंज्ञापने इति पदमञ्जर्यामुक्तमिति भावः ।।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थतीर्थपूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे द्वादशोध्यायः ।।**

**भावरत्नकोशः (सु.टि.)– ये त्वित्युक्तमेव** 'ये तु सर्वाणि कर्माणि' इत्युक्तमेव । **'पिण्डीकृत्य'** इति भाष्ये 'साधनजातम्' इति शेषः । द्वेषाभावादेर्विष्णुविषयत्वाभावात् कथं 'तद्विषयम्' इति विष्णुविषयत्वभाषणम् इत्यतः तदुपपादयति– **तदुपासाङ्गत्वादिति** ।। 'तद्विषयं धर्म्यम्' इति कथम् । विषयत्वार्थे यत्प्रत्ययाननुशासनाद्, इत्याशङ्क्य 'धर्मपथ्यर्थन्यायादनपेते' इति शास्त्रेण 'धर्मादनपेतम्' इत्यर्थे यतोऽनुशिष्टत्वाद् इहानपेतत्वं धर्मानुकूलत्वं धर्मोपासनाङ्गत्वम्, तदेव धर्मविषयत्वं विवक्षितमिति भावेन भाष्ये तथोक्तमित्यभिप्रेत्य 'धर्मो विष्णुः' इत्येतच्च समर्थयते– **धर्मादनपेतमित्यादिना** ।। अदृष्टं च भवत् प्रवृत्तं निवृत्तं वेति विकल्पं हृदि निधाय आद्य आह– **प्रवृत्तस्येति** ।। **असम्भवात्** प्रवृत्तधर्मस्य द्वेषादिवर्जनविरोधितया, करुणाशालित्वस्य 'पशोरिवाकरुणः स्वर्गकामः' इत्यादौ अभावावेदनेन च तदनपेतत्वासम्भवादित्यर्थः । अन्त्ये आह– **निवृत्तस्येति** ।। तस्य द्वेषाभावादिसाधनत्वेन तत्साध्यत्वायोगादिति भावः । **कर्मधारयः** 'धर्म्यं च तदमृतं च' इति कर्मधारयः । **अयं** 'धर्म्यामृतम्' इति समासः । 'विशेषणं विशेष्येण बहुलम्' इत्यत्र बहुलग्रहणाद् विशेषणयोरपि समासो युक्त इति हृदयम् । **उपलक्षकः** मृत्यादिरूपसंसारस्य ।

**श्रच्छब्दस्येति** ।। उपसङ्ख्यायमानस्य 'श्रच्छब्दस्योपसङ्ख्यानम्' इति वार्तिककारेण सङ्ग्राह्यतयोक्तस्य **सत्त्ववाचित्वम्** आस्तिक्यरूपद्रव्यवाचित्वम् । 'लिङ्गसङ्ख्यान्वितं द्रव्यम्' इति क्लीबत्वैकत्वाभ्यां युक्तस्य श्रच्छब्दितास्तिक्यस्य पारिभाषिकद्रव्यत्वं नायुक्तमिति भावः । तर्हि 'चादयोऽसत्त्वे', प्रादयः 'उपसर्गाः क्रियायोगे' इत्यद्रव्यार्थानामेव प्रादीनामुपसर्गसञ्ज्ञोक्तिः किमर्था इत्यत आह– **उपसर्गत्वस्येति** ।। श्रच्छब्दस्योपसर्गत्वोपसङ्ख्यानस्य 'आतश्चोपसर्गे' इति अप्रत्ययविधानेन 'श्रद्धा' इति रूपसिद्ध्यर्थमेव, नतु तस्य द्रव्यत्ववाचित्वविघातार्थत्व-

मपीति युक्तमेव 'तद्दधानाः श्रद्दधानाः' इति भाषणमिति भावः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' इत्यादौ उपसर्गत्ववचनस्य, 'ते प्राग्धातोः' इति धातोः पूर्वप्रयोज्यत्वरूपकार्यविशेषार्थत्वादित्यर्थ इत्यपि आहुः ।। २० ।।

**गीताक्षरार्थस्तु–** 'ये तु सर्वाणि कर्माणि' इत्यदिनोक्तं साधनजातं बुद्ध्यारोहाय पिण्डीकृत्योपसंह्रियते– **ये तु धर्म्यामृतमिति** ।। धारकत्वाद् धर्मः विष्णुः, तस्मादनपेतं धर्म्यं धर्मोपासनाङ्गत्वाद् उपचारेण भागवतधर्मजातमपि धर्म्यं व्यपदिश्यते । न मृतम् अमृतम् , नञ् विरुद्धार्थे, मृतशब्दश्च मृत्यादिसंसाररूपोपलक्षकः । मृत्यादिसंसारनाशकम्, धर्म्यं च तदमृतं च धर्म्यामृतम् । इदं 'ये तु सर्वाणि कर्माणि' इत्यत्रोक्तम् । यथोक्तम् 'अद्वेष्टा' इत्यादिना प्रपञ्चितम् पर्युपासते सम्यगापादयन्ति, श्रद्धधानाः श्रच्छब्देन 'अत्रोक्तमस्ति', 'अनेन प्रयोजन-मस्ति' इति बुद्धिरूपमास्तिक्यं गृह्यते । तद्दधानाः, मत्परमाः अहमेव परमः सर्वोत्तमो येषां ते तथा मम सर्वोत्तमत्वज्ञानसम्पन्नाः भक्ताः स्वात्मात्मीयसमस्तवस्तुसमर्पणपूर्वकः अन्तराय-सहस्रेणाप्यप्रतिबद्धो भगवति निरन्तरप्रेमप्रवाहो भक्तिः, तद्युक्ताः ते अतीव अत्यर्थमेव मे मम प्रिया इति ।। २० ।।

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ।।

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ।।

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।

कृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ।।

श्रीमद्गीताभाष्यटीकाद्वादशाध्यायसेवया ।
तोषमायान्तु विबुधा गुणग्रहणभूषणाः ।।

श्लोकः २०

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां द्वादशोऽध्यायः ।।**

**भावदीपिका (श्री.टि.)– ।। ये त्वित्युक्तमेवेति** ।। 'ये तु सर्वाणि' इत्युक्तमेव 'ये तु धर्म्यामृतम्' इत्यनेनोच्यत इति पुनरुक्तिरिति भावः । ननु 'अद्वेष्टा' इत्याद्युक्तद्वेषादिवर्जनादेः भगवद्विषयत्वासम्भवात् कथं 'तद्विषयम्' इत्युक्तम् इत्यत आह– **तदुपासनाङ्गत्वादिति ।। अनपेतमिति** ।। 'धर्मपथ्यर्थन्यायाद् अनपेते' इत्यनेन धर्मादिशब्दाद् अनपेतार्थे यत्प्रत्ययविधानात्, पथ्यम् अर्थ्यम् न्याय्यमिति युक्तम् । तथा च धर्मादनपेतं तदुपासनसाधनं धर्म्यमित्यर्थः । **धर्मश्चेति** ।। 'धारकत्वाद्धर्मः' इति व्युत्पत्त्येत्यर्थः । अदृष्टं कुतो धर्मो न भवति इति चेत्, तत्र वक्तव्यम् धर्मशब्देन प्रवृत्तं धर्मं गृहीत्वा तदनपेतत्वमुच्यते, उत निवृत्तधर्मादनपेतत्वम् । नाद्य इत्याह– **प्रवृत्तस्येति** ।। प्रवृत्तधर्मस्य द्वेषादिवर्जनविरोधित्वेन तदनपेतत्वासम्भवादिति भावः । न द्वितीय इत्याह– **निवृत्तस्येति ।। एतदिति** । द्वेषादिवर्जनेत्यर्थः । 'कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति वचनेन निवृत्तकर्मण एव द्वेषादिवर्जनसाधनत्वेन रागद्वेषादिवर्जनस्य निवृत्तधर्मसाधनत्वाख्यतदनपेतत्वासम्भवादिति भावः । धर्मशब्दस्य विष्णुपरत्वे तु द्वेषादिवर्जनस्य विष्णूपासनसाधनत्वेन तत्साधनत्वरूपतदनपेतत्वं युक्तमिति ध्येयम् । **कर्मधारय इति** ।। 'धर्म्यं च तद् अमृतं च' इति कर्मधारय इत्यर्थः । **विरुद्धार्थ इति** ।। 'मृतिविरोधि अमृतम्' इति विरुद्धार्थ इत्यर्थः । ननु तर्हि मृतिविरोधि मृतिनाशकम् इत्येवार्थप्राप्त्या मृत्यादिसंसारेत्यर्थः कथं लभ्यत इत्यत आह– **मृतशब्दश्चेति** ।। मृतशब्दो जननाद्युपलक्षक इत्यभिप्रेत्य 'मृत्यादिसंसार' इत्युक्तमिति भावः ।

ननु श्रच्छब्दस्यास्तिक्यरूपद्रव्यवाचित्वमयुक्तम् । तथा हि 'प्रादयः'इत्यत्र 'श्रच्छब्दस्योपसङ्ख्यानम्' इत्युक्तं काशिकायाम् । 'श्रदन्तरोरुपसर्गवत् वृत्तिर्वक्तव्या' इति वार्तिके च । एवं 'श्रत्' इत्यस्योक्तत्वाद् 'उपसर्गाः क्रियायोगे' इति क्रियायोग एवोपसर्गत्वस्योक्तत्वात्, प्रकृते च 'दधानाः' इति क्रियायोगविवक्षायां तदर्थविशेषकत्वमेव 'श्रत्' इत्यस्य प्राप्तम्, न आस्तिक्यरूपद्रव्यवाचित्वम् । 'धातावेव विलीनोऽर्थ उपसर्गेण काश्यते' इत्युक्तत्वात् । यदि च क्रियायोगो न विवक्षितः, तर्हि कारकक्रियावाचित्वमेव वक्तव्यम्, न आस्तिक्यरूपद्रव्य-

मात्रार्थत्वम् । अतः कथमेतत् इत्यत आह– **श्रच्छब्दस्येत्यादिना** ।। **सत्त्ववाचित्त्वं** द्रव्यवाचित्वम् । 'चादयोऽसत्त्वे' इत्यत्र असत्त्वपदस्य 'अद्रव्यार्थाः' इति व्याख्यातत्वात् । नन्वविरुद्धत्वे किमर्थमुपसर्गसंज्ञा कृता इत्यत आह– **उपसर्गत्वस्येति** ।। **कार्यविशेषार्थत्वादिति** ।। 'ते प्राग्धातोः' इत्युक्तत्वेन धातोः प्राक् प्रयोगरूपकार्यविशेषार्थत्वादित्यर्थः । 'श्रद्धवानि अन्तर्भवाणि' इत्यादौ श्रदादिशब्दस्य धातोः प्राक् प्रयोगस्तावदस्ति । धातोः प्राक्प्रयोगश्च 'ते प्राग्धातोः' इति सूत्रेणोपसर्गाणामेवोक्तः, इत्यतः श्रदादेर्द्रव्यवाचिनोऽपि प्राक्प्रयोगोपपत्त्यर्थमेवोपसर्गसंज्ञा कृतेत्याशयः । अत एव वार्तिककृता 'उपसर्गवत्' इति प्रसिद्धोपसर्गवैलक्षण्यमुक्तमिति द्रष्टव्यम् ।। २० ।।

इति यदुपतिगीताभाष्यटीकासुयुक्ता शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा समगमदयमत्र द्वादशाध्याय आन्तम् ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायं श्रीमद्भगवद्गीताभाष्यविवृतौ भावप्रदीपिकाख्यायां द्वादशोध्यायः ।।**

**भावप्रकाशः (कृ.टि.)–** नन्वद्वेष्टेत्याद्युक्तम् । द्वेषाभावादेः निर्विषयत्वात् कथं विष्णुविषयत्वमित्यत आह– **तदुपासनाङ्गत्वादिति** ।। व्यापारानुबन्धिविषयतेति भावः । धर्मादनपेतत्वं नाम धर्मानुकूलत्वम् । तत्र धर्मो यद्यदृष्टं तदा प्रवृत्तादृष्टानुकूलत्वं वा निवृत्तादृष्टानुकूलत्वं वा । आद्ये आह– **प्रवृत्तस्येति** ।। तस्य द्वेषाभावादिविरोधित्वादिति भावः । अन्त्य आह– **निवृत्तस्येति** ।। तस्य द्वेषाभावादिहेतुत्वेन तज्जत्वायोगादिति भावः ।

नन्वस्त्वसत्वार्थानामेव प्रादीनामुपसर्गत्वम् । 'चादयोऽसत्वे' 'प्रादयः' इति । असत्वार्थानां प्रादीनां निपातत्वमुक्त्वा तेषामेव 'उपसर्गाः क्रियायोगे' इत्युपसर्गत्वोक्तेः 'अनुर्लक्षणे' इत्यादौ द्रव्यार्थानामुपसर्गत्वदर्शनाच्च । अतः श्रच्छब्दस्योपसर्गत्वेनोपसङ्ख्यानादुपसर्गत्वेऽसत्ववाचित्वमेव वाच्यम् । तत्कथमास्तिक्यार्थत्वम् । तस्य क्लीबत्वैकत्वाभ्यां द्रव्यत्वात् । 'लिङ्गसङ्ख्यान्वितं द्रव्यम्' इत्युक्तेरित्यत आह– **श्रच्छब्दस्येति** ।। **सत्त्ववाचित्वं** द्रव्यवाचित्वम् । किमर्थं तर्ह्युपसर्गत्वमित्यत आह– **उपसर्गत्वस्येति** ।। **कार्यविशेषेति** ।। आङ्प्रत्ययाख्यकार्येत्यर्थः । तथा चाङि कर्तव्ये एव श्रच्छब्दस्योपसर्गत्वं नान्यदा । श्रच्छब्दस्याङ्विधौ 'उपसङ्ख्यानम्' इत्यत्राङ्विधावित्युक्तेरिति भावः ।। २० ।।

**।। इति उमर्जीकृष्णाचार्यविरचितः श्रीप्रमेयदीपिकाभावप्रकाशे द्वादशोऽध्यायः ।।**

## ।। अथ श्रीमद्भगवद्गीतायां त्रयोदशोऽध्यायः ।।

## भाष्यम्

**पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन ।।**

भावप्रदीपिका (प.टी.)– एतदध्यायप्रतिपाद्यं दर्शयति– **पूर्वोक्तेति** । ज्ञानं ज्ञानसाधनं प्रथमषट्कोक्तम् । ज्ञेयं भगवत्स्वरूपं तत्र तत्रोक्तम् । क्षेत्रं भूमिरापोऽनलः इत्याद्युक्तम् । पुरुषौ न त्वेवाहम् इत्यादिना ।

प्रमेयदीपिका (ज.टी.)– पूर्वसङ्गतत्वेनाध्यायप्रतिपाद्यं दर्शयति– **पूर्वोक्तेति ।। पूर्वमाषष्ठसमाप्तेर्यज्ज्ञानं ज्ञानसाधनमुक्तम्, यच्च सप्तमादिभिः षड्भिर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि 'भूमिः आपः'** (७.४) **इत्यादिना क्षेत्रमुक्तम्, यच्च 'न त्वेवाहम्'** (२.१२) **इत्यादिना पुरुषतत्वमुक्तम् । तत्सर्वम् अनेनाध्यायेन दर्शयति भगवान् । किमर्थम्? पिण्डीकृत्य** विक्षिप्तमेकीकृत्य । गौणोऽत्र त्त्वाप्रत्ययः । पिण्डीकरणार्थमित्यर्थः । पिण्डीकरणे मिश्रत्वादप्रतिपत्तिरेवेत्यत उक्तम्– **विविच्येति ।।** प्रकरणशुद्ध्येत्यर्थः ।।

**भावबोधः (र.टि.)–** ।। विविच्य दर्शनापेक्षया पिण्डीकरणस्य पश्चात्तनत्वेन पूर्वकालीनत्वा भावात् कथं पिण्डीकृत्येत्युक्तमित्यत आह– **गौण इति** ।। भिन्नकालसम्बन्धरूपगुणयोगेनेत्यर्थः ।। १ ।।

भावदीपः (रा.टि.)– ।। **पुरुषतत्वमिति** ।। तज्जीवेश्वरस्वरूपमित्यर्थः ।। **पिण्डीकरणेति** ।। विविच्य प्रदर्शनकार्यतया ततः पूर्वभावित्वायोगादाह– **गौणोऽत्र त्त्वाप्रत्यय इति** ।। त्त्वाऽऽदेशस्थानीभूत इति ज्ञेयम् ।। पिण्डीकरणपरिज्ञानबुद्ध्यपेक्षया पूर्वकालीनत्वाभिप्राय इत्यर्थः ।।

।। विविच्य दर्शनापेक्षया पिण्डीकरणस्य पश्चात्तनत्वेन पूर्वकालीनत्वाभावात् कथं पिण्डीकृत्येत्युक्तमित्यत आह– **गौणोत्र त्त्वाप्रत्यय इति** ।।

**भावरत्नकोशः (सु.टि.)–** ।। **पूर्वसङ्गतत्वेन** पूर्वषट्कद्वयसङ्गतत्वेन इत्यनन्तरम् 'एतत्' इत्युपस्कर्तव्यम् । 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति सप्तमे भाषणाद् अत्र

ज्ञानशब्देन लक्षणया, 'ज्ञायतेऽनेन' इति योगेन वा ज्ञानसाधनमेव ग्राह्यमिति भावेन तमनूद्य व्याचष्टे– **ज्ञानं ज्ञानसाधनमिति** ।। उक्तं प्राचुर्येण । **पुरुषतत्त्वं** चेतनस्वरूपस्थितिः । 'दर्शयति' इत्यत्राख्यातोपात्तकर्त्रुक्तिः– **भगवानिति** ।। उक्तस्य पुनः प्रदर्शनं किमर्थमिति कृतचोद्यस्य कथमनेन परिहारः इत्यतस्तं भाष्यारूढं वक्तुमाह– **गौण इति** ।। 'पिण्डीकृत्य' इत्यत्र क्त्वाप्रत्ययादेशेन ल्यपा पिण्डीकरणं विविच्य दर्शनात् पूर्वकालीनम् इति प्रतीयते । अत्र च क्त्वाप्रत्ययः यथा पूर्वकालीनम् उत्तरकालीनेन प्रत्यासन्नं तथा उत्तरकालीनमपि । तथा पिण्डीकरणं विविच्य प्रदर्शनलक्षणकारणेन प्रत्यासन्नमिति प्रत्यासत्तिलक्षणगुणयोगेन प्रवृत्त इति व्याख्यातव्य इत्यविवक्षितार्थ इत्यर्थः ।

तर्हि कोऽयमर्थो विवक्षितः इत्यतस्तं दर्शयति– **पिण्डीकरणार्थमित्यर्थ इति** ।। विप्रकीर्णस्यैकीकरणार्थमित्यर्थः । अभ्युपगता च मीमांसकैः 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्र श्रुतक्रमम् अविवक्षित्वा, तिप्रत्ययस्य क्त्वाप्रत्ययार्थमङ्गीकृत्य 'यवागूं पक्त्वा अग्निहोत्रं जुहुयात् 'इति वचनव्यक्तिः । तथा च कृतचोद्यपरिहारो भाष्यारूढ इति भावः । एतेन 'विविच्यदर्शनपश्चात्तनस्य पिण्डीकरणस्य तत्पूर्वकालत्वायोगात्कथं भाष्ये समानकर्तृकयोः पूर्वकाले' इति सूत्रविहितक्त्वाप्रत्ययादेशल्यबुक्तिः' इति शङ्का परिहृता । पिण्डीकरण-विविच्यदर्शनयोः आकाङ्क्षाक्रमेण फलफलिभावो ज्ञातव्य इत्यभिप्रायावेदनात् । अन्ये तु 'गौणः' इति पदं यथा 'सिंहश्चैत्रः' इत्यत्र सिंहपदं मृगेन्द्रगतक्रौर्यादिगुणयोगेन चैत्रे वर्तत इत्य-विवक्षितार्थः, एवम् अविवक्षितार्थत्वगुणयोगेन क्त्वाप्रत्यये वर्तयितव्यम् इत्यविवक्षितार्थक इति व्याख्येयम् । तथा च पिण्डीकरणार्थम् इत्यर्थलाभ इत्याहुः । गौणः तुमर्थलक्षक इत्यर्थ इति अपरे ।

यद्यपि 'श्रोतृशेमुषीमारोहयितुम्' इत्यध्याहारे भाष्ये क्त्वाप्रत्ययादेशल्यबपि विवक्षितार्थः सम्पत्स्यते, न सम्पत्स्यते चाविवक्षितोऽर्थः । तथापि सहश्रुतनिखिलपदानां सम्भूयकारित्वस्य व्युत्पत्तिसिद्धत्वादर्थविशेषलाभाच्च अध्याहारापेक्षया प्रत्ययमात्रस्य विवक्षितार्थवर्णनमेव उचित-मिति भावेनैवमुक्तम् । 'विविच्य' इत्यस्य तात्पर्यम्– **प्रकरणशुद्ध्येति** ।।'एतज्ज्ञानमिति प्रोक्तम्' इति, 'एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इति, 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वा' इत्यादिरूपया च तत्तत्प्रकरणपरिशुद्ध्येत्यर्थः ।। १–३ ।।

श्लोकः १

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
कुर्मस्त्रयोदशाध्यायटीकां भावप्रदीपिकाम् ।।

।। **पुरुषभेद इति** ।। जीवेश्वरभेद इत्यर्थः । चतुर्विधनाशाभावप्रतिपादकेन तुशब्देनेश्वरे जीवभेदस्य प्रतिपादितत्वादिति भावः । ननु विविच्य प्रदर्शनापेक्षया पिण्डीकरणस्य पश्चात्तनत्वेन पूर्वकालीनत्वाभावात्, कथं 'पिण्डीकृत्य इति पूर्वकालीनत्वार्थकक्त्वादेशभूतल्य-प्रत्ययः इत्यत आह– **गौण इति** ।। तथा च विविच्य प्रदर्शनापेक्षया पिण्डीकरणे पूर्वकालीनत्वं न विवक्षितमित्यर्थः । **क्त्वाप्रत्ययः** तदादेशभूतल्यप्प्रत्ययः । तदेव दर्शयति– **पिण्डीकरणार्थमिति** ।। **प्रकरणशुद्ध्येति** ।। 'एतज्ज्ञानमिति प्रोक्तम्' इत्यादिप्रकारेणेत्यर्थः ।। १ ।।

**भावप्रकाशः (कृ.टि.)–** ननु विविच्य प्रदर्शनं नाम प्रकरणशुद्ध्या प्रदर्शनं पिण्डीकरणं च विक्षिप्तस्यैकीकरणम् । नच तयोः पौर्वापर्यमस्ति । तत्कथं पिण्डीकृत्येत्युक्तम् । 'समान-कर्तृकयोः पूर्वकाल' इत्युक्तेरित्यत आह– **गौण इति** ।। तुमनर्थलक्षकं इत्यर्थः ।। १ ।।

## अर्जुन उवाच–

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ।। १ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** पूर्वम् आषष्ठसमाप्तेः प्राचुर्येण यद् ज्ञान-साधनमुक्तम्, यच्च सप्तमादिभिः षड्भिरध्यायैर्ज्ञेयं ब्रह्मस्वरूपमुक्तम्, यदपि 'भूमिरापः' इत्यादिना क्षेत्रमुक्तम्, यच्च 'न त्वेवाहम्' इत्यादिना पुरुषतत्वमुक्तं तद्विप्रकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रदर्श्यते **'तत्क्षेत्रं यच्च' इति** । प्रतिज्ञातभगवज्ज्ञानस्यैव मोक्षहेतुत्वात् क्षेत्रं भगवत्स्वरूपं चोभयं किमर्थमुच्यते? इत्याशङ्का तावत्परिह्रियते– **श्रीभगवानुवाच** ।। इदं शरीरम् इति द्वाभ्याम् ।।

## श्रीभगवानुवाच–

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।। २ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** हे कौन्तेय इदं प्रत्यक्षादिप्रमाणसिद्धम्, वक्ष्यमाणं वा शरीरं जीवस्य स्वतो नित्यत्वाद् देहादितया परिणतैतदुपघाताज्जीवो हिंसित इत्युच्यत इति अव्यक्तादिकं हिंसाहेतुर्जीवस्य भवति । शृ हिंसायाम् इति धातोर्हिंसाहेतुत्वात् शरः, परेण ईर्यत्वाद् ईरम् इति शरीरशब्दवाच्यमव्यक्तमहदहङ्कारपञ्चभूतादिरूपतत्त्वजातं 'क्षीयते अस्मिन् अव्यक्तादिशरीरे भगवता स्थीयते' इति व्युत्पत्त्या क्षेत्रम् इत्यभिधीयते । एतद् अव्यक्तादिशब्दितं यो वेत्ति तं तद्विदः क्षेत्रज्ञविदः क्षेत्रज्ञम् इति प्राहुः । अत्रोक्त-व्युत्त्याऽव्यक्तादिकमेव शरीरपदवाच्यम् इत्यभ्युपगमेन 'संघातश्चेतना' इत्यत्र क्षेत्रविकारैक-देशत्वेनोक्तस्य संघातशब्दितशरीरस्य कथं समस्तक्षेत्रत्वमिति शङ्का परास्ता ।। २ ।।

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ।। ३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** 'एतद्यो वेत्ति' इत्युक्तेर्जीवस्यापि किञ्चित्क्षेत्रज्ञानसम्भवात् तस्य क्षेत्रज्ञत्वप्राप्तेस्तन्निराकरणायोच्यते– **क्षेत्रज्ञं चापीति** ।। क्षेत्रज्ञं च मां मामेव सर्वक्षेत्रेषु अव्यक्तादिस्थितत्वेन विद्धि जानीहि, न पुनर्जीवम् । अत्र स्वस्य सर्वक्षेत्रे स्थित्युक्तिश्च 'अव्यक्तादिरूपशरीरस्य कथं क्षेत्रशब्दवाच्यत्वम् 'इत्यतः' क्षीयतेऽत्रेश्वरेण इति क्षेत्रमित्यर्थसूचनाय' इति प्रस्थानान्तरे व्यक्तम् । अतः सर्वक्षेत्रादिज्ञानस्य क्षेत्रज्ञत्वादिविशिष्ट-भगवज्ज्ञानोपयोगित्वादुभयोः क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तदेव मम ज्ञानं मद्विषयकं ज्ञानमिति मम मतम् इति ।। ३ ।।

**तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ।। ४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** क्षेत्रादिस्वरूपं श्रावयितुं प्रतिज्ञायते–

श्लोकः ४

**तत्क्षेत्रमिति** ।। यत् निर्दिष्टमिदं शरीरमिति तत्क्षेत्रं यत् यत्स्वरूपं यादृक् यादृशं धर्मैः यत्प्रकारम् । चशब्दः समुच्चयार्थः । यश्चासौ विकारश्च यद्विकारः, सोऽस्यास्तीति यद्विकारि येन विकारेण युक्तम्, यतश्च यादृशप्रवृत्त्यनुकूलधर्मवतः पुरुषात्, यस्य प्रेरणयेति यावत् । यत् एति गच्छतीति यत्' इति इणो लडादेशशत्रन्तस्य रूपम् प्रवर्तत इति यावत् । स च प्रवर्तकः यो यत्स्वरूपः यत्प्रभावश्च यादृशप्रवृत्त्यनुकूलसामर्थ्येतरधर्मयुक्तः तत् सर्वं समासेन सङ्क्षेपेण मे सकाशात् शृणु । श्रुत्वा तत्र निष्ठां कुरु ।। ४ ।।

## भाष्यम्

**यद्विकारि येन विकारेण युक्तम् । यतश्च यत् यतो याति प्रवर्तते ।**

भावप्रदीपिका (प.टी.)– यद्विकारि इति भिन्नपदत्वशङ्कानिरासाय व्याचष्टे– **यदिति** । तत्र क्षेत्रं यच्च इत्यनेनागतार्थतया यतश्च यत् इति व्याचष्टे– **यतश्चेति** ।

प्रमेयदीपिका (ज.टी.)– 'यो विकारो यस्य तद् यद्विकारि' इति कश्चित् । तदसत् । बहुव्रीहितायामिनेः वैयर्थ्यात्। किन्तु यश्चासौ विकारश्चेति यद्विकारः । सोऽस्यास्तीति यद्विकारीति भावेनाऽह– **यदिति** ।। अत्र येन विकारेणेत्यनेन कर्मधारयं सूचयति । युक्तमिति इनेरर्थम् ।।

'यतश्च यत्' इत्येतद् 'यस्माच्च यत् कार्यमुत्पद्यते' इति कश्चिद्व्याख्यातवान्। तदयुक्तम् । 'यद् विकारि' इत्यनेन गतार्थत्वात् । साध्याहारत्वाच्च । 'विकारांश्च गुणांश्च' (१३.२०) इत्यस्यान्यथोपपत्तेः ।। अपरस्तु 'यतश्चामानित्वादिभ्यो यज्ज्ञेयं प्राप्यत इति । तदप्यसत् । अध्याहारादेव । 'अमानित्वम्' (१३.८) इत्यादेः 'अनादिमत्' (१३.१३) इत्यादेश्चान्यथासिद्धेः' इति भावेनान्यथा व्याचष्टे– **यतश्चेति** ।। **यतः** यस्य प्रेरणया । 'यत्' इति इणो लडादेशशत्रन्तस्य रूपम् । इणो यातेश्चानतिभिन्नार्थत्वात् 'याति' इत्युक्तम् । सर्वस्य क्षेत्रस्य गत्यभावाद् गौणीं वृत्तिमाश्रित्य विवृणोति– **प्रवर्तत इति** ।।

भावबोधः (र.टि.)– ।। **यद्विकारीत्यनेनेति** ।। कार्यस्यैव विकारत्वेन यत्कार्यजनकम् इत्यर्थकेन यद्विकारीत्यनेनैव यतः क्षेत्रादिकार्यमुत्पद्यते इत्यर्थस्यावगमादित्यर्थः । साध्याहार-त्वाच्चेति ।। उत्पद्यत इति गीतायामश्रवणादिति भावः ।

**प्रकारान्तरेणेति** ।। 'स्तुतिः' इति पूर्वं स्तावकत्वरूपेणैकेन प्रकारेण 'ध्यानात् कर्मफलत्यागः' इति वचनं व्याख्यातम् । इदानीमन्येनापि 'केवलात् त्यागरहिताद् ध्यानात् त्यागः ध्यानयुक्तत्यागोऽधिकः' इति प्रकारेण व्याख्यातीत्यर्थः । नन्वेवमव्याख्याने 'अमानित्वम्' इत्यादेर्ज्ञानसाधनवचनस्य 'अनादिमत्' इत्यादेर्ज्ञेयवचनस्य चाप्रतिज्ञातत्वोक्तित्वं स्यादित्यत आह– **अमानित्वमित्यादेरिति** ।। ' अनादिमत्' इत्यादेः 'परं ब्रह्मेति स च इति प्रतिज्ञातमुच्यते 'अन्यद्यत्प्रभाव' इत्युत्तरभाष्यरीत्या साक्षात्प्रतिज्ञावचनत्वेन 'अमानित्वम्' इत्यादेस्तु परब्रह्मज्ञानं प्रत्यवश्यकसाधनत्वेन प्रतिज्ञातोपयुक्तवचनत्वेनान्यथासिद्धेरित्यर्थः । **प्रेरणयेति** ।। यतः परमेश्वरानुमतेरिदं याति, प्रवर्तते । अनुलक्ष्य मतिः अनुमतिः प्रेरणारूपेति तात्पर्यं मनसि निधायैवमुक्तमिति ज्ञातव्यम् । **इण इति** ।। यातीति भाष्यानुसारेण लडादेश इत्युक्तम् । ततश्च इ अदिति स्थिते इणो यणिति यणादेशे यदिति रूपमित्यर्थः ।

ननु यत् इत्यस्येणो रूपत्वे भाष्ये एतीति वक्तव्यम् । यातीति कथमुक्तमित्यत आह – **इणो यातेश्चेति** ।। अर्थकथनमात्रमेतत् । न तूपपदमिति भावः । ननु यातीत्यस्य स्पष्टार्थत्वात् प्रवर्तते इति विवरणं किमर्थमित्यत आह – **सर्वस्येति ।। गौणीमिति** ।। गमनशून्यस्याव्याकृताकाशादेः कार्योन्मुखत्वाख्यस्य प्रवृत्तिरूपगुणयोगादित्यर्थः । ननु 'यतश्च यत् उत्पद्यते' इत्यव्याख्याने 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्यप्रतिज्ञातोक्तिः स्यात् । अतस्तदनुरोधेनोत्पद्यते इत्यध्याहारोऽपि कर्तव्य इत्यत आह – **विकारांश्चेति** ।। 'यादृक्' इति प्रतिज्ञातवचनत्वेन 'यतश्च यत्' इति प्रतिज्ञातप्रेरकस्वरूपनिरूपणोपयोगिसविकारप्रेर्यनिरूपणत्वेन चान्यथोपपत्तेरित्यर्थः । **अपरस्त्विति** ।। यतः साधनेभ्यः यत् ज्ञेयं वस्तु इति प्रतिज्ञाद्वयं 'यज्ज्ञात्वाऽमृतमश्नुते' इति गीतानुसारेण ज्ञानद्वारा प्राप्यत इत्युक्तमिति ज्ञातव्यम् । **अध्याहारादेवेति** ।। ज्ञेयं प्राप्यत इति पदद्वयस्येत्यर्थः ।

**भावदीपः (रा.टि.)– ।। इनेरिति** ।। 'अत इनिठनौ' इति मत्वर्थे विहित 'इनि'-प्रत्ययस्य वैय्यर्थ्यादिति भावः ।। **इत्यनेन गतार्थत्वादिति** ।। विकारशब्दितकार्यवत्वस्य यद्विकारिपदेन प्राप्तत्वात् 'तत् क्षेत्रम्' इत्यनूद्य 'अनुत्पद्यते' इत्यनेनापि कार्यवत्वस्यैव प्राप्त्या 'उत्पद्यते' इति क्रियाध्याहाराच्चेत्यर्थः ।। ननु विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् इत्यग्रे सत्वादिगुणानां कार्यत्वे पुंविकाराणां पृथगुक्तेरिहापि उक्तव्यत्यासेन पौनरुक्त्यमित्यत आह– **इत्यस्यान्यथोपपत्तेरिति** ।। 'तेषामत्यल्पोपि विशेषो लयात्सर्गः' इति विशेषोक्तिः ।।

श्लोकः ४

नन्वेवं प्रतिज्ञावाक्यानुक्तामानित्वादिसाधनोक्तिः,'अनादिमत्परं ब्रह्म' इति ज्ञेयोक्तिः 'यज्ज्ञात्वा अमृतमश्नुते' इति प्राप्त्युक्तिश्च अग्रेतना कथं स्यात्? इत्यत आह **अमानित्वमिति** ।। नच 'यो यत्प्रभावश्च'इति वक्तुम् 'इत्यादिभाष्यदिशेति भावः ।। ननु ज्ञानमेव भगवद्विषयकं संसारनाशकं च, नतु? 'ये तु सर्वाणि' इत्यादिना प्रागुक्तं भवति ।। **इणो लडादेशशत्रन्तस्येति** ।। 'इणो यण्' इति यणादेशे 'यत्' इति रूपम् । यातेरेव रूपत्वे 'यात्' इति स्यादिति भावः ।। **गत्यभावादिति** ।। प्रकृत्यादेः गतिशून्यत्वेऽपि परिणामोन्मुखत्वादिरूपप्रवृत्तिस्तु सम्भवतीति भावः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **बहुव्रीहितायामिनेः वैयर्थ्यादिति** ।। यो विकोरो यस्येति बहुव्रीहिणैव मत्वर्थस्य लाभात् तदर्थकेनिप्रत्ययवैयर्थ्यादित्यर्थः ।। **किन्त्विति** ।। तथाच बहुव्रीहिमाश्रित्य मतुबर्थप्रत्यययोगे वैयर्थ्यदोषप्राप्तावपि कर्मधारयमाश्रित्य मतुबर्थप्रयोगे शब्दान्तरत्वान्न दोष इत्याशयः ।। नच कर्मधारयमत्वर्थीयात् बहुव्रीहेरेवेष्टो लघुत्वात् इति न्यायात् शब्दान्तरत्वाश्रयणेपि बहुव्रीहिविवक्षया अल्पेनाभिमतार्थप्रतिपादनसम्भवेन बहुयत्नाश्रयणे दोषः स्यादेवेति वाच्यम् । बहुव्रीह्यपेक्षया कर्मधारयमत्वर्थीयशब्दगौणस्थले बहुयत्नाश्रयणस्य दोषत्वेपि शब्दसाम्ये तददोषत्वस्य अनादिमदित्यस्य वक्ष्यमाणत्वादितिभावः ।। **इणो लडादेशशत्रन्तस्येति** ।। ततश्च इणो लटि तस्य शतरि इ अत् इति स्थिते इको यणचीति यणि यदिति रूपसिद्धिरित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– ।। **कश्चित्** शङ्करः । रामानुजोऽपि 'यद्विकारि' इत्यनूद्य 'ये चास्य विकाराः' इति भाषमाणस्तदनुयाय्येव । **इन इति** ।। 'अत इनिठनौ' इति शास्त्रप्राप्तस्येनिप्रत्ययस्येत्यर्थः । बहुव्रीहिणैव विकारसम्बन्धावगमसम्भवादिति भावः । एकदेशिनैकाधिकरणे इति निर्देशात् 'लोहितशालिमान् ग्रामः' इत्यादिनिदर्शनाच्च 'न कर्मधारयात् मत्वर्थीयः प्रत्ययः' इति वचनमनादरणीयमिति भावेनाह– **यश्चासौ विकारश्चेति** ।। स्वोक्तविग्रहादिकं भाष्याभिमतमित्याह– **अत्रेति** ।। परभाष्यमनुवदति– **यस्माच्चेति** ।। **गतार्थत्वादिति** ।। विकारस्यैव कार्यशब्दार्थत्वादिति भावः । साध्याहारत्वात् यतश्च यत् इत्यत्र 'यस्माच्च यत् कार्यमुत्पद्यते' इति व्याख्यानाभ्युपगमे 'उत्पद्यते' इति शङ्करेण, उत्पन्नम् इति रामानुजेन अश्रुतपदस्य संयोजनाच्चायुक्तमित्यन्वयः ।

ननु 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्युपरितनवाक्यं पूर्वप्रतिज्ञातोक्तिरूपं वक्तव्यम् । तत्र च सम्भवश्रवणादिहापि 'उत्पद्यते' इति पदमध्याहर्तव्यमेव । अन्यथा अप्रतिज्ञातोक्तित्वं स्यात् इत्यत आह– **विकारांश्च गुणांश्चेत्यस्येति** ।। 'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं वक्तुं प्रेर्यं यत् सप्रकारं क्षेत्रं तन्निरूपकत्वेन, 'यादृक्' इति प्रतिज्ञातवचनत्वेन च प्रवृत्तं तद्वाक्यम् इत्यन्यथोपपत्तेर्न तस्याध्याहरकल्पकत्वमिति भावः ।

**अध्याहारादेवेति** ।। 'प्राप्यते' इति पदाध्याहारादेवेत्यर्थः । ननु 'यतश्चामानित्वादिभ्यो यद् ज्ञेयं प्राप्यते' इति प्रतिज्ञावाक्यव्याख्यानानभ्युपगमे 'अमानित्वम्' इत्यादिसाधनोक्तिः, 'अनादिमत्परं ब्रह्म इति ज्ञेयोक्तिः,'यज्ज्ञात्वाऽमृतमश्नुते' इति प्राप्त्युक्तिश्चाप्रतिज्ञातोक्तिः स्यात् इत्यत आह– **अमानित्वमित्यादेरिति** ।। 'अमानित्वमदम्भित्वम्' इत्यादिवाक्यस्य साक्षात्परब्रह्मज्ञानं प्रत्यावश्यकसाधनप्रतिपादकतया प्रतिज्ञातोपयुक्तवचनत्वस्य,'अनादिमत्परं ब्रह्म इत्यादेः 'स च यः' इति साक्षात्प्रतिज्ञावचनत्वस्य च, 'परं ब्रह्म' इति 'स च यः' इति प्रतिज्ञातम् उच्यत इति, 'अनादिमत्' इत्यादिकं 'यत्प्रभावः' इति प्रतिज्ञातस्य प्रतिपादकमिति च वक्ष्यमाणभाष्यरीत्या अवगमेन प्रकारान्तरेण प्रतिज्ञातोक्तित्वस्योपपत्तेः, न तद्वचनस्य अपरव्याख्यानप्रत्यायकत्वमिति भावः ।।

'यतः' इति भाष्यानुवादः, 'यस्य प्रेरणया इति व्याख्या । **लडादेशशत्रन्तस्य** लटः शतृशानचौ' इति शास्त्रप्राप्तो लट आदेशो यः शता, तदन्तस्य । ननु 'त्यजियजितनिभ्यो डित्' इति शास्त्रविहितात्प्रत्ययान्ततया यजेर्निष्पन्नस्य 'यत्' इति सर्वनाम्नोऽर्थान्तरत्वात्कथं भाष्ये 'याति' इति तद्व्याख्यानम् इत्यत आह– **यदितीण इति** ।। 'इण् गतौ' इत्यस्माल्लटि तस्य लटः शतृशानचौ' इति शत्रादेशे, शतुः अपित्त्वात् सार्वधातुकमपित्' इति ङित्त्वात्, क्ङिति च' इति गुणनिषेधे इयङ्बाधेन इणो यण् इति यणादेशे च 'यत्' इति रूपमित्यर्थः ।

ननु 'यत् 'इत्यत्र इणो रूपत्वे 'एति' इति भाषणीयम्, 'याति इति तु कथम् इत्यत आह– **इणो यातेश्चेति** ।। 'या प्रापणे' इति पाठेऽपि प्रापणस्य गतिविशेषत्वविवक्षया ऐक्यार्थ्यमभिसन्धायोक्तम्– **अनतिभिन्नार्थत्वादिति** ।। **सर्वस्य** सर्वान्तर्गतस्याव्याकृताकाशादेः । **गौणी वृत्तिमिति** ।। अव्याकृताकाशभूताकाशादेः पूर्वदेशवियोगउत्तरदशसंयोगसमापादनीयपरिस्पन्दलक्षणगमनस्य अभावेऽपि, गमने तदितरव्यापारे च साधारणस्य

श्लोकः ४

कार्योन्मुखत्वप्राणिमार्गदत्वादिरूपप्रवृत्तिलक्षणस्य गुणस्य योगेन 'यत्' इति शब्दस्य क्षेत्रमात्रे प्रयोगो युक्त इति भावेन भाष्यकृत् तस्य गौणीवृत्तिमाश्रित्य प्रवर्तत इति 'याति' इत्यनेन विवक्षितं गमनं विवृणोतीत्यर्थः । भगवत्प्रेरणया तत्प्रवृत्तिशालित्वं क्षेत्रस्य सर्वसुबोधमिति ज्ञापनाय गौणशब्दोपादानमिति हृदयम् ।

**भावदीपिका (श्री.टि.)– ।। वैयर्थ्यादिति ।।** 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति वचने आदिपदेन इनेरपि ग्रहणादिति भावः । कर्मधारयाद् इनिम् अभिप्रेत्याह– **यश्चासाविति ।। यद्विकारीत्यनेनेति ।।** कार्यस्यैव विकारत्वेन यत्कार्यजनकम् इत्यर्थकेन 'यद्विकारि' इत्यनेनैव 'यतः क्षेत्राद् यत्कार्यमुत्पद्यते' इत्यर्थस्यावगमादिति भावः । **साध्याहार-त्वादिति** । 'उत्पद्यते' इति गीतायाम् अश्रवणादिति भावः । ननु 'यतश्च यदुत्पद्यते' इत्यव्याख्याने 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्' इत्यप्रतिज्ञातोक्तिः स्यात् । अतस्तदनुरोधेन 'उत्पद्यते' इत्यध्याहारेण व्याख्यानं कर्तव्यम् इत्यत आह– **विकारांश्चेति ।।** 'यादृक्' इति प्रतिज्ञावचनत्वेन 'यतश्च यत्, स च' इति प्रतिज्ञातप्रेरकस्वरूपनिरूपणोपयोगि-सप्रकारप्रेर्यनिरूपणत्वेन चान्यथोपपत्तेरित्यर्थः । **अपरस्त्वति ।।** यतः साधनेभ्यो यज्ज्ञेयं वस्तु इति प्रतिज्ञायाः 'यज्ज्ञात्वाऽमृतमश्नुते' इति गीतानुसारेण 'ज्ञानद्वारा प्राप्यते' इत्युत्तरमुच्यत इति ज्ञातव्यम् । **अध्याहारादेवेति ।।** 'ज्ञेयं प्राप्यते' इति पदद्वयस्येत्यर्थः ।

नन्वेवमव्याख्याने 'अमानित्वम्' इत्यादेः ज्ञानसाधनवचनस्य, 'अनादिमत्' इत्यादेः ज्ञेयवचनस्य अप्रतिज्ञातोक्तित्वं स्यात् इत्यत आह– **अमानित्वमित्यादेरिति ।।** 'अनादिमत्' इत्यादेः 'परं ब्रह्म' इति 'स च यः' इति प्रतिज्ञातमुच्यते, अन्यत् 'यत्प्रभावः' इत्युत्तरभाष्यरीत्या साक्षात्प्रतिज्ञातवचनत्वेन, 'अमानित्वम्' इत्यादेस्तु साक्षात्परब्रह्मज्ञानं प्रत्यावश्यकसाधनत्वेन प्रतिज्ञातोपयुक्तवचनत्वेनान्यथासिद्धेरित्यर्थः । **यदिति इणो लडादेशस्य शत्रन्तस्य रूपमिति ।।** भाष्ये 'याति' इति वर्तमानार्थकलट्प्रयोगात् 'लडादेश' इत्युक्तम् । तथा च 'इण् गतौ' इत्यस्माल्लटि तस्य परस्मैपदिनः शत्रादेशे शकारऋवर्णयोर्लोपे 'अत् इति स्थिते 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति सूत्रेण धात्विकारस्य प्राप्तेयङादेशापवादकत्वेन, 'इणो यण्' इणोऽङ्गस्य यणादेशः स्यादचि परे' इति सूत्रेण, 'यस्मात् प्रत्ययविधिः तदादि प्रत्ययेऽङ्गम्' इत्यङ्गसंज्ञकस्य इकारस्य यणादेशे य् अत् यत् इति रूपमिति भावः । ननु 'यत्' इति इणो रूपं चेत्, इणो गत्यर्थकत्वाद् यातेश्च प्रापणार्थत्वाद् 'याति' इति प्रतिपदं कथं

दत्तम्, 'एति' इति वक्तव्यत्वात्, इत्यत आह– **इण इति** ।। ननु इणो यातेश्चानतिभिन्नार्थकत्वे 'याति' इत्यस्य 'गच्छति' इत्यर्थस्य स्पष्टत्वात् 'प्रवर्तते' इति विवरणं किमर्थम् इत्यत आह– **सर्वस्येति** ।। **गौणीमिति** ।। गमनशून्याकाशादेः क्षेत्रस्य कार्योन्मुखत्वाख्यप्रवृत्तिरूपगुणयोगादित्यर्थः ।

**भावप्रकाशः (कृ.टि.)**– ।। **इनेर्वैयर्थ्यादिति** ।। मत्यर्थे बहुव्रीहिरित्युक्तेः सम्बन्धबोधकबहुव्रीहिणैव मत्वर्थलाभादिति भावः । **कर्मधारयमिति** ।। न चैवमपि न कर्मधारयान्मत्वर्थीयः' इत्युक्तेरिनो वैयर्थ्यम् । यत्र स्पष्टप्रतिपत्तिरुद्देश्या तत्र कर्मधारयादपि मत्वर्थीयाङ्गीकारात् 'लोहितशालिमान् ग्रामः' इत्यादिदर्शनादिति भावः । **गतार्थत्वादिति** ।। तस्य यत्कार्यजनकमित्यर्थे पर्यवसानादिति भावः । **साध्याहारत्वाच्चेति** ।। गीतायामुत्पद्यत इत्यश्रवणादिति भावः । ननु 'यतश्च यत्' इत्यस्य कार्यप्रतिज्ञात्वाभावे 'विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ' इतीयमप्रतिज्ञातोक्तिः स्यादित्यत आह– **विकारांश्चेति** ।। 'यतश्च यत्' इति प्रतिज्ञातं प्रेरकस्वरूपं वक्तुं प्रेर्यं यत्सप्रकारकं क्षेत्रं तन्निरूपकत्वोपपत्तेरित्यर्थः । **अध्याहारादेवेति** ।। ज्ञेयं प्राप्यत इति पदद्वयस्येति शेषः ।

ननु यद्युक्तरीत्या 'यतश्च' इत्यादिप्रतिज्ञाद्वयं न स्यात् तर्हि 'अमानित्वम्' इत्यादेः 'अनादिमत्' इत्यादेश्चाप्रतिज्ञातोक्तित्वं स्यादित्याह– **अमानित्यमित्यादेरिति** ।। 'अमानित्वम्' इत्यादेः ज्ञानसाधनप्रतिपादकत्वस्यानादिमत्त्वादेश्च 'स च यो यत्प्रभावश्च' इति प्रतिज्ञातार्थे द्वयाभिधायकत्वस्य चोपपत्तेरित्यर्थः । ननु 'यतो याति ' इत्यस्य 'स च यः' इत्यनेन पुनरुक्तिरित्यतो व्याचष्टे– **यस्य प्रेरणयेति** ।। एतच्च स्फुटीकरिष्यते । ननु 'यत्' इत्यस्य सर्वनामत्वेनार्थान्तरपरत्वात् 'याति' इति कथं व्याख्यानमित्यत आह– **यदितीति** ।। इण् गतावित्यस्माल्लटि तस्य शत्रादेशे शतुरपित्सार्वधातुकत्वेन ङित्वाद्गुणनिषेधे इयङ्बाधेन इणो यणिति यणादेशे च यदिति रूपमिति भावः । ननु 'यत्' इत्यस्येणो रूपत्वे एतीति वाच्यम् । यातीति तु कथमित्यत आह– **इणो यातेश्चेति** ।। प्राप्त्यर्थानां गत्यर्थत्वेनातिभिन्नार्थत्वाभावादित्यर्थः । **गौणीमिति** ।। प्रसिद्धार्थं परित्यज्यार्थान्तरपरत्वमाश्रित्येत्यर्थः । तेन धातूनामनेकार्थत्वात् कथमेतदिति निरस्तम् । **एवं धर्मविशिष्टादिति** ।। उपद्रष्टृत्वादिविशिष्टादित्यर्थः ।। ४ ।।

श्लोकः ४

## भाष्यम्

**स च प्रवर्तकः । यतश्च यत् इति अस्मात् प्रवर्तते क्षेत्रमिति वचनम् । स च यः इति स्वरूपमात्रम् ।। ४ ।।**

भावप्रदीपिका (प.टी.)– 'स च यः' इत्यस्य न भिन्नान्वय इत्याह– **स चेति ।** ननु प्रवर्तकमात्रप्रतिज्ञाने यः प्रवर्नक इत्येव वक्तव्यम् । न तु यतश्च यत् इतीत्यत आह– **यतश्चेति ।** अस्मात् प्रवर्तते क्षेत्रमिति प्रवर्तककथनार्थं यतश्च यत् इति वचनम् । तल्लक्षणमात्रकथनार्थं स च यः इति वचनमित्यर्थः ।। ४ ।।

प्रमेयदीपिका (ज.टी.)– 'स च यः' इति जीवप्रतिज्ञा' इति व्याख्यानमसत् । तस्याप्रकृतत्वात् । क्षेत्रज्ञशब्दस्यातद्विषयत्वादिति भावेनाऽह– **स चेति ।।** 'यतः क्षेत्रं प्रवर्तते' इति प्रवर्तकस्य प्रकृतत्वादित्याशयः ।। नन्वेवं चेदेतद्वक्तव्यम् । किं 'यतश्च यत् स च यः' इत्येकैव प्रतिज्ञा? उत द्वे इति। नाद्यः । चशब्दद्वयानुपपत्तेः । 'तत्समासेन' इत्यनेनान्वयात् । 'स च यः' इत्यस्य वैय्यर्थ्याच्च । न द्वितीयः । अर्थभेदाभावादित्यतो द्वितीयमङ्गीकृत्याऽह– **यतश्चेति ।।** 'यतश्च यत्' इति वचनम् अस्मात् एवंधर्मविशिष्टात् क्षेत्रं प्रवर्तते इति वक्तुं प्रतिज्ञारूपम् । 'स च यः' इति वचनं प्रवर्तकस्य स्वरूपमात्रं वक्तुं प्रतिज्ञारूपमित्यर्थभेद इत्यर्थः ।। ४ ।।

भावबोधः (र.टि.)– ।। तत्समासेनेत्यनेनेति ।। 'यतः' इति यच्छब्दस्येत्यर्थः । तथा च 'स च यः' इति तच्छब्दयच्छब्दयोरनन्वितत्वेन वैय्यर्थ्यादित्यर्थः ।। ४ ।।

भावदीपः (रा.टि.)– ।। यतः इत्यस्य यतः प्रवर्तकादित्यर्थः ।। 'यत्' इत्यस्यार्थानुवादः– क्षेत्रं प्रवर्तत इतीति ।। इत्यनेनान्वयादिति ।। 'यतः प्रवर्तकात् यत् प्रवृत्तिमत् स च प्रवर्तको यः यत्स्वरूपः' इति तच्छब्देनैव 'यतः' इत्यस्यान्वितत्वेन तत्समासेन इत्यत्रात्येतच्छब्देन अन्वयात् । **'यतः'** इत्यस्य **'तत्समासेन'** इति तच्छब्देनैवान्वयात् **'स च यः'** इति व्यर्थमित्यर्थः ।। 'अस्मात्' इति भाष्यानुवादः, एवं धर्म' इत्यादि व्याख्या ।। उपद्रष्टृत्वादिवक्ष्यमाणगुणविशिष्टादित्यर्थः ।। ४ ।।

**भावरत्नकोशः (सु.टि.)– ।। इति व्याख्यानमिति ।।** तथा च शङ्करः 'क्षेत्रज्ञं चापि इति यः क्षेत्रज्ञो निर्दिष्टः सः' इति । ननु क्षेत्रज्ञशब्देनैव कः प्रकृतः इत्यत आह– **क्षेत्रज्ञशब्दस्येति ।।** 'क्षेत्रज्ञो भगवान्विष्णुर्न ह्यन्यः क्षेत्रमञ्जसा, वेत्ति इति । 'क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य' इत्यादिवचनैस्तस्य भगवद्विषयत्वावगमेन जीवविषयत्वाभावादित्यर्थः । तच्छब्दस्य प्रकृतवचनत्वात् तस्य प्रकृतत्वं दर्शयति– **यतः क्षेत्रमिति ।।** 'यत्' इत्यस्य तात्पर्यम् – **प्रवर्तत इति ।। एवं चेत्** 'स च यः' इति वचनं भगवत्परं चेत् । द्वे प्रतिज्ञे इति वक्तव्यम् इत्यन्वयः । **तत् समासेनेत्यनेनान्वयादिति ।।** 'यतश्च' इत्यत्र विद्यमान-यच्छब्दस्य 'तत् समासेन' इत्यत्र तच्छब्देनान्वयात्, 'स च यः' तच्छब्दयच्छब्दयोरुभयो-रप्याकाङ्क्षितत्वेन अन्वयप्रतियोगिसमर्पकत्वानुपपत्त्या 'स च यः' इत्यस्य व्यर्थत्वाच्च नाद्य इत्यर्थः । **अर्थभेदाभावादिति ।।** 'यतश्च यत्' इति प्रवर्तकत्वम्, 'स च यः' इति च प्रवर्तकत्वमेवाभिसंहितम् इत्युभयोरपि प्रवर्तकविषयकत्वादिति भावः । **द्वितीयं** द्वे इति पक्षम् । व्यवहितान्वयं भाष्यम् अन्वयं दर्शयन् योजयति– **यतश्च यदिति वचनमिति ।।** उपद्रष्टृत्वादिधर्मविशिष्टं यत् । 'वचनम्' इत्यनन्तरं वक्तुं प्रतिज्ञारूपम् इति शेषः । तथा चार्थभेदाभावादिति हेतुरसिद्ध इति भावः । भावप्रदीपिकायां तु– ननु प्रवर्तकमात्रप्रतिज्ञाने 'यः प्रवर्तकः इत्येवं वक्तव्यम्, नतु 'यतश्च यत्' 'स च यः' इति इत्यत आह– **यतश्चेति ।।** 'अस्मात् प्रवर्तते क्षेत्रम् इति प्रवर्तककथनार्थं यतश्च यत् इति वचनम् तल्लक्षणकथनार्थं स च यः' इति वचनमित्यर्थ इति व्याख्यातम् ।। ४ ।।

**भावदीपिका (श्री.टि.)–** ननु पूर्वं क्षेत्रज्ञशब्देन जीवः प्रकृतः इत्यत आह– **क्षेत्रज्ञशब्दस्येति ।। अतद्विषयत्वादिति ।।** ईश्वरविषयकत्वेन जीवविषयत्वाभावादित्यर्थः । ननु 'प्रवर्तकः कः' इति प्रश्नोऽप्ययुक्तः? तस्याप्यप्रकृतत्वात्, इत्यत आह– **यतः क्षेत्रमिति ।। चशब्दद्वयेति ।।** चशब्दार्थसमुच्चयस्य भेदव्याप्तत्वादिति भावः । यच्छब्दस्य तच्छब्दसापेक्षत्वात् 'स च यः' इत्युक्तमिति चेत् तत्राह– **तत् समासेनेत्यनेनान्वयादिति ।।** 'यतश्च यत्' इति यच्छब्दस्य 'तत्समासेन' इति तच्छब्देनान्वयपूर्तेरित्यर्थः । **अर्थभेदेति ।।** 'यस्मात्प्रवर्तते', 'स प्रवर्तकः कः' इत्यनयोरर्थतो भेदाभावादिति भावः ।। ४ ।।

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।। ५ ।।**

## भाष्यम्

**ब्रह्मसूत्राणि शारीरकम् (शारीरकसूत्राणि) ।। ५ ।।**

भावप्रदीपिका (प.टी.)– एवं ब्रह्मसूत्राणां ब्रह्ममीमांसात्वात् कथं क्षेत्राख्य-शरीरपरता ? इत्यत आह– **ब्रह्मेति ।।**

प्रमेयदीपिका (ज.टी.)– ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि। ततश्च छन्दसामृषिवाक्यानां च तथात्वात् **'ऋषिभिः'** इत्यादिकं वृथा स्यादित्यतो रूढि-माश्रित्याह– **ब्रह्मेति ।। ५ ।।**

भावरत्नकोशः (सु.टि.)– ।। छन्दसां वेदानाम् ऋषिवाक्यानां व्यासादिवचनानां **तथात्वात्** ब्रह्मसूचकवाक्यत्वात् । **रूढिमपीति** ।। न केवलम् उक्तयोगम्, रूढिमपि । तथा च योगरूढोऽयं ब्रह्मसूत्रशब्द इति 'ऋषिभिः' इत्यादिकमप्यर्थवदिति भावः ।।

**गीताक्षरार्थस्तु** श्रोतुरत्यादरजननाय स्वेनोच्यमानं प्रामाणिकमित्युच्यते– **ऋषिभि-रिति** ।। बहुधा बहुप्रकारेण विविधैश्छन्दोभिः वेदैः पृथग् विवेकतो गतिम् 'गै शब्दे', निरूपितं हेतुमद्भिः न्यायोपेतैः, अत एव विनिश्चितैः विशिष्टं निश्चितं निश्चयो यैस्तानि तथा, तैः निश्चयप्रत्ययोत्पादकैः । ब्रह्मसूत्रपदैः शारीरकसूत्राक्षरैश्च गीतम् । एवं तत्र तत्र विस्तरेणोक्तं सर्वं सङ्क्षिप्य वच्मि, तच्छृण्विति पूर्वेण सम्बन्धः ।। ५ ।।

भावदीपिका (श्री.टि.)– ।। **सूचकानीति** ।। प्रतिपादकानीत्यर्थः । **तथात्वात्** ब्रह्मप्रतिपादकत्वादित्यर्थः ।। ५ ।।

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।। ६ ।।**

भावरत्नकोशः (सु.टि.)– 'तत्क्षेत्रम्' इति प्रतिज्ञातमुच्यते– **महाभूतानीति** ।। आकाशादीनि पञ्च महाभूतानि । अहङ्कारशब्देन महत्तत्त्वमपि ग्राह्यम् । बुद्धिः अन्तःकरण-वृत्तिविशेषः । अव्यक्तं त्रिगुणात्मकं प्रधानम् । इन्द्रियाणि ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्चेति दश, चशब्द इन्द्रियत्वानुकर्षणार्थः, मन इन्द्रियं चैकम् । इन्द्रियगोचराः इन्द्रियविषयाः शब्दस्पर्शरूपरसगन्धाः पञ्चेति, चतुर्विंशति तत्त्वानि क्षेत्रम् ।। ६ ।।

**इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ।। ७ ।।**

## भाष्यम्

**इच्छादयो विकाराः ।। ७ ।।**

भावप्रदीपिका (प.टी.)– महाभूतानि इत्यारभ्य धृत्यन्त्यान्युक्त्वा क्षेत्रं सविकारमित्युच्यते । तत्र क्षेत्रे के विकाराः किं क्षेत्रम् इत्यत आह– **इच्छादय इति** । आद्यं क्षेत्रमित्यर्थः ।। ७ ।।

प्रमेयदीपिका (ज.टी.)– 'महाभूतानि' इत्यनुक्रम्य 'एतत् क्षेत्रं समासेन सविकारमुदाहृतम्' इत्युक्तम् । तत्र न ज्ञायते किं क्षेत्रम्? के च तद्विकाराः? इत्यत आह– **इच्छादय इति ।। पूर्वं** क्षेत्रमिति भावः ।। ७ ।।

भावरत्नकोशः (सु.टि.)– 'किं क्षेत्रम्' इत्यस्याप्युत्तरं भाष्यभावोक्त्याह– **पूर्वमिति** ।। 'महाभूतान्यहङ्कारः इति पूर्वश्लोकोक्तमित्यर्थः ।। ७ ।।

**गीताक्षरार्थस्तु** इच्छादयः सप्त विकाराः । संघातो देहः । चेतना चित्तव्याप्तिः । धृतिः धैर्यम् । उक्तमुपसंह्रियते– **एतदिति** ।। समासेन सङ्क्षेपेण उदाहृतं निरूपितम् ।।७।।

भावदीपिका (श्री.टि.)– ।। **पूर्वमिति** ।। 'इच्छा' इत्यतः पूर्वग्रन्थेन क्षेत्रनिरूपणमित्यर्थः ।। ७ ।।

भावप्रकाशः (कृ.टि.)– ।। **पूर्वं क्षेत्रमिति** ।। 'महाभूतानि' इति श्लोकोक्तमित्यर्थः ।। ७ ।।

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।। ८ ।।**

**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।। ९ ।।**

श्लोकः ८-९

# भाष्यम्

**'स च यो यत्प्रभावश्च' इति वक्तुं तज्ज्ञानसाधनान्याह– अमानित्वमित्यादिना ।। आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः ।। 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यदर्शनम्' इति ह्यभिधानम् । आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम् ।। ८,९ ।।**

भावप्रदीपिका (प.टी.)– उत्तरप्रघट्टकमवतारयति– **स चेति** । लक्षणं प्रभावं च अनादिमत्परं ब्रह्म इत्यनेन वक्तुमित्यर्थः । मानाहङ्कारवैलक्षण्येन दम्भं सप्रमाणकं दर्शयति– **आत्मेति** । आर्जवपदमप्रतीतिनिरासाय व्याचष्टे– **आर्जवमिति** ।।

प्रमेयदीपिका (ज.टी.)– ननु षट्स्वर्थेषु प्रतिज्ञातेषु अमानित्वादिकमनन्तर्भूतं किमित्युच्यत इत्यत आह– **स चेति** ।। इति प्रतिज्ञातमर्थद्वयं वक्तुं 'ज्ञेयं यत् तत्' (१३.१३) इत्यादिना । 'न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीत्याशयेन' इति शेषः । मानाहङ्काराभ्यां दम्भं पृथग्दर्शयति– **आत्मेति** ।। आर्जवं ज्ञानसाधनं यथा स्यात्तथा व्याचष्टे– **आर्जवमिति** ।। एतच्च सन्मार्ग इति ज्ञातव्यम् ।। ८,९ ।।

**भावबोधः (र.टि.)**– नन्वेवं व्याख्यानेऽप्यार्जवस्य न ज्ञानसाधनत्वं सम्भवति । दुर्मार्गे मनोवाक्कायकर्मणामवैपरित्यस्य सम्यग्ज्ञानविरोधित्वादित्यत आह– **एतच्चेति** ।। ८ ।।

**भावदीपः (रा.टि.)**– ।। वक्तुमिति भाष्ये 'केन' इत्याकाङ्क्षां पूरयति–**ज्ञेयं यत्तदित्यादिनेति** ।। 'तज्ज्ञान' इत्यतः पूर्वं शेषमाह– **न यादृशेत्यादि** ।। **सन्मार्ग इतीति** ।। अन्यस्य ज्ञानानुपायत्वादिति भावः ।। ८,९ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **षट्स्वर्थेष्विति** ।। 'तत्क्षेत्रं यत्' इत्येकः, 'यादृक्' इति द्वितीयः, 'यद्विकारि' इति तृतीयः, 'यतश्च यत्' इति तुरीयः, 'स च यः' इति पञ्चमः, 'यत्प्रभावः' इति षष्ठः, इति प्रतिज्ञातोऽर्थ इत्येवं षट्स्वर्थेष्वित्यर्थः । इतिशब्दमनूद्य अध्याहरति– **इति प्रतिज्ञातमर्थद्वयमिति** ।। 'वक्तुम्' इत्यनूद्य तत्र शेषमाह– **वक्तुं ज्ञेयमिति** ।। **यादृशतादृशेन** अमानित्वादिधर्मं विना कृतेन । 'तत्समासेन मे शृणु' इति गीतत्वादाह– **श्रवणेनेति** ।। **तद्** ज्ञेयं वस्तु । 'भवति' इत्यनन्तरम् किन्तु, अमानित्वादिसहायसम्पत्ति-

सहितेन' इति शेषः । **मानेति** ।। आत्मगुणश्लाघनं मानः, अविद्यमानात्मगुणाभिमानोऽहङ्कार इति मानाहङ्कारशब्दार्थः, एवं डम्भ इति, कथं गीतायाम् 'अमानित्वम्' 'अनहङ्कार एव च' इत्युक्त्वा, 'अडम्भित्वम्' इत्युच्यते 'इत्याशङ्कायाम् इति शेषः । भावनम् विभावनम्, 'प्रदर्शनम्' इति यावत् इत्यभिधानपदार्थः । आर्जवम् अवक्रिमा भूम्ना प्राणिषु दृश्यत इति कथमिदं ज्ञानसाधनेषु पठ्यते इत्यत आह– **आर्जवं ज्ञानसाधनं यथा स्यादिति** ।। दुर्मार्गे मनोवाक्कायकर्मणाम् अवैपरीत्यं ज्ञानप्रतिरूपमेव । अत आह– **एतच्चेति** ।।

**गीताक्षरार्थस्तु** ''स च यो यत्प्रभावश्च' इति प्रतिज्ञातमर्थद्वयं 'ज्ञेयं यत्तत्' इत्यादिना वक्तुं साधनानां विकारेष्वन्तर्भावं च ज्ञापयितुम्, न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवति, किन्तु अमानित्वादिसाधनसम्पत्तियुक्तेन इत्याशयेन ज्ञेयभगवज्ज्ञानसाधनान्युच्यन्ते– **अमानित्वम् इत्यादिपञ्चश्लोक्या** ।। मानः आत्मगुणश्लाघः, सोऽस्यास्तीति मानी, सः न भवतीत्यमानी, तस्य भावः अमानित्वम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः, तद्वान् दम्भी, स न भवतीत्यदम्भी, तस्य भावः अदम्भित्वम् । अहिंसा अहिंसनं प्राणिनामपीडनम् । क्षान्तिः सहनम्, परापराधप्राप्तावपि अविक्रिया । आर्जवं ऋजुभावः, सन्मार्गे मनोवाक्काय-कर्मणाम् अवैपरीत्यम् । आचार्योपासनं मोक्षसाधनोपदेष्टुः शुश्रूषादिना सेवनम् । शौचम्–

'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ।।'

इति शास्त्रोक्तं द्विविधम् । स्थैर्यं स्थिरभावः मोक्षमार्ग एव कृतव्यवसायत्वम् । आत्म-विनिग्रहः मनसो विशेषेण नियमनम् ।। ८ ।।

**गीताक्षरार्थस्तु- इन्द्रियार्थेषु** शब्दादिविषयेषु । कर्मसु 'अहं कर्ता' इत्यभिमानाभावः अनहङ्कारः । 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इत्यत्र 'असन्देहः' इति पदमिव 'अनहङ्कारः' इति पदं साधु । जन्मनि, मृत्यौ, जरायां, व्याधिषु दुःखलक्षणदोषस्य पुनः पुनरालोचनं जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । तत्र जन्मनि गर्भवासयोनिद्वारनिस्सरणनिमित्तदुःख-दोषालोचनम्, मृत्यौ भयकम्पादिदुःखानुदर्शनम्, जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनम्, व्याधिषु शिरोरोगादिषु तन्निमित्तदोषानुदर्शनमिति द्रष्टव्यम् ।। ९ ।।

श्लोकः १०,११

भावदीपिका (श्री.टि.)– ।। तदिति ।। 'ज्ञेयं यत्तत्' इत्यादिना वक्ष्यमाणं प्रमेय-मित्यर्थः । दुर्मार्गे मनोवाक्कायकर्मणाम् अवैपरीत्यस्य सम्यग्ज्ञानविरोधित्वादाह– **एतच्चेति** ।। ८-११ ।।

भावप्रकाशः (कृ.टि.)– ।। **मानाहङ्काराभ्यामिति** ।। आत्मगुणश्लाघादिर्मानसः, स्वातन्त्र्याभिमानमहंकार इति विवेकः । दुर्मार्गे मनोवाक्कायकर्मणामवैपरीत्यस्य ज्ञानविरोधि-त्वादाह– **एतच्चेति** ।। ८ ।।

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।। १० ।।**
**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ।। ११ ।।**

## भाष्यम्

**सक्तिः स्नेहः । स एवातिपक्वः अभिष्वङ्गः ।'स्नेहस्सक्तिस्स एवाति-पक्वोऽभिष्वङ्ग उच्यते' इत्यभिधानम् ।। १०,११ ।।**

भावप्रदीपिका (प.टी.)– सक्ति अभिष्वङ्गपदयोरर्थभेदं सप्रमाणकमाह– **सक्तिरिति** ।। १० ।।

प्रमेयदीपिका (ज.टी.)– सक्त्यभिष्वङ्गशब्दयोरर्थभेदमाह– **सक्तिरिति** ।। ११ ।।

भावरत्नकोशः (सु.टि.)– 'षञ्ज सङ्गे' इति धातोर्भावे क्तिनि, घञि च निष्पन्नयोः शब्दयोरेकार्थत्वात् पुनरुक्तिः इति शङ्कां भाष्यात्परिहरतीत्याह– **सक्त्यभिष्वङ्गेति** ।। उभयत्र सङ्ग एव धात्वर्थः । स चात्र मनसो विवक्षित इति, स्नेहोऽतिपक्वस्नेहश्च ग्राह्य इति, न पुनरुक्तिरिति भाष्यभावः स्फुटत्वान्नोक्तः ।।

**गीताक्षरार्थस्तु**– पुत्रदारगृहादिषु असक्तिः स्नेहाभावः अनभिष्वङ्गः अतिपक्वस्नेहोऽभिष्वङ्गः, तदभावः । इष्टानिष्टोपपत्तिषु इष्टानाम् अनिष्टानां चोपपत्तयः सम्प्राप्तयः, तासु नित्यं समचित्तत्वम् । यथाऽनिष्टं हेयं तथा वैषयिकमिष्टमपि हेयमेव इत्युभयत्र तुल्यचित्तम् ।। १० ।।

मयि अनन्ययोगेन अन्याविषयकमनोऽभिनिवेशलक्षणोपायेन, अत एव अव्यभिचारिणी न व्यभिचरणशीला, एकान्तभक्तिश्च । विविक्तदेशसेवित्वं विविक्तः शुद्धः चित्तप्रसादकरो यो देशः अरण्यनदीतीरदेवलयादिरूपः, तं सेवितुं शीलमस्य, तस्य भावस्तत्त्वम् । जनसंसदि प्राकृतजनसमवाये । अरतिः असङ्गः ।। ११ ।।

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।। १२ ।।**

## भाष्यम्

**तत्वज्ञानार्थदर्शनम्** अपरोक्षज्ञानार्थं शास्त्रदर्शनम् ।। १२ ।।

भावप्रदीपिका (प.टी.)– तत्त्वज्ञान... इत्याद्यप्रतीतिनिरासाय व्याचष्टे– **तत्त्वेति** ।। १२ ।।

**प्रमेयदीपिका** (ज.टी.)– ननु तत्त्वज्ञानार्थदर्शनं नाम ज्ञानमेव । तत्कथं ज्ञान-साधनेषूच्यते? इत्यत आह– **तत्त्वेति** ।। शास्त्रदर्शनं तत्पर्यालोचनम् । अत्र 'शास्त्रस्य' इत्यध्याहृत्य व्याख्यानमिति ज्ञातव्यम् ।। १२ ।।

**भावबोधः** (र.टि.)– ।। **शास्त्रस्येति** ।। अत्र शास्त्रेत्येवाध्याहारः । विग्रहप्रदर्शनार्थं शास्त्रस्येत्युक्तमिति ज्ञातव्यम् ।। १२ ।।

**भावरत्नकोशः** (सु.टि.)– अवलोकनश्रवणादिरूपस्य शास्त्रदर्शनस्य साक्षादपरोक्षज्ञान-साधनत्वाभावादाह– **शास्त्रदर्शनं तत्पर्यालोचनमिति** ।। 'अथवा सततं शास्त्रविमर्शेन भविष्यति । अपरोक्षज्ञानम्' इति तन्त्रसारसङ्ग्रहवचनात् निरन्तरशास्त्रावमर्शशब्दितं तत्पर्या-लोचनं भवत्येवापरोक्षज्ञानसाधनमिति भावः । 'दर्शनं तत्पर्यालोचनम्' इति क्वचित्पाठः । तत्रोपक्रमाद्यन्यतमप्रमाणकशक्तितात्पर्यावधारणम् उपासनाद्वारा अपरोक्षज्ञानसाधनमित्यर्थः । **अत्र** 'तत्वज्ञानार्थदशनम्' इति गीतायाम् । **अध्याहृत्य** 'तत्वज्ञानार्थं शास्त्रदर्शनम् इति दर्शन-शब्दात् पूर्वम् अर्थशब्दात् परं शास्त्रशब्दं संयोज्येत्यर्थः । 'शास्त्रस्य' इति षष्ठ्युक्तिस्तु 'शास्त्र-दर्शनम्' इत्यत्र भाष्ये विग्रहदशायां 'शास्त्रस्य दर्शनम्' इति षष्ठ्यन्तं शास्त्रपदं ज्ञेयमित्यभिप्रेत्य ।।

श्लोकः १३

**गीताक्षरार्थस्तु– अध्यात्मज्ञाननित्यत्वम्** । अधिक आत्मा अध्यात्मा परमात्मा, तद्विषयकज्ञाने नित्यत्वं निष्ठावत्त्वम् । **तत्त्वज्ञानार्थदर्शनं** तत्त्वस्य अनारोपितस्वरूपस्य भगवतो ज्ञानम् अपरोक्षरूपम् अर्थः प्रयोजनं यस्य तत् तत्त्वज्ञानार्थम्, तच्च तद् दर्शनं च तत्तथा, भगवदपरोक्षनिष्पादनानुकूलशास्त्रपर्यालोचनमित्यर्थः । एतत् 'अमानित्वम्' इत्यादिनोक्तं तत्त्वज्ञानार्थदर्शनम् इत्येतदवसानकं विंशतिसङ्ख्याकधर्मजातं, 'ज्ञायतेऽनेन' इति करणे ल्युटि ज्ञानं ज्ञानसाधनं प्रोक्तं निरूपितम् । अतः एतस्माद् उक्ताद् अमानित्वादिकाद् अन्यथा विपर्ययेण विद्यमानं यत् मानित्वादिकं तदज्ञानं ज्ञानसाधनं न भवति । इतिशब्दः साधनवर्ग-निरूपणसमाप्तौ ।। १२ ।।

**भावदीपिका (श्री.टि.)– ।। शास्त्रस्येति ।।** अत्र 'तत्त्वज्ञानार्थं शास्त्रदर्शनम् इति 'शास्त्र इत्येवाध्याहारः, 'शास्त्रस्य' इति तु विग्रहप्रदर्शनार्थमिति ज्ञेयम् ।। १२ ।।

**भावप्रकाशः (कृ.टि.)–** शास्त्रश्रवणमात्रं नापरोक्षज्ञानसाधनमित्यत आह– **तत्पर्या-लोचनमिति** ।। 'अथवा सततं शास्त्रविमर्शेन भविष्यति' इत्युक्तेरिति भावः ।। १२ ।।

**ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ।। १३ ।।**

## भाष्यम्

**'परं ब्रह्म' इति 'स च यः' (१३.४) इति प्रतिज्ञातमुच्यते । अन्यत् 'यत्प्रभावः' (१३.४) इति । आदिमद्देहादिवर्जितम् अनादिमत् ।।**

भावप्रदीपिका (प.टी.)– 'अनादिमत्' इत्यनेन कथंलक्षणप्रभावावुक्तौ ? इत्यत आह– **परमिति** । परिपूर्णत्वमेव लक्षणमित्यर्थः । अनादिमत् इत्येतदादिराहित्य-मात्रार्थत्वप्रतीतिनिरासाय व्याचष्टे– **आदिमदिति** ।

प्रमेयदीपिका (ज.टी.)– प्रतिज्ञातार्थद्वयप्रतिपादनाय 'ज्ञेयं यत्तत्' इत्यादिकं वाक्य-मिति सूचितम् । तत्र केन तु किमुच्यत इत्यत आह– **परमिति** ।। इति नामोक्त्या । अन्यत् अनादिमदित्यादिकं 'यत्प्रभावः' इति प्रतिज्ञातस्य प्रतिपादकमित्यर्थः ।।

**'आदिरस्यास्तीत्यादिमत् । न आदिमत् अनादिमदिति व्याख्याने न विद्यते आदिः अस्येत्यनादीति बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति दोषं पश्यन्तः केचित्'अनादि' इति 'मत्परम्' इति च पदं विच्छिद्य 'अहं वासुदेवाख्या परा शक्तिः यस्य तत् मत्परम्' इति व्याचक्षते । तदसत् । अर्थासम्भवात् । न हि 'ब्रह्म' इति 'वासुदेवः' इति कश्चिद्भेदः । 'न चावतारेषु पारावर्यम्' इत्युक्तमिति** भावेन यथा **मतुपो न वैयर्थ्यं तथा व्याचष्टे– आदिमदिति ।। आदिः एषामस्तीत्यादिमन्ति । न विद्यन्ते आदिमन्ति यस्य तदनादिमत् । सामर्थ्यात् तानि च देहेन्द्रियगुणक्रियादी-नीत्यर्थः । अथवा पूर्वोक्त एव विग्रहः । नच मतुपो वैयर्थ्यम् । वैदिकं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात् ।** तथा **च ब्रह्म स्वयं कारणं न भवतीति शङ्केत । तन्निवृत्त्यर्थं मतुवन्तेनाऽदिशब्देन नञ्समासस्याऽश्रयणात् ।।**

**भावबोधः (र.टि.)– ।। प्रतिज्ञातार्थद्वयेति ।।** 'स च यो यत्प्रभावश्च' इति प्रतिज्ञा-द्वयरूपसमग्रवाक्योदाहरणेनेत्यर्थः । प्रतीकग्रहणमात्ररूपत्वे तु 'स च यः' इत्येवोदाह्रियेतेति भावः । **न कश्चिद्भेद इति ।।** परं तु ब्रह्म न हि भगवतोऽन्यदित्यादिना भेदाभावस्य समर्थि-तत्वादित्यर्थः । किञ्च अहं वासुदेवाख्या परा शक्तिरित्युक्तेऽर्थाद् रामाद्यवताराणाम् अवरत्वमुक्तं स्यात् । तच्चायुक्तमित्याह– **नचावतारेष्विति ।।** 'परिपूर्णानि रूपाणि समान्यखिलरूपतः' इत्यादिप्रमाणोदाहरणेनेत्यर्थः । 'अनादि' इत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्त्यर्थम् 'अनादिमदित्याह' इति तात्पर्यं मनसि निधाय पक्षान्तरमाह **अथवेति ।।** ननु नञ्समासत्वे आदिशब्दस्य नित्यपुंलिङ्गत्वेन 'अनादिः' इत्येव स्यात् । नतु 'अनादी' इति कथं नञ्समासो वेत्याशङ्कावकाश इत्यत आह– **वैदिकमिति ।।**

**भावदीपः (रा.टि.)– ।। सूचितमिति ।। 'वक्तुम्'** इत्यन्तभाष्येणेति भावः ।। **न कश्चिद्भेद इति** ।। पूर्वाध्याये 'परन्तु ब्रह्म न हि भगवतोऽन्यत्' इत्यादिना तथोक्तिरिति भावः ।। 'अवतारेषु पारावर्यं नास्ति' इति चोक्तं द्वितीयाध्यायान्त्यभागे । अतोऽपि न कश्चिद्भेद इत्यर्थः ।। **पूर्वोक्त एवेति ।।** 'आदिरस्यास्ति' इत्यादिनोक्त इत्यर्थः ।। ननु नञ्समासपक्षे 'अनादिः' इति निर्देशेन भाव्यम्, आदिपदस्य नित्यपुल्लिङ्गत्वात् । तत्कथम् 'अनादि' इत्युक्त्या नञ्समाससंशयः इत्यत आह– **वैदिकं लिङ्गव्यत्ययमित्यादि ।।**

श्लोकः १३

**वाक्यार्थप्रदीपः (पां.टि.)– ।। पूर्वोक्त एवेति ।।** आदिरस्यास्तीति आदिमत् । न आदिमत् अनादिमत् इत्येवं पूर्वोक्त एवेत्यर्थः ।। **नचेति ।** न विद्यते आदिर्यस्येत्यनादि इति बहुव्रीहित्वाश्रयणेनैव विवक्षितत्वसिद्धेरित्यर्थः ।। ननु नञ्समासत्वे आदिशब्दस्य नित्यपुंलिगत्वेन अनादिरित्येव स्यात्, नत्वनादीति । कथं नञ्समासो नेत्याशङ्कावकाश इत्यत उक्तं– **वैदिकमिति ।।** छान्दसमित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। सूचितमिति ।।** 'स च यो यत्प्रभावश्चेति वक्तुं तज्ज्ञानसाधनान्याह इति भाष्येण' इति शेषः । 'परं ब्रह्म' इत्यस्य स्वरूपप्रश्नोत्तरत्वस्फोरणार्थम् इति शब्दमनूद्याध्याहरति– **इति नामोत्तयेति ।।** 'सर्वात्मके ब्रह्मणि वासुदेवे, 'अक्षरं ब्रह्म परमम्' इत्यादौ वासुदेवासाधारणाभिधानब्रह्मश्रुत्या वासुदेवत्वेन प्रवर्तकस्वरूपमवगम्यत इत्यर्थः । 'प्रतिज्ञातादन्यत् इति प्रतीतिनिरासाय 'उच्यते' इत्यनुवृत्तौ अनन्वितमुत्तरभाष्यं साध्याहारं योजयति– **अन्यदनादिमद् इत्यादिकमित्यादिना ।।**

'आदिरस्यास्तीति आदिमत्, न आदिमत् अनादिमत् इति शङ्करभाष्याक्षरानुवादः । अत्र केचित् 'अनादि मत्परम् इति पदं छिन्दन्ति । बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादित्यर्थविशेषं च दर्शयन्ति 'अहं वासुदेवाख्या परा शक्तिर्यस्य तत् मत्परम्' इति । अन्यमतोपन्यासरूपं शङ्करभाष्यम् अर्थतोऽनुवदति– **न विद्यत आदिरित्यादि ।। अर्थासम्भवात्** अहं वासुदेवाख्या परा शक्तिर्यस्य इति विग्रहवाक्यस्य असम्भवदर्थकत्वादित्यर्थः । तदुपपादयति– **नहीति ।। कश्चिद्भेद इति ।।** 'परं तु ब्रह्म न हि भगवतोऽन्यत्, सर्वात्मके ब्रह्मणि वासुदेवे इति द्वादशेऽध्याये वासुदेवब्रह्मणोरभेदस्य समर्थितत्वेन 'अहं वासुदेवाख्या परा शक्तिर्यस्य इत्यनेन प्रतीतस्य भेदस्य दूषितत्वादिति भावः ।

किञ्च 'वासुदेवाख्या परा शक्तिः' इति पक्षे वासुदेवावतारस्य परत्वप्राप्त्या अर्थात् इतरावतारेष्ववरत्वमङ्गीकृतं स्यात्, तदयुक्तम् । 'परिपूर्णानि रूपाणि समान्याखिलरूपतः' इत्यादिप्रमाणोदाहरणेन द्वितीयाध्यायान्ते पारावर्यपक्षस्य दूषितत्वात् । अतोऽपि न परव्याख्यानं युक्तमित्याह– **न चेति ।।**

'अनादि इत्युक्ते स्वयं कारणं न भवतीत्याशङ्का स्यादिति तन्निवृत्त्यर्थमनादिमदित्याह' इत्युत्तरप्रस्थाने मतुपो भाष्यरीत्या मुख्यार्थत्वमङ्गीकृत्यैव प्रयोजनान्तरमन्वाचितम् । तदनु-

श्लोकः १३

रुन्धानः पक्षान्तरमाह– **अथवेति** ।। **उक्त एव** 'आदिरस्यास्तीति आदिमत्, न आदिमद् अनादिमत् इत्युक्त एव । ननु नञ्समासो वाऽयम् इति संशयो न सम्भवति । आदिशब्दस्य 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' इत्यभिधानेन नित्यपुंस्त्वावगमेन, 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति तत्पुरुषसमासे परवल्लिङ्गत्वानुशासनेन च 'अनादिः' इति पुंलिङ्गशब्दश्रवणस्यैव विशेषदर्शनरूपवत्वाद्, इत्यत आह– **वैदिकं लिङ्गव्यत्ययमिति** ।। यद्वा 'सुपां सुलुक्' इति स्मरणाद् 'अनादिः' इति प्रथमविभक्तेर्लुका लोपे 'अनादि' इत्युपपद्यत इति भावेनोक्तम्– **विभक्तिलोपं चेति** ।। वेदतुल्यत्वाद्वैदिकम् इत्युक्तिः ।

**भावदीपिका (श्री.टि.)–** ।। **सूचितमिति** ।। 'स च यो यत्प्रभावश्च' इति वक्तु-मित्यनेनेत्यर्थः । **इति** व्याख्याने मतुपो वैयर्थ्यम् इत्यादिसम्बन्धः । तत्र हेतुः– **न विद्यत इत्यादि** ।। 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति वचनादिति भावः । **बहुव्रीहित्वेति** ।। 'न विद्यते आदिरस्येत्यनादि' इति बहुव्रीहित्वाश्रयणेनैवेत्यर्थः । **विवक्षितार्थः** उत्पत्तिराहित्यम् । **कश्चिद्भेद इति** ।। 'परं तु ब्रह्म न हि भगवतोऽन्यत् ' इत्यादिना पूर्वं भेदाभावस्य समर्थितत्वादिति भावः । किञ्च 'अहं वासुदेवाख्या परा शक्तिः' इत्युक्ते कृष्णेतररामाद्यवताराणाम् अवरत्वमुक्तं स्यात् । न च तद्युक्तमित्याह– **न चेति** ।। **इत्युक्तमिति** ।। 'परिपूर्णानि रूपाणि समान्यखिलरूपतः' इति द्वितीयान्ते प्रमाणोदाहरणेनैत्यर्थः । **तानि चेति** ।। आदिमन्तीत्यर्थः ।

'ब्रह्मणः कारणराहित्यप्रतिपादनमनेन क्रियते' इति भाष्योक्तमुपलक्षणपरमित्याह– **अथवेति** ।। **पूर्वोक्त एवेति** ।। एवं बहुव्रीहिमनङ्गीकृत्य 'आदिरस्यास्तीत्यादिमत्, न आदिमत् अनादिमत् इति पूर्वोक्त एव नञ्समास इत्यर्थः । **वैयर्थ्यमिति** ।। 'अनादि इति बहुव्रीहिणैव विवक्षितार्थसिद्धेरित्यर्थः । ननु नायं संशयः । 'अनादि' इत्येतत् 'परं ब्रह्म' इत्यस्य विशेषणमिति तावदविवादम् । तथा च बहुव्रीहिरित्येव युक्तम् । आदिशब्दस्य नित्यपुंलिङ्गस्यापि बहुव्रीह्यनन्तरं विशेष्यनिघ्नतासम्भवेन नपुंसकत्वोपपत्त्या परं ब्रह्मविशेषणत्वोपपत्तेः । नञ्समासत्वशङ्का त्वनुपपन्नैव । नित्यपुंलिङ्गानादिशब्दस्य परं ब्रह्मविशेषणत्वेऽपि 'अनादिः' इत्येव स्यात्, न तु 'अनादि' इति विशेष्यनिघ्नतापादकबहुव्रीह्यभावात्, इत्यत उक्तम्– **वैदिकमित्यादि** ।। नञ्समासपक्षे 'अनादिः' इति पुंलिङ्गे भाव्ये तद्व्यत्ययेन नपुंसकत्वं वैदिकत्वाद् युक्तम् । अथ वा प्रथमाविभक्तेः सोर्लोपेन वा 'अनादि' इति युक्तमिति मन्यमानस्य नञ्समासत्वशङ्का स्यादेवेत्यर्थः । **बहुव्रीहिर्वेत्यादि** ।। 'अनादि' इत्येवोक्ते 'न विद्यते आदिरस्येत्यनादि' इति बहुव्रीहिर्वा 'न

आदिरनादिः' इति नञ्समासो वेति संशयः स्यादित्यर्थः । नञ्समासाश्रयणे किं बाधकम्? इत्यत आह– **तथा चेति ।। कारणमिति ।।** आदिशब्दस्य कारणवाचित्वादित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। इति सूचितमिति ।।** 'स च यो यत्प्रभावश्च' इति वक्तुं तज्ज्ञानसाधनान्याहेत्यनेनेति शेषः । 'परं ब्रह्म' इत्यस्य स्वरूपप्रश्नोत्तरत्वं समर्थयितुमिति-शब्दात् परमध्याहार्यमाह– **इति नामोक्त्येति ।। कश्चिद्भेद इति ।।** 'परं तु ब्रह्म नहि भगवतोऽन्यत्' इत्युक्तत्वादिति भावः । किञ्चास्मिन् पक्षे कृष्णस्य परत्वं रामादेरवतारस्यावरत्वं लब्धं तच्चायुक्तमित्याह– **न चेति ।।** 'परिपूर्णानि रूपाणि सामान्याखिलरूपतः' इत्यादि-नोक्तमित्यर्थः ।। तात्पर्यानुसारेणाह– **अथ वेति ।।** ननु नञ्समासो वेति कथं संशयः । 'पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्याः' इत्यमरोक्तेरादिशब्दस्य नित्यपुंस्त्वेन समासेऽपि तदावश्य-कत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्युक्तेरित्यत आह– **वैदिकमिति ।।**

## भाष्यम्

**अन्यथा 'अनादि' इत्येव स्यात् ।। १३ ।।**

भावप्रदीपिका (प.टी.)– **स्वरूपादिराहित्यमात्रमर्थः किं न स्यात् ? इत्यत आह– अन्यथेति ।।**

**प्रमेयदीपिका (ज.टी.)– ये त्वेवं प्रयोजनद्वयमनभिधाय 'मतुपः प्रयोगः श्लोक-पूरणार्थः' इत्युक्तवन्तस्तान्निराचष्टे– अन्यथेति ।। अस्मदुक्तप्रयोजनद्वयानङ्गीकार इत्यर्थः । सार्थकेन शब्दान्तरेण श्लोकपूरणसम्भवादिति भावः । ननु बहुव्रीहिमाश्रित्य पुनः मतुपः प्रयोगे दोषः स्यात् । न चैवम् । किन्तु शब्दान्तरमेवैतत् । तत्कथमयं दोषः? अन्यथा 'यद्विकारि' इत्यत्रापि दोषप्रसङ्गात् । मैवम् । बहुव्रीहिं विवक्षित्वाऽल्पेन शब्देनाभिमतार्थप्रतिपादनसम्भवे बहुयत्नाश्रयणस्य दोषत्वेनोक्तत्वात्, 'यद्विकारि' इत्यत्र गौरवाभावात् ।। १३ ।।**

**भावबोधः (र.टि.)– ।। प्रयोजनद्वयेति ।।** आदिमद्देहादिवर्जितत्वप्रतिपादनं ब्रह्म स्वयं कारणं न भवति इत्याशङ्कानिवृत्तिश्चेति प्रयोजनद्वयानङ्गीकारे इत्यर्थः । **शब्दान्तरमेवै-तदिति ।।** आदिः कारणम् अस्यास्तीत्यादिमत् । न आदिमत् अनादिमत् इति

शब्दान्तरमित्यर्थः । **गौरवाभावादिति** ।। बहुव्रीहित्वे 'यद्विकारम्' इति कर्मधारयादित्वे 'यद्विकारि' इत्येव शब्दरूपमित्यकारेकारयोरविशेषादित्यर्थः ।। १३ ।।

**भावदीपः (रा.टि.)–** ।। **शब्दान्तरमिति** ।। 'आदिमन्नेत्यनादिमत्' इति नञ्तत्पुरुष-रूपं शब्दान्तरमित्यर्थः ।। **अभिमतार्थेति** ।। आदिमत्वाभावरूपार्थेत्यर्थः । कारणहीनत्व-रूपपराभिमतार्थेति यावत् । **बहुयत्नेति** ।। मतुबन्तेन नञ्समासाश्रयणरूपेत्यर्थः ।। **गौरवा-भावादिति** ।। बहुव्रीहित्वे यद्विकारमिति कर्मधारयादिन्नन्तत्वे तु 'यद्विकारि' इति । तावता शब्दाधिक्यगौरवं नेति भावः ।। १३ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ।। **दोषः स्यादिति** ।। बहुव्रीहिणैव मत्वर्थलाभात् मतुपो वैयर्थ्यलक्षणदोषः स्यादित्यर्थः ।। **शब्दान्तरमैवैतदिति** ।। आदिः कारणमस्यास्तीति आदिमत् । न आदिमत् अनादिमदित्यस्य बहुव्रीहिगर्भत्वाभावादित्यर्थः । बहुव्रीहिमाश्रित्य मतुपः अप्रयोगेपि वैयर्थ्यं दूषणमस्त्वित्यत आह –**अन्यथेति** ।। कर्मधारयमाश्रित्य मतुबर्थप्रयोगे शब्दान्तरसत्वेनैव तददोषत्वस्य वाच्यत्वादित्यर्थः ।। ननु यद्विकारीत्यत्राप्येष दोषः स्यात् । तत्रापि बहुव्रीह्यनाश्रयणेपि बहुव्रीहिं विवक्षित्वा अल्पेन शब्दान्तरत्वेनैव तददोषत्वस्य वाच्यत्वा-दित्यर्थः ।। ननु चैवं यद्विकारि इत्यत्राप्येष दोषः स्यात् । तत्रापि बहुव्रीह्यनाश्रयणेपि बहुव्रीहिं विवक्षित्वा अल्पेन शब्देन अभिमतार्थप्रतिपादनसम्भवादित्यत आह– **यद्विकारीत्यत्रेति** ।। बहुव्रीहौ कर्मधारयमत्वर्थीये च अर्थगौरवाप्रसंगेन शब्दगौरवस्यैव लाघवन्यायविरुद्धत्वात् । प्रकृते बहुव्रीहित्वे यद्विकारमिति कर्मधारयमत्वर्थीयान्तत्वे च यद्विकारीत्येव शब्दरूपं न त्वनादि अनादिमत् इत्यादाविव शब्दाल्पत्वबहुत्वे । येनोक्तन्यायेनोक्तन्यायविषयत्वं स्यात् । अकारेकारकृतवैषम्यस्य अल्पत्वबहुत्वानापादकत्वेनानुपयुक्तत्वादिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** अपव्याख्याननिराकरणार्थमुत्तरभाष्यमित्याह– **ये त्विति** ।। तथा च शङ्करः 'तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः' इति । श्रीधरोऽप्येवमेवावादीत् । **प्रयोजनद्वयेति** ।। आदिमद्देहादिवर्जितत्वप्रतिपादनम् एकं प्रयोजनम्, ब्रह्म स्वयं कारणं न भवति इति शङ्कानिरासश्चापरं प्रयोजनम् इत्येवमस्मदुक्तप्रयोजन-द्वयानङ्गीकार इत्यर्थः । **शब्दान्तरेण** 'मत्परं ब्रह्म' 'परं ब्रह्म' इत्यादिरूपेण शब्दान्तरेण । **शब्दान्तरम्** 'आदिः कारणमस्यास्तीत्यादिमत् न आदिमत् अनादिमत्, इति अबहुव्रीहि-

रूपोऽयम् । अन्य एव शब्द इत्यर्थः । शब्दान्तरत्वानभ्युपगमे दोषमाह– **अन्यथेति** ।। 'यश्चासौ विकारश्च यद्विकारः, सोऽस्यास्तीति यद्विकारि इति स्वमते अभ्युपगमात्, तत्रापि इनेर्वैयर्थ्यप्रसङ्गेन शब्दान्तरत्वमेव समाधानं वक्तव्यमिति भावः । **अभिमतार्थः** कारणशून्यत्वम् । **बहुयत्नेति** ।। आदौ आदिशब्दान्मतुप्, ततो नञ्समासः । तत्रोक्तदोषपरिहाराय शब्दान्तरत्व-कल्पनम् इत्येवं बहुप्रयत्नाश्रयणस्येत्यर्थः । **गौरवाभावादिति** ।। बहुव्रीहित्वे 'यद्विकारम्' इति भवेत्; तत्र च अनुस्वाराधिक्यम् । कर्मधारयादिन्यन्तत्वे तु 'यद्विकारि' इत्येव भवतीति मात्राधिक्यगौरवाभावादित्यर्थः । 'न दोषः' इति शेषः ।।

**गीताक्षरार्थस्तु** – एवं ज्ञानसाधनमुक्त्वा 'स च यः' इति यत् प्रवर्तकस्वरूपं प्रतिज्ञातम्, यच्च 'यत्प्रभावः' इति प्रभाववचनं प्रतिज्ञातम्, तदुभयं सप्रतिज्ञातमुच्यते– **ज्ञेयं यत्तत् इत्यादिषट्श्लोक्या** ।। यद् ज्ञेयं 'स च यः' इति प्रतिज्ञातं तत्प्रवक्ष्यामि प्रकर्षेण यथावद्वक्ष्यामि । यद्यप्युद्देशक्रमानुसारेण 'यतश्च यत्' इति प्रतिज्ञातं प्रथमत एव वक्तव्यम् । तथापि 'अलौकिकस्य बुद्ध्यारोहे हि साधनानाम् अत्युपयोगः, नतु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोहे' इति ज्ञापयितुं साधनानन्तरमेव प्रभाव उक्तः, तत्प्रसङ्गेन स्वरूपं चेति तात्पर्यं भाष्यटीकयोः स्फुटम् । श्रोतुरादरमुत्पादयितुं तज्ज्ञानफलमुच्यते– **यज्ज्ञात्वेति** ।। अमृतं मोक्षम् अश्नुते प्राप्नोति ।

तत्र 'स च यः' इति प्रतिज्ञातप्रवर्तकस्वरूपोक्तिः । 'परं ब्रह्म' इति नामोक्त्या हि स्वरूपमेव गम्यते । 'यत्प्रभावः इति प्रतिज्ञातमुच्यते 'अनादिमत् इत्यादिनेति विवेकः । 'आदिरेषामस्ति इति आदिमन्ति', योग्यतया देहेन्द्रियगुणकर्मादीनि । न विद्यन्ते आदिमन्ति यस्य तदनादिमत्, आदिमद्देहेन्द्रियादिविवर्जितमित्यर्थः । अथवा आदिरस्यास्तीत्यादिमत्, न आदिमद् अनादिमदिति विग्रहः । न चात्र पक्षे बहुव्रीहित्वाश्रयणेनैव विवक्षितार्थसिद्धेः मतुपो वैयर्थ्यमिति वाच्यम् । वैदिकलिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहिर्वा नञ्समासो वाऽयमिति संशयः स्यात् । तथा च ब्रह्म स्वयं कारणं न भवतीत्यपि शङ्क्येत, तन्निवृत्यर्थं मतुबन्तेन आदिशब्देन नञ्समासस्याश्रयणात् । 'मूर्तामूर्तव्यतीतत्वान्न सन्न वाऽसदुच्यते ।' सच्छब्दः व्यक्तशब्दितकार्यार्थः । असच्छब्दः अव्यक्तशब्दितकारणार्थकः । व्यक्ताव्यक्त-विलक्षणमिति वा ।। १३ ।।

**भावदीपिका (श्री.टि.)– ।। प्रयोजनद्वयेति ।।** आदिमद्देहादिवर्जितत्वप्रतिपादनं ब्रह्म स्वयं कारणं न भवति इत्याशङ्कानिवृत्तिश्चेति प्रयोजनद्वयानङ्गीकारे 'अनादि' इत्येव स्यात् । अतो मतुपो वैयर्थ्यमित्यर्थः । ननु न वैयर्थ्यम् । श्लोकपूरणार्थो मतुपः प्रयोग इत्युक्तत्वात् इत्यत आह– **सार्थकेनेति ।।** 'अनादि यत्परं ब्रह्म' इति यच्छब्दादिना शब्देन श्लोक-पूरणसम्भवात् । न सत् तत् इति तच्छब्दस्योत्तरत्र सत्वेनापेक्षिततया यच्छब्दस्येह सार्थकत्वादिति भावः ।।

**शब्दान्तरमिति ।।** न विद्यते आदिर्यस्येत्यनादि' इति विग्रहमकृत्वा 'आदिः कारणमस्यास्तीत्यादिमत्, न आदिमत्' इति शब्दान्तरमेवेत्यर्थः । अयम् अन्यथा इत्यनेनोच्यमानः । **अन्यथेति ।** बहुव्रीहिमनङ्गीकृत्य शब्दान्तरत्वाश्रयणेपि दोषश्चेदित्यर्थः । **दोषेति ।** यो विकारः अस्यास्ति(अस्येति) बहुव्रीहिणैव विवक्षितार्थसम्भवेन इनो वैयर्थ्यशङ्कायां 'यश्चासौ विकारश्च' इति कर्मधारयं विधाय 'सोस्यास्तीति' इति शब्दान्तरमित्येव परिहारो वाच्यः । तद्वदत्रापीति भावः । **अल्पेन** अनादीत्यनेन । **अभिमतार्थः** कारणराहित्यम् । बहुव्रीहित्वे 'यद्विकारम्' इति शब्दरूपम् 'कर्मधारयादिनिः' इति पक्षे 'यद्विकारि' इति शब्दरूपम् इति अकारस्य इकारस्य चाविशिष्टत्वेन शब्दगौरवाभावादित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)– ।। ये त्विति ।।** शङ्कराचार्या इत्यर्थः । **प्रयोजनद्वयेति ।।** आदिमद्देहादिवर्जितत्वप्रतिपादनं ब्रह्म स्वयं कारणं न भवतीति शङ्कानिरासश्चेति प्रयोजन-द्वयेत्यर्थः । **शब्दान्तरमिति ।।** आदिः कारणमस्यास्तीत्यादिमत् न आदिमदनादिमत् । इति शब्दान्तरमित्यर्थः । अर्थभेदतः शब्दभेद इति मतेनेदम् । प्रकृते च बहुव्रीहिनञ्समासाभ्याम् अत्यन्ताभावान्योन्याभावयोः बोधनादर्थभेद इति ज्ञेयम् । **गौरवाभावादिति ।।** बहुव्रीहित्वे यद्विकारमिति भवति । ततश्चानुस्वाराधिक्यं कर्मधारयादिन्नन्तत्वे तु यद्विकारीति । अतो मात्राधिक्यगौरवाभावादित्यर्थः ।। १३,१४ ।।

## सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
## सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।। १४ ।।

**भावरत्नकोशः (सु.टि.)–** किञ्च तत् ब्रह्म सर्वतः पाणिपादम् । 'सर्वतः' इति सप्तम्यर्थे तसिः । पाणिपादशब्दौ तच्छक्तिलक्षकौ, अर्षआद्यजन्तौ च । केशादिसर्वावयवेषु पाणिपाद-

श्लोकः १५

शक्तिमत् । सर्वतोऽक्षिशिरोमुखं सर्वावयवेषु अक्षिशिरोमुखशक्तिमत् । सर्वतः श्रुतिमत् सर्वावयवेषु श्रवणशक्तिमत् । पाणिपादादिसर्वावयवयुक्तैः अणुतररूपैः सर्वत्र स्थितत्वाद्वा 'सर्वतः पाणिपादम्' इत्यादि । सर्वचेतनाचेतनात्मकं जगद् आवृत्य व्याप्य तिष्ठति ।। १४ ।।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।। १५ ।।**

## भाष्यम्

**सर्वेन्द्रियाणि गुणांश्चाभासयतीति सर्वेन्द्रियगुणाभासम् । इन्द्रिय-वर्जितत्वाद्यर्थ उक्तः पुरस्तात् ।। १४ ।।**

भावप्रदीपिका (प.टी.)– सर्वेन्द्रिय... इत्येतद्व्याचष्टे– **सर्वेति** । सेन्द्रियं सगुणं ब्रह्म कथमिन्द्रयादिरहितमुच्यत इति । तत्राह– **इन्द्रियेति** ।

प्रमेयदीपिका (ज.टी.)– 'अहं परा शक्तिः यस्य' इति व्याख्याने अर्थासम्भवं कश्चिद् अन्यथा प्राह । 'ब्रह्मणः सर्वविशेषप्रतिषेधेनैवात्र विजिज्ञापयिषितत्वात् शक्तिमत्वप्रतिपादनं विरुद्धम्' इति । तदसत् । अत्र विशेषत्त्वस्य दर्शनादिति भावेनाऽह– **सर्वेति** ।। गुणान् तद्विषयान् आभासयति प्रत्याययति प्रत्येतीति वा । भासतेः पचाद्यच् । एवं 'सर्वतः पाणिपादं तत्' 'सर्वभृत्' 'गुणभोक्तृ च' इत्यादिक-मप्युदाहार्यम् । कथं तर्हि 'सर्वेन्द्रियविवर्जितम्' 'निर्गुणम्' 'अचरम्' (१३.१६) इत्याद्युक्तमित्यत आह– **इन्द्रियेति** ।। आदिशब्दात् परं 'शब्द' इत्यध्याहार्यम् । पुरस्तात् द्वितीये ।। १४ ।।

भावबोधः (र.टि.)– ।। **शब्देत्यध्याहार्यमिति** ।। इन्द्रियवर्जितत्वप्रतिपादकशब्दस्य प्राकृतेन्द्रियराहित्यादिरूपोऽर्थ उक्तः, नत्विन्द्रियवर्जितत्वादिरूप इत्यर्थः ।। १५-१८ ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **भासतेः पचाद्यचिति** ।। तथाच गुणाभासमित्युपपन्नम् ।अन्यथा गुणाभाः इत्येव स्यादिति भावः ।।

श्लोकः १५

**भावरत्नकोशः (सु.टि.)– ।। कश्चित्** शङ्करः । तथा च तदीयं भाष्यम् 'न त्वर्थः सम्भवति । ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वात् । 'न सत् तन्नासदुच्यते' इति विशिष्टशक्तिमत्त्वप्रदर्शनविशेषप्रतिषेधश्चेति विप्रतिषिद्धम्' इति । तदिदं सङ्क्षिप्यानुवदति– **ब्रह्मण इति ।। विजिज्ञापयिषितत्वात्** विशेषेण ज्ञापयितुमिष्टत्वात् । 'विषयान्वेत्ति' इति तात्पर्यनिर्णयोक्तं हृदि कृत्वाऽऽह– **गुणान् विषयानिति, प्रत्येतीति वेति च ।। पचाद्य-जिति ।।** 'प्रत्याययति' इत्यर्थपक्षे आङ्पूर्वाद् हेतुमण्यन्ताद्भासतेः 'नन्दिग्रहिपचादिभ्यो ल्युणिनि अचः' इति सूत्रविहितः कर्तरि अच्प्रत्ययः । प्रत्येति इत्यर्थे तु स्वार्थे ण्यन्तात् । उभयत्रापि 'णेरनिटि' इति णिलोप इति भावः । **इत्यादिकमिति ।।** अत्रादिशब्देन 'भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च' इत्यादिगुणावेदकवाक्यग्रहः । **तर्हि** यदि सविशेषत्व-मभिसन्धित्सितम्, तर्हि । नन्विन्द्रियवर्जितत्वादेः अशब्दत्वेनार्थाबोधकत्वादाह– **शब्देत्य-ध्याहार्यमिति ।।** 'इन्द्रियवर्जितम्', 'निर्गुणम्' 'अचरम्' इत्यादिरूपस्येन्द्रियविवर्जितत्वादि-प्रतिपादकशब्दस्य प्राकृतेन्द्रियवर्जितत्वादिरूपोऽर्थः । 'वदन्ति च लौकिकवैलक्षण्ये अभाव-शब्दम्' इत्यादिना द्वितीयाध्याये उक्त इति नैतद्वचनजातं सविशेषत्वविरोधीति भाव इत्यभिसन्धिः ।। १४ ।।

**गीताक्षरार्थस्तु–** अपि च सर्वेन्द्रियगुणाभासम् इन्द्रियाणि गुणाः विषयाश्च इन्द्रियगुणाः, सर्वे च ते इन्द्रियगुणाश्च सर्वेन्द्रियगुणाः । सर्वाणि इन्द्रियाणि, सर्वांश्च गुणान् विषयान् आभासयति प्रत्याययति प्रत्येति वेति, भासतेः पचाद्यच् सर्वेन्द्रियगुणाभासम् । प्राकृतैर्भिन्नैर्वा इन्द्रियैर्विहीनत्वात् सर्वेन्द्रियविवर्जितम् । सर्वं बिभर्तीति सर्वभृत् । सर्वभृदपि असक्तं निर्लेपम् । निर्गतं गुणेभ्यः सत्त्वादिभ्य इति निर्गुणम् । गुणभोक्तृ शुभसाराणां भोक्तृ च ।। १५ ।।

**भावदीपिका (श्री.टि.)– ।। भासतेरिति ।।** भासधातोः 'नन्दिग्रहि' इत्यादिना कर्त्रर्थकपचाद्यच्प्रत्यये 'भास' इत्यकारान्तः साधुरित्यर्थः । एवं सविशेषत्वप्रतिपादनपरतया । **कथं तर्हीत्यादि ।।** सर्वतः पाणिपादादिमतः सर्वेन्द्रियवर्जितत्वाचरत्वयोः, गुणभोक्तुः निर्गुण-त्वस्य चायोगादिति भावः । इन्द्रियवर्जितत्वादिरूपार्थस्यानुक्तेराह–**शब्देतीति ।। द्वितीय इति ।।** 'वदन्ति च लौकिकाद्वैलक्षण्येऽभावशब्दम् इत्यादिनेत्यर्थः ।। १५ ।।

**भावप्रकाशः (कृ.टि.)– ।। पचाद्यजिति ।।** आद्यपक्षे आङ्पूर्वाद्धेतुमण्ण्यन्ताद्भासतेः पचाद्यच् । द्वितीये स्वार्थे ण्यन्तात् । उभयत्रापि 'णेरनिटि' इति णिलोप इति बोध्यम् ।

श्लोकः १६-१८

**गुणभोक्तृ चेत्यादिकमिति** ।। आदिपदेन 'ग्रसिष्णु प्रभविष्णु च' इत्यादिसङ्ग्रहः । **कथं तर्हीति** ।। सर्वेन्द्रियवर्जितत्वस्य 'सर्वत:पाणिपादम्' इत्यादिना निर्गुणत्वस्य 'सर्वभूत' इत्यादिगुणोक्त्या 'चरगतिभक्षणयोः' इति धातोर्भक्षणादिशून्यत्वरूपस्याचरत्वस्य 'गुणभोक्तृ च' इत्यादिना विरोधादिति भावः । नन्विन्द्रियवर्जितत्वाद्यर्थ इत्यस्य कर्मधारयत्वे 'उक्त' इत्यनुपपन्नम् । इन्द्रियवर्जितत्वादेः प्रागनभिधानात् षष्ठीसमासत्वे बाधः । अर्थस्य वाच्याभावादित्यतोऽन्त्यमङ्गीकृत्याह– **शब्देत्यध्याहार्यमिति** ।। इन्द्रियवर्जितत्वादिप्रतिपादकशब्दस्य प्राकृतेन्द्रियवर्जितत्वादिरूपार्थ इत्यर्थः ।। १५ ।।

**बहिरन्तश्च भूतानामचरं चरमेव च ।**
**सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ।। १६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** भूतानां नित्यसिद्धानां ब्रह्मादिजीवानाम् । बहिरन्तश्च 'तिष्ठति' इत्यनुषज्यते । अन्यथाभावराहित्याद् अचरम् सर्वदेशसञ्चरणवत् चरं च । सूक्ष्मत्वाद्रूपरसादिहीनवस्तुत्वात्तद् ब्रह्म अविज्ञेयं चक्षुरादीन्द्रियाविषयः । सूक्ष्मत्वात् अव्यक्तत्वाद्विशिष्टतया विलक्षणतया च सर्वैः अज्ञेयमिति वा । किञ्च तद् ब्रह्म सर्वगतत्वाद् दूरस्थितमपि अन्तिके च । 'तिष्ठति' इत्यनुवर्तते । 'स्थितम् इति वक्ष्यमाणाकर्षो वा ।।१६।।

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ।। १७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** भूतेषु सुरनरतिर्यगादिषु प्राणिषु अविभक्तं प्राज्ञबुद्ध्यपेक्षया स्वयम् अन्तर्भेदहीनमपि, विभक्तम् अज्ञप्रतीत्यपेक्षया भिन्नम् इव स्थितम् । भूतभर्तृभूतानां पोषकं स्थितिकाले, ग्रसिष्णु ग्रसनशीलं प्रलयसमये, प्रभविष्णु नानाविधजगदुत्पादशीलम् इति तद् ब्रह्म ज्ञेयम् ।। १७ ।।

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।। १८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तद् ब्रह्म ज्योतिषां सूर्यादिप्रकाशकवस्तूनां

ज्योतिः प्रकाशनशक्तिप्रदम् । तमसः अव्यक्तात् मृत्योः अज्ञानाद्वा परम् । तेनास्पृष्टमुच्यते 'आदित्यवर्णं तमसः परस्तात्' इत्यादौ । ज्ञानम् अवबोधस्वरूपम् । 'स्वयमेवात्मनाऽऽत्मानं वेत्थ' इति स्वज्ञेयत्वाद् ज्ञेयम्, स्वप्रकाशमित्यर्थः । अन्यज्ञेयत्वस्य 'ज्ञेयं यत्तत् प्रवक्ष्यामि' इति पूर्ववाक्य एवोक्तत्वादत्र 'ज्ञेयम्' इति स्वज्ञेयत्वमेवाभिप्रेतमिति तात्पर्यनिर्णये स्फुटम् । ज्ञानेन मुक्तौ प्राप्यत्वाद् ज्ञानगम्यं सर्वस्य प्राणिजातस्य हृदि विष्ठितं विशेषेण नियन्तृ । तथाविधतया वाऽवस्थितम् ।। १८ ।।

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ।। १९ ।।**

## भाष्यम्

**विकारान्तर्भावाज्ज्ञानसाधनं प्रथमत उक्तम् । बहुत्वात् साधनात्युपयोगात् प्रभावः ।।**

भावप्रदीपिका (प.टी.)– 'यतश्च यत्' इति पूर्वप्रतिज्ञातमनुक्त्वा, ज्ञानसाधनं प्रथमतः कथमुच्यत इत्यत आह– **विकारेति** । तथाऽप्युद्देशक्रममुल्लङ्घ्य लक्षणप्रभावौ किमित्यादावुदितौ इत्यत आह– **बहुत्वादिति** ।।

प्रमेयदीपिका (ज.टी.)– ननु ब्रह्मणि प्रतिपादिते केन साधननेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां साधनं पश्चाद् वक्तव्यम् । तत्कुतः प्रथमत उक्तम्? इत्यत आह– **विकारेति** ।। विकारेष्वन्तर्भावं ज्ञापयितुं तदनन्तरमुपोद्घातप्रक्रिययोक्तमिति भावः । उद्देशक्रमानुसारेण 'यतश्च यत्' (१३.४) इति प्रथममनुक्त्वा 'स च यो यत्प्रभावश्च' (१३.४) इत्येतत् कुत उक्तम्? इत्यत आह– **बहुत्वादिति** ।। सूचीकटाहनिर्माणादौ बहुत्वस्य प्राथम्यव्यभिचाराद् हेत्वन्तरोक्तिः । अलौकिकस्य प्रभावस्य बुद्ध्यारोहे हि साधनानामत्युपयोगो नतु तावान् लौकिकस्य प्रेरकत्वस्यानुभवारोह इति ज्ञापयितुं ज्ञानसाधनानन्तरमेव प्रभाव उक्तः । तत्प्रसङ्गेन स्वरूपं चेति भावः ।। १९ ।।

भावदीपः (रा.टि.)– ।। साधनमिति ।। अमानित्वादिज्ञेयब्रह्मसाधनं 'ज्ञेयं यत्तत्' इत्याद्युक्त्यनन्तरं वक्तव्यमित्यर्थः ।। विकारेष्विति ।। इच्छाद्वेषादिष्वित्यर्थः ।। तदनन्तरम्

श्लोकः १९

इच्छाद्युत्त्यनन्तरम् ।। **हेत्वन्तरेति** ।। 'साधनात्युपायात्' इत्यादिहेत्वन्तरोक्तिरित्यर्थः ।। **तावानिति** ।। साधनानामत्युपयोग इत्यर्थः ।। **प्रेरकत्वस्येति** ।। 'यतो यत्' इत्यत्र 'यतः' इत्यनेन उक्तप्रेरकत्वस्येत्यर्थः ।। १९ ।।

**भावरत्नकोशः (सु.टि.)–** ।। **कुतः** कस्मात् प्रयोजनात् किमर्थमिति यावत् । भाष्येऽन्तर्भावशब्दस्तज्ज्ञापनलक्षकः । पञ्चमी ल्यब्लोपनिमित्ता । तथा च 'अन्तर्भाव-ज्ञापनमुद्दिश्य' इति लभ्यत इति भावेन तत्र निर्गलितं दर्शयति– **विकारेष्वन्तर्भावं ज्ञापयितु-मिति** ।। **तदनन्तरं** विकारनिरूपणानन्तरम् । **उपोद्घातेति** ।। अलौकिकब्रह्मतद्धर्मान् बुद्धिमारोहयितुम्. अमानित्वादिसाधनं ज्ञेयनिरूपणात् पूर्वमित्यर्थः । **बहुत्वस्य** अनल्पत्वस्य । **हेत्वन्तरोक्तिः** 'साधनात्युपयोगात्' इति हेत्वन्तरोक्तिः ।

भाष्योक्तमत्युपयोगं दर्शयति– **अलौकिकस्येति** ।। सर्वलोकविलक्षणतया आगमैकवेद्यस्य आदिमदेहेन्द्रियगुणकर्मादिवर्जितत्वरूपस्य **प्रभावस्य** । **साधनानाम्** अमानित्वादीनाम् । **अत्युपयोगः** मानदम्भादियुक्तपुरुषाणां भगवत्प्रभावो न बुद्धिमारोहतीति प्रमाणैरावेदनादिति भावः । **लौकिकस्य** 'दारुयन्त्रमयप्रतिमादौ यन्तुः, अमात्यादौ राजादेः **प्रेरकत्वस्य** च । लौकिकप्रमाणसिद्धस्यानुभवारोहे साधनात्युपयोगो न' इति **ज्ञापयितुम्** । 'प्रभावः' इत्यतः पूर्वं शेषोक्तिः– **ज्ञानसाधनानन्तरमेवेति** ।। 'उक्तम्' इति पूर्वभाष्यपदस्य लिङ्गव्यत्ययेनान्वय इति भावेनोक्तम्– **उक्त इति** ।। **लौकिकस्य** वेदेतरप्रमाणगृहीतव्याप्तिकानुमानसिद्धस्य । अनुमानं चेत्थम् 'विमतं क्षेत्रं केनचिन्नियतम् अस्वतन्त्रत्वाद्, असर्वज्ञत्वाद् अपर्याप्तशक्तिकत्वाच्च यथा रथादि इत्यपि आहुः । नन्वेवं ज्ञानसाधननिरूपणानन्तरं प्रभावस्य निरूप्यत्वमस्तु । 'स च यः इतिप्रेरकस्वरूपनिरूपणस्य तु का सङ्गतिः इत्यत आह– **तत्प्रसङ्गेनेति** ।। प्रभावनिरूपणं हि प्रभाविनिरूपणानुबद्धम् । अतस्तत्प्रसक्ततया प्रभाविनः प्रेरकस्य स्वरूपं प्रेरणोप-योगिधर्मवैशिष्ट्यलक्षणमुक्तमित्यर्थः ।।

**गीताक्षरार्थस्तु–** उक्तमुपसंहृत्य तज्ज्ञानं स्तूयते– **इति क्षेत्रमिति** ।। इति 'महाभूतानि' इत्युक्तप्रकारेण क्षेत्रम्, ज्ञानम् अमानित्वादिनोक्तं ज्ञानसाधनम् ।तथाशब्दः समुच्चये ।ज्ञेयं यत् तत् इत्यादिनोक्तं तद् ब्रह्म च समासतः सङ्क्षेपेणोक्तम् । एतत् क्षेत्रादि विज्ञाय विशेषेण ज्ञात्वा मद्भावाय मय्यर्पितस्थितये उपपद्यते अर्हो भवति ।। १९ ।।

**भावदीपिका (श्री.टि.)– ।। विकारेष्विति ।।** अमानित्वादिधर्माणामपि विकारत्वादिति भावः । **तदनन्तरम्** विकारनिरूपणानन्तरम् । **उपोद्घातेति ।।** ब्रह्मणस्तद्धर्मणः बुद्ध्यारोहसम्पादकत्वेन आदावुक्तमित्यर्थः । **प्रथममिति ।** 'स च यः' इत्याद्यपेक्षया प्रथमं 'यतश्च यत् ' इति प्रतिज्ञा, तस्योत्तरम् 'उपद्रष्टा' इति प्रथममनुक्त्वेत्यर्थः । **इत्येतत्कुत इति ।।** इत्येतयोः प्रतिज्ञातयोः उत्तरम् 'अनादिमत्परं ब्रह्म इत्यादिना कुत उक्तमित्यर्थः । **बहुत्वस्येति ।।** अनल्पत्वस्येत्यर्थः । हेत्वन्तरोक्तिः– **'साधनात्युपयोगात्' इति ।।** तद्विवरणम्– **अलौकिकस्येत्यादि ।।** 'यावान्' इति शेषः । अनादिमत्त्वादिरूपालौकिकप्रभावस्य अमानित्वादिधर्मरहितानां पुंसां लौकिकरीत्या बुद्धावनारोहेण अमानित्वादिसाधनानां प्रभावस्य बुद्ध्यारोहेऽत्युपयुक्तत्वात् ज्ञानसाधनामानित्वादिनिरूपणानन्तरमेव प्रभावो निरूपितः । राजादेर्लोकप्रेरकत्वस्य दर्शनेन लोकरीत्या कथंचित्प्रेरकत्वस्य अमानित्वादिधर्मशून्यानामपि पुंसां बुद्ध्यारोहसम्भवेनामानित्वादेः प्रेरकत्वस्य बुद्ध्यारोहेऽत्युपयोगाभावाद् ज्ञानसाधनामानित्वादिनिरूपणानन्तरमेव उद्देशक्रमानुसारेण प्राप्तमपि 'यतश्च यत् इत्यस्योत्तरं नोक्तमित्याशयः । नन्वेवं ज्ञानसाधननिरूपणानन्तरं प्रभावस्य निरूपणमस्तु । 'स च यः' इत्युक्तप्रेरकस्वरूपस्य तदनन्तरं निरूपणे का सङ्गतिः? इत्यत आह– **तत्प्रसङ्गेनेति ।।** प्रभावनिरूपणप्रसङ्गेनेत्यर्थः । 'अनादिमत् इत्यादिप्रभावप्रतिपादकशब्दस्य विशेष्यापेक्षायां 'परं ब्रह्म' इत्युक्तौ 'स च यः' इति प्रेरकस्वरूपनिरूणं च तेन लब्धमिति भावः ।। १९ ।।

**भावप्रकाशः (कृ.टि.)–** अन्तर्भावशब्दस्तज्ज्ञानलक्षकः । ल्यब्लोपनिमित्ता पञ्चमी । ततश्चान्तर्भावज्ञानमुद्दिश्येति पर्यवस्यतीति भावेन व्याचष्टे– **अन्तर्भावं ज्ञापयितुमिति ।। अलौकिकस्येति ।।** वेदैकगम्यस्येत्यर्थः । **लौकिकस्येति ।।** वेदे शब्देतरप्रमाणगृहीतव्याप्तिकानुमानसिद्धस्येत्यर्थः । अनुमानं चेत्थम् । विमतं केनचिन्नियतम् अपर्याप्तशक्त्यादिमत्त्वात् रथादिवदिति । तर्हि स्वरूपोक्तिरसङ्गतेत्यत आह– **तत्प्रसङ्गेनेति ।।** १९ ।।

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ।। २० ।।**

श्लोकः २०

# भाष्यम्

**'यतश्च यत्' (१३.४) इति वक्तुं प्रकृतिविकारपुरुषान् सङ्क्षिप्याऽह– प्रकृतिमिति ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकानवतारयति– **यतश्चेति** । 'यतश्च यत्' इति प्रतिज्ञातप्रवर्तकं वक्तुं प्रवर्त्यं दर्शयतीत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ननु 'प्रकृतिं पुरुषं चैव विद्धि' इत्यादिकमप्रतिज्ञातं किमित्युच्यते । मैवम् । 'यादृक् च' (१३.४) इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्य कथनात् । तत्प्रतिज्ञाक्रमेण प्रागेव कुतो नोक्तमित्यत आह– **यतश्चेति** ।।

'यतश्च यत्' (१३.४) इति प्रतिज्ञातं प्रेरकस्वरूपं तावत्प्रभावानन्तरं वक्तव्यं प्राप्तम् । तत्र प्रेरकस्य स्वरूपनिरूपणं प्रेर्यज्ञानमपेक्षते । प्रेर्यं च सप्रकारं क्षेत्रम् । अतः प्रेरकस्वरूपं वक्तुमनेन प्रेरणीयं सप्रकारं क्षेत्रमुच्यते । तस्य प्रागपि वचने गौरवं स्यादिति भावः । तर्हि 'प्रकृति' इत्यादि कथमुच्यते? ईश्वरातिरिक्तस्सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमित्युच्यते । तत्र प्रकृतिशब्देन 'महाभूतानि' (१३.६) इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते । विकारशब्देनेच्छाद्युपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयायास्सर्वे विकारा विवक्षाविशेषवशेन पृथगुपात्ताः । पुरुषशब्देन जीव इति ।। 'यावत् सञ्जायते' (१३.२७) इत्यादिना पुनर्वक्ष्यमाणत्वात् पुनरुक्तिदोषं परिहर्तुं 'सङ्क्षिप्य' इत्युक्तम् । **आह सप्रकारान्** निरूपयति ।।

भावबोधः (र.टि.)– ।। **प्रागपि वचन इति** ।। 'यादृक्च' इति प्रतिज्ञानुसारेण 'यच्च' इति प्रतिज्ञातक्षेत्रस्वरूपस्य 'पञ्च चेन्द्रियगोचराः' इत्यन्तेन निरूपणानन्तरमपीत्यर्थः । **प्रकृतीत्यादि कथमिति** ।। प्रकृतिशब्दवाच्यभूतादिक्षेत्रस्य 'यच्च' इति प्रतिज्ञाविषयत्वात् 'महाभूतानि' इत्यनेनोक्तत्वाच्चेच्छादिविकाराणां 'यद्विकारि' इति प्रतिज्ञाविषयत्वात् 'इच्छाद्वेष' इत्यादिनोक्तत्वाच्च पुरुषपदोक्तजीवस्य क्षेत्रभिन्नत्वेन 'यच्च' इत्यादिप्रतिज्ञाविषयत्वाभावात् कथं तदुक्तेः 'यादृक्च' इति प्रतिज्ञातोक्तित्वमिति भावः । **ईश्वरातिरिक्त इति** ।। 'चेतनाचेतनं चैतत् सर्वं क्षेत्रमितीरितम्' इति वचनादिति भावः । नन्वेवमपि 'यादृक्च' इति प्रतिज्ञातोक्तित्वं

कथमस्येत्यत आह– **सप्रकारानिति** ।। प्रकृतिपुरुषयोरनादित्वरूपस्य सत्त्वादीनाम् अल्पविकारत्वरूपस्य, इच्छादीनां बहुविकारत्वरूपस्य प्रकारस्य निरूपणादिति भावः ।। २० ।।

**भावदीपः (रा.टि.)–** ।। **स्वरूपं चेति** ।। 'परं ब्रह्म' इति ब्रह्मस्वरूपं 'स च यः' इति प्रतिज्ञातमित्यर्थः ।। **प्रभावानन्तरमिति** ।। 'अनादिमत्' इत्यादि 'उपपद्येत' इत्यन्तग्रन्थान्तरमित्यर्थः ।। **अनेनेति** ।। 'प्रकृतिं पुरुषं च' इत्यादिनेत्यर्थः ।। **प्रकृत्यादीति कथमिति** ।। 'महाभूतानि' इत्यादिना प्रकृत्यादेरनेकस्येच्छादिविकाराणां चोक्तत्वात् पुरुषपदेनेश्वरश्चेत् सोऽपि 'अनादिमत्परं ब्रह्म' इति प्रागुक्त एवेति भावः ।।

'यादृक् च' इति प्रतिज्ञातोक्तिपरत्वलाभायाऽह– **सप्रकारान्निरूपयतीति** ।। प्रकृतिपुरुषयोरनादित्वरूपं सत्वादीनां सर्गकालीनाल्पीभवत्प्रकृतिसम्भवत्वरूपम् इच्छादिविकाराणां बहुत्वप्रकृतिसम्भवत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्येके । अन्ये तु प्रकृतेः कार्यकारणकर्तृत्वहेतुत्वरूपं, पुरुषस्य भोक्तृत्वरूपं, गुणानां सदसद्योनिगमनजन्मकारणत्वरूपं प्रकारं निरूपयतीत्यर्थ इत्याहुः ।।

**भावरत्नकोशः (सु.टि.)–** ।। **कथनात्** 'प्रकृतिं पुरुषं च' इत्यादिना । **प्रागेव** क्षेत्रनिरूपणाद् अनन्तरं विकारनिरूपणाच्च प्रागेव । **वक्तुम्** 'उपद्रष्टा इत्यादिना' इति शेषः । **अनेन** प्रकृतिं पुरुषं च' इत्यनेन । **प्रागपि** 'यादृक्च' इति प्रतिज्ञानुसारात् 'पञ्च चेन्द्रियगोचराः' इत्यन्तेन 'यच्च' इति प्रतिज्ञातक्षेत्रोक्त्यनन्तरमपीत्यर्थः ।

**तर्हि** यद्यत्र सप्रकारं क्षेत्रं विवक्षितम्, तर्हि । प्रकृतिशब्दः पुरुषशब्दश्च कथं भाष्ये उपात्तः ? प्रकृतिपुरुषयोः पूर्वं केनापि पदेनाप्रतिज्ञातत्वात् । प्रत्युत 'महाभूतानि' इत्यादिना परिगणितानामेव क्षेत्रत्वावगमात् । पुरुषशब्दस्य भगवत्परत्वे प्रेर्यत्वायोगादिति हृदयम् । परिहरति– **उच्यत इति** ।। 'चेतनाचेतनं त्वेतत् सर्वं क्षेत्रमितीरितम् ' इति तात्पर्यनिर्णयवचनं हृदि कृत्वाऽऽह– **सर्वोऽपीति** ।। ननु 'इच्छादयो विकाराः' इति इच्छाद्वेषादीनामेव विकारत्वेन भाषितत्वात् तद्विरोधः स्यात् इति चोद्यपरिहारायाह– **इच्छाद्युपलक्षिता इति** ।। 'इच्छा द्वेषः सुखं दुःखम्' इतीच्छादिपदोपलक्षिता इत्यर्थः । ननु गुणत्रयादीनां महदादिपृथिव्यन्तानां 'महाभूतानि' इत्युक्तक्षेत्रान्तर्भावेन प्रकृतिशब्देनैव गृहीतानां कथं विकारशब्देन ग्रहणम् इत्यत उक्तम् **क्षेत्रान्तर्भूता अपीति** ।।

श्लोकः २०

यद्यप्युक्तरीत्या क्षेत्रान्तर्भूताः । तथापि पृथगुपात्ताः । केन निमित्तेन इत्यतो 'गुणानां च विकारत्वेऽपि अधिकविकारत्वविवक्षया अन्येषाम्' 'विकारांश्च गुणांश्च' इति पृथगुक्तिः इति, 'विशेषविकृतिस्थिताः' इति च तात्पर्यनिर्णयोक्तिं हृदि कृत्वोक्तम्– **विवक्षाविशेषवशेनेति** ।। गुणत्रयाणाम् उत्तरोत्तरं महदादिकारणविवक्षया क्षेत्रत्वम् प्रकृतिं प्रत्युपादेयत्वविवक्षया विकारत्वम् इति विवक्षाविशेषवशेनेत्यर्थः । 'तेषामत्यल्पोऽपि विशेषो लयात् सर्ग इति विकाराः पृथगुक्ताः' इति भाष्ये वक्ष्यमाणविवक्षाविशेषवशेनेत्यर्थ इत्यपि आहुः । ननु क्षेत्रादीनामुक्तत्वाद् 'आह' इति किमित्युच्यते? इति चोद्यपरिहाराय, 'यादृक्च' इति प्रतिज्ञातप्रकारोक्तिघटनाय च व्याचष्टे– **सप्रकारान्निरूपयतीति** ।। प्रकृतिपुरुषयोरनादित्वरूपम्, सत्त्वादीनां सर्गकालीनाल्पविशेषवत्त्वप्रकृतिसम्भवत्वरूपम्, इच्छादिविकाराणां बहुविशेषवत्त्वप्रकृतिसम्भवत्वरूपम्, जीवस्य भोक्तृत्वरूपं च प्रकारं निरूपयतीत्यर्थ इति भावः ।।

**भावदीपिका (श्री.टि.)– ।। प्रागेवेति ।।** क्षेत्रनिरूपणानन्तरं विकारनिरूपणाच्च प्रागेवेत्यर्थः । **वक्तव्यं प्राप्तमिति** ।। वक्तव्यतया प्राप्तमित्यर्थः । **वक्तुम्** 'उपद्रष्टा इत्यनेन' इति शेषः । **प्रागपीति** ।। प्रेरकस्वरूपं वक्तुं सप्रकारं क्षेत्रमत्र प्रभावानन्तरं तावद्वक्तव्यमेव । तस्य 'यादृक्च' इति प्रतिज्ञातसप्रकारक्षेत्रस्य प्रतिज्ञाक्रमानुसारेण 'पञ्च चेन्द्रियगोचराः' इत्यन्तेन 'यच्च' इति प्रतिज्ञातक्षेत्रस्वरूपनिरूपणानन्तरमपि प्रवचने गौरवं स्यादित्यर्थः ।

**तर्हि प्रकृतीत्यादि कथमिति** ।। प्रकृतिशब्दवाच्यभूतादिक्षेत्रस्य 'यच्च' इति प्रतिज्ञातविषयत्वात् 'महाभूतानि' इत्यनेनोक्तत्वाच्च, इच्छादिविकाराणां 'यद्विकारि' इति प्रतिज्ञाविषयत्वाद् 'इच्छाद्वेष' इत्यादिनोक्तत्वाच्च पुरुषपदोक्तजीवस्य क्षेत्रभिन्नत्वेन 'यच्च' इत्यादिप्रतिज्ञाविषयत्वाभावात् कथं तदुक्तेः 'यादृक्च' इति प्रतिज्ञातोक्तित्वमिति भावः । उत्तरमाह– **ईश्वरातिरिक्त इति** ।। 'चेतनाचेतनं चैतत् सर्वं क्षेत्रमितीर्यते' इति वचनादिति भावः । **विवक्षाविशेषेति** ।। तेषाम् 'अत्यल्पः' इति वक्ष्यमाणविवक्षाविशेष इत्यर्थः । नन्वेवमप्यत्र प्रकारनिरूपणात् 'यादृक् च' इति प्रतिज्ञातोक्तित्वं कथमस्य इत्यत आह– **सप्रकारानिति** ।। प्रकृतिपुरुषयोरनादित्वस्य, सत्त्वादीनाम् अल्पविकारत्वरूपस्य, इच्छादीनां बहुविकारत्वरूपस्य च प्रकारस्य निरूपणादिति भावः ।।

**भावप्रकाशः (कृ.टि.)– ।। प्रेरकस्वरूपमिति ।।** प्रेरकस्य प्रेरणोपयोगिधर्मवैशिष्ट्यमित्यर्थः । स्वरूपमात्रस्य परं ब्रह्मेति नामोक्त्याऽभिहितत्वात् । एवमग्रेऽपि बोध्यम् ।

**प्रागपीति** ।। 'यादृक् च' इति प्रतिज्ञानुसारात् 'पञ्च चेन्द्रियगोचराः : ' इत्यन्तेन । 'यञ्च' इति प्रतिज्ञातक्षेत्रोक्त्यनन्तरमपीत्यर्थः । **प्रकृतीत्यादि कथमिति** ।। 'महाभूतानि' इत्याद्युक्त्वा 'एतत्क्षेत्रम्' इत्युक्तत्वेन प्रकृत्यादीनां क्षेत्रत्वाभावावगमादिति भावः । **ईश्वरातिरिक्त इति** ।। 'चेतनाचेतनं चैतत् सर्वं क्षेत्रमितीरितम् । क्षितिरेतद्भगवतो यदतः क्षेत्रमीर्यते' इति निर्णयोक्तेरिति भावः । न चैवम् 'एतत् क्षेत्रम्' इति गीताविरोधः । तत्र 'समासेन' इत्युक्ततया सङ्क्षेपेणाभिधानात् । अत्र समग्रक्षेत्रोक्तेरिति ।

**प्रकृतिशब्देनेति** ।। 'गोभिः श्रीणीतमत्सरम्' इतिवत् कारणशब्दस्य कार्ये लक्षणेति भावः । ननु 'इच्छाद्वेष' इत्यनेनेच्छादीनामेव विकारत्वेनोक्तत्वात् तद्विरोध इत्यत उक्तम्– **इच्छाद्युपलक्षिता इति** ।। ननु गुणत्रयादीनां पृथिव्यन्तानां 'महाभूतानि' इत्याद्युक्तक्षेत्रान्तर्भूततया प्रकृतिशब्देन ग्रहणात् कथं विकारशब्देन ग्रहणमित्यत उक्तम्– **क्षेत्रान्तर्भूता अपि पृथगुपात्ता इति** ।। **तत्र हेतुर्विवक्षाविशेषवशेनेति** ।। गुणत्रयादीनामुत्तरोत्तरं महदादिकारणत्वविवक्षया क्षेत्रत्वम् । प्रकृत्याद्युपादेयत्वविवक्षया विकारत्वमिति विवक्षावशेनेत्यर्थः । 'यादृक् च' इति प्रतिज्ञातप्रकारोक्तित्वघटनाय व्याचष्टे– **सप्रकारानिति** ।। प्रकृतिपुरुषयोरनादिरूपस्य गुणत्रयादीनां प्रकृतिसम्भवत्वरूपस्य च प्रकारस्योक्तेरिति भावः ।

## भाष्यम्

**गुणाः सत्त्वादयः तेषामत्यल्पो विशेषो लयात् सर्ग इति विकाराः पृथगुक्ताः । 'कार्याकार्यगुणास्त्रिस्रो यतस्स्वल्पोद्भवो जनौ' इति माधुच्छन्दसशाखायाम् ।। २० ।।**

भावप्रदीपिका (प.टी.)– विकारेभ्यः पृथगुक्तत्वान्नात्र गुणाः सत्त्वादय इति शङ्का मा भूदित्याह– **गुणाः सत्त्वादय इति** । तर्हि तेषामपि विकारत्वाद्व्यर्था पृथक्त्वोक्तिरित्येतत् सप्रमाणकं परिहरति– **तेषामिति** । तिस्रः त्रयः ।।

प्रमेयदीपिका (ज.टी.)– 'गुणाः सुखदुःखमोहाः' इति कश्चित् । 'कार्यकारणलक्षणाः' इत्यन्यः । तदुभयं निराकर्तुं व्याचष्टे– **गुणा इति** ।। ननु सत्वरजस्तमसामपि प्रकृतिविकारत्वाद् **'विकारांश्च गुणांश्च'** इति पृथगुक्तिः किमर्था ? इत्यत

श्लोकः २०

आह– **तेषामिति** ।। 'इति ज्ञापयितुम्' इति शेषः । **विकाराः पृथगुक्ता इति** ।। **विकाराश्च गुणाश्च पृथगुक्ता इत्यर्थः । कार्याश्च ते अकार्याश्च । तिस्रः त्रयः । अनेन सुखाद्यङ्गीकारे विकारेभ्यः पृथग् ग्रहणमयुक्तमित्यपि सूचितम्** ।। २० ।।

**भावदीपः (रा.टि.)**– ।। **अनेनेति** ।। गुणानां विकाराणां पृथगुक्तौ बीजकथनेनेत्यर्थः । **सुखादीति** ।। गुणपदेन सुखाद्यङ्गीकार इत्यर्थः ।। २० ।।

**भावरत्नकोशः (सु.टि.)**– ।। **कश्चित्** शङ्करः । तथा चाह 'सत्त्वरजस्तमोगुणपरिणामान् सुखदुःखमोहान्' इति । ननु गुणानामपि प्रकृतिविकारत्वाद्गुणा विकारेभ्यः पृथक् न वक्तव्याः इत्याक्षेपे, 'गुणा विवक्षाविशेषवशेन पृथगुक्ताः' इत्येव भाषणीयम् । तत्कथं 'विकाराः पृथगुक्ताः इति भाषणम् इति शङ्कापरिहाराय 'विकाराः पृथगुक्ताः इत्येतद्व्याचष्टे– **विकाराश्च गुणाश्चेति** ।। 'कार्याकार्यगुणास्तिस्रः' इति भाष्ये विवक्षितविग्रहं दर्शयन् 'तिस्रः' इत्येतद् गुणशब्दसामानाधिकरण्याय लिङ्गव्यत्यासेन योज्यमित्याह– **कार्याश्च तेऽकार्याश्चेति** ।। **तिस्रस्त्रय इति** ।। तथा च 'त्रयो गुणाः सत्त्वरजस्तमोलक्षणाः कार्या अकार्याश्च विवक्षाविशेषवशेनोच्यन्ते इत्युक्तविवक्षाविशेष एवोच्यते । यतो जनौ जनिकाले, स्वल्पाद्भवः विषमतावस्थापत्तिलक्षणः 'तेषाम्' इति भाष्यार्थो निष्पन्नः । उद्भवसत्त्वात् कार्यत्वम्, उद्भवस्याल्पत्वात् अकार्यत्वं चेति ज्ञातव्यम् । 'गुणाः सुखदुःखमोहाः' इत्याद्यपव्याख्यानं प्रत्याख्यातमित्याह– **अनेनेति** ।। विकाराणां गुणानां च पृथगुक्तौ बीजकथनपरप्रमाणोदाहरणेनेत्यर्थः । **इत्यपीति** ।। न केवलम् अस्मद्व्याख्याने पृथग्ग्रहणं युक्तमिति प्रतिपादनम् इत्यपेरर्थः ।।

**गीताक्षरार्थस्तु** 'यतश्च यत्, 'स च यः' इति प्रतिज्ञातं प्रेरकस्य स्वरूपं वक्तुं तत्प्रेरणीयप्रकृत्यादिशब्दितक्षेत्रस्वरूपं सप्रकारं सङ्क्षिप्योच्यते– **प्रकृतिं पुरुषं चेति** ।। ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमुच्यते । तत्र प्रकृतिशब्देन 'महाभूतानि' इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते । विकारशब्देनेच्छादिपदोपलक्षिताः क्षेत्रान्तर्भूता अपि गुणत्रयाद्याः । सर्वेऽपि विकारा· विवक्षाविशेषवशेन पृथगुपात्ताः । पुरुषशब्देन जीवोऽपि गृह्यते। एवं च 'प्रकृतिं पुरुषं चैव इत्यादिकम् अप्रतिज्ञातं किमित्युच्यते' इति शङ्का परास्ता। 'यादृक्च' इति प्रतिज्ञातस्य सप्रकारस्य क्षेत्रस्यैव इह प्रकृत्यादिशब्दैः कथनम् ।

प्रकृतिं महाभूतादिचतुर्विंशतितत्त्वात्मिकां पुरुषं जीवमीश्वरं चोभावप्यनादी विद्धि जानीहि । पुरुषशब्देनात्र जीवेश्वरयोस्तन्त्रेण ग्रहणात् द्विवचनोपपत्तिः । तथा विकारान् 'इच्छा द्वेषः सुखम्' इत्यादिनोक्तान् प्रकृतिसम्भवान् प्रकृत्युपादानकान् सत्त्वरजस्तमोलक्षणान् गुणांश्च तथा विद्धि । सत्त्वादिगुणानां प्रकृतिविकारत्वेऽपि 'विकारांश्च गुणांश्च ' इति पृथक्पृथगुक्तिः गुणानामत्यल्पो विशेषो लयात् सर्गकाले इच्छादिविकारापक्षयेति ज्ञापयितुम् ।। २० ।।

**भावदीपिका (श्री.टि.)**– ।। **सत्त्वरजस्तमसाम्** 'उद्भूतानाम् इति शेषः । **पृथगुक्तिरिति** ।। विकारेभ्यः पृथगुक्तिरित्यर्थः । 'तेषामत्यल्पो विशेषो लयात् सर्गे' इति भाष्ये 'लयात् पूर्वं सर्गकाले' इत्यर्थो द्रष्टव्यः । 'तेषामत्यल्पविशेषोदयात्सर्गे' इति क्वचित्कः पाठः स समीचीनः स्वरसश्च । कार्याकार्यगुणास्तिस्रो यतः स्वल्पोद्भवो जनौ' इति वक्ष्यमाणप्रमाणेनैक-वाक्यतालाभात् । तेषां गुणानां सर्गकालेऽत्यल्पविशेषोदयादित्यर्थः । प्रमाणे 'जनौ' इत्युक्त-त्वात् तदनुसारेणात्र 'सर्गे' इत्युक्तम् । प्रमाणे स्वल्पोद्भवः' इत्युक्तत्वात् अत्र 'अत्यल्प-विशेषोदयात्' इत्युक्तम् । 'सु' इत्युक्तत्वाद् अत्र 'अति इत्युक्तम् । 'अल्प' इति तु 'समम्, प्रमाणे 'उद्भवः' इत्युक्तत्वात् अत्र 'विशेषोदयात् इत्युक्तमिति प्रमाणभाष्ययोरेकार्थत्वं द्रष्टव्यम् । **कार्याश्च तेऽकार्याश्चेति** ।। तथा च जनौ सृष्टिकाले महाभूताद्यपेक्षयाऽल्पोपचयरूप-स्वल्पोद्भवसद्भावात् कार्यत्वम् बहूपचयाभावाद् अकार्यत्वं चेत्यर्थः । **अनेनेति** ।। स्वमते पृथगुक्तौ निमित्तविशेषकथनेनेत्यर्थः । **अयुक्तमिति** ।। तत्रैतादृशनिमित्तविशेषाभावः ।। २० ।।

**भावप्रकाशः (कृ.टि.)**– ननु विकारशब्देन गुणादीनां लाभाद्गुणाः पृथङ् न वक्तव्या इत्याक्षेपे गुणाः पृथगुक्ता इति वक्तव्यम् । तत्कथं विकाराः पृथगुक्ता इत्युच्यत इत्यतो व्याचष्टे– **विकाराश्च गुणाश्चेति** ।। २० ।।

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।। २१ ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु**– उक्तविकाराणां प्रकृतिसम्भूतत्वं व्यक्ती-क्रियते– **कार्यकारणेति** ।। कार्यं शरीरम् कारणानि इन्द्रियाणि, तेषां कर्तृत्वे परिणामित्वे प्रकृतिः हेतुः कारणम् उच्यते । पुरुषो जीवः सुखदुःखानां भोक्तृत्वे, प्रकृत्यर्थो भोगः स्वीयतया

श्लोकः २२

साक्षात्कार इत्येवं विवक्षितोऽनुभवः, तृच्प्रत्ययार्थश्च कर्तृत्वं तस्मिन् अनुभवितृत्वे हेतुः कर्ता उच्यते । भोक्तृत्वे भोगप्रदाने पुरुषो भगवान्हेतुरुच्यते इत्यपि व्याख्यानम् । अत्र विशेषश्चोत्तरप्रस्थानादवसेयः ।। २१ ।।

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। २२ ।।**

## भाष्यम्

**कार्यं शरीरम् । 'शरीरं कार्यमुच्यते' इत्यभिधानम् । कारणानि इन्द्रियाणि । भोगोऽनुभवः । स हि चिद्रूपत्वादनुभवति । प्रकृतिश्च जडत्वात् परिणामिनी । 'कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्' (भाग.३.२७.९) इति भागवते ।। २१,२२ ।।**

भावप्रदीपिका (प.टी.)– कार्यकारणकर्तृत्वे इति श्लोकं सप्रमाणकं व्याचष्टे– **कार्यमिति ।।**

प्रमेयदीपिका (ज.टी.)– कारणानामपि कार्यत्वात् पृथगुक्तिर्व्यर्थेत्यतो रूढिमाश्रित्य कार्यकारणशब्दौ व्याख्याति– **कार्यमिति ।।** 'भोक्तृत्वे' इत्यत्र प्रकृत्यर्थो भोगो अभ्यवहारादिः सुखादिविषयो न सम्भवति । अत आह– भोग **इति ।।** स्वीयतया साक्षात्कार इत्यर्थः ।। भोगः प्रकृतेरेव, न पुरुषस्य । अतः 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः' इति कथमुक्तम्? इति साङ्ख्याः । तत्राह– **स हीति ।।** 'न तु प्रकृतिः । अचैतन्यात्' इति शेषः । ननु 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिः' इत्युक्तम् । कर्तृत्वं च ज्ञानेच्छाप्रयत्नयोगः । तत्कथं प्रकृतेर्भोगासम्भव इत्यत आह प्रकृतिश्चेति ।। चस्त्वर्थः । परिणामिकारणत्वात् कर्तृत्वमित्युपचर्यत इति भावः । श्लोकार्थे पुराणसम्मतिमाह– **कार्येति ।।** 'कारणं विदुः' इत्युत्तरार्धेऽनुवर्तते ।। २१,२२ ।।

भावबोधः (र.टि.)– ।। स्वीयतया साक्षात्कार इति ।। देवदत्तादीनां यज्ञदत्तादिगतसुखदुःखादिविषयकपरोक्षानुभवे सत्यपि तद्भोक्तृत्वाभावात् तद्व्यावृत्त्यर्थं साक्षात्कार इत्युक्तम् ।

सर्वज्ञत्वादीश्वरस्यापि देवदत्तादिसम्बन्धिसुखदुःखादिसाक्षात्कारसत्त्वेऽपि न तद्भोक्तृत्वमित्यतः 'स्वीयतया' इत्युक्तम् । पुत्रादिगतसुखदुःखादेः सुखदुःखान्तरोत्पादनद्वारा पित्रादीनां विक्रिया-हेतुत्वेन तेषामपि पुत्रादिगतसुखदुःखादिविषयकपरोक्षानुभवसत्त्वेऽपि न तद्भोक्तृत्वमित्यतस्त-द्व्यावृत्त्यर्थं 'साक्षात्कार' इत्युक्तम् ।। २१,२२ ।।

**भावदीपः (रा.टि.)–** अनुभवशब्दार्थमाह– **स्वीयतयेति** ।। स्वस्योच्चत्वनीचत्वापादक-सुखदुःखसाक्षात्कार इत्यर्थः ।। २१ ।।

**भावरत्नकोशः (सु.टि.)–** ।। **कारणानाम्** इन्द्रियाणामपि **कार्यत्वात्** तैजसाहङ्कार-कार्यत्वात् । 'अभ्यवहारादिः' इत्यत्र अभ्यवहारः अशनम् , आदिशब्देन पालनम्, 'भुज परिपालनाभ्यवहारयोः' इति धातोः । तदुभयमपि सुखादिविषयकं न सम्भवति । न हि पुरुषः सुखादिकम् अश्नाति, अबाह्यपदार्थत्वात् । नापि पालयति, तथात्वे सुखनाशाभावप्रसङ्गात् । दुःखस्यानिष्टत्वेन तत्पालनस्यानिष्यमाणत्वादिति भावः । यज्ञदत्तस्य देवदत्तीयमुखप्रसादादि-हेतुकसुखाद्यनुमितिरूपानुभवे सत्यपि 'यज्ञदत्तो देवदत्तसुखं भुङ्क्ते' इत्यव्यवहारादुक्तम्– **साक्षात्कार इति** ।। एवमपीश्वरस्य देवदत्तसुखादिसाक्षात्कारसत्त्वाद् ईश्वरो देवदत्त-सुखाद्यनुभवति' इति व्यवहारः स्यात् इत्यत उक्तम्– **स्वीयतयेति** ।। **स्वसम्बन्धितया** स्वोच्चनीचतापादकतयेत्यर्थः । तादृशश्च साक्षात्कारो नेश्वरस्येति न तद्व्यवहारापादनम् उचितमिति भाव इति स्वामिनः । **'स्वीयतया'** इत्यस्य स्वाभिमन्यमानतयेत्यर्थः । ईश्वरस्य च देवदत्तस्येव अभिमानाभावान्नोक्तदोष इत्यपि आहुः । 'स हि' इति भाष्ये **सः** पुरुष इत्यर्थः । **इति शेष इति** ।। यद्यपि 'प्रकृतिश्च जडत्वात्' इति भाष्ये नञोऽध्याहारे, 'अनुभवति' इति पदानुवृत्तौ च, 'प्रकृतिस्तु नानुभवति जडत्वात्' इति प्रकृतार्थः सिध्यति । तथापि 'परिणामिनी' इत्यनेनान्वयस्य सुप्रतिभासत्वात्, नञध्याहारस्य प्रायेणादर्शनाद् एवमध्याहृतम् । **श्लोकेति** ।। 'कार्यकारणकर्तृत्वे इति श्लोकार्थे 'चिद्रूपत्वाद्', 'अचैतन्याद्' इति युक्त्या सिद्धे । **पुराणसम्मतिं चेति** ।। न केवलं युक्त्या सिद्धमिति चशब्दः । 'कार्यकारणकर्तृत्वे' इत्यस्य 'शरेन्द्रियपरिणामे' इति निर्गलितोऽर्थः । उत्तरार्धे 'सुखदुःखानां भोक्तृत्वे भोगे स्वीयतया साक्षात्कारे, प्रकृतेः परं पुरुषं कारणं विदुः इत्यनुवर्त्य योजना कार्येत्यर्थः ।।

**गीताक्षरार्थस्तु–** 'कार्यकारणशब्दितदेहेन्द्रियादिसम्बन्धनिष्पादने भोगे च प्रकृतिपुरुषौ

श्लोकः २२

कर्तारौ' इत्युक्तम् असत् । कार्यकारणसम्बन्धस्य तन्निमित्तभोगस्य च मिथ्यात्वादित्यत उच्यते– **पुरुषः प्रकृतिस्थो हीति** ।। पुरुषः जीवः प्रकृतिस्थः प्रकृतिपरिणतदेहादिसम्बन्धेन स्थितः सन् प्रकृतिजान् गुणान् सुखदुःखादीन् भुङ्क्ते । 'हि' इत्यनुभवसिद्धत्वं प्रदर्शयता मिथ्यावादस्यानुभवविरोधोऽभिप्रेयते ।

एतेन 'यद्यत्र पुरुषपदं जीवपरं तर्हि पुनरुक्तिः स्यात् । जीवस्य 'कार्यकारणकर्तृत्वे' इत्यनेनोक्तकार्यकारणसम्बन्धस्यैव प्रकृतिस्थपदेनोक्तेः । 'सुखदुःखानां भोक्तृत्वे' इत्यनेनोक्त-सुखदुःखादिभोगस्यैव 'भुङ्क्ते प्रकृतिजान् गुणान् इत्युक्तत्वात्' इति चोद्यं निरस्तम् । कार्यकारण-सम्बन्धस्य सुखादिभोगस्य च प्रागुक्तत्वेऽपि तन्मिथ्यात्ववादिनो निरासाय 'पुरुषः प्रकृतिस्थो हि' इत्युक्तत्वादिति । ननु स्वतः शुद्धस्य जीवस्य प्राकृतदेहेन्द्रियसम्बन्धः किङ्कारणः, येन प्रकृतिजन्यगुणभोगः इत्यत उक्तम्– **कारणमिति** ।। अस्य जीवस्य सदसद्योनिजन्मसु नरतिर्यगादियोनिषु यानि जन्मानि उत्पत्तयः, तेषु, गुणसङ्गः सत्त्वादिगुणसम्बन्धः कारणम् । गुणसम्बन्धश्च अनादिः भगवज्ज्ञानापराधनिबन्धन इति हृदयम् ।। २२ ।।

**भावदीपिका (श्री.टि.)– ।। कारणानामपीति** ।। कार्यकारणयोरभेदादिति भावः । **अभ्यवहारादिरिति** ।। 'भुज परिपालनाभ्यवहारयोः' इति धातोरिति भावः । **स्वीयतया साक्षात्कार इति** ।। देवदत्तादीनां यज्ञदत्तादिगतसुखदुःखादिविषयकपरोक्षानुभवे सत्यपि तद्भोक्तृत्वाभावात् तद्व्यावृत्त्यर्थं 'साक्षात्कारः' इत्युक्तम् । सर्वज्ञत्वाद् ईश्वरस्यापि देवदत्तादि-गतसुखदुःखादिसाक्षात्कारसत्त्वेऽपि न तद्भोक्तृत्वम् इत्यतः 'स्वीय' इत्युक्तमिति द्रष्टव्यम् । **भोगः प्रकृतेरेवेति** ।। यथोक्तं साङ्ख्येन

'तस्मान्न बध्यते न मुच्यते नापि संसरति कश्चित् ।
बध्यते संसरति मुच्यते च नानाश्रया प्रकृतिः ।।' इति ।

**न पुरुषस्येति** ।। अयमाशयः । भोक्तृत्वं हि न पुरुषस्य स्वभावः । अपवर्गाभाव-प्रसङ्गात् । आगन्तुकं तु नोपपद्यते । अपरिणामित्वात् । न च प्रतीतिविरोधः । प्रतीतेरेवा-भावात् । व्यवहार एव केवलं भोक्ता आत्मा इति । स च प्रकृतिपुरुषविवेकाग्रहमात्रनिबन्धन इति भोक्तृत्वमशक्यम् आत्मनोऽङ्गीकर्तुमिति समयपादसुधोक्तरीत्यैतदुपपादनं द्रष्टव्यम् । **तत्कथमिति** ।। ज्ञानेच्छाप्रयत्नवत्त्वरूपकर्तृत्वाङ्गीकारे स्वीयतया साक्षात्काररूपभोगस्यावश्य-

कत्वादित्याशयः । **कार्येतीति** ।। तथा च कार्यकारणकर्तृत्वे तदाकारेण परिणामे प्रकृति-र्हेतुरित्यर्थः ।। २१,२२ ।।

**भावप्रकाशः (कृ.टि.)–** ।। **अभ्यवहारादिरिति** ।। पालनसङ्ग्रहाय'आदि' इत्युक्तम् । 'भुज पालनाभ्यवहारयोः' इत्युक्तेरिति भावः । ननु सुखाद्यनुमितौ ईश्वरस्य जीवसुखादि-साक्षात्कारे चातिव्याप्तिरित्यत आह– **स्वीयतया साक्षात्कार इति** ।। नन्वेवमपीश्वरस्य सर्वस्वामित्वात् जीवसुखादि स्वीयमेव । तथा चेश्वरस्य जीवसुखादिसाक्षात्कारे पुनरति-व्याप्तिरिति चेन्न । स्वसम्बन्धिवाचिस्वीयशब्देनाभिमानाख्यसम्बन्धस्य विवक्षितत्वात् । अभिमानस्य च द्वितीये सम्बन्धत्वापादनात् । न्यायमते मम शरीरमित्यत्रादृष्टस्य सम्बन्धत्व-वदत्राप्युपपत्तेश्चेति दिक् । नीचोच्चतारूपविकारो भोग इति तु लक्षणान्तरम् । तेन 'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते' इत्यनेन न विरोध इति बोध्यम् ।। २१,२२ ।।

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।। २३ ।।**

**य एवं(एनं ) वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ।। २४ ।।**

## भाष्यम्

**'यतश्च यत्' (१३.४) इत्याह– उपद्रष्टेति ।। अनुमन्ता अन्वनु विशेषतो निरूपकः । 'पुरुषः सुखदुःखानाम्' इति जीव उक्तः । 'पुरुषं प्रकृतिम्' इति जीवेश्वरौ सहैवोच्येते ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकमवतारयति– **यतश्चेति** । यतश्च यत् इति प्रतिज्ञातं प्रवर्तकमाहेत्यर्थः । अनुमन्तृपदं व्याचष्टे– **अन्वति** ।

प्रमेयदीपिका (ज.टी.)– 'यतश्च यत् इति वक्तुम्' (१३.४) इत्युक्तम् । तत्केनो-च्यते? इत्यत आह– **यतश्चेति** ।। इति 'प्रतिज्ञातम्' इति शेषः । 'अनुमन्ताऽनुज्ञाता' इति कश्चित् । तदसत् । औदासीन्यप्राप्तौ 'भर्ता' 'भोक्ता' इत्यादि विरोधादिति भावेन

श्लोकः २४

व्याचष्टे– **अनुमन्तेति** ।। अनुशब्दः पुनरर्थे । क्रियाऽऽवृत्तिश्च तदर्थ इति ज्ञापनाय द्विरुक्तिः । 'विशेषतः' इति तृनोऽर्थः । निरूपकः कर्तव्यस्याऽलोचकः । 'य एनं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्दं व्याख्यातुमुपोद्घातमाह– **पुरुष इति** ।। सुखदुःख-भोक्तृत्वलिङ्गादिति भावः ।।

सुखदुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति व्याख्यानमाश्रित्येदमुक्तम् । व्याख्यानान्तरे तु भगवानेवात्र पुरुषः 'पुरुषः प्रकृतिस्थो हि' इति तु जीवः । उपलक्षणमेतत् । 'उपद्रष्टा' इति ईश्वर उक्त इत्यपि द्रष्टव्यम् । ततः किम्? इत्यत आह– **पुरुषमिति** ।। यत एवमुभावपि प्रकृतौ, अतो 'य एनं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्देन जीवेश्वरौ द्वावपि गृह्येते । द्वयोरपि परामर्शसम्भवात् । तर्हि द्वयोर्द्विवचनेन भाव्यमित्यत उक्तम्– **सहैवेति** ।। तन्त्रेणेत्यर्थः ।।

**भाववोधः (र.टि.)– ।। कर्तव्यस्यालोचक इति ।।** अनेन मनुधात्वर्थ उक्तो भवति । ततश्च प्रेरकः इति भावः । **व्याख्यानान्तर इति ।।** 'जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा । परमः पुरुषो विष्णुः' इति प्रमाणानुसारेण जीवानां भोक्तृत्वे भोगशक्तिप्रदाने पुरुषः परमात्मा हेतुरिति तात्पर्यगतव्याख्यानान्तरे इत्यर्थः ।

**भावदीपः (रा.टि.)– ।। कर्तव्यस्यालोचक इति ।।** 'मनु अवबोधने' इति धातोः पौनःपुन्यार्थकानूपसर्गयोगे आलोचनमेव सिद्ध्यतीति भावः ।। **व्याख्यानान्तरे त्विति ।।** 'भोक्तृत्वे भोक्तृशक्तिदाने पुरुषो हेतुः' इति तात्पर्योक्तव्याख्यानान्तर इत्यर्थः । **उपलक्षण-मेतदिति ।।** 'पुरुषः' इत्यादि भाष्यमित्यर्थः । एतच्च परामर्शसौकर्यायोक्तम् । अत एवाह– उभावपि **प्रकृताविति ।। तन्त्रेणेति ।।** सकृदुच्चरितमनेकोपकारकं तन्त्रम् । तेनेत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। यतश्च यदिति वक्तुमिति ।।** 'यतश्च यत्' इति प्रेरकस्य स्वरूपं वक्तुमिति पूर्वभाष्ये उक्तमित्यर्थः । **केचिदिति ।।** यदाहुः कार्यकारणेषु व्याप्रियमाणेष्विपि स्वयमव्यापृतः, तत्साक्षी आत्मा अनुमन्तोच्यते । अथवा स्वव्यापारेषु प्रवृत्तान् देहादीन् अनिवारयन् साक्ष्यात्मा अनुमन्तोच्यते इति । **इत्यादिविरोधात्** कर्ता, भोक्ता इति तृचा स्वतन्त्रकर्तृत्वावगमेन गीताक्षरविरोधात् । अव्ययानामनेकार्थत्वाशयेनोक्तम्– **अनुशब्दः पुनरर्थ इति ।।** पुनःशब्दार्थ इत्यर्थः । **तदर्थः** पुनःशब्दार्थः । **द्विरुक्तिः** 'अन्वनु'

इति भाष्ये । **तृनोऽर्थ इति** ।। तत्प्रत्ययस्य तच्छीलतद्धर्मतत्साधुकारिषु विधानात् विशेषार्थ इत्यर्थः ।

ननु प्रेरकत्वोपयोगिनः प्रेर्यद्रष्टृत्वादयो धर्माः अत्र वक्तव्यतयाऽभिमताः । यथोक्तं प्राक् 'एवं धर्मविशिष्टाद् उपद्रष्टृत्वादिधर्मविशिष्टाद् अस्मात् क्षेत्रं प्रवर्तते' इति । 'अनुमन्ता इत्यस्य च 'निरूपकः' इत्यर्थ उक्तो भाष्ये । तत्र निरूपकत्वं यदि ज्ञापकत्वं तदेन्द्रियादेर्ज्ञापकत्वेऽपि प्रेरकत्वाभावाद् 'अनुमन्ता' इत्यस्य न प्रेरकत्वोपयोगिधर्मप्रतिपादकत्वम् । यदि चोपदेष्टृत्वम्, तदेश्वरस्य ब्रह्मादीन् प्रत्युपदेष्टृत्वेऽपि, क्षेत्रान्तर्भूतसर्वोपदेष्टृत्वाभावात् न 'अनुमन्ता इत्यस्य प्रकृतोपयोगः । इत्याशङ्कानिरासाय व्याचष्टे– **कर्तव्यस्यालोचक इति** ।। 'इदमनेन कर्तुं शक्यम्, इदं न' इति पर्यालोचनशालीत्यर्थः । 'मनु अवबोधने' इति धातोः, पौनःपुन्यार्थका-नूपसर्गयोगात् ताच्छील्यविशिष्टकर्त्रर्थकतृन्प्रत्यययोगाच्च सिध्यतीति, 'अनुमन्ता' इति पदमपि प्रेरकत्वोपयोगिधर्मसमर्पकं भवतीति भावः ।।

**व्याख्यातुं** 'पुरुषं प्रकृतिं च' इत्युत्तरवाक्ये । भाष्याभिमतव्याख्यानं दर्शयति– **सुख-दुःखानां भोक्तृत्वे भोगे हेतुः कर्तेति** ।। व्याख्यानान्तरे तु–

'जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा । परमः पुरुषो विष्णुः'

इति सर्वहेतुत्वेऽपि विष्णोः, प्रकृतेर्जीवं प्रति भोक्तृत्वदाने अल्पप्रवृत्तिरिति 'पुरुषो भोक्तृत्वे हेतुरुच्यते' इति च तात्पर्यनिर्णयोक्तव्याख्याने तु, पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते इति श्लोके पुरुषशब्दार्थो भगवानेव, न तु जीवः । भोक्तृत्वे भोगशक्तिदाने' इति तत्राभिमतत्वादिति भावः । ननु तात्पर्यमते 'पुरुषः सुखदुःखानाम्' इत्यत्र पुरुषपदेन जीवस्य ग्रहणात् प्रकृति-विकारपुरुषान् सङ्क्षिप्याह' इत्यत्र प्रेर्यकोटिनिविष्टत्वेन भाष्योक्तः पुरुषो न क्वाप्युक्तः स्यात् । तथा च 'प्रकृतिं पुरुषं चैव' इत्यत्र पुरुषशब्देन जीवस्य ग्रहणमिति सिद्धान्तो न सिध्यति इत्यतः 'पुरुषः प्रकृतिस्थः' इत्यत्र पुरुषशब्दो जीवे' इति तात्पर्यनिर्णयोक्तमाह– **पुरुषः प्रकृतिस्थो हीति तु जीव इति** ।। तथा च पुरुषशब्देन जीव इति पदसिद्धिः, तस्य प्रेर्यत्वसिद्धिश्चेति भावः ।

ननु भाष्यमते 'पुरुषः सुखदुःखानाम्' इत्यत्र मतद्वयेऽपि 'पुरुषः प्रकृतिस्थः' इत्यत्र जीव एव पुरुषशब्देनोक्तः, नेश्वर इति कथं 'य एवं वेत्ति पुरुषम्' इत्युत्तरवाक्ये पुरुषशब्देनोभयोः

परामर्शेन व्याख्यानम् इत्यत आह— **उपलक्षणमेतदिति** ।। 'उपद्रष्टाऽनुमन्ता च' इति श्लोके उपद्रष्टृत्वादिगुणविशिष्ट ईश्वर उक्त इति, 'य एवं वेत्ति पुरुषम्' इत्यत्र पुरुषशब्देन जीवेश्वरयोः ग्रहणमुपपन्नमिति भावः । 'उपद्रष्टा इति श्लोके पुरुषः परः' इति पुरुषशब्देनेश्वर उक्त इत्यर्थ इत्यपि आहुः । 'पुरुषं प्रकृतिं च' इति भाष्यं 'य एवं वेत्ति पुरुषं प्रकृतिं च' इत्यस्यानुवाद इति तत् सपरिकरं योजयति— **यत एवमित्यादि** ।। **द्विवचनेनेति** ।। द्व्येकयोर्द्विवचनैकवचने इति द्वित्वे द्विवचनानुशासनादिति भावः । **तन्त्रेण** सकृत्प्रयुक्तस्यानेकोपकारकत्वं तन्त्रम्, तेनेत्यर्थः ।।

**भावदीपिका (श्री.टि.)**— ।। **औदासीन्येति** ।। अनुज्ञामात्रदातुर्लोके औदासीन्य-दर्शनादिति भावः । **विरोधादिति** ।। तत्र भर्तृत्वादौ स्वातन्त्र्यप्रतीतेरिति भावः । **क्रिया-वृत्तिश्चेति** ।। मन्तृशब्दोक्तकर्तव्यालोचनरूपक्रियाया आवृत्तिः पुनरर्थकानुशब्दार्थ इत्यर्थः । **तृनोऽर्थ इति** ।। तृनस्ताच्छील्यादौ विहितत्वात् । तत्रादिपदेन विशेषरूपार्थस्यापि ग्रहणादिति भावः । ननु निरूपकः' इत्युक्तेऽपि, आज्ञामात्रदातृत्वम् । अत्र प्राप्तौदासीन्यमनिवार्यमेव इत्यत आह— **कर्तव्यस्येति** ।। अनेन मनुधात्वर्थ उक्तो भवति । ततश्च प्रेरक इति भावः ।। **व्याख्यानान्तर इति** ।।

'जीवस्य सुखदुःखानां भोगशक्तिप्रदः सदा । परमः पुरुषो विष्णुः.......... ।।'

इति प्रमाणानुसारेण जीवानां भोक्तृत्वे भोगशक्तिप्रदाने परमात्मा हेतुरिति तात्पर्यगत-व्याख्यानान्तर इत्यर्थः । तथा च तदपि व्याख्यानान्तरमित्याशयः ।

ननु य एवं वेत्ति पुरुषं प्रकृतिं च' इत्यत्र पुरुषशब्देन जीवेश्वरयोः परामर्श इति भाष्ये व्याख्यानान्तरे च समम् । तत्र व्याख्यानान्तरे च पुरुषशब्देन जीवः कुत्र प्रकृतः? 'पुरुषः सुखदुःखानाम्' इत्यत्र पुरुषपदस्येश्वरपरत्वात् । तथा च 'य एवं वेत्ति पुरुषम्' इत्यत्र पुरुषपदेन तत्परामर्शो न सम्भवति इत्यत आह— **पुरुष इति** ।। एवं च व्याख्यानान्तरे 'य एवं वेत्ति पुरुषम्' इत्यत्र पुरुषपदेनोभयपरामर्शो युक्त इति भावः ।

नन्वत्र भाष्ये 'य एनं वेत्ति पुरुषं प्रकृतिं च' इति जीवेश्वरौ सहैवोच्येते' इत्युच्यते । तत्र पुरुषपदेन कथमुभयोः परामर्शः, अप्रकृतत्वात् इति शङ्कायां 'पुरुषः सुखदुःखानाम् इति जीव उक्तः' इत्यनेन जीवस्य प्रकृतत्वमुक्तम् । ईश्वरस्य तु कथं प्रकृतत्वम् इत्यतः 'पुरुषः

सुखदुःखानाम्' इति जीव उक्त इति भाष्यमुपलक्षणपरमित्याह– **उपलक्षणमेतदिति** ।। 'पुरुषशब्देन' इति शेषोक्तिः – **द्विवचनेनेति** ।। 'य एतौ वेत्ति पुरुषौ प्रकृतिं च' इति द्विवचनं गीतायां स्यादित्यर्थः । **तन्त्रेणेति** ।। सकृदुक्तम् अनेकोपकारकं तन्त्रम्, तन्न्याया-श्रयेणेत्यर्थः ।। २३ ।।

**भावप्रकाशः (कृ.टि.)– ।। पुनरर्थ इति ।।** अव्ययानामनेकार्थत्वादिति भावः । **तृनोऽर्थ इति ।।** तच्छीलादौ तृनो विधानादिति भावः । ननु प्रेरकत्वोपयोगिनः प्रेर्यद्रष्टृत्वादयो धर्मा इह वक्तव्यत्वेनाभिप्रेताः । अत एवोक्तं प्राक् 'एवं धर्मविशिष्टात्प्रवर्तते क्षेत्रम् ' इति । तन्निरूपकत्वं यदि ज्ञापकत्वं तदेन्द्रियादेस्तथात्वेऽपि प्रेरकत्वाभावात् तद्व्यभिचारः । यदि चोपदेष्टृत्वं तदाऽसिद्धिः । ईश्वरस्य ब्रह्माद्युपदेष्टृत्वेऽपि क्षेत्रान्तर्भूतसर्वोपदेष्टृत्वाभावादित्यत आह– **कर्तव्यस्यालोचक इति ।।** इदमनेन कर्तुं शक्यमिति विमर्शवानित्यर्थः । व्याख्यानान्तरे 'य एवं वेत्ति पुरुषम्' इत्यत्र पुरुषपदेन जीवग्रहणसिद्ध्यर्थमाह– **पुरुषः प्रकृतिस्थो हीति ।।**

भाष्यमते पूर्वमीश्वरानुक्तेरुत्तरत्र कथं तद्ग्रहणमित्यत आह– **उपलक्षणमिति ।। तन्त्रेणेति ।।** सकृत्कृतमनेकोपकारकं तन्त्रं, तेनेत्यर्थः ।

## भाष्यम्

**अन्यत्र महातात्पर्यविरोधः । उत्कर्षे हि महातात्पर्यम् । तथा हि सौकरायणश्रुतिः**

**'अवाच्योत्कर्षे महत्त्वात् सर्ववाचां सर्वन्यायानां च महत् तत्परत्वम् ।**
**विष्णोरनन्तस्य परात्परस्य तच्चापि ह्यस्त्येव न चात्र शङ्का ।**
**अतो विरुद्धं तु यदत्र मानं तदक्षजादावथवाऽपि युक्तिः ।**
**न तत् प्रमाणं कवयो वदन्ति न चापि युक्तिर्ह्यूनमतिर्हि दुष्टेः ' इति ।।**

भावप्रदीपिका (प.टी.)– 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यत्र पुरुषशब्दार्थं वक्तुमाह– **पुरुष इति ।** 'य एवं वेत्ति पुरुषम्' इत्यत्र सहैवैकेन शब्देन जीवेश्वरावुच्येते । द्वयोरपि ग्रहणे बाधकाभावात् । 'पुरुषः सुखदुःखानाम्' इत्यत्रापि तौ

श्लोकः २४

स्यातामिति न वाच्यम् । ईशस्य दुःखानुभवविरोधादित्यर्थः । ईश्वरस्यापि जीवाभेदाद्दुःखानुभवोऽस्त्येवेत्यत आह– **अन्यत्रेति** ।.**अन्यत्र** अद्वैतपक्षे । कथं महातात्पर्यविरोधः इत्यत आह– **उत्कर्ष इति** । महत्त्वादवाच्योत्कर्षे यत् तदक्षादौ विरुद्धं मानम्, अल्पज्ञानोत्पादिका । दृष्टेः श्रुतेः सकाशादित्यर्थः । ननु विष्णुः सर्वोत्कृष्टः पुरुषत्वादित्यत आह– **अत इति** । **अतः** उक्तश्रुतेरेव ।

प्रमेयदीपिका (ज.टी.)– अत्र कश्चित् 'य एवं वेत्ति पुरुषम्' 'साक्षाद् अयमहमस्मि' इत्येवमध्याहारेण जीवेश्वरैक्यं व्याख्यातवान् । तद्दूषयति– **अन्यत्रेति** ।। जीवेश्वरैक्ये सर्ववेदानां प्राधान्येन यत्प्रतिपादकत्वं तद्विरोधः । कथम्? इत्यत आह– **उत्कर्षे हीति** ।। सर्वागमानामीश्वरस्य सर्वोत्कर्षे हि महातात्पर्यमित्यर्थः ।। तत्कुतः प्रागुक्तयुक्तेः ।।

श्रुतेश्चेत्याह– **तथा हीति** ।। विष्णोः महत्त्वादेवावाच्यत्वेनोक्ते सर्वोत्कर्षे सर्वासां वेदवाचां सर्वन्यायानां न्यायव्युत्पादकस्य मीमांसाशास्त्रस्येति यावत् । महत्तत्परत्वं महातात्पर्यम्। अस्तूत्कर्षे महातात्पर्यम् । तथाऽप्युत्कर्षस्य सत्त्वं कुतः ? न हि जैनवाक्यस्य क्वचिन्महातात्पर्येऽपि तत्सत्त्वमस्तीत्यत आह– **तच्चापीति** ।। न केवलं तत्र तात्पर्यम्, किन्तु तत्महत्त्वमपि चास्त्येव । धियां स्वतः प्रमाण्यादिति हेतर्थः । स्वतः प्रामाण्येऽपि बाधकाद् विषयासत्त्वं भवति । तदप्यत्र नास्तीत्याह– **न चात्रेति** ।। शङ्केति ।। शङ्काहेतुः बाधकमिति यावत् ।। कथं बाधकाभाव इत्यत आह– **अत इति** ।। 'अतः' इत्यस्योत्तरत्रान्वयः । तत्र ईश्वरस्य सर्वोत्कर्षे तु यत् विरुद्धं मानं शङ्क्यते तदपि किम् अक्षजादौ अक्षजागमयोरन्यतरत्? अथवा युक्तिः । आद्यं निराकरोति– न तदिति ।। कवयः न्यायविदः । कुतः? अतः उपजीव्यवेदविरोधात् ।।

एतेन द्वितीयोऽपि निरस्तः । तथाऽपि विशेषं वक्तुमाह– **न चेति** ।। युक्तिरपि नैव मानं यतो दृष्टेः श्रुतेः ऊनमतिः जात्यैव दुर्बलज्ञानोत्पादिका ।।

भावबोधः (र.टि.)– ।। **प्रागुक्तयुक्तेरिति** ।। मोक्षो हि महापुरुषार्थ इत्यादिनेत्यर्थः ।

भावदीपः (रा.टि.)– 'तत्कुतः' इति प्रश्नस्योत्तरं– **प्रागुक्तयुक्तेरिति** ।। 'महातात्पर्याच्च'

इत्याद्युपक्रम्य 'मोक्षो हि' इत्यादिना मोक्षरूपपरमपुमर्थहेतुभगवत्प्रसादकारणतदीयगुणोत्कर्षज्ञान-जननाय प्रवृत्तत्वात् सर्ववेदानाम्' इति द्वितीयाध्यायोक्तयुक्तेरित्यर्थः ।। **युक्तेरिति** ।। 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतौ' इति योज्यम् । **उत्तरत्रेति** ।। 'अतो न प्रमाणम्' इत्यन्वय इत्यर्थः ।। तदनुवादेनार्थमाह– **तदुपजीव्येत्यादि** ।। 'दृष्टेः' इत्यनुवादः, श्रुतेः' इति व्याख्या ।।

**भावरत्नकोशः (सु.टि.)– ।। जीवेश्वरैक्यं व्याख्यातवानिति** ।। यदाह 'जीवेश्वरादि सकलकल्पनाविधुरतयोक्तप्रकारं पुरुषं साक्षाद् अपरोक्षत्वेन 'अहमस्मि' इत्यात्मभावेन वेत्ति विजानाति' इति । **ईश्वरैक्ये** 'व्याख्यायमाने सति' इति शेषः । महातात्पर्यशब्दार्थमाह– **प्राधान्येन यत्प्रतिपादकत्वमिति** ।। 'वेदानाम्' इति योग्यतया प्राप्तम् । उत्कर्षस्य ससम्बन्धिकत्वादुक्तम्– **ईश्वरस्येति** ।। **प्रागुक्तयुक्तेरिति** ।। 'महातात्पर्याच्च' इत्युपक्रम्य 'मोक्षो हि महापुरुषार्थः इति द्वितीयाध्याये मोक्षरूपमहापुरुषार्थहेतुभूतभगवत्प्रसादकारण-गुणोत्कर्षज्ञानजननाय प्रवृत्तत्वात् सर्वागमानाम् इति भाषितयुक्तेरित्यर्थः ।

श्रुतिवाक्यं व्यवहितपदत्वादसुबोधकत्वाच्च योजयति– **विष्णोर्महत्त्वादेवेति** ।। देशकाल-गुणैरपरिच्छेदत्वेन वेदसिद्धमाहात्म्यवत्त्वादेव, न तु सदसद्विलक्षणत्वादित्यर्थः । 'अवाच्योत्कर्षे इत्यस्यार्थः– **'अवाच्यत्वेनोक्ते' इति** ।। 'यतो वाचो निवर्तन्ते' इति श्रुतौ वाच्यत्वेना-गोचरत्वेनोक्त इत्यर्थः । चशब्दार्थः– **तथेति** ।। न्यायानां युक्तीनां न तात्पर्यत्वम् । तात्पर्यस्य शब्दधर्मत्वाद्, इत्यतो व्याचष्टे– **न्यायव्युत्पादकमीमांसेति** ।। **क्वचित्** सन्ततोर्ध्वगमनं मोक्षः' इत्याद्यर्थे । **तत्सत्त्वं** तात्पर्यविषयीभूतार्थस्य सत्त्वम् ।

'तत्' इति नपुंसकलिङ्गघटनायाह– **तन्महत्त्वमपि चेति** ।। 'महत्त्वात् इत्यनेनोप-स्थापितं महत्त्वम् उत्कृष्टत्वम् **अस्त्येव** सदेवेत्यर्थः । तत्र हेतुः– **धियामिति** ।। ज्ञानानामित्यर्थः । **हेरर्थ इति** ।। **श्रौतहिशब्दार्थ** इत्यर्थः । **विषयासत्त्वमिति** ।। 'आदित्यो यूपः', 'मृदब्रवीत्' इत्यादिवाक्यस्य श्रुतित्वेन स्वतः प्रामाण्येऽपि, प्रत्यक्षादिप्रमाणविरोधात् बाधकात् यूपादित्यभेदस्य, मृद्वक्तृत्वादेश्च विषयस्यासत्त्वम् इत्यर्थः । लक्षणाबीजं सम्बन्धं दर्शयितुमुक्तम्– **शङ्काहेतुरिति** ।। ननु 'शङ्काहेतुः ' इति संशयकारणमुच्यते । तेन च विषयासत्त्वसिद्धिः इत्यत उच्यते– **बाधकमिति यावदिति** ।। **उत्तरत्रान्वय इति** ।। 'न तत्प्रमाणम् इति वक्ष्यमाणसाध्येऽन्वय इत्यर्थः । 'अत्र' इत्यनुवादः 'ईश्वरस्य सर्वोत्कर्षे' इति

श्लोकः २४

व्याख्या । 'मानम्' इत्यनन्तरं शेषः 'शङ्क्यते' इति ।। तच्छब्दस्य अपिशब्देनान्वय इत्यभिप्रेत्योक्तम्– **तदपीति** ।। 'अक्षजागमयोः' इति व्याख्याय शेषमाह– **अन्यतरदिति** ।। अप्रामाण्योपपादनोपयोगितयाऽर्थमाह– **कवयो न्यायविद इति** ।। 'यदुपजीव्यप्रमाणविरोधि न तत् प्रमाणम्' इति न्यायवेदिन इत्यर्थः ।

यस्य 'अतः' इत्यस्योत्तरत्र अन्वय इत्युक्तम्, तमनूद्यार्थमाह– **अत उपजीव्यविरोधादिति** ।। 'विश्वतः परमां नित्यं विश्वं नारायणं हरिम्' इत्यादिश्रुतिसिद्धम् ईश्वरं गृहीत्वा प्रत्यक्षेण आगमेन वा तत्र सर्वोत्कर्षभावो बोद्धव्यः । न चैवं युक्तम् । श्रुत्यैव सर्वोत्कृष्टतयाऽवरत्वेन धर्मिग्राहकोपजीव्यप्रमाणविरोधितया स्वयमुत्थानायोगादिति भावः । केचित्तु सर्वोत्कर्षाभाववेदकप्रत्यक्षागमौ प्रति प्रतियोगिभूतसर्वोत्कर्षप्रतिपादकवेदस्योपजीव्यत्वात् तद्विरोधात् इत्यर्थ इत्याहुः । **द्वितीयः** 'युक्तिः' इति पक्षः । 'विष्णुः दोषी चेतनत्वात्' इति युक्तेः धर्मिभूतविष्णुज्ञानाभावे आश्रयासिद्धिप्रसङ्गेन तज्ज्ञाने वाच्ये, तस्य वेदेतरप्रमाणेन असम्भवात् वेदेनैव तस्मिन् वक्तव्ये, तेन 'निरनिष्टो निरवद्यः' इत्यादिना निर्दोषत्वेनैव सिद्धत्वादुपजीव्यवेदविरोधेन सर्वोत्कर्षविरुद्धदोषे युक्तेरनवकाशात् स पक्षो निरस्त इत्यर्थः । चशब्दोऽवधारण इत्यभिसन्धायोक्तम्– **नैवेति** ।। हिशब्दार्थः – **यत इति** ।।

ननु 'युक्तिरपि नोत्कर्षाभावावेदने मानम्' इत्यत्रार्थे दृष्टिशब्दोदितप्रत्यक्षापेक्षया दुर्बलज्ञानोत्पादकत्वं कथं हेतुः व्यधिकरणत्वात्, इत्यत आह– **दृष्टेः श्रुतेरिति** ।। 'सकाशात् इति शेषः ।

'यतस्ता हरिणा दृष्टाः श्रुता एवाखिलैर्जनैः ।
श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः ।।'

इति वचनेन दृष्टिशब्दस्य श्रुतिपर्यायत्वावगतेरिति भावः । तथा च भावप्रदीपिका 'दृष्टेः श्रुतेः सकाशात्' इति । 'दृष्टेः' इत्युपलक्षणं मत्वोक्तम् 'श्रुतेः' इति, इत्यपि आहुः । 'ऊना मतिः यया सा तथोक्ता' इति विग्रहं हृदि निधाय तदभिप्रेतमर्थमाह– **जात्यैव दुर्बलज्ञानोत्पादिकेति** ।।

**भावदीपिका (श्री.टि.)**– ।। **प्रागुक्तेति** ।। 'मोक्षो हि महापुरुषार्थः' इति द्वितीयाध्यायोक्तेत्यर्थः । तात्पर्यस्य शब्दधर्मत्वादाह– **न्यायव्युत्पादकस्येति** ।। **कचिदिति** ।।

'सप्तभङ्गित्वादावित्यर्थः । **तत्सत्वमिति** ।। तस्यार्थस्य सत्त्वमित्यर्थः । **महत्त्वमिति** ।। महत्त्वरूपोऽर्थ इत्यर्थः । **प्रामाण्यादिति** ।। प्रामाण्यस्यार्थसत्ताघटितत्वादिति भावः । **शङ्काहेतुरिति** ।। विषयासत्त्वशङ्काहेतुरित्यर्थः ।

**उत्तरत्रेति** ।। 'न तत्प्रमाणं कवयो वदन्ति' इत्यत्र हेतुत्वेनान्वय इत्यर्थः । 'उत्तरत्रान्वयः' इत्युक्तमेव दर्शयति– **अत उपजीव्यवेदविरोधादिति** ।। अयमभिसन्धिः । साक्षाद् 'विष्णुर्दोषी' इत्यत्र प्रत्यक्षाप्रवृत्तेः, 'विष्ण्ववतारो रामादिर्दोषी इति तदभिन्नो विष्णुरपि दोषी' इत्येवं सर्वोत्कर्षविरुद्धदोषग्राहिणा प्रत्यक्षेणोत्पत्तव्यम् । तत्र सर्वथा रामादेर्विष्णुत्वं तावज्ज्ञातव्यम् । न चैतत् प्रत्यक्षवेद्यम् । नाप्यनुमानवेद्यम् । केवलस्य तस्याप्रामाण्यात् । तस्माद् वेदादिना एतज्ज्ञातव्यम् । वेदश्च सर्वोऽप्येकवाक्यम् । स च सर्वरूपोपेतस्य विष्णोर्निर्दोषत्वमेव प्रतिपादयति, इति उपजीव्यवेदविरोधादप्रमाणमेव सर्वोत्कर्षविरुद्धदोषग्राहि प्रत्यक्षम् ।

तथा भगवद्रूपेषु सर्वोत्कर्षविरुद्धदोषं प्रतिपादयत् पुराणाद्यागमवाक्यं स्वमूलभूतत्वेन स्वोपजीव्यवेदविरुद्धत्वाद् अप्रमाणमेवेति । यथोक्तमनुव्याख्याने 'आगमेन हि विष्णुत्वं ज्ञात्वा दोषोऽत्र कल्प्यते' इत्यादि । पुराणस्योपजीव्यश्च वेद एव न चापरः' इति च । यद्वा सर्वोत्कर्षाभावग्राहकप्रत्यक्षागमौ प्रति प्रतियोगिभूतसर्वोत्कर्षप्रतिपादकवेदस्योपजीव्यत्वात् तद्विरोध इत्यर्थो द्रष्टव्यः । **एतेनेति** ।। 'विष्णुर्दोषी चेतनत्वात् इति युक्तेः धर्मिभूतविष्णोरज्ञाने आश्रयासिद्धत्वप्रसङ्गेन, तज्ज्ञाने वाच्ये, तस्य च वेदेतरप्रमाणेनासम्भवाद् वेदेनैव वाच्ये, तेन निर्दोषतयैव सिद्धत्वाद् उपजीव्यवेदविरोधेन सर्वोत्कर्षविरुद्धदोषादौ युक्तिरपि न शङ्कार्हेत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)**– ।। **प्रागुक्तयुक्तेरिति** ।। 'मोक्षो हि महापुरुषार्थः' इत्यादिनेति शेषः । तात्पर्यस्य शब्दधर्मत्वादाह– **न्यायव्युपादकस्येति** ।। **क्वचिदिति** ।। जगतः सप्तभङ्गित्वादावित्यर्थः ।। अप्रामाण्योपपादनोपयोगितया व्याचष्टे– **न्यायविद इति** ।। उपजीव्यविरोध्यप्रमाणमिति न्यायविद इत्यर्थः । अत इत्यस्योत्तरत्रान्वय इत्येतद्दर्शयति– **अत उपजीव्यवेदविरोधादिति** ।। ननु युक्तिरपि नैवोत्कर्षश्रुतिबाधिका इत्यत्रार्थे दृष्टिशब्दोक्तप्रत्यक्षापेक्षया दुर्बलज्ञानोत्पादकत्वं कथं हेतुः । व्यधिकरणत्वादित्यत आह– **श्रुतेरिति** ।। 'यतस्ता हरिणा दृष्टाः' इत्युक्त्वा 'श्रुतयो दृष्टयश्चेति तेनोच्यन्ते' इत्युक्तेरिति भावः ।

श्लोकः २४
श्रुतियुक्त्योर्मतिविषयत्वे साम्यात् कथं युक्तेरूनमतित्वमित्यतः तृतीयार्थे बहुव्रीहिरिति भावेनाह– दुर्बलज्ञानेति ।। दुर्बलत्वे हेतुः– जात्येति ।। उत्सर्गेणेत्यर्थः ।।

## भाष्यम्

**अतो युक्तिभिः एतदपलापो न युक्तः । अतो यया युक्त्या अविद्यमानत्वादि कल्पयति साऽप्याभासरूपेति सदैव माहात्म्यं वेदैरुच्यत इति सिद्ध्यति । अवान्तरं च तात्पर्यं तत्रास्ति । उक्तं च तत्रैव 'अवान्तरं तत्परत्वं च सत्त्वे महद्व्याप्येकत्वात् तयोरनन्ते' इति । श्यामत्वाद्यभिधानाच्च ।।**

भावप्रदीपिका (प.टी.)– ननु युक्तेरपि स्वतन्त्रप्रमाणत्वात् तद्विरुद्धत्वेनासदेव भगवन्माहात्म्यं किं न स्यात् ? इत्यत आह– **अत इति । अतः** वेदविरोधादेव । ननु वेदानां भगवदुत्कर्ष एव महातात्पर्यम्, न तत्सत्वे । न तर्हि लोकविरुद्धश्यामत्वसूकरत्वाद्यमभिदध्यात् वेदः । अस्ति चाभिधानम् अतो नासन्नित्याह– **श्यामत्वेति ।** विरुद्धयुक्तिराभासैवेत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– भगवदुत्कर्षे सर्वागमानां महातात्पर्यमित्यत्र पठितायाः श्रुतेः शेषेण योऽर्थो लब्धः सोऽपि प्रकृतोपयुक्त एव । उत्कर्षस्य सत्त्वाभावे जीवेश्वरैक्यस्य तद्विरोधाभावात् । अतस्तं स्ववाक्येनाप्याह– **अत इति ।।** 'युक्तिभिः' इत्युपलक्षणम् । एतदपलापः भगवदुत्कर्षस्याविद्यामानत्वादिकल्पनम् । 'अतः' इत्युक्तमेवार्थं विशदयति– **अत इति ।।** वेदविरोधादित्यर्थः । आदिपदेनानिर्वाच्यत्वं गृह्यते । 'भगवदुत्कर्षस्य' इति शेषः । 'साऽपि' इत्यपिशब्देन प्रत्यक्षादेस्समुच्चयः । इतिशब्दो हेतौ । बाधकाभावादित्यर्थः । उत्कर्षस्य प्रकृतत्वेऽपि 'तच्चापि' इति श्रौततच्छब्दव्याख्यानाय 'माहात्म्यम्' इत्युक्तम् ।।

ननु प्रतिपन्नस्य विद्यमानत्वादिकं बाधकाभावेन कल्प्यम् । स्वतः प्रामाण्यात् । न चोत्कर्षस्य सत्त्वं वेदात् प्रतिपन्नम् । उत्कर्षे तत्सत्त्वे च तात्पर्याङ्गीकारे वाक्यभेदप्रसङ्गादित्यत आह– **अवान्तरं चेति ।।** चशब्दस्य 'तत्र सत्त्वे च' इत्यन्वयः । उभयत्र महातात्पर्याभावान्न दोषः । एतत्कुतः? इत्यत आह– **उक्तं चेति ।।** तत्रैव

**तस्यामेव श्रुतौ । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तूत्कर्षसत्त्वे महदपि तत्परत्वम् । कुतः ? अनन्तसम्बन्धिनोस्तयोरुत्कर्षस्य तत्सत्त्वस्य चैकत्वात् । अनन्ते इति प्रकृतत्वादेवोक्तम् ।।**

**एतदुक्तं भवति । प्रमाणं हि प्रवर्तमानं विधिरूपं निषेधरूपं वा, न तूदासीनम् । तस्य च बाधाभावे स्वत एव सत्त्वासत्त्वलक्षणौ विधिनिषेधौ सिद्ध्यतः । किं तत्र तात्पर्यान्तरकल्पनया? इति । ननु निराकारमेव ब्रह्म श्रूयते । तत्कथं तद्गुणोत्कर्षे सर्वश्रुतीनां महातात्पर्यं स्यात्? इत्यत आह–श्यामत्वादीति ।। एतच्च अनन्तरातीताध्याये प्रपञ्चितम् ।।**

**भावबोधः (र.टि.)– ।। तच्छब्दव्याख्यानायेति ।।** श्रुतौ 'उत्कर्षे महत्त्वात्' इति द्वयोः प्रकृतत्वेऽपि तदिति नपुंसकेन महत्त्वस्यैव परामर्शादिति भावः । 'तयोः' इत्यन्तेनैव पूर्णत्वात् श्रुतौ 'अनन्त' इति किमर्थमित्यत आह– **प्रकृतत्वादेवेति** ।।

'सर्वे वेदा हरेर्भेदं सर्वस्माज्ज्ञापयन्ति हि ।
भेदस्वातन्त्र्यसार्वज्ञसर्वैश्वर्यादिकश्च सः ।
स्वरूपमेव भेदोऽयं व्यावृत्तिश्च स्वरूपतः'

इत्युक्तव्यावर्तकधर्मव्यावृत्त्योर्यथा वेदमहातात्पर्यविषयत्वं तथोत्कर्षतत्सत्त्वयोर्महद्वाऽप्येकत्वात् तयोरनन्त' इत्युक्तमहातात्पर्यं नेत्याह – **एतदुक्तं भवतीति** ।। तथात्वे यस्य शब्दस्य यत्रार्थे तात्पर्यं तस्य तत्सत्वेऽपि तात्पर्यान्तरकल्पनापत्तिरिति भावः । **अतीताध्याय इति** ।। 'रूपं चेदृशं साधितम्' इत्यादिनेत्यर्थः ।।

**भावदीपः (रा.टि.)– ।। शेषेणेति ।।** तच्चापि इत्यपि नेत्यर्थः । सकृदुच्चरितत्वादिनेत्यर्थः ।। **इत्युपलक्षणमिति** । 'प्रमाणमात्रस्य' इति योज्यम् । **प्रतिपन्नस्यापीति** । प्रमितस्यापीत्यर्थः । **इदमुक्तमिति** । उत्कर्षसत्वेऽवान्तरतात्पर्यं तयोर्भेदमङ्गीकृत्योक्तमित्यर्थः ।। ननु घटादिपदार्थेष्वपि प्रमाणतः तत्स्वरूपसिद्ध्यैव सत्वं सिद्ध्यति । तत् किम् 'अनन्तम्' इति विशिष्योच्यते इत्यत आह– **प्रकृतत्वादिति** ।। अस्यां श्रुतौ पूर्वभागे 'विष्णोरनन्तस्य' इति प्रकृतत्वादित्यर्थः । **प्रपञ्चितमिति** ।। 'रूपं चेदं साधितं पुरस्तात्' इत्यादिना 'श्यामोऽथवा हृदयेऽष्टबाहुः' इत्यन्तग्रन्थेनेति भावः ।।

श्लोकः २४

**भावरत्नकोशः (सु.टि.)–** 'प्रकृतोपयुक्त एव' इत्यत्र युक्तिः– **उत्कर्षस्येति ।। तं** श्रुतिशेषलब्धमर्थम् । विरोधिप्रत्यक्षागमाभ्यामप्युत्कर्षाभावस्य शङ्कितत्वात्कथं भाष्ये युक्तिमात्रग्रहणम् इत्यत आह– **युक्तिभिरित्युपलक्षणमिति** ।। विरुद्धप्रत्यक्षागमावपि युक्तिपदेन लक्षणया ग्राह्यौ इत्यर्थः । न केवलम् आजानसिद्धप्रद्वेषेणोत्कर्षापलाप इति भाष्यस्थापिपदार्थ इति आहुः । केचित्तु 'उपलक्षणम्' इत्युक्त्या भाष्ये अपिशब्दपाठो लेखकदोषमूल इति सूचितमित्यप्याहुः । अन्ये तु एतदपलापोऽपि इत्यपिशब्दो भिन्नक्रमः । न केवलमुत्कर्षस्य द्वेषो न युक्तः, अपि त्वपलापोऽपीति समुच्चयार्थ इति वदन्ति । 'अविद्यमानत्वादि कल्पयति' इति भाष्यमनुसृत्य अपलापपदार्थमाह– **अविद्यमानत्वादिकल्पनमिति** ।। आदिपदेन अनिर्वाच्यत्वं गह्यते । **अत इत्युक्तमेवेति** ।। 'न तत् प्रमाणम्' इत्यत्र हेतुसमर्पकेण अतःशब्देनोक्तमित्यर्थः । 'प्रत्यक्षादेः' इत्यत्र आदिशब्देन विरोध्यागमग्रहः । हेतुमेवाह– **बाधकाभावादिति** ।। वेदविरोधाद्युक्तिप्रत्यक्षागमानामसत्त्वम्, तथा चोत्कर्षे बाधकाभावः, ततश्च बाधकाभावात् सदैव माहात्म्यं वेदैरुच्यत इति समग्रभाष्यार्थो द्रष्टव्य इति भावः ।

ननूत्कर्षस्य सत्त्वोपसंहाराय प्रवृत्ते भाष्ये 'सन्नेवोत्कर्षो वेदैरुच्यते' इत्येव वक्तव्यम् । तत्किमर्थं 'सदैव' इति नपुंसकलिङ्गप्रयोगः इत्यत आह– **उत्कर्षस्य सत्त्व इति** ।। उत्कर्षस्य सत्त्वे या श्रुतिरुपन्यस्ता 'तच्चापि ह्यस्त्येव, न चात्र शङ्का' इति, तत्र 'तत्' इति नपुंसकलिङ्गतच्छब्दव्याख्यानाय 'माहात्म्यम्' इत्यभाषतेत्यर्थः । 'उत्कर्षस्य प्रकृतत्वेऽपि' इति क्वचित्पाठः । भावप्रदीपिकायां तु 'न विष्णुः सर्वोत्कृष्टः पुरुषत्वात् सम्मतवत्' इति युक्तिविरोधो भगवतः सर्वोत्कर्षे इत्यत आह– **अत इति** ।। उक्तश्रुतेरेवेत्यर्थः । ननु युक्तेरपि स्वतन्त्रप्रमाणत्वात् तद्विरुद्धश्रुतिबोधितभगवन्माहात्म्यप्रसक्तिर्न स्यात् इत्यत आह– **अत इति** ।। उपजीव्यवेदविरोधादित्यर्थः इति व्याख्यातम् । **प्रतिपन्नस्य** प्रतीतस्य 'विद्यमानत्वादिकम्' इत्यत्रादिशब्देनानिर्वाच्यत्वं गृह्यते । **स्वतः प्रामाण्यात्** प्रामाण्यस्य स्वतस्त्वात् । 'तत्र' इत्यनुवादः 'सत्त्वे' इति व्याख्या । **उभयत्र** उत्कर्षे तत्सत्त्वे च । **दोषः** वाक्यभेदप्रसङ्गदोषः । **एतत्** उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतत् । **तस्यां** सौकरायणाख्यायाम् **इदमुक्तमिति** ।। उत्कर्षसत्त्वयोः धर्मधर्मिभावेन भेदमङ्गीकृत्य उभयत्र महातात्पर्याभावेन वाक्यभेदो नास्तीत्येतदुक्तमित्यर्थः । 'तयोः' इत्यनुवादः 'उत्कर्षस्य तत्सत्त्वस्य च' इति व्याख्यानम् । ननु भगवदितरत्रापि वस्तुस्वरूपतत्सत्त्वयोः अभेदात् किं विशिष्याभिधीयते

अनन्त' इति इत्यत आह– **प्रकृतत्वादेवेति** ।। 'विष्णोरनन्तस्य' इत्युदाहृतश्रुतौ प्रकृतत्वादित्यर्थः; नन्वितरत्र धर्मधर्मिणोरभेदाभावादित्येवशब्दः ।

'उत्कर्षसत्त्वे महदपि वा तत्परत्वम्' इत्यङ्गीकारे वाक्यभेददोषो दुष्परिहरः इत्यतो वाशब्दद्योतितानास्थातात्पर्यं दर्शयति– **एतदुक्तं भवतीति** ।। **उदासीनं** वस्तुसत्त्वासत्त्वानवगाहि । प्रकृतमनुसन्धापयन्नाह– **सत्त्वासत्त्वलक्षणाविति** ।। **तात्पर्यान्तरकल्पनयेति** ।। उत्कर्ष इव तत्सत्त्वे पृथक्महातात्पर्यं न कल्पनीयम् । वस्तुस्वरूपमहातात्पर्यस्यैव तत्सत्त्वे महातात्पर्यरूपत्वादिति भावः । 'श्यामोऽथवा हृदये सोऽष्टबाहुर्ध्येयः स वै लोहितादित्यवर्णः' इत्यादिना श्यामरूपत्वअष्टबाहुत्वाद्याकारसमभिधानादिति भाष्यार्थः । तर्हि 'अरूपम्' इत्यादेः का गतिः इत्याशङ्क्याह– **एतच्चेति** ।। अरूपित्वादिकं लौकिकरूपाद्यभावपरत्वम् अरूपत्वादेस्तु इत्यादिना द्वादशाध्याये सप्रपञ्चं निरूपितमित्यर्थः ।

**भावदीपिका (श्री.टि.)–**

'यतस्ता हरिणा दृष्टाः श्रुता एवापरैर्जनैः ।
श्रुतयो दृष्टयश्चेति तेनोच्यन्ते पुरातनैः ।।'

इति वचनं हृदि निधायाह– **दृष्टेः श्रुतेरिति** ।। **शेषेणेति** ।। 'तच्चापि ह्यस्त्येव' इत्यादिनेत्यर्थः । प्रकृतोपयुक्तमेव दर्शयति– **उत्कर्षस्येति** ।। बाधकाभावेन सत्त्वोपपादकत्वात् प्रकृतोपयोग इत्यर्थः । **उपलक्षणमिति** ।। विरुद्धप्रत्यक्षागमयोरित्यर्थः । **अत इत्युक्तमिति** ।। 'न तत्प्रमाणाम् ' इत्यत्र हेतुकथनपरेण 'अतः' इत्यनेनोक्तमित्यर्थः । **समुच्चय इति** ।। सर्वोत्कर्षविरोधित्वेन आशङ्क्यमानप्रत्यक्षागमयोः समुच्चय इत्यर्थः । ननु 'उत्कर्षे हि' इत्युत्कर्षस्य प्रकृतत्वात् 'सन्नेवोत्कर्षः' इति वक्तव्ये 'सदेव माहात्म्यम्' इति कस्मादुक्तम् इत्यत आह– **उत्कर्षस्येति** ।।

'तत्र' इत्यनूद्य 'सत्त्वे' इति व्याख्याय तत्र चशब्दः संयोजितः । तथा च 'उत्कर्षे महातात्पर्यम्, सत्त्वे चावान्तरम्' इत्यर्थः । **अङ्गीकृत्येति** ।। उत्कर्षतत्सत्त्वयोः धर्मधर्मिभावेन भेदमङ्गीकृत्य उभयत्र महातात्पर्याभावेन वाक्यभेदो नेत्येतदङ्गीकृत्योक्तमित्यर्थः । 'तयोः' इत्यन्तेनैव पूर्णत्वात् श्रुतौ 'अनन्ते' इति पदमधिकम् इत्यत आह– **प्रकृतत्वादेवोक्तमिति** ।। 'विष्णोरनन्तस्य परात्परस्य' इति पूर्ववाक्य इत्यर्थः ।

श्लोकः २४

**प्रमाणम्** उत्कर्षादिप्रतिपादकम् । **तस्य** प्रमाणप्रतिपादितोत्कर्षरूपार्थस्य । **नन्विति** ।। विधिनिषेधाववधूय प्रत्ययायोगादिति भावः । **तत्र** सत्त्वे । **तात्पर्यान्तरेति** ।। उत्कर्षे तत्सत्त्वे च पृथक् तात्पर्यं न कल्प्यम् । उत्कर्षे महातात्पर्यसिद्ध्या तत्सत्त्वेऽपि तत्सिद्धेरिति भावः । **अनन्तरातीताध्याय इति** ।। 'श्यामोऽथ वा हृदये सोऽष्टबाहुः ध्येयः स वै लोहितादित्यवर्णः' इत्यादिश्रुतेरुदाहरणेन प्रपञ्चितमित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)– ।। युक्तिभिरित्युपलक्षणमिति ।।** अनेन मूले युक्तिभिरपीत्यपिशब्दः प्रामादिक इति सूचितम् । अन्यथा 'सापि' इत्यपिशब्देन प्रत्यक्षादेः सङ्ग्रहः इतिवदत्राप्यपिपदेन प्रत्यक्षादेः सङ्ग्रह इत्येव ब्रूयात् । यद्वैतदपलापोऽपिशब्दो भिन्नक्रमः पूर्वोक्तसमुच्चायक इत्याहुः– **श्रौततच्छब्देति** ।। श्रुतावुत्कर्षे महत्त्वादित्युभयोः प्रकृतत्वेऽपि तदिति नपुंसकेन महत्त्वस्यैव परामर्श इति भावः । तत्रेत्यस्यार्थः– **सत्त्व इति** ।।

ननु वस्तुतत्सत्वयोः सर्वत्राप्येकत्वात् किम् 'अनन्त' इति विशेषोक्तेत्यत आह– **प्रकृतत्वादेवेति** ।। ननु उत्कर्षे तत्सत्वे च महातात्पर्योक्तौ वाक्यभेदतादवस्थ्यम् । न च तयोरैक्याददोषः । तर्ह्युत्कर्षे तत्सत्वे च महातात्पर्यम् इति समुच्चयोक्त्ययोगादित्यत आह– **एतदुक्तं भवतीति** ।। ननु यदि ब्रह्मणः श्यामत्वादिकं तर्हि 'अशब्दमस्पर्शमरूपम्' इत्यादेः का गतिरित्यत आह– **एतच्चेति** ।। 'अरूपत्वादेस्तु'इत्यादिनेति शेषः । लौकिकरूपाद्यभावपरत्वं श्रुतेरिति भावः ।

**भाष्यम्— युक्तं च पुरुषमतिकल्पितयुक्त्यादेराभासत्वम् । अज्ञानसम्भवात् । न तु स्वतः प्रमाणस्य वेदस्याऽभासत्वम् । अदर्शनं च सम्भवत्येव पुंसां बहूनामपि अज्ञानात् । तर्ह्यस्मदनधीतश्रुत्यादौ विपर्ययोऽपि स्यादिति न वाच्यम् । यतस्तत्रैवाऽह– 'नैतद्विरुद्धा वाचो नैतद्विरुद्धा युक्तय इति ह प्रजापतिरुवाच प्रजापतिरुवाच' इति । तद्विरुद्धं च जीवसाम्यम् ।।**

भावप्रदीपिका (प.टी.)– ननु प्रमाणत्वाविशेषायुक्तिविरोधाच्छ्रुतिरेवाभासा किं न स्यात् ? इत्यत आह– **युक्तं चेति** ।। तर्हि शैवादिवाक्यविरुद्धत्वात् श्रुतिराभासेत्यत आह– **अदर्शनं चेति** । तर्ह्यदर्शनसम्भवादेव शास्त्रान्तरे भगवदुत्कर्षविरोधसम्भवात्

तद्विरोधेनैतच्छ्रुतेराभासत्वमित्याशङ्क्याह– **तर्हीति** । अस्तु वेदानां भगवदुत्कर्षे तत्सत्त्वे च तात्पर्यम् । ततश्च किं प्रकृते समायातमित्यत आह– **तदिति** । तच्छब्दात् महातात्पर्यम् ।

**प्रमेयदीपिका (ज.टी.)**– वेदविरोधाद् युक्त्यादेराभासत्वमित्युक्तम् । तदयुक्तम् । नियामकाभावात् । विपर्ययस्यापि सुवचनादित्यत आह– **युक्तं चेति** ।। युक्तं सम्भावितम् । **अज्ञानसम्भवात्** अज्ञानमूलत्वसम्भवात् । अज्ञानमुपाधिव्यभिचारादि-विषयम् । स्वतः प्रमाणस्यापौरुषेयतया पुरुषगुणानपेक्षप्रमाणभावस्य । युक्तेरज्ञान-मूलत्वसम्भावना निर्बीजेत्यत आह–**अदर्शनं चेति** ।। सम्भवति शङ्कार्हमित्यर्थः ।।

एतदुक्तं भवति । वेदस्य युक्त्यादेश्च परस्परविरोधे द्वयोः प्रामाण्यानुपपत्तावन्यतर-स्याऽभासत्वे कल्पनीये युक्त्यादेरेव तत्कल्प्यं सम्भवात् । न तु वेदस्यासम्भवात् । निरवकाशेन सावकाशस्य बाधदर्शनादिति । पुरुषेष्वदर्शनमाशङ्कमानानामतिप्रसङ्गमाशङ्क्य निषेधति– **तर्हीति** ।। **विपर्ययः** भगवद्गुणोत्कर्षस्य । 'सर्ववाचाम्' इति श्रुत्यै-वोक्तत्वादिति परिहारे स्थितेऽन्यमप्याह– **यत इति** ।। तस्यामेव श्रुतावाह वेदपुरुषः । **एतद्विरुद्धाः** भगवद्गुणोत्कर्षविरुद्धाः । 'उत्कर्षे हि' इत्यादिनोक्तमुपसंहरति– **तदिति** ।। सर्ववेदानां यद्भगवद्गुणोत्कर्षे महातात्पर्यमुक्तं तद्विरुद्धं जीवसात्म्यं जीवस्यैकात्म्यम् ।।

**भाववोधः (र.टि.)**– ननु युक्त्यादेरपि स्वतः प्रामाण्यात् किं विशिष्योच्यते,'ननु स्वतः प्रमाणस्य वेदस्य' इत्यतः तद्व्याचष्टे – **अपौरुषेयेत्यादिना** ।। २३ ।।

**भावदीपः (रा.टि.)**– ।। **अदर्शनमाशङ्कमानानामिति** ।। उपाध्यायादियुक्तिदोषाणा-मदर्शनमित्यर्थः ।। **सर्ववाचामिति श्रुत्यैवेति** ।। प्राग्भाष्योक्तश्रुत्यैव सर्वश्रुत्यादौ विपर्यया-भावस्योक्तत्वाद् इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– उभयोः प्रमाणत्वे एकविरोधेनापरस्याभासत्वे नियामकाभाव इत्येतदुपपादयति– **विपर्ययस्यापीति** ।। युक्तिविरोधेन वेदाभासत्वस्यापि सुखेन वक्तुं शक्यत्वादित्यर्थः । ननु 'युक्तम्' इति युक्तिनिश्चितमित्यर्थः । 'अज्ञानसम्भवात् 'इति च सम्भावकं भाषितम् । सम्भावकेन च सम्भव एवोत्पत्तुमर्हति, न निश्चयः इत्याशङ्क्यात्र

श्लोकः २४
विवक्षितं युक्तशब्दार्थमाह– **युक्तं सम्भावितमिति** ।। अचेतनयुक्त्यादेः अज्ञानसम्बन्धः कथम् इत्यत आह– **अज्ञानमूलत्वसम्भवादिति** ।। घटादिविषयकाज्ञानस्य युक्त्याद्याभासे मूलत्वं कथं स्यात् इत्यत अज्ञानविषयं दर्शयति– **अज्ञानं चेति** ।। आदिशब्देन प्रबलप्रमाणविरोध शब्दितकालात्ययापदिष्टत्वपरिग्रहः ।

करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वं नाम प्रमाणजननशक्तेर्ज्ञानजननशक्त्यभिन्नत्वम् । तच्च करणत्रयसाधारणमिति किं विशिष्याभिधीयते 'स्वतः प्रमाणस्य वेदस्य' इति वेदमात्रविषयं स्वतः प्रामाण्यं दर्शयति– **अपौरुषेयतयेति** ।। **गुणः** आप्तोक्तत्वं **प्रमाणभावस्य** प्रमाणत्वस्य । इदमेव वेदप्रामाण्यस्य स्वतस्त्वमिति भावः । **निर्बीजेति** ।। सम्भावना हि सम्भावकसद्भावे स्यात् । न चात्र तथाविधं सम्भावकमुपलभामह इति शङ्कितुर्हृदयम् । 'अदर्शनम्' इति भाष्यपदस्य 'उपाधिव्यभिचारादिविषयकमज्ञानम्' इत्यर्थः । सम्भवति सम्यग्भवत्येवेति कथं निर्धारणम् पुरुषेष्वज्ञानाभावस्यापि प्रेक्षावत्सु सम्भवात्, इत्यतः प्रकृतानुगुणविवक्षितमर्थमाह– **शङ्कार्हमिति** ।। प्रायेण पुंसाम् अज्ञानदर्शनाद् अत्रानुमानकल्पकस्य पुंस्त्वादिति भावः ।

ननु करणेषु स्वतः प्रामाण्यं विविधं व्यवस्थापितमिति वैषम्यमात्रमायातम् न पुनर्वेदविरोधेन युक्त्यादेराभासत्वे नियामकमुक्तम् इत्यतो भाष्यभावमाह– **एतदुक्तं भवतीति** ।। **सम्भवात्** अज्ञानमूलकत्वस्य शङ्कार्हत्वात् । तथा च तस्य सावकाशत्वम् । असम्भवात्तत्र पुरुषाभावेन तदज्ञानमूलत्वासम्भवात् निरवकाशमिति भावः । **अदर्शनम्** अज्ञानम् **आशङ्कमानानां** सिद्धान्तिनाम् । **सर्ववाचामिति श्रुत्यैवेति** ।। 'अवाच्योत्कर्षे महत्त्वात् सर्ववाचाम्' इति पूर्वोदाहृतश्रुत्यैव सर्वशब्दोपादानेन अस्मदधीतानाम् अनधीतानां च श्रुतिवाचां ग्रहणादनधीतश्रुतावपि गुणोत्कर्षविपर्ययो नास्तीत्यर्थस्योक्तत्वादित्यर्थः । **अन्यमप्याहेति** ।। उक्तसर्वार्थावधारणार्थाय द्विरुक्तेरत्र श्रवणेन पूर्वोदाहृतश्रुतौ सर्वशब्दः सङ्कुचितपरोऽस्तु इति शङ्कानर्हपरिहारमाहेत्यर्थः । 'तत्रैव' इत्यस्यार्थः – **तस्यामवेति** ।। 'आह' इत्याख्यातोपात्तं कर्तारं निदर्शयति– **वेदपुरुष इति** ।। समानश्चासावात्मा च सात्मा, तस्य भावः सात्म्यम् । समानशब्दश्च समानग्रामोऽयमित्यादाविव एकार्थः । 'समानस्य' इति योगविभागात् साधर्म्यम् इत्यादाविव समानशब्दस्य सभाव इति भावेन तदनूद्य व्याचष्टे– **सात्म्यमीश्वरेण जीवस्यैकात्म्यमिति** ।।

श्लोकः २४

**भावदीपिका (श्री.टि.)– ।। इत्युक्तम्** अतः' इत्यनेनेत्यर्थः । **विपर्ययस्यापीति** ।। युक्त्यादिविरोधेन वेदस्याप्याभासत्वस्येत्यर्थः । **उपाधीति** ।। तथा च 'उपाधिप्रतिपक्षौ तु क्व नामातीव दुर्वचौ' इति वचनादुपाधिव्यभिचारसत्प्रतिपक्षादिभिः युक्त्यादेराभासत्वं वक्तुं शक्यमिति भावः । ननु युक्त्यादेरपि स्वतः प्रामाण्यात् किं विशिष्याभिधीयते 'स्वतः प्रमाणस्य वेदस्य?' इत्यतस्तद्व्याचष्टे– **अपौरुषेयेत्यादिना ।। गुणेति** ।। आप्तोक्तत्वेत्यर्थः । **अदर्शनमितीति** ।। उपाधिव्यभिचारयोरदर्शनमिति भावः ।

**सम्भवादिति** ।। अज्ञानमूलकत्वसम्भवादित्यर्थः । ततश्च सावकाशत्वमिति भावः । **असम्भवादिति** ।। अज्ञानमूलकत्वासम्भवादित्यर्थः । ततश्च निरवकाशत्वमिति भावः । **आशङ्कमानानामिति** ।। कर्मणि षष्ठी । तथाच बहुष्वपि पुरुषेष्वज्ञानम् आशङ्कमानान् सिद्धान्तिनः प्रति पूर्वपक्षिणा दत्तो योऽतिप्रसङ्गः तमाशङ्क्य इत्यर्थः । **तर्हीतीति** ।। बहूनामप्यज्ञान इत्यर्थः । 'सर्ववाचाम्' इत्यतः पूर्वं 'कुतो न वाच्यमिति चेत्' इति वाक्यमध्याहार्यम् । समानश्चासावात्मा च सात्मा, तस्य भावः सात्म्यम् समानशब्दश्चैकत्वार्थक इत्याशयेनाह– **सात्म्यमिति** ।।

**भावप्रकाशः (कृ.टि.)–** ननु युक्त्यादेराभासत्वं युक्तिसिद्धमिति कथम् । अज्ञानसम्भवादिति सम्भावकस्योक्तेरित्यत आह– **सम्भावितमिति** ।। अचेतने युक्त्यादौ कथमज्ञानसम्भव इत्यत आह– **अज्ञानमूलत्वेति** ।। ननु करणप्रामाण्यस्योत्पत्तौ स्वतस्त्वं नाम प्रमाजननशक्तेः ज्ञानजननशक्त्यभिन्नत्वम् । तच्च युक्त्यादिसाधारणमिति । 'स्वतःप्रमाणस्य' इति विशिष्योक्तिरयुक्तेत्यत आह– **अपौरुषेयतयेति** ।। ननु सम्भवतीत्यनेनोत्कटैककोटिकसंशय उक्तः । स चानेकाकोटिकसंशयस्थलेऽव्यापक इत्यत आह– **शङ्काहमित्यर्थ इति** ।। ननु युक्त्यादेः वेदस्य च वैषम्यमात्रमुक्तं नत्वन्यतरस्याभासत्वे नियामकमित्यत आह– **एतदुक्तमिति** ।।

## भाष्यम्

**'आभास एव च' इति चोक्तम् । 'जनमेजय उवाच–**

**बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।**
**को ह्यत्र पुरुषश्रेष्ठः तं भवान् वक्तुमर्हति ।।**

श्लोकः २४

## श्रीवैशम्पायन उवाच–

**'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।**
**बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।**
**तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।' इति मोक्षधर्मे ।।**

भावप्रदीपिका (प.टी.)– न केवलं महातात्पर्ययुक्तिविरुद्धमैक्यम्, किन्तु सूत्रस्मृतिविरुद्धं चेत्याह **–आभास एवेति ।**

प्रमेयदीपिका (ज.टी.)– सूत्रेतिहासविरुद्धं चेत्याह– **आभास इति ।।** वहवः इति पक्षेऽपि किं सर्वे समाः, उत एकः श्रेष्ठः? द्वितीये कोऽसौ अत्र पुरुषेषु श्रेष्ठः? कथं च श्रेष्ठः? तं तथा वक्तुमर्हतीति। एतत् एतस्मिन् जगति । किन्तु वहवः । तेषां वहूनां पुरुषाणां मध्ये यो योनिः यः कारणभूतः सः श्रेष्ठः । तथाच तं पुरुषं तथा व्याख्यास्यामि । विश्वं व्याप्तम् ।। स्यादेतत् । सर्वं जगत् स्वप्नवदेकाज्ञानकल्पित-मित्येके । इन्द्रजालवत् अनेकाज्ञानकल्पितमित्यपरे । अपकृष्टापेक्षश्चोत्कर्षः । तथा चापकृष्टस्य विश्वस्य मिथ्यात्वादुत्कर्षस्य सत्त्वं कथं स्यात् । कथं च तत्र सर्ववेदानां महातात्पर्यमित्यत आह– **नचेति ।।** 'भगवद्वचनं यतः' इति शेषः ।।

भावरत्नकोशः (सु.टि.)– ।। **सूत्रेति** ।। यद्यपि 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतौ जीव ईश्वरस्याभासः प्रतिबिम्ब एव प्रतिपन्न इति, न मत्स्यादिसाम्यमित्यर्थ्यप्रतिपादनाय प्रवृत्तमिदं सूत्रम्, न पुनरीश्वरस्य जीवैक्यनिषेधाय । तथापि 'आभासत्वेन यदा साम्यमपि न, तदा किमुवक्तव्यं सात्म्यं नास्ति' इत्याशयेन तत्सूत्रोदाहरणमिति भावः । **इतिहासः** भारतम् । न केवलं महातात्पर्ययुक्तिविरुद्धमिति चशब्दः । 'अत्र' इत्यनुवादः, 'पुरुषेषु' इति व्याख्या । **श्रेष्ठः** पुरुषः कोऽसौ । **तं** श्रेष्ठं **तथा** तेन प्रकारेण । अध्याहारेण योजयति – **किन्तु बहव इति** ।। 'एष्टव्याः' इति शेषः । श्रेष्ठो यथा च येन प्रकारेण श्रेष्ठः तं श्रेष्ठं तथा तेन प्रकारेण । विश्वाभेदस्य बहुमानविरुद्धत्वात्, पूर्णत्वस्य गुणाधिकमित्यनेन प्राप्तत्वात्, विवक्षितमर्थमाह– **विश्वं व्याप्तमिति** ।। प्रकृतार्थेन सङ्गतिं वदन्, दृष्टान्तद्वयोक्तिकृत्यं च सूचयन्नाह– **स्यादे-तदित्यादिना** ।। **एकाज्ञानकल्पितम्** एकजीवाज्ञानकल्पितम् । **कथमिति** ।। 'शशविषाणा-दुत्कर्षो गोविषाणस्य' इत्यत्र प्रतियोगिभूतशशविषाणस्य मिथ्यात्वे तत्प्रतियोगिकगोविषाणोत्कर्षो

यथा सन्न भवति, तथा प्रकृतेऽपि जगन्मिथ्यात्वे तत्प्रतियोगिकोत्कर्षः कथं सन् स्यादिति भावः । **तत्र** असत्यर्थे । **भगवद्वचनं** ब्रह्मसूत्ररूपम् ।

**भावदीपिका (श्री.टि.)**– ।। **आभास इतीति** ।। 'रूपं रूपं प्रतिरूपो बभूव' इति प्रतिबिम्बत्वाच्च न मत्स्यादिसाम्यमिति सूत्रार्थः । **कथं** केन धर्मेण । **तम्** पुरुषम् । तथा तद्धर्मविशिष्टत्वेन । 'नैतदिच्छन्ति' इत्याद्यनन्तरम् अध्याहार्यमाह– **किन्त्विति** ।। अभेदस्य बाधितत्वात् । पूर्णार्थकत्वे च 'गुणाधिकम्' इत्यनेन पुनरुक्तिप्रसङ्गादाह– **व्याप्तमिति** ।। **एकेति** ।। एकजीवेत्यर्थः । **अनेकेति** ।। अनेकजीवेत्यर्थः । 'वैधर्म्याच्च' इति सूत्रस्य 'न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले 'स्वप्नोऽयम्, 'नायं सर्पः' इत्याद्यनुभवात् । न चात्र 'तादृशं प्रमाणमस्ति' इत्यर्थो द्रष्टव्यः ।

**भावप्रकाशः (कृ.टि.)**– 'को ह्यत्र पुरुषश्रेष्ठः' इति प्रश्नघटनायामाह– **बहव इति** ।। **पक्षेऽपीति** ।। तं तथेति प्रतिवचनगततथाशब्दस्याप्रसादादाह– **कथं च श्रेष्ठ इति** ।। दृष्टान्तद्वयोक्तिकृत्यं दर्शयन्नेव असङ्गतिपरिहाराय आक्षेपिकां सङ्गतिमाह– **स्यादेतदित्यादिना** ।।

## भाष्यम्

**नचैतत्सर्वं स्वप्नेन्द्रजालवत् । 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र.सू.२.२.२९) इति भगवद्वचनम् । नच स्वप्नवत् एकजीवकल्पितत्वे मानं पश्यामः । विपर्यये मा चोक्ता द्वितीये । उक्तं चायास्यशाखायाम्–**

**'स्वप्नो ह वाऽयं चञ्चलत्वान्न स्वप्नो न हि विच्छेदो एतदिति' इति ।।**

भावप्रदीपिका (प.टी.)– ननु भगवतो बहुपुरुषयोनित्वादित्युक्तम् । तदपि माययैव किं न स्यात् ? इत्यत आह– **न चेति** । न स्वप्नादिवदीश्वरमाहात्म्यं मायिकमित्याह– **न चेति** । यदि स्वप्नादिवत् तर्ह्येककल्पितं स्यात् । नच तत्र प्रमाण-मित्यर्थः । न केवलं मायिकत्वे प्रमाणाभावः, किन्त्वमायिकत्वे च सन्ति प्रमाणा-नीत्याह– **विपर्यय इति** । ननु जगतः पुराणादौ स्वप्नसमत्वोक्तेः जगत्कर्तृत्वाद्यपि मायिकमेवेत्यत आह– **उक्तं चेति** । चञ्चलत्वात् स्वप्नः । न साक्षात् स्वप्नः । यस्मान्नैतस्य विच्छेदो बाध इत्यर्थः ।

श्लोकः २४

**प्रमेयदीपिका (ज.टी.)**– इतोऽप्येवमेवेत्याह– **नचेति** ।। **कल्पितत्वे विश्वस्य** । एवं बहुजीवकल्पितत्वेऽपीति वाच्यम् । **विपर्यये** सत्यत्वे । तर्हि कथं विश्वस्य पुराणेषु स्वप्रादिसाम्यमुच्यते ? इत्यत आह– **उक्तं चेति** ।। अयं प्रपञ्चः स्वप्न इवोच्यते । चञ्चलत्वात् अनित्यत्वात् विकारित्वाच्च । नतु स्वप्नः साक्षान्मिथ्या इति यावत् । कुतः? एतत् एतस्य विच्छेदः बाधो न हीत्यर्थः । यद्यपि स्वप्नः सत्यः । तथाऽप्यङ्गीकारवादोऽयम् । मिथ्यार्थप्राचुर्याद्वा ।।

**भावरत्नकोशः (सु.टि.)**– ।। **इतोऽपीति** ।। न केवलं ब्रह्मसूत्रविरुद्धत्वात् स्वप्नेन्द्रियजालवत् जगन्मिथ्यात्वमयुक्तम् । किन्तु हेत्वन्तराद् मानाभावरूपादपीत्यर्थः । 'एकजीवकल्पितत्वे' इत्यत्र प्रकृतापयोगाय शेषमाह– **कल्पितत्वे विश्वस्येति** ।। 'विपर्यये कल्पितत्वस्य विपर्यये इत्यस्य निर्गलितमाह– **सत्यत्व इति** ।। भावप्रदीपिकायां तु– ननु भगवतो बहुपुरुषयोनित्वादिकमुक्तम्, तत् सर्वं माययैवेति किं न स्यात् इत्यत आह– **न चेति** ।। न स्वप्नादिवदीश्वरमाहात्म्यं मायिकमित्याह– **नच स्वप्नवदिति** ।। यदि स्वप्नादिवदिष्यते तर्ह्येककल्पितं स्यात् । नच तत्र प्रमाणं पश्याम इत्यर्थः । न केवलं मायिकत्वे प्रमाणाभावः, किन्त्वमायिकत्वे च सन्ति प्रमाणानीत्याह– **विपर्यय इति** ।।

**तर्हि** भगवन्माहात्म्यस्यामायिकत्वे **पुराणेषु** स्वप्नमनोरथो यथा' इत्यादि भागवतादिषु । श्रौतवाशब्दार्थः 'इव' इति । भूधरादेः विद्युदादेरिव चञ्चलत्वाभावादाह– **अनित्यत्वाद्विकारित्वादेकप्रकारेणानवस्थानाच्चेति** ।। इदं च हेतुद्वयं श्रौतचशब्दसमुच्चितमिति ज्ञातव्यम् । चशब्दः तुशब्दार्थोऽपीत्याशयेनोक्तम्– **न तु स्वप्नः साक्षादिति** ।। अनुपचारेण । 'स्वप्न इव' इति स्वप्नसादृश्योक्त्यैव स्वप्नभेदस्य प्राप्तत्वात् वियदादिप्रपञ्चस्य परेणापि स्वप्नार्थभेदाङ्गीकारात् न च स्वप्नः इति किमुच्यते इत्यत आह– **साक्षान्मिथ्येति यावदिति** ।। स्वप्न इव स्वरूपतो धर्मतश्च मिथ्याभूत इत्यर्थः । साक्षान्मिथ्या मुख्यतो मिथ्या इत्यपि आहुः । अनुपचारेण स्वप्नो न भवतीत्यस्य तात्पर्यम् मिथ्येतीत्यपि आहुः । **स्वप्नः सत्य इति** ।। तथा च तत्साम्योक्तिर्नानिष्टेति अनित्यत्वादिना तदुपपादनं व्यर्थमिति भावः । **अङ्गीकारवाद इति** ।। परोक्तं स्वप्नमिथ्यात्वमङ्गीकृत्य पुराणेषु तत्साम्योक्त्या प्रसक्तं विश्वमिथ्यात्वं निरसितुमियमुक्तिरित्यर्थः । न च मिथ्यार्थस्यानित्यत्वाद्यभावः । परमते मिथ्यार्थस्याविद्योपादानकत्वात्, ज्ञाननाश्यत्वाच्च अनित्यत्वादेरभ्युपगमादिति भावः । स्वमतेनाह– **मिथ्यार्थेति** ।। तथा च

मल्लग्रामादिवत् प्राचुर्यापेक्षया व्यपदेशात् पुराणेषु स्वप्नसाम्योक्त्या प्रपञ्चस्य मिथ्यात्वं प्रसज्यते। अतस्तदुपपादनं कृतमिति भावः । नच स्वमते मिथ्यार्थस्यात्यन्तासत्त्वात् कथमनित्यत्वादिकमिति वाच्यम् । अनित्यत्वं नित्यत्वाभावः विकारित्वम् एकप्रकारेणानवस्थानमित्यभ्युपगमादिति केचिद् व्याख्यातवन्तः ।

**भावदीपिका (श्री.टि.)– ।। पुराणेष्विति ।।** 'अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथो यथा' इति भागवतादिष्वित्यर्थः । **साक्षात्** अनुपचारेण । **सत्य इति** ।। तथा च 'न च स्वप्नः' इत्युक्तमयुक्तम् इति भावः । **मिथ्यार्थे** जाग्रत्त्वे । जाग्रद्दृष्टपदार्थभेदस्यैव प्राचुर्येण प्रतीयमानत्वात्, तस्य च मिथ्यात्वात्, तदपेक्षया 'न च स्वप्नः' इत्युक्तमित्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। पुराणेष्विति ।।** 'स्वप्नमनोरथो यथा' इत्यादिष्वित्यर्थः । भूधरादेश्चञ्चलत्वाभावादाह– **अनित्यत्वादित्यादि ।। स्वप्नः सत्य इति ।।** तथा च तत्साम्योक्तिः नानिष्टेत्यनित्यत्वादिना तदुपपादनं व्यर्थमिति भावः । **अङ्गीकारवाद** इति ।। परोक्तस्वप्नमिथ्यात्वमङ्गीकृत्य पुराणेषु तत्साम्योक्त्या प्रसक्तं विश्वमिथ्यात्वं निरसितुमयं प्रवाद इत्यर्थः । न च मिथ्यार्थस्यानित्यत्वाद्यभावः परमते । मिथ्यात्वस्याविद्योपादानकत्वात् । ज्ञाननाश्यत्वाच्चानित्यत्वादेः सत्त्वादिति भावः । स्वमतेनाह– **मिथ्यार्थेति ।।** तथा च मल्लग्रामादिवत् प्राचुर्यापेक्षया व्यपदेशात् पुराणेषु स्वप्नसाम्योक्तौ प्रपञ्चस्य मिथ्यात्वं प्रसज्येत। अतः तदुपपादनं कृतमिति भावः । ननु स्वमते मिथ्यार्थस्यात्यन्तासत्वात् कथमनित्यत्वादिकम् इति वाच्यम् । अनित्यत्वं नित्यत्वाभावः विकारित्वम् एकप्रकारेणानवस्थानमित्यभ्युपगमात् ।

## भाष्यम्

**नायं दोषः ।। न हीश्वरस्य जीवैक्यमुच्यते । जीवस्य हीश्वरैक्यं ध्येयम् । तदपि न निरुपाधिकम् । अतो न प्रतिबिम्बत्वस्य विरोध्यैक्यम् । तथाच माधुच्छन्दसश्रुतिः– 'ऐक्यं चापि प्रतिबिम्ब्येन विष्णोः जीवस्यैतद् ऋषयो वदन्ति' इति ।**

श्लोकः २४

भावप्रदीपिका (प.टी.)– ननु कथं जीवस्येशप्रतिविम्वता । अस्मीत्यहङ्ग्रहोपासनायाः श्रुतत्वादित्यत आह– **नायमिति** । जीवेश्वरैक्ये कथितेऽपि को गुणः ? इत्यत आह– **तदपीति** । न साक्षदद्वैतमुच्यते । साक्षादद्वैताभिप्राये जीवैक्यमीश्वरस्याप्युच्येत । अतो न प्रतिविम्वत्वविरुद्धमित्यर्थः । केनोपाधिनैक्यमुच्यते ? इत्यत आह– **तथा चेति** ।

प्रमेयदीपिका (ज.टी.)– ननु जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि' इत्यहङ्ग्रहोपास्तिस्तावत् कर्तव्या । जीवश्च न सर्वोत्कृष्टः । ततश्च तेनैकीभूतस्येश्वरस्य कथं सर्वोत्कर्ष इत्यत आह– **नायमिति** ।। बुद्धिस्थस्य 'अयम्' इति परामर्शः । कुतः? इत्यत आह– **न हीति** ।। किं तर्ह्युच्यत इत्यत आह– **जीवस्य हीति** ।।

स्यादयं दोषः यदि 'अहं ब्रह्मास्मि' इत्यादिना ईश्वरमुद्दिश्य तस्यानुत्कृष्टजीवैक्यम् उच्येत । न चैवम् । किन्तु जीवमुद्दिश्य तस्येश्वरैक्यम् । अन्यथा ब्रह्म मदात्मकं भवतीति निर्देशप्रसङ्गादिति । सत्यमेतज्जीवस्येश्वरैक्यमुच्यत इति । तथाऽपि नोक्तदोषपरिहारः । यदीश्वरः वस्तुतः सर्वोत्कृष्टः स्यात् तदा कथं जीवस्य तदैक्यं स्यात्? तस्यानुत्कृष्टत्वेन अनुभवात् । अतो जीवस्य ब्रह्मणि श्रुतस्याहङ्ग्रहोपासनास्यान्यथानुपपत्त्येश्वरस्य सर्वोत्कृष्टत्वं मिथ्येत्यङ्गीकार्यमित्यत आह– **तदिति** ।।

यज्जीवस्य ईश्वरैक्यम् उच्यते तदपि न निरुपाधिकं निरुपचरितम् । किन्तु उपचारेणैवमुच्यते । उपचारबीजं सहेतुकमाह– **अत इति** ।। यतः साक्षादैक्यं नार्थः । अतः 'अहं ब्रह्मास्मि' इत्यादावुच्यमानम् ऐक्यं प्रतिविम्वत्वविरोधि प्रतिबिम्बत्वादन्यन्न भवति किन्तु प्रतिबिम्बत्वमेवेत्यर्थः । ननु साक्षादैक्यं कुतो नार्थः ? कुतश्चोपचारोऽपि प्रतिविम्वत्वनिमित्तः ? इत्यत आह– **तथा चेति** ।। जीवस्यापि विष्णोरैक्यं यद् ऋषयो वदन्ति तत् प्रतिविम्बेनैव निमित्तेन हीत्यर्थः ।।

भावदीपः (रा.टि.)– उपचारबीजं सहेतुकमाह– **अत इतीति** ।। 'अतः'इत्यनेन साक्षादैक्यार्थत्वाभावरूपबीजं प्रतिबिम्बत्वरूपहेतुसहितमाहेत्यर्थः ।।

भावरत्नकोशः (सु.टि.)– ।। **न सर्वोत्कृष्ट इति** ।। तत्त्वेनाननुभूयमानत्वादिति भावः । तेन असर्वोत्कृष्टतयाऽनुभूयमानेन जीवेन । **कुत इति** ।। असर्वोत्कृष्टजीवाभिन्नेश्वरस्य

कथं सर्वोत्कर्ष इत्याक्षेपलक्षणो दोषो नेति कुत इत्यर्थः । वाक्यद्वयलब्धं तात्पर्यं दर्शयति– **स्यादयमिति ।। अन्यथा** जीवमुद्दिश्य तस्येश्वरैक्यं नोच्यते, किन्तु ईश्वरमुद्दिश्य तस्यानुत्कृष्ट-जीवैक्यमुच्यत इति अङ्गीकारे 'अहं ब्रह्मास्मि' इति निर्देशो न स्यात् । तत्राहंपदार्थ-प्रत्यक्चैतन्यरूपं जीवमुद्दिश्य तस्य 'ब्रह्मास्मि' इति पराक्चैतन्यरूपेश्वराभेदो हि बोध्यते । स्याच्च ब्रह्म मदात्मकं भवति' इति निर्देश इत्यपि प्रसङ्गादित्यर्थः । इतिशब्दो वाक्यद्वय-भेदोक्तिसमाप्तौ ।

'न निरुपाधिकम्' इत्युक्ते 'सोपाधिकं जीवेश्वरैक्यमित्यङ्गीकृतं स्यात् । तच्च सर्वेश्वरौ सर्वथा भिन्नौ' इति स्वसिद्धान्तविरोधि इत्यत आह– **निरुपचरितमिति ।।** उपचारबीजं गौणार्थत्वे निमित्तं प्रतिबिम्बत्वरूपहेतुसहितमाहेत्यर्थः । व्यवहितत्वादन्वयं वदन्नपिशब्दं 'जीवस्य' इत्यनेन संयोज्यति– **जीवस्यापीति ।।** अनुत्कृष्टत्वेन दुःखित्वेन चानुभूयमान-स्यापीत्यर्थः ।

**भावदीपिका (श्री.टि.)– ।। अहंग्रहोपास्तिरिति ।।** अहन्त्वेन ज्ञात्वोपास्तिरित्यर्थः । **निर्देशेति ।।** न तु 'अस्मि' इति प्रयोगासङ्गतेरिति भावः । ब्रह्मणि विषये जीवस्य श्रुतं यदहङ्ग्रहोपासनं तस्येत्यर्थः ।।

**भावप्रकाशः (कृ.टि.)– ।। अहंग्रहोपास्तिरिति ।।** 'अहंग्रहोपासक' इत्यादि-वक्ष्यमाणानुसारेणैवमुक्तम् ।

## भाष्यम्

**अहङ्ग्रहोपासने च फलाधिक्यम् आग्निवेश्यश्रुतिसिद्धम् । 'अहङ्ग्रहो-पासकस्तस्य साम्यम् अभ्याशो ह वा अश्नुते नात्र शङ्का' इति । 'तदीयोऽह-मिति ज्ञानमहङ्ग्रह इतीरितः' इति वामने । 'तद्वशत्वात् सोऽस्मीति भृत्यैरेव न तु स्वतः' इति च । प्रातिबिम्ब्येन सोऽस्मि भृत्यश्च इति भावना । तथा ह्ययास्यशाखायाम् 'भृत्यश्चाहं प्रातिबिम्ब्येन सोऽस्मि इत्येवं ह्युपास्यः परमः पुमान् सः' इति । प्रातिबिम्ब्यं च तत्साम्यमेव ।। २३,२४ ।।**

भावप्रदीपिका (प.टी.)– नन्वेवं सन्दग्धार्थोऽहङ्ग्रह एव किमर्थम् ? इत्यत आह–

श्लोकः २४

**अहमिति** । **अभ्याशः** कालसामीप्येन । अहङ्ग्रहस्योक्तार्थत्वे स्मृतिं चाह– **तदीयोऽहमिति** । ननु तथाऽपि भृत्येन राजाऽहम् इत्युक्तेऽपराधवत्, अहङ्ग्रहेऽपराधः स्यादित्येतत् सप्रमाणकं परिहरति– **प्रतिबिम्बेनेति** । ननु तर्हि प्रतिबिम्बभृत्यत्वाभ्यां भेदाभेदौ स्यातामित्यत आह– **प्रातिबिम्ब्यमिति** ।। २४ ।।

प्रमेयदीपिका (ज.टी.)– इतश्चोपचारेणैवाहङ्ग्रहोपासनमित्याह– **अहमिति** ।। फलाधिक्यं मुख्यं फलम् । अहङ्ग्रहोपासनस्य हि परमं प्रयोजनमीश्वरसारूप्यापत्तिरेव श्रुत्योच्यते । यदि च निरुपचरितमैक्यमुपास्यं स्यात् तदा तन्नोपपद्येत । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः । **अभ्याशः** समीपम् । **अल्पेनैव** कालेनेत्यर्थः ।

इतोऽप्युपचारेणैवाहङ्ग्रह इत्याह– **तदीय इति** ।। 'भृत्यैरेवोपास्यते' इति शेषः । **स्वतः** साक्षादैक्यात् । ननु 'अग्निर्माणवकः' इत्याद्युपचारो भेदज्ञानसहचरितो दृष्टः । नच प्रकृते तदस्ति । तत्कथमुपचारेणाहङ्ग्रहोपासनमित्यतोऽत्रापि भेदज्ञानसाहित्यमस्तीति सप्रमाणकमाह– **प्रातिबिम्ब्येनेति** ।। ननु बिम्बत्वमङ्गीकृतं चैदैक्यमेवापन्नमित्यत आह– **प्रतिबिम्ब्यं चेति** ।। तदधीनत्वं च ग्राह्यम् । 'तदीयोऽहम्' इत्युक्तत्वात् । एवशब्दस्त्वैक्यस्य व्यवच्छेदार्थः ।।

एतेन 'क्षेत्रज्ञं चापि मां विद्धि' (१३.३) इत्यादेरपव्याख्यानमपास्तं भवति ।। २३,२४ ।।

भावदीपः (रा.टि.)– तदधीनत्वस्यापि ग्रहणे हेतुमाह– **तदीयोऽहमित्युक्तत्वादिति** ।। 'एव'इत्यवधारणाद्विरोधमाशङ्क्याह– **एवशब्दस्त्विति** ।। **अपव्याख्यानमिति** ।। 'क्षेत्रज्ञं जीवं मां विद्धि, मदैक्येन जानीहि' इत्यपव्याख्यानम्, 'प्रातिबिम्ब्यं च तत्साम्यमेव' इति कथनेन 'अहङ्ग्रहोपासने' इत्युक्तेरन्यथाव्याख्यानेनापास्तमित्यर्थः ।। २३–२४ ।।

भावरत्नकोशः (सु.टि.)– अन्येन प्राप्ते फलेऽतिशयोऽनेनापद्यत इति प्रतीतिनिरासाय विवक्षितमर्थमाह– **मुख्यं फलमिति** ।। कथमनेन 'उपचारेणैवाहङ्ग्रहोपासनमित्यर्थो लभ्यते' इत्यतो भाष्यभावमाह– **अहङ्ग्रहेत्यादिना** ।। 'तस्य साम्यम्' इति श्रवणादुक्तम्– **सारूप्यापत्तिरिति** ।। तत् मुख्यं फलम् । तदेव भवति इत्यस्य 'तदेव प्राप्नोति इत्यर्थ उक्तः

तत्त्वप्रदीपिकायाम् । अग्निवैश्यश्रुतिरेव पठ्यते भाष्ये– **अहङ्ग्रहेति** ।। 'समीपनिकटाभ्याश-सन्निकर्षसनीडवत्' इत्यभिधानादाह– **अभ्याशः समीपमिति** ।। **अहङ्ग्रह इति** ।। जीवस्य ब्रह्मणि 'अहं ब्रह्मास्मि' इत्यहङ्ग्रहोपासनमित्यर्थः । 'स्वतः इत्यनूद्यार्थमाह– **स्वतः साक्षा-दैक्यादिति** ।। निरुपचरितैक्यादित्यर्थः । भाष्ये 'तद्वशत्वात्तु' इत्यस्य 'तत्प्रातिबिम्ब्यादेव' इत्यर्थः । बिम्बप्रतिबिम्बैक्यमतेनाह– **ऐक्यमेवापन्नमिति** ।। **तत्साम्यं** ब्रह्मसारूप्यमेव । **'प्रातिबिम्ब्यम्'** इत्युक्तगोगवयादावतिप्रसक्तेराह– **तदधीनत्वं चेति** ।। **उक्तत्वात्** तदीयोऽह-मिति ज्ञानम्' इति 'तद्वशोऽहम्' इत्युक्तत्वादित्यर्थः । एवं सत्यवधारणविरोधः इत्यत आह– **एवशब्दस्त्विति** ।।

भावप्रदीपिकायां तु अहङ्ग्रहस्योक्तार्थत्वे स्मृतिं चाह– **तदीयोऽहमिति** ।। ननु तथापि भृत्यस्य 'राजाऽहम्' इति भावने अपराधवत्, अहङ्ग्रहोपासनेऽपराधः स्यात् इत्येतत् सप्रमाणकं परिहरति– **प्रातिबिम्ब्येनेति** ।। ननु तर्हि प्रातिबिम्ब्यभृत्यत्वाभ्यामभेदभेदौ स्याताम् इत्यत आह– **प्रातिबिम्ब्यमिति** इति 'तदीयोऽहम्' इत्यादि भाष्यं व्याख्यातम् । **एतेनेति** ।। 'तदपि न निरुपाधिकम्' इत्यादिना 'प्रातिबिम्ब्यं तत्साम्यमेव' इत्यन्तेन ग्रन्थेन । अप-**व्याख्यानम्** 'सर्वक्षेत्रेषु क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तो यः तं क्षेत्रज्ञं मां परमेश्वरं विद्धि' इति जीवेश्वरैक्यं गीताभिप्रेतमिति व्याख्यानमित्यर्थः ।। २४ ।।

**गीताक्षरार्थस्तु–** 'यतश्च यत्' इति यद्धर्मविशिष्टस्य प्रेरकत्वं प्रतिज्ञातं तद्धर्मविशिष्ट-प्रेरकस्य स्वरूपमुच्यते– **उपद्रष्टेति** ।। उपशब्दः 'उपरि' इत्यर्थे, सर्वेभ्य उपरि वर्तमानः, उत्तम इति यावत् । द्रष्टा समस्तसाक्षात्कारवान् उपद्रष्टाऽनुमन्ता । अनुशब्दः पुनरर्थे । क्रियाऽऽ-वृत्तिश्च तदर्थः । ताच्छील्यार्थः तृन्प्रत्ययश्च 'विशेष' इत्यर्थे । पुनःपुनः विशेषतः कर्तव्यस्या-लोचकः । भर्ता भरणकर्ता भोक्ता शुभसारस्य महेश्वरो महासमर्थोऽचिन्त्यशक्तिः परमात्मा उत्तमचेतनः । चशब्दो विशेषणानां परस्परसमुच्चयार्थे, 'कोऽयमनुमन्ता' इत्यतोऽनुमन्तृस्वरूपं निर्धारयितुमुक्तम्– **अप्युक्तो देहेऽस्मिन्निति** ।। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इति, योऽहं सर्ववेदेषु स्थितत्वेन प्रागुक्तः सोऽनुमन्ता' इत्यनेन स्वात्मैवानुमन्तेत्युक्तं भवति । तथा च तात्पर्यनिर्णये 'मां विद्धि सर्वक्षेत्रेष्विति देहेऽप्युक्तः । तेनाहमेव स इति दर्शयति' इति । स एव परः देहगतजीवविलक्षणः पुरुषश्च । इतिशब्दः 'उपद्रष्टा' इत्यादौ सर्वत्रान्वितः सन्ननुमन्तृत्वे हेत्वभिधायक इति न्यायदीपिका ।। २३ ।।

श्लोकः २५,२६

**गीताक्षरार्थस्तु–** प्रकृतिं पुरुषं चैव' इत्यत्र प्रकृतं पुरुषं जीवमीश्वरं च प्रकृतिं चतुर्विंशतितत्त्वात्मिकां गुणैः देहेन्द्रियसम्बन्धेन सुखदुःखभोगः, भगवत्प्रेर्यत्वम्, अनादिमत्त्वमित्यादिजीवधर्मैः, उपद्रष्टृत्वसर्वसमत्वादिरूपभगवद्गुणैः, सत्त्वरजस्तमोगुणप्रभवत्वम् इच्छादिविकारोत्पादकत्वम्, भगवत्प्रेर्यत्वम् इत्यादिरूपैः प्रकृतिधर्मैश्च सह वेत्ति परोक्षतो ज्ञात्वाऽपरोक्षतः पश्यति स सर्वथा वर्तमानोऽपि प्रमादाद् अन्यायेन वर्तमानोऽपि भूयो नाभिजायते नियतमोक्षो भवति ।। २४ ।।

**भावदीपिका (श्री.टि.)–** ।। **तदिति** सारूप्यरूपं फलम् । कुत इत्यत आह– **तमिति** ।। ननु 'तदधीनत्वं च ग्राह्यम्' इति कथमुच्यते? एवकारेण तस्य व्यावर्तितत्वात्, इत्यत आह– **एवशब्दस्त्विति** ।। **एतेनेति** ।। 'य एनम्' इत्यस्यापव्याख्याननिरासेनेत्यर्थः ।। २४ ।।

**भावप्रकाशः (कृ.टि.)–** नन्वैक्यस्य निरुपाधिकत्वनिषेधे सत्योपाधिकृतसत्यभेदवत् सोपाधिकसत्यत्वमनिष्टं प्रसक्तमित्यत आह– **निरुपचरितमिति** ।। व्यवहितत्वादन्वयमाह– **जीवस्यापीति** ।। असर्वज्ञात्वादिनाऽनुभवसिद्धस्यापीत्यपेरर्थः । फलाधिक्यं नानन्दोद्रेकः । श्रुतौ सारूप्यमोक्षमात्रोक्तेरित्यत आह– **मुख्यफलमिति** ।। तदेव भवतीत्येतत् तदेव प्राप्नुवन्तीति व्याख्यातम् तत्त्वप्रकाशिकायाम् । दुर्गमत्वादाह– **समीपमिति** ।। 'समीपे निकटाभ्याससन्निकृष्टसनीडवत्' इत्यमरोक्तेरिति भावः ।

गोगवययोरतिव्याप्तेराह– **तदधीनत्वं चेति** ।। **एतेनेति** ।। ऐक्यनिराकरणेनेत्यर्थः । **अपव्याख्यानमिति** ।। सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तः तं क्षेत्रज्ञं मां परमेश्वरमसंसारिणं विद्धीति व्याख्यानमित्यर्थः ।। २३,२४ ।।

**ध्यानेनाऽऽत्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ।। २५ ।।**

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ।। २६ ।।**

**भाष्यम्— साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन । कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः । श्रावकाणां च ज्ञात्वा ध्यात्वा । साङ्ख्यानां च ध्यात्वा । तथा च गौपवनश्रुतिः—**

**'कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति ।**
**श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति ।**
**अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते' इति ।**

**'अन्ये' इत्यशक्तानामप्युपायदर्शनार्थम् ।। २५,२६ ।।**

भावप्रदीपिका (प.टी.)– साङ्ख्यशब्दस्यार्थम् अन्यथाप्रतीतिनिरासायाह– **साङ्ख्येनेति** । 'ध्यानेनात्मनि' इति ध्यानस्य दृष्टिसाधनत्वमुक्त्वा अन्यदपि दर्शनसाधनमुच्यत इति प्रतीतिनिरासायाह– **कर्मिणामिति** । ज्ञान्यपि ध्यात्वेत्यर्थः । तर्हि सर्वेषामेकमार्गत्वादन्य इति किमर्थम् ? इत्यत आह– **अन्य इति** ।। २५,२६ ।।

प्रमेयदीपिका (ज.टी.)– 'अन्ये साङ्ख्येन योगेन' इत्यत्र 'कापिलतन्त्रोक्तप्रकृतिपुरुषविवेकज्ञानं साङ्ख्यम्' इति व्याख्यानम् असत् । कापिलतन्त्रस्यावैदिकस्यात्र ग्रहणायोगात् । तस्य भगवद्दर्शने प्रधानसाधनत्वायोगाच्चेति भावेन अन्यथा व्याचष्टे– **साङ्ख्येनेति ।। ज्ञानेन** परोक्षज्ञानेन । 'ध्यानेन' इत्यत्र 'ध्यानादीनां केवलानामेवेश्वरदर्शनसाधनत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह**—कर्मिणामिति** ।। दृष्टिः 'प्राप्या' इति शेषः । पाठक्रमादर्थक्रमस्य प्राधान्याद् व्युत्क्रमेणोक्तिः । कुत एतत्? इत्यत आह– **तथा चेति** ।। 'ध्यात्वा' इत्येतत् 'ज्ञान्यपि' इत्युत्तरेणापि सम्बद्ध्यते ।।

ननु सर्वत्र सर्वस्य संयोजने सत्येक एवायं प्रकारः स्यात् । तथाच **'केचित्' 'अन्ये' 'परे'** इत्युक्तमयुक्तं स्यादित्यत आह– **अन्य इति** ।। ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानादिप्रदर्शनार्थमवस्थाभेदमाश्रित्य **'अन्ये'** इत्याद्युक्तमित्यर्थः ।। २५,२६ ।।

भावबोधः (र.टि.)– ।। **तस्येति** ।। प्रकृतिपुरुषविवेकज्ञानस्येत्यर्थः । ननु गीतायाम् 'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे । अन्य त्वेवमजानन्तः श्रुत्वाऽन्येभ्यः' इति

श्लोकः २५,२६

साङ्ख्यानन्तरं कर्मश्रवणयोरुक्तत्वात् भाष्ये कथमन्ते साङ्ख्यस्योक्तिरित्यत आह– **पाठ-क्रमादिति** ।। व्यावधानबाहुल्यक्रम एवार्थक्रमो विवक्षित इति भावः ।। २५ ।।

**भावदीपः (रा.टि.)–** ननु 'ध्यानेनात्मनि पश्यन्ति' इत्यस्य 'अन्ये साङ्ख्येन' इति श्लोकात् पूर्वभावित्वात् तदर्थः 'साङ्ख्येन' इति श्लोकार्थोक्त्यनन्तरं 'साङ्ख्यानां च ध्यात्वा' इति कथमुक्तो भाष्य इत्यत आह– **पाठक्रमादिति** ।। कर्मिणो हि श्रवणं, श्राविणो हि साङ्ख्य-शब्दितं परोक्षज्ञानं, ज्ञानिनो हि ध्यानं, ज्ञानाद् ध्यायिनो दृष्टिर्भवतीत्यर्थक्रमस्य गीतोक्त-पाठक्रमात् 'अग्निहोत्रं जुहोति' 'यवागुं पचति' इत्यत्रेव प्राधान्याद् व्युत्क्रमोक्तिर्भाष्य इत्यर्थः ।। 'ध्यानेन' इति त्रिपादी 'उपासते' इत्यनन्तरं पठितव्याऽपि दृष्टेरव्यवहितसाधनत्वात् पूर्वं पठितेति भावः ।। **ध्यानादाविति** ।। ज्ञानध्यानश्रवणकर्मसु उत्तरोत्तरसाधने ध्याने साक्षाद् अशक्तानां परोक्षज्ञानसम्पादनमुपायः, तत्र अशक्तानां श्रवणे, तत्राप्यशक्तानां कर्मणि इति ध्यानाद्युपायज्ञानादिप्रदर्शनार्थमेव कर्मित्वश्रावकत्वाद्यवस्थाभेदमाश्रित्येत्यर्थः ।। २५,२६ ।।

**भावरत्नकोशः (सु.टि.)–** ।। **अत्र** भगवज्ज्ञानसाधनप्रस्तावे । **तस्य** प्रकृति-पुरुषविवेकज्ञानस्य । **प्रधानेति** ।।

'श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च ।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते ।।'

इति वचनादिति भावः । अत्र ज्ञानशब्देन मुख्यतयाऽपरोक्षज्ञानग्रहणे 'पश्यन्ति' इत्य-नन्वितम् इत्यतो विवक्षितार्थमाह– **ज्ञानेन परोक्षेणेति** ।। **केवलानाम्** असहायानाम् । 'केचित्' अन्ये' इत्यादिश्रवणादिति भावः । 'कर्मिणां कर्मयोगिनाम्' इति भाष्ये कृत्यानां कर्तरि वा इति षष्ठी । ननु गीतायाम्–

'ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।'

'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ।
'अन्ये त्वेवम् अजानन्तः श्रुत्वाऽन्येभ्य उपासते ।'

इति ध्यानयोगसाङ्ख्ययोगकर्मयोगश्रवणयोगाः क्रमेण पठ्यन्ते । भाष्ये तु 'कर्मिणाम्' इति कर्मयोग आद्यः, 'श्रावकाणाम् इति श्रवणयोगो द्वितीयः, 'साङ्ख्यानाम्' इति भगवत्स्वरूप-

परोक्षज्ञानशाब्दितसाङ्ख्ययोगस्तृतीयः, 'ध्यात्वा दृष्टिः प्राप्या' इति ध्यानयोगस्तुरीय इत्येवं कर्म श्रवणज्ञानध्यानानाम् अपरोक्षज्ञानं प्रति क्रमेण साधनत्वमिति लभ्यते । एवं क्रमव्यत्यासेनोक्तिः किंनिबन्धना इत्यत आह– **पाठक्रमादिति** ।। 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्रेवार्थक्रमप्राधान्यमनुरुध्य भाष्यकारसूक्तिः प्रवृत्तेत्यर्थः ।

भाष्ये 'ध्यात्वा दृष्टिः प्राप्या' इत्युभयत्रानुवर्तते । **सम्बध्यते** ज्ञान्यपि वेदोक्त-भगवत्स्वरूपपरोक्षज्ञान्यपि ध्यात्वा पश्यतीति सम्बध्यत इत्यर्थः । **सर्वस्य** 'कर्मणः', 'श्रवणस्य, 'ज्ञानस्य च इति सर्वस्य संयोजने साधनत्वेनानुषङ्गे ग्राह्ये । **उत्तरोत्तरेति** ।। ध्यानज्ञानश्रवणकर्मरूपसाधनवर्गे । साक्षाज्ज्ञाने अशक्तानां परोक्षज्ञानमुपायः । परोक्षत्व-निश्चयापादनासमर्थानां श्रवणम् उपायः । तत्राप्यसमर्थानां निवृत्तकर्मोपाय इति तत्तदुपाय-ज्ञानादिप्रदर्शनार्थमेव कर्मित्वश्रावकत्वज्ञानित्वध्यानित्वलक्षणावस्थाभेदमाश्रित्य 'अन्ये' 'परे' 'केचित्' इत्युक्तमित्यर्थः ।। २६ ।।

**गीताक्षरार्थस्तु–** परमपुरुषादिदर्शने किं साधनम् इत्यपेक्षायामुच्यते– ध्यानेनेति ।। केचित् पुमांसः कृतशास्त्रश्रवणमननाः ध्यानेन आत्मना मनसा आत्मनि हृदये आत्मानं परमात्मानं पश्यन्ति । अन्ये साङ्ख्येन वेदोक्तभगवत्स्वरूपपरोक्षज्ञानलक्षणेन योगेन उपायेन 'ध्यानेन' इत्यनुकृष्यते, चशब्द आकृष्यते । ध्यानेन चात्मानं पश्यन्ति । अपरे कर्मयोगेन साधुकर्मानुष्ठानापादितभगवत्प्रसादेन, श्रवणमननजन्यसाङ्ख्यशब्दित भगवत्स्वरूपपरोक्षज्ञानेन, 'ध्यानेन' इत्यनुषज्यते आत्मानं पश्यन्ति ।। २५ ।।

अन्ये मनुष्यास्तु, अत्र तुशब्दः ध्यानसाङ्ख्यकर्मयोग्यपेक्षया वैशेष्यद्योतनाय । एवं ध्यानादियोगिवद् आत्मानम् अजानन्तः अन्येभ्यो गुरुभ्यः श्रुत्वा मत्वा च उपासते ध्यायन्ति 'ततः पश्यन्ति च' इति योज्यम् । तेऽपि एवंविधा अपि श्रुतिपरायणाः श्रुतिः श्रवणं परायणत्वं एकाश्रयत्वम् श्रवणभूमवन्तः सन्तः । एवं मृत्युं तदुपलक्षितं संसारम् अतितरन्ति ।।

ननु ध्यानादियोगिनामपि श्रवणादिसद्भावाभिप्राये, मनुष्याणां 'श्रुत्वाऽन्येभ्य उपासते' इति विशिष्योक्तिर्न युक्तेति चेन्न । तेषामत्यल्पप्रतिभानत्वेन श्रवणबाहुल्यसद्भावाशयेन विशिष्यो-क्त्युपपत्तेः । कथं मनुष्याणाम् अत्यल्पाऽपि प्रतिभा युज्यते । 'श्रुतिपरायणाः' इति श्रवणै-काश्रयत्वस्य स्फुटमवभासात् इति चेन्न । मनुष्याणाम् अत्यल्पप्रतिभासद्भावेऽपि 'श्रुतिपरायणाः'

श्लोकः २५,२६

इति विशेषणं युक्तम् । तत्प्रतिभाया मूलप्रमाणापेक्षत्वेन स्वातन्त्र्याभावात् । प्रायेणासम्यक्त्वाच्च । अस्वतन्त्रे असाधुनि च असत्त्वोक्तिदर्शनादित्युत्तरप्रस्थाने स्फुटम् । ननु ध्यानादियोगिषु सर्वत्र श्रवणादेः संयोजने सति, एक एवायं प्रकारः स्यात् । तथा च 'केचित्', 'अन्ये', 'परे' इत्युक्तिः अयुक्ता स्यादिति चेन्न । ध्यानादावुत्तरोत्तरसाधने साक्षादशक्तानामपि तत्तदुपायज्ञानप्रदर्शनार्थमेव अवस्थाभेदमाश्रित्य 'अन्ये' इत्याद्युक्तेरुपपत्तेरिति भाष्यटीकयोर्व्यक्तम् ॥ २६ ॥

**भावदीपिका (श्री.टि.)– ॥ तस्येति ॥** प्रकृतिपुरुषविवेकज्ञानस्येत्यर्थः । ननु गीतायाम्,

'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ।
अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ॥'

इति साङ्ख्यानन्तरं कर्मश्रवणयोरुक्तत्वात् भाष्ये 'साङ्ख्यानां च' इति कथमन्ते साङ्ख्योक्तिः इत्यत आह– **पाठेति ॥** अर्थक्रमशब्देन व्यवधानबाहुल्यक्रमो विवक्षित इति ध्येयम् । **ज्ञान्यपीत्यनेनापीति ॥** 'न केवलं ज्ञात्वा' इत्यनेनेत्यर्थः । तथा 'न ज्ञान्यपि ध्यात्वा पश्यति' इति सम्बन्धो द्रष्टव्यः । **उत्तरोत्तरेति ॥** परोक्षज्ञानाद्यपेक्षयोत्तरोत्तरेत्यर्थः । तत्र ध्यानं ज्ञानोत्तरम्, ज्ञानं श्रवणोत्तरम्, श्रवणं च कर्मोत्तरमिति विवेको द्रष्टव्यः । **तत्तदिति ॥** ध्यानादीत्यर्थः । **अवस्थेति ॥** एकस्यैव कर्मित्वश्रावकत्वज्ञानित्वध्यानित्वरूपावस्थाभेद इत्यर्थः ॥ २५,२६ ॥

**भावप्रकाशः (कृ.टि.)– ॥ तस्येति ॥** प्रकृतिपुरुषविवेकज्ञानस्येत्यर्थः । ननु गीतायाम्–

'अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे । अन्ये त्वेवमजानन्तः श्रुत्वा'

इति साङ्ख्यानन्तरं कर्मश्रवणयोरुक्तत्वात् व्युत्क्रमेण भाष्ये कथमभिहितमित्यत आह– **पाठक्रमादिति ॥**

पञ्चमे प्रथमपादेऽर्थाच्चेत्यत्र चिन्तितम् । यवाग्वाऽग्निहोत्रं जुहोति । यवागूं पचतीति श्रूयते । अत्र किं पाठक्रमः किं वाऽर्थत इति संशयः । गृहपतिं दीक्षयित्वा ब्रह्माणं

दीक्षयतीत्यद्युक्तगृहपत्यादिदीक्षासु पाठक्रमस्यैवोदाहृतत्वाद्धोमपाकयोरपि स एव क्रम इति पूर्वः पक्षः । सिद्धान्तस्तु । यथापाठमनुष्ठाने क्लृप्तप्रयोजनबाधः । होमार्था यवागूः । यवाग्वेति तृतीयाश्रुतेः । यवाग्वर्थं च पाकः। अतः पाकस्य पश्चादनुष्ठाने यवाग्वाः होमार्थत्वबाधः । किञ्च यथापाठक्रममनुष्ठाने पाकस्यादृष्टार्थत्वं स्यात् । न हि होमानन्तरं क्रियमाणस्य किञ्चित् दृष्टं प्रयोजनमस्तीति । तथा चैतदधिकरणोक्तन्यायेनार्थक्रमस्य प्राधान्यात् क्रमपठितयोरपि होम-पाकयोः यथा व्युत्क्रमेणानुष्ठानं तथा प्रकृतेऽपि व्युत्क्रमेणोक्तिः । निवृत्तकर्मश्रवणज्ञानध्याना-परोक्षज्ञानानां क्रमिकत्वादिति भावः । ननु ये कर्मानुष्ठानादौ शक्ताः तेऽपि तद्द्वारा ध्यानादि-शक्ता एवेत्यत उक्तम्– **साक्षादिति** ।। २५ ।।

**यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ।। २७ ।।**

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ।। २८ ।।**

**समं पश्यन्ति सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ।। २९ ।।**

## भाष्यम्

**पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह यावत् इत्यादिना ।। २७,२९ ।।**

भावप्रदीपिका (प.टी.)अध्यायशेषार्थमाह **—पुनरिति** ।। तर्हि पुनरुक्तिरित्यत आह– **साम्यादीति** ।। ईश्वरसाम्यम्, प्रकृतेः परिणामित्वम्, जीवस्याकर्तृत्वमिति ।। २७,२९ ।।

प्रमेयदीपिका (ज.टी.)– 'तत् क्षेत्रं यच्च' (गी.१३.४) इति प्रतिज्ञातस्य सर्वस्योक्तत्वात् किमुत्तरेणेत्यत आह– **पुनश्चेति** ।। उक्तस्य पुनर्वचने को हेतुरित्यत

श्लोकः २७-२९

उक्तम्– **साम्यादीति ।। ईश्वरधर्मस्योभयधर्मात् प्राधान्येन साम्यग्रहणम् । तत्र प्रकृतिपुरुषधर्मकथनं 'यादृक्' इति प्रतिज्ञाते अन्तर्भवति । ईश्वरधर्मकथनं च 'यत्प्रभावः' इति ।। २७-२९ ।।**

**भावबोधः (र.टि.)–** ननु 'यावत्सञ्जायते' इति गीतानुसारेण प्रकृतिधर्मादित्वेन वक्तव्ये अनन्तरोक्तेश्वरधर्मादित्वेन वचने को हेतुरित्यत आह– **ईश्वरधर्मस्येति** ।। कार्योपादानत्व-तदुपादानकशरीरयोगित्वरूपात् प्रकृतिपुरुषोभयधर्मादित्यर्थः ।। २७–२९ ।।

**भावदीपः (रा.टि.)–** भाष्ये 'साम्यादिधर्म' इत्यत्र साम्यपदेनेश्वरधर्मस्य, आदिपदेन कार्योपादानत्वप्रकृत्यपादानकदेहयोगित्वरूपयोः प्रकृतिपुरुषधर्मयोरुपादानं प्रकृतिपुरुषेश्वरस्वरूप-मिति निर्देशव्युत्क्रमतया कुतः कृतम् इत्यत आह– **ईश्वरेति** ।। अप्रतिज्ञातोक्तदोषं निराह– **तत्र प्रकृतीति** । 'यत्प्रभाव इति' इत्यनन्तरं 'प्रतिज्ञातेऽन्तर्भवति' इत्यनुषङ्गः ।। २७,२९ ।।

**भावरत्नकोशः (सु.टि.)–** ननु प्रकृतिपुरुषेश्वरस्वरूपमिति निर्देशानुसारेण 'कार्यो-पादनत्वादिधर्मयुक्तमाह' इत्येव वक्तव्यम् । तथाऽनुक्त्वा, साम्यपदेनेश्वरधर्मं कण्ठरवेणाभिधाय आदिपदेन प्रकृतिपुरुषधर्मग्रहणे को हेतुः इत्यत आह– **ईश्वरधर्मस्येति ।। उभयधर्मात्** कार्योपादानत्वरूपप्रकृतिधर्मात् प्रकृत्युपादानकदेहयोगित्वरूपपुरुषधर्मादित्येवम् उभयधर्मादित्यर्थः । अप्रतिज्ञातोक्तित्वनिरासायाह– **तत्र प्रकृतीति ।। इति** 'प्रतिज्ञातेऽन्तर्भवति इति वर्तते ।। २७–२९ ।।

**गीताक्षरार्थस्तु–** पूर्वं क्षेत्रशब्देन ईश्वरातिरिक्तः प्रकृतिपुरुषात्मकः सर्वोऽपि चेतनाचेतन-वर्गो विवक्षितः । तत्र क्षेत्रान्तर्भूता प्रकृतिः 'महाभूतानि' इत्यादिना निरूपिता । क्षेत्रान्तर्भूतः पुरुषश्च 'पुरुषः प्रकृतिस्थो हि' इत्यादिनोक्तः । एतन्नियामकभगवत्स्वरूपं च 'उपद्रष्टा' इत्यादिना व्याख्यातम् । पुनश्च प्रकृतिपुरूषईश्वरस्वरूपं सर्वकार्योपादानत्वप्रकृत्युपादानकदेह-योगित्वसर्वाधिष्ठानसमत्वरूपधर्मयुक्ततया निरूप्यते– **यावत्सञ्जायत इति** ।।

यावत्किञ्चिद्वस्तुमात्रम् । किंरूपं तत् । स्थावरात्मकं जङ्गमात्मकं च । सत्त्वं जीव-जातम् । 'सत्त्वं जीवः क्वचित्प्रोक्तः' हति वचनात् प्रमाणेन लक्ष्यते । तत् सर्वं क्षेत्रक्षेत्रज्ञ-संयोगात् क्षेत्रं श्रीदेवी, 'सत्त्वात् सञ्जायते' इत्येतद्वाक्यविवरणभाष्ये 'मम योनिः' इत्युत्तरा-

ध्यायगते वाक्ये लक्ष्मीनारायणसंयोगात् सर्वभूतसम्भवस्योक्तत्वात् 'अव्यक्तं च महद्ब्रह्म प्रधानं क्षेत्रमित्यपि । उच्यते श्रीः' इति वचनाच्चात्र क्षेत्रशब्देन तस्याः ग्रहणं युक्तम् । क्षेत्रज्ञः भगवान् तयोः संयोगात् सञ्जायते इति विद्धि जानीहि । भरतर्षभ भरतश्रेष्ठ इति पार्थसम्बुद्धिः । अत्र श्रीदेव्यभिमन्यमानजडप्रकृतेः क्षेत्रशब्दार्थस्य सर्वकार्योपादनत्वरूपो धर्मः, सत्त्वं क्षेत्रसंयोगादुत्पद्यत इति सत्त्वशब्दार्थस्य पुरुषस्य प्रकृत्युपादानकदेहयोगित्वरूपधर्मश्च निरूपितो वेदितव्यः ।। २७ ।।

**गीताक्षरार्थस्तु** यदुक्तं 'क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धि इति, 'देहेऽस्मिन् पुरुषः परः' इति च, परमेश्वरस्य सर्वशरीरस्थत्वम् तदयुक्तम् । सुरनरतिर्यगादिशरीराणां तारतम्यवत्त्वेन तत्र स्थितस्य परमेश्वरस्यापि तारतम्यापत्तेः । 'भुङ्क्ते प्रकतिजान्गुणान्' इत्युक्तदुःखिजीवेन सहावस्थितस्य तस्य दुःखप्राप्तेश्च, इत्यत उच्यते– **सममिति ।।** सर्वेषु उच्चावचेषु भूतेषु प्राणिषु तिष्ठन्तं परमेश्वरं भगवन्तं यः समं तारतम्यरहितं पश्यति, तथा भूतेषु विनश्यत्सु अपि

'अनित्यत्वं देहहानिः दुखप्राप्तिरपूर्णता । नाशश्चतुर्विधो ज्ञेयः'

इति शास्त्रेण दुःखयोगदेहहान्योर्नाशशब्दितग्रहणात् दुःखयोगदेहहानिरूपनाशवत्स्वपि, अविनश्यन्तं दुःखयोगादिरहितम्, तरतमभावापन्नदेहेषु तिष्ठतः समत्वम्, दुःखयोगिजीवसहभावेऽपि दुःखाप्राप्तिं च उपपादयितुं परमेश्वरमित्युक्तम् । अचिन्त्यशक्तिसम्पन्नमित्यर्थः । एवंविधं पश्यति साक्षात्करोति सः पश्यति स एव ज्ञानी भवति । अत्र भगवतः स्थानतारतम्यनिबन्धननीचोच्चताहीनतया समस्तसद्गुणसम्पूर्णत्वलक्षणं समत्वम् दुःखिसहभावेऽपि दुःखास्पृष्टत्वं च विभावितं ज्ञातव्यम् । तथा चोक्तं भगवता सूत्रकारेण 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति । 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् इति ।। २८ ।।

**गीताक्षरार्थस्तु** एवं जानन्नेव 'ज्ञानी' इत्युक्तम् । तज्ज्ञानफलमुच्यते– **सममिति ।।** सर्वत्र स्थावरजङ्गमेषु समवस्थितं सम्यङ्नियामकतया अवस्थितं समं समस्तसद्गुणैरेकप्रकारमीश्वरम् अचिन्त्यशक्तिं भगवन्तं पश्यन् साक्षात्कुर्वदात्मना बुद्ध्या आत्मानं स्वात्मानं न हिनस्ति नरके न पातयति । प्रत्युत ततो ज्ञानात् परां गतिं मुक्ति याति हि प्राप्नोत्येव । पूर्वश्लोकोक्तार्थानुवादः न पूर्वार्ध इति द्योतनाय हिशब्द इत्यपि आहुः ।। २९ ।।

श्लोकः ३०

**भावदीपिका (श्री.टि.)**– ननु 'यावत्सञ्जायते' इति गीतानुसारेण प्रकृतिधर्मादित्वेन वक्तव्येऽनन्तरोक्तेश्वरधर्मादित्वेन वचने को हेतुः इत्यत आह– **ईश्वरधर्मस्येति** ।। कार्योपादानत्वप्रकृत्युपादानकशरीरादियोगित्वरूपात् प्रकृतिपुरुषधर्मादित्यर्थः ।। २७-२९ ।।

**भावप्रकाशः (कृ.टि.)**– अन्यादिशब्दस्य व्यक्तिभेदवाचित्वादित्यत उक्तम्– **अवस्थाभेदमाश्रित्येति** । तथाच व्यक्तिभेदस्य बाधितत्वात् । अग्न्यादिशब्दस्यावस्थाविशेषविशिष्टव्यक्तिभेदार्थत्वमिति भावः । ननु प्रकृत्यादिस्वरूपस्य धर्मयुतस्य वक्तव्यत्वे ईश्वरधर्मस्य साम्यस्य कण्ठरवेणाभिधाने को हेतुरित्यत आह– **ईश्वरधर्मस्येति** ।। कार्योपादानत्वतदुपादानकशरीरादियोगित्वरूपात् प्रकृतिपुरुषधर्मादित्यर्थः ।। २७,२८ ।।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ।। ३० ।।**

## भाष्यम्

**आत्मानं चाकर्तारं यः पश्यति स पश्यति** ।। ३० ।।

भावप्रदीपिका (प.टी.)– स आत्मानमकर्तारं पश्यति इति प्रतीतिनिरासायाह– **आत्मानमिति** ।। ३० ।।

प्रमेयदीपिका (ज.टी.)– 'प्रकृत्यैव च' इत्यत्र 'यः प्रकृत्यैव च कर्माणि क्रियमाणानि पश्यति स आत्मानमकर्तारं पश्यति' इति कश्चित् अन्वयमाह । तदसत् । तथाशब्दवैयर्थ्यापत्तेरिति भावेनान्यथाऽऽह– **आत्मानं चेति** ।। स पश्यति परमेश्वरम् ।। ३० ।।

भावबोधः (र.टि.)– ।। **परमेश्वरमिति** ।। अनेन यः कर्माणि प्रकृत्यैव क्रियमाणानि तथाऽऽत्मानमकर्तारं च पश्यति, सः परमेश्वरं पश्यति इत्यध्याहारेण वाक्ययोजनां सूचयता तथाशब्दस्य सार्थक्यमुक्तं भवति ।। ३० ।।

भावदीपः (रा.टि.)– ।। **अन्यथाऽऽहेति** ।। तथाशब्दं समुच्चयार्थत्वेनाऽहेत्यर्थः ।।३०।।

**भावरत्नकोशः (सु.टि.)– ।। अन्यथा** समुच्चयार्थत्वेन । 'पश्यति' इत्यनूद्याध्याहार्यमाह– **पश्यति परमेश्वरमिति** ।। तथाशब्दस्य समुच्चयार्थत्वेन स्वमते तथाशब्दः समुच्चये इति भाष्यभाव इत्यपि आहुः ।। ३० ।।

**गीताक्षरार्थस्तु** पूर्वश्लोके सर्वत्र विद्यमानमीश्वरं समं पश्यन्मुक्तिं याति' इति साम्यदर्शनस्य मोक्षहेतुत्वमुक्तम् । तच्च दर्शनम् 'सर्वकर्मसु भगवानेव मुख्यः कर्ता, प्रकृतिर्निमित्तमात्रम् स्वस्य तत्र कर्तृत्वाभावः' इत्येतज्ज्ञानोपोद्बलितमेव मोक्षसाधनायालमिति भावेनोच्यते– **प्रकृत्येति ।।** 'समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्' इति प्रस्तुतपरमात्मा चशब्देन समुच्चीयते । तत्र इवशब्दस्य सम्बन्धः । पूर्वप्रस्तुतेनेश्वरणैव मुख्यकर्त्र्या प्रकृत्या च निमित्तभूतया क्रियमाणानि सर्वशः स्वार्थिकः शस् । सर्वाणि कर्माणि यः पश्यति, तथा आत्मानं स्वात्मानं च अकर्तारं मुख्यतोऽकुर्वन्तं पश्यति, स पश्यति परमेश्वरम् ।। ३० ।।

**भावदीपिका (श्री.टि.)– ।। परमेश्वरमिति ।।** अनेन 'यः कर्माणि प्रकृत्यैव क्रियमाणानि पश्यति, तथा आत्मानम् अकर्तारं पश्यति, स परमेश्वरं पश्यति' इत्यध्याहारेण वाक्ययोजनां सूचयता तथाशब्दस्य समुच्चायकत्वेनास्मन्मते सार्थक्यमित्युक्तं भवति ।। ३० ।।

**भावप्रकाशः (कृ.टि.)– ।। परमेश्वरमिति** ।। अनेन यः कर्माणि प्रकृत्यैव क्रियमाणानि पश्यति आत्मानं चाकर्तारं पश्यति स परमेश्वरं पश्यतीत्येवं तथाशब्दस्य समुच्चयार्थत्वेनोपयोग इत्युक्तं भवति ।। ३० ।।

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ।। ३१ ।।**

## भाष्यम्

**एकस्थम्** एकस्मिन् विष्णौ स्थितम् । **तत एव च** विष्णोः **विस्तारम्** ।। ३१ ।।

भावप्रदीपिका (प.टी.)– 'यदा भूत..' इति श्लोकं व्याचष्टे– **एकस्थमिति** ।।३१।।

**प्रमेयदीपिका (ज.टी.)–** 'एकस्थम्' इत्यस्य 'एकस्थात्मकम्' इति व्याख्यानं

**सर्वप्रमाणविरुद्धमिति भावेनाऽह– एकस्थमिति ।। 'तत एव च विस्तारम्' इत्यस्य स्वस्मादेव विश्वस्य विस्तारम्' इति व्याख्यानमसदिति भावेनाऽह– तत एवेति ।। विस्तारम् उत्पत्तिम् ।। ३१ ।।**

**भावरत्नकोशः (सु.टि.)–।। एकस्थात्मकमिति** ।। प्रलये एकमेव तिष्ठतीत्येकस्थम्, तदात्मकमिति व्याख्यानमित्यर्थः । **असदिति** ।। तच्छब्दस्य पूर्वमप्रकृतपरामर्शित्वस्य व्युत्पत्ति-विरोधित्वादिति भावः । **तत एव** विष्णोरेव । एकशब्देन विष्णोः प्रकृतत्वादिति भष्यार्थस्य स्फुटत्वाद्विस्तारशब्दार्थमाह– **विस्तारमुत्पत्तिमिति** ।। 'भूतानामनुपश्यति इति योज्यम् ।।

**गीताक्षरार्थस्तु** न केवलं भगवतः सर्वप्रेरकत्वसर्वसमत्वादिज्ञानमात्रेणालम् । किन्तु तस्य सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते– **यदेति** ।। अत्र भूतपृथग्भावस्य परमात्मस्थत्वोक्त्या पृथग्भूतानां तत्स्थत्वमभिप्रेतम् । तदयमर्थः । भूतानां जीवानां पृथग्भावं विष्णोः अन्योन्यतश्च भेदं तथा भूतग्राममेकस्थमेकस्मिन्नेव विष्णौ स्थितं यदा अनु तारतम्येन पश्यति तत एव एकशब्दार्थविष्णोरेव स्थावरजङ्गमात्मकजगतो विस्तारमुत्पत्तिं च अनुपश्यति तदा स ब्रह्म परब्रह्म सम्पद्यते प्राप्नोति ।। ३१ ।।

**भावदीपिका (श्री.टि.)– ।। एकस्थेति** ।। 'एकमेव तिष्ठति प्रलये' इत्येकस्थं ब्रह्म तदात्मकमित्यर्थः ।। ३१ ।।

**अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ।। ३२ ।।**

## भाष्यम्

**नच व्ययादिस्तस्येत्याह– अनादित्वादिति ।। सादि हि प्रायो व्ययि गुणात्मकं च । 'न करोति' इत्यादेरर्थ उक्तः पुरस्तात् । न लौकिकः क्रियादिस्तस्य । अतो 'न प्रज्ञम्' (मां.उ.२.१) इत्यादिवदिति ।। ३२ ।।**

भावप्रदीपिका (प.टी.)– सर्वेषु भूतेषु तिष्ठति चेत्, नाशः स्यात् तन्नाशेन तस्येत्याशङ्क्य, उक्तं– **विनश्यत्सु इति** । तदुपासनपरतया अनादित्वात् इति

**श्लोकमवतारयति– न चेति** । शरीरस्थत्वेऽपि व्ययवृद्ध्यादि नास्ति । कुतो नाशः इत्यर्थः । अव्ययत्वानादित्वादेर्हेतुत्वं घटयति– **सादीति** । सादि प्रायो व्ययि, गुणात्मकं सर्वत्र व्ययीत्यर्थः । न करोति इत्यत्रान्यथाप्रतीतिनिरासायाह– **नेति** ।।

**प्रमेयदीपिका (ज.टी.)**– 'अव्ययः' इत्यनुवादेन लेपाभावमात्रं विधीयते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **नचेति** ।। एतेनाव्ययत्वमपि साध्यमप्राप्तत्वादित्युक्तं भवति । तस्य विष्णोः । अनेन 'जीवविशेषणमेतत् । तस्य प्राप्तिसद्भावेन प्रतिषेधोपपत्तेः' इति निरस्तम् । विष्णोरपि 'शरीरस्थोऽपि' इति प्राप्तेरुक्तत्वात् । अनादिनिर्गुणत्वयोरव्ययत्वे हेतुत्वमुपपादयितुं व्याप्तिमाह– **सादीति** ।। यद् व्ययि तत् प्रायः सादि गुणात्मकं चेति योजना । प्रागभावे व्यभिचारवारणाय 'प्रायः' इत्युक्तम् । साद्येव गुणात्मकमेवेत्यवधारणेन यथास्थितयोजना वा ।

'न करोति निर्गुणत्वात्' इतीश्वरस्य क्रियागुणाभावः प्रतीयत इत्यत आह– **न करोतीति** ।। पुरस्तादुक्तमेव स्मारयति– **नेति** ।। **इत्यादिवत्** 'अक्रियत्वादिकं व्याख्येयम्' इति शेषः । यद्यप्यव्ययत्वमप्यत्र साध्यम् । तथाऽपि तल्लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं 'यथा सर्वगतम्' इत्युपपाद्यते ।। ३२ ।।

**भावबोधः (र.टि.)**– ननु सादि व्ययि गुणात्मकं चेति कथं निर्देशः । व्यतिरेकिव्याप्तावव्ययत्वरूपसाध्याभावस्य प्रथमं वक्तव्यत्वात्, अनादित्वाभावनिर्गुणत्वाभावयोर्व्याप्तिवचनस्य प्रकृतानुपयोगाच्चेत्यतो वाक्यं यथावद्योजयति – **यद् व्ययीति** ।। **साद्येवेति** ।। वह्निमानेव धूमवानितिवत् व्याप्यस्य व्यापकायोगव्यवच्छेदवचने व्याप्तिः प्रदर्शिता भवतीति भावः ।। ३२ ।।

**भावदीपः (रा.टि.)**– ।। **यद्व्ययीति** ।। यथाश्रुतयोजनायां ध्वंसे मुक्तौ चानैकान्त्यापत्तेः व्यतिरेकव्याप्त्युक्त्यनापत्तेश्चेति भावः ।। **इत्यवधारणेनेति** ।। तदा हेत्वभावस्य व्यापकत्वम्, अव्ययत्वरूपसाध्याभावस्य व्याप्यत्वमुक्तं भवतीति भावः ।। व्यतिरेकव्याप्तौ व्यापकाभावस्य व्याप्यत्वात् अनादिव्ययत्वस्य चाव्यापकत्वात्, व्यापकाभावपूर्वं व्याप्तिं दर्शयति– **यद्यपीति** ।। **लोकत** इति ।। 'यदनादि तदव्ययम्' इत्यस्य देशकालादौ ज्ञातुं शक्यत्वात् इति तदनुपपाद्य लेपाभावमात्रं गीतायामुपपाद्यत इत्यर्थः । एतच्च 'अव्ययम् इत्यनुवादेन' इत्यादिना प्रागुक्तान्यथाप्रतीतेर्बीजखण्डनायोक्तमिति ज्ञेयम् ।। ३२ ।।

श्लोकः ३२

**भावरत्नकोशः (सु.टि.)–** एकशब्देन विष्णोः प्रकृतत्वात् तच्छब्देन स एव ग्राह्य इति भावेनाह– **तस्य विष्णोरिति** ।। **अनेन** 'तस्य विष्णोः' इति वचनेन । **एतत्** 'अनादित्वान्निर्गुणत्वात्' इति वचनम् । **तस्य** जीवस्य प्राप्तिसद्भावेन 'अहं कर्ता, भोक्ताऽस्मि इति प्रतीतेः कर्तृत्वलेपप्राप्तिसद्भावेन प्राप्तेरुक्तत्वात् । तथा च 'न करोति न लिप्यते' इति प्रतिषेधोपपत्तिरिति भावः । अव्ययत्वे साध्ये व्यतिरेकव्याप्त्युपपादनायाह– **सादि हि प्रायो व्ययि गुणात्मकञ्चेति** ।। तदयुक्तम् । व्यतिरेकव्याप्तिप्रदर्शने साध्याभावस्यादौ वक्तव्यत्वा-दित्यतो यथावद्योजयति– **यद्व्ययीति** ।। विनाशीत्यर्थः । **साद्येवेति** ।। 'वह्निमानेव धूमवान्' इत्यादौ इव व्याप्यस्य व्यापकायोगव्यवच्छेदवचनेन व्याप्तिरेव प्रदर्शिता भवतीति भावः । 'न करोति' इत्यनेन क्रियाभावः 'निर्गुणत्वात्' इत्यनेन गुणाभावः प्रतीयत इत्यर्थः । साध्यं तथा चोपपादनीयमिति भावः । **लोकत इति** ।। 'यद् भावत्वे सति अज्ञानातिरिक्तमनादि तदव्ययम्' इति व्याप्तिर्देशादौ ज्ञातुं शक्यत इत्यर्थ इति गीतायाम् । एतच्च 'अव्यय इत्यनुवादेन' इत्यादिना प्रागुक्तान्यथाप्रतीतेर्बीजखण्डनायोक्तमिति ज्ञेयमिति स्वामिनः ।।

**गीताक्षरार्थस्तु–** ननु 'विनश्यत्सु तिष्ठतोऽपि अविनश्यन्तम्' इत्यविनाशशब्दितव्यया-भावोक्तिरयुक्ता । शरीरसम्बन्धेन व्ययादेरावश्यकत्वाद् इत्यतो न विष्णोर्व्ययादिरित्युच्यते– **अनादित्वादिति** ।। हे कौन्तेय शरीरस्थोऽपि अयं परमात्मा 'अनादित्वात्' इति हेतुः प्रागभावे व्यभिचारपरिहाराय 'भावत्वे सति' इति विशेषणीयः । भावत्वे सत्यनादित्वात् आदिमत्त्वशून्यत्वात् सत्त्वादिगुणेभ्यो निर्गतत्वाच्च अव्ययो देहतोऽपि नाशरहितः न लिप्यते तत्कृतपुण्यपापैर्न सङ्गच्छते च, लौकिकक्रियाराहित्यात् 'नप्रज्ञं नसुखम्' इत्यादिवत् न करोति इत्येतदपि व्याख्येयम् ।। ३२ ।।

**भावदीपिका (श्री.टि.)–** ।। **अनेन** 'तस्य' इति वचनेन । **प्राप्तीति** ।। लेपप्राप्ती-त्यर्थः । ननु 'सादि गुणात्मकं च' इति वक्तव्यम् इत्यतो योजयति– **यद्व्ययीति** ।। अभावस्य निरुपादानकत्वाद् गुणात्मकत्वं च नास्तीति ज्ञेयम् । **साद्येवेति** ।। 'वह्निमानेव धूमवान् इतिवत् व्याप्यस्य व्यापकायोगव्यवच्छेदोक्तौ व्याप्तिरेव प्रदर्शिता भवतीति भावः । **इतीति** ।। पदाभ्याम् । नन्वत्र अव्ययत्वअक्रियत्वलेपाभावाख्ये साध्यत्रयेऽक्रियत्वं पूर्वोक्त-न्यायेनोपपादितम् । लेपाभावस्तूपपाद्यते । अव्ययत्वमपि कस्मान्नोपपाद्यते इत्यत आह– **यद्यपीत्यादिना** ।। **साध्यमिति** ।। तथा च तदप्युपपादनीयमिति भावः । **लोकत इति** ।। लोकावगतव्याप्तिकोक्तानादित्वाद्यनुमानादित्यर्थः ।। ३२-३४ ।।

**भावप्रकाशः (कृ.टि.)**– ननु अनादित्वनिर्गुणत्वाभ्यामव्ययत्वे साध्ये व्यतिरेकव्याप्त्युपपादनाय 'सादि हि' इत्युक्त म् । न च तद्युक्तम् । व्यतिरेकव्याप्तेः साध्याभावोक्तिपूर्वकं प्रदर्शनीयत्वादित्यत आह– **यद्व्ययीति । साद्येवेति** ।। समभिव्याहृतपदार्थतावच्छेदकव्यापकत्वस्य सर्वत्रैवकारार्थत्वादिति भावः ।। ३२ ।।

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ।। ३३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यद्यप्यव्ययत्वमत्र साध्यम् । तथापि तत् लोकतो ज्ञातुं शक्यत इति लेपाभावमात्रं भगवत उपपाद्यते– **यथा सर्वगतमिति** ।। सर्वगतं पङ्कादिमद्देशगतम् आकाशं सौक्ष्म्यात् सूक्ष्मत्वादप्रतिघत्वात् यथा पङ्कादिभिर्नोपलिप्यते । तथा सवत्र नीचोच्चादिरूपे देहे अवस्थितः आत्मा परमात्मा नोपलिप्यते देहधर्मैर्न सम्बध्यते ।।३३।।

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ।। ३४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यत्क्षेत्रज्ञत्वविशिष्टतया भगवज्ज्ञानार्थं क्षेत्रादिकं निरूपितं तत्क्षेत्रज्ञं दृष्टान्तेन प्रदर्शयति– **यथा प्रकाशयतीति** ।। यथैको रविः कृत्स्नमिमं लोकं लोकस्थितं पदार्थजातं प्रकाशयति तथा क्षेत्री क्षेत्रज्ञो भगवान्कृत्स्नं क्षेत्रम् ईश्वरातिरिक्तचेतनाचेतनवर्गं प्रकाशयति ।। ३४ ।।

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ।। ३५ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे त्रयोदशोऽध्यायः ।। १३ ।।

## भाष्यम्

**भूतेभ्यः प्रकृतेश्च मोक्षसाधनम् अमानित्वादिकम् ।। ३५ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये त्रयोदशोऽध्यायः ।। १३ ।।

श्लोकः ३३-३५

**भावप्रदीपिका (प.टी.)**– भूतप्रकृतिमोक्षपदार्थमाह– **भूतेभ्य इति** ।। ३५ ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीभगवद्गीताभाष्यभावप्रदीपिकायां त्रयोदशोऽध्यायः ।।

**प्रमेयदीपिका (ज.टी.)**– 'भूतप्रकृतिमोक्षम्' इत्यस्य 'भूतानां प्रकृतिरविद्या तस्याः मोक्षमवसानलक्षणम्' इति व्याख्यानमसत् । भूतशब्दवैयर्थ्यात् । अविद्याध्वंसस्यानुक्तत्वेन 'एवम्' इति परामर्शायोगाच्चेति भावेनाऽह– **भूतेभ्य इति** ।। अनेन 'भूतप्रकृति' इति द्वन्द्वः । ततः पञ्चमी इति योगविभागात् पञ्चमीतत्पुरुष इत्युक्तं भवति । **भूतेभ्यः** पृथिव्यादिभ्यः ।।

ननु मोक्षो न प्रागुक्त इत्यत उक्तम्– **मोक्षसाधनमिति** ।। करणे घञ् इत्यर्थः । मोक्षसाधनमपि नोक्तमित्यत आह– **अमानित्वादिकमिति** ।। ज्ञानसाधनमपि परम्परया मोक्षसाधनमिति भावः । मोक्षशब्दस्य नित्यसापेक्षत्वान्नासमर्थत्वम् । यद्वा 'भूतेभ्यः प्रकृतेश्च' इति समासद्वयसूचनार्थं पृथगेव वाक्यम् । ततो मोक्षपदव्याख्यानं पृथगेवेति ।। ३५ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां त्रयोदशोऽध्यायः समाप्तः ।। १३ ।।

**भावबोधः (र.टि.)**– ननु भूतानां प्रकृतेश्च मोक्षं प्रत्यपादानत्वाभावात् कथं पञ्चमीत्यत आह **पञ्चमीति योगविभागादिति** ।। **करणे घञिति** ।। मुच्लृ मोक्षणे इति धातोरित्यर्थः । ननु मोक्षशब्दस्य भूतेभ्यः प्रकृतेरित्येतत्सापेक्षत्वेनासमर्थत्वात् कथं साधनशब्देन समास इत्यत आह – **मोक्षशब्दस्येति** ।। **समासद्वयेति** ।। भूतानि च प्रकृतिश्चेति द्वन्द्वः । भूतप्रकृतिभ्यो मोक्ष इति पञ्चमीतत्पुरुष इति समासद्वये इत्यर्थः ।। ३५ ।।

।। इति श्रीगीताभाष्यटीकाभावबोधे श्रीरघूत्तमयतिकृते त्रयोदशोध्यायः समाप्तः ।।

**भावदीपः (रा.टि.)**– ननु 'पञ्चमी भयेन' इति सूत्रे 'पञ्चम्यन्तं भयपदेन समस्यते । 'चोराद्भयं चोरभयम्' इत्युक्तेरिह कथं समासः? इत्यत आह –**इति योगविभागादिति** ।। **करणे घञ् इति** ।। 'मुच्लृ मोक्षणे' इति धातोरिति भावः । ननु तज्ज्ञानसाधनत्वेनोक्तमित्यत आह– **ज्ञानसाधनमपीति** ।।

ननु मोक्षपदस्य 'कस्मात्' इत्याकाङ्क्षायां 'भूतेभ्यः प्रकृतेश्च' इत्युक्तपञ्चम्यन्तसापेक्षत्वेन 'सापेक्षमसमर्थम्' इत्युक्तेर्कथं साधनपदेन **समासोक्तिर्भाष्य** इत्यत आह– **नित्येति** ।। देवदत्तस्य गुरुकुलमित्यत्र यथेति भावः ।। भाष्यं न समासाभिप्रायम्, किन्तु पञ्चम्यन्तद्वयं 'भूतप्रकृति' इत्यत्र द्वन्द्वसमासेन मोक्षपदं प्रत्येकमन्वेतीति प्रदर्शनमात्रपरम् । मोक्षसाधनपदं मोक्षपदार्थोक्तिपरम् । अतो भिन्नवाक्यत्वान्न दोष इत्याह– **यद्वेति** ।। **समासद्वयेति** ।। द्वन्द्वः पूर्वं पश्चात् पञ्चमीतत्पुरुष इति सूचनार्थमित्यर्थः ।।

।। इति श्रीमत्सुधीन्द्रतीर्थपूज्यपादशिष्यश्रीराघवेन्द्रयतिविरचिते
श्रीमद्गीताभाष्यटीकाभावदीपे त्रयोदशोऽध्यायः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। भूतप्रकृतीति द्वन्द्व इति ।** भूतानि च प्रकृतिश्चेति द्वन्द्व इत्यर्थः ।। ननु मोक्षशब्दस्य भयादित्वाभावेन च पञ्चमी भयेन इत्यनेन पञ्चमीतत्पुरुषस्यायोगात् कथं भूतप्रकृतिमोक्ष इति पञ्चमीसमास इत्यत आह– **पञ्चमीति योगविभागादिति** ।। तथाच मञ्चमी भयेन इत्यत्र पञ्चमी इति सूत्रविभागात् पञ्चम्यन्तस्य समर्थेन मोक्षशब्दे न समासोपपत्तिरिति भावः ।। **करणे घञिति** ।। मुच्लृ मोक्षण इत्यस्माद्धातोरित्यर्थः ।। ननु मोक्षशब्दस्य कथं साधनशब्देन समासः । तस्य भूतेभ्यः प्रकृतेरित्येत्सापेक्षत्वेनासमर्थत्वात् समर्थः पदविधिरिति सामर्थ्य एव समासविधानादित्यत आह– **मोक्षशब्दस्येति ।। समासद्वयेति** ।। भूतानि च प्रकृतिश्चेति द्वन्द्वः । भूतप्रकृतिभ्यां मोक्ष इति पञ्चमीतत्पुरुष इत्यर्थः ।।

।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां
श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते
व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे त्रयोदशोध्यायः ।।

**भावरत्नकोशः (सु.टि.)– ।। वैयर्थ्यादिति ।।** अविद्यया भूतान्यानाश्रिततया तदुक्त्यैव तदनुबन्धितया भूतानां लाभेन वैयर्थ्यादित्यर्थः । **द्वन्द्वः** 'भूतानि प्रकृतिश्च इति द्वन्द्वः । ननु भूतानां प्रकृतेश्च विश्लेषावधित्वेन अपादानेन अपादानत्वे 'पञ्चमी' इति पञ्चमीसत्त्वेऽपि, न तत्समासः सम्भवति । विधायकाभावात् । 'पञ्चमी भयेन' इत्यादेश्च नियतविषयत्वाद् इत्यत आह– **पञ्चमीति योगविभागादिति** ।। 'पञ्चमी भयेन' इत्यत्र 'पञ्चमी' इति योगविभाग-

श्लोकः ३३-३५

दित्यर्थः । भूतशब्देन सदेहजीवग्रहणे तेभ्यो मोक्षमित्यसङ्गतम् इत्यतो भूतशब्दार्थमाह– **पृथिव्यादि इति** ।। मोक्षशब्देन मोक्षसाधनं कथं लभ्यते इत्यत आह– **करण इति** ।। 'मोक्ष आसने' इति चौरादिकाद् धातोः' इति शेषः । घञि च णिलोपश्च ज्ञेयः ।

ननु 'अमानित्वादिकमेतज्ज्ञानमिति प्रोक्तम्' इति ज्ञानसाधनमित्युक्तम् न मोक्षसाधनमिति । तत्राह– **ज्ञानसाधनमपीति** ।। ननु समासे एकार्थीभावरूपं सामर्थ्यमपेक्षितम् । 'समर्थः पदविधिः' इत्युक्तत्वात् । मोक्षशब्दस्य चेतरसापेक्षत्वात् न सामर्थ्यम् । अतः कथं 'मोक्षसाधनम्' इति भाष्ये समास इत्यत आह– **मोक्षशब्दस्येति** ।। तथा च 'देवदत्तस्य गुरुकुलम्' इत्यादाविव समास उपपन्न इति भावः । **समासद्वयेति** ।। भूतानि प्रकृतिश्च इति द्वन्द्वः, ततः पञ्चमीतत्पुरुष इति समासद्वयसूचनार्थमित्यर्थः । **पृथगेवेति** ।। **ततः** 'भूतेभ्यः प्रकृतेश्च इति वाक्यात् । मोक्षपदव्याख्यानं **'मोक्षसाधनममानित्वादिकम्'** इति वाक्यं पृथगेवेत्यर्थः । तथा च नासामर्थ्यशङ्केति हृदयम् । इतिशब्दोऽध्यायभाष्यव्याख्यासमाप्तौ । इममेवार्थं दर्शयति– **इति श्रीमदानन्दतीर्थेति** ।। ३८ ।।

**गीताक्षरार्थस्तु–** अध्यायार्थम् उपसंहरति– **क्षेत्रक्षेत्रज्ञयोरिति** ।। क्षेत्रक्षेत्रज्ञयोः जगत्परमात्मनोः **एवं** प्रेर्यत्वप्रेरकत्वसगुणत्वनिर्गुणत्वाद्युक्तप्रकारेण **अन्तरं** भेदं ज्ञानचक्षुषा शास्त्रप्राप्तदिव्यदृष्ट्या ये **विदुः** भूतप्रकृतिमोक्षं भूतानि पृथिव्यादीनि च प्रकृतिश्चेति द्वन्द्वः, ततः 'पञ्चमी' इति योगविभागात् पञ्चमीतत्पुरुषः । 'मोक्ष्यते अनेन इति करणे घञि मोक्षः अमानित्वादिरूपं मोक्षसाधनजातम् । यद्यपि अमानित्वादिकं ज्ञानसाधनमेवोक्तम् । तथापि परम्परया मोक्षसाधनत्वाशयेन मोक्षम् इत्युक्तम् । तच्च ये विदुस्ते परं पूर्णं ब्रह्म यान्ति इति ।।

**।। इति श्रमिदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यटीकाटिप्पण्यां भावरत्नकोशसमाख्यायां सूरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायां त्रयोदशोऽध्यायः समाप्तः ।।**

**भावदीपिका (श्री.टि.)–** ननु 'भूतानां या प्रकृतिः' इति भूतशब्दस्य प्रकृतिशब्देनान्वये खलु वैयर्थ्यम् । नचैवम् । किं नाम, अविद्याध्वंसार्थकप्रकृतिमोक्षपदेनैव । एवं च 'भूतानामविद्याध्वंसलक्षणं मोक्षं ये विदुः' इत्यर्थसम्भवात् इत्यत आह–**अविद्येति** ।। **द्वन्द्व इति** ।। भूतानि . प्रकृतिश्च भूतप्रकृतयः' इति द्वन्द्व इत्यर्थः ।। ननु 'पञ्चमी भयेन' इति भयशब्दयोग एव पञ्चम्याः समासविधानात् अत्र च तद्योगाभावात् कथं' भूतप्रकृतिभ्यो मोक्षः

भूतप्रकृतिमोक्षः, तम्' इति पञ्चमीसमासः इत्यत आह– **पञ्चमी इति** ।। योगः वाक्यम् । पञ्चमी येन केनापि समस्यते' भयेन च समस्यते' इति योगविभागो द्रष्टव्यः ।।

।। **प्रागुक्त इति** ।। तथा च 'एवम्' इति परामर्शो न युक्त इति भावः । मोक्षशब्देन मोक्षसाधनलाभः कथम् इत्यत आह– **करण इति** ।। 'मुच्लृ मोक्षणे' इत्यस्माद्धातोः मुच्यतेऽनेन' इति करणे घञि अकारमात्रं विहाय सर्वस्यापि लोपे सति व्युत्पन्नेन मोक्षशब्देन तत्साधनलाभो युक्त इति भावः । ननु 'एतज्ज्ञानमिति प्रोक्तम्' इत्यमानित्वादीनां ज्ञान-साधनत्वेनोक्तत्वात् कथं मोक्षसाधनत्ववचनम्? इत्यत आह– **ज्ञानसाधनमपीति** ।। परम्परया ज्ञानद्वारेत्यर्थः । ननु भाष्ये मोक्षपदस्य भूतप्रकृतिपदसापेक्षत्वेन असमर्थत्वात् कथं साधनपदेन समासः । 'सापेक्षम् असमर्थवद् भवति' इति वचनात् इत्यत आह– **नित्येति** ।। 'देवदत्तस्य गुरुकुलम्' इत्यादाविवोत्तरपदेन समासेनापि पूर्वपदेनापेक्षा न विहन्यत इत्यर्थः । वचनं च नित्यसापेक्षविषयमिति भावः । एकवाक्यतापक्षेऽत एवास्वरसात् पृथग्वाक्यतामङ्गीकृत्याह– **समासद्वयेति** ।। 'भूतानि च प्रकृतिश्च इति द्वन्द्वः, 'भूतप्रकृतिभ्यो मोक्षः' इति पञ्चमीतत्पुरुष इति समासद्वयेत्यर्थः । **तत इति** ।। एवं पूर्ववाक्येन विग्रहसूचनानन्तरं मोक्षपदव्याख्यानरूपं मोक्षसाधनम् अमानित्वादिकमिति पृथगेव वाक्यमित्यर्थः ।। ३५ ।।

यदुपतिवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
दशम अगमदस्यां त्र्युत्तरोध्याय अन्तम् ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृतौ भावप्रदीपिकाख्यायां त्रयोदशोऽध्यायः ।।**

**भावप्रकाशः (कृ.टि.)**– ननु भूतप्रकृतिभ्यो मोक्ष इति कथं पञ्चमीसमासः । भूत-प्रकृतीनां विश्लेषावधित्वेनापादानत्वात् पञ्चम्युपपत्तावपि तत्समासविधायकाभावात् । 'पञ्चमी भयेन' इत्यादीनां नियतविषयत्वादित्यत उक्तम्– **पञ्चमीति योगविभागादिति** ।। 'पञ्चमी भयेन' इति सूत्रे पञ्चमीति योगविभागादित्यर्थः । भूतशब्देन सदेहजीवग्रहणे तेभ्यो मोक्ष इत्यसङ्गतमित्यत आह– **पृथिव्यादिभ्य इति** ।। **करणे घञिति** ।। 'मोक्ष आसने' इति

चौरादिकाद् धातोः' इति शेषः । घञि सति णिलोप इति बोध्यम् । ननु समासे एकार्थीभावरूपं सामर्थ्यं प्रयोजकम् । मोक्षशब्दस्य चेतरसापेक्षत्वान्न सामर्थ्यम् । सामर्थ्ये इतरान्वयायोगात् । नहि विशेषणस्यैकदेशान्वयः । तत्कथं मोक्षसाधनमिति समास इत्यत आह– **मोक्षशब्दस्येति** ।। चैत्रस्य नप्तेत्यादौ नित्यसापेक्षस्थले एकदेशान्वयस्यापि दृष्टेरिति भावः । **समासद्वयेति** ।। भूतप्रकृतीति द्वन्द्वः । ततः पञ्चमीतत्पुरुष इति समासद्वयेत्यर्थः ।। ३५ ।।

।। इति **श्रीमत्तिर्मलाचार्यसुतकृष्णविरचिते प्रमेयदीपिकाभावप्रकाशे त्रयोदशोऽध्यायः** ।।

# ।। अथ श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ।।

## भाष्यम्

**साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति ।।**

भावप्रदीपिका (प.टी.)– अवशिष्टोत्तराध्यायपञ्चकार्थं दर्शयति–**साधनमिति** ।

**प्रमेयदीपिका** (ज.टी.)– उत्तरेषां पञ्चानामध्यायानां प्रतिपाद्यमाह– **साधनमिति ।।** **'योगे त्विमां शृणु'** (२.३९) इति प्रतिज्ञाय, आषष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशम् उत्तरैरध्यायैः प्रपञ्चयतीत्यर्थः । **'मम योनिर्महद्ब्रह्म'** (१४.३), **'न तद्भासयते सूर्यः'** (१५.६) इत्यादिनेश्वरमाहात्म्यस्यापि वचनात् कथमेतत्? इत्यत उक्तम्– **प्राधान्येनेति ।।** प्राचुर्यापेक्षया सङ्ग्राहकमेतदित्यर्थः ।। अवान्तरप्रतिपाद्यभेदादध्यायभेदः । तत्र **'यावत्सञ्जायते किञ्चित्'** (१३.२७) इत्युक्तविवरणपूर्वकं **'कारणं गुणसङ्गोऽस्य'** इत्युक्तं गुणसम्बन्धं प्रपञ्च्य तदत्ययसाधनम् अनेनाध्यायेनोच्यते ।।

**भावबोधः** (र.टि.)– ।। **इतिकर्तव्यतांशमिति** ।। उत्तराध्यायपञ्चके कर्मसमाधिरूपज्ञानसाधनस्यानुक्तेः' अमानित्वम्' इत्यादिना कर्मसमाधीतिकर्तव्यांशस्यैवोक्तेर्भाष्ये साधनशब्दः तदितिकर्तव्यांशोपलक्षक इति भावः । एवमेवोत्तरत्र 'ज्ञानसाधनान्याह' इत्यादौ साधनशब्दस्तदितिकर्तव्यांशपरो ज्ञातव्यः । अत एव भाष्ये सप्तदशाध्याये 'पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह' इति वक्ष्यति । **प्रपञ्चयतीति** ।। ततश्च न पूर्वषट्केन पुनरुक्तिरिति भावः । नन्वीश्वरमाहात्म्यस्यैव प्राधान्यात् कथं 'प्राधान्येन' इत्युक्तमित्यत आह– **प्राचुर्येति** ।। इतिकर्तव्यतांशप्रपञ्चकग्रन्थबहुत्वापेक्षयेत्यर्थः । क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकं त्रैगुण्यं विविच्य दर्शयतीति तात्पर्यं हृदि कृत्वा अध्यायार्थमाह – **तत्र यावदित्यादिना** ।। १ ।।

**भावदीपः** (रा.टि.)– ।। **पञ्चानामिति** ।। तत्तदध्यायावान्तरप्रतिपाद्यं तत्र तत्र दर्शयिष्यतीति न सर्वस्यैका ध्यायत्वप्रसक्तिरित्यनुपदमेव व्यक्तम् । **प्रतिज्ञायेति** ।। द्वितीये 'योगे ज्ञानोपाये बुद्धिशब्दिताम् इमां वक्ष्यमाणां वाचं शृणु' (२.३९) इति प्रतिज्ञातेत्यर्थः ।। **आषष्ठेति** ।। 'आकडारात्' इतिवदयं निर्देशः । साधनशब्दोऽत्र भाष्ये तदितिकर्तव्यतापर इति

श्लोकः १

भावेनाऽह– **तत्रेतिकर्तव्यतांशमिति** ।। तस्यैवोत्तराध्यायेषु प्रतीतेरिति भावः । **एतदिति** ।। प्रतिपाद्योक्तिपरं भाष्यमित्यर्थः । तात्पर्यदिशाऽवान्तरप्रतिपाद्यमस्य दर्शयति– **तत्रेति** ।। **इत्युक्तेति** ।। जायमानस्य यत्प्रकृतिविकारत्वमुक्तं पूर्वमित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– भाष्योपात्तोत्तराध्यायशब्दविवक्षितार्थं दर्शयति– **उत्तरेषां पञ्चानामध्यायानामिति** ।। अत्र साधनशब्द उपसाधनशब्दितोपकरणार्थः । उपकरणापरनामकेतिकर्तव्यतोक्तिश्च साधने निरूपित एवावसरं लभत इति भावेन तत्साधनोक्तिस्थलं तावद्दर्शयति– **योगे त्विमामिति** ।। 'ज्ञानोपायविषयिणीं बुद्धिशब्दितां वाचं शृणु' इति द्वितीयाध्याये प्रतिज्ञायेत्यर्थः । **'आषष्ठपरिसमाप्तेः'** इत्यत्र 'अपञ्चम्याः' इति प्रतिषेधात् पञ्चम्या अव्ययीभावत्वेऽपि लुगभावः । षष्ठाध्यायसमाप्तिपर्यन्तमित्यर्थः । 'कामवर्जनादि' इत्यत्र आदिशब्देन द्वन्द्वातीतत्वविमत्सरत्वादिग्रहः । कामवर्जनद्वन्द्वातीतत्वादिरूपेतिकर्तव्यतासहितमित्यर्थः । **कर्मध्यानलक्षणमिति** ।। कर्मयोगध्यानयोगलक्षणमित्यर्थः । तत्रापि आ पञ्चमाध्यायसमाप्तेः प्राधान्येन कर्मयोग उक्तः । षष्ठे कर्मयोगसाध्यो ज्ञानान्तरङ्गभूतः समाधियोगशब्दितध्यानयोग उक्त इति विवेकः । **तत्र** ज्ञानसाधने । **अध्यायैः** पञ्चभिः । प्रथमषट्के कर्मध्यानयोगयोरपि कामादिवर्जनादिरूपेतिकर्तव्यताया उक्तत्वात् कथमत्र 'वक्ति' इत्युच्यते इति शङ्कापरिहाराय 'वक्ति इत्यस्यार्थमाह– **प्रपञ्चयतीति** ।। 'वच परिभाषणे' इति धात्वर्थः 'परिभाषणम्' अत्र 'प्रपञ्चः' इति भावः ।।

केचित्तु 'साधनं प्राधान्येन' इति भाष्ये स्थलनिर्देशपूर्वं साधनस्वरूपं वदन् 'उक्तम्' इत्यध्याहृत्य उत्तरैरध्यायैः' इत्यत्र इतिकर्तव्यतांशम् इत्यध्याहृतवान् इति टीकाशयमाहुः । तदभव्यम् । न्यायदीपिकायाम् 'प्राधान्येनोत्तरैरध्यायैः साधनमेवोच्यते' इति टीकाकारीयवचनानानुगुण्यात् इति अपरे । **एतत्** इतिकर्तव्यतांशं प्राधान्येन वक्ति' इति भाषणम् । अत्र विवक्षितप्राधान्यशब्दार्थमाह– **प्राचुर्येति** ।। 'साधनं प्राधान्येन' इति भाष्यम् इतिकर्तव्यताप्रपञ्चनपरग्रन्थबाहुल्यापेक्षया पञ्चाध्यायार्थसङ्ग्राहकमित्यर्थः । तर्हि एकमर्थं प्रतिपादयन्ती पञ्चाध्यायी एकमेव वाक्यं स्यात्, 'अर्थैकत्वाद् एकं वाक्यम् इति जैमिनिवचनात्, इत्यत आह– **अवान्तरेति** ।। तमेवावान्तरप्रतिपाद्यम् अर्थभेदं तत्रतत्र यथाऽऽचार्यवचनं वक्ष्यन् एतदध्यायप्रतिपाद्यमर्थं तात्पर्यनिर्णयोक्तदिशा दर्शयति– **तत्र यावदिति** ।।

'यावत्सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि.'..... ।।

इति समनन्तराध्याये क्षेत्रक्षेत्रज्ञशब्दितलक्ष्मीनारायणसंयोगात् सर्वभूतसम्भव उक्तः । तद्विवरणपूर्वकम् 'अस्य जीवस्य सदसद्योनिजन्मसु सत्त्वरजस्तमोगुणसङ्गः कारणम्' इति 'कारणं गुणसङ्गोऽस्य' इति पूर्वाध्यायगतश्लोकोक्तबन्धमित्यर्थः । **तदत्ययसाधनम्** बन्धातिक्रमोपायः ।। १,२ ।।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
कुर्मश्चतुर्दशाध्यायटीकां भावप्रदीपिकाम् ।।

।। **आषष्ठसमाप्तेरिति** ।। षष्ठाध्यायसमाप्तिपर्यन्तमित्यर्थः । **कर्मध्यानलक्षणमिति** ।। कर्मध्यानोभयरूपमित्यर्थः । **इतिकर्तव्यतांशमिति** ।। उत्तराध्यायपञ्चके कर्मसमाधिरूपसाधनस्यानुक्तेः 'अफलाकाङ्क्षिभिः' इत्यादिना कर्मसमाधीतिकर्तव्यतांशस्योक्तेः भाष्ये साधनशब्दस्तदितिकर्तव्यतांशोपलक्षक इति भावः । एवमेवोत्तरत्र 'ज्ञानसाधनान्याह' इत्यादौ साधनशब्दस्तदितिकर्तव्यतांशपरो ज्ञातव्यः । अत एव भाष्ये सप्तदशाध्याये 'कर्मादीतिकर्तव्यताविधानार्थम् अर्थवादमाह' इति वक्ष्यति । **प्रपञ्चयतीति** ।। तथाच न पूर्वषट्केन पुनरुक्तिरिति भावः ।

**भावप्रकाशः (कृ.टि.)–** ननूत्तरपश्चाध्याये कर्मध्यानलक्षणं साधनं नोच्यते किं त्वितिकर्तव्यतैव । तत्कथं साधनमित्युक्तम् । नच साधनशब्द इतिकर्तव्यतालक्षक इति वाच्यम् । तथाऽपि वक्तीत्ययोगात् । इतिकर्तव्यतायाः प्रथमषट्के तत्र तत्र प्रतिपादनादित्या-शङ्कां परिहर्तुमाह– **योगे त्विति** ।। प्रकृतमाह– **तत्रेति** ।। नन्वीश्वरमाहात्म्यस्यैव प्राधान्यात् कथमितिकर्तव्यतायाः प्राधान्यमिति शङ्कां परिहरन् कथं तर्ह्युत्तरपश्चाध्यायानाम् इतिकर्तव्यताप्रपञ्चकत्वमित्याशङ्कां च निरस्यति– **प्राचुर्येति** ।। साधनमुत्तरैरित्यादिभाष्यमितिकर्तव्यताप्रपञ्चकग्रन्थबहुत्वापेक्षया सङ्ग्राहकमित्यर्थः । एतेनाष्टादशे 'ज्ञानं कर्म च' इत्यादिना मोक्षसाधनप्रपञ्चनमपि समाहितम् । अनन्तरसङ्गतिं दर्शयन्नाह– **तत्र यावदिति** ।। १ ।।

श्लोकः १-३

**श्रीभगवानुवाच—**

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ।। १ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** 'योगे त्विमां शृणु' इति प्रतिज्ञाय आ षष्ठपरिसमाप्तेः कामवर्जनादीतिकर्तव्यतासहितं कर्मध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेति-कर्तव्यतांश उत्तरैः पञ्चभिरध्यायैः प्रपञ्च्यत इत्युत्तरषट्कार्थः । अवान्तरप्रतिपाद्यभेदाद् अध्यायभेदः । तत्र 'यावत्सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम्' इत्युक्तविवरणपूर्वकम् 'कारणं गुणसङ्गोऽस्य' इत्युक्तगुणबन्धं प्रपञ्च्य, तदत्ययसाधनम् अनेन चतुर्दशाध्यायेनोच्यते । श्रोतुरादरजननाय वक्ष्यमाणार्थज्ञानं प्रतिज्ञापूर्वकं फलोक्त्या प्रशस्यते– **भगवानुवाच परं भूय इति द्वाभ्याम्** ।। परम् अन्यत् कर्माद्यपेक्षयोत्कृष्टम् इति वा भूयः पुनः प्रवक्ष्यामि । किं तत् ? ज्ञानानां ज्ञातव्यानां मध्ये उत्तमं ज्ञान ज्ञातव्यम् । यद् ज्ञात्वा सर्वे मुनयः मननशीलाः इतः संसारात् परां सिद्धि मुक्ति गताः प्राप्तवन्तः ।। १ ।।

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।। २ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** 'ब्रह्मभावो मुक्तिः' इत्यादिमिथ्याज्ञानादिनि-बर्हणाय मुक्तिस्वरूपं विवृण्वता उपदेष्टव्यज्ञानस्य तात्पर्यद्योतनाय मुक्तिसाधनत्वमुच्यते– **इदं ज्ञानमिति** ।। इदम् उपदेक्ष्यमाणार्थज्ञानम् उपाश्रित्य सम्पाद्य मम साधर्म्यम् 'निर्दुःखत्वं परानन्दो लिङ्गभेदः समा मताः' इति वचनोक्तनिर्दुखत्वादिना समानधर्मत्वम् आगताः । कर्तरि निष्ठा, प्राप्तवन्तः भवन्ति । एवंभूता अपि स्वर्गिण इव पुनः प्रत्यावृत्त्योत्पद्यन्ते, म्रियन्ते च किम् इत्यपेक्षायामुच्यते– **सर्गेऽपीति** ।। न व्यथन्ति मृत्यादिव्यथां न गच्छन्ति च ।। २ ।।

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।**
**सम्भवः सर्वभूतानां ततो भवति भारत ।। ३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** परं भूयः प्रवक्ष्यामि (१४.१) इति

प्रतिज्ञातमुच्यते– **मम योनिरिति** ।। हे भारत महद् ब्रह्म प्रकृतिशब्दिता महालक्ष्मीः मम योनिः भार्या तस्मिन् महति ब्रह्मणि अहं गर्भं दधामि । ततः च सर्वभूतानां स्थावर-जङ्गमात्मकप्राणिनां सम्भवः देहयोगलक्षण उद्भवो भवति ।। ३ ।।

**सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः ।**
**तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता ।। ४ ।।**

## भाष्यम्

**महद्ब्रह्म प्रकृतिः । सा च श्रीभूदुर्गेति भिन्ना । उमासरस्वत्याद्यास्तु तदंशयुता अन्यजीवाः । तथा च काषायणश्रुतिः–**

**'श्रीर्भूर्दुर्गा महती तु माया सा लोकसूतिर्जगतो बन्धिका च ।**
**उमावागाद्या अन्यजीवास्तदंशा स्तदात्मना सर्ववेदेषु गीताः' इति ।।**

**मम योनिः इति गर्भधानार्था योनिः । नतु माता, वाक्यशेषात् ।**

भावप्रदीपिका (प.टी.)– मम योनिर्महद्ब्रह्म इत्यत्र महद्ब्रह्मशब्दार्थमाह– **महदिति** । सत्वं रजस्तमः इति व्याख्याति– **सा चेति** । उमासरस्वतीन्द्राणीत्यादिपुराणेषु श्रूयत इत्यत आह– **उमेति** । मम योनिः इति मम मातेत्यर्थं वाक्यशेषश्रुतिभ्यां दूषयति– **ममेति** ।

प्रमेयदीपिका (ज.टी.)– अत्र 'महद् ब्रह्म' इति जडाविद्योच्यते' इति प्रतीति-निरासार्थमाह– **महदिति** ।। प्रकृतिः महालक्ष्मीः । ननु **सत्त्वं रजस्तमः** इति जडा प्रकृतिः वक्ष्यते । तत्सन्निधानादत्रापि सैव युक्तेति चेन्न । तत्रापि चेतनप्रकृत्यभि-धानात् । कथमस्याः सत्त्वादिभेदभिन्नत्वम् ? इत्यत आह– **सा चेति** ।। जडप्रकृते-रभिमानिनी तत्कार्यसत्त्वादिगुणाभिमानिनी एतद्रूपत्रयवतीत्यर्थः । ननु भगवती 'माहेश्वरी ब्राह्मी कौमारी माहेन्द्री श्री भू दुर्गा' इति सप्तधा भिन्ना आगमेषूच्यते । तत्कथं त्रिधा भिन्नोच्यते ? इत्यत आह– **उमेति** ।। आद्याः चतस्रो भगवत्या अन्याः । कुतः ? जीवाः । कथं तद्रूपत्वोक्तिः ? तदंशयुताः तत्सन्निधानोपेताः । कुत एतत् ? इत्यत आह– **तथा चेति** ।।

श्लोकः ४

**'मम योनिः'** इत्येतत् परे व्याचक्षते **'मम स्वरूपभूता योनिः कारणं विश्वस्य ।** प्रतीत एवान्वये **'मम माता'** इत्यापत्तेः' इति । **तन्निरासार्थमाह– ममेति ।।** भार्येत्यर्थः । **'मम'** इत्यनुवादेनान्यथाप्रतीतावन्वयबाधः स्यादिति सूचयति । प्रतीता-न्वयाङ्गीकारे **'माता'** इत्यपि प्रतीयेत । तत्र कथं भार्येति निश्चय इत्यत आह– **नत्विति ।।** 'इति प्रतीतिः प्रसज्यते' इति शेषः । कुतो न ? इत्यत आह– **वाक्येति ।। 'तस्मिन् गर्भं ददाम्यहम्'** इति वाक्यशेषात् भार्यार्थतानिश्चयात् ।।

**भावबोधः (र.टि.)**– ननु योनिशब्दस्यैव व्याख्यानात् ममेत्यस्यानुवादो व्यर्थः इत्यत आह– **ममेत्यनुवादेनेति ।।** अन्यथा 'स्वरूपभूता' 'विश्वस्य' इतिपदद्वयाध्याहारे मम योनिरिति यथाश्रुतान्वयबाधः स्यादित्यर्थः ।

**भावदीपः (रा.टि.)**– ।। 'भगवती' इत्यनुवादः 'माहेश्वरी' इत्यादि प्रभेदोक्तिः । **आद्या** इति भाष्यैकदेशानुवादः । तदवधिमाह– **चतस्र इति ।।** 'माहेन्द्री' इत्यन्तमित्यर्थः ।। '**ममेत्यनुवादेनेति** ।। इति सूचयति इत्यन्वयः ।। **अन्यथेति** ।। परोक्तयोजनापक्ष इत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– 'मदीया त्रिगुणात्मिका माया सर्वेषां भूतानाम् उपादान-कारणभूता देशतः कालतोऽनवच्छिन्नत्वात् महत्, सर्वकार्यवृद्धिहेतुत्वाद् ब्रह्म' इति पैर्व्याख्यानादाह– **जडाविद्येति ।। प्रतीतिनिरासार्थं** परापव्याख्यानाहितप्रतीतिनिरासार्थमस् । प्रकृतिशब्देन जडाविद्योपस्थाप्यत इति कथं तन्निरासः इत्यतः 'महालक्ष्मीः प्रकृतिः' इति तात्पर्योक्तं प्रकृतिशब्दार्थमाह– **प्रकृतिर्महालक्ष्मीरिति** ।। 'युक्ता ग्रहीतुम्' इति शेषः । **अस्याः** चेतनप्रकृतेः । **भगवत्याः** महालक्ष्म्याः । **जीवाः** दुःखस्पृष्टचेतनाः । अनेन भाष्ये 'अन्याश्च जीवाश्च इति विग्रहाश्रयणाद् 'अन्याः' इत्येव पूर्तेः, जीवपदमतिरिच्यत इति शङ्का परास्ता । अन्यत्वे जीवत्वस्य हेतूकरणार्थत्वात् । **कथं** 'तर्हि' इति शेषः । **तद्रूपत्वोक्तिः** महालक्ष्मीरूपत्वोक्तिः । 'इत्यतः उक्तम् इति शेषः । 'तदंशयुताः' इत्यतः परं 'इति' शब्दोऽध्याहार्यः । जयन्तीजानक्यादिप्रतीतिनिरासाय अंशशब्दितविवक्षितमर्थमाह– **तत्सन्नि-धानोपता इति** ।।

भाष्ये **महती माया** लक्ष्मीः 'श्रीः भूः दुर्गा' इति रूपत्रयवती **लोकसूतिः** लोकस्य सवित्री जगतः देवमानवदानवात्मकस्य बन्धिका । श्रीर्देवानाम् भूर्नृणाम् दुर्गा दानवानां बन्धकर्त्रीति

विवेकः । **वाक्** सरस्वती । आद्यशब्देन कुमारस्त्री रतिः, महेन्द्रस्त्री शची च ग्राह्ये । **अन्यजीवाः** मायाया अन्याः, कुतः जीवाः । कथं तर्हि मायारूपत्वोक्तिः इत्यत उक्तम्– **तदंशा इति** ।। मायांशा इव तत्सन्निधानवत्य इति यावत्, 'यतोऽतः' इति शेषः । **तदात्मता** मायारूपता, **सर्ववेदेषु** तत्रतत्रागमेषु गीता इत्यर्थो द्रष्टव्यः । विश्वस्य 'इत्यध्याहृतेनान्वयः' इति शेषः । 'न' इत्यनन्तरं 'पुनः' इति च । क्वचित्तु 'प्रतीते एवान्वये' इति सप्तम्यन्तपाठः । **इत्यापत्तेरिति** ।। योनिशब्दस्य कारणार्थत्वाद् 'मम योनिः मम कारणम्' इत्यर्थे 'मम माता' इत्यापत्तेरित्यर्थः ।

ननु गर्भाधानार्थयोनिः का स्यात् इत्यतः 'अत्र योनिः भार्या' इत्यन्यत्र उक्तं योनिशब्दार्थं निर्दिशति– **भार्येत्यर्थ इति** ।। ननु 'योनिभार्या तथा स्थानं योनिः कारणमेव च' इत्यभिधानाद् योनिशब्दो नानार्थ इति विवक्षितार्थो व्याख्यातव्यः । तत्र 'मम' इत्यनुवादो व्यर्थः इत्यत आह– **ममेत्यनुवादेनेति** ।। **अन्यथा** 'स्वरूपभूता' इति, 'विश्वस्य इति च पदद्वयाध्याहारेणान्वय इति परपक्षे । **प्रतीतान्वयेति** ।। 'मम योनिः' इति यथाश्रुतान्वयाङ्गीकार इत्यर्थः । **तत्र** तथा सति । 'माता' इत्यनन्तरमध्याहार्यमाह– **इति प्रतीतिरिति** ।। निश्चयाद् इति हेतोः 'न तु मातेति प्रतीतिः प्रसज्यते' इति साध्येनान्वयः ।।

**भावदीपिका (श्री.टि.)**– नन्वीश्वरमाहात्म्यस्यैव सर्वापेक्षया प्राधान्यात् कथं 'प्राधान्येन' इत्युक्तम् इत्यत आह– **प्राचुर्येति** ।। इतिकर्तव्यतांशप्रपञ्चकग्रन्थबहुत्वापेक्षयेत्यर्थः । नन्वेवं तर्हि पञ्चानामप्यध्यायानां भेदः किंनिबन्धनः इत्यत आह– **अवान्तरेति** ।। अत एव 'क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकं त्रैगुण्यं विविच्य दर्शयति' इति तात्पर्यं हृदि कृत्वैतदध्यायार्थमाह– **तत्रेति** ।। ।। **जडप्रकृतेरभिमानिनीति** ।। लक्ष्मीरित्यर्थः । **भगवती** महालक्ष्मीः । माहेश्वरी उमादेवी ब्राह्मी सरस्वती कौमारी कुमारः कामः, तत्पत्नी कौमारी रतिः माहेन्द्री शची भगवती माहेश्वर्यादिसप्तधेत्यर्थः । **आद्याः** माहेश्वर्याद्याः । **जीवा इति** ।। दुःखस्पृष्टचेतना इत्यर्थः । 'नित्यादुःखा रमा, अन्ये तु स्पृष्टदुःखाः समस्तशः' इत्युक्तेरिति ध्येयम् । तेन रमाया अपि 'जीवभूतां महाबाहो' इति पूर्वं प्राणधारकत्वेन जीवत्वोक्तेः माहेश्वर्यादीनां भगवत्या अन्यत्वे जीवत्वं कथं हेतुरुच्यते इति शङ्काऽनवकाश इति ध्येयम् ।

।। **प्रतीत एवेति** ।। 'मम स्वरूपभूता' इत्यध्याहृत्य व्याख्यानाकरणे 'मम योनिः' इति प्रतीत एवान्वयेऽङ्गीकृते सतीत्यर्थः । **मम मातेतीति** ।। भार्यायाश्च मातृत्वं बाधितमिति

श्लोकः ४

भावः । ननु योनिशब्दस्यैव व्याख्यानात् 'मम' इत्यनुवादो व्यर्थः इत्यत आह– **ममेत्यनुवादेनेति** ।। **अन्यथेति** ।। 'स्वरूपभूता' 'विश्वस्य' इति पदद्वयाध्याहारे तव यथाश्रुतान्वयबाधः स्यादित्यर्थः । अस्माकं तु प्रतीतान्वय एवेति भावः । **इत्यपीति** ।। योनिशब्दस्य गर्भाधानस्थले कारणे च प्रसिद्धेरित्याशयः ।।

**भावप्रकाशः (कृ.टि.)– ।। महालक्ष्मीरिति** ।। वक्ष्यमाणविरूपत्वोपपादनाय महत्त्वविशेषणम् । तथा च महालक्ष्मीर्लक्ष्म्या मूलरूपमित्यर्थः । मातापितृकर्तृकगर्भाधानार्था योनिर्भवतीत्यत आह– **भार्येत्यर्थ इति** ।। ननु योनिशब्दस्यैव व्याख्यानान्ममेत्यनुवादो व्यर्थ इत्यत आह– **ममेत्यनुवादेनेति** ।। **बाध इति** ।। स्वरूपभूतेत्यध्याहारेण व्याख्यानादिति भावः ।

## भाष्यम्

**तथा हि सामवेदे शार्कराक्षश्रुतौ–**

**'विष्णुर्योनिः गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना ।**
**तथाप्यात्मानं दुःखिवन्मोहनार्थं प्रकाशयन्ती सह विष्णुना सा' इति ।**

**अतः सीतादुःखादिकं मृषा प्रदर्शनमेव । तथा कूर्मपुराणे । न चेयं भूः । तथाच सौकरायणश्रुतिः । 'अन्या भूः भूरियं तस्य च्छाया भूताऽवमा सा हि भूतैकयोनिः' इति । 'अवाप स्वेच्छया दास्यं जगतां प्रपितामही' इति अनभिम्लातश्रुतिः । मत्स्यपुराणोक्तमपि स्वेच्छयैव । महद्ब्रह्मशब्दवाच्याऽपि प्रकृतिरेव । 'महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः' इति तत्रैव ।। ३४ ।।**

भावप्रदीपिका (प.टी.)– नन्विदं सर्वोत्पत्त्यादिरूपाया दुःखमित्यत आह– **अत इति** । एतच्छ्रुतित एवेत्यर्थः । स्मृतिं चैतस्मन्नर्थे दर्शयति– **तथा चेति** ।

दग्ध्वा मायामयीं सीतां पावकोऽसौ सुरप्रियः ।
रामायादर्शयत् सीतां भगवानुग्रदीधितिः । इति ।

ननु 'भूमिर्दृप्तनृपव्याज' इत्यादिना भूमिदेव्या दुःखमुच्यत इत्यत आह– **न चेति** । ननु मात्स्ये वाल्मीकिशुश्रूषादि रामवियोगादि चोच्यत इत्यत आह– **अवापेति** । महद्ब्रह्म प्रकृतिः इत्युक्तं समर्थयति– **महदिति** ।। ३ ।।

**प्रमेयदीपिका** (ज.टी.)– श्रुतिबलाच्चेत्याह– **तथा हीति** ।। प्रकाशयन्ती प्रवर्तते । अनयैव श्रुत्याऽन्यदपि लब्धमिति प्रसङ्गादाह– **अत इति** ।। मृषा अयथार्थं प्रदर्शनं यस्य तत्तथा ।। इतश्चैवमेवेत्याह– **तथेति** ।। तत्र ह्येवमुक्तम्–

'दग्ध्वा मायामयीं सीतां भगवानुग्रदीधितिः ।
रामायादर्शयत् सीतां पावकोऽसौ सुरप्रियः ।।' इत्यादि ।।

ननु महालक्ष्मीः 'श्रीः भूः दुर्गा' इति भिन्ना' इत्युक्तम् । भुवश्च 'गौर्भूत्वाऽश्रुमुखी खिन्ना' (भाग.१०.१.१८) इति दुःखं प्रतीयते । तत्कथमेतत् ? इत्यत आह– **न चेति** ।। इयं भूताभिमानिनी प्रसिद्धा भूः भगवत्या रूपं न भवति । किन्त्वियमन्यैव । कुतः? इत्यत आह– **तथा चेति** ।। महालक्ष्मीरूपं भूः अन्या । इयं प्रसिद्धा तस्य तस्याः छाया प्रतिमा ।

ननु रावणहरणादिकं भवतु मायासीतायाः । वाल्मीकिदास्यं तावन्मत्स्यपुराणे साक्षात् सीताया एवोक्तम् । दास्ये च दुःखमवर्जनीयमित्याशङ्कां प्रमाणपूर्वकमपाकरोति – **अवापेति** ।। श्रुतिः 'अस्ति यतः अतः' इति शेषः ।। 'महद्ब्रह्म प्रकृतिः' इत्युक्तम् । तत्र प्रमाणं वक्तुं व्यवहितत्वात् पुनः प्रतिजानीते– **महदिति** ।। 'महत्' 'ब्रह्म' इति भिन्ने पदे । ततः परम् 'इति' शब्दः अध्याहार्यः । कुतः ? इत्यत आह– **महतीति** ।। तत्रैव मत्स्यपुराणे । अर्थक्रमेण 'मम योनिः महद् ब्रह्म' इत्यत्र व्युत्क्रमेण व्याख्यानम् । मत्स्यपुराणोदाहरणप्रसङ्गादत्रोपपादनमिति ।। ३,४ ।।

**भावबोधः** (र.टि.)– नन्वज्ञलोकप्रदर्शनस्य सत्यत्वात् कथं 'मृषा' इत्युक्तमित्यत आह– **मृषाऽयथार्थमिति** ।। ननु 'मम योनिर्महद्ब्रह्म' इति पाठक्रमेणैव 'मम योनिर्गर्भाधानार्था योनिः' इति प्रमाणं चोदाहृत्य 'महद्ब्रह्म प्रकृतिः' इति च व्याख्याय 'महती ब्रह्मणी' इति प्रमाणमुदाहृत्य महद्ब्रह्मशब्दवाच्यत्वोपपादने लाघवं 'महद्ब्रह्म प्रकृतिः' इत्यादिव्युत्क्रमेण व्याख्याय पुनरुपस्थित्यर्थं 'महद्ब्रह्मशब्दवाच्या प्रकृतिरेव' इति प्रतिज्ञारूपं गौरवं किमर्थमाश्रितमित्यत आह– **अर्थक्रमेणेति** ।। 'महद्ब्रह्म मम योनिः' इत्यनुवादविधानविषय-रूपार्थक्रमेणेत्यर्थः । ननु तर्हि तदुपपादनार्थं महती ब्रह्मणीति प्रमाणोदाहरणं तत्रैव कुतो न कृतमित्यत आह– **मत्स्येति** ।। ४ ।।

श्लोकः ४

**भावदीपः (रा.टि.)–** 'प्रकाशयन्ती' इत्यनूद्य तस्याध्याहारेण क्रियान्वयमाह– **प्रवर्तत इति** ।। ननु गीतापाठक्रमानुरोधेन व्याख्याने कार्ये महद्ब्रह्मपदार्थं पूर्वमुक्त्वा 'मम योनिः' इति योनिपदव्याख्यानं भाष्ये पूर्वं कुतः कृतमित्यत आह– **अर्थक्रमेणेति** ।। 'ब्रह्म' इत्यस्य विशेष्यत्वात्, योनिपदस्य विशेषणत्वाद्वा, ब्रह्मणः प्राधान्यरूपार्थक्रमेणेत्यर्थः । 'महद्ब्रह्म' इति शब्दार्थत्वोपपादनं तत्रैवाकृत्वाऽत्र कुतः कृतम्? इत्यत आह– **मत्स्येति** ।। ३–४ ।।

**भावरत्नकोशः (सु.टि.)–** भाष्ये 'महामाया महालक्ष्मीः विष्णोः गर्भसन्धारणार्था योनिः भार्या । तथापि सर्वैर्दुःखैर्विशेषतो हीनाऽपि मोहनार्थम् अयोग्यजनस्य' इत्यर्थस्य स्फुटत्वाद् 'एकतिङ् वाक्यम्' इति प्रसिद्ध्यनुसारेण वाक्यसमाप्तयेऽध्याहरति– **प्रवर्तत इति** ।। **प्रसङ्गात्** योनिशब्दस्य भार्यार्थत्वनिर्धारणप्रस्तावात् ।। ननु दुःखरामवियोगरावणहरणादेः अर्थस्य प्रदर्शन-रूपत्वम्, अयुक्तं च प्रदर्शनस्य 'मिथ्यात्वम् 'अयोग्यजनव्यामोहनाय दुःखिवत् आत्मानं प्रकाशयन्ती' इति प्रदर्शनस्य श्रुत्युक्तत्वात्, इत्यतो मृषाशब्दस्य विवक्षितार्थं वदन् बहुव्रीहि-माह– **मृषाऽयथार्थमिति** ।। लोकदर्शननिष्पादनं हि प्रदर्शनशब्दार्थः । तत्र दर्शनं मिथ्या-भूतदुःखाद्यर्थविषयीकारि, इति व्याख्यानात् न शङ्कितदोषद्वयमिति भावः । **इतश्च** स्मृतिबला-च्चेत्यर्थः । न केवलं 'महामाया सीतादिरूपदुःखिवत् आत्मानं प्रकाशयन्ती' इति श्रुतिबलात् 'सीतादुःखादिकं मिथ्या' इति ज्ञातव्यम्, किन्तु विस्पष्टार्थवादिपुराणवचनबलाच्चेति चशब्दः । अनेनैव पूर्वभाष्ये 'अतः' इत्यस्य 'उदाहृतश्रुतिवाक्यात्' इत्यर्थः सूचितो भवति । **उग्रदीधितिः** तिग्मप्रकाश इति पावकविशेषणम् ।

भागवते भगवत्याः महालक्ष्म्या रूपम् इति भाष्ये अध्याहारः । अन्यत्व एव प्रमाणो-दाहरणात् इयम् इति भाष्यपदमावर्त्य तत्र संयोज्यमाह– **किन्त्वियमन्यैवेति** । **प्रसिद्धा** भूरन्येत्यनुवर्तते । पुंवत् शक्तियुतत्वेन पुंलिङ्गं वेदे इति भावेन तस्य इत्येतदनूद्य व्याचष्टे– **तस्य तस्या इति** ।। छायाशबदेन दीपच्छाया, नरच्छाया इत्यादाविवात्रापि द्रव्यान्तरं प्रतीयते । नच तद्ग्रहणं युक्तम् । स्वच्छद्रव्यस्य महालक्ष्म्याः छायायोगादिति । एतस्य विवक्षि-तार्थमाह– **छाया प्रतिमेति** । भाष्ये अन्यशब्दोक्तं भेदमुपपादयितुं विरुद्धधर्मावुक्तौ भूतावमा भूतैकयोनिः इति । तत्र भूतावमा आकाशादिभूतेभ्य इयमवरा, सा तु महालक्ष्मीरूपा भूतानां मुख्यकारणम्, ततः अधिकेत्यर्थः । पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा इति च्छान्दोग्यभाष्यं विवक्षाविशेषेण तस्या उत्तमत्वाशयमिति न तद्विरोधः । दास्यं शुश्रूषणम् । अपाकरोति इति

वदन् भाष्ये स्वेच्छयैव, नतु कर्मायत्तत्वेन, तेन दुःखमवर्जनीयमिति नाशङ्कनीयम् इति संयोज्यमित्यभिसन्धत्ते ।। 'श्रुतिः' इत्यनूद्य तत्र पदत्रयमध्याहरति– **श्रुतिरस्ति यतोऽत इति** ।।

ननु 'आन्महतः समानाधिकरणजातीययोः' इति आत्वानुशासनाद् 'महाब्रह्म' इति स्यात् इत्यत आह– **ततः परमिति** ।। महत् इति विशेषणसमर्पकः, 'ब्रह्म' इति विशेष्यसमर्पकश्च यो गीतोपात्तः शब्दः तद्वाच्येति भाष्यार्थ इति भावः । 'महती इति' इत्यत्र 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रकृतिभावः । स्थलप्रदर्शनाय एवशब्दशिरस्कप्रतीकम् आगृह्य तदर्थमाह– **तत्रैव मत्स्यपुराण इति** ।।

ननूत्तरपञ्चाध्यायीप्रतिपाद्योक्त्यनन्तरं भाष्ये महद् ब्रह्मशब्दो महालक्ष्म्यर्थो व्याख्यातः । अनन्तरं योनिशब्दो भार्यार्थो भाषितः । गीतापाठस्तु 'मम योनिर्महद् ब्रह्म' इति । तत्र गीता-पाठमनुसृत्य योनिमहद्ब्रह्मशब्देषु क्रमेणैव व्याख्यातव्येषु किमिति क्रमातिलङ्घनेन व्याख्यानम् इत्यत आह– **अर्थक्रमेणेति** ।। 'महद् ब्रह्म मम योनिः भार्या' इत्यन्वयक्रमेण विवक्षितन निमित्तेनैवं व्याख्यानं कृतमित्यर्थः । ननु तर्हि 'महद् ब्रह्म प्रकृतिः' इत्युक्त्यनन्तरमेव 'महती ब्रह्मणी द्वे तु' इति प्रमाणमुदाहार्यम् प्रतिपत्तिसौकर्यात् न त्वत्र । पुनः प्रतिज्ञाकरणदोषात्, इत्यत आह– **मत्स्यपुराणेति** ।। **उपपादनम्** प्रमाणोदाहरणेन प्रकृत्यर्थत्वप्रतिपादनम् ।।

**गीताक्षरार्थस्तु** एवं मत्तः प्रकृतौ प्राणिनामुद्भवो न आदिसर्ग एव, किन्तु सर्वदाऽ-पीत्युच्यते– **सर्वयोनिष्विति** ।। सर्वयोनिषु सुरनरतिर्यगादिरूपासु याः मूर्तयः कार्यव्यक्तयः सम्भवन्ति तासां महद् ब्रह्म प्रकृतिः योनिः गर्भाधानस्थानं क्षेत्ररूपं कारणम् अहं बीजप्रदः गर्भाधानकर्ता पिता इति ।। ४ ।।

**भावदीपिका (श्री.टि.)**– ननु दुःखाद्यर्थस्य कथं मृषाप्रदर्शनरूपत्वमित्यतो बहुव्रीहि-माश्रित्याह–**मृषेति** ।। तथाचायथार्थज्ञानविषय इत्यर्थः । **पावकः** अग्निः । श्रुतौ भूतावमा इत्यस्य भूतेष्ववमा इत्यर्थः । यथोक्तम् तदा भूमिः पञ्चभूतावरा इति । वक्ष्यमाणप्रमाणानु-सारादाह– **भिन्ने पदे इति** ।। **इतिशब्द इति** ।। तथाच महत् इति ब्रह्म इति शब्दवाच्या अपीत्यर्थः । ननु मम योनिर्महद्ब्रह्म इति पाठक्रमेणैव मम योनिः गर्भसन्धानार्था योनिः इत्यादि व्याख्याय विष्णोर्योनिः इत्यादिप्रमाणमुदाहृत्य, प्रकृतेर्महद्ब्रह्मशब्दवाच्यत्वोपपदाने लाघवम् । महद ब्रम प्रकृतिः इत्यादिव्युत्क्रणेण व्याख्या पुनरुपस्थित्यर्थं महद्ब्रह्मशब्दवाच्या प्रकृतिरेवेति

श्लोकः ५

प्रतिज्ञारूपं गौरवं किमर्थमाश्रितम् इत्यत आह– **अर्थक्रमेणेति** । महद्ब्रह्म इत्यनुवादेन मम योनिः इति विधीयत इत्येवमनुवादविधानविषयभूतार्थयोः क्रमेणेत्यर्थः । उद्देश्यस्य प्राथमिकत्वाद् विधेयस्य पश्चात्तनत्वादिति भावः । ननु तर्हि तदुपपादनार्थं महती ब्रह्मणी इति प्रमाणोदाहरणं तत्रैव कुतो न कृतमित्यत आह– **मत्स्यपुराणेति** ।।

**भावप्रकाशः (कृ.टि.)–** 'प्रदर्शयन्ती' इतिपदं विवृण्वन् साकाङ्क्षत्वात् क्रियामध्याहरति– **प्रकाशयन्तीति** ।। नन्वर्थस्य मिथ्यात्वेऽपि ज्ञानस्य तदभावात् कथं मृषेत्युक्तमित्यत आह– **मृषाऽयथार्थमिति** ।। **इयं भूताभिमानिनीति** ।। अनेन 'इयम्' इति त्रिरावर्तते । तत्रैकस्यार्थः– **प्रसिद्धेति** । द्वितीयस्य भगवत्या रूपमिति तृतीयस्य किन्त्वियमिति । ननु छाया त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोरित्युक्तेश्छायाशब्दः प्रतिबिम्बार्थः । नतु भूताभिमानिधरायाः साक्षाल्लक्ष्मीप्रतिबिम्बत्वम् । 'आभासका' इत्यादिविरोधादित्यत आह– **प्रतिमेति** ।। 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वे 'महाब्रह्म' इति स्यादित्यत आह– **भिन्ने पदे इति** ।। ननु मम योनिर्महद्ब्रह्मेति पाठक्रमात् 'मम योनिः' इति व्याख्येयम् । कुतो व्युत्क्रम इत्यत आह– **अर्थक्रमेणेति** ।। 'महद्ब्रह्म मम योनिः' इत्यन्वयक्रमेणेत्यर्थः । यद्यपीदं प्रागेव वक्तव्यम् । तथाऽप्युपपादनानुपपत्तिपरिहारप्रसङ्गादिहोक्तम् । ननु शब्दवाच्यत्वसमर्थनाय 'महद्ब्रह्म प्रकृतिः' इति वाक्यानन्तरमेव 'महती' इति प्रमाणमुदाहार्यम् । लाघवात् । न त्वत्र प्रतिज्ञागौरवादित्यत आह– **मत्स्येति** ।। ३ ।।

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ।। ५ ।।**

## भाष्यम्

**बन्धप्रकारं दर्शयति साधनानुष्ठानाय– सत्त्वमित्यादिना ।। ५,६ ।।**

भावप्रदीपिका (प.टी.)– सत्त्वं रजस्तमः इत्यादि प्रघट्टकमवतारयति– **बन्धेति** ।। ५ ।।

प्रमेयदीपिका (ज.टी.)– ननु प्रतिज्ञातं ज्ञानं श्लोकद्वयेनोक्तम् । तत्किमुत्तरेण ग्रन्थेनाध्यायासङ्गतमुच्यते ? इत्यत आह– **बन्धेति** ।। यो हि बद्धोऽस्मीति जानाति

**स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वा अनुतिष्ठति । अतो बन्धोच्छेद-साधनानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारम् आदौ तावद् दर्शयति इति नासङ्गतिरित्यर्थः ।। ५ ।।**

**भावबोधः (र.टि.)– ।। प्रतिज्ञातमिति ।।** 'परं भूयः' इति प्रतिज्ञातम् । ज्ञायते इदमिति व्युत्पत्त्या ज्ञानम् ईश्वरादिमाहात्म्यं मम योनिरिति श्लोकद्वयेनोक्तमित्यर्थः ।। ५,६ ।।

**भावदीपः (रा.टि.)– ।। प्रतिज्ञातं ज्ञानमिति ।।** ज्ञायत इति ज्ञानमिति कर्म-व्युत्पत्त्या प्रकृतेः सर्वकारणत्वरूपं प्रकृतौ भगवतः बीजाधायकत्वरूपं ज्ञातव्यमित्यर्थः । **विजिज्ञास्य** विचार्य ।। ५ ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रतिज्ञातं ज्ञानमिति ।।** 'परं भूयः प्रवक्ष्यामि' (१४. १) इति प्रतिज्ञातं प्रकृतेः सर्वकारणत्वरूपम् भगवतः प्रकृतौ बीजावापकर्तृत्वरूपं च ज्ञातव्यमित्यर्थः । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाद् कर्मणि ल्युट् इति भावः। सन्निधानाद् 'बन्धसाधनानुष्ठानाय' इति प्रतीतिव्युदासाय सतात्पर्यं व्याचष्टे– **यो हीति** ।। **तन्निवृत्तिसाधनं** बन्धनिवृत्तिसाधनम् । **विजिज्ञास्य** विचार्य **तज्ज्ञापनार्थं** साधनानुष्ठान-ज्ञापनार्थम् ।।

'सत्त्वं रजस्तमः' इत्यादि**गीताश्लोकाक्षरार्थस्तु** 'परं भूयः' इति प्रतिज्ञातं' मम योनिर्महद् ब्रह्म' इति श्लोकद्वयेनोक्तम् । तत्र ज्ञातव्यार्थज्ञानं 'परां सिद्धिमितो गताः' 'मम साधर्म्य-मागताः' इति मोक्षसाधनमित्यभिहितम् । मोक्षश्च संसारलक्षणाद् बन्धादिति वक्तव्यम् । अतो बन्धस्वरूपं प्रतिज्ञाय तन्निवृत्तिसाधनम् अनुष्ठातव्यं मुमुक्षुणा । यो हि 'बद्धोऽस्मि' इति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य, ज्ञात्वा, अनुतिष्ठति । अतो बन्धोच्छेदसाध-नानुष्ठानाय तज्ज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारस्तावद् आदौ प्रदर्श्यते– **सत्त्वमित्यादिना** ।। इति गुणाः इति संज्ञोपेताः गुणाः । 'सम्भवत्यस्याः' इति सम्पूर्वाद् भवतेः 'ऋदोरप्' (पा.३.३.५७) इत्यप्प्रत्यये सम्भवा । प्रकृतिः सम्भवा कारणं येषां ते प्रकृतिसम्भवाः । 'प्रकृतेः सम्भवः उत्पत्तिः येषां ते' इति व्यधिकरणबहुव्रीहिरित्यपि आहुः । देहे उपचीयमाने शरीरे स्थितम् अव्ययं स्वरूपेण व्ययरहितमपि देहिनं जीवं निबध्नन्ति । अत्र 'देहे' इत्युक्तिः भूतपूर्वगत्या मुक्तानामपि देहित्वाद् तान् बध्नन्तीति शङ्काव्युदासायेति स्वामिनः।

देहे देहादिसंसारे भवितव्ये गुणाः श्री भूदुर्गादिवीभिः नियता देहिनं जीवं बध्नन्ति आवृण्वत इत्यपि योजयन्ति ।। ५ ।।

**भावदीपिका (श्री.टि.)– ।। प्रतिज्ञातमिति ।।** 'परं भूयः प्रवक्ष्यामि' इति प्रतिज्ञातम् । 'ज्ञायते' इति कर्मव्युत्पत्त्या ज्ञानम् ईश्वरादिमाहात्म्यं 'मम योनिः' इत्यादिश्लोकद्वयेनोक्तमित्यर्थः । ननु साधनानुष्ठाने बन्धप्रकारप्रदर्शनं कथमुपयोगि इत्यत आह– **यो हीति ।। विजिज्ञास्य** विचार्य ।। ५ ।।

**भावप्रकाशः (कृ.टि.)– ।। ज्ञानमिति ।।** 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । ज्ञेयं भगवन्माहात्म्यमित्यर्थः ।। ५ ।।

## तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
## सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ।। ६ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** त्रयाणां गुणानां बन्धकत्वं विविच्य प्रदर्श्यते– **तत्रेति श्लोकत्रयेण** ।। हे अनघ श्रोतृदोषविधुर इत्यर्जुनसम्बद्धिः । तत्र गुणानां मध्ये सत्त्वं गुणः निर्मलत्वात् स्वच्छत्वाद् अनामयं न विद्यते आमयः ज्वराद्युपद्रवो यस्मात् ततश्च प्रकाशकं ज्ञानोत्पादकम् । तत्र सूक्ष्मं सत्त्वं परमेश्वरविषयज्ञानकारणम् । स्थूलं तु लौकिकप्रकाशकारणमिति ज्ञातव्यम् । स्वकार्यभूतेन सुखस्य यः सङ्गः सम्बन्धः तेन, ज्ञानसङ्गेन च । अनेन 'प्रकाशकम् इत्यत्र प्रकाशशब्देन ज्ञानं ग्राह्यमिति भावितम् । बध्नाति । अत्र सत्त्वगुणाभिमानिनी श्रीदेवी देवानां ज्ञानस्य सुखस्य कारणं भवतीति विशेष उत्तरप्रस्थानोक्तः ।। ६ ।।

## रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
## तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ।। ७ ।।

## भाष्यम्

**तृष्णासङ्गयोः समुद्भवं तयोः कारणम् ।। ७ ।।**

भावप्रदीपिका (प.टी.)– तृष्णासङ्गाभ्यामुद्भवो यस्येति प्रतीतिनिरासायाह– **तृष्णेति ।। ६,७ ।।**

**प्रमेयदीपिका (ज.टी.)**– अत्र रजः **'तृष्णासङ्गसमुद्भवम्'** इत्यस्य **तृष्णासङ्गाभ्यां समुद्भवो यस्य'** इत्यपव्याख्यानमिति भावेन विग्रहप्रदर्शनपूर्वकमर्थमाह– **तृष्णेति ।। समुद्भवति अस्मादिति समुद्भवं कारणम् । अन्यथा 'प्रकृतिसम्भवाः'** (१४.५) इत्युक्तविरोधात् । **समुद्भवशब्देनाविर्भावो विवक्षित इति चेत् । तथाऽपि गुणकार्य-कथनप्रकरणविरोधात् ।। ७ ।।**

**भावबोधः (र.टि.)– ।। गुणकार्येति ।।** सत्त्वादित्रिगुणकार्यकथनप्रकरणे तृष्णा-सङ्गकार्यकथनं विरुद्धमित्यर्थः ।। ७ ।।

**भावरत्नकोशः (सु.टि.)– ।। अत्र** गुणैर्बन्धकथनप्रकरणे । **समुद्भवत्यस्मादिति** ।। संपूर्वाद् भवतेः 'ऋदोरप्' इति अप्प्रत्ययः । 'सार्वधातुकार्धधातुकयोः' इति गुणोऽवादेशश्च, न पुनर्घञ् प्रत्ययः । 'श्रिणी भुवोऽनुपसर्गे' इति उपसर्ग उपपदे भूधातोः घञः पर्युदासात् । न चैवं सति भाष्ये 'समुद्भवम् इति नपुंसकप्रयोगो न युक्तः । लिङ्गानुशासने पुंसि इत्यधिकृत्य 'घञबन्ताः' इति अप्प्रत्ययान्तस्य पुंस्त्वानुशासनात्, इति वाच्यम् । भावार्थकघञबन्तस्य पुंस्त्वेऽपि कर्माद्यर्थकतदन्तस्य तदभावेन विशेष्यनिघ्नत्वात् । अत एव 'सम्बन्धमनुवर्तिष्यते' इति भाष्यप्रयोगः कैयटोक्तरीत्यैव निर्व्यूढः । केचित्तु समुद्भवत्यस्मात् इति टीकोक्त-व्युत्पत्तिरुपलक्षणम् । 'सम्यग् उद्भवः उत्पत्तिः यस्मात् समुद्भवम् इत्यपि द्रष्टव्यम् । तथा च भाष्ये नपुंसकलिङ्गप्रयोग उपपन्न इत्याहुः । **अन्यथा** तृष्णासङ्गाभ्यां समुद्भवो यस्य' इति परव्याख्याने । **इत्युक्तेति** ।। 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इत्युक्तत्वेन प्रकृतिकार्यस्य रजसः तृष्णासङ्गकार्यत्वाभ्युपगमे स्वोक्तिविरोधापत्तेरित्यर्थः । प्रकृतिकार्यत्वा-विघातेनैव तृष्णासङ्गाभ्यां रजसः समुद्भवं घटयितुमाह– **समुद्भवशब्देनेति ।। गुणेति ।।** गुणानां कार्यबन्धो ह्यत्र कथ्यते । तत्प्रकरणे चाविर्भावकथनस्यानुचितत्वेन तत्कथनस्य प्रकरणविरोधित्वादित्यर्थः ।।

**गीताक्षरार्थस्तु–** रजः रजोगुणं रागात्मकं रागः रञ्जनम्, आत्मा रूपं यस्य तत्तथा अनुरञ्जनरूपम् । 'समुद्भवत्यस्मात् इति समुद्भवं कारणम् । तृष्णा नाम अप्राप्तार्थाभिलाषः, सङ्गस्तु प्राप्तार्थे 'नाहमिमं त्यक्तुमुत्सहे इत्यासक्तिः विषयसम्बन्धः, तयोः समुद्भवं तृष्णा-सङ्गसमुद्भवं विद्धि । तद् रजः स्वर्गादिसाधनकर्मसम्बन्धेन देहिनं जीवं बध्नाति । रजोगुणाभि-

श्लोकः ८

मानिनी भूदेवी रजोगुणकार्येण कर्मसङ्गेन मानुषी जीवबन्धिका इति विशेष उत्तरप्रस्थानाद् अवगन्तव्यः ।। ७ ।।

**भावदीपिका (श्री.टि.)– ।। अन्यथेति ।।** रजोगुणस्य तृष्णासङ्गाभ्यां समुद्भव-व्याख्यान इत्यर्थः । **आविर्भाव इति ।।** तृष्णासङ्गाभ्यां रजोगुणस्याभिव्यक्तिमङ्गीकृत्य तत्परतया व्याख्यान इत्यर्थः । **गुणकार्येति ।।** सत्त्वादिगुणकार्यकथनप्रकरणे तृष्णासङ्गकार्य-कथनं विरुद्धमित्यर्थः ।। ७ ।।

**भावप्रकाशः (कृ.टि.)– ।। समुद्भवत्यस्मादिति ।।** नात्र घञ् । श्रिणी भुवोऽनुपसर्गे इत्युपसर्गे उपपदे तत्पर्युदासात् । किन्तु समुत्पूर्वाद्भवतेरपादाने ऋदोरबित्यप् । सार्वधातुकार्ध-धातुकयोरिति गुणोऽवादेशश्चेति भावः । नच पुंस्त्वापत्तिः पुमानित्यधिकृत्य घञबन्त इत्युक्ते-रिति वाच्यम् । भावार्थघञबन्तस्य पुंस्त्वेऽपि कर्माद्यर्थतदन्तस्य विशेष्यलिङ्गत्वात् । सम्बन्धमनुवर्तिष्यत इति महाभाष्यप्रयोगादिति । **अन्यथेति ।।** अपव्याख्यान इत्यर्थः ।।७।।

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ।। ८ ।।**

## भाष्यम्

**अज्ञानं जायते यतस्तत् अज्ञानजम् । 'प्रमादमोहौ तमसः' (१४.१७) इति वाक्यशेषात् ।। ८ ।।**

भावप्रदीपिका (प.टी.)– अज्ञानाज्जातमिति प्रतीतिनिरासायाह– **अज्ञानमिति** ।। ८ ।।

प्रमेयदीपिका (ज.टी.)– 'तमस्त्वज्ञानजम्' इत्यस्य 'अज्ञानाज्जातम्' इत्यप-व्याख्यां प्रत्याख्यातुमाह– **अज्ञानमिति ।।** एतच्च 'अन्येष्वपि दृश्यते'इति दृशि-ग्रहणसामर्थ्याल्लभ्यते । कुतः प्रतीत एवार्थो न? इत्यत आह– **प्रमादेति ।।** वाक्यशेषेऽज्ञानस्य तमःकार्यत्ववचनादित्यर्थः ।। ८ ।।

**भावबोधः (र.टि.)–** ननु 'सप्तम्यां जनेर्ड' इति सप्तम्यन्त उपपदे जनेर्डप्रत्ययविधानात् कथमज्ञानं जायते इत्युक्तमित्यत आह– **अन्येष्वपीति** ।। ८ ।।

**भावदीपः (रा.टि.)–** ।। **एतच्चेति** ।। 'अज्ञानजनकम्' इत्येतच्च 'सप्तम्यां जनेर्डः' इत्यत्र 'अन्येष्वपि दृश्यते' इत्युक्तेर्दृशिग्रहणसामर्थ्यात् करणे प्रथमान्ते उपपदेऽपि जनेर्डप्रत्यये लभ्यत इत्यर्थः ।। ८ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु अज्ञानं जायते यत इति अज्ञानजमिति कथं डप्रत्ययः । सप्तम्यां जनेर्ड इति सप्तम्यन्त उपपदे एव जनेस्तद्विधानात् प्रकृते च तदभावात् इत्यत आह– **एतच्चेति** ।। अन्येष्वपि उपपदेषु कारकेषु च जनेर्डप्रत्ययो भवतीत्यर्थः । अत्र चापि शब्दस्य सर्वोपाधिव्यभिचारार्थत्वेन धात्वन्तरात् कारकान्तरे वा जप्रत्यविधायकत्वसिद्धेः युक्तः अन्यत्रापि ड इति भावः ।।

**भावरत्नकोशः (सु.टि.)–** ननु 'अज्ञानं जायते यतः' इति विग्रहे 'अज्ञानजम् इति कथं रूपम् 'सप्तम्यां जनेर्डः', 'पञ्चम्यामजातौ' 'उपसर्गे च संज्ञायाम्' 'अनौ कर्मणि' इति सप्तम्यन्तादौ उपपद एव जनेर्डप्रत्ययविधानात् प्रथमान्त उपपदे अकर्तरि अविधानात् इत्यत आह– **एतच्चेति** ।। उक्तविग्रहेऽपि 'अज्ञानजम् इति रूपम् । 'अन्येष्वपि दृश्यते' इति सूत्रे 'दृश्यते' इति दृशिग्रहणसामर्थ्याद् 'यथादर्शनं व्याख्यातव्यम् इत्यवगमात्, प्रथमान्त उपपदे अपादानकारकार्थेऽपि 'जनी प्रादुर्भावे' इति धातोर्डप्रत्ययो भवतीति व्याख्याने लभ्यत इत्यर्थः । अत एव सूत्रे 'सर्वोपाधिव्यभिचारार्थः अपिशब्दः' इति भावः । केचित्तु केवलाज्जनेः कर्तरि डप्रत्ययः, ततः 'अज्ञानं जं जनिमत् यस्माद्' इति पञ्चम्यर्थे बहुव्रीहिः । भाष्यं तु अर्थप्रदर्शनमात्रपरमिति व्याख्येयम् । नच तद्युक्तम् 'अन्येष्वपि दृश्यते' इत्यनेन सूत्रेण उपपदे सत्येव डप्रत्ययविधानात्, इत्यत आह– 'एतच्चेति' इत्यवातारयन् । दूरस्थस्यापि एतदर्थप्रतिपादकत्वाद् एकवाक्यता इत्यभिप्रायेण भाष्ये शेषत्वोक्तिः इति भावेनाह– **वाक्यशेष इति** ।। 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति वाक्यशेषे, 'अज्ञानं तमसः फलम्' इति वाक्यशेषे चेत्यर्थः ।।

**गीताक्षरार्थस्तु** सत्त्वरजोगुणाभ्यां वैलक्षण्यद्योतनाय 'तमस्तु' इति तुशब्दः । तमः तमोगुणः सर्वदेहिनाम् 'अज्ञानं जायते यतः तद् अज्ञानजम् अज्ञानजनकमित्यर्थः । मोहनं

श्लोकः ९

मिथ्याज्ञानजनकं विद्धि । तत् तमः प्रमादेन करणीयेष्वनवधानेन आलस्येन मान्द्येन निद्रया च 'सर्वदेहिनः' इति विपरिणामेनानुवर्तते निबध्नाति । अत्रापि तमोगुणाभिमानिनी दुर्गादेवी तमोगुणकार्येण अज्ञानमिथ्याज्ञानप्रमादादिनाऽसुरजनबन्धिका इति विशेष उत्तरप्रस्थानतो ज्ञेयः । तथा च तत्र वचनम् 'श्रीर्देवीर्बन्धिका नृणां भूर्दैत्यानामथापरा ।' इति । श्रीः भूः अपरा इति सत्त्वरजस्तमोगणाभिमानिन्यो देव्यो विवक्षिताः ॥ ८ ॥

**भावदीपिका (श्री.टि.)–** अत्र हि प्रथमान्ताद् अज्ञानशब्दोपपदात् 'जनी प्रादुर्भावे' इति धातोः 'यतः' इत्यपादानार्थे डप्रत्यये टीभूतस्य 'अन् इत्यस्य लोपे प्रत्ययाकारसम्बन्धे च 'अज्ञानजम् इति भवतीति । तदयुक्तम् । सप्तम्यां जनेर्डः, 'पञ्चम्यामजातौ' अन्येष्वपि दृश्यते' इति सूत्रत्रयेण सप्तम्यन्ते पञ्चम्यन्ते उपपदे, अन्येष्वपि प्रथमादिकारकेषूपपदेषु सत्सु कर्तरि डप्रत्ययो भवति, इत्युक्तत्वात् 'पङ्के जायते', 'पङ्काज्जायते' इति वा 'पङ्कजम्' इत्यादौ कर्तर्येव डप्रत्ययदर्शनाच्च कथम् 'अज्ञानं जायते यतः' इत्यपादानत्वार्थे डप्रत्ययमङ्गीकृत्य व्याख्यानम् इत्यत आह– **एतच्चान्येष्वपि दृश्यत इति दृशिग्रहणसामर्थ्याल्लभ्यत इति ॥** 'अन्येष्वपि दृश्यते' इत्यत्र पूर्वसूत्राद् डप्रत्ययस्यानुवृत्तिसम्भवेन पुनः 'दृश्यते' इति दृशिग्रहणवैयर्थ्याद् व्यर्थं सत् किञ्चिदिष्टं ज्ञापयति इति न्यायेनापादानेऽपि डप्रत्ययो भवतीति दृशिग्रहणसामर्थ्याल्लभ्यत इत्यर्थः । तथा च 'अज्ञानं जायते यतः' इत्यपादाने डप्रत्यय-मङ्गीकृत्य व्याख्यानं युक्तमिति भावः ॥ ८ ॥

**भावप्रकाशः (कृ.टि.)–** नन्वज्ञानं जायते यत इत्येतदुपपादनायाज्ञानशब्दोपपदाज्जने-रपादानेऽन्येष्वपि दृश्यत इति ड इति वक्तव्यम् । तत्कथम् । 'कर्तरि कृत्' इति सूत्र-विरोधादित्यत आह– **एतच्चेति** ॥ यद्वा ननु केवलाज्जनेः कर्तरि डः । ततोऽज्ञानं जं यस्मादिति पञ्चम्यर्थे बहुव्रीहिः । भाष्यं च विग्रहोक्तार्थप्रदर्शनपरमिति वाच्यम् । नच तद्युक्तम् । 'अन्येष्वपि दृश्यते' इत्यनेन उपपदे सत्येव डप्रत्ययविधानादित्यत आह– **एतच्चेति** ॥ ८ ॥

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यदुक्तं सत्त्वस्य सुखसङ्गेन, रजसः कर्म-सङ्गेन, तमसः प्रमादादिसङ्गेन बन्धकत्वम् तदेव 'सत्त्वम्' इत्यादित्रिश्लोक्या उक्तं दृढीक्रियते–

**सत्त्वं सुख इति** ।। सत्त्वं सत्त्वगुणः सुखे सुखविषये सञ्जयति 'षञ्ज सङ्गे' सङ्गवन्तं करोति। रजः रजोगुणः कर्मणि सञ्जयति स्वर्गादिसाधनकर्मसङ्गवन्तं करोति । तमस्तु ज्ञानमनसस्तत्त्वज्ञानजननशक्तिम् आवृत्य प्रतिबध्य प्रमादे अधर्मे धर्मबुद्ध्यादिरूपेण बध्यते । उतशब्दोऽपेरर्थे निपातः । आलस्यादावपि सञ्जयति ।। ९ ।।

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ।। १० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** ननु त्रयाणां गुणानां समतया बन्धकत्वाद् कथं कदाचित् कस्यचिदेव गुणस्य कार्यं दृश्यते उत्कटत्वअनुत्कटत्वाभ्यां तत्तत्कार्योपलम्भ-अनुपलम्भाविति भावेनोच्यते– **रज इति** ।। अभिभूय उपमृद्य सत्त्वं भवति उत्कटम् इति शेषः । तदा सुखलक्षणं ज्ञानलक्षणं च कार्यं दृश्यते । यदा रजः गुणः सत्त्वतमसी अभिभूय उल्बणं भवति, तदा कर्मसङ्गलक्षणं कार्यम् । तमः तु यदा सत्त्वरजसी अभिभूय तथा स्वयं प्रकटं भवति, तदा प्रमादादिकार्यं दृश्यत इति युक्तं कादाचित्कत्वं कार्यदर्शनस्येति ।। १० ।।

**सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।**
**ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ।। ११ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु–** तत्तद्गुणस्योत्कटत्वं केन लिङ्गेन अनुमातव्यम् इत्यत उच्यते– **सर्वद्वारेष्वित्यादिना** ।। यदा अस्मिन् भोगायतने प्राकृते वा देहे सर्वद्वारेषु श्रोत्रादीन्द्रियद्वारेषु ज्ञानं ज्ञानलक्षणः प्रकाशः शब्दादिविषयावभास उत सुखमपि उपजायते तदा सत्त्वं विवृद्धमिति विद्यात् जानीयात् । केचित्तु 'प्रकाशः शब्दादिविषयावभास उत अनन्तरम् उत सुखमपि तदा' इत्यपि व्याचक्षते । अन्ये तु प्रकृष्टः काशः दीप्तिः यस्मात् स प्रकाशः विषयसन्निकर्षः, उत अनन्तरं ज्ञानमुपजायत इत्यर्थ इत्याहुः ।। ११ ।।

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ।। १२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** लोभः देयस्यापि धनादेरत्यागबुद्धिः प्रवृत्तिः

श्लोकः १३-१६

विषयव्यापारः, व्यर्थोद्योगो वा कर्मणां प्रवृत्तानाम् आरम्भः 'इदं कृतवान्, 'इदं कर्ताऽस्मि' इति सङ्कल्पः अशमः भगवन्निष्ठाभावः, चित्तस्यानुपरमो . वा स्पृहा अप्राप्ताभिलाष इति एतानि कार्याणि रजसि विवृद्धे जायन्ते । एतैर्लिङ्गैः रजोगुणवृद्धिरनुमेयेति भावः ।। १२ ।।

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ।। १३ ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु** अप्रकाशः श्रोत्रादिषु शब्दादिविषयप्रकाशाभावः अप्रवृत्तिः उद्योगाभावः 'रक्षाऊहाआगमलघुअसन्देहाः प्रयोजनम्' इति महाभाष्यप्रयोगवत् 'अप्रकाशः', 'अप्रवृत्तिः' इति प्रयोगः । अन्यथा 'निर्मक्षिकम् इतिवत् 'अप्रकाशम्' इति स्यादिति भावः । प्रमादः कृत्येष्वनवधानं मोहः मिथ्याध्यवसायः हे कुरुनन्दन एतानि कर्माणि तमसि विवृद्धे जायन्ते । एतैर्लिङ्गैस्तमोवृद्धिं जानीयाद् इत्यभिप्रायः ।। १३ ।।

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।**
**तदोत्तमविदां लोकानमलान् प्रतिपद्यते ।। १४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तत्तद्गुणवृद्ध्यवस्थायां परेतानां गतिभेद उच्यते– **यदा सत्त्व इत्यादिना** ।। देहभृद् जीवः प्रलयं मरणम् उत्तमविदां सर्वोत्तमविष्णुज्ञानिनां लोकान् देहान् प्रतिपद्यते । सात्त्विकानां कुले सत्त्वगुणप्राकट्यानुकूलदेहयोगी जायत इति तात्पर्यम् ।। १४ ।।

**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ।। १५ ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु–** रजसि 'प्रवृद्धे' इति च वर्तते । प्रलयं गत्वा मृत्वा कर्मसङ्गिषु काम्यकर्मसङ्गवत्सु स्वर्गाद्युद्देश्यककर्मानुष्ठातृकुले जायते । तथाशब्दः समुच्चये । तमसि प्रवृद्धे प्रलीनः मृतः मूढयोनिषु मिथ्याज्ञानिकुले जायते ।। १५ ।।

**कर्मणः सुकृतस्याऽहुः सात्त्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ।। १६ ।।**

# भाष्यम्

**रजसस्तु फलं दुःखमिति ।। अल्पसुखं दुःखम् । तथा हि शार्कराक्ष्यशाखायाम् 'रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात्तान् सुखिनो दुःखिन इत्याचक्षते' इति । अन्यथा दुःखस्यातिकष्टत्वात् तमोऽधिकत्वं रजसो न स्यात् ।। १६ ।।**

भावप्रदीपिका (प.टी.)– रजसस्तु फलं दुःखम् इत्यत्र केवलदुःखं नेत्याह– **रजस इति** । तान् राजसान् ।। १६ ।।

प्रमेयदीपिका (ज.टी.)– 'दुःखशब्दः केवलदुःखवाची' इत्यन्यथाप्रतीतिनिरासायाह– **रजस इति** ।। 'दुःखशब्देनोच्यते' इति शेषः । तत्कथम्? इत्यत उक्तम्– **अल्पेति** ।। अल्पत्वात् सुखस्याविवक्षेति भावः। कुतः? इत्यत आह– **तथाहीति** ।। 'रजसः' इति पञ्चमी । मात्रया इति सुखविशेषणम् । स्तोकात्मकं सुखं दुःखं चेत्यर्थः । **तान्** राजसकर्मिणः । केवलदुःखार्थाङ्गीकारे बाधकं चाह– **अन्यथेति ।। अतिकष्टत्वात्** अज्ञानादपि कष्टत्वात् । तत्फलकस्य रजसः । तथाच 'मध्ये तिष्ठन्ति राजसाः, 'अधो गच्छन्ति तामसाः' (१४.१८) इत्याद्ययुक्तं स्यादिति भावः ।। १६ ।।

भावदीपः (रा.टि.)– ।। इति शेष इति ।। 'रजसस्तु फलं दुःखम्' इति दुःखशब्देनाल्पसुखं दुःखमुच्यत इति योजना ध्येयेति भावः ।। **अज्ञानादपीति** ।। तमःकार्यादपि । तमःकार्यादज्ञानादित्यर्थः । 'रजसः' इत्यस्य विशेषणमाह– **तत्फलकस्य रजसः इति** ।। दुःखफलकस्येत्यर्थः । को दोष इत्यत आह– **तथा चेति** ।। १६ ।।

**भावरत्नकोशः (सु.टि.)**– 'दुःखम्' इत्यनन्तरं भाष्ये शेषमाह– **दुःखशब्देनेति** ।। भाष्ये 'दुःखमिति' इत्यनन्तरम् 'अत्र' इति शेषो द्रष्टव्यः । 'अल्पसुखम्' इत्यत्र 'अल्पं सुखं यस्मिन् तद् अल्पसुखम्' इत्यर्थस्य स्फुटत्वात् तत्तात्पर्यमाह– **अल्पत्वादिति** ।। 'रजसस्तु' इति प्रस्तुतत्वाद् अत्रापि षष्ठ्यन्तत्वप्रतीतिव्युदासायाह– **पञ्चमीति** ।। स्तोकात्मकं अल्पं सुखमेवात्र दुःखपदेन ग्राह्यमिति प्रतीतिनिरासायाह– **दुःखं चेति** ।। पुंलिङ्गघटनाय

श्लोकः १७

तच्छब्दविवक्षितार्थमाह– **तान् राजसकर्मिण इति** ।। न केवलम् 'अल्पं सुखं च रजसः फलम्' इत्यत्र प्रमाणमुक्तम् तदनङ्गीकारे बाधकं चेति चशब्दः । भाष्ये अपादानानुरूपं रजसो विशेषणमाह– **तत्फलस्येति** ।। दुःखफलकस्येत्यर्थः । तमोधिकत्वं तमोगुणापेक्षयोत्तमत्वं न स्याद् इत्यत्र इष्टापत्तिमाशङ्क्याह– **तथा चेति** ।।

**गीताक्षरार्थस्तु** सत्त्वादीनां स्वस्वोत्पादितकर्मद्वारा विविधफले हेतुत्वमुच्यते– **कर्मण इति** ।। सात्त्विकानां विदुषां कुलेषु प्रसूतेन पुरुषेण सुष्ठु कृतस्य कर्मणः निर्मलं दुःखासम्भिन्नं सात्त्विकं सत्त्वप्रधानं ज्ञानसुखरूपं फलम् आहुः प्राज्ञाः । रजसः राजसस्य तु कर्मणः दुःखं दुःखमिश्रं सुखं फलमाहुः । तमसः तामसस्य तु कर्मणः अज्ञानं फलम् आहुः ।। १६ ।।

**भावदीपिका (श्री.टि.)**– ।। **अविवक्षेति** ।। गीतायाम् इति शेषः । षष्ठीभ्रमं वारयति– **रजस इति पञ्चमीति** ।। मात्रास्तोकबिन्दुशब्दानां पर्यायत्वमभिप्रेत्य 'मात्रया' इत्यस्य दुःखेऽपि विशेषणत्वप्रतीतेराह– **स्तोकात्मकमिति** ।। अल्पं सुखं, तदधिकं दुःखं चेत्यर्थः । **अज्ञानात्** तमःफलात् । **तत्फलकस्य** दुःखमात्रफलकस्य । **इत्यादि** फलतारतम्यकथनम् ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– बहुव्रीह्यर्थमत्वर्थमात्रं विवक्ष्यतां किमल्पत्वविशेषणेनेत्यत-स्तत्कृत्यं वक्तुमाक्षिपति– **तत्कथमिति** ।। तर्हि गीतायां दुःखमित्येव कथमुक्तमित्यर्थः । **स्तोकात्मकमिति** ।। 'मात्रा स्तोकमल्पमिति पर्यायाः' इत्यभियुक्तोक्तेः 'प्रकृत्यादिभ्यस्तृतीया वाच्या' इत्युक्ततृतीयायाः तादात्म्यार्थत्वाच्चेति भावः । गीतायां रजःशब्दो राजसकर्मपरः । पूर्वार्धे सात्त्विककर्मोक्तिसाहचर्यादिति ध्वनयितुं तानित्येतद्व्याचष्टे– **राजसकर्मिण इति** ।।१६।।

**सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ।। १७ ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** सत्त्वादिगुणफलं शृङ्गिग्राहिकया प्रदर्श्यते– **सत्त्वादिति** ।। स्थूलाल्लौकिकम्, सूक्ष्मात् परमेश्वरविषयं ज्ञानं सम्यग् जायते । लोभः स्वर्गादिविषयासक्तिः तदा दुःखमिश्रं सुखं च । तमसस्तु प्रमादमोहौ भवतः, अज्ञानं च भवति ।। १७ ।।

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।। १८ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु**– ज्ञानलोभप्रमादादि न स्वरूपतः फलम्, सुखादिरूपत्वाभावात् इत्यतः तज्जन्यफलानि विविच्यन्ते– **ऊर्ध्वमिति** ।। सत्त्वस्थाः सात्त्विकाः, अनेन सत्त्वगुणजन्यज्ञानवन्तो लक्ष्यन्ते । ऊर्ध्वं जनलोकादिकं गच्छन्ति । तेन महत्सुखमनुभवन्ति च । राजसाः काम्यकर्मिणः मध्ये स्वर्गादौ तिष्ठन्ति । किञ्च दुःखमिश्रं सुखमनुभवन्ति च । जघन्यः चरमो गुणः तमः, तद्वृत्तिः तत्परिमाणरूपम् अज्ञानम्, तत्स्थाः तद्वन्तः तमोगुणकार्यप्रमादमोहवन्तः तामसाः अधः अधोलोकं निरयं गच्छन्ति ।। १८ ।।

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ।। १९ ।।**

## भाष्यम्

**परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा 'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (आथर्वण.३.१.३) इति श्रुतिविरोधः । 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' (म.भा.१२. २२७.८४ ) इति मोक्षधर्मे ।। १९ ।।**

भावप्रदीपिका (प.टी.)– 'नान्यं गुणेभ्यः' इत्यत्रानीश्वरकर्तृवादो निराक्रियते श्रुत्यादि विरोधादित्याह– **परिणामीति** ।। १९ ।।

प्रमेयदीपिका (ज.टी.)– 'नान्यं गुणेभ्यः कर्तारम्' इति स्वतन्त्रकर्तृत्वं गुणानामेव नान्यस्येत्युच्यते' इत्यपव्याख्याननिरासार्थमाह– **परिणामीति** ।। कुत एतत्? इत्यत आह– **अन्यथेति** ।। गुणेभ्यः अन्यस्य कर्तृत्वाभावे । मोक्षधर्मे 'परमेश्वरस्य कर्तृत्वमुक्तं तद्विरोधश्च' इति वाक्यशेषः ।। १९ ।।

भावरत्नकोशः (सु.टि.)– 'अन्यथा' इत्यस्यार्थमाह– गुणेभ्योऽन्यस्य कर्तृत्वाभाव

श्लोकः २०,२१

**इति** ।। भाष्यपदमनूद्यानन्तरं शेषमाह– **मोक्षधर्म इति** ।। 'विरोधः' इति भाष्यपदं 'मोक्षधर्मे' इत्यनेनान्वितम् इत्यनुवर्तितम् ।। १९ ।।

**गीताक्षरार्थस्तु** 'नान्यं गुणेभ्यः' इत्यादि **गीताक्षरार्थस्तु**– एवं 'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः' इत्यत्र सङ्क्षेपेणोक्तानां त्रयाणां गुणानां बन्धकत्वं तत्तज्जन्यफलदातृत्वेन विविच्योक्तम् । तत्र शङ्का एवं त्रैगुण्ये विविच्योक्ते तर्हि 'गुणा एव स्वतन्त्राः, न ततोऽन्यः स्वतन्त्रः कश्चित्' इति । सा निरस्यते– **नान्यमिति** ।। द्रष्टा जीवः यदा गुणेभ्यः सत्त्वादिभ्यः अन्यं कर्तारं परिणामिकर्तारं नानुपश्यति; गुणेभ्यश्च परम् उत्तमं स्वतन्त्रं कर्तारं परमात्मानं वेत्ति च, स ज्ञानी मद्भावं मयि सत्तां निर्दुःखानन्दात्मिकां स्थितिम् अधिगच्छति प्राप्नोति ।। १९ ।।

**गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ।। २० ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु** एवं सुखदुःखादिबन्धस्य गुणत्रयनिबन्धनत्वाद् तदत्यये सत्येव बन्धविमोकेन परमसुखावाप्तिर्भवतीत्युच्यते– **गुणानेतानिति** ।। देही देहाभिमानी जीवः देहसमुद्भवान् देहादिरूपसंसारोत्पादकान् एतान् उक्तान् त्रीन् गुणान् अतीत्य अतिक्रम्य जन्ममृत्युजरानिमित्तैः दुःखैः विमुक्तोऽमृतमश्नुते परं ब्रह्म प्राप्नोति । तत्प्राप्त्या परमानन्दमनुभवति ।। २० ।।

**अर्जुन उवाच–**

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ।। २१ ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु** गुणानतीत्य' इत्युक्तेऽर्जुनस्य 'ज्ञीप्सा जातेत्युच्यते– **अर्जुन उवाच कैरिति** ।। हे प्रभो! एतान् बन्धकत्वेनोक्तान् त्रीन् गुणान् सत्त्वादीन् अतीतः अतिक्रान्तवान् ज्ञानी कैर्लिङ्गैः लक्षणैः युक्तो भवति क आचारोऽस्य किमाचारः कीदृशाचारवान् कथं केनोपायेन एतांस्त्रीन् गुणानतिवर्तते अतिक्रामति ।। २१ ।।

**श्रीभगवानुवाच–**

**प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।**
**न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ।। २२ ।।**

## भाष्यम्

**प्रायो न द्वेष्टि न काङ्क्षति । तथाहि सामवेदे भाल्लवेयशाखायाम्**

**'रजस्तमस्सत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षति ।**
**तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद् यदि प्रविष्टं सुतमश्च जह्यात्' इति ।।**

**'न हि देवा ऋषयश्च सत्त्वस्था नृपसत्तम ।**
**हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिका मताः ।**
**कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्' इति मोक्षधर्मे ।**

**'सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः'इति च ।। २२ ।।**

भावप्रदीपिका (प.टी.)– 'प्रकाशं च प्रवृत्तिं च मोहं च न द्वेष्टि न काङ्क्षति' इत्येतत्प्रायिकमेवेत्याह– **प्राय इति** । प्रकाशादिशब्दत्रयोक्तगुणत्रयं प्रवृत्तिं च निवृत्तिं चेश्वरेच्छयैव हि प्रत्येति नेच्छति, द्वेष्टि यद्यपि । तत्रापि शुसत्त्वं काङ्क्षति, तस्मात् तद्यदि स्वस्मन् प्रविष्टं तर्ह्यज्ञाननाशकं भवतीत्यर्थः । सत्वं काङ्क्षेद्यदि तमोऽस्त तज्जहाति चेति वा । सूक्ष्मसत्त्वाभावे ज्ञानमोक्षाभावात् तदिच्छाऽस्तीत्याह– **न हीति** । यदि सत्त्वेन सूक्ष्मेण हीनास्तर्हि न सत्वस्थाः । किन्तु वैकारिका मताः ।। २२ ।।

प्रमेयदीपिका (ज.टी.)– 'प्रकाशं च प्रवृत्तिं च' इत्यनेन गुणातीतस्य सर्वथा सत्त्वादिगुणकार्येषु प्रकाशादिषु द्वेषाकाङ्क्षे न स्त इत्युच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **प्राय इति** ।। इदमुक्तं भवति । सत्त्वादयो गुणाः द्विविधाः स्थूलाः सूक्ष्माश्च । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते । सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न स्तः । न तु सर्वथा प्रारब्धवशात् कदाचित्

श्लोकः २२

सम्भवात् । द्वितीयेषु त्वाकाङ्क्षादिकं विद्यत एवेति । कुत एतत्? इत्यत आह— **तथा हीति** ।। यद्यपि 'न द्वेष्टि' इत्यादिकमुक्तम् । तथाऽपि यदि सुतमः सूक्ष्मं तमः दैववशात् तं प्रविष्टं स्यात् । तदाऽसौ तत् जह्यात् द्विष्यात् ।। गुणातीतानां च सूक्ष्मसत्त्वसद्भावे भारतवाक्यं च पठति— **न हीति** ।। यदि देवा ऋषयश्च सूक्ष्मेण सत्त्वेन हीनाः स्युः तदा 'सत्त्वस्थाः' इति नोच्येरन् । किन्तु ततः तदा वैकारिकाः मताः प्रसज्येरन् । ततः किं कथं वैकारिको गच्छेत् पुरुषोत्तमम्? तेषां मोक्षो न स्यादिति यावत् । अस्ति च तेषाम् मोक्षः । अतः सूक्ष्मसत्त्ववन्त एव त इत्यर्थः । सात्त्विकः सूक्ष्मसत्त्ववान् ।

'स सूक्ष्मसत्त्वसंयुक्तः संयुक्तस्त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः' (म.भा)

इति सूक्ष्मसत्त्वप्रकरणात् । मोक्षार्थनिश्चितः मोक्षलक्षणे पुरुषार्थे निश्चितः ।। २२ ।।

**भावबोधः (र.टि.)**– तथाऽपि 'सूक्ष्मं सत्त्वगुणं च' इत्याद्युदाहरिष्यमाणप्रमाणानुसारेण 'प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्याभिप्रायमाह – **इदमुक्तमित्यादिना वैकारिका इति** ।। विकारो भौतिकदेहादिस्तद्वत्त्वेन तत्सम्बन्धिन इत्यर्थः । **मोक्षो न स्यादिति** ।। सशरीराणां पुरुषोत्तमगमनरूपो मोक्षो नेत्यर्थः ।। २२ ।।

**भावदीपः (रा.टि.)**– वक्ष्यमाणश्रुत्यनुरोधादाह– **इदमुक्तं भवतीति** ।। 'सूक्ष्मसत्त्ववान्' इत्यर्थे ज्ञापकमाह — **स सूक्ष्मेति** ।। **त्रिभिरक्षरैः** ।। प्रणवाक्षरैः ।। २२ ।।

**भावरत्नकोशः (सु.टि.)**– ननु गुणातीतस्यापि ईश्वरविषयप्रकाशप्रवृत्तिमोहेषु द्वेषाकाङ्क्षे नियमेन युक्ते एव, तत्कथं 'प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्यम् कथं चैतत्साक्षिभूतप्रमाणे 'सत्त्वगुणं नाकाङ्क्षेत्', 'सत्त्वगुणं च काङ्क्षेत्' इति व्याहतभाषणम् इत्यतो भाष्यप्रमाणतात्पर्यं प्रमाणोपात्तसूक्ष्मशब्दस्वारस्यानुसारेणाह– **इदमुक्तं भवतीति** ।। 'सूक्ष्माश्च' इत्यनन्तरम् 'इति' शब्दोऽध्याहार्यः । **लौकिकाः** लौकिकार्थविषयाः 'यथासङ्ख्यम् इति शेषः । **परमेश्वरादिविषयाः** परमेश्वरपरमेश्वरीब्रह्मादितत्त्वदेवादिविषयाः । प्रायःपदव्यावर्त्यमाह– **न त्विति** ।। द्वितीयेषु परमेश्वरविषयेषु प्रकाशप्रवृत्तिमोहेषु । **विद्यत एवेतीति** ।। पारमेश्वरे प्रकाशादावाकाङ्क्षादिनियमो युक्त एव । लौकिकविषये प्रकाशादौ प्राय आकाङ्क्षाद्यभावो गुणातीतस्य

इति युक्तम् 'प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्यम् । प्रमाणं च स्थूलसूक्ष्मसत्त्वादिविषयमिति न तत्र व्याहतिशङ्केति भावः । भाष्ये 'तथापि' इति श्रवणाद् तत्प्रतियोग्याह– **यद्यपीति** ।। उक्तम् पूर्वार्धेन 'द्वेष्टि न काङ्क्षति इत्युक्तम् । सूक्ष्मं सत्त्वगुणं सूक्ष्मसत्त्वगुणकार्यं परमेश्वरविषयं प्रकाशम् इत्यर्थस्य स्पष्टप्रतिभानत्वाद् 'यदि प्रविष्टम् इत्याद्येव व्याचष्टे– **यदि सुतम इति** ।। **तं** गुणातीतं **तत्** तमः । प्रकृतोपयोगाय तात्पर्यमाह– **द्विष्यादिति ।।**

'ततः' इत्यस्य 'तदा' इत्यर्थकत्वात् तदनुसारेणाह– **यदीति** ।। **स्युरिति** ।। 'नोच्येरन् 'प्रसज्येरन् इति च शेषः । 'ततः' इत्यस्यार्थः – **तदेति** ।। वैकारिकाः विकारः भौतिकदेहादि, तत्र भवाः बन्धकदेहोपेता इत्यर्थः । यदि सूक्ष्मसत्त्ववन्तो न स्युः तर्हि स्थूलसत्त्वादिनियमात् तेन मनोविकारवन्तः प्रसज्येरन् इत्यर्थ इत्यपि आहुः । 'देवा ऋषयः' इति बहुवचनान्तशब्देन प्रकृतत्वादाह– **तेषामिति** ।। वैकारिकाणामित्यर्थः । तर्कस्य विपर्यये प्रर्यवसानमाह– **अस्ति चेति** ।। **तेषाम्** गुणातीतानाम् । 'अनियमः सर्वेषाम्' इति शास्त्रादिति भावः । 'सात्त्विकः' इति सत्त्वगुणवत्वमेव प्रतीयते, तत्कथं सूक्ष्मसत्त्ववनिति व्याख्यानम् इत्यत उक्तार्थे लिङ्गमाह– **स सूक्ष्मेति** ।। **त्रिभिरक्षरैः संयुक्तः** अकारोकारमकारैः सम्यङ्गनोयोगवान् प्रणवेन हरिं ध्यायन् इति यावत् । **निष्क्रियः** यतिः, विकारशून्य इति वा । **पञ्चविंशक इति** ।।

'पुरुषोऽव्यक्तं च महान् अहङ्कारो मनस्तथा ।
दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः ।।'

इति तन्त्रसारसङ्ग्रहवचनात् 'चतुर्विंशतितत्त्वानि जीवो वा पञ्चविंशकः' इति वचनान्तराच्च पञ्चविंशतिसङ्ख्यापूरकः पुरुषो जीव इत्यर्थः । **पुरुषार्थे निश्चित इति** ।। नियतमोक्ष इत्यर्थः ।।

**गीताक्षरार्थस्तु** गुणातीतस्य कानि लक्षणानि, कश्च तस्याचारः, गुणात्ययोपायश्च कः इति ज्ञानिनाऽप्यर्जुनेन विशेषजिज्ञासया सल्लोकं प्रति विजिज्ञापयिषया च कृतं प्रश्नत्रयं भगवतोत्तरितमित्युच्यते– **श्रीभगवानुवाच प्रकाशमित्यादिना** ।। प्रकाशं ज्ञानं, चशब्दात् सुखं, प्रवृत्तिं कर्मण्युद्योगं, चशब्दात् तृष्णासङ्गौ मोहं मिथ्याज्ञानं, चशब्दाद् अज्ञान-प्रमादालस्यनिद्राश्च एतानि सत्त्वादिगुणकार्याणि सम्प्रवृत्तानि प्रायो न द्वेष्टि, निवृत्तानि प्रायो न काङ्क्षति च । 'स गुणातीत उच्यते' इति वक्ष्यमाणेनान्वयः । इदमुक्तं भवति– सत्त्वादयो गुणा द्विविधाः स्थूलाः सूक्ष्माश्चेति । तत्र स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहा जायन्ते ।

श्लोकः २२
सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः । तत्राद्येषु गुणातीतस्य द्वेषाकाङ्क्षे प्रायो न स्तः, न तु सर्वथा । प्रारब्धवशात् कदाचित् सम्भवात् । द्वितीयेषु परमेश्वरविषयप्रकाशप्रवृत्तिमोहेषु प्रकाशप्रवृत्ती काङ्क्षति, मोहं तु द्वेष्ट्येवेति ।। २२ ।।

**भावदीपिका (श्री.टि.)**– तथाऽपि 'सूक्ष्मं सत्त्वगुणं च काङ्क्षेत्' इत्याद्युदाहरिष्यमाण-प्रमाणानुसारेण' प्रायो न द्वेष्टि न काङ्क्षति' इति भाष्याभिप्रायमाह– **इदमुक्तं भवतीत्यादिना** ।। **लौकिकाः** लौकिककार्थविषयाः । तत्र स्थूलत्वगुणाल्लौकिककार्थविषयकः प्रकाशो ज्ञानं भवति । स्थूलरजोगुणात् लौकिककार्थविषयकप्रवृत्तिर्भवति । स्थूलतमोगुणात् लौकिककार्थविषयको मोहो भवतीति विवेकः । **सूक्ष्मेभ्य इति** ।। सूक्ष्मसत्त्वरजस्तमोगुणेभ्यः परमेश्वरविषयकप्रकाशप्रवृत्ति-मोहाः क्रमेण भवन्तीत्यर्थः । **तत्राद्येष्विति** ।। स्थूलसत्त्वादिगुणकार्येषु लौकिककार्थविषयक-प्रकाशप्रवृत्तिमोहेष्वित्यर्थः । तत्र स्थूलसत्त्वरजःकार्ययोः लौकिककार्थविषयकमोहश्च प्रायेण नास्ति, न तु सर्वथा । कुतः? गुणातीतस्याप्यपरोक्षज्ञानिनः प्रारब्धवशात् कदाचिल्लौकिककार्थ-विषयकप्रकाशादौ आकाङ्क्षामोहयोर्दर्शनादित्यर्थः । **द्वितीयेष्विति** ।। परमेश्वरविषयकेषु सूक्ष्मसत्त्वादिकार्येषु प्रकाशप्रवृत्तिमोहेष्वित्यर्थः । तत्र सूक्ष्मसत्त्वरजःकार्ययोः परमेश्वरविषयकयोः प्रकाशप्रवृत्त्योराकाङ्क्षा, सूक्ष्मतमःकार्ये परमेश्वरविषयके मोहे द्वेषश्च सर्वथाऽस्त्येव, न तु पूर्ववत्प्रायेणेत्यर्थः ।

**उक्तम्** सामान्येनेत्यर्थः । **सूक्ष्मतम इति** ।। परमेश्वरविषयकमोहापादकमित्यर्थः । दैवात् सूक्ष्मतमसा भगवद्विषयकविपरीतवृत्तिर्जाता चेत् तर्हि परामर्शेन शीघ्रं तज्जहातीति । तथा च 'रजस्तमःसत्त्वगुणान् प्रवृत्तान् प्रायो न च द्वेष्टि न चापि काङ्क्षति' इति सामान्येनोक्तम् । तथाऽपि तत् स्थूलसत्त्वादिकार्यलौकिककार्थविषयकप्रकाशप्रवृत्तिमोहेषु प्रायः आकाङ्क्षाभावपरं मन्तव्यम् । कुतः यतः सूक्ष्मं सत्त्वगुणं तत्कार्यभगवद्विषयकप्रकाशम्, उपलक्षणमेतत्, सूक्ष्म-रजोगुणकार्यां परमेश्वरविषयां प्रवृत्तिं च काङ्क्षेत् । यदि सुतमः सूक्ष्मतमः तत्कार्य-परमेश्वरविषयको मोहो यदि तं गुणातीतं ज्ञानिनं प्रविष्टः स्यात्, तर्हि तं जह्यात् द्विष्यादिति श्रुत्यर्थो द्रष्टव्यः । तथा च 'प्रकाशं च प्रवृत्तिं च मोहमेव च' इति गीतावाक्यं स्थूल-सत्त्वादिकार्यलौकिककार्थविषयकप्रकाशादिपरं इत्युक्तं भवति । तथा च भगवद्विषयं प्रकाशं च प्रवृत्तिं च सूक्ष्मरजःकार्यभूतां प्रवृत्तिं च न द्वेष्टि, निवृत्तां पुनः काङ्क्षति च । सूक्ष्मतमःकार्यं भगवद्विषयकं मोहं प्रवृत्तं द्वेष्टि; निवृत्तं च न काङ्क्षति च । लौकिकविषयं प्रकाशं च प्रवृत्तिं च मोहं च प्रायो न द्वेष्टि न च काङ्क्षतीति गीतार्थो द्रष्टव्यः ।

**तदा वैकारिका इति** ।। विकारः भौतिकदेहादिः, तद्वत्त्वेन तत्सम्बन्धिन इत्यर्थ इति आहुः । वस्तुतस्तु सूक्ष्मसत्त्वाभावे परमेश्वरविषयकप्रकाशाभावाद्, एवं सूक्ष्मरजसोऽभावे परमेश्वरविषयकप्रवृत्त्यभावात् स्थूलसत्त्वादिना केवलं लौकिकविषयकप्रकाशादिमत्त्वेन बहुतरान्तःकरणविकारप्राप्त्या वैकारिकाः स्तुता इत्यर्थः । **त्रिभिरक्षरैरिति** ।। अकारोकार-मकारात्मकोङ्कारेण भगवदुपासक इति यावत् । **पञ्चविंशक इति** ।। 'चतुर्विंशतितत्त्वानि जीवो वा पञ्चविंशकः' इत्युक्तत्वात् पञ्चविंशतिसंख्यापूरकः निषिद्धक्रियारहितत्वान्निष्क्रियः पुरुषो जीव इत्यर्थः ।। २२ ।।

**भावप्रकाशः (कृ.टि.)**– ननु गुणातीतस्येश्वरविषयप्रकाशादिषु द्वेषाकाङ्क्षे नियमेन स्तः । तत्कथमेवमुक्तमित्यतो वक्ष्यमाणप्रमाणानुसारेणाह– **इदमुक्तं भवतीति** ।। **वैकारिका इति**।। विकारो भौतिकदेहादिः।तत्र भवा इत्यर्थः । बन्धकदेहयुक्ता इति यावत् । ननु वैकारिकोपि मुक्तौ पुरुषोत्तमं गच्छत्येवेति व्यभिचार इत्यत आह– तेषामिति ।। संयुक्तस्त्रिभिरक्षरैः इति त्रिवर्णात्मकप्रणवेन संयुक्तः । तेन भगवदुपासक इति यावत् । निष्क्रिय इति । विक्रियाशून्य इत्यर्थः । **पञ्चविंशक इति** ।। पुरुषोऽव्यक्तं च महान् अहङ्कारो मनस्तथा । दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः । इति तन्त्रसाराद्युक्तरीत्या पंचविंश इत्यर्थः ।। २२ ।।

## उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
## गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ।। २३ ।।

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** एवं गुणातीतः कैर्लिङ्गैर्युक्तः इति प्रश्नस्योत्तर-मुक्तम् । इदानीं किमाचारः इति प्रश्नस्योत्तरमुच्यते– **उदासीनवदित्यादित्रिश्लोक्या** ।। यः पुमान् कर्मणां विषये उदासीनवदासीनः वर्तमानः 'काम्यकर्मण्युदासीनः, निष्कामकर्मणि प्रयत-मानः' इति भावेन वतिप्रत्ययः कृतः । गुणैः सत्त्वादिभिः तत्कार्यैः सुखादिभिः न विचाल्यते उच्चनीचतालक्षणविकारवान् न क्रियते; गुणाः ईश्वरेच्छया नियता एव वर्तन्त स्वकार्येषु प्रवर्तन्त इति योऽवतिष्ठति जानन् जोषमास्ते स नेङ्गत गुणकृतावैष्णवकर्मकरणाय न चेष्टते । 'भगवदधीना गुणाः स्वकार्यं कुर्वन्ति' इति जानन् यो वैष्णवान्येव कर्माण्याचरति; नेतराणि, स गुणातीत एवंविधाचार इति भावः ।। २३ ।।

श्लोकः २४,२५

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।। २४ ।।**

**भावरत्नकोशः** (सु.टि.)– गीताक्षरार्थस्तु– तस्यैवाचारान्तरमुच्यते– **समदुःखसुख इति** ।। समे दुःखसुखे यस्य, प्रायो हेयतया वैषयिकसुखमपि दुःखसमत्वेन यस्यानुभवारूढं स तथोच्यते । स्वस्थः प्रायेण निर्विकारः प्रायेण समलोष्ठाश्मकाञ्चनः प्रायेण प्रियाप्रियवस्तुनोः उपनतयोः तुल्यबुद्धिः । अत एव भगवदुक्तमत्वे स्थिरमतिः । तुल्ये निन्दात्मसंस्तुती यस्य स तथा, प्रायेणात्मनो निन्दायां संस्तुतौ वोपनतायाम् अनुत्साहः उत्साहहीनः ।। २४ ।।

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ।। २५ ।।**

## भाष्यम्

**तुल्यत्वार्थ उक्तः पुरस्तात् ।। २३-२५ ।।**

भावप्रदीपिका (प.टी.)– प्रियादौ तुल्यत्वं न पूजादावित्याह– **तुल्यत्वार्थ इति** ।। २५ ।।

प्रमेयदीपिका (ज.टी.)– **'समदुःखसुखः'** (१४.२४) इत्यादिना सर्वथा सुखादौ तुल्यत्वबुद्धिरुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **तुल्यत्वेति** ।। तुल्यत्ववाचिनः शब्दस्यार्थ इत्यर्थः । **'प्रायः सर्वान्'** (२.५५) इत्युक्तरीत्येति भावः ।। २३-२५ ।।

भावदीपः (रा.टि.)– ।। **'प्रायः सर्वान्'** इत्युक्तरीत्येति ।। द्वितीये 'प्रजहाति यदा कामान्' (२.५५) इत्यत्र भाष्योक्तरीत्येत्यर्थः । तत्र तुल्यशब्दाभावेऽपि तुल्यत्ववाचिनः 'प्रजहाति कामान्' इति 'दुःखेष्वनुद्विग्नमनाः, सुखेषु विगतस्पृहः' इत्यादिशब्दस्य सत्वात् 'तुल्यत्ववाचिनः शब्दस्यार्थः' इत्युक्तम् । अत एव भाष्येऽपि 'तुल्यत्वार्थः' इत्येवोक्तम् ।।२५।।

**भावरत्नकोशः** (सु.टि.)– तुल्यत्वस्यार्थरूपत्वेन 'तस्यार्थः' इत्यनन्वितम् । 'समदुःखसुखः' इत्यादौ तुल्यशब्दाभावश्च इत्यतो लक्षणामाश्रित्य व्याचष्टे– **तुल्यत्ववाचिन इति** ।।

तत्र द्वितीयाध्याये तुल्यसमादिशब्दाभावेऽपि 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इत्यादौ सुखदुःखतुल्यत्वपर्यवसानस्याभिसंहितत्वाद् अत्र 'समदुःखसुखः' इत्यादौ समशब्दस्य तुल्य-शब्दस्य आहत्य श्रवणेन तत्रापि तदर्थस्य वक्तव्यत्वाच्च एवमुक्तिरिति आहुः । 'पुरस्तात्' इत्यस्य 'द्वितीयाध्याये इत्यर्थं सिद्धवत्कृत्य तत्र स्थलं दर्शयति– **प्रायः सर्वानित्याद्युक्त-रीत्येति** ।। 'प्रजहाति यदा कामान् इति गीतावाक्यावसरे' इति शेषः ।।

**गीताक्षरार्थस्तु** प्रायेण मानापमानयोस्तुल्यः । 'तुल्यो मित्रारिपक्षयोः' इत्यत्रापि 'प्रायेण' इति योज्यम् । सर्वारम्भपरित्यागी प्रयोजनविशेषापेक्षयाऽपि अवैष्णवसर्वकर्मारम्भपरित्यागी यः सोपि गुणातीतः गुणान् अतीतः । 'अतिक्रान्त' इत्यत्र 'द्वितीया श्रितातीत.' इति द्वितीयासमासः ।। २५ ।।

**भावदीपिका (श्री.टि.)**– तुल्यत्वरूपार्थस्यानुक्तेराह– **तुल्यत्ववाचिनः शब्दस्येति** ।। **इत्यादीति** ।। 'प्रायः सर्वान् कामान् प्रजहाति' इति द्वितीयाध्यायोक्तरीत्येत्यर्थः ।। २५ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **उक्तरीत्येति** ।। 'प्रजहाति यदा कामान्' इति गीताव्याख्यानावसर इति शेषः ।। २५ ।।

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।। २६ ।।**

## भाष्यम्

**ब्रह्मवत् प्रकृतिवद् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किन्तु प्रियत्वमात्रम् । 'बद्धो वाऽपि तु मुक्तो वा न रमावत् प्रियो हरेः'** इति **पाद्मे । भूयाय भावाय ।। २६ ।।**

भावप्रदीपिका (प.टी.)– ब्रह्मभूयशब्दार्थमाह– **ब्रह्मवदिति** । भूयशब्दः कथं भगवत्प्रियत्वं वक्ति इत्यत आह– **भूयायेति** । पूर्वोक्तमार्थिकमित्यर्थः ।। २६ ।।

**प्रमेयदीपिका** (ज.टी.)– **'ब्रह्मभूयाय'** इत्यस्य **'परब्रह्मत्वाय'** इति व्याख्यानं प्रमाणविरुद्धमिति भावेनान्यथा व्याचष्टे– **ब्रह्मवदिति** ।। नात्र ब्रह्मशब्दं परं ब्रह्म ।

श्लोकः २६

किन्तु **'मम योनिर्महद्ब्रह्म'** (१४.३) इति प्रकृता प्रकृतिरेव । **'ब्रह्मणो हि प्रतिष्ठाऽहम्'** (१४.२७) इत्युत्तरवाक्यात् । तद्भूयं च न तादात्म्यम्, किन्तु तद्वद्भगवत्प्रियत्वमेव । अन्यस्यान्यभावायोगादिति भावः ।। तत्किं यावत् प्रकृतेः भगवत्प्रियत्वं तावद्गुणातीतस्य? इत्यतः सप्रमाणमाह— **न त्विति** ।। तत्किं भूयशब्दः प्रियत्ववाची ? येनैवं व्याख्यायत इत्यत आह— **भूयायेति** ।। 'भुवो भावे' इति वचनाद् भावो भवनं भूयशब्दार्थः । ब्रह्मवद् भावः ब्रह्मभूयम् । 'वदः सुपि' इति सुबन्तमात्रस्योपपदस्यानुवृत्तेः । वत्यर्थस्य च वृत्तावन्तर्भावात् । मयूरव्यंसकादिवत् । वत्यर्थश्च प्रियत्वमिति तदुक्तमिति भावः ।। २६ ।।

**भावबोधः (र.टि.)**– ।। **भुव इति** ।। भुवो धातोर्भावे भवनरूपेऽर्थे क्यप्प्रत्ययविधाने कित्वाद्गुणभावे भूय इति रूपमित्यर्थः । ननु 'भुवो भावः' इत्यत्र 'वदः सुपि' इत्यतः सुपीत्यनुवृत्तेः ब्रह्मवदिति वत्यन्तेन विग्रहे वत्यन्तस्याव्ययत्वेन सुपो लोपे सुबन्तोपपदत्वाभावात् कथं क्यप्प्रत्यय इत्यत आह – **सुबन्तमात्रस्येति** ।। प्रत्ययलक्षणेन सुबन्तत्वाक्षतेरिति भावः । ननु तर्हि 'ब्रह्मभूयाय' इत्यस्य प्रकृतिभवनायेत्यर्थः स्यात् । तच्च विरुद्धमित्यत आह – **वत्यर्थस्येति** ।। समासवृत्तावित्यर्थः । तत्र दृष्टान्तमाह – **मयूरव्यंसकादिवदिति** ।। 'मयूरव्यंसकादयश्च' इति सूत्रेण मध्यमपदलोपसमासविधानान्मयूरवद्व्यंसको मयूरव्यंसक इतिवत् ब्रह्मवद्भूयो ब्रह्मभूयमिति भवतीत्यर्थः ।। २६ ।।

।। इति श्रीरघूत्तमतीर्थप्रणीता श्रीगीताभाष्ये भावबोधाभिधा टिप्पणी चतुर्दशोऽध्यायः ।।

**भावदीपः (रा.टि.)**– ।। **ब्रह्मशब्दमिति** ।। 'ब्रह्म' इति शब्दो यस्य तद् ब्रह्मशब्दम्, ब्रह्मशब्दवाच्यमित्यर्थः । **इति वचनादिति** ।। तृतीयस्याद्यपादे 'वदः सुपि क्यप् च' इति सूत्रात् क्यप्प्रत्ययमनुवर्त्य 'भुवो भावे' इति सूत्रे 'सुबन्त उपपदे भूधातोर्भवनरूपेऽर्थे क्यप्प्रत्ययो भवति' इत्युक्तत्वात्, कित्वेन गुणाभावे 'भूयः' इति रूपसिद्धेरिति भावः ।।

ननु तत्र 'वदः सुपि' इत्यनुवृत्तेर्वत्यन्तस्य च सुबन्तत्वाभावात् कथमत्र क्यप्प्रत्यय इत्यत आह– **सुबन्तेति** ।। मात्रपदेन 'तद्ब्रह्म' इत्यादाविव भावकर्मरूपार्थविशेषो व्यावर्त्यते । नात्र वतिप्रत्ययोऽस्ति । किन्तु वत्यर्थ एव । स च समासेऽन्तर्भूत एव प्रतीयते । अतः सुबन्तोपपदत्वमस्त्येवात्रेति भावेनाऽह– **वत्यर्थस्येति** ।। **वृत्ताविति** ।। समास इत्यर्थः ।

मयूरवद् व्यंसको मयूरव्यंसक इति समासो यथा 'मयूरव्यंसकादयश्च'इति सूत्रोक्तस्तथात्रापि समास इत्यर्थः । **तदुक्तमिति** ।। प्रकृतिवद् भगवत्प्रियत्वं ब्रह्मभूयपदेनोक्तमित्यर्थः ।। २६ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु भवनं कथं भूयःशब्दार्थ इत्यत आह– **भुवो भाव इति वचनादिति** ।। भू इत्येतस्माद्धातोर्भावे भवनरूपेर्थे क्यप्प्रत्यये कित्वाद् गुणाभावे च भूय इति रूपसिद्धिरित्यर्थः ।।

ननु भुवो भाव इति सूत्रे सोपसर्गस्य सुपोनुवृत्त्या सोपसर्गे सुबन्त उपपद एव क्यप्विधायकत्वावगमात् प्रकृते च सोपसर्गस्य सुबन्तस्योपपदत्वाभावात् कथं क्यप् इत्यतः सत्सूद्विष इत्यत्रानुवर्तमानेपि उपसर्गे पुनः उपसर्गेपि इत्युपसर्गवचनं सुपीत्युपपदग्रहणस्थले उपसर्गाननुवृत्तिं दर्शयितुमिति वृत्तावुक्तत्वात् वदः सुपीत्यत्रापि सुपीत्युपपदोपादानेन उपसर्गानुवृत्तेरभावात् भुवो भाव इत्यत्र च तन्मात्रस्यैवानुवृत्तेः उपसर्गाभावेपि अस्य युक्तः क्यप् इत्याशयेनाह– **वदः सुपीत्यादि** ।। ननु ब्रह्मशब्दस्योपपदत्वे ब्रह्मवद् भूय इति वतिश्रवणापत्तिरित्यत आह– **वत्यर्थस्येति** ।। वृत्तौ समास इत्यर्थः । अत्रैव सम्प्रतिपन्नं दृष्टान्तमाह– **मयूरव्यंसकादिवदिति** ।। मयूरव्यंसकादयश्च इति सूत्रेण मध्यमपदलोपसमासविधानात् मयूरव्यद् व्यंसको मयूरव्यंसक इति वृत्तौ अन्तर्भाववदित्यर्थः ।। यद्वा ननु ब्रह्मभूयमित्यस्य ब्रह्मत्वमिति प्रतिपदं वदता वृत्तिकारेण एतयोः पर्यायत्वं वदतता अभिधानकारेण च षष्ट्यन्त एवोपपदे प्रवृत्तिनिमित्ते द्योत्ये क्यपोभ्यनुज्ञानात् कथमेतदित्यतः कृतप्रकरणे सूत्रगतभावशब्दस्य धात्वर्थमात्रपरत्वाश्रयणात् सुपीत्येवानुवर्तनात् युक्तमेतद्व्याख्यानमित्याशयेनाह– **भुवो भाव इति वचनादित्यादिना** ।।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे चतुर्दशोध्यायः ।।**

**भावरत्नकोशः (सु.टि.)–** 'स्याद् ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरोक्तेराह– **ब्रह्मत्वायेति** ।। 'इति भावेन' इत्यनन्तरं 'तत्पदम्' इत्यध्याहार्यम् । 'ब्रह्मशब्दम्' इत्यत्र बहुव्रीहिः, ब्रह्मशब्दवाच्यमित्यर्थः । प्रकृतिरेव ब्रह्मशब्दा प्रतिष्ठा प्रतिष्ठापक इत्यर्थः । न ह्युत्सर्गतः स्वात्मा स्वस्य प्रतिष्ठापक इति भावः । तत्तादात्म्यं न तच्छब्दार्थ इत्यत्र युक्तिमाह– **अन्यस्येति** ।।

श्लोकः २६

**आह** प्रियत्वं भावशब्दस्य । 'तस्य भावस्त्वतलौ' इत्यत्रेव प्रवृत्तिनिमित्तधर्मार्थत्वे परव्याख्यानप्रत्याख्यानायोगः इत्यतोऽर्थमाह– **भावो भवनमिति** ।। कुतोऽयमर्थो ज्ञायते इत्यत उक्तम् – **भुवो भाव इति** ।। 'सुबन्त उपपदे भूधातोः भवनरूपेऽर्थे क्यप् प्रत्ययो भवति इति पाणिनीयसूत्रादित्यर्थः । भूयशब्दस्य भवनार्थकत्वेऽपि प्रकृतिभवनमेव प्राप्तम्, न तु प्रकृतिवत् प्रियत्वम् इत्यतो भाष्यभावमाह– **ब्रह्मवद् भाव इति** ।। ननु 'ब्रह्मवद्भावः' इत्यर्थे 'ब्रह्मभूयम् इति न रूपम् उपपद्यते । 'वदः सुपि' इति पूर्वसूत्राद् 'भुवो भावे' इति सूत्रे 'सुबन्ते उपपदे' इत्यनुवृत्तेरिष्टत्वाद्, वत्यन्तस्य ब्रह्मशब्दस्य सुबन्तत्वाभावात्, इत्यत आह– **वदः सुपीत्यत इति** ।। सुबन्तमेवोपपदं विवक्षितम्, न तु वत्यन्तमपि । ब्रह्मशब्दश्चात्र सुबन्त एवोपादीयते ।

नर्हि 'ब्रह्मणो भूयम् भवनम् इत्येव प्रतीयते, न तु 'ब्रह्मवद् भवनम् इति इत्यत उक्तम्– **वत्यर्थस्य चेति** ।। **वृत्तौ** ब्रह्मभूयम् इति समासवृत्तौ । **अन्तर्भावात्** अन्तर्भूततया प्रतीतेरिष्टत्वात् । तच्छब्दाभावेऽपि तदर्थस्य समासवृत्तौ अन्तर्भावेनावभासे दृष्टान्तमाह– **मयूर-व्यंसकादिवदिति** ।। 'मयूर इव व्यंसकः मयूरव्यंसकः' इत्युपमानपूर्वपदकर्मधारय इति मते यथा 'मयूरव्यंसकः' इति समासे इवशब्दाभावेऽपि समासशक्त्यैव तदर्थः प्रतीयते, 'मयूरव्यंसका-दयश्च' इति सूत्रेण तदर्थे समासनिपातनात् तथा ब्रह्मभूयसमासेऽपि वत्यर्थः प्रत्येतुं युक्त इति भावः । एवं ब्रह्मभूयशब्दसमुदायार्थमुक्त्वा प्रकृतमाह– **वत्यर्थश्चेति** ।। वत्यर्थो हि सादृश्यम् । तत्र तद्भिन्नत्वे सति तद्गतधर्मयोगित्वम् । प्रकृते प्रियत्वमेव तद्गतधर्म इति भावेन । **तदुक्तम्** प्रकृतिवत् भगवत्प्रियत्वमेव ब्रह्मभूयपदेनोक्तमित्यर्थः ।।

**गीताक्षरार्थस्तु–** एवं गुणातीतस्याचारमुक्त्वा केनोपायेन गुणानतीत्यैति इति प्रश्नस्योत्तरमुच्यते– **मां चेति** ।। प्रश्नोत्तरसमुच्चये चशब्दः, एवार्थो वा । अव्यभिचारेण न विद्यते व्यभिचारः अन्यगामित्वं यस्य स तथा तेन अनन्यविषयेण भक्तियोगेन भक्तिलक्षणो-पायेन सेवते उपास्ते सः अपरोक्षज्ञानी सन् एतान् बन्धकत्वेनोक्तान् त्रीन् गुणान् समतीत्य 'ब्रह्मभूयाय' इत्यत्र ब्रह्मशब्दः अत्र 'मम योनिर्महद् ब्रह्म' इति प्रकृतमहालक्ष्मीवचनः । ब्रह्मणो हि प्रतिष्ठाऽहम् इति वक्ष्यमाणत्वाच्च । भूयशब्दश्च 'भुवो भावे' इति पाणिनिवचनाद् भावशब्दार्थः । भावश्च भवनम् । अन्यस्य अन्यभवनायोगाद् महालक्ष्मीवत् स्वयोग्यतापेक्षया

भगवत्प्रियत्वमेव व्याख्येयमिति 'ब्रह्मभूयाय' इत्यस्य महालक्ष्मीवत् 'भगवत्प्रियत्वाय' इत्यर्थो भवति । कल्पते 'कृपू सामर्थ्ये' समर्थो भवति मुक्तो भवतीति यावत् ।। २६ ।।

**भावदीपिका (श्री.टि.)– ।। ब्रह्मशब्दम्** ब्रह्मशब्दवाच्यम् । **प्रतिष्ठाऽहमिति** ।। 'प्रतिष्ठा धारकः पुमान्' इति वचनाद् धारकत्वं प्रतिष्ठाशब्दार्थः । नहि स्वयं स्वस्य प्रतिष्ठापक इति भावः । 'परब्रह्मत्वाय' इति व्याख्याने बाधकमाह– **अन्यस्येति** ।। 'भुवो भावे' इति भुवो धातोर्भावे भवनरूपधात्वर्थविवक्षायां क्यप् प्रत्ययः स्यादिति सूत्रार्थः । तथा च 'भू सत्तायाम्' अस्मात् भावे क्यप्प्रत्यये ककारलोपे 'भूय' इति रूपम् । कित्त्वाद् गुणाभावः । अन्यथा 'भोय' इति स्यादिति द्रष्टव्यम् ।

ननु 'भुवो भावे' इत्यत्र 'वदः सुपि क्यप् च' इति पूर्वसूत्रात् 'सुपि' इत्यनुवृत्तेः ब्रह्मवत् इति वत्यन्तेन ब्रह्मशब्देन विग्रहे वत्यन्तस्याव्ययत्वेन 'अव्ययादाप्सुपः.' इति अव्ययात्परस्य सुपो लोपे, सुबन्तत्वाभावात् कथं तस्मिन् सुबन्ते उपपदे सति विहितः 'भुवो भावे' इति सूत्रेण क्यप्प्रत्ययः इत्यत आह– **सुबन्तमात्रस्येति** ।। सुबन्तत्वस्य श्रूयमाणत्वमपि न विवक्षितम्, किं नाम, सुबन्तत्वमात्रम् । तच्च प्रत्ययलोपे प्रत्ययलक्षणम्' प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् इति विधानेन प्रत्यये लुप्तेऽपि सुबन्तत्वाक्षतेः युक्तस्तस्मिन्नुपपदे तेन क्यप्प्रत्यय इति भावः ।

ननु 'ब्रह्मवद्भूयाय' इति वतिः श्रूयेत इति चेत्तत्राह– **वत्यर्थस्य चेति** ।। **वृत्ताविति** ।। 'ब्रह्मभूयाय' इति समासवाक्य इत्यर्थः । वत्यर्थस्य समासवाक्येऽन्तर्भावे दृष्टान्तमाह– **मयूरव्यंसकादिवदिति** ।। 'मयूरव्यंसकादयश्च' इति सूत्रेण मध्यमपदलोपविधानात् 'मयूरवत् व्यंसको मयूरव्यंसकः' इतिवत् 'ब्रह्मवद्भावो ब्रह्मभूयम्' इति मध्यमपदलोपसमासोऽयमिति भावः । ननु तर्हि 'ब्रह्मभूयाय' इत्यस्य 'प्रकृतिवद्भवनाय' इत्यर्थः स्यात् स चायुक्त इति चेत्, तत्राह– **वत्यर्थश्चेति । प्रियत्वमिति** ।। प्रियत्वमात्रम्, न तु तावत्प्रियत्वमित्यर्थः ।।२६।।

**भावप्रकाशः (कृ.टि.)– ।। परब्रह्मत्वायेति** ।। 'स्याद्ब्रह्मभूयं ब्रह्मत्वम्' इत्यमरोक्तिरिति भावः । **ब्रह्मशब्दमिति** ।। बहुव्रीहिरयम् । ब्रह्मशब्दवाच्यमित्यर्थः । **तद्द्वयं चेति** ।। अत्र भाष्यटीकयोः नपुसंकलिङ्गपाठः साधुः । अन्यादृशस्तु प्रामादिकः । 'भावे नणकचिद्भ्योऽन्यः' इति अमरेण 'स्वपो नन् नौण च' इत्याद्युक्तनणादिभिन्नानां भावार्थकृतां

श्लोकः २६

नपुंसकोक्तेरिति ज्ञातव्यम् । 'तस्य भावस्त्वतलौ' इत्यादाविव भावशब्दो धर्मार्थ इति प्रतीतिनिरासायाह– **भावो भवनमिति** ।। प्रतीत एवार्थः किं न स्यादित्यत आह– **भुवो भाव इतीति** ।। अनुपसर्गे सुप्युपपदे भूधातोर्भावे क्यबिति सूत्रार्थः । नात्र भावो धर्मः । क्यपः कृत्त्वेन तदर्थत्वायोगात् । तद्धितस्यैव तथात्वादिति भावः । ननु प्रियत्वप्रतिपादकशब्दाभावात् कथं प्रियत्वमित्युक्तमिति चोद्यं तदवस्थमेवेत्याशङ्कां परिहर्तुं ब्रह्मभूयशब्दसमुदायार्थं तावदाह– **ब्रह्मवद्भाव इति** ।।

ननु अमरटीकादौ ब्रह्मभूयशब्दस्य ब्रह्मणो भाव इति विग्रहप्रदर्शनात् अनव्यय एव षष्ठ्यन्त एव ब्रह्मशब्द एव चोपपदे भुवः क्यप्प्रत्ययो भवतीति ज्ञायते । ततश्च ब्रह्मभूयशब्दस्य ब्रह्मवद्भावः कथमर्थः स्यादित्यत आह– **वदः सुपीत्यत इति** ।। **सुवन्तमात्रस्येति** ।। मात्रशब्दः कात्स्न्र्यवाची तेन नियमत्रयस्यापि व्यवच्छेदः । तदयमर्थः । 'भुवो भाव' इति सूत्रे 'वदः सुपि' इति सूत्रात् सुपीत्यनुवर्तते । तस्य च 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति न्यायेन सुबन्त इत्यर्थः । ततश्च सुबन्ते इत्यर्थः । ततश्च सुबन्ते उपपदे भूधातोः क्यप् प्रत्ययः स्यात् भाव इति सूत्रार्थः । 'न त्वनव्यये' इत्यादिनियमो विवक्षितः । तत्प्रत्यायकाभावात् । सुपीत्यस्य च सुबन्तमात्रप्रत्यायकत्वात् ।

किं च 'अनव्यय एव' इति नियमे 'पुनर्भूयम्' इत्यादि न स्यात् । षष्ठ्यन्त एवेति नियमेऽष्टादशाध्याये ब्रह्मणि भावो ब्रह्मभूयमिति व्याख्यानं न स्यात् । ब्रह्मशब्द एवेति नियमे 'देवभूयम्' इत्यादि न स्यात् । तस्मात् सुबन्तमात्रमुपपदमित्यङ्गीकर्तव्यम् । तथा च ब्रह्मवच्छब्दस्य 'अव्ययादाप्सुपः' इति सुप्लोपेऽपि प्रत्ययलोपे प्रत्यलक्षणमिति न्यायेन सुवन्तत्वात् तदुपपदब्रह्मभूयशब्दाद् ब्रह्मवद्भावः प्रतीयतैवेति । ननु ब्रह्मवच्छब्दस्य भूयशब्देन समासो ब्रह्मशब्दस्य वा । आद्ये समासे वतिश्रवणापत्तिः । अन्त्ये वत्यर्थप्रतीतिः न स्यादित्यत आह– **वत्यर्थस्य चेति** ।। वृत्तिशब्दः समासशक्तिपरः । अन्तर्भावादित्यस्य समासार्थभूततया प्रतीतेरित्यर्थः । ततश्च पक्षद्वयेऽपि समासशक्त्या वत्यर्थप्रतीतेः नानुपपत्तिः । इयांस्तु विशेषः । आद्ये पक्षे वतिप्रत्ययो लुप्यते । अन्त्ये तु स्वरूपेणैव स नास्तीति भावः । ननु शब्दाभावेऽपि तदर्थप्रतीतिः समुदायशक्त्या भवतीत्यनुपपन्नम् । अदर्शनात् । वतिप्रत्ययलोपश्च कथम् । तद्विधायकाभावात् । किञ्च वत्यर्थव्यवधानेन समस्यमानपदार्थयोरसामर्थ्येन समासानुपपत्तिरित्यत आह– **मयूरव्यंसकादिवदिति** ।। 'मयूर इव व्यंसको मयूरव्यंसकः' इति

उपमानपूर्वपदकर्मधारयवादिमतेनेदम् । आदिपदेन अकुतोभयादिशब्दसङ्ग्रहः । अयमर्थः । यथा मयूरव्यंसक इति प्रयोगे इवशब्दाभावेऽपि समासशक्त्यैव तदर्थप्रतीतिः इवशब्दार्थेन व्यवधानात् सामर्थ्याभावेऽपि समासः इवशब्दलोपश्च । 'मयूरव्यंसकादयश्च' इति समासादिनिपातानात् । तथा च ब्रह्मभूयशब्देऽपि वत्यर्थप्रतीतेः समासो वतिप्रत्ययलोपश्चोपपद्यते । मयूरव्यंसकादेरा-कृतिगणत्वात् । नच व्यंसको धूर्तः मयूरो व्यंसकः । मयूरव्यंसकादीत्यादिपदेन तस्मात् ब्रह्मवद्भाव इत्येव समासः पूर्वनिपातनियमार्थं च सूत्रमिति यन्मतं तत्र का गतिरिति वाच्यम् । तन्मतेऽपि नास्ति कुतो भयं यस्य सोऽकुतोभय इत्यादिवत् सर्वस्याप्युपपन्नत्वात् । तदिदमुक्तं मयूरव्यंसकादिवदित्यादिपदेन । तस्माद्ब्रह्मवद्भावो ब्रह्मभूयशब्दार्थ इत्यङ्गीकारे न कश्चि-त्क्षुद्रोपद्रवः ।

एवमुपोद्घातेन ब्रह्मभूयशब्दसमुदायार्थमुक्त्वा प्रकृतमाह– **वत्यर्थश्चेति** ।। वत्यर्थो हि सादृश्यम् । तच्च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम् । प्रकृते च प्रियत्वमेव तद्गतधर्म इति तदुक्तमित्यर्थः ।। २६ ।।

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।। २७ ।।**

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ।। १४ ।।

## भाष्यम्

**ब्रह्मणः मायायाः** ।। २७ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये चतुर्दशोऽध्यायः ।।

भावप्रदीपिका (प.टी.)– ब्रह्मणो हि प्रतिष्ठाऽहम् इत्यत्र ब्रह्मशब्दार्थमाह– **ब्रह्मण इति** ।। २७ ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीभगवद्गीताभाष्यभावप्रदीपिकायां चतुर्दशोऽध्यायः ।।

श्लोकः २७

**प्रमेयदीपिका (ज.टी.)– 'ब्रह्मणो हि' इत्येतत् 'परब्रह्मणो हि' इति व्याचक्षते । तदसत् । 'प्रतिष्ठाऽहम्' इति वचनात् । उपचारोऽसाविति चेन्न । मुख्ये सम्भवति तदुपादानायोगादिति भावेनाऽह– ब्रह्मण इति ।। मायेति प्रकृता महालक्ष्मीः ।।२७।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां चतुर्दशोऽध्यायः ।।

**भावदीपः (रा.टि.)– ।। प्रकृता महालक्ष्मीरिति ।।** मम योनिर्महद्ब्रह्म इति प्रकृता मूलरूपभूतेत्यर्थः ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते चतुर्दशोऽध्यायः ।। १४ ।।

**भावरत्नकोशः (सु.टि.)– ।। इति वचनादिति ।।** न हि स्वात्मैव स्वस्य प्रतिष्ठापक इति युज्यत इति भावः । ननु 'ब्रह्मणः' इत्यस्य 'परब्रह्मणः' इत्यर्थकत्वेऽपि न प्रतिष्ठापकत्वोक्तिविरोधः । विशिष्टस्याहंपदार्थस्य प्रतिष्ठापकतया तत्संवलिते चिति तदुपचारोऽस्तु इति शङ्कते– **उपचार इति** ।। प्रतिष्ठाशब्दस्य गौणी वृत्तिरित्यर्थः । **मुख्य इति** ।। मुख्यं प्रतिष्ठापकत्वमेव प्रतिष्ठाशब्दार्थ इत्यभ्युपगम्य 'ब्रह्मणः' इत्यस्यार्थान्तरसम्भवे उपचरितार्थोपादानायोगादित्यर्थः । ननु 'मम योनिर्महद् ब्रह्म' इत्यत्र 'प्रकृतिः ब्रह्मशब्दार्थः' इति भाषितम् । अत्र पुनः 'माया ब्रह्मशब्दार्थः' इति भाष्यते, तत्कथम् इत्यत आह– **मायेतीति** ।। 'मायायाः' इति भाष्ये मायाप्रातिपदिकार्थः 'मम योनिर्महद् ब्रह्म' इति महाब्रह्मशब्देन प्रकृता महालक्ष्मीरेव, तस्याः मायायाः प्रकृतश्च महालक्ष्म्या इत्यर्थ इति न विसंवाद इति भावः ।।

**गीताक्षरार्थस्तु** ननु 'मां चाव्यभिचारेण' इत्यनन्यया भक्त्या मदुपासने मदपरोक्षज्ञानप्रसादद्वारा मत्प्राप्तिलक्षणमुक्तिर्भवतीति 'त्वत्प्राप्तिरेव मुक्तिः' इत्युक्तम् । तदयुक्तमिव त्वदन्यमहालक्ष्म्यादिदेवतान्तरोपासनादिसाध्यतत्प्राप्तेरपि मुक्तित्वसम्भवात् 'श्रियं वसाना अमृतत्वमायन्', 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रवणात् । त्वत्प्राप्तेः सुखदुःखहानिरूपत्वाभावेन अपुरुषार्थत्वाच्च, इत्याशङ्क्य महालक्ष्म्यादिदेवतानाम् अहमेवाधारः, मोक्षहेतुभक्त्युपासनादिसद्धर्माणाम् अनुष्ठापयिताऽपि अहमेव पुरुषार्थ इत्यभिसन्धायोच्यते– **ब्रह्मण इति** ।। ब्रह्मणः महालक्ष्म्याः अव्ययस्य व्ययादिदोषहीनस्य अमृतस्य ब्रह्मादिमुक्तवर्गस्य शाश्वतस्य अक्षयफलकस्य धर्मस्य निष्कामस्य एकान्तिकस्य दुःखासम्भिन्नस्य सुखस्य च

श्लोकः २७

अहमेव प्रतिष्ठा प्रतिष्ठापकः । अयं चार्थः श्रुतिस्मृतीतिहासादिसर्वप्रमाणप्रसिद्ध इति द्योतनाय हिशब्द इति ।। २७ ।।

**।। इति श्रमिदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भगवद्गीताभाष्यस्य टीकायाः टिप्पण्यां भावरत्नकोशसमाख्यायां सुरीन्द्रश्रीपादशिष्यसुमतीन्द्रतीर्थविरचितायां चतुर्दशोऽध्यायः समाप्तः ।।**

**भावदीपिका (श्री.टि.)– ।। इति वचनादिति ।।** नहि स्वयं स्वस्य प्रतिष्ठापक इति भावः । 'ब्रह्मणो हि' इत्यस्य 'परब्रह्मणः' इत्येवार्थः । नच प्रतिष्ठापकत्वोक्तिविरोधः । विशिष्टचिन्मात्रसत्त्वेन तस्योपचरितत्वाद् इत्याशङ्कते– **उपचारोऽसाविति ।। मुख्य इति ।।** मुख्यं प्रतिष्ठापकत्वमङ्गीकृत्य 'ब्रह्मणः' इत्यस्यार्थान्तरे सम्भवति सति उपचरितार्थोपादानायोगादित्यर्थः । मायाशब्दार्थकथनव्याजेन अध्यायान्ते माङ्गलिकं पदं निबध्नाति– **प्रकृता महालक्ष्मीरिति ।।** महद्ब्रह्मशब्देन प्रकृतेत्यर्थः । महद्ब्रह्मपदेन पूर्वं प्रकृता महालक्ष्मीरत्र मायाशब्दवाच्येत्यर्थः ।। २७ ।।

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
चतुरितदशमोऽस्यामन्तमध्याय आप ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्गीताभाष्यटीकाविवृतौ भावदीपिकाख्यायां चतुर्दशोऽध्यायः ।।**

**भावप्रकाशः (कृ.टि.)–** मायाशब्दस्यानेकार्थत्वेऽपि प्रकृते महालक्ष्मीपरत्वमेव प्रकरणादिति भावेनोक्तं– **प्रकृतेति ।। २७ ।।**

**।। इति श्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णविरचिते प्रमेयदीपिकाप्रकाशे चतुर्दशोऽध्यायः ।।**

## ।। अथ श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ।।

**श्रीभगवानुवाच–**

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ।। १ ।।**

## भाष्यम्

**संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति । ऊर्ध्वो विष्णुः । 'ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳसवर्चसम्' (तै.आ. ७.१०.१) इति हि श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः ।।**

भावप्रदीपिका (प.टी.)– एतदध्यायार्थं दर्शयति– **संसारेति** । **तदत्ययोपायः** निर्मानत्वादि । तत्र ऊर्ध्वशब्दस्य विष्णुविषयत्वं रूढियोगाभ्यां दर्शयति– **ऊर्ध्व इति** ।

प्रमेयदीपिका (ज.टी.)– अध्यायप्रतिपाद्यमर्थमाह– **संसारेति** ।। संसरत्यनेनेति संसारः । प्रकृत्यादिकं क्षेत्रम् । पूर्वाध्याये संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् । अत्र पुनः समग्रं संसारस्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्चयति । तत्प्रसङ्गादलौकिकं भगवन्महिमानं च दर्शयति अनेनाध्याये-नेत्यर्थः ।।

जगद्वृक्षस्योर्ध्वमूलत्वं घटयितुमूर्ध्वशब्दाभिधेयं तावदाह– **ऊर्ध्व इति** ।। कुतः? श्रौतप्रयोगादित्याह– **ऊर्ध्वेति** ।। आदौ तावदहम् ऊर्ध्वेन विष्णुना पवित्रः निष्पापोऽस्मि । ततो वाजिरूपश्च नेता च । वाजिनीः सूर्यः । तत्र वसतीति वाजिनीवसुः । तेन वाजिनीवसुना विष्णुना अमृतं प्रारब्धकर्मनिर्मुक्तश्च अस्मि । 'स तेजसि सूर्ये सम्पन्नः' इति श्रुतेः । ततश्च तेनैव सवर्चसं सप्रभम् । अनुभूयमानमिति यावत् । द्रविणं धनं सुखं च अस्मि इत्यर्थः ।।

वर्चसशब्दोऽकारान्तोऽप्यस्ति । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यत्र योगविभागात् समासान्तो वा। विष्णुप्रसङ्गदर्शनाय श्रुतिशेषोदाहरणम् । इदानीं तस्य तत्र प्रवृत्तौ

**निमित्तमाह– ऊर्ध्व इति ।।** उन्नतो ह्यूर्ध्व उच्यते । **अतो ब्रह्मादिलोकस्थत्वादिलक्षणा सूक्ष्मत्वादिगुणयोगो वा नाऽश्रयणीयः । सर्वतः सर्वस्मात् प्रपञ्चात् । सर्वैश्च गुणैः ।।**

**भावबोधः (र.टि.)– ।। वाजिरूपश्चेति ।।** 'वाजिरूपेण सूर्येण प्रोक्तं वाजसनेयकम्' इति वचनादिति भावः । ननु वर्चश्शब्दस्य सकारान्तत्वेन 'सवर्चः' इति भवेत् कथं 'सवर्चसः' इत्युक्तमित्यत आह– **वर्चसशब्द इति ।। समासान्तो वेति ।।** 'वर्चसः' इति योगविभागात् वर्चस्सहितं सवर्चसमिति समासान्ताकारो भवतीत्यर्थः । उत्तमत्वं कथमूर्ध्वशब्दप्रवृत्तिनिमित्तमित्यत आह– **उन्नत इति ।।** उन्नतोत्तमशब्दयोः पर्यायत्वादुन्नतत्वमेवोत्तमत्वमित्यर्थः । **अत इति ।।** मुख्यार्थानुपपत्तेरभावादित्यर्थः । **ब्रह्मादिलोकेति ।।** विष्णोः सत्यलोकादूर्ध्वलोकस्थितिरूपशक्यसम्बन्धादित्यर्थः । **सूक्ष्मत्वादिति ।।** विष्णोः ध्रुवमण्डलादूर्ध्ववस्तुगतसूक्ष्मत्वादिप्रकारकप्रतीतिविषयत्वादिगुणयोग इत्यर्थः ।

**भावदीपः (रा.टि.)–** सम्पूर्वात् 'सृ गतौ' (पा.धा.९३५) इत्यतः करणे वत्र् इत्युपेत्याह– **संसरतीति ।। क्षेत्रमिति ।।** त्रयोदशाध्याये 'महाभूतान्यहङ्कारः' (१३.६) इति श्लोकोक्तं प्रकृत्यादीत्यर्थः । **वृत्तमिति ।।**'सत्वं रजस्तमः' इत्यादिना कार्यप्रवृत्तिर्दर्शितेत्यर्थः । **संसारेति ।।** प्रकृत्यादिक्षेत्रस्वरूपमित्यर्थः ।। **प्रागुक्तमिति ।।** प्रथमषट्काद्युक्तं निवृत्तकर्म भगवज्ज्ञानध्यानरूपं साधनमित्यर्थः । **'कुतः'** इत्यनन्तरम् 'इत्यतः' इति शेषः ।। इति **श्रुतेरिति ।।** षट्प्रश्नश्रुतेरित्यर्थः ।। नपुंसकद्रविणशब्दे विशेषणत्वात् 'वर्चसः' इति भाव्यमित्यत आह– **वर्चसशब्द इति ।। योगविभागादिति ।।** ब्रह्मशब्दाद्धस्तिशब्दाच्च परस्य वर्चःशब्दस्याच्प्रत्यये 'ब्रह्मवर्चसम्' इत्यादि सिद्ध्यर्थमयमेको योगः,'वर्चसः' इति पुनरन्यो योगो विभज्य कर्तव्यः । अन्यत्रापि वर्चसशब्दः समासान्तो भवतीत्यर्थ इति । तथाच 'सवर्चसम्' इत्यकारान्तः साध्विति भावः । **अत इति ।।** मुख्यार्थसम्भवादिति भावः । **ब्रह्मादीति ।।** अत्युन्नतसत्यलोकवैकुण्ठलोकस्थत्वाद् ऊर्ध्व इति लक्षणा वा सूक्ष्मत्वाद् अतीन्द्रियत्वादिगुणयोगाद् गौणीवृत्तिर्वा नाऽश्रयणीयेति भावः ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु वर्चस्शब्दस्य सकारान्तत्वात् वर्चसा सहितं सवर्च इति भवितव्यम् । सवर्चसमिति तु कथमित्यत आह– **वर्चसशब्द इति ।।** ननु ब्रह्महस्तिभ्यां वर्चस इति ब्रह्मवर्चस्शब्दादेव समासान्तप्रत्यविधानात् अत्र वर्चस्शब्दस्य केवलत्वात् कथं

श्लोकः १

समासान्तप्रत्यय इत्यत आह– **ब्रह्महस्तिभ्यामिति** ।। वर्चसमिति योगविभागात् वर्चसा सहितं सवर्चसमिति समासान्तोकारो भवतीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। अध्यायेति ।।** पञ्चादशाध्यायेत्यर्थः । अभ्यर्हितत्वाद् 'एतद् इत्यनुक्तिः । 'त्रयोदशाध्यायोक्तम्' इति तात्पर्यनिर्णयवचनात्, 'ऊर्ध्वमूलम्' इत्यादौ प्रकृत्यादिक्षेत्रस्यैवाभिधानाच्चाह– **संसरत्यनेनेति** ।। सम्पूर्वात् 'सृ गतौ' इत्यतः करणे घञि निष्पन्नः संसारशब्द इति भावः । **प्रकृत्यादिकम्** प्रकृतिकारणकम् । **क्षेत्रम्** 'महाभूतानि इत्यादिनोक्तानि चतुर्विंशतितत्त्वानीति व्याख्येयम् । 'प्रकृतिशब्देन महाभूतानि इत्यादिनोक्तानि चतुर्विंशतितत्त्वानि गृह्यन्ते' इति त्रयोदशाध्यायटीकोक्तेः । तेन 'त्रयोदशाध्याये प्रकृतेः क्षेत्रत्वानभिधानाद् कथमेवमुक्तिः' इति चोद्यं निरस्तम् । केचित्तु

'हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।
अव्यक्तादि शरीरं तत् क्षेत्रं तु क्षीयतेऽत्र यत् ।।'

इति तात्पर्यनिर्णये अव्यक्तशब्दितप्रकृतिग्रहणाद् अत्र प्रकृत्यादिकम् इत्युक्तम् । एवं च यथाश्रुतमपि समञ्जसमित्याहुः । तदभव्यमिव । अव्यक्तशब्देन तत्रापि प्रकृतेरनभिप्रेतत्वात् । अत एव न्यायदीपिका 'देहादितया परिणतैतदुपघातादेव जीवो हिंसित इत्युच्यते' इति । **एतदुपघातात्** देहादितया पीरणताव्यक्तशब्दितप्रकृत्युपघाताद् इति तदर्थः । एवं च न्यायदीपिकारीत्या अव्यक्तशब्देन तात्पर्यकृदुपात्ताव्यक्तपरम्परापरिणामदेहादेरेव ग्राह्यतया आहत्य प्रकृतेर्न क्षेत्रत्वलाभ इति अपरे । अन्ये तु 'ईश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः क्षेत्रमुच्यते' इति त्रयोदशाध्यायटीकोक्तेः प्रकृतेरपि क्षेत्रत्वविवक्षया प्रकृत्यादिकं क्षेत्रमित्युक्तमिति वदन्ति ।

ननु समनन्तरातीताध्याये क्षेत्रस्य तदत्ययोपायस्य च निरूपितत्वाद् इह पुनस्तदुक्तौ पुनरुक्तिः । त्रयोदशाध्यायार्थविवेचनपरत्वे चास्य तदानन्तर्यापत्तिः । संसारतदत्ययोपायविज्ञानानामत्र प्रतिपादने वाक्यभेदापत्त्या एकवाक्यता च न स्यात् । कथं चानन्तर्यसङ्गतिः इत्यत आह– **पूर्वाध्याय इति** ।। **वृत्तं** वर्तनम् स्वस्वकार्यप्रवर्तकत्वरूपा स्थितिः । **तत्साधनजिज्ञासुं** संसारात्ययसाधनज्ञानेच्छुम् । 'अन्नं बुभुक्षुः' इति महाभाष्यप्रयोग इव 'साधनजिज्ञासुम् इति प्रयोगो युक्तः । **प्रागुक्तम्** आ षष्ठसमाप्तेरुक्तम् । **साधनम्** 'निर्मा-

नत्वादिकम्' इति भावप्रदीपिका । **तत्प्रसङ्गात्** साधनप्रपञ्चप्रसङ्गात् । तथाच पूर्वाध्याये एकदेशकीर्तनम्, अत्र तु समग्रक्षेत्रप्रदर्शनम्, तदपि साधनप्रपञ्चनार्थमेव क्रियत इति न पुनरुक्तिः । अत एवानन्तरसङ्गतिश्च लब्धा । विज्ञानोक्तिश्च प्रासङ्गिकी । साधनं तु प्राधान्येन प्रतिपिपादयिषितम् इत्यध्यायैक्यं चोपपद्यत इति भावः ।

विलक्षणतया ज्ञातव्यं माहात्म्यं विज्ञानम् इत्यभिप्रेत्योक्तम्– **अलौकिकं महिमानमिति** ।। **घटयितुम्** वृक्षस्योर्ध्वमूलत्वम् अदृष्टचरम् इति; तद्घटनां कर्तुम् कुतः इत्यनन्तरं 'चेत्' इति शेषः । विष्णुनाऽपरोक्षीकृतेन निष्पापः निर्गतानि पापानि यस्मात् स तथा, निर्गतः पापेभ्य इति वा । तथा च सूत्रम् 'तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ' इति । **ततः** निष्पापत्वानन्तरम् 'वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते' इति तैत्तिरीयभाष्यं हृदि निधायाह– **वाजिरूपश्चेति** ।। वसतेरौणादिके कर्तरि उप्रत्यय एव वसुशब्दश्च इति भावेनोक्तं– **वसतीति** ।। 'अमृतम्' इत्यस्यार्थः – **प्रारब्ध इति** ।। सूर्ये स्थितस्य विष्णोः प्रारब्धकर्मनिर्मोचकत्वे प्रमाणम्– **स तेजसीति** ।। 'यथा पादोदरस्त्वचा विनिर्मुच्यते, एवमेवायमात्मा पाप्मभिर्विमुच्यते' इति शेषः । **तेनैव** सूर्यस्थितविष्णुनैव, तत्प्रसादेनैव ।

धनार्थो द्रविणशब्दः प्रेमास्पदत्वसादृश्यात् सुखमत्र ग्राह्यमिति भावेनोक्तम्– **सुखं चेति** ।। स्वयोग्यपूर्णानन्दरूप इत्यर्थः । 'प्रारब्धकर्मनिर्मुक्तः' इत्यनेन समुच्चयार्थश्चशब्दः । द्रविणविशेषणं हि वर्चः शब्दः । अतः 'सवर्चः' इत्येव स्यात्, कथं 'सवर्चसम्' इति निर्देशः इत्यत आह– **वर्चसशब्द इति** ।। 'यशसं वीरवत्तमम्' इत्यादौ यशःशब्द इव वैदिकप्रयोगादेव अकारान्ततताऽप्यस्तीति विज्ञायत इति भावः । योगविभागात् 'ब्रह्महस्तिभ्यां वर्चसः' इत्यत्र ब्रह्महस्तिभ्याम् इति एको योगः, 'वर्चसः' इत्यपर इति सूत्रविभागात्, तस्य चेष्टसिद्ध्यर्थत्वाद् वर्चश्शब्दस्य समासान्तेऽच्प्रत्यये तस्याकारन्तत्वमिष्टं सिध्यतीति भावः । उपलक्षणमेतत् । 'अच् प्रति अनु अवपूर्वात् सामलोम्नः' इत्यत्र 'अच्' इति योगविभागात् पद्मनाभशब्द इवात्रापि अच्प्रत्यय इत्यपि ज्ञेयमिति केचित् । ऊर्ध्वशब्दस्य विष्णौ श्रौतप्रयोगदर्शनाय 'ऊर्ध्वपवित्रः' इत्यंश एवोदाहर्तव्ये किमिति 'वाजिनीव स्वमृतमस्मि' इत्यधिकांशोदाहरणम् इत्यत आह– **विष्णुप्रसङ्गेति** ।। वाजिनीशब्दस्तावद् उक्तव्युत्पत्या सूर्यार्थकः । सूर्ये वसंश्च विष्णुरेव । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति पुराणवचनादिति भावः ।

श्लोकः १

**तस्य** ऊर्ध्वशब्दस्य **तत्र** विष्णौ । उत्तमत्वं कथम् ऊर्ध्वशब्दस्य प्रवृत्तौ निमित्तम् इत्यतस्तदुपपादयति– **उन्नतो हीति** ।। 'उन्नतः' इति 'उच्चः' इति 'उत्तमः' इति चानर्थान्तरमिति भावः । **अत इति** ।। मुख्यार्थेऽनुपपत्त्यभावादित्यर्थः । **लक्षणेति** ।। ऊर्ध्वत्वेन निमित्तेन सत्यादिलोकार्थकोर्ध्वशब्दस्य तत्स्थे विष्णौ लक्षणेत्यर्थः । **सूक्ष्मत्वादिगुणयोग इति** ।। 'सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्चोर्ध्वमिति ब्रह्मोच्यते' इति शङ्करीत्या अतीन्द्रियत्वादिगुणेन ध्रुवमण्डलाद् ऊर्ध्ववस्तुसादृश्याद् ऊर्ध्वशब्दस्य विष्णौ गौणी वृत्तिर्वा नाश्रयणीयेत्यर्थः । ऊर्ध्वशब्देन उच्चपर्यायेण उत्तमत्वं प्राप्तम् । तच्च सप्रतियोगिकम् इत्यतो भाष्ये प्रतियोगिसमर्पणाय 'सर्वतः' इत्युक्तम् । तदनूद्यार्थमाह– **सर्वतः सर्वस्मादिति** ।। चेतनाचेतनात्मकादित्यर्थः । 'तृतीयार्थे तसिः' इति भावेन तस्य विवक्षितमर्थमाह– **सर्वैश्च गुणैरिति** ।। स्वतन्त्रत्वप्रमुखैः शुभधर्मैरित्यर्थः ।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
कुर्मः पञ्चदशाध्यायटीकां भावप्रदीपिकाम् ।। १ ।।

।। **वृत्तं** स्थितिः । विज्ञानशब्दार्थमाह– **भगवदिति** ।। तथा च 'विज्ञायते' इति कर्मव्युत्पत्त्या विज्ञानशब्दो भगवन्महिमपर इति भावः । ततः विष्णुपरोक्षज्ञानेन निष्पापानन्तरम् । 'वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते' इति तैत्तिरीयभाष्यं हृदि निधायाह– **वाजिरूपश्चेदिति** ।। 'सूर्यान्तर्गतं विष्णुं प्राप्य प्रारब्धकर्मनिर्मोकः' इत्यत्र श्रुतिमाह– **स तेजसीति** ।। 'स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते, एवमेवायमात्मा पाप्मभिः कर्मभिर्विनिर्मुच्यते' इति बृहदारण्यकवाक्यादित्यर्थः । अन्यत्राप्युक्तम्–

'वैश्वानरे द्युनद्यां वा देहे वा सूर्य एव वा ।
विधूय सर्वपापानि याति किंस्तुघ्नकेशवम् ।।' इति ।

**धनम्** अनर्घ्यधनरूपः । **सुखं** सुखरूपः । ननु 'वर्चसा सहितं सवर्चः' इति स्यात्, 'सवर्चसम्' इति कथम् इत्यत आह– **वर्चसशब्द इति** ।। **समासान्तो वेति** ।। सवर्चस्शब्दात् समासान्ताच्प्रत्यये 'सवर्चसम्' इत्यकारान्तो भवति । ननु केवलात् वर्चस्शब्दात् कथं समासान्ताच्प्रत्ययः? 'ब्रह्महस्तिभ्यां वर्चसः' इति सूत्रेण ब्रह्महस्तिशब्दाभ्यां

परवर्चस्शब्दाद् अकारप्रत्ययो विहितः 'ब्रह्मवर्चसः' इति प्रयोगदर्शनात्, इत्यत उक्तं – **ब्रह्महस्तिभ्यां वर्चस इत्यत्र योगविभागादिति ।।** 'ब्रह्महस्तिभ्याम्' इत्येकं वाक्यम्, 'वर्चसः' इत्यपरं वाक्यम् । तथा च ब्रह्महस्तिभ्यां परात्, तथा केवलवर्चसश्चाकारप्रत्ययो भवतीत्यर्थः । ननु प्रयोगदर्शनाय 'ऊर्ध्वपवित्रः' इत्येतावत्येवोदाहर्तव्ये 'वाजिनीवसु' इत्यादि-श्रुतिशेषोदाहरणं कस्मात् कृतम् इत्यत आह– **विष्णुप्रसङ्गेति ।।** उक्तरीत्या वाजिनी-वसुशब्दस्य विष्णुपरत्वादिति भावः । **तस्य तत्र प्रवृत्ताविति ।।** ऊर्ध्वशब्दस्य विष्णौ प्रवृत्तावित्यर्थः । उत्तमत्वं कथमूर्ध्वशब्दप्रवृत्तिनिमित्तम्? इत्यत आह– **उन्नतो हीति ।।** उन्नतोत्तमशब्दयोः पर्यायत्वाद् उन्नतत्वमेवोत्तमत्वमित्यर्थः । **अत इति ।।** उन्नतत्वाख्योत्तमत्व रूपोर्ध्वशब्दमुख्यार्थानुपपत्त्यभावादित्यर्थः । **ब्रह्मादिलोकेति ।।** विष्णोः सत्यलोकाद्यपेक्षयोर्ध्व-स्थितत्वेन विष्णौ ऊर्ध्वत्वं लाक्षणिकम्, इत्येव लक्षणयैवोर्ध्वशब्दस्य विष्णौ वृत्तौ निमित्तमित्यर्थः । **सूक्ष्मत्वादीति ।।** ध्रुवमण्डलादिरूपोर्ध्ववस्तुनि स्थितस्य सूक्ष्मत्वादिगुणस्य विष्णौ सत्त्वात्, तस्य तत्र प्रवृत्तौ गौणी वृत्तिरेव निमित्तमित्यर्थः । तसेः सार्व-विभक्तिकत्वादाह– **सर्वैश्चेति ।।**

**भावप्रकाशः (कृ.टि.)–** 'ऊर्ध्वमूलम्' इत्यादिना प्रकृत्यादिक्षेत्रस्यैवोक्तत्वादाह– **संसारत्यनेनेति ।।** 'करणेऽपि घञ्' इति भावः । नन्वेवमप्यनुपपत्तिरेव । संसारकारणी-भूताविद्यादेः 'ऊर्ध्वमूलम्' इत्यादिना प्रदर्शनाभावादित्यत आह– **प्रकृत्यादिकमिति ।।** अतिप्रसङ्गपरिहारायादिपदसङ्ग्राह्यमाह– **क्षेत्रमिति ।।** ननु पूर्वाध्याये क्षेत्रस्य तदत्ययोपायस्य चोक्तत्वात् पुनरुक्तिः । बहूनां प्रतिपादनेऽध्यायैक्यं च न स्यात् । अनन्तरसङ्गतिश्च कथमित्यत आह– **पूर्वाध्याय इति ।।** तथा च पूर्वाध्यायोक्तप्रपञ्चनान्न पुनरुक्तिरिति भावः । अत एवानन्तरसङ्गतिश्च । क्षेत्रोक्तेः साधनप्रपञ्चनार्थत्वाद्विज्ञानोक्तेश्च प्रासङ्गिकत्वात् साधनस्यैव प्राधान्येन प्रतिपाद्यत्वमित्यध्यायैक्यं चोपपद्यत इति भावः । विज्ञानपदार्थमाह– **अलौकिकं भगवन्माहात्म्यमिति ।। निष्पाप इति ।।** सञ्चितपापशून्य इत्यर्थः । 'वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते' इति प्रमाणानुसारेणाह– **वाजिरूपश्चेति ।।**

सूर्यस्थविष्णोः प्रारब्धकर्ममोचकत्वे प्रमाणमाह– **स तेजसीति ।।** ननु वर्चश्शब्दस्य सकारान्तत्वात् 'सवर्चः' इति वक्तव्ये सवर्चसमिति कथमुक्तमित्यत आह– **वर्चसशब्द इति ।। योगविभागादिति ।।** 'वर्चसः' इति योगविभागात् तस्य चेष्टसिद्ध्यर्थत्वात् वर्चःशब्दान्त-

श्लोकः १

बहुव्रीहिः समासान्तोऽच्प्रत्यय इत्यर्थः । उपलक्षणमेतत् । अच्प्रत्ययेति इत्यत्र अजिति योगविभागस्य च इष्टसिद्ध्यर्थत्वात् वर्चःशब्दवदित्यपि ग्राह्यम् । उत्तमत्वं कथमूर्ध्वशब्द-प्रवृत्तिनिमित्तमित्यत आह– **उन्नत इति** ।। 'उन्नत उत्तमः' इति चानर्थान्तरमिति भावः । **अत इति** ।। मुख्यार्थेऽनुपपत्त्यभावादिति भावः । **ब्रह्मादिलोकस्थत्वादिति** ।। ऊर्ध्वत्वेन निमित्तेन ब्रह्मादिलोकार्थो य ऊर्ध्वशब्दस्तेन तत्स्थविष्णुलक्षणेत्यर्थः । द्वितीयादिपदेन तदाश्रयत्वं ग्राह्यम् । **सूक्ष्मत्वादीति** ।। सूक्ष्मत्वादिगुणेन ध्रुवमण्डलादूर्ध्ववस्तुसादृश्या-दूर्ध्वशब्दस्य विष्णौ गौणी वेत्यर्थः । **वृक्षमात्रसाम्यमिति** ।। 'पृथङ्मूलं हरिस्तस्य जगद्वृक्षस्य भूमिवत्' इति नारायणश्रुतौ वृक्षमात्रत्वोक्तेरिति भावः ।

## भाष्यम्

**अधो निकृष्टं शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः। तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिस्तथा सर्वत्रापीत्यव्य-यता। फलकारणत्वाच्छन्दसां पर्णत्वम् । न हि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ।। १ ।।**

भावप्रदीपिका (प.टी.)– अधःशाखम् इत्येतद्व्याचष्टे– **अध इति** । भूतानि पञ्च देवादीनि च शाखा इत्यर्थः । अश्वत्थशब्दं जगत्परतया योजयति– **श्वोऽपीति** । तर्ह्युत्तरपदकोप इत्यत आह– **तथाऽपीति** । महाप्रलये सर्वथाऽप्युच्छेदोऽस्तीत्याह– **पूर्वेति** । कया विवक्षया छन्दसां पर्णत्वम् ? इत्यत आह– **फलेति** । पर्णानां फलकारणत्वं कथम् इत्यत आह– **न हीति** ।। १ ।।

प्रमेयदीपिका (ज.टी.)– 'अधःशाखम्' इत्येतद् घटयन् अधःशब्दार्थं तावदाह– **अध इति** ।। शाखाः काः? इत्यत आह– **शाखा इति** ।। तानि हि मूलापेक्षयाऽ-पकृष्टानि ।। ननु वृक्षमात्रस्य सारूप्यमभिदधता कथमश्वत्थत्वमस्योच्यते? इत्यत आह– **श्वोऽपीति** ।।'सुपि स्थः' इति कः । श्वसः सकारस्य तकारो धातुसकारस्य लोपश्च निरुक्तत्वात् । श्वः स्थाता श्वत्थः । श्वत्थो न भवतीति **अश्वत्थः** । 'किमुत कालान्तरे' इति, अपिशब्दः ।।

ननु पदार्थानां बहुकालस्थायित्वदर्शनात् कथमेतत्? इत्यत उक्तम्– **एकेति** ।। **'तिष्ठति'** इति लुडर्थेऽनादरसूचनाय लट् । अथवा **अपिशब्देन** वर्तमानातीतयोः **समुच्चयः** । ततः **क्रियाप्रबन्धे लट्** । तर्हि **अव्ययम्** इति **व्याघात** इत्यत आह– **तथाऽपीति**।। **विकारित्वेऽपि** । एतदपि नास्ति । जगत्प्रवाहस्य प्रलये व्ययादित्यत आह– **पूर्वेति**।। छन्दसां पर्णत्वं घटयति– **फलेति** ।। फलकारणत्वसादृश्यादित्यर्थः । अत्र फलं मोक्षादिकम् । छन्दसां वेदानाम् । स्यादिदं यदि पर्णानां फलकारणत्वं स्यात् । तदेव कुतः? अन्वयव्यतिरेकाभ्यामित्याह– **न हीति** ।। किन्तु जात एवेत्यन्वयोऽपि वाच्यः ।।

**भावबोधः (र.टि.)**– ।। **क इति** ।। कित्त्वादाकारलोपः । ननु श्वोऽपीत्युक्तत्वान्न स्थातेति वक्तव्यम् । तिष्ठतीति किमर्थमुक्तमित्यत आह – **लुडर्थ इति** ।। **वर्तमानातीतयोरिति** ।। अद्य पूर्वेद्युरित्यर्थः । **वेदानामिति** ।। गायत्र्युष्णिगादीनां मोक्षादिफलकारणत्वाभावादित्यर्थः ।। १ ।।

**भावदीपः (रा.टि.)**– ।। **सुपि स्थ** इति ।। सुबन्त उपपदे 'ष्ठा गतिनिवृत्तौ' (पा.धा. ९२८) इत्यतः कप्रत्ययो भवतीति कप्रत्यय इत्यर्थः । श्वसुशब्दोपपदात् स्थाधातोः कप्रत्यये 'आतो लोप इटि च' (पा.सू.६.४.२४) इत्याकारलोपे सकारस्य षत्वे सलोपे च अश्वत्थ इति रूपमिति भावः ।। ननु 'अनद्यतने लङ्' (पा.सू.३.२.११) इति सूत्रे भविष्यदनद्यतने काले लुट् भवतीत्युक्तत्वात् भाष्ये अनद्यतनवाचिनः 'श्वः' इत्यस्य प्रयोगात् 'स्थाता' इति प्रयोक्तव्यम् । कथं 'तिष्ठति' इति प्रयोगः? इत्यत आह– **तिष्ठतीति लुडर्थ इति** ।। 'व्यत्ययो बहुलम्' इत्युक्तेरिति भावः । किमर्थमेवमुक्तम्? 'स्थाता' इत्येव कुतो नोक्तम्? इत्यत आह– **अनादरेति** ।। कालविशेषेऽनादरसूचनायेत्यर्थः ।। **वर्तमानेति** ।। श्व इति पदेन ह्यद्यतनकालस्य ततः पूर्वतनकालस्य चेत्यर्थः ।। **ततः क्रियाप्रबन्धे लडिति** ।। अस्यार्थो द्वादशाध्याय एवोक्तो ध्येयः ।। १ ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **सुपिस्थ इति क इति** । तथाच कित्त्वादातो लोप इटिच इत्याकारलोप इति भावः ।। ननु श्वोपीत्युक्त्वात् न स्थातेति वक्तव्यम् । तिष्ठतीति किमर्थमुक्तमित्यत आह– **लुडर्थे अनादरसूचनायेति** ।। तदादरे हि श्व एव एकप्रकारेणाव-

श्लोकः १

स्थानाभावात् लाभात् एकप्रकारेणावस्थानमिति प्रतीयते । तच्च प्रतिक्षणं विकारित्वादयुक्त-मित्यतः तदनादर इत्यर्थः । तथाचापिशब्दस्य कैमुत्यन्यायेन गृहीतार्थत्वात् । गर्हायां लडपि जात्वोरित्यनेन गर्हार्थकापिशब्दयोगे लडिति भावः। **क्रिया प्रबन्धे लडिति ।** क्रियासातत्य-रूपक्रियाप्रबन्धे लडित्यर्थः । एतच्च द्वादशे विवृतं तत एवावगन्तव्यम् ।।

**भावरत्नकोशः (सु.टि.)–** कथमनेन घटनाप्रतीतिः इत्यत उपपादयति– **तानि हीति ।।** भूतानीत्यर्थः । **अपकृष्टानि** अप्रधानानि । **सुपि स्थ इति क इति ।।** सुबन्त उपपदे 'ष्ठा गतिनिवृत्तौ' इति धातोः कप्रत्ययो भवतीति सूत्रात् कप्रत्यय इत्यर्थः । कित्त्वाद् 'आतो लोप इटि च' इत्याकारलोपश्चेति भावः । तथापि 'श्वत्थः' इति कथम् इत्यत उक्तम्– **श्वसः सकारस्येति ।।** कुत एतद् द्वयमित्यत उक्तम्– **निरुक्तत्वादिति ।।** 'वर्णागमो वर्णविपर्ययश्च तथाऽपरौ वर्णविकारनाशौ इति वचनात् सकारस्य तकारो विकारः, 'धात्वादेः षः सः' इति शास्त्रप्राप्तस्य धातुसकारस्य लोपश्च द्रष्टव्य इत्यर्थः । श्वस्तनकालस्य भविष्यदनद्यतनकालत्वात् तत्र च अनद्यतने लुड्विधानात् कथं 'श्वस्तिष्ठति' इति विग्रहप्रदर्शनम् इत्यतो लुड्विधा-नानुसारेण विग्रहमाह– **श्वः स्थातेति ।।** एवं तर्हि भाष्ये 'तिष्ठति' इति कथं लट्प्रयोगः इत्यत आह– **तिष्ठतीति लुडर्थे चायं लडिति ।।** 'व्यत्ययो बहुलम्' इति वचनादिति भावः । व्यत्ययाभ्युपगमानुशयादाह– **अथवेति ।। वर्तमानातीतयोः** कालयोः । एवमपि अद्य पूर्वेद्युश्च न तिष्ठतीति लङ्युक्त एव इत्यत उक्तम्– **तत इति ।।** क्रियाणां प्रबन्धः क्रियाप्रबन्धः सातत्येनानुष्ठानम्, तस्मिन् गम्यमाने विहितः यः लट् सोऽत्र निष्पाद्य इत्यर्थः ।

यद्यपि 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति सूत्रे भूतानद्यतने भविष्यदनद्यतने च यौ लङ्लुटौ विहितौ तयोः प्रतिषेधः क्रियते । 'अनद्यतनवत् प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये गम्यमाने' इति च लुट्लटोरनद्यतने प्रतिषेध एव कृतः, न पुनर्लङ् विहितः । तथापि सूत्रे 'अद्यतनवत् क्रियाप्रबन्धसामीप्ययोः' इति कर्तव्ये यद् द्वौ प्रतिषेधौ प्रायुङ्क्त तद् यथाप्राप्तस्यापि अभ्यनुज्ञानाय इति वृत्तिकारवचनेन भूतभविष्यदनद्यतनवत् प्रत्ययौ न भवत इत्यनवगमेन अनद्यतने प्रतिषेधानवगमाद् अद्यतनप्रत्ययो लट् भवत्येवेति भावेन 'क्रियाप्रबन्धे लट् इत्युक्तमिति स्वामिनः ।

केचित्तु 'अनादरसूचनाय' इति पाठमुपलभ्य अनादरः अतात्पर्यम्, लुटि प्रयुक्ते श्वस्तनकाले तात्पर्यं विज्ञायेत, तथा भविष्यकाले एव अवस्थानाभावः, न वर्तमानातीतकालयो-

रित्यापद्येत । लटि तु प्रयुक्ते तेन वर्तमानकालताप्रतीत्या 'श्वस्तिष्ठति' इत्यनयोः पदयोः अनन्वयात्, आप्तवक्यस्य चाप्रामाण्यायोगात् श्वस्तनकाले वक्तुस्तात्पर्याभावो विज्ञायत इति व्याख्याय, 'ननु श्वस्तिष्ठति' इत्युक्तत्वात् तत्र तात्पर्याभाव इत्ययुक्तम् नियामकाभावेन वैपरीत्यस्यापि सम्भवात्, इत्याशङ्क्य पक्षान्तरमाह 'अथवेति' इति व्याकृतवन्तः ।

तर्हि एकप्रकारेण बहुकालाव्यापित्वे व्याघातः । एकप्रकारेण अनवस्थानस्य एकप्रकारेण अवस्थानलक्षणाव्ययत्वेन विप्रतिषेध इत्यर्थः । 'तथापि' इत्यस्यार्थः– **विकारित्वेऽपीति** ।। **एतदपि** 'न प्रवाहव्ययः' इत्येतदपि । **प्रलये** सर्वकार्यध्वंसाधिकरणकाले । ननु फलकारणत्वलिङ्गेन कथं पर्णत्वानुमानम् यागादृष्टादौ व्यभिचारात् इत्यत आह– **फलकारणत्वसादृश्यादित्यर्थ इति** ।। फलशब्देन प्रसिद्धकदलीफलादिग्रहणे कथं तत्कारणत्वं छन्दसाम् इत्यत आह– **तत्र फलमिति** ।। **तत्र** भाष्ये । **मोक्षादिकं** 'विवक्षितम्' इति शेषः । मोक्षादिरूपं फलं च छन्दोभिरेव निष्पादनीयमिति भावः । गायत्रीउष्णिगनुष्टुबादिप्रतीतिनिरासायोक्तम्– **वेदानामिति** ।। कुतः 'इत्यतः' इति शेषः । भाष्ये प्रथमतो व्यतिरेकोक्तिः व्यभिचाराभावं द्योतयितुम् इति मनसि निधाय 'अन्वयव्यतिरेकाभ्याम् ' इति स्वोक्त्यनुसारेणाह– **किन्तु जात एवेतीति** ।। तथा च वक्ष्यते 'पत्रेभ्यो हि फलं जायते' इति ।

**गीताक्षरार्थस्तु** 'ऊर्ध्वमूलम्' इत्यादिपञ्चश्लोक्यक्षरार्थस्तु त्रयोदशाध्याये संसारमूलभूतप्रकृत्युपादानकमहदहङ्कारादितत्त्वजातं क्षेत्रशब्दितं जगत्स्वरूपमुक्तम् । तन्मूलकसंसारात्ययोपायश्च 'य एनं वेत्ति पुरुषम्' इत्यादिना दर्शितम् । तदुभयमत्र विविच्य प्रदर्श्यते । ननु समनन्तरातीताध्याय एव तद्द्वयमुक्तम् । सत्यम् । तथापि तत्र संसारैकदेशानां गुणानामेव वृत्तं दर्शितम् । अत्र पुनः समग्रं संसाररूपं प्रदर्श्य, तदत्ययेच्छाम् उत्पाद्य, तत्साधनजिज्ञासुं प्रति प्रागुक्तं साधनं प्रपञ्च्यते । अत एव चतुर्दशाध्यायानन्तर्यमस्य । तत्सङ्गाद् अलौकिको भगवन्महिमा चात्रोच्यते ।

तत्र समग्रसंसारस्वरूपं तावदुच्यते– **ऊर्ध्वमित्यादिसार्धश्लोकद्वयेन** ।। उन्नतो ह्यूर्ध्व उच्यते । विष्णुश्च सर्वस्मात् प्रपञ्चात् सर्वैर्गुणैरुन्नत इत्यूर्ध्वशब्दार्थः । तथा श्रियः परतन्त्रेषूत्तमत्वाद्, अचित्प्रकृतेः सत्त्वादिगुणसहिताया अचेतनेषूत्तमत्वाद् ऊर्ध्वशब्देन जडाजडप्रकृती च गृह्येते । यद्यपि 'ऊर्ध्वो विष्णुः' इति भाष्ये विष्णुरेक एवोर्ध्वशब्दार्थः प्रतीयते । तथापि

श्लोकः १

'मूलानि भगवद्रूपादीनि' इति भाष्यटीकायाम् आदिपदेन जडाजडप्रकृत्योः सत्त्वादिगुणानां च ग्रहणम् । तेषामपि 'ऊर्ध्वमूलम्' इत्यत्र विवक्षितत्वादिति विष्णुचिदचित्प्रकृतिसत्त्वरजसुतमोगुणानां मूलत्वेन गृहीतत्वादत्र तेषां ग्रहणं युक्तम् । ऊर्ध्वाः उत्तमा विष्णुश्रीतत्त्वजडप्रकृतिसत्त्वरजसुतमोगुणा मूलानि यस्य स तथा तम् ।

अत्रायं विवेकः । प्रसिद्धवृक्षस्य पृथिवीदेवतावत् जगद्वृक्षस्य हरिः चेतनप्रकृतिश्च निमित्तत्वेनैव मूलम् । अचित्प्रकृतिस्तु मृद्वत् उपादानतया, सत्त्वादयो भूम्यन्तर्गतपादाख्यार्वाचीनमूलम्' इति । अधःशाखम् अधः मूलापेक्षया अपकृष्टानि पञ्चभूतानि शाखा इव शाखा यस्यासौ अधःशाखः, तम् । 'नीचास्ततो महदहंबुद्ध्यो भूतसंयुताः' इत्युत्तरप्रस्थान एव इत्यतोऽत्र शाखाशब्देन पञ्चभूतानि देवमनुष्यतिरश्चां शरीराणि चोपशाखाः भाष्यटीकोक्ता एव ग्राह्याः । श्वः स्थाता श्वस्स्थः। 'सुपि स्थः' इति कः, श्वस्स्थो न भवतीति अश्वस्स्थः, स एव अश्वत्थः, तम् । श्वसः सकारस्य तकारः, धातुसकारस्य लोपश्च निरुक्तत्वात् । पूर्वेद्युः, अद्य श्वोऽपि एकप्रकारेण अनवस्थायिनमित्यर्थः । एवं विकारिणोऽपि न प्रवाहव्यय इत्युच्यते– **अव्ययमिति** ।। नन्विदमयुक्तम् । जगत्प्रवाहस्य प्रलये व्ययात् इति चेन्न । पूर्वब्रह्मकाले यथा स्थितः तथा सर्वदाऽपि जगद्वृक्षः स्थायी । 'धाता यथापूर्वमकल्पयत्' इति श्रुतेरित्यभिप्रायात् । यस्य च्छन्दांसि वेदान् फलकारणत्वसादृश्यात् पर्णानि प्राहुः प्राज्ञाः । लोके पर्णोत्पत्त्यनन्तरमेव फलदर्शनात् अत्रापि अवबुद्धार्थैः वेदैरेव मोक्षादिफलस्य भाव्यत्वात् छन्दसां पर्णत्वेन रूपणम् । यस्तं जगद्वृक्षं वेद ऊर्ध्वमूलत्वाद्युक्तप्रकारेण स वेदवित् वेदार्थवित् । संसारप्रपञ्चवृक्षस्य ईश्वरो मूलम्, भूतानि शाखाः, स एकप्रकारेणानवस्थायी, प्रवाहतोऽव्ययश्च, वेदादिबोधितमोक्षफलं च इत्येतावानेव हि वेदार्थः ।। १ ।।

**भावदीपिका (श्री.टि.)**– भूतानां शाखात्वमुपपादयति – **तानि हीति** ।। शाखानां मूलापेक्षयाऽपकृष्टत्वदर्शनात् भूतानामपि मूलभूतविष्णुजडाजडप्रकृतिगुणत्रयापेक्षयाऽपकृष्टत्वात् युक्तं शाखात्वमिति भावः ।।

**सुपि स्थ इति** ।। 'ष्ठा गतिनिवृत्तौ' इति धातोः कप्रत्ययः स्यादिति सूत्रार्थः । ष्ठाधातौ 'धात्वादेः षः सः' इति षकारस्य सकारे, 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति न्यायेन षत्वनिमित्तकष्टुत्वाभावे 'स्था' इति भवति । अतः सूत्रे 'स्थः' इत्युक्तम् । तथा च प्रकृते

श्वसुशब्दोपपदात् स्थाधातोः कप्रत्यये कित्त्वाद् 'आतो लोप इटि च' इति धात्वाकारलोपे 'श्वसुस्थ् अ' इति जाते, श्वसुशब्दे विद्यमानस्य सकारस्य तकारादेशे, धातुसकारस्य च लोपे, श्वत् थ् अ 'अश्वत्थ' इति रूपम् । एतत्सर्वं कुतः इत्यतो निरुक्तत्वात्, इत्युक्तम् ।

'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।।'

इति वचनात् । एतेषामुदाहरणानि तु– 'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ।।' इति । अत्र 'हसतीति हसः' इति भाव्येऽनुस्वाररूपवर्णागमेन 'हंसः' इति भवति । 'हिसि हिंसायाम्' इति धातोर्हिनस्तीति 'हिंसः' इति भाव्ये 'सि' इत्यस्य वर्णस्य पूर्वभावलक्षणवर्णविपर्ययेण 'सिंहः' इति भवति । 'गूढश्चासावात्मा च गूढात्मा' इति भाव्ये आकारस्य उकारत्वेन विपरिणामरूपवर्णविकारे पश्चात् गुणे च सति 'गूढोत्मा' इति भवति । पृषत् उदरं यस्य तत् 'पृषदुदरम्' इति भाव्ये तकाररूपवर्णनाशे पश्चाद्गुणे 'पृषोदरम्' इति भवति । 'मह्यां रौतीति मयूरः' इत्यत्र 'रु शब्दे' इति धातुः तस्यातिशयार्थकत्वमेव धातोस्तदर्थातिशयेन योगः । एवं च प्रकृते 'गूढोत्मा' इत्यत्रेव सकारस्य तकारत्वेन विपरिणामरूपवर्णविकारे 'पृषोदरम्' इत्यत्रेव धातुसकारस्य नाश इत्यवधेयम् ।

**किमुतेति** ।। श्वोऽपि यदा न तिष्ठति तदा कालान्तरे परश्वादौ न तिष्ठतीति किमुत वाच्यमित्यर्थः । ननु 'श्वोऽपि' इत्युक्तत्वात् 'न स्थाता' इति वक्तव्यम्, 'तिष्ठति' इति कथमुक्तम्? इत्यत आह– **लुडर्थ इति** ।। 'स्थाता' इति भविष्यदर्थ इत्यर्थः । **अनादरः** गर्हा । **लट्** वर्तमानार्थकलट्प्रयोगः । 'अपिः पदार्थसम्भावनाअन्ववसर्गगर्हासमुच्चयेषु' इति सूत्राद् अपिशब्दस्तावत् गर्हार्थः । तथा च 'गर्हायां लडपि जात्वोः' 'गर्हायां प्रवर्तमानयोरपि जात्वोर्योगे धातोर्लड् भवति' इत्युक्तत्वेन प्रकृते 'श्वोऽपि' इति गर्हार्थकापिशब्दयोगे 'तिष्ठति' इति वर्तमानार्थकलट्प्रयोगो युक्त इत्यर्थः । **वर्तमानातीतयोरिति** । तथाच 'अद्य पूर्वेद्युः' इत्यर्थः । नन्वेवं कालत्रयविवक्षायामपि 'अद्य श्वः पूर्वेद्युः न तिष्ठति' इति लट्प्रयोगः पुनरप्ययुक्त एव इत्यत आह– **ततः क्रियाप्रबन्ध इति** ।। 'क्रियासातत्ये' इत्यर्थः । तथा च 'न तिष्ठति' इत्यस्य कालत्रयेऽप्यवस्थानं नेत्यर्थः सम्पद्यत इति द्रष्टव्यम् । ननु 'वर्तमाने लट्' इत्येव विहितत्वात्, क्रियाप्रबन्धे लट् केन विहितः इति चेदुच्यते – 'पर्वतास्तिष्ठन्ति'

श्लोकः २

इत्यादिप्रयोगसिद्ध्यर्थं 'नित्यप्रवृत्ते च कालविभागात्' इति वार्तिकेन नित्यं वर्तनक्रियायां विवक्षितायां सत्यां लटो विधानादिति ज्ञेयम् । **तर्हीति** ।। एकप्रकारेणानवस्थारूपाश्वत्थत्वे इत्यर्थः । गायत्र्युष्णिगादिच्छन्दसां मोक्षादिफलकारणत्वाभावादाह– **छन्दांसि वेदानामिति** ।। 'पत्रेभ्यो हि फलं जायते' इति श्रुत्यनुसारादाह– **किन्त्विति** ।।

**भावप्रकाशः (कृ.टि.)– ।। सुपि स्थ इति क इति** ।। 'सुपि स्थः' इत्यत्र 'सुपि' इति योगविभागात् कः । कित्वादातो लोपश्चेति भावः । श्वस्तनकालस्यानद्यतनभविष्यत्कालत्वात् तत्र च 'अनद्यतने लुट्' इति लुड्विधानात् कथं श्वस्तिष्ठतीति विग्रहप्रदर्शनमित्यतो लड्विधानानुसारेण विग्रहमाह– **श्वः स्थातेति** ।। एवं तर्हि तिष्ठतीति लट्प्रयोगः किमर्थमित्यत आह– **तिष्ठतीति लुडर्थ इति** ।। अहस्तत्पूर्वोत्तरार्धरात्रद्वयश्चेत्येषोऽद्यतनः कालः तद्भिन्न भविष्यत्कालो लुडर्थः, तस्मिन्नित्यर्थः अनादरोऽतात्पर्यम् । लुटि प्रयुक्ते श्वस्तनकाले तात्पर्यं ज्ञायते । तथा च भविष्यत्काल एवैकप्रकारत्वाभावो न वर्तमानातीतयोरित्यापद्येत । अतो लट् प्रयुक्तः । तेन च श्वस्तिष्ठतीत्यनयोः व्याघातादाप्तवाक्यस्य चाप्रामाण्यायोगात् । श्वस्तनकाले वक्तुस्तात्पर्याभावो ज्ञायत इति भावः ।

ननु 'श्वस्तिष्ठति' इत्युक्तत्वात् लुडर्थे तात्पर्यमिति किं न स्यान्नियामकाभावादित्यत आह– **अथवेति** ।। **क्रियाप्रबन्ध इति** ।। क्रियासातत्ये लडित्यर्थः । ननु फलकारणत्वलिङ्गेन पर्णत्वानुमाने बाधादित्यत आह– **फलेति** ।। प्रसिद्धाम्रादिफलकारणत्वं छन्दसां कथमित्यत आह– **अत्र फलं मोक्षादिकमिति** ।। आदिपदेन कामग्रहणम् । 'काममोक्षफले ह्यतः' इति तात्पर्योक्तेः । गायत्र्यादिच्छन्दसां मोक्षादिफलकारणत्वाभावादाह– **वेदानामिति** ।। १ ।।

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ।।२।।**

## भाष्यम्

**अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीति अधश्चोर्ध्वं च प्रसृताः । गुणैः सत्त्वादिभिः । प्रतीतिमात्रसुखत्वात् प्रवालाः विषयाः । मूलानि भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति ।।**

भावप्रदीपिका (प.टी.)– 'अधश्चोर्ध्वम्' इत्येतद्व्याचष्टे– **अव्यक्तेति** । शाखाः पञ्चमहाभूतानि, अधः इति स्वापेक्षया निकृष्टशरीरेषु, ऊर्ध्वम् उत्कृष्टप्रकृतौ प्रसृतानि इत्यर्थः । गुणशब्दस्यानेकार्थत्वात्, विवक्षितार्थमाह– **गुणैरिति** । विषयानां प्रवालत्वे विवक्षामाह– **प्रतीतिमात्रेति** । पूर्वं मूलस्यैकवचनेनोक्तत्वान्मूलानीत्यन्यानीति प्रतीतिं पराकरोति– **मूलानीति** । आदिपदात् प्रकृत्यादीनि । 'कर्मानुबन्धीनि' इति श्रवणात् मूलानि जीवा इत्यत आह– **भगवानपीति** ॥

प्रमेयदीपिका (ज.टी.)– **'अधश्च'** इत्येतद् घटयति– **अव्यक्तेऽपीति** ॥ अनेन 'तस्य शाखा भूतानि अधश्च स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये च ऊर्ध्वं चोत्तमे कारणेऽव्यक्ते च प्रसृताः सूक्ष्मरूपेण सन्तीति व्याख्यातं भवति । 'प्रसृता इत्यनेनोच्यन्ते' इति शेषः । 'अधः पातालादूर्ध्वं स्वर्गादौ' इत्यादि व्याख्याने प्रकृतपरित्यागाप्रकृतप्रक्रिये प्रसज्येते । गुणशब्दस्यानेकार्थत्वात् **गुणप्रवृद्धाः** इत्यत्र विवक्षितमर्थमाह– **गुणैरिति** ॥ अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति। सत्वादयश्चार्वाचीनमूलानीति वक्ष्यति। विषयाणां प्रवालत्वं घटयति– **प्रतीतिमात्रेति** ॥ प्रतीतिसमयमात्रसुखहेतुत्वादित्यर्थः । विमर्दनासहत्वसाम्यादिति भावः । विषयाः प्रवाला इति सम्बन्धः ॥

**'अधश्च मूलानि'** इत्यत्र 'रागद्वेषादिवासनामूलानि' इति व्याख्यानमसत् । प्रक्रमविरोधादिति भावेनाऽह– **मूलानीति** ॥ आदिपदेन जडाजडप्रकृत्योः सत्त्वादीनां च ग्रहणम् । तेषामपि 'ऊर्ध्वमूलम्' इत्यत्र विवक्षितत्वात् । ननु भगवतः कथं कर्मानुबन्धित्वम्? इत्यत आह– **भगवानपीति** ॥ अत्र कर्मानुबन्धित्वं नाम कर्मानुसारित्वम् । तच्च कर्मसम्बन्धेन फलदातृत्वाद् भगवतोऽपि युक्तमित्यर्थः । यद्वा, कर्म एवानुबन्धः चरमभाविकारणं कर्मानुबन्धः । तद्वत्त्वं कर्मानुबन्धित्वम् । तदपि कर्मानुबन्धेन फलदातृत्वात् भगवतोपि युज्यत इति ॥

भावबोधः (र.टि.)– ॥ **प्रकृतेति** ॥ ऊर्ध्वाधश्शब्दार्थत्वेनोत्तमनिकृष्टयोरेव प्रकृतत्वान्नोर्ध्वाधोलोकयोरित्यर्थः । व्यावर्त्यकथनपूर्वकं मात्रपदाभिप्रायमाह– **विमर्दनेति** ॥ विषयेषु विमर्दनं नाम स्थायित्वशोभनत्वादिविमर्शः । **इति सम्बन्ध इति** ॥ विषयानुद्दिश्य प्रवालत्व-

श्लोकः २

विधानादिति भावः । **प्रक्रमविरोधादिति** ।। ऊर्ध्वमूलमित्यत्र मूलत्वेन भगवद्रूपादीनामेव प्रक्रमादित्यर्थः । प्रकृतिः समूलमित्यादिप्रमाणानुसारेणादिशब्दार्थमाह– **आदिपदेनेति** ।। ननूर्ध्वमूलमित्यत्र प्रकृत्यादीनां मूलत्वेनानुक्तत्वात् कथं प्रक्रमविरोध इत्यत आह– **तेषामपीति** ।। **चरमभाविकारणमिति** ।। कर्मणि कृते प्रयत्नोऽप्यवश्यं भावीति कर्मैव चरमभाविकारणमित्यर्थः ।। २ ।।

**भावदीपः (रा.टि.)–** ।। **तस्येति** ।। जगद्वृक्षस्येत्यर्थः । **स्वापेक्षयेति** ।। स्वशब्देन भूतपरामर्शः ।। **प्रकृतेति** ।। अव्यक्तभूतादिक्षेत्रस्थितस्वरूपस्यैव प्रकृतत्वात् तत्त्यागोऽप्रकृतप्रकरणं च प्रसज्यत इत्यर्थः । **साम्यादिति** ।। प्रवालशब्दितपल्लवसाम्यादित्यर्थः । **प्रक्रमेति** ।। ऊर्ध्वपदेन ब्रह्मप्रकृत्यादेरेव प्रक्रमात् तद्विरोध इत्यर्थः । तत्कथम् इत्यत आह– **तेषामपीति** ।। **चरमभाविकारणमिति** ।। फलभोगादिकार्योत्पत्ताविति योज्यम् ।।

**भावरत्नकोशः (सु.टि.)–** ।। **अधश्चेत्येतद्** 'अधश्चोर्ध्वं च प्रसृताः' इत्येतत् । भाष्ये सोपस्कारमन्वयं दर्शयंस्तत्तात्पर्यमाह– **अनेनेति** ।। 'प्रसृताः' इति भाष्यं साकाङ्क्षम् इति तत्र शेषमाह– **इत्यनेनोच्यत इति शेष इति** ।। **उच्यते** 'सूक्ष्मरूपेण सन्तीत्ययमर्थः' इति शेषः । **इत्यादिव्याख्यान इति** ।। अत्र आदिपदेन 'अधो मनुष्यादिभ्यो यावत् स्थावरम् अत ऊर्ध्वं च यावद् विश्वसृजो धाम महान् इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः' इति शाङ्करीयम्, 'अधश्चोर्ध्वं च प्रसृताः हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः, तेषु च ये दुष्कृतिनः ते अधः पश्वादियोनिषु प्रसृताः, ये च सुकृतिनः ते देवादियोनिषु प्रसृताः' इति श्रीधरीयं व्याख्यानं ग्राह्यम् । **प्रकृतेति** ।। 'ऊर्ध्वमूलमधःशाखम्' इत्यत्र ऊर्ध्वम् उत्कृष्टं ब्रह्म, तत् मूलं यस्य स ऊर्ध्वमूलः तम्, अधःशाखं महदहङ्कारतन्मात्रादयः शाखा इव अस्य अधो भवन्तीति सोऽयम् अधःशाखः तम्' इति शङ्करव्याख्याने ऊर्ध्वाधःशब्दाभ्याम् उत्कृष्टापकृष्टयोरेव प्रकृतत्वात् पातालस्वर्गयोः स्थावरपर्यन्तब्रह्मपर्यन्तयोर्वा अप्रकृतत्वात्, श्रीधरीयव्याख्यानेऽपि 'उर्ध्वः उत्तमः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम्, अधःशाखम् अपकृष्टाः कार्योपाधयो हिरण्यगर्भादयो जीवाः शाखा इव शाखा यस्य तम् इत्यभिमानेन उत्कृष्टापकृष्टयोरेव प्रकृतत्वात् प्रकृतार्थस्य परित्यागः, अप्रकृतपातालस्थावरपर्यन्तत्वब्रह्मपर्यन्तत्वादेश्च प्रक्रिया प्रकरणम्, स्वीकार इति यावत्, ते प्रसज्येते इत्यर्थः ।

श्लोकः १

गुणानां सत्त्वरजस्तमसां शाखाप्रवृद्धिहेतुत्वं 'सत्त्वादयोऽर्वाचीनमूलम्' इत्युक्तिम् अनुरुन्धान उपपादयति– **अर्वाचीनमूलैर्हीति** ।। **वक्ष्यते** 'सत्त्वादयोऽर्वाचीनमूलम् ' इति भाष्योदाहरिष्यमाणश्रुतौ । प्रतीतिशब्देन तत्समयः, सुखशब्देन तद्धेतुश्च लक्षणीय इति भावेनाह– **प्रतीतिसमयमात्रे सुखहेतुत्वादिति** ।। एवमपि प्रवालशब्दः कथं विषयेषु प्रवर्तते इत्यतो भाष्यभावमाह– **विमर्दनासहत्वसाम्यादिति** ।। विषयेषु विमर्दनं नाम स्थायित्वशोभनत्वादिरूपः क्षोदः, तदक्षमत्वसाम्याद् गौणोऽयं शब्द इति भावः । भाष्योक्तं प्रवालानां विषयत्वविधानं न गीतानुगुणम् इत्यतः सम्बन्धं दर्शयति– **विषया इति** ।।

।। **इति व्याख्यानमिति** ।। तथा च शङ्करः 'संसारवृक्षस्य परममूलम् उपादानम् 'ऊर्ध्वं ब्रह्म मूलमस्य' इतीश्वर एव मुख्यं मूलमित्युक्तम् । अथेदानीं कर्मफलजनितरागद्वेषादिवासना मूलानीव धर्माधर्मप्रवृत्तिकारणानि, अधश्च देवादियोन्यपेक्षया मूलान्यनुसन्ततानि' इति । **प्रक्रमेति** ।। 'ऊर्ध्वमूलम्' इत्यत्र ब्रह्मण एव मूलत्वेन प्रकृतत्वात् तद्विरोधो रागद्वेषादिवासनानां मूलत्वाभ्युपगमे इत्यर्थः । ननु पूर्वम् 'ऊर्ध्वो विष्णुर्मूलम्' इति भाषितम् । अत्र पुनः विष्णुजडाजडप्रकृतिसत्त्वादीनां मूलत्वाभ्युपगमे प्रक्रमविरोधः स्वपक्षेऽपि कस्मान्न स्यात् इत्यत आह– **तेषामपीति** ।। **कथमिति** ।। मूलानि भगवद्रूपादीनि, तत्र च कर्मानुबन्धित्वं विशेषणम् । कर्ममात्रविधुरे भगवति कर्मसम्बन्धो न युक्तः इत्याक्षेपः । 'फलं ददाति' इत्यस्य तात्पर्यम्– **फलदातृत्वादिति** ।। अनुबन्धशब्दस्य सम्बन्धे प्रयोगप्राचुर्याभावात् 'अनुबन्धादिभ्यः' इत्यादौ अन्यार्थत्वदर्शनाद् अत्र च तद्ग्रहणं न युक्तम् इत्यतश्च पक्षान्तरमाह– **यद्वेति** ।। **कर्मैव** धर्माधर्मलक्षणम् । **चरमभावीति** ।। फलदाने वैषम्यनैर्घृण्यपरिहाराय अन्ततो भगवताऽपि कर्मणोऽपेक्षणीयत्वात् तस्य चरमभावित्वम् । मनुष्यलोके यत् समार्जितं कर्म तत् स्वर्गनरकलक्षणफलं प्रति चरमभाविकारणमित्यर्थ इति आहुः । अन्ये तु भगवदपेक्षया अविद्यायोग्यतापेक्षया च अधमं कारणं कर्म फलदाने इति 'चरमभावि' इत्युक्तम् इत्याहुः । भगवानपि इति भाष्यं 'कर्मानुबन्धित्वश्रवणात् मूलानि जीवा एव भवेयुः' इति शङ्कापनोदाय प्रवृत्तमित्युक्तम् भावप्रदीपिकायाम् ।

**भावदीपिका (श्री.टि.)**– ।। **तस्य** जगद्वृक्षस्य । **शरीरादौ कार्य इति** ।। 'व्याप्तं कार्येषु कारणम्' इति वचनादिति भावः । **कारण इति** ।। 'कारणेषु स्थितं कार्यम्' इति वचनादिति भावः । **प्रकृतेति** ।। ऊर्ध्वाधःशब्दार्थत्वेन उत्तमनिकृष्टावेव प्रकृतौ

श्लोकः २

नोर्ध्वाधोलोकौ । अतः प्रकृतपरित्यागाप्रकृतप्रक्रिये प्रसज्येत इत्यर्थः । स्यादिदं यदि गुणानाम् अर्वाचीनमूलत्वं स्यात् इत्यत आह– **सत्त्वादयश्चेति** ।। **वक्ष्यतीति** ।। उत्तरत्रोदाहरिष्यमाण-भाल्लवेयश्रुतौ 'सत्त्वादयोऽर्वाचीनमूलम्' इत्युक्तत्वादिति भावः । अत्र वृक्षसहभूतमूलभूतजड-प्रकृतेरेव गुणत्रयात्मकत्वात् पृथग्ग्रहणमयुक्तम् । तथाऽपि गुणत्रयात्मकमूलप्रकृत्या गुणवैषम्येण सृष्टाः सत्त्वादयोऽत्र ग्राह्य इति द्रष्टव्यम् ।

**विमर्दनेति** ।। विषयेषु विमर्दनं नाम स्थायित्वशोभनत्वादिविमर्शः । स्थायित्व-शोभनत्वादिविमर्शाक्षमत्वादित्यर्थः । **प्रक्रमेति** ।। भगवत एव 'ऊर्ध्वमूलम्' इत्यत्र मूलत्वेन प्रकृतत्वादित्यर्थः । 'प्रकृतिः समूलम्' इति प्रमाणानुसारेणादिपदार्थमाह– **आदिपदेनेति** ।। नन्वत्र पूर्वं मूलत्वेनोक्तानाम् अधोऽनुसन्ततत्वं कथ्यते । पूर्वं च भगवद्रूपाण्येव 'ऊर्ध्वमूलम्' इत्यत्र मूलत्वेनोक्तानि, नेतरे । अतोऽत्र प्रक्रमविरोधः इत्यत आह– **तेषामपीति** ।। **कथमिति** ।। तस्य कर्माभावादिति भावः । **चरमभावीति** ।। वेदाप्रामाण्यहेतुभूतवैषम्यादि-दोषपरिहाराय अन्ततो भगवताऽपेक्षणीयत्वात् कर्मणश्चरमत्वं द्रष्टव्यम् । कर्मणि कृते प्रयत्नोऽप्यवश्यम्भावीति कर्मैव चरमभावि कारणमित्यर्थ इत्यपि आहुः । **कर्मानुबन्धेन** कर्मलक्षणचरमकारणेन ।

**भावप्रकाशः (कृ.टि.)– ।। इत्यादि व्याख्यान इति** ।। 'अधो मनुष्यादौ स्थावर-पर्यन्ते ऊर्ध्वं ब्रह्मपर्यन्ते' इति व्याख्यानमादिपदेन ग्राह्यम् । **प्रकृतेति** ।। ऊर्ध्वमूलमधःशाख-मित्येतत्परेण व्याख्यातम् 'ऊर्ध्वं ब्रह्म तन्मूलमस्येत्यूर्ध्वमूलम् । महदहङ्कारतन्मात्रादयः शाखा इवास्याधो भवन्ति इति सोयमधःशाखः, तम् अधःशाखम्' इति । तथा चोर्ध्वाधः-शब्दार्थत्वेनोत्तमापकृष्टयोरेव प्रकृतत्वादूर्ध्वाधोलोकयोः स्थावरपर्यन्तब्रह्मपर्यन्तयोश्चाप्रकृतत्वादिति भावः । **अर्वाचीनेति** ।। अर्वागेवार्वाचीनम् । विभाषाञ्चेरदिक् स्त्रियामिति स्वार्थे खः । तस्येनादेशश्चेति भावः । व्यावर्त्यकथनपूर्वकं मात्रपदाभिप्रायमाह– **विमर्दनेति** ।। विषयेषु विमर्दनं नाम स्थायित्वशोभनत्वादिविमर्शः । ननु विषयानुदिश्य प्रवालत्वस्य विधेयत्वात् कथं प्रवाला विषया इति निर्देश इत्यत आह– **विषया इति** ।। **रागद्वेषादीति** ।। रागद्वेष-व्यतिरिक्तप्रवृत्त्यवान्तरकारणसङ्ग्रहायादिपदम् ।

**प्रक्रमेति** ।। 'ऊर्ध्वमूलम्' इत्यत्र ऊर्ध्वं ब्रह्म तन्मूलमस्येति परेण व्याख्यातत्वादिति भावः । ननु 'ऊर्ध्वमूलम्' इत्यत्र प्रकृत्यादीनां मूलत्वेनानुक्तत्वात् कथमत्र तद्ग्रहणमित्यत

आह– **तेषामपीति** ।। वक्ष्यमाणप्रमाणानुसारादिति भावः । **कथं कर्मानुबन्धित्वमिति** ।। भगवत्त्वादेव कर्मबन्धरूपं कर्मानुबन्धित्वं न युक्तं इत्यर्थः । ननु कर्मानुबन्धित्वं न कर्मसम्बन्धित्वम् । अनुपूर्वस्य बन्धधातोः सम्बन्धे प्रयोगबाहुल्याभावादित्यत आह– **यद्वेति** ।। **चरमभावीति** ।। कर्मणि कृते प्रयत्नोऽप्यवश्यं भावीति कर्मणश्चरमभावित्वमिति भावः । यद्वा मनुष्यलोके यत्कर्म धर्माधर्मलक्षणं तत्स्वर्गनरकरूपफलं प्रति चरमभाविकारणमिति बोध्यम् ।

## भाष्यम्

**तथा च भाल्लवेयशाखायाम्– 'ब्रह्म वा अस्य पृथङ् मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीनमूलम् । भूतानि शाखाः छन्दांसि पत्राणि देवनृतिर्यश्चश्च शाखाः ।। पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलम्, अमुक्तिः फलम् । मोक्षो रसः, अमोक्षो रसः । अव्यक्ते च शाखाः । व्यक्ते च शाखाः । अव्यक्ते च मूलम्, व्यक्ते च मूलम् । एषोऽश्वत्थो गुणाऽलोलपत्रो न स्थीयते न न स्थीयते न ह्येष कदाचनान्यथा जायते नान्यथा जायते' इति ।। २ ।।**

भावप्रदीपिका (प.टी.)– श्लोकद्वयार्थे प्रमाणमाह– **तथा चेति** । पृथङ्मूलं भूमिवत्, प्रकृतिरपि बुध्नम् । अर्वाचीनमूलं भूम्यन्तर्गतम् । छन्दांसि पत्राणि इत्यस्योपपादकम्– **पत्रेभ्यो हीति** । अधश्च मूलानि इत्यस्यार्थः अव्यक्ते च मूलमित्यादि । अश्वत्थः इत्यस्योपव्याख्यानम्– **न स्थीयतेऽनेनेति** । न न स्थीयते इत्यव्ययत्वस्य न ह्येष इति तदुपपादनम् । नान्यथा इत्यभ्यासः ।। २ ।।

प्रमेयदीपिका (ज.टी.)– श्लोकद्वयार्थे श्रुतिसम्मतिं चाह– **तथा चेति** ।। **अस्य** जगद्वृक्षस्य **पृथक्** वृक्षानन्तर्गतम् । सहभूतं मूलं **समूलम्** । **अर्वाचीनमूलं** भूम्यन्तर्गतपादाख्यम् । छन्दांसि इत्यस्योपपादनम्– **पत्रेभ्यो हीति** ।। देवादिशरीराणि चोपशाखाः । **मात्राः** भूतसूक्ष्माणि । **शिफाः** जटाः । मुक्त्यमुक्तिशब्दाभ्यां मोक्षतदितरपुरुषार्थसाधने ज्ञानकर्मणी उच्येते । **फलम्** अवान्तरम् । **मोक्षामोक्षाशब्दाभ्यां** तु पुरुषार्थावेव । रसः श्रेष्ठफलम् । गुणाः विषयाः । आलोलपत्राणि प्रवालपत्राणि

श्लोकः २

**यस्यासौ तथोक्तः । न स्थीयते इत्यनेनाश्वत्थशब्दार्थकथनम् । तत्किं क्षणिकः? न न स्थीयते प्रवाहव्ययो नास्तीत्यर्थः । तस्योपपादनम्– न हीति ।। द्विरुक्तिस्तात्पर्यार्था ।। २ ।।**

**भावदीपः (रा.टि.)–** अपौनरुक्त्याय साधनफलत्वेनार्थभेदमाह– **मुक्त्यमुक्तिशब्दाभ्याम् इत्यादिना ।। २ ।।**

**भावरत्नकोशः (सु.टि.)–** 'ब्रह्मशब्दार्थो विष्णुरेव' इति सिद्धं कृत्वा इदंशब्दार्थमाह– **अस्य जगद्वृक्षस्येति** ।। पृषोदरादिभावेन सहशब्दस्य सभावमभ्युपगम्याह– **सहभूतं मूलं समूलमिति** ।। वृक्षस्वरूपान्तर्गतमित्यर्थः । **पादाख्यमिति** ।। प्रधानमूलानुस्यूतमूलमित्यर्थः । अत एव वृक्षे पादपशब्द इति भावः । देवनृतिर्यक्शब्दैः देवादिशरीराणि, शाखाशब्देन 'भूतानि शाखाः' इत्यनेनाविसंवादाय उपशाखा ग्राह्या इति भावेन व्याचष्टे– **देवादीति** ।। **उपशाखाः** प्रधानशाखानुस्यूताः शाखाः ।'मीयन्ते इति मात्राः विषयाः' इति स्वीकारे 'विषयप्रवालाः' इत्ययुक्तम् इत्यतोऽर्थान्तरमाह– **मात्रा भूतसूक्ष्माणीति** ।। भूतोपादानभूताः पञ्चतन्मात्राः शब्दादय इत्यर्थः । द्विविधाः हि शब्दादयः 'भूतोपादानभूताः' 'भौतिकाश्च' इति । तत्राद्यानां शिफात्वेनात्र रूपणम्, अन्त्यानां तु प्रवालत्वेनेति नानुपपत्तिरिति हृदयम् । **साधने इति** ।। 'मुच्यतेऽनेन' इति करणे क्तिनि मुक्तिशब्दोऽत्र मोक्षसाधनज्ञानवचनः । 'न मुच्यतेऽनेन' इति अमुक्तिशब्दो मोक्षाद् अवरस्वर्गादिसाधनकर्मपरः । 'मुक्तिर्ज्ञानम्, अमुक्तिः कर्म च' इत्येवं ज्ञानकर्मणी वेदनिष्पाद्यत्वात् वेदफले इत्यर्थः । तयोः फलत्वं घटयति– **अवान्तरमिति** ।। महाफलहेतुत्वात् फलत्वं वैवक्षिकमिति भावः । पुरुषार्थविव अपवर्गस्वर्गाख्यौ । तथा च न पुनरुक्तिरिति भावः । यथा फले रस एव प्रशस्यः, एवं वेदफलेषु मोक्षः स्वर्गश्च प्रशस्य इति प्रशस्यत्वगुणयोगेन रसशब्दो गौण इति भावेनोक्तम्– **श्रेष्ठमिति** ।। अतिशयेन प्रशस्यमित्यर्थः । प्रशस्यस्य श्रः' 'अतिशायने तमबिष्ठिनौ' इति हि पाणिनिः ।

'अधश्चोर्ध्वं च प्रसृतास्तस्य शाखाः' इत्यत्र प्रमाणम् 'अव्यक्ते च शाखाः, व्यक्ते च शाखाः' इति । 'अधश्च मूलान्यनुसन्ततानि' इत्यत्र प्रमाणम्– 'अव्यक्ते च मूलम्, व्यक्ते च मूलम् इति । तत्र 'भूतशब्दिताः शाखा अव्यक्ते स्वकारणे सूक्ष्मरूपेण प्रसृताः सन्ति, व्यक्ते स्वकार्ये शरीरादौ च प्रसृताः' इत्यर्थस्य, अव्यक्ते प्रकृतौ व्यक्ते भूतादौ कार्ये च मूलं

भगवाननुसन्तत इत्यर्थस्य च, अनेन 'तस्य शाखाः भूतानि' इत्यादिनोक्तप्रायत्वात्, 'गुणालोलपत्रः' इत्येतद् दुर्गमार्थं व्याख्याति– **गुणा विषया इति** ।। 'न स्थीयते' इत्यत्रापेक्षितं कर्तारमध्याहरति– **अनेनेति** ।। **तत् तर्हि क्षणिकः** 'इत्यत उक्तम्' इति शेषः । **'न न स्थीयते'** इत्यनन्तरम् 'इति' इति शेषः । तर्हि पदार्थानां ध्रौव्यापत्त्या अभावावगाहि-प्रमाणविरोधः इत्यतः तथापि न प्रवाहव्ययः । पूर्वब्रह्मकल्पे यथास्थितः तथा सर्वदाऽपि इति भाष्यम् अर्थतोऽनुवदति– **प्रवाहव्यय इति** ।। **तस्य** प्रवाहव्ययो नास्तीत्यर्थस्य । **श्रुतौ** 'एषः' इति जगत्प्रवाहो विवक्षितः । **अन्यथा** पूर्वब्रह्मकल्पापेक्षया ।। २ ।।

**गीताक्षरार्थस्तु** 'किञ्च अधश्च ऊर्ध्वं च प्रसृताः तस्य जगद्वृक्षस्य शाखाः भूतानि अधश्च स्वापेक्षयाऽपकृष्टे शरीरादौ कार्ये च ऊर्ध्वं चोत्तमे कारणे अव्यक्ते च प्रसृताः प्रगताः सूक्ष्मरूपेण सन्ति । गुणैः अर्वाचीनमूलरूपैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृताः । अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । विषयाः शब्दादयः प्रवालाः पल्लवा इव यासां ताः तथा । प्रतीतिसमयमात्रे सुखहेतुतया विमर्दनासहत्वसाम्याद् विषयाणां प्रवालत्वोपचारः । अधश्च मूलापेक्षयाऽपकृष्टासु शाखासु भूतेषु मूलानि भगवद्रूपजडाजडप्रकृतिसत्त्वरजस्-तमोगुणलक्षणानि अनुसन्ततानि व्याप्तानि च । तानि च मूलानि कर्मानुबन्धीनि । अत्र कर्मानुबन्धित्वं कर्मसम्बन्धित्वम्, तच्च कर्मसम्बन्धेन फलदातृत्वाद् भगवतोऽपि युक्तम् । यद्वा कर्मैवानुबन्धः चरमभाविकारणं कर्मानुबन्धः, तद्वत्त्वं कर्मानुबन्धित्वम् । तदपि धर्माधर्मलक्षण-कर्मानुबन्धेन फलदातृत्वाद् भगवतोऽपि युज्यत इति । कर्मसापेक्षया फलदानं च मनुष्यलोक एव, न स्वर्गनरकादाविति– **'मनुष्यलोके'** इत्युक्तम् ।। २ ।।

**भावदीपिका (श्री.टि.)**– ।। **वृक्षानन्तर्गतमिति** ।। वृक्षस्वरूपानन्तर्गतं मूलभूमि-वदित्यर्थः । **सहभूतं** बीजवत् समग्रवृक्षस्वरूपान्तर्गतम् । **पादाख्यं** प्रधानमूलसम्बद्धक्षुद्रमूलवत् प्रत्यन्तमूलमित्यर्थः । देवादिशब्देन तच्छरीराणि विवक्षितानीत्याह– **देवादीति** ।। **उपशाखा इति** ।। शाखासम्बन्धिन्यः शाखा उपशाखाः, देवादिशरीराणि च शाखाभूतपञ्चमहाभूत-विकारित्वेन तत्सम्बन्धित्वाद् उपशाखा इत्यर्थः । **भूतसूक्ष्माणि** शब्दादीनि । मोक्षा-मोक्षशब्दाभ्यां पुनरुक्तिपरिहाराय मुक्त्यमुक्तिशब्दविवक्षितमर्थमाह– **मुक्त्यमुक्तिशब्दाभ्यामिति** ।। 'मुच्यतेऽनेन' इति व्युत्पत्त्या मोक्षरूपपुरुषार्थसाधनं ज्ञानं मुक्तिशब्देन विवक्षितम् । तथाऽ-मुक्तिः मुक्तीतरपुरुषार्थो येन प्राप्यते तत्काम्यं कर्म अमुक्तिशब्देन विवक्षितमित्यर्थः ।।

श्लोकः २

**पुरुषार्थाविति** ।। मोक्षस्वर्गाख्यावित्यर्थः । **श्रेष्ठमिति** ।। 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' इति वचनादित्याशयः । 'अधश्चोर्ध्वं च प्रसृतास्तस्य शाखाः' इत्यत्र प्रमाणमुच्यते श्रुतौ– 'अव्यक्ते च शाखाः व्यक्ते च शाखाः' इति । शाखा भूतानि ऊर्ध्व-शब्दाभिधेये सहभूतमूलेऽव्यक्ते च सन्ति । कारणेषु कार्यस्य सत्त्वात् । तथा व्यक्ते स्वापेक्षयाऽपकृष्टशरीरादौ च सन्ति । कार्येषु कारणस्य सत्त्वात् । 'अधश्च मूलान्यनुसन्ततानि' इत्यत्र प्रमाणमुच्यते 'अव्यक्ते च मूलं व्यक्ते च मूलम्' इति । मूलम् अर्वाचीनमूलम् । सत्त्वादिकं परं ब्रह्म वा व्यक्ते वर्तते । इदं गीतानुक्तम् । तथा व्यक्ते शाखाभूतभूतादौ तत्कार्यशरीरादौ च भगवद्रूपं जडाजडप्रकृतिरूपं सत्त्वाद्यर्वाचीनरूपं च मूलं वर्तत इत्यर्थः ।। २ ।।

**भावप्रकाशः (कृ.टि.)–** पृषोदरादित्वात् सहशब्दस्य सभाव इति भावेन समूल-मित्येतद्व्याचष्टे– **सहभूतं मूलमिति** ।। प्रकृतिर्द्विविधा । स्थूलप्रकृतिः सूक्ष्मप्रकृतिश्चेति । तत्र भूमौ बीजे उप्ते सति प्रसिद्धवृक्षं प्रति भूमिवत् । जगद्वृक्षं प्रति मूलप्रकृतिनामिका स्थूल-प्रकृतिरुपादानम् । मृद्वदचेतनेत्यन्यत्रोक्तत्वात् । सत्वादिगुणोपादानभूता सूक्ष्मप्रकृतिस्तु प्रसिद्ध-वृक्षे बीजवदुपादानम् । एवं स्थूलसूक्ष्मप्रकृतिद्वयं जगद्वृक्षस्य सहभूतमुपादानमित्यर्थः । ननु मूलप्रकृत्यपेक्षया सूक्ष्मप्रकृतिरर्वाचीना । अतः समूलम् इत्यनेनैव 'अर्वाचीनमूलम्' इत्यस्या-प्युक्ततयाऽर्वाचीनमूलमिति पुनरुक्तिरित्यत आह– **भूम्यन्तर्गतेति** ।। बीजादिव्यावृत्त्यै पादाख्यमित्युक्तम् । मूलं बुध्नोऽङ्घ्रिनामकमित्यमरोक्तेः वृक्षैकदेशरूपमित्यर्थः । सत्त्वादिगुणा द्विविधाः अकार्याः कार्याश्चेति । तत्राद्याः कारणात्मनाऽवस्थिताः सत्त्वादयः, तेषां सूक्ष्म-प्रकृतिरूपाणां बीजत्वं जगद्वृक्षोपादानत्वं प्रागुक्तम् । अन्त्यानां तु प्रसिद्धवृक्षैकदेश-भूतभूम्यन्तर्गतमूलवत् अर्वाचीनमूलत्वमात्रोच्यते । अतो न पुनरुक्तिरिति भावः ।

ननु मीयन्ते इति मात्राः विषयाः, तेषां मात्राः शिफा इति जटात्वोक्तिश्च अयुक्ता । विषयप्रवाला इति प्रवालत्वस्योक्तत्वादित्यत आह– **मात्राः भूतसूक्ष्माणीति** ।। भूतोपादान-रूपाः पञ्चतन्मात्रा इत्यर्थः । द्विविधाः शब्दादयः भूतोपादानभूताः भौतिकाश्चेति । तत्राद्यानां शिफात्वमत्रोच्यते । भूताख्यशाखावलम्बित्वसाम्यात् । अन्त्यानां तु प्रवालत्वं विवक्षितमिति नानुपपत्तिरिति भावः ।। २ ।।

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ।। ३ ।।**

## भाष्यम्

**यथा स्थितस्तथा नोपलभ्यते । अन्तादिर्विष्णुः ।।**

**'त्वमादिरन्तो जगतोऽस्य मध्यम्' (८.१७.२८) इति भागवते ।**

**'अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः' इति च मोक्षधर्मे ।**

**असङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानेन । 'ज्ञानासिनोपासनया सितेन' (११.२८.१८) इति भागवते । छेदश्च विमर्श एव । ततश्च तस्यैवाबन्धकं भवति ।**

भावप्रदीपिका (प.टी.)जगतो दृश्यमानत्वात् 'न रूपम् 'इत्येतत्कथम् ? इत्यत आह– **यथेति** । जगदन्तादि दृश्यमानं कथं न दृश्यते ? इत्यत आह– **अन्तादिरिति** । विष्णोरज्ञेयत्वे प्रमाणमाह– **अनादीति** । असङ्गाख्यशस्त्रेणेति नेत्याह– **असङ्गेति** । ननु यदि संसारो ज्ञानेन छेद्यः तर्ह्येकस्य ज्ञानेन सर्वमोक्षः स्यात् इत्यत आह– **छेदश्चेति** ।

प्रमेयदीपिका (ज.टी.)– 'अस्य रूपं नोपलभ्यते' इत्युक्ते प्रमाणबाधः । अत उक्तम्– **तथेति** ।। तत्सापेक्षमित्यतः पूरयति– **यथेति** ।। विकारित्वादिनेत्यर्थः । जगतो देशकालाभ्यां परिच्छेदस्योपलभ्यमानत्वात् 'नान्तः' इत्याद्युक्तमयुक्तमित्यत आह– **अन्तादिरिति** ।। 'संहर्तृत्वादेः' इति शेषः ।। अत्र सम्मतिमाह– **त्वमिति** ।। मध्यं स्थितेः कर्ता । तस्यानुपलभ्यमानत्वे प्रमाणमाह–**अनादीति** ।। आद्यन्तरहितम् । 'असङ्ग एव शस्त्रम्' इति व्याख्यानमसदिति भावेनाऽह – **असङ्गेति** ।। असङ्गः सङ्गराहित्यम् । तेन सहितं ज्ञानम् असङ्गशस्त्रम् । दध्योदनादिवद् वृत्तौ साहित्यस्यान्तर्भावादप्रयोग इति भावः । प्रतीतार्थः कुतो नेत्यतो ज्ञानस्यैव तत्र कारणत्वेनोक्तेरित्याह– **ज्ञानेति** ।।

श्लोकः ३

'छित्वा' इत्यस्य 'सबीजमुद्धृत्य' इति व्याख्यानमसदिति भावेनाऽह– **छेदश्चेति ।।** चस्त्वर्थः । **विमर्शः** विवेकः । व्याख्यानान्तरपरित्यागेनैवं व्याख्याने को हेतुः? इत्यत आह– **ततश्चेति ।।** यतो विमर्श एव प्रकृत्यादेः विश्वस्य च्छेदः न सर्वथोद्धारणम् । तत एव तस्य एकस्य एव इदम् अवन्धकं भवति इति युज्यते । अन्यथा एकेन च्छेदे कृते सर्वमुक्तिः स्यादिति भावः ।।

**भावदीपः (रा.टि.)–** गीतायामन्वयमुखेन पदान्यनुपेक्ष्य पदानुपपत्तियुक्तिपूर्वं गीताशेषमवतारयति –**अस्येति ।। विकारित्वादिनेति ।।** वृद्धिह्रासविनाशादिरादिपदार्थः । जगद्वृक्षस्य प्रसविता विष्णुः कथम् अन्तादिः केन हेतुनेत्यत आह– **संहर्तृत्वादेरिति शेष** इति ।। संहर्तृत्वात् अन्तः, जनकत्वात् आदिः,स्थितिहेतुत्वात् सम्प्रतिष्ठा इत्युच्यत इत्यर्थः ।। **दध्योदनादिवदिति ।।** दधिसिक्तोदनो घृतसिक्त ओदन इत्याद्यर्थे दध्योदन घृतोदन इत्यादि प्रयोगस्तथेत्यर्थः ।। साहित्यार्थे पदप्रयोगे बीजमाह– **वृत्ताविति ।।** समासे साहित्यरूपार्थस्य सङ्गम्यमानत्वादित्यर्थः । **उद्धृत्येति ।।** विनाश्येत्यर्थः । **विवेक इति ।। कार्यत्वात्** स्वतन्त्रत्वादिज्ञानादित्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** नन्वेवं अङ्गसहितशस्त्रेण इति सहितपदप्रयोगः स्यादित्यतः समासान्तर्भूतत्वात् तदप्रयोगो न दोषायेति अभिप्रेत्य यद् वृत्तावन्तर्भूतं तदप्रयोगे सम्प्रतिपन्न-मुदाहरणमाह– **दध्योदनादिवदिति ।।** दध्योदनशब्देन क्रिया आपद्यते । नचान्तरेण क्रियायां द्रव्याणां परस्परं सम्बन्ध इति असामर्थ्यादत्र समासो न प्राप्नोति । अथ असत्यपि सामर्थ्ये अन्नेन व्यञ्जनमिति वचनात् समासः इहापि तर्हि प्राप्नोति । किं दध्ना ओदनो भुज्यता-मितीत्यनुपपत्तिपरिहाराय स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकसम्बन्धसद्भावात् सामर्थ्य-मेवेत्याशयेन वृत्तौ क्रियायां अन्तर्भावादिति अन्नेन व्यञ्जनमिति सूत्रे वृत्तिकारेण समाधानात् दध्योदनशब्दे वृत्तौ क्रियाया अन्तर्भावादप्रयोगवदत्र साहित्यस्य वृत्तावन्तर्भावादप्रयोगो युक्तः । क्रियाया अन्तर्भावः एकत्र अपरत्र साहित्यस्येति वैषम्यं चानुपयुक्तम् । अन्तर्भूतस्याप्रयोग इत्येतावन्मात्रस्योभयसाधारणत्वादिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** जगद्वृक्षस्य प्रत्यक्षत एवोपलभ्यमानत्वादाह– **प्रमाणबाध** इति ।। 'बाधः' इत्यनन्तरम् 'इति' शब्दोऽध्याहार्यः । 'उक्तम्' इत्यनन्तरम् 'गीतायाम्' इति

शेषः । **तत्** 'तथा' इति पदम् । यथाशब्दविवक्षितार्थोक्तिः– **विकारित्वादिनेति** ।। आदिपदेन नाशो वृद्धिर्ह्रासश्च गृह्यते । ऊर्ध्वमूलत्व अधःशाखत्वादिरादिपदार्थ इत्येके । ननु जगन्नाशादि-रूपत्वं विष्णोः कथम् इत्यत आह– **संहर्तृत्वादेरिति** ।। संहारकर्तृत्वात्, उत्पत्तिकर्तृत्वात्, स्थितिकर्तृत्वाच्च तत्तच्छब्दव्यपदेश्यत्वमिति भावः । **अत्र** अन्तत्वे आदित्वे प्रतिष्ठात्वे च । मध्यं स्थितेः कर्तेति ।। तथाच उत्पत्तिकर्तृत्वाद् आदिः, स्थितिकर्तृत्वाद् मध्यम्, संहार-कर्तृत्वाद् अन्त इति भागवतस्यात्रोक्तेऽर्थे सम्मतित्वमिति भावः । तस्य अन्तादिशब्दार्थस्य विष्णोः । आदिश्च अन्तश्च आद्यन्तौ, न विद्येते आद्यन्तौ यस्य स तथा इति विग्रहा-द्यभिप्रेत्य तदर्थमाह– **आद्यन्तरहितमिति** ।। देवा ऋषयश्च यदा न विदुः, तदा किमु वक्तव्यं 'मनुष्यलोको न वेद' इति प्रकृतार्थसिद्धिः ।

'असङ्गः' इति पुत्रवित्तलोकेषणाभ्युत्थानम्, तदेव शस्त्रं, तेनेति शङ्करभाष्यं निष्कृष्यानु-वदति– **असङ्ग एव शस्त्रमितीति** ।। छेदकत्वगुणयोगात् शस्त्रशब्दो ज्ञाने वर्तते इति भावेन 'शस्त्रं ज्ञानम्' इत्युक्तम् । ननु साहित्यस्य विवक्षायां तद्बोधकसहितपदमपि समासे प्रयोक्तव्यं स्यात् इत्यत आह– **दध्योदनादिवदिति** ।। 'दधिसहित ओदनो दध्योदनः', 'घृतसहित ओदनो घृतौदनः', 'गुडेन मिश्रा धाना गुडधानाः' इत्यादौ यथा साहित्यं समासीयाखण्डशक्ति-शब्दितया वृत्त्या भाति, तथा प्रकृतेऽपि' 'असङ्गशस्त्रेण' इति समासवृत्त्यैव भातीति न तद्वाचकपदप्रयोग इत्यर्थः । अत्र 'इदं च परीत्या' इत्यादि बहूक्तं कृष्णाचार्यैरिति तद्विचार-णीयम् । **प्रतीतार्थः** 'असङ्ग एव शस्त्रम्' इति परोक्तार्थः । 'ज्ञानस्यैव' इति वदन् एतच्छित्त्वा च हित्वा च ज्ञानेन परमासिना' इति पुराणवचनम् उदाहरतः शङ्करस्यैव स्वव्याहतिरिति सूचयति । **तत्र** छेदे । 'छित्त्वा संसारवृक्षं सबीजमुद्धृत्य इति शङ्करभाष्ये दूष्यभागमनुवदति– **छित्त्वेतीति** ।। **विवेकः** विवेचनम् **कार्यत्वं** परतन्त्रत्वादिविमर्श इति यावत् । तस्य विमर्शशालिनः । **इदम्** प्रकृत्यादिरूपं विश्वम् । **अन्यथा** सबीजमुद्धृत्य इत्यर्थत्वे ।

**भावदीपिका (श्री.टि.)– ।। प्रमाणबाध इति ।।** जगद्वृक्षस्वरूपस्य प्रत्यक्षे-णोपलभ्यमानत्वादित्यर्थः । **तत्सापेक्षमिति** ।। 'तथा' इत्येतद् यथाशब्दसापेक्षमित्यर्थः । यथा स्थितः तथा कुतो नोपलभ्यत इत्यत आह– **सविकारित्वादिनेति** ।। आदिपदेन नाशो ग्राह्यः । **संहर्तृत्वादेरिति** ।। तथा च 'अस्य रूपं नोलभ्यते' इत्येव न, किं नाम संहर्तृत्वात् स्रष्टृत्वात् स्थितिकर्तृत्वेन प्रतिष्ठापकत्वाच्चान्त आदिः प्रतिष्ठा च यो विष्णुर्मूलभूतः सोऽपि

श्लोकः ३

नोपलभ्यत इत्यर्थो द्रष्टव्यः । **अत्रेति** ।। भगवत अन्तादिशब्दप्रवृत्तिनिमित्तभूतसंहर्तृत्वादिसद्भाव इत्यर्थः । ननु तर्हि 'असङ्गसहितशस्त्रेण' इति स्यात् इत्यतो मध्यमपदलोपी समासोऽय-मित्याह– **दध्योदनादिवदिति** ।। 'दधिसहितम् ओदनं दध्योदनम्' इतिवदित्यर्थः । **वृत्तौ** समासव्याख्यनरूपे विग्रहवाक्ये । **प्रतीतार्थः** असङ्गस्यैव शस्त्रत्वरूपः । **तत्र** जगद्वृक्षच्छेदने । **कारणत्वोक्तेरिति** ।। **सवीजमुद्धृत्येति** ।। अविद्यारूपबीजसाहित्येन विनाश्येत्यर्थः । सबीजोद्धारे हि न पुनः वृक्षः प्ररोहतीति भावः । **तस्यैकस्यैवेति** ।। येन विमर्शः कृतस्तस्यैवेत्यर्थः । **छेदे** सबीजोद्धारे ।।

**भावप्रकाशः (कृ.टि.)–** ।। **प्रमाणवाध इति** ।। घटादिरूपजगद्वृक्षस्योपलब्धेरिति भावः । **अत उक्तमिति** ।। गीतायामिति शेषः । यथाशब्दपरामृश्यं दर्शयति– **विकारि-त्वादिनेति** ।। आदिपदेन नाशित्वग्रहः । ननु विष्णोर्जगन्नाशादिरूपत्वं कथमित्यत आह– **संहर्तृत्वादेरिति** ।। तत्कारणत्वात् तदैक्यव्यपदेश इति भावः । तर्हि साहित्यबोधार्थं समासे सहितशब्दप्रयोगः स्यादित्यत आह– **दध्योदनादिवदिति** ।। आदिपदेन गुडधानादिकं ग्राह्यम् । यथा 'दध्योदन' इत्यादौ दध्युपसिक्त ओदन इत्युपसेचनादिक्रिया समासीयाखण्डशक्त्या भातीति तद्वाचकशब्दाप्रयोगः तथा प्रकृतेऽपीत्यर्थः । इदं च पररीत्या । अन्यथा सुधायां तत्पुरुषस्य यौगिकत्वोक्तिविरोधादित्येके । अत एव ज्ञापकात् समासेऽखण्डशक्तिः । नच सुधाविरोधः । तस्य 'राजपुरुषः' इत्यादौ यत्र नापूर्वार्थभानं तन्मात्रविषयत्वादित्यन्यः । वस्तुतस्तु समासस्यासङ्गपदार्थे लक्षणया साहित्यस्यान्तर्भावादिति व्याख्याने न कश्चिद्दोष इति भाति ।। ३ ।।

## भाष्यम्

**तथा हि मूलस्थं ब्रह्म प्रतीयते । तच्चोक्तं तच्छ्रुतावेव 'विमर्शो ह्यस्य च्छेदः । स तं न बध्नाति बध्नाति चान्यान्' इति ।। ३ ।।**

भावप्रदीपिका (प.टी.)– **संसारविमर्शेन कथं मोक्ष इत्यत आह– तथा हीति । संसारविमर्शे सतीत्यर्थः । अनेन ततः परम् इति व्याख्यातं भवति** ।। ३ ।।

प्रमेयदीपिका (ज.टी.)– इतश्चायमेव च्छेद इत्याह– **तथा हीति** ।। अत्र ह्यश्वत्थमेनं छित्वा 'ततः परं तत् परिमार्गितव्यम्' इति विश्वच्छेदस्य ब्रह्मप्रतीता-

**वुपायत्वमुच्यते । तथाहि विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात्, चेतनानधिष्ठिताद् उपादानाद् उत्पत्त्यसम्भवात्, परतन्त्राणां मुख्यतोधिष्ठातृत्वायोगात्, मूलस्थमुपादानकारणाधिष्ठातृ ब्रह्म प्रतीयते न विश्वविनाशे । अतो योग्यतावशाद् विमर्श एव च्छेदो न विनाश इति गम्यत इत्यर्थः । विश्वमिथ्यात्वज्ञानमेव च्छेद इति चेन्न । अस्य मिथ्याज्ञानत्वात् । श्रुतिसंवादाच्चैवमेवेत्याह– तच्चेति ।। तं वै प्रपद्येत यं वै प्रपद्य इति तच्छ्रुतावेव । अतः तं छेदकमेव ।। ३ ।।**

**भावदीपः (रा.टि.)– ।। परतन्त्राणामिति ।।** ब्रह्मादीनां जीवादीनामिति वा ।। मूलस्थम् इत्यनुवादः, उपादानेत्यादि व्याख्या ।। ३ ।।

**भावरत्नकोशः (सु.टि.)– ।। उपायत्वमिति ।।** क्त्वाप्रत्ययेन पूर्वकालवाचिना छेदस्य पूर्वकालवर्तित्वावगमात्, पूर्वकालवर्तिनश्च 'ब्रह्मपरिमार्गणलक्षणोत्तरकालवर्तिकार्यं प्रत्युपायत्वमुच्यत इत्यर्थः । तथा हि 'सति' इति सशेषमनुवादः । 'विश्वस्य कार्यत्वादिना विमर्शे सति' इति व्याख्यानम् । **उत्पत्त्यसम्भवात्** 'कार्यस्य' इति वर्तते । **परतन्त्राणाम्** ब्रह्मादिजीवानाम् । 'मूलस्थम् इत्यनुवादः 'उपादानकारणाधिष्ठातृ' इति व्याख्या । **योग्यता-वशात्** औचित्यवशात् । 'छित्त्वा' इत्यस्य 'सबीजमुद्धृत्य' इति व्याख्यानं दूषितम् । तद्दूषणमुद्धर्तुं 'प्रकृत्यादिरूपसंसारवृक्षं छित्वा मिथ्यात्वेन ज्ञात्वा' इत्यर्थ इति विवक्षुः शङ्कते– **विश्वमिथ्यात्वेति ।। अस्य मिथ्याज्ञानत्वादिति ।।** 'विश्वं सत्यम्' इत्यादिप्रमाणावगत-सत्यताकस्य प्रकृत्यादिरूपवृक्षस्य मिथ्यात्वे ज्ञानस्य भ्रान्तिरूपत्वात्, मिथ्याज्ञानस्य च 'तत्परिमार्गितव्यम्' इत्युक्तब्रह्मप्रतीत्युपायत्वायोगाद् नापरोक्षविवक्षा युज्यत इति भावः । **श्रुतिसंवादाच्चेति ।।** न केवलं योग्यतावशाद् इत्युक्तोपपत्तिबलादिति चशब्दः । **तच्छ्रुतावेव** भाल्लवेयशाखायामिति भाष्यार्थः । **अतस्तं छेदकमेवेति ।।** अनेन 'हि यतो विमर्श एवास्य प्रकृतादेर्विश्वस्य छेदः, अतः तं छेदकमेव प्रकृत्यादि न बध्नाति, अन्यान् विमर्शहीनान् बध्नाति' इति श्रुतिशेषार्थ उक्तो भवति ।। ३ ।।

**गीताक्षरार्थस्तु** किञ्च इह मनुष्यलोके स्थितैः अस्य जगद्वृक्षस्य रूपं यथा येन प्रकारेण विकारित्वादिना स्थितं तथा नोपलभ्यते । किञ्चास्य वृक्षस्य अन्तः संहर्ता न उपलभ्यते, आदिः उत्पादयिता न उपलभ्यते, सम्प्रतिष्ठा स्थितेः कर्ता च विष्णुः न उपलभ्यत इति

संसारवृक्षस्वरूपनिरूपणम् । किमतो यद्येवं जगद्वृक्ष उक्तस्वरूपः इत्यत उच्यते– **अश्वत्थमेनमिति** ।। सुविरूढमूलम् सुष्ठु विरूढानि विरोहं गतानि मूलानि भगवद्रूपादीनि यस्य स तथा तमेनम्, अन्वादेश एनादेशः, उक्तविशेषणयुक्तम् अश्वत्थं सर्वदैकप्रकारेणानवस्थायिनं जगद्वृक्षं दृढेन उपासनाशितेन असङ्गशस्त्रेण असङ्गः सङ्गराहित्यम्, तेन सहितं शस्त्रं शस्त्रमिव ज्ञानम् असङ्गशस्त्रम्, तेन । दध्योदनादिवत् वृत्तौ साहित्यस्य अन्तर्भावात् तद्वाचकपदाप्रयोगः । छित्त्वा कार्यत्वपरतन्त्रत्वादिना विमृश्य ।। ३ ।।

**भावदीपिका (श्री.टि.)**– 'तथा हि' इत्यनन्तरं 'सति' इति शेषपूरणम् । 'कार्यत्वादिना' इत्यत्रादिना नाशग्रहणम् । ननु कारणापेक्षयामपि उपादानभूतं प्रकृत्याद्येव कारणमस्तु इत्यत उक्तम्– **चेतनेति** ।। **निमित्तभूतेति** ।। नन्वधिष्ठाता चेतनोऽपि ब्रह्माद्यन्यतमः किं न स्यात्? इत्यत उक्तम्– **परतन्त्राणामिति** ।। ननु यदा महत्तत्वादिनाऽहङ्कारतत्वादिकं जायते तदा तदधिष्ठातृत्वं परतन्त्रस्यापि ब्रह्मादेरस्त्येव इत्यत आह– **मुख्यत इति** ।। **योग्यतावशात्** अर्थाबाधवशात् । **अस्येति** ।। विश्वमिथ्यात्वज्ञानस्य मिथ्याज्ञानरूपत्वादित्यर्थः । **एवमिति** ।। विमर्श एव छेद इत्यर्थः । **अत इत्यादि** ।। यतो विमर्श एव छेदः, न विनाशः । अतस्तं विमर्शकमेव न बध्नाति । अन्यथैकेन च्छेदे कृते सर्वमुक्तिः स्यात् अन्यान् विमर्शकान् संसारो बध्नातीत्यर्थः ।। ३ ।।

**ततः परं तत् परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ।। ४ ।।**

## भाष्यम्

**तदर्थं च तमेव प्रपद्ये प्रपद्येत । तच्चोक्तं तत्रैव 'तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियतेतद् ब्रह्म मूलं तच्छित्सुः' इति । 'नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्' इति च मोक्षधर्मे । छेदनोपायो ह्यत्राकाङ्क्षितः । न च भगवतोऽन्यः शरण्योऽस्ति ।। ४ ।।**

भावप्रदीपिका (प.टी.)– विमर्शेन ब्रह्मदर्शनं भवतीत्युक्तम् । विमर्शश्च कथम् इत्याशङ्क्य, तमेव इत्येतत् पुरुषव्यत्यासेन व्याचष्टे– **तदर्थमिति** । उत्तमपुरुषतैवात्र किं

न स्यात् इत्यतः साऽनुपयुक्तेत्याह– **छेदनेति** । न तु भगवतः शरणागतिकथनम् इति शेषः। अयुक्ता चेत्याह– **न चेति** ।। ४ ।।

**प्रमेयदीपिका (ज.टी.)**– वाक्यार्थस्य समाप्तत्वात् 'तमेव चाद्यम्' इति व्यर्थमित्यतः सङ्गतिं सूचयन्नाह– **तदर्थं चेति** ।। **विमर्शार्थं चेति** ।। विश्वविमर्शाद् ब्रह्मज्ञानं भवतु । स विमर्श एव कथं स्यात्? इत्याकाङ्क्षां तदर्थम् इत्यनेन सूचयति ।। तर्हि चिच्छिदिषुं प्रति तदुपायो विधेयः, न तु प्रपद्य इति वचनं सङ्गतमित्यतो 'व्यत्ययो बहुलम्' इति वचनमाश्रित्याह– **प्रपद्येतेति** ।। कुतः? इत्यतः श्रुतिस्मृतिसंवादादित्याह– **तच्चेति** ।। तद्विश्वं छित्सुः । अभ्यासलोपः इडभावः छान्दसः । चिच्छिदिषुः च्छित्सुः विश्वविमर्शार्थी यद् ब्रह्म विश्वस्य मूलं तमेव पुरुषं प्रपद्येत इत्यर्थः। प्रपत्त्या प्रसन्नेन नारायणेन दृष्टः पुमान् प्रतिबुद्धः विश्वविमर्शक्षमो भवेत् इत्यर्थः । इतश्च पुरुषव्यत्ययोऽत्र व्याख्येय इत्याह– **च्छेदनेति** ।। 'अतस्तदुपायविधानमेव सङ्गतम्' इति शेषः । न केवलमुत्तमपुरुषोऽत्रानुपयुक्तः । किन्त्वयुक्तश्चेत्याह– **न चेति**।। 'तमेव प्रपद्य इत्येवं परिमार्गितव्यम्' इति सम्बन्धस्त्वयुक्तः । अस्य परिमार्गणत्वाभावात् ।। ४ ।।

**भावबोधः (र.टि.)**– ननु यथास्थितस्तथा कुतो नोपलक्ष्यते इत्यत आह– **विकारित्वादिनेति** ।। आदिपदेन नाशादिकम् । ननु कथं विष्णोर्जगन्नाशोत्पत्तिस्थितिरूपत्वमित्यत आह– **संहर्तृत्वादेरिति** ।। ननु च्छिदेः सन्प्रत्यये 'सन्यङोः' इति द्वित्वे एकाजनुदात्तत्वादिड अभावे 'हलन्ताच्च' इति सनः कित्त्वेन गुणाभावे 'सनाशंसभिक्ष उः' इति उप्रत्यये आतो लोपे च सति चिच्छित्सुरिति भवेत् । छित्सुः इति कथमित्यत आह– **अभ्यासलोप इति** ।। ४ ।।

**भावदीपः (रा.टि.)**– ननु 'छिदिर् द्वैधीकरणे' इत्यतो 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा.सू.३.१.७) इति सन्प्रत्यये 'सन्यङोः' (पा.सू.६.१.९) इति द्विर्वचने, नलोपे 'आर्धधातुकस्येड् वलादेः' (पा.सू. ७.२.३५) इतीडागमे 'हलन्ताच्च' (पा.सू. १.२.१०) इति सनः कित्वेन गुणाभावे 'सनाशंसभिक्ष उः' (पा.सू. ३.२.१६८) इत्युप्रत्यये 'चिच्छित्सुः' इति भाव्यम् । कथं छित्सुः? इत्यत आह– **अभ्यासलोप इति** ।। इडभाव इति पाठो लेखकदोषमूलः । छिदेरनिट्त्वात् 'चिच्छिदिषुः' इति प्रयोगोऽपि तथैवेति ज्ञेयम् ।

श्लोकः ४

'छित्सुः' इत्यस्य प्रतिपदमुक्त्वा तस्यार्थमाह– **चिच्छिदिषुरिति** ।। **पुरुषव्यत्यय इति** ।। प्रपद्ये इत्युत्तमपुरुषः प्रथमपुरुषतया व्यत्यय इत्यर्थः ।। **तत्परिमार्गितव्यमिति** ।। तमेव चाद्यं पुरुषं प्रपद्ये इत्यन्वेषणयत्नेन, प्रपत्तिकर्मत्वेन च पुरुषस्यैव प्रकृतत्वात् तत्स्वरूपोक्तेरेवाकाङ्क्षितत्वादिति भावः ।। ४ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। व्यत्ययो बहुलमिति वचनादिति** ।। लटो लिङ्त्वेन लिङ्व्यत्ययः । उत्तमपुरुषस्य प्रपद्येतेति प्रथमपुरुषत्वेनेत्येमुभयथापि व्यत्यय इत्यर्थः । एतच्च व्याख्यातत्वान्नात्र विव्रियते ।।

ननु छिदेः सन्प्रत्यये सन्यङोः इति द्वित्वे अभ्यासे चर्च इति अकारलोपे सति चिच्छिदिषुरिति भवितव्यम् । छित्सुरिति कथमित्यत आह– **अभ्यासलोपः इडभावश्छान्दस इति** ।। अत्र लोपोभ्यासस्येत्यस्य सनीमीम इत्यारभ्य यदुक्तं तत्रैवाभ्यासलोपविधायकत्वात् छिदेश्च सनीमीम इत्यादावगणनेनाभ्यासलोपासम्भवात् अभ्यासलोपश्छान्दस इत्यर्थः । एकाच उपदेशेनुदात्तात् इत्यत्र उपदेशे अनुदात्तात् इत्यव्याख्याने भविष्यति पचिष्यति इत्यादौ इट् न स्यात् । उपदेशे एकाच्त्वात् । प्रत्ययोदात्तत्वे कृते शेषनिघातेन सम्प्रति तस्याप्यनुदात्तत्वात् तथा कर्ता कर्तुमित्यत्रापि इट्प्रसङ्गाच्च । नित्स्वरेण सम्प्रति तस्याप्युदात्तत्वेनानुदात्तत्वाभावात् । उपदेशे अनुदात्तादिति व्याख्याने क्रियमाणे च नातिप्रसङ्गः । भविष्यति इत्यादौ सम्प्रत्यनुदात्तत्वेन प्रकृते आद्यपाठरूपोपदेशे अनुदात्तत्वाभावात् । तत्रेट्निषेधाप्रसङ्गात् । कर्ता इत्यादेश्च सम्प्रति नित्स्वरेणोदात्तत्वेनोपदेशे अनुदात्तत्वेन विशेषणत्वेपि न एकाच्त्वविशेषणत्वमपि । उपदेशे एकाच् इत्यव्याख्यानेपि दोषाप्रसक्तेः । नचैवं क्रादिसूत्रे नियम एवंसति नोपपद्येत । चकृव चकृम इत्यादौ श्रूयमाणरूपस्यानेकाच्त्वेन तत्रेट्निषेधाप्रसङ्गात् । किन्तु विधिरेव स्यादिति कथं दोषाभाव इति चेत् न । दोषाभावेन तत्र इट्निषेधाप्रसङ्गात् । नचैवमपि पिपेचिव पिपेचिम इत्यादौ एत्वाभ्यासलोपयोः कृतयोः एकाचः श्रूयमाणादिति इट्प्रतिषेधः स्यादेवेति वाच्यम् । तत्र परत्वादौ लिटि कृते अनन्तरमपि एत्वाभ्यासलोपयोः पेचिवेत्यादि रूपसिद्धेः सम्भवात् ।।

नच नित्ये एत्वाभ्यासलोपे कृतेपि इटि प्राप्नुतः, अकृतेपीति कृताकृतप्रसङ्गित्वात्, इट् पुनरनित्ये एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादिति इट्निषेधात् । ततश्च नित्यत्वादेव

अभ्यासलोपयोरेव प्राथम्यादिट् न स्यादेवेति वाच्यम्। थलि च सेटि इत्यत्र अत एव हलमध्ये अनादेशादेः लिटि इति अनुवर्तनादन्तरेणापि थसोन्यस्य सेट् किति लिट एव च सम्भवेन सेटीत्येतावतैव थल्येव सेटि एत्वाभ्यासलोपयोः सिद्ध्या थल्ग्रहणमनर्थकमेव प्राप्नोति । ततश्च सिद्धेपि विवक्षितार्थे यत् थल्ग्रहणं करोति तत् ज्ञापयत्याचार्यः सेट्ग्रहणं कालावधारणार्थमिति ।। इटि कृत एव एत्वाभ्यासलोपौ स्याताम् । अकृते मा भूदिति । ततश्चानित्येपि इटि कृत एव एत्वाभ्यासलोपयोः नित्ययोरपि सम्भवेन पेचिव इत्यादेरुपपत्तेः ।

नचैवमपि विभित्सति विच्छित्सति इत्यत्र नित्यत्वद् द्विर्वचने कृते एकाचः श्रूयमाणत्वात् इति इट् अविप्रतिषेधो न स्यादिति वाच्यम् । भिदिछिदोः सन्नन्तयोः श्रूयमाण एकाच्त्वाभावेन सेट्कत्वस्यैव युक्तत्वात् । यङ्लुङन्तयोस्तयोः विभेदिता चेछिदिता इति इटो दृष्टत्वाच्च । नचैवं ह्लदिछिभिदिधुक्षुध इत्यनिट्कारिकायां छिदेः पाठो नस्यादिति वाच्यम् । भुजिस्वञ्जिसृजिमृजिविध्यनिङ्स्वरानिति अनुदात्तकारिकायां पठितस्यापि मृजेः उदितत्वेन विकल्पितेट्कत्वदर्शनात् विन्दति विघतर्छति इति भाष्ये अनुदात्ततया सङ्गृहीतस्य लाभार्थकस्य विन्दतेः वेदिता विद्यानां वेदिता धनस्येत्यादिप्रयोगदर्शनेन सेट्कत्वेन व्यभिचारदर्शने अनिट्कारिकापाठस्याप्रयोजकत्वात् । उपदेशे अनुदात्तादेकाचः श्रूयमाणाद् धातोः परस्य वलादेरार्धधातुकस्य इट् न स्यात् इत्येव व्याख्यानोपपत्तेः । छिदेः श्रूयमाणैकाच्त्वाभावेन सेट्कत्वाभावात् इडभावः छान्दस इति सूक्तमिति स्वामिनः ।।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे पञ्चदशोध्यायः ।।**

**भावरत्नकोशः (सु.टि.)– ।। वाक्यार्थस्येति ।।** संसाराख्यविश्वरूपम् 'ऊर्ध्वमूलमधःशाखम्' इत्याद्युक्तप्रकारोपेतं विकारत्वादिनाऽज्ञायमानं च तत् । एवंविधं विरूढमूलं वृक्षं सङ्गराहित्यसहितेन ज्ञानासिना च्छित्वा विमृश्य, ततो ब्रह्मज्ञानमापाद्य, ब्रह्म प्राप्य न पुनरावर्तत इति 'ऊर्ध्वमूलम्' इत्यादिमहावाक्यार्थस्य 'यस्मिन् गता न निवर्तन्ति भूयः' इत्युक्त्या समाप्तत्वात् इत्यर्थः । तमेव च' इत्यस्य कथं विश्वविमर्शार्थत्वम् इत्यत आह– **विश्वविमर्शादिति ।।** 'चिच्छित्सुम्' इत्यत्र 'चिच्छिदिषुम् इति पाठो लेखकदोषमूल इति स्वामिनः । केचित्तु 'छिदिर् द्वैधीकरणे इति धातोः द्वैधीकरणार्थकस्यापि 'अनेकार्था हि धातवः'

श्लोकः ४
इति न्यायेनेह विमर्शार्थत्वाभ्युपगमेन 'एकाच उपदेशेऽनुदात्तात्' इति शास्त्रप्राप्तस्य इण्निषेधस्य द्वैधीकरणार्थकधातावेव प्रवृत्त्या, विमर्शार्थके प्रवृत्त्यभाव इति मनसि निधाय 'चिच्छिदिषुम्' इति प्रयुक्तम् इत्याहुः । **तदुपायः** छेदनोपायः । **न त्विति** ।। 'प्रपद्ये' इत्युत्तमपुरुषश्रवणाद् कृष्णस्य प्रपत्तृत्ववचनं तदनुपायत्वात् न तु सङ्गतमित्यर्थः । **व्यत्यय इति** ।। 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति एतत्सूत्रवार्तिकेन नरशब्देन पुरुषग्रहणात् 'क्वचिदन्यदेव' इति वचनादिह 'प्रपद्यते' इति प्रथमपुरुषार्थे उत्तमपुरुषप्रयोग इति भावः ।

**कुत इति** ।। 'गीतायां पुरुषव्यत्ययो व्याख्येयः' इत्येतत् **कुतः** प्रमाणात् प्रतिपत्तव्यमित्यर्थः । 'तत्रैव' इति भाष्ये भाल्लवेयश्रुतेरेवोक्तत्वात् तत्र च 'ब्रह्म वाऽस्य पृथङ्मूलम्' इति इदंशब्देन विश्वस्य प्रकृतत्वाद् अत्र तच्छब्देन तदेव ग्राह्यमिति भावेनाह– **तद्विश्वमिति** ।। ननु 'छिदिर द्वैधीकरणे' इति धातोः 'धातोः कर्मणः समानकर्तृकाद् इच्छायां वा' इति सन्प्रत्यये, 'सन्यङोः' इति द्वित्वे, 'हलन्ताच्च' इति सनः कित्त्वेन गुणाभावे, 'सनाशंस भिक्ष उः' इति उप्रत्यये च 'चिच्छित्सुः' इति भाव्यम् । तत्कथं 'छित्सुः' इति । तत्राह– **अभ्यासलोप इति** ।। ननु विमर्शार्थस्य छिदेरुक्तरीत्या इण्निषेधाभावाभ्युपगमाद् 'छिदिषुम् इत्येव स्यात् इत्यत आह– **इडभावश्चेति** ।। **चिच्छिदिषुरिति** ।। तदर्थः 'विश्वविमर्शार्थी' इति । 'चिच्छिदिषुः' इति निर्वाहस्तु प्रागुक्त एव । **विश्वस्य** विमर्शनीय-विश्वस्य । 'सा वैश्वदेव्यामिक्षा' इतिवत् विधेयापेक्षया 'तम्' इति पुंलिङ्गम् । मोक्षधर्म-स्मृत्यर्थमाह– **प्रपत्त्येति** ।। शरणागत्या । **दृष्टः** अनुगृहीतः । 'प्रतिबुद्धः' इत्यस्य प्रकृतो-पयोग्यर्थकथनम्– **विश्वविमर्शक्षम इति** ।। अनेन विश्वविमर्शाद् ब्रह्मज्ञानं भवतु, स विमर्श एव कथं स्यात्' इति शङ्का परिहृतेत्युक्तं भवति ।

चशब्दश्रवणादाह– **इतश्चेति** ।। न केवलं श्रुतिस्मृतिसंवादात्, किन्त्वौचित्यबलाच्चेत्यर्थः । **तदुपायविधानम्** प्रतिपत्तिरूपच्छेदनोपायविधानम् । अनेन 'प्रपद्ये' इति वचनं न सङ्गतमिति कृतचोद्यं परिहृतं भवति । भावप्रदीपिकायां तु 'ननु यदि संसारवृक्षो ज्ञानेन च्छेद्यः, तर्हि एकस्य ज्ञानेन सर्वमोक्षः स्यात् इत्यत आह– **छेदश्चेति** ।। संसारविमर्शेन कथं मोक्ष इत्यत आह– **तथा हीति** ।। संसारविमर्शे सतीत्यर्थः । अनेन 'ततः परम् 'इति व्याख्यातं भवति । विमर्शेन ब्रह्मदर्शनं भवतीत्युक्तम् । विमर्शश्च कथम् इत्याशङ्क्य 'तमेव' इत्येतत् पुरुष-व्यत्ययेन व्याचष्टे– **तदर्थमिति** ।। उत्तमपुरुषतैवात्र किं न स्यात् इत्यतः साऽनुपयुक्तेत्याह–

**छेदनेति** ।। 'न तु भगवतः शरणागतिकथनम् ' ॥ शेषः । अयुक्ता चेत्याह– **न चेति** ।। इति 'छेदश्च' इत्यादिभाष्यं व्याख्यातम् ।।

अनुपयुक्तत्वमयुक्तत्वं च दोषं परिजिहीर्षुः शङ्करः 'कथं परिमार्गितव्यम् 'इत्यत उच्यते– **तमेवेति** ।। 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्येवं परिमार्गितव्यमिति सम्बन्धमुक्तवान् । तदनुवदति– **तमेव प्रपद्य इत्येवमिति** ।। इत्येवं परिमार्गितव्यमिति वदन् 'इत्येवम्' इत्यस्याध्याहारो दोष इत्यभिसन्धत्ते । अर्थदोषं चाह– **अस्येति** ।। 'अहं प्रपद्ये' इत्येवं-भावनस्य ब्रह्मज्ञानत्वाभावादित्यर्थः । 'प्रपद्ये' इत्येवम् एकान्तभक्तिलक्षणया शरणागत्या परिमार्गितव्यमित्यत्र तात्पर्यमिति चेन्न । एतदपेक्षया भाष्यरीत्या श्रुतिस्मृतिसंवादिपुरुष-व्यत्ययमात्रव्याख्यानस्योक्तत्वादिति ।।

**गीताक्षरार्थस्तु** ततः प्रकृत्यादेर्विश्वस्मात् परं विलक्षणं तत् 'ओम् तत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः' इति वचनाद् ब्रह्म परमार्गितव्यम् । परिमार्गणम् अन्वेषणम् । श्रवणादिना ज्ञातव्यं कीदृशम् यस्मिन् गताः यत् प्राप्ताः न निवर्तन्ति भूयो नावर्तन्ते । भावप्रदीपिकायां तु 'ततः पदम्' इति पठितम्, तदा ततः पश्चात् तत् 'ऊर्ध्वमूलम् इत्यत्र प्रकृतं पदं वस्तु विष्ण्याख्यं परिमार्गितव्यमिति व्याख्येयम् ।

'ननु विश्वविमर्शो ब्रह्मज्ञानं प्रति कथमुपायः इति चेत् उच्यते । विश्वस्य कार्यत्वादिना विमर्शे सति कार्यस्य कारणापेक्षत्वात्, चेतनानधिष्ठिताद् उपादानाद् उत्पत्त्यसम्भवात्, परतन्त्राणां मुख्यतयाऽधिष्ठातृत्वायोगाद् उपादानकारणाधिष्ठातृ ब्रह्मैव विज्ञातं भवतीति । ननूक्तरीत्या विश्वविमर्शाद् ब्रह्मज्ञानं भवतु, स विमर्श एव कथं स्यात् इत्यतस्तत्रोच्यते– **तमेव चाद्यमिति** ।। यतः यस्मात् पुरुषात् पुराणी चिरन्तनी अनादिकालप्राप्तप्रवृत्तिः संसारवृक्षस्य सव्यापारावस्थितिः प्रसृता निर्गता तमेव आदौ भवं पुरुषं प्रपद्ये 'व्यत्ययो बहुलम्' इति पुरुषव्यत्ययेन प्रपद्येत शरणं व्रजेत् 'विश्वविमर्शार्थम्' इति शेषः । कुतः पुरुषव्यत्ययाश्रयणम् इति चेत् 'तं वै प्रपद्येत, यं वै प्रपद्य न शोचति... तद् ब्रह्म' इति, तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् इति च श्रुतिबलादिति ब्रूमः ।। ४ ।।

**भावदीपिका (श्री.टि.)**– सङ्गतिसूचना केन जाता इत्यत आह– **विश्वेति** ।। **विधेय इति** ।। 'यज' इत्यादिवत् लिङादिप्रत्ययेन विधेय इत्यर्थः । **इति** वचनमुत्तमपुरुषवचनम् ।

श्लोकः ४

**व्यत्यय इति** ।। विधायकत्वलाभाय लिङात्मनेपदिनः प्रथमपुरुषत्वे व्यत्यय इत्यर्थः । ननु 'छिदिर् द्वैधीकरणे' अस्मात् सन्प्रत्यये नकारलोपे, 'छिद् स' इति जाते 'सनाशंसभिक्ष उः' इति सन्नन्तत्वाद् उप्रत्यये, 'छिद् स उ' इत्यत्र 'सन्यङोः' इति सनि परे अभ्यासररूपे द्वित्वे 'छिद् छिद्' इति जाते, अभ्यासलोपे हलादिशेषे 'छिछिद्' इति जाते, अभ्यस्तछकारस्य 'अभ्यासे चर्च' इति चर्त्वे चिछिद्' इति जाते छिदेः सेड्धातुत्वेन इडागमे 'इस उ' इति जाते, सस्य षत्वे 'चिछिदिषु' इति प्रातिपदिके जाते, पश्चात्स्वाद्युत्पत्तौ 'चिछिदिषुः' इति भवेत् । 'छित्सुः' इति कथम्? अत आह– **अभ्यासलोप इडाभावश्छान्दस इति** ।। अत्र चकारः परस्परसमुच्चायकः । तथा च 'छिद्' अस्मात् सनि उप्रत्यये दस्य तत्वे च 'छित् स् उ छित्सु' इति प्रातिपदिकनिष्पत्तौ सत्यां पश्चात् स्वाद्युत्पत्तौ 'छित्सुः' इति भवतीत्यर्थः । अत्र–

'तप्क्षिप्वापिवपिस्वप्लिप्लुपः तृप्यतिदृप्यती ।
सृप् छुप् स्वप् शप् क्षिपः स्कन्दि हदि स्यदि छिदिर् भिदः । इमे हलन्तेष्वनिटः'

इत्यनिड्धातुसङ्ग्रह इति वचनेन छिदेरपि दकारस्य हलूत्वेन हलन्ततयाऽनिट्त्वेन अनिड्-धातुमध्ये पाठात् कथमिडभावश्छान्दस इत्युक्तम्? इति शङ्कायाः समाधानं विचार्यमस्तीति केचिद् आहुः । वस्तुतस्तु व्याकरणकारान्तरमते सेड्धातुमध्ये छिदेः पाठाद् एवमुक्तमिति प्रतिभाति ।

**पुरुषव्यत्यय इति** ।। उत्तमपुरुषस्य प्रथमपुरुषत्वेन व्यत्ययः । 'विधानमेव' इत्यत्र विधानपदोपरि भारो द्रष्टव्यः । **न चेतीति** ।। कृष्णस्यैव सर्वशरण्यत्वेन तस्यान्यः शरण्यो नास्ति यतः, अतोऽहं प्रपद्य इति भगवद्वचनमयुक्तमित्यर्थः । **इति सम्बन्ध इति** ।। 'इति एवम्' शब्दयोरध्याहारेणेत्यर्थः । **परिमार्गणत्वाभावादिति** ।। भावनाविशेष एवायमिति भावः ।। ४,५ ।।

**भावप्रकाशः (कृ.टि.)– ।। चिच्छिदिषुमिति** ।। 'रलोव्युपधाद्धलादेः संश्च' इति सेटः सनः कित्वाद्गुणाभाव इति ध्येयम् । ननु छिदेरनुदात्तत्वेन 'एकाच उपदेशेशिति' इति इट्प्रति-षेधात् कथं चिच्छिदिषुमित्युक्तम् । अत्राहुः । सूत्रे 'अनुदात्तात्' इत्यस्योपदेश इति विशेषणम् । अन्यथा कर्तुमित्यादाविण्णिषेधाप्रसङ्गात् । नित्स्वरेण सम्प्रत्युदात्तत्वात् । नत्वेकाच

इत्यस्य । अतः श्रूयमाणैकाचः इति पर्यवस्यति । प्रकृते च सन्नन्तस्य च्छिदेः श्रूयमाणैकाच्त्वाभावेन इण्निषेधाभावाच्चिच्छिदिषुमिति युक्तमिति । तदपरे न क्षमन्ते । 'एकाचः' इत्यत्राप्युपदेश इत्यस्यावश्यकत्वात् । अन्यथा बिभित्सति पिपक्षतीत्यादाविडभावायोगात् द्वित्वे कृतेऽनेकाच्त्वात् । तस्माच्छेदनं च्छित् । सम्पादादित्वाद्भावे क्विप् । ततः 'सर्वप्रातिपदिकेभ्यः क्विब्वा आचारे' इत्याचारे क्विप् । एवं च आचारक्विबन्तस्य धात्वन्तरत्वात् लक्षणप्रतिपदोक्तपरिभाषया नोक्तसूत्रेण इण्निषेधः । अतश्चिच्छिदिषुमिति युक्तम् । आचरक्विबन्तत्वं चावश्यमङ्गीकार्यम् । च्छिदिशक्यार्थद्वैधीकरणसादृश्येन विमर्शरूपार्थलाभात् । अन्यथा तदलाभादित्याहुः । तन्न । धातूनामनेकार्थत्वात् च्छिदिनैवोक्तार्थलाभे तदर्थमाचारक्विबाद्यनुसरणायोगात् । गत्यन्तरसत्वे प्रकृतप्रयोगसिद्ध्यर्थं तदनुसरणमित्यस्याप्ययोगाच्च । चिच्छिदिषु पदात् क्विब्द्वयार्थप्रतीतिपूर्वकमेव पदार्थबोधप्रसङ्गाच्च । वयं तु ब्रूमः ।

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु'

इत्यत्र भर्तृहरिणा ये स्वतन्त्राः प्रसिद्धार्थाः । ये च लोकविश्रुताः । प्राचुर्येण लोकप्रयुक्ताश्च शब्दास्तेष्वैव शास्त्रार्थः कर्तव्यः । निरूढत्वेन प्रथमोपस्थितैस्तैरेव निराकाङ्क्षत्वादित्युक्तम् । ततश्च पाणिन्यादिभिश्छिदेः यदनुदात्तत्वमुक्तं तद् द्वैधीकरणार्थस्यैव तदर्थत्वेन लोकप्रसिद्धत्वात् प्राचुर्येण लोकोपयुक्तत्वाच्च । न तु विमर्शार्थस्य , तदभावात् । अत एव 'शब्देषु न तदुक्तिषु 'इत्यनेन तत्सदृशशब्देषु शास्त्रार्थो न कर्तव्य इत्युक्तम् । एवञ्च विमर्शार्थच्छिदेरिडभावप्रयोजकानुदात्तत्वाभावात् एकाच उपदेशेऽनुदात्तात् इत्यनेन इण्निषेधः । ततः चिच्छिदिषुमिति युक्तमुक्तम् । श्लोके अनर्थकं सन्दिग्धार्थकम् अप्रयुक्तञ्च क्रमेण विशेषणव्यावर्त्यम् । तदुक्तिषु तत्सदृशेष्वित्यर्थः । अत एव मिमीते माता तस्याः स्वसा मातृस्वसा इत्यत्र मातृपितृभ्यां स्वसेति षत्वं नेति दिक् ।

ननु प्रतिपदोक्तेष्वेवाभिव्यक्तपदार्था ये इति न्यायप्रवृत्तिरिति चेत् । उच्यते । च्छिद्यादीनामप्यप्रसिद्धार्थत्वेन नानुदात्तत्वम् । उक्तन्यायात् । इयांस्तु विशेषः । सर्वनामत्वं सूत्रोक्तमनुदात्तत्वं तु व्याख्याकारोक्तमिति । ततश्च 'सर्वाय' इत्यादिसंज्ञाशब्दे 'सर्वनाम्नः स्मै' इत्यादिकार्याभावाद्विमार्शार्थच्छिदावपि 'एकाच उपदेश' इत्युक्तकार्याभावे सति न कश्चिद्दोषः ।

श्लोकः ५

नन्वेवं तदुक्तरीत्या चिच्छिदिषुरिति वक्तव्यमित्यत आह– **अभ्यासलोप इति** ।। **प्रपत्त्येति** ।। 'तदीयोऽहम्' इत्यादिस्मृतिरूपया शरणागत्येत्यर्थः । **उत्तमपुरुष इति** ।। 'प्रपद्ये' इत्युत्तमपुरुषप्रयोग इत्यर्थः । **अस्येति** ।। 'तमेव प्रपद्ये' इत्यस्य ब्रह्मज्ञानत्वाभावादित्यर्थः ।। ४ ।।

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ।।५।।**

## भाष्यम्

साधनान्तरमाह– **निर्मानेति** ।। ५ ।।

**भावप्रदीपिका (प.टी.)**– तमेव इत्यनेनैवोपायकथने निर्मानम् इति किमर्थम् ? इत्यत आह– **साधनान्तरमिति** ।। ५ ।।

**प्रमेयदीपिका (ज.टी.)**– तर्हि ब्रह्मज्ञानसाधनं विश्वविमर्शः । तत्र साधनं च तत्प्रपत्तिरिति समस्तमुक्तम्। किमुत्तरेण? इत्यत आह– **साधनान्तरमिति** ।। ५ ।।

**भावरत्नकोशः (सु.टि.)**– उत्तरभाष्यमवतारयन् वृत्तनिर्गलितमनुवदति– **तर्हीति** ।। 'प्रपत्तेर्विश्वविमर्शोपायत्वे' इत्यर्थः । **समस्तम्** आकाङ्क्षितं सर्वम् । **साधनान्तरमितीति** ।। 'ब्रह्मज्ञाने' इति शेषः ।।

**गीताक्षरार्थस्तु**– 'एवम् 'अश्वत्थमेनम्' इत्यत्र 'एनमश्वत्थं छित्वा कार्यत्वपरतन्त्रत्वादिना विमृश्य, परं तत् परिमार्गितव्यम् इति विश्वावमर्शस्य ब्रह्मज्ञानं प्रत्युपायत्वमुक्तम् । ब्रह्मज्ञानस्य किं फलम् इत्याकाङ्क्षायाम् 'यस्मिन् गता न निवर्तन्ति भूयः' इति प्राप्तपरब्रह्मस्वरूपाणाम् अपुनरावृत्तिलक्षणं फलं चोक्तम् । इदानीं विश्वविमर्शादन्यच्च ब्रह्मज्ञानसाधनं तज्ज्ञानफलं चाव्ययमित्युच्यते– **निर्मानेति** ।। निर्गतौ मानमोहौ अहङ्कारमिथ्याप्रत्ययौ येभ्यस्ते निर्मानमोहाः, जितः सङ्गदोषः दुर्जनसङ्गलक्षणदोषो यैस्ते जितसङ्गदोषाः,

'मृतौ वाऽपि न चाप्येकत्ववादिभिः ।
समत्ववादिभिश्चाहं सङ्गच्छेयं कथञ्चन'

इत्यादेः । अध्यात्मनित्याः अध्यात्मे श्रवणादिना परमात्मस्वरूपालोचने नित्याः ध्रुवाः परिनिष्ठिताः, विनिवृत्तकामाः विशेषतो निवृत्तकाम्यकर्मनिषिद्धविषयाभिलाषाः, सुखदुःखसंज्ञैः सुखदुःखहेतुत्वात् लक्षणया 'सुखं दुःखम्' इति संज्ञा शब्दो येषां तानि तैः द्वन्द्वैः शीतोष्ण-लाभालाभजयापजयादिरूपैः विमुक्ताः अत एव विमूढाः निवृत्ताविद्याः रजस्तमस्स्वभावशून्या वा, अव्ययं तत्पदं भगवत्स्वरूपं गच्छन्ति अवगच्छन्ति, ततः प्राप्नुवन्ति च इति, 'गच्छन्ति' इत्यस्यार्थद्वयं द्रष्टव्यम् । 'इदं च साधनान्तरमाह' इति भाष्येण 'कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थः' इति टीकया च गम्यते । साधनान्तरम् इत्यत्र विश्वविमर्शादन्यद् ब्रह्मज्ञाने साधनं निर्मानत्वादि इत्यर्थस्य प्राप्तिः पुरुषार्थ 'इत्यस्य स्फुटमवगमादिति ।। ५ ।।

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।। ६ ।।**

## भाष्यम्

**स्वरूपं कथयति– न तदित्यादिना ।। ६ ।।**

भावप्रदीपिका (प.टी.)– संसारविमर्शनद्वारा ब्रह्मस्वरूपप्राप्तिर्निर्ममत्वादिनेत्युक्तम् । कीदृशं तत्स्वरूपम् ? इत्यत उत्तरश्लोकमवतारयति– **स्वरूपमिति** ।

प्रमेयदीपिका (ज.टी.)– उत्तरवाक्यानां सङ्गत्यप्रतीतेस्तां सूचयन्नाह– **स्वरूपमिति ।। अनेन कादृशं तत्पदम्, यत्प्राप्तिः पुरुषार्थः?** इत्याकाङ्क्षायामिदमुच्यत इत्युक्तं भवति । **स्वरूपम्** इत्यनेन **पदम्** इत्युक्तस्य **धाम** इति वक्ष्यमाणस्य चार्थोऽप्युक्तो भवति । **स्थानतेजसोरसङ्गतत्वात्** ।। ६ ।।

**भावबोधः** (र.टि.)– ननु पदमव्ययं तद्धाम ममेति वाक्यगतपदधामशब्दयोः स्थानतेजोऽर्थत्वं किन्न स्यादित्यत आह – **स्थानतेजसोरिति** ।। ६,७ ।।

**भावदीपः** (रा.टि.)– पदधामशब्दयोरर्थान्तरशङ्कां निराह– **स्थानेति** ।। ६ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **उत्तरवाक्यानाम्** 'न तद्भासयते' इत्यादीनाम् । अनेन 'न तदित्यादिना' इति प्रतीकेन । **पदम्** 'गच्छन्त्यमूढाः पदमव्ययं तत्' इत्यत्रोक्तम् ।

श्लोकः ७,८

उक्तस्य पदपदस्य न केवलं सङ्गतिः, किन्तु अर्थोऽपि इत्यपिशब्दः । ननु पदधामशब्दयोः स्थानतेजोऽर्थत्वं किं न स्यात् इत्यत आह– **स्थानतेजसोरिति** ।। 'तत्परिमार्गितव्यम्' इत्युक्तपरिमार्गणकर्मत्वेन, 'पुरुषं प्रपद्यते' इति प्रपदनीयत्वेन च प्रस्तुतभगवत एवात्र वक्तव्यतया प्रसिद्ध्या स्थानस्य, 'धाम तेजः' इति शङ्करोक्तरीत्या तेजसश्चानाकाङ्क्षितत्वादिति भावः ।। ६ ।।

**गीताक्षरार्थस्तु**– ''न तद्भासयते' इति षट्श्लोक्यक्षरार्थस्तु 'गच्छन्त्यमूढाः पदमव्ययम्' इत्युक्तावाशङ्कते कीदृशं तत्पदम् यत्प्राप्तिः पुरुषार्थ इति तत्रोच्यते– **न तद्भासयत इति** ।। तद् ब्रह्मत्वेन प्रसिद्धं यत् पदं सर्वावभासनसमर्थोऽपि सूर्यो न भासयते न दीपयति न प्रकाशयति । शशाङ्कः चन्द्रो न भासयते पावकः अग्निश्च न भासयत इति सूर्याद्यप्रकाश्यमित्युच्यते । यत् च गत्वा प्राप्य न निवर्तन्ते पुनः संसारं न यान्ति इति मुक्तप्राप्यमित्युच्यते । तत्परमम् उत्तमं मम धाम स्वरूपम् ।। ६ ।।

**भावदीपिका (श्री.टि.)**– ननु 'स्वपदं च सुरान्नयन्' इत्यादौ पदशब्दस्य स्थानार्थताप्रसिद्धेः तथा 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्यभिधानेन धामशब्दस्य तेजोवाचित्वावगमात्, अत्र गीतायां पदधामशब्दौ स्थानतेजोवाचकौ किं न स्याताम्? इत्यत आह– **स्थानतेजसोरिति** ।। ६,७ ।।

**भावप्रकाशः (कृ.टि.)**– ननु पदधामशब्दयोः स्थानतेजोऽर्थत्वं किं न स्यादित्यत आह– **स्थानतेजसोरिति** ।। 'तत्परिमार्गितव्यम्' इत्याद्युक्तपरिमार्गणीयत्वादेः स्थानादावसम्भवादिति भावः ।। ६,७ ।।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ।। ७ ।।**

भावप्रदीपिका (प.टी.)– जीवाभिन्नस्य **कथमयं महिमा** ? इत्यत उक्तम्– ममैव इति ।। ७ ।।

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।। ८ ।।**

# भाष्यम्

**'कर्षति' इत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति– शरीरमित्यादिना ।। यत् यदा शरीरमवाप्नोति उत्क्रामति च जीवः, तदा ईश्वरः एतानि गृहीत्वा संयाति ।।**

भावप्रदीपिका (प.टी.)– अंशोऽपि स्वरूपांशो नेत्यभिप्रायेण तदुत्तरं श्लोकद्वयमवतार्य व्याचष्टे– **कर्षतीति ।।**

प्रमेयदीपिका (ज.टी.)– 'पूर्ववाक्ये जीवस्य प्रकृतत्वात् तदुत्तरमपि तद्विषयम्' इति व्याख्यानमसत्। ईश्वरपदरूढार्थपरित्यागदोषादित्याशयवान् सङ्गतिं तावदाह– **कर्षतीति ।।** 'शरीरावाप्तौ मूलकारणाद् उत्क्रमणे शरीरात् स्थितौ गोलकादिभ्यो विषयान् प्रतीन्द्रियाणि जीवः कर्षति' इति पूर्वत्रोक्तम् । तथा च तस्य नियामकान्तरानुक्त्या इन्द्रियकर्षणे स्वातन्त्रं प्रतीतम् । तदयुक्तम् । पूर्वोक्तेन विरोधादित्याशङ्क्य, ईश्वरस्यैव तत्प्रतिपादयन् तत् जीवस्य स्वातन्त्र्यं निवारयतीत्यर्थः । श्लोकद्वयोपपादनायादिपदम् ।।

**भावबोधः (र.टि.)– ।। पूर्ववाक्य इति ।।** 'ममैवांशः' इति श्लोके इत्यर्थः । तत्परिमार्गणीयत्वादिना स्वरूपमेव प्रकृतं नतु स्थानादिकम् । तस्य परिमार्गणीयत्वादियोगादिति भावः । मूलकारणादित्यादिना प्रकृतिस्थानि इत्येतत् त्रेधा व्याख्यातं भवति । **पूर्वोक्तविरोधादिति ।।** 'न हि प्रतिबिम्बस्य क्रिया च' (२.१९) इत्याद्युक्तविरोधादित्यर्थः ।। ८ ।।

**भावदीपः (रा.टि.)–** 'प्रकृतिस्थानीन्द्रियाणि कर्षति' इत्यत्र कस्मात् कर्षणम्? किं निमित्तं च कर्षति? इत्याकाङ्क्षायामाह – **शरीरावाप्तौ मूलकारणादित्यादिना ।। पूर्वोक्तेनेति ।।** 'न हि प्रतिबिम्बस्य क्रिया च' (२.१९) इत्यादिना जीवास्वातन्त्रस्य द्वितीये समर्थनेन तद्विरोधादित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)– ।। पूर्ववाक्ये** 'ममैवांशः' इति श्लोके । **उत्तरम्** 'शरीरं यदवाप्नोति' इति वाक्यम् । **इति व्याख्यानमिति ।।** तथा च शङ्करः 'यच्चापि यदा च अशु उत्क्रामतीश्वरो देहादिसङ्घातस्वामी जीवः' इति । **रूढार्थेति ।।** यद्यपि 'ईश्वरः शर्व ईशानः

श्लोकः ७,८

शङ्करः' इतीश्वरशब्दः शङ्करे लोकतो रूढः । तथापि 'बिभर्त्यव्यय ईश्वरः' 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादौ ईश्वरशब्दस्य भगवत्येव प्रयोगात् 'ईश्वरो विक्रमी धन्वी' इति विष्णुसहस्रनामस्तुतस्य तस्य विष्णावेव प्राज्ञप्रसिद्धेः, 'बिभर्त्यव्यय ईश्वरः' इत्यत्र 'ईश्वरः ईशनशीलो नारायणाख्यः' इति स्वेनैव योगरूढेर्भाषितत्वाच्च तत्परित्याग एव परपक्षे दोष इत्यभिप्रायेणेवमुक्तम् । मूलकारणात् कर्षति शरीरात् कर्षति । गोलकशब्देन इन्द्रियाधिष्ठानावयवविशेषग्रहः । प्रत्याहारादिकाले विषयेभ्य इन्द्रियाणि चक्षुरादीनि आन्तरं विषयं प्रति कर्षतीति विषय आदिपदार्थः । अनेन 'प्रकृतिस्थानि कर्षति' इत्येतत् त्रेधा व्याख्यातं भवति । **तस्य** जीवस्य **नियामकान्तरानुक्त्या** 'जीवस्य विषयान् प्रतीन्द्रियाकर्षणे शक्तिप्रदोऽन्योऽस्ति नियामकः' इत्यनुक्त्या स्वातन्त्र्यं प्रतीतमिति ।। 'कर्षति' इत्याख्यातार्थो हि कर्ता, कर्ता च स्वतन्त्रः, 'स्वतन्त्रः कर्ता' इति पाणिनिवचनादिति भावः । **पूर्वोक्तविरोधादिति** ।। 'न हि प्रतिबिम्बस्य क्रिया, स हि बिम्बक्रिययैव क्रियावान्' इति द्वितीयादौ जीवास्वातन्त्र्यस्योक्तत्वेन तद्विरोधादित्यर्थः । 'तत् कर्षणे स्वातन्त्र्यं निवारयति' इति वदन् 'ईश्वरदत्तस्वातन्त्र्येण जीवः इन्द्रियाणि विषयान् प्रति कर्षति' इत्येव पूर्ववाक्यं व्याख्यातव्यम् । तथा च पाणिनिवचनमपि अनुकूलितमित्यभिसन्धत्ते ।

**भावदीपिका (श्री.टि.)**– ।। **तद्विषयमिति** ।। जीवविषयमित्यर्थः । ईश्वरपदं तु जीवयोगेन सावकाशम्, सोऽपि हि स्वशरीरेन्द्रियादीनाम् ईष्ट इति भावः । **रूढार्थेति** ।। 'ईश्वरः क्षमणः क्षामः' इति वचनेन विष्णुरेवेश्वरपदमुख्यार्थत्वेन प्रसिद्ध इति भावः । 'प्रकृतिस्थानि' इत्येतत् त्रेधा व्याचष्टे– **शरीरावाप्तावित्यादिना** ।। शरीरप्राप्तिरूपोत्पत्तिकाले प्रकृतिस्थानि पूर्वं स्वमूलकरणे स्थितानि इन्द्रियाणि मूलकारणाच्छरीरं प्रकर्षति । तथोत्क्रमणे मरणकाले पूर्वं प्रकृतिस्थानि स्वशरीरस्थानीन्द्रियाणि शरीरात् मूलकारणं प्रति कर्षति । तथा स्थितिसमये प्रकृतिस्थितानि स्वस्वगोलकेषु स्थितानीन्द्रियाणि गोलकेभ्यो विषयान् प्रति कर्षति, इत्येवं 'प्रकृतिस्थानि' इत्यस्य मूलकारणशरीरगोलकरूपार्थत्रयम् अभिप्रेत्य योजितं भवति । **पूर्वत्रोक्तमिति** ।। 'ममैवांशः' इति श्लोक इत्यर्थः । **पूर्वोक्तेति** ।। 'न हि प्रतिबिम्बस्य क्रिया' इति पूर्वमस्वातन्त्र्यस्य प्रतिपादितत्वेन तद्विरोधादित्यर्थः । **तदिति** ।। इन्द्रियकर्षणादिरूपमित्यर्थः । 'लोकान्तरं च' इत्यनन्तरं 'विषयान् प्रति च' इति शेषः कार्यः । तथा चेश्वरः मूलकारणाद् इन्द्रियाणि गृहीत्वा शरीरं संयाति, उत्क्रमणे शरीरादेतानि गृहीत्वा मूलकारणं संयाति, स्थितौ गोलकेभ्य एतानि गृहीत्वा वियान् प्रति संयातीत्यर्थः ।

**भावप्रकाशः (कृ.टि.)– ।। पूर्ववाक्य इति ।।** 'ममैवांशः' इति श्लोक इत्यर्थः । मूलकारणत्वादित्यादिना प्रकृतिस्थानीत्येतत् त्रेधा व्याख्यातं भवति । **गोलकादिभ्य इति ।।** इन्द्रियाधिष्ठानं गोलकशब्दार्थः । आदिपदेनेन्द्रियविषययोः ग्रहणम् । अयमर्थः । गोलकेभ्यो विषयान् प्रति इन्द्रियाणि कर्षति यदा जीवः प्रणिधानादिकं करोति तदा मनस्तदधिष्ठान-भूत-चक्षुरादिबाह्येन्द्रियेभ्यो विषयविशेषान् प्रति कर्षति । एवं प्रत्याहारादिकाले विषयविशेषोप-क्षीणानि चक्षुरादीनि तेभ्यो विषयान्तराणि प्रति कर्षति । इत्येवं गोलकादिभ्यो विषयान् प्रति कर्षतीति । **पूर्वोक्तेति ।।** 'न हि प्रतिबिम्बस्य क्रिया' इत्याद्युक्तविरोधादित्यर्थः । **ईश्वरस्यैव तत्प्रतिपादयन्निति ।।** इन्द्रियकर्षणादिरूपमित्यर्थः ।।

ननु 'शरीरं यत्' इति श्लोके ईश्वरस्वातन्त्र्यं जीवस्य तदभावश्च न प्रतीयते । ततो नेदं व्याख्यानं युक्तमिति चेदुच्यते । जीवः इन्द्रियाणि कर्षतीति यदुक्तं तदेव 'शरीरं यत्' इति श्लोकेन नियामकान्तरोक्त्या व्याख्यायते । तत्र चेश्वरपदेन तस्य स्वातन्त्र्यमुच्यते 'वायुर्गन्धानिव' इति दृष्टान्तोक्त्या च तत्सूच्यते । वायोर्गन्धोपादानेऽन्यानपेक्षत्वात् । ततश्चोक्तव्याख्यानं युक्तमेवेति । नचैवं जीवः कर्षतीति कथमिति वाच्यम् । 'अपो दहत' इतिवदुपपत्तेरित्याशयात् ।

## भाष्यम्

**'यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः ।**
**तत्र तत्रैव वसति न यत्र स्वयमिच्छति' (१२.३२६.११)**

**इति मोक्षधर्मे ।।**

**'भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत् करोमि ।**
**आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि'**
**(म.भा.१२.२२६.१) इति च ।**

**'हत्वा जित्वाऽपि मघवन् यः कश्चित् पुरुषायते ।**
**अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्'**
**(म.भा.१२.३२४.१९) इति च ।**

श्लोकः ७,८

**'तद्यथाऽनः सुसमाहितं उत्सर्जद्यायात् । एवमेवायं शारीर आत्मा प्राज्ञे-नात्मना अन्वारूढ उत्सर्जयाति' (बृ.४.३.३५) इति च श्रुतिः । 'वाङ् मनसि सम्पद्यते, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायाम्' (छां.उ. ६.८.६) इति च । गन्धानिव सूक्ष्माणि ।। ७,८ ।।**

भावप्रदीपिका (प.टी.)– उत्पत्तौ जीवस्यास्वातन्त्र्ये प्रमाणमाह– **यत्रेति** । संसारविमर्शनद्वारा ब्रह्मस्वरूपप्राप्तिर्निर्ममत्वादिनेत्युक्तम् । कीदृशं तत्स्वरूपम् इत्यत उत्तरश्लोकमवतारयति– **स्वरूपमिति** । तस्य प्रवृत्तावस्वातन्त्र्ये प्रमाणमाह– **भावेति** । हर्म्यासु क्रीडाहर्म्येषु च । नमुचिवाक्यम् । हत्वा इति बलिवाक्यम् । तस्योत्क्रमणेऽस्वातन्त्र्ये प्रमाणमाह– **तद्यथेति** । गन्धदृष्टान्तस्य विवक्षामाह– **गन्धानिति** ।।

प्रमेयदीपिका (ज.टी.)– अत्र शरीरावाप्त्युत्क्रमणयोरुक्तत्वादीश्वरस्य तदयोगात् कथमिदं तद्विषयम्? इत्यतो व्याचष्टे– **यदिति** ।। 'जीवः' इति पूर्ववाक्यादनुवर्तते । यदा इति श्रवणात् 'तदा' इति लभ्यते । **एतानि** इन्द्रियाणि । **संयाति** शरीरम्, लोकान्तरं च ।। कुतोऽयमर्थः? इत्यतो जीवस्य शरीरप्राप्तौ तावदीश्वराधीनत्वे प्रमाणसम्मतिमाह– **यत्रेति।। संयुक्तः** प्रेरकत्वेन संयुक्तः । यत्र यत्रैव योनौ गर्भं धाता तत्र तत्रैव वसति जीवः ।।

प्रवृत्तावपीश्वराधीनत्वे जीवस्य प्रमाणसंवादमाह– **भावेति ।। भावाभावौ** लौकिके शुभाशुभे । **गरीयः** श्रेयो मोक्षमपि । तथाऽपि तन्न करोमि साधयितुं न स्वतन्त्रोऽस्मि । किन्तु आशासु दिक्षु हर्म्यासु हर्म्येषु हृदासु हृदेषु । तास्ताः क्रियाः कुर्वन् इव प्रतीयमानोऽहं यथेश्वरेण नियुक्तोऽस्मि तथा ताः वहामि । हननादिक्रियाः कृत्वा यः कश्चित् परमपुरुषवत् स्वातन्त्र्यमात्मनो मन्यते सोऽपि अकर्तैव भवति । यतः तत् हननादिकं कर्ता ईश्वर एव करोति ।।

शरीरोत्क्रमणमपीश्वराधीनमित्यत्र श्रुतिसम्मतिमाह–**तद्यथेति ।। अनः** शकटम् । **सुसमाहितं** पुरुषेण सम्यगधिष्ठितम् । **उत्सर्जत्** ग्रामादिकमुत्सृजन् । **शारीरः** आत्मा जीवः । **प्राज्ञेन आत्मना** परमात्मना **अन्वारूढः** अधिष्ठितः । **उत्सर्जत्** शरीरमुत्सृजत् । वाक् इत्यनेन उत्क्रमणे परदेवता वागादीन्याकर्षतीत्युच्यते । अनेकेष्वा-

कृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्रायमाह– **गन्धानिवेति** ।। गन्धवतः पुष्पाद्यवयवा-नित्यर्थः ।। ७,८ ।।

**भावदीपः (रा.टि.)–** ।। **गर्भं धातेति** ।। निदधातीत्यर्थः ।। ७,८ ।।

**भावरत्नकोशः (सु.टि.)–** ।। **इदम्** 'शरीरं यदवाप्नोति' इति वाक्यम् । **तद्विषयम्** ईश्वरविषयम् । **पूर्ववाक्यात्** 'जीवभूतः' इति पूर्ववाक्यात् । **लभ्यत इति** ।। तथा च नोन्मूलं व्याख्यानमिति भावः । 'संयाति' इत्यनूद्य तत्र शेषमाह– **संयाति शरीरं लोकान्तरं चेति** ।। 'उत्क्रमणे' इति योज्यम् । अयमर्थः जीवस्य शरीरप्राप्तिकाले इन्द्रियाणि गृहीत्वा शरीरं जीवेन सह संयाति । उत्क्रमणकाले च लोकान्तरम् इन्द्रियाणि गृहीत्वा जीवेन सह संयाति. इत्ययमर्थः कुतः प्रमाणादित्यर्थः । उत्क्रमणे भगवदधीनत्वे प्रमाणं वक्ष्यत इति तावच्छब्दः । अनादिकालतो जीवेन प्रेरणाय संयोगवान् संयुक्तः, सः कः 'परमेश्वरः' इति भावेन 'संयुक्तः' इत्यनूद्य; 'परमेश्वरः इति व्याख्यातम् । 'धाता' इति तृन्नन्ततया द्वितीयोपपत्तिः, 'निदधाति' इति यावत् । आख्यातोपात्तं गर्भपदेन सन्निहितं कर्तारमाह– **जीव इति** ।। 'स्वयमिच्छति वस्तुम्, न तत्र वसति अस्वातन्त्र्यात् इति भाष्यशेषार्थः । **प्रवृत्तावपि** ।। इन्द्रियकर्षणादि-सर्वव्यापारेऽपि । 'तन्न करोमि' इत्यनुवादः 'साधयितुं न स्वतन्त्रोऽस्मि' इति प्रकृतोपयोगाय व्याख्यानम् ।

तुशब्दार्थः– **किन्त्विति** ।। आशाशब्दस्य अभिलाषार्थत्वप्रतीतिं व्युदसितुमर्थमाह– **दिक्ष्विति** ।। हर्म्यह्रदशब्दयोः स्त्रीलिङ्गमार्षमिति भावेनोक्तम्– **हर्म्येषु ह्रदेष्विति** च ।। 'कुर्वन्' इत्यत्र कर्मोक्तिः – **तास्ताः क्रिया इति** ।। गमनविलाससलिलक्रीडाप्लवनादितत्तद्योग्य-क्रिया इत्यर्थः । 'इव' इति स्वातन्त्र्याभावाभिप्रायकः शेषः । **ताः** क्रियाः **वहामि** प्राप्नोमि । हननजयक्रियोक्तिरुपलक्षणमिति भावेनोक्तम्– **हननादिक्रिया इति** ।। अपिपदेन क्रियान्तर-ग्रहणमिति भावेनैवमुक्तमित्यपि आहुः । 'पुरुषायते' इत्यस्यार्थः – **परमपुरुषवत् स्वातन्त्र्य-मात्मनो मन्यत इति** ।। अनेन 'कर्तुः क्यङ् सलोपश्च' इति उपमानाद् आचारे क्यङन्तोऽयं शब्दः, पुरुषशब्दश्च परमपुरुषार्थकः, पुरुषसदृशाचारश्च स्वातन्त्र्यमतिरेवेत्युक्तं भवति । 'कर्ता' इत्यस्यार्थः– **ईश्वर इति** ।।

'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरोक्तेराह– **अनः शकटमिति** ।। सृजेः सकर्मत्वात्

श्लोकः ७,८

कर्म समर्पयन् तस्य तौदादिकतया शबनवकाशादाह– **ग्रामादिकमुत्सृजदिति** ।। 'शारीर आत्मा' इत्यस्यार्थः – **जीव इति** ।। 'शरीरमुत्सृजन्' इत्यनेन शरीरादुत्क्रमणमपि ईश्वराधीन-मित्युक्तं भवति । 'वाक्' इति श्रुतेः प्रकृतोपयोगाय तात्पर्यमाह– **वागित्यनेनेति** ।। अनेकेषु तूलशीर्णपर्णप्रभृतिषु गन्धशब्दस्य गुणवचनत्वे बहुवचनानुपपत्तिः, वायुनाऽऽकृष्यमाणत्वानु-पपत्तिश्च इत्यत आह– **गन्धवत इति** ।।

'गन्धो गन्धक आमोदे सम्बन्धे लेशवर्गयोः ।
स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ।।'

इति वचनेन द्रव्यवचनो गन्धशब्द आकृष्यमाणवस्त्वर्थो बहुवचनान्तश्चात्र गृहीत इति भावः । अनेन 'वायुर्गन्धवतः पुष्पाद्यवयवान् यथा गृहीत्वा दूरदेशं संयाति, तथा ईश्वर एतानि पूर्वश्लोके जीवसम्बन्धितया प्रकृतानीन्द्रियाणि गृहीत्वा जीवस्य शरीरावाप्त्यादौ संयाति' इत्यर्थः सम्पद्यत इत्युक्तं भवति । 'गन्धवतः' इति वदन् गन्धशब्दोऽयम् अर्शआद्यजन्त इत्यभिप्रैति इत्यपि केचित् ।।

**गीताक्षरार्थस्तु** 'ननु विश्वविमर्शशब्दितजगद्वृक्षच्छेदो ब्रह्मादिप्रपत्त्याऽपि भवति । अतः 'तमेव' इति किमवधार्यते इत्यत उच्यते– **ममैवांश इति** ।। जीवलोके जीवाधिष्ठितब्रह्मादिजने ब्रह्मादिशरीर इति यावत् । सनातनः अनादिनित्यः जीवभूतः जीवत्वं प्राप्तः ममांश इव, सूर्यस्य खद्योत इव किञ्चित्सादृश्यमात्रेण 'अंशः' इत्युच्यते, मदंशाभासः मत्प्रतिबिम्ब इति यावत् । प्रतिबिम्बत्वं च तत्सदृशत्वे सति तदधीनत्वं विवक्षितम् । तथा च ब्रह्मादेर्जीवस्य भगवदंशा-भासत्वेनासमर्थत्वाद् जगद्वृक्षच्छेदाय भगवन्तमेव प्रपद्येतेत्याशयः । एवं प्रतिबिम्बोऽपि जीवः किमपि कार्यं करोतीत्युच्यते– **मनःषष्ठानीति** ।। जीवः प्रकृतिस्थानि स्वाधिष्ठाने स्थितानि मनः षष्ठं सङ्ख्यापूरणं येषां तानि तथोक्तानि । इन्द्रियाणि श्रोत्रादिपञ्चज्ञानेन्द्रियाणि शरीरा-वाप्तिकाले स्वाधिष्ठानान्मूलकारणात् शरीरं प्रति कर्षति । उत्क्रमणकाले स्वाधिष्ठानात् शरीरान्तरं प्रति कर्षति, स्थितिकाले च स्वाधिष्ठानाद् गोलकादिभ्यो विषयान् प्रति कर्षतीति ।

विवृतिकारादयस्तु जीवानाम् अंशाभासतयाऽसमर्थत्वे क्वापि कार्ये शक्तिर्न स्यादित्यत उच्यते– 'मनःषष्ठानीति' इत्यवातारयन् ।। ७ ।।

**गीताक्षरार्थस्तु** 'जीवः इन्द्रियाणि कर्षति' इत्युक्ते नियामकान्तरानुक्त्या कर्षणे स्वातन्त्र्यम् आख्यातेन तस्य प्रतीतम् । तदयुक्तम् । 'नित्यः सर्वगतः' 'अनाशिनोऽप्रमेयस्य' इत्यादौ जीवस्येश्वरप्रतिबिम्बत्वोक्त्या अस्वातन्त्र्याभिधानेन तद्विरोधात्, इत्याशङ्क्य 'ईश्वरस्यैवेन्द्रिय-कर्षणे स्वातन्त्र्यम्, न जीवस्य इति जीवस्वातन्त्र्यनिवारणायोच्यते– **शरीरमिति** ।। श्रोत्रं चक्षुरिति च ।। 'जीवः' इति पूर्ववाक्यादनुवर्तते । यद् 'यदा' इति श्रवणात् 'तदा' इति लभ्यते । दुःखस्पृष्टचेतनत्वं प्राप्तो जीवो यद् यदा शरीरमाप्नोति यच्चापि यदाऽपि च उत्क्रामति शरीरान्निर्गच्छति तदा ईश्वरो भगवान् एतानि जीवकर्षणीयत्वेनोक्तानि इन्द्रियाणि गृहीत्वा शरीरं लोकान्तरं च प्रति संयाति सम्यग् गच्छति । सत्येव शरीरे तद्गतेन्द्रियमात्रादानेन गमने दृष्टान्तः वायुराशयात् पुष्पादेः स्थानाद् गन्धानिव गन्धवतः पुष्पाद्यवयवादीनिवेति । अनेकेष्वाकृष्यमाणेषु सत्सु गन्धोपादानेऽभिप्राय उक्तो भाष्ये 'गन्धानिव सूक्ष्माणि' इति ।। ८ ।।

**भावदीपिका (श्री.टि.)– ।। संयुक्त इति ।।** अनादिकाले जीवेन संयुक्त इत्यर्थः । 'सयुजा सखाया' इति श्रुतेरिति भावः । **मोक्षमपीति ।।** तथा च यद्यपि शुभादिकं जानन् भवामि जानामीति यावत् । तथाऽपि तन्न करोमीत्यर्थो द्रष्टव्यः । **तास्ता इति ।।** आशासु गमनादिक्रियाः, हर्म्यासु रमणादिक्रियाः ह्रदासु प्लवनादिक्रिया इति तत्तदुक्तिसूचिताः क्रिया इत्यर्थः । **वहामि** करोमीति यावत् । 'हननादि' इत्यादिपदेन 'जित्वा' इत्युक्तजयरूप-क्रियासङ्ग्रहः । **अनेकेषु** जीर्णतृणपर्णादिषु । गन्धोपादाने गन्धदृष्टान्तोपादाने । आश्रयं विना केवलगुणानागमनाद् आह– **गन्धवत इति ।।** तथा च गीतायाम् 'गन्धान्' इत्येतत् अर्श-आद्यजन्तमिति भावः । 'सूक्ष्माणि' इत्यस्यार्थः– **अवयवानिति ।।** अत्र 'वायुर्गन्धमिवा-शयात्' इत्यनुक्त्वा 'गन्धान्' इति बहुवचनप्रयोगेण अत्र गन्धशब्दो द्रव्यवचनः, न गुणवचन इति सूचितम् । 'सत्त्वे गन्धाः गुणे गन्धः' इति द्रव्यवाचितायां नित्यबहुवचनान्तत्वविधानात् । 'चादयोऽसत्त्वे' इति वचनेन सत्त्वशब्दस्य द्रव्यवाचित्वावगमात् । तदेतदभिप्रेत्य भगवत्पादै-र्व्याख्यातम्– 'गन्धानिव सूक्ष्माणि' इति । तद्व्याचष्टे– **गन्धवतः पुष्पाद्यवयवानिति ।।** तथा च चन्दनखण्डरूपद्रव्यदानसमये 'अयं वो गन्धः सुगन्धः' इत्यादिरपप्रयोग इत्यवधेयमिति भाव इति आहुः ।। ८ ।।

**भावप्रकाशः (कृ.टि.)– ।। संयुक्तः प्रेरकत्वेन संयुक्त इति ।।** अत्र संयुक्त इत्यनुवादेन प्रेरकत्वेन संयुक्त इति व्याख्यानम् । क्वचित्तु 'संयुक्तः परमेश्वरः' इत्येव पाठः ।

श्लोकः ९

तत्र संयुक्त इत्यस्य प्रेरकत्वेन जीवसंयुक्त इत्यर्थो बोध्यः । **हर्म्येष्विति** ।। 'हर्म्यादि धनिनां वासः' इत्यमरोक्तेः धनिनां वासस्थानेष्वित्यर्थः । 'शेषं तु ज्ञेयं शिष्टप्रयोगतः' इत्यमरोक्तेः लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति महाभाष्योक्तेश्च हर्म्यास्वित्यादि स्त्रीलिङ्गोपपत्तिः । **परमपुरुषवदिति** ।। पुरुष इवाचरति पुरुषायते । 'कर्तुः क्यङ्सलोपश्च' इति क्यङ् । पुरुषश्च विष्णुः तत्साम्यं च तद्वत् स्वातन्त्र्यज्ञानवत्त्वेनेति भावेनैवमुक्तम् । **अनः शकटमिति** ।। 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरोक्तेरिति भावः । सृजेस्तौदादिकत्वेन कथं शबित्यत आह– **उत्सृजदिति** ।। वाङ्मनसीत्यस्य प्रकृतोपयोगमाह– **वागित्यनेनेति** ।।

ननु गन्धशब्दस्य गुणवाचित्वे सूक्ष्माणीत्युपमानोपमेयसाधारणधर्मोक्तिविरोधः । गुणस्य सूक्ष्मत्वाभावात् । 'यथा गन्धस्य भूमेश्च न भावो व्यतिरेकतः' इति तृतीयस्कन्धोक्तेराश्रयं विना गुणाकर्षणायोगश्चेत्यत आह– **गन्धवत इति** ।। 'गन्धो गन्धक आमोदे सम्बन्धे लेशगर्वयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इत्युक्तेः गन्धशब्दस्य द्रव्यवाचित्वादिति भावः ।

एतेन गन्धानिति बहुवचनं च समाहितम् । नचावयवागमनपक्षे व्यतिरेको गन्धवदिति सूत्रविरोधः । तत्रापि भागागमनस्यैवाभिप्रेतत्वात् । अन्यथा अंशिनं विहायांशगतौ गन्धदृष्टान्तोपादानायोगात् । गन्धस्य गुणत्वेनांशत्वाभावात् । नच 'गुणाद्वालोकवत् ' इत्युक्तालोकवद्गुणस्यैवागमनं किं न स्यादिति वाच्यम् । वैषम्यात् । युक्तमालोकस्यागमनम् । तथात्वेऽपि स्वाश्रयं विहाय वृत्तेरभावात् । किन्तु स्वाश्रयमविहायैवान्यत्रापि वृत्तिः । गन्धागमने तु स्वाश्रयं विहायान्यत्रैव वृत्तिः प्रसज्यते । सा चोक्ततृतीयस्कन्धवाक्यविरुद्धा । गुणस्य तथात्वाभावयुक्तिविरुद्धता च । नच व्यतिरेकसूत्रीयचन्द्रिकाविरोधः । तत्र स्थूलावयवागमनस्य दूषितत्वात् । इह पुनरतिसूक्ष्मभागागमनाङ्गीकारात् ।अत एव 'सूक्ष्माणि' इत्युक्तमिति दिक् ।।८।।

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ।। ९ ।।**

## भाष्यम्

**भोगोस्यापि साधितः पुरस्तात् ।। इन्द्रियद्वाराऽपि सोऽपि भुङ्क्ते ।**

श्लोकः ९

**'तद्य इमे वीणायां गायन्त्येतं ते गायन्ति'(छां.उ.१.७.६) इति च श्रुतिः । गुणान्वितमेव भुङ्क्ते । 'न ह वै देवान् पापं गच्छति' (बृ.उ.३.६.२७) इति श्रुतेः ।। ९ ।।**

भावप्रदीपिका (प.टी.)– अभोक्ता हरिः कथं विषयानुपसेवते ? इत्यत आह– **भोग इति** ।। भोक्तृत्वेऽपीश्वरस्य जीवेन्द्रियद्वारा भोक्तृत्वं कुतः ? इत्यत आह– **इन्द्रियेति** । नन्वन्द्रियद्वारा यदि भुङ्क्ते, तर्ह्यशुभभोगोऽपि सम्भवतीत्याशङ्क्य, उत्तरश्लोके परिहृतमित्याह– **गुणेति** ।। ९ ।।

प्रमेयदीपिका (ज.टी.)– ननु **'श्रोत्रम्'** इत्यादिना विषयभोगोऽस्योच्यते । न चेश्वरस्यासावस्ति । किन्तु जीवस्यैव । तत्कथमिदमीश्वरविषयम्? इत्यत आह– **भोग इति** ।। पुरस्तात् सप्तमे ।। अस्तीश्वरस्य भोगः । किन्तु जीवेन्द्रियैर्नास्तीत्यतो जीव-विषयमेतदित्यत आह– **इन्द्रियेति** ।।'राजाद्यन्तर्गतं गायन्ति' इत्यनेन हि तच्छ्रोत्रेण गानभोगो लभ्यते । विषयभोगाङ्गीकारे दुष्टस्यापि भोगः स्यादित्यत उत्तरवाक्यगतं विशेषणमाश्रित्याह– **गुणेति** ।। गुणमेवेत्यर्थः । एतद्भुञ्जानस्य विशेषणमिति केचित्। तान् प्रत्याह– **न ह वा इति** ।। ९ ।।

भावबोधः (र.टि.)– ।। **राजाद्यन्तर्गतमिति** ।। अनेन'एतम्' इत्येतद्व्याख्यातं भवति ।। ९ ।।

**भावदीपः** (रा.टि.)– 'कर्तुः क्यङ् सलोपश्च'(पा.सू.३.१.११) इत्युपमानादाचारार्थे क्यङन्तोऽयं पुरुषायत इति शब्द इत्युपेत्य तदर्थमाह– **पुरुष इवेति** ।। तद्वदाचारः । स्वातन्त्र्यमतिरेवेति भावः । **कर्ता** इति कारकपदम् ।। एतं ते गायन्ति इत्यत्रैतच्छब्दार्थमाह– **राजाद्यन्तर्गतमिति** ।। **उत्तरवाक्येति** ।। **गुणान्वितम्** इत्युत्तरवाक्येत्यर्थः । **न ह वै देवानिति** ।। 'किमु देवोत्तमं हरिम्' इति श्रुतिशेषः ।। ९ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **सप्तमे** 'पुण्यो गन्धः' इति 'भोगापेक्षयेत्यादिना' इति शेषः ।। 'एतम्' इत्यस्यार्थः– **राजाद्यन्तर्गतमिति** ।। **तच्छ्रोत्रेण** राजादिश्रोत्रेन्द्रियेण । 'गुणैः सारत्वशुचित्वादिशुभधर्मैरन्वितम् इत्यस्य 'निर्गलितं दर्शयति– **शुभमेवेति** ।। 'विषयम्' इति

श्लोकः ९

शेषः । एवमभिप्रेत्यैव गमनिकायाम् 'उत्तरवाक्यगतं विशेषणम्' इत्युक्तम् । शङ्करस्तु 'भुञ्जानं शब्दादीन् विषयान् उपलभमानम्, गुणान्वितं सुखदुःखमोहाख्यैर्गुणैरन्वितम् अनुगतं संयुक्तमिति भुञ्जानस्य विशेषणम्' इत्यभाषत । तदनुवदति– **एतद् भुञ्जानस्येति** ।। 'पुण्यमेवामुं गच्छति, न ह वै देवान् पापं गच्छति' इति श्रुतौ अमुम् सप्तान्नविद्योपासकं सर्वजीवदेहान्तर्गतं हिरण्यगर्भं पुण्यमेव गच्छति, कुतः तस्य देवत्वात् । तथापि कुतः– **न ह वा इति** । देवमात्रस्य पापास्पृष्टपुण्यभोगनियमोक्तेः देवोत्तमस्य भगवतः सुतरां तत्सिद्ध्याऽत्र भुञ्जाने दुःखमोहाप्रसक्तेः न परोक्तं भुञ्जानविशेषणत्वं युक्तम् । किन्तु दुष्टभोगशङ्कानिवारणाय भाष्यरीत्या भुजिक्रिया-कर्मसमर्पकत्वमेवेति भावेनाह– **तान् प्रत्याहेति** ।। दूषयतीत्यर्थः ।।

**गीताक्षरार्थस्तु–** इन्द्रियाणि व्यापारयतो भगवत इन्द्रियद्वारा तत्तद्विषये भोगोऽप्यस्तीत्युच्यते– **श्रोत्रमिति** ।। श्रोत्रादीनि घ्राणान्तानि बाह्येन्द्रियाणि च मनः अन्तरिन्द्रियं च अधिष्ठाय अयमेव ईश्वरपदेनोक्तः स्वतन्त्रो भगवानेव विषयान् शब्दादीन् उपसेवते उपभुङ्क्ते, जीवस्तु तदधीनतयाऽनुभवतीति जीवस्य विषयभोगेऽप्यस्वातन्त्र्यम् एवशब्देन द्योत्यते ।। ९ ।।

**भावदीपिका (श्री.टि.)–** ।। **इदम्** 'शरीरं यदवाप्नोति' इत्यादिवाक्यम् ।। **सप्तम इति** ।। 'पुण्यो गन्ध इति भोगापेक्षया' इत्यादिनेत्यर्थः ।। **किन्त्विति** ।। स्वीयेन्द्रियैरेवास्तीत्यर्थः । **नास्तीति** ।। अत्र तु 'अधिष्ठाय' इति जीवेन्द्रियैर्भोग उच्यत इति भावः । **लभ्यत इति** ।। अन्यथा 'तस्मात्ते धनसनयः' इत्युत्तरत्र धनरूपफलप्राप्तिः गायकानां श्रूयते । फलप्रदश्च वासुदेव एवाखिलानाम्, नान्यो राजादिः, स्वातन्त्र्यात् । तदश्रवणे च तस्य फलदानानुपपत्तेः । पृथक् च गायनश्रवणं न दृश्यते । अतो राजादिश्रोत्रेणैव गानभोगो लभ्यत इति भावः । **आश्रित्याहेति** ।। उत्तरवाक्ये 'गुणान्वितम्' इति शुभविषयभोगस्योक्तत्वात्, तदाश्रित्य 'विषयानुपसेवते' इत्यस्याप्यर्थो द्रष्टव्य इत्याशयेनाहेत्यर्थः । ननु गुणशब्दस्य शुभपरत्वात् 'तादृशान्नाद्यन्वितं पात्रादिकं भुङ्क्ते' इत्यन्यथाप्रतीतेराह– **गुणमेवेत्यर्थ इति** ।। शुभमेवेत्यर्थः ।।

ननु 'गुणान्वितं भुञ्जानम्' इत्यस्य 'गुणमेव भुङ्क्ते' इत्यर्थः कथं लभ्यत इति चेदुच्यते । अत्र 'गुणान्वितं भुञ्जानम्' इत्यस्य 'गुणान्वितमेव भुङ्क्ते' इति तात्पर्यकथनेन 'गुणान्वितम्' इत्येतत् 'भुञ्जानम्' इत्यत्र भुजिक्रियाविशेषणमिति सूचितम् । तथा च 'भोजनं गुणान्वितम्,

तत्सम्बद्धं – तत्कर्मकम्' इति यावत् यथा स्यात्तथा 'भुञ्जानं भुजिक्रियां कुर्वाणम्' इति व्याख्यानेऽर्थाद् गुणान्वितं भुञ्जानस्य 'शुभमेव भुङ्क्ते' इत्यर्थो लभ्यत इति द्रष्टव्यमित्यर्थः । अन्ये तु गुणशब्दो भावप्रधानः । तथा गुणत्वान्वितो गुण एव, ततश्च 'गुणमेव भुङ्क्ते' इत्यर्थो लभ्यत इत्याहुः । वस्तुतस्तु 'गुणान्वितं भुञ्जानम्' इत्युक्ते 'गुणेन शुभेनान्नादिनाऽन्वितं पात्रादिकं भुङ्क्ते' इत्यर्थप्राप्त्या, तस्य बाधितत्वेन 'सविशेषणे हि' इति न्यायेन 'गुणमेव भुङ्क्ते' इति प्राप्नोतीति भाव इति सम्प्रदायः ।

**एतद्भुञ्जानस्येति** ।। 'भुञ्जानं भगवन्तं नानुपश्यन्ति' इत्युक्ते 'कथम्भूतम्' इति शङ्कायां 'उत्क्रामन्तम्' इत्यादिवत् इदमपि तस्य विशेषणमेव । 'ज्ञानादिगुणान्वितम्' इति तदर्थः, न त्वशुभभोगप्रसक्तिवारणाय । 'भुञ्जानम्' इत्यत्रत्यभुजिक्रियाकर्मकथनरूपम्, शुभमात्रभोक्तृत्वे मानाभावादित्यर्थः । **तान् प्रत्याहेति** ।। यदीदं भगवद्विशेषणं स्यात् तर्हि 'भुञ्जानम्' इति सामान्योक्त्या भगवतोऽशुभभोगस्यापि प्राप्तेस्तन्निवारकाभावाद् अस्त्वशुभभोगः, किं बाधकम् इत्याकाङ्क्षायामाहेत्यर्थः ।

**न ह वा इतीति** ।। 'पुण्यमेवामुं गच्छति' इति पूर्ववाक्यम् । **अमुं** सप्तान्नविद्योपासकं सर्वजीवदेहान्तर्गतं हिरण्यगर्भं प्रति **पुण्यमेव गच्छति**, न पापम् । कुतः ? देवो ह्यसौ जातः । तथाऽपि कुतः 'न ह वै' इति श्रुतौ देवमात्रस्याशुभभोगनिरासे देवोत्तमस्य हरेः सुतरां तत्सिद्धिरित्याशयः । 'शरीरं यदवाप्नोति' इति श्लोकोक्तं 'उत्क्रामन्तं स्थितं वाऽपि' इत्यनेनानूद्य, 'श्रोत्रम्' इति श्लोकोक्तं शुभविषयभोजनं 'भुञ्जानं वा गुणान्वितम्' इत्यनेनानूद्य, 'नानुपश्यन्ति' इति दर्शनाभावो विधीयत इति स्पष्टं प्रतिभासनात् **सुमतेर्नैव शङ्कावकाशाऽस्ति** । अतो 'मन्दाशङ्का' इत्युक्तमिति द्रष्टव्यम् । भाष्ये 'किमिति न दृश्यते' इत्यनन्तरं 'तस्मान्नास्त्येव' इति शेषः पूरणीयः । अत एवोत्तरत्र 'तदभावः' इति वक्ष्यति ।। १० ।।

**भावप्रकाशः (कृ.टि.)**– ।। **राजाद्यन्तर्गतमिति** ।। अनेन 'एतम्' इत्येतद्व्याख्यातं भवति । **भुञ्जानस्येति** ।। नतु प्राग्वद्योक्तव्यविशेषणमित्यर्थः ।। ९ ।।

**उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।। १० ।।**

श्लोकः १०

# भाष्यम्

**तर्हि किमिति न दृश्यते? इत्यत आह– उत्क्रामन्तमित्यादिना ।।**

**भावप्रदीपिका (प.टी.)**– नन्वेवं सर्वत्र भुङ्क्ते, तर्हि तस्यानुपलब्धिबाध इत्याशङ्क्य, उत्तरश्लोकद्वयमवतारयति– **तर्हीति** ।। १० ।।

**प्रमेयदीपिका (ज.टी.)**– उक्तमेव किमित्युच्यते ? इति मन्दाशङ्कानिरासार्थमुत्तरश्लोकद्वयस्य सङ्गतिमाह– **तर्हीति** ।। 'यदि जीवातिरिक्तो देहे नियामकः स्यात्' इति शेषः । उक्तानुवादेन विमूढत्वमनुपलम्भे कारणम् न तदभाव इत्युच्यत इति भावः ।। १० ।।

**भावदीपः (रा.टि.)**– ।। **उक्तमेवेति** ।। 'विषयानुपसेवते' इत्युक्तमेव 'भुञ्जानं वा गुणान्वितम्' इति किमुच्यत इत्यर्थः ।। १० ।।

**भावरत्नकोशः (सु.टि.)**– ।। **उक्तमेवेति** ।। 'विषयानुपसेवते' इत्युक्तविषयभोजनमेव । 'गुणान्वितं भुञ्जानम्' इति किमुच्यत इत्यर्थः । विषयोपसेवने दुष्टविषयस्यापि भोगः स्यात् इति शङ्कानिरासार्थं पूर्वोक्तविषयसेवानुवादेन 'भुञ्जानश्च शुभविषयमेव भुङ्क्ते, नाशुभम्' इति वक्तुं पुनरुक्तिरर्थवती इति विमर्शवतः सुमतेर्न पुनरुक्तिशङ्केति भावेनोक्तम्– **मन्दाशङ्केति** ।।

केचित्तु 'यच्चाप्युत्क्रामतीश्वरः' इत्युक्तम् उत्क्रामन्तम् इत्यनूद्य 'विषयानुपसेवते' इत्युक्तम्; 'गुणान्वितं भुञ्जानम् इत्यनूद्य च 'नानुपश्यन्ति' इति दर्शनाभावोऽपि विधीयत इति स्पष्टम् अपुनरुक्तिप्रतिभासात् 'मन्दाशङ्का इत्युक्तम्' इत्याहुः । 'तर्हि' इत्यत्र प्रतियोग्याह– **यदीति** ।। **नियामकः** 'इन्द्रियाणाम् इति शेषः । **उक्तानुवादेनेति** ।। अत्रानुवादप्रकारः प्राग् दर्शितोऽस्माभिः । **न तदभावः** देहे जीवातिरिक्तनियामकाभावः 'कारणम् इत्यनुषङ्गः । वस्त्वनुपलम्भो हि वस्तुनोऽभावे, वस्तुदर्शने प्रतिबन्धकभावे वा भवति । प्रकृते च न नियामकाभावः तदनुपलम्भहेतुः, किन्तु दर्शनप्रतिबन्धकं विमूढत्वमेवेति अनेन श्लोकेनोच्यत इत्यर्थः ।।

**गीताक्षरार्थस्तु** नन्वीश्वरस्य विषयभोगाङ्गीकारे दुष्टविषयभोगोऽपि स्यात् । किञ्च यदि देहे जीवातिरिक्त इन्द्रियनियामकः स्यात् तर्ह्यसौ तथा परिदृश्येत । न दृश्यते च । अतोऽनुप-

लम्भात् नास्त्येव इति शङ्काद्वयं परिहर्तुमुच्यते– **उत्क्रामन्तमित्यादिना** ।। उत्क्रामन्तं जीवेन सह पूर्वदेहान्निर्गच्छन्तं स्थितं देहे जीवेन सहावस्थितं वा गुणान्वितं शुभमेव विषयं भुञ्जानं वा भगवन्तं विमूढाः विशेषेणाज्ञानिनः, मिथ्याज्ञानिनश्च नानुपश्यन्ति । अनुपलम्भादभाव एव किं नेष्यते । नैवमित्युच्यते ज्ञानचक्षुषः भगवत्प्रसादायत्तापरोक्षनिश्चयाख्यचक्षुष्मन्तस्तु पश्यन्ति इति । अत्र 'सारत्वशुचित्वादिगुणान्वितं शुभमेव विषयं भुङ्क्ते' इत्यनेन दुष्टभोगोऽपि स्यात् इति शङ्का, 'विमूढा नानुपश्यन्ति' इत्यनेन विमूढत्वम् अनुपलम्भे कारणम् न तदभावोऽनुपलम्भे कारणमिति सिद्ध्या 'तर्हि किमित्यसौ न दृश्यते' इति शङ्का च परिहृता बोद्धव्या ।। १० ।।

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। ११ ।।**

## भाष्यम्

**यतन्तः** ज्ञानं प्राप्य । **अकृतात्मानः** अशुद्धबुद्धयः ।। ११ ।।

भावप्रदीपिका (प.टी.)– यततां कथमपरोक्षदर्शनम् ? इत्यत आह– **यतन्त इति । सर्वात्मनामकृतत्वात् को विशेषः** ? इत्यत आह– **अकृतेति** ।। ११ ।।

**प्रमेयदीपिका (ज.टी.)– 'यतन्तो योगिनश्च' इति कारणान्तरमुच्यते'** इति **प्रतीतिनिराकरणार्थमाह– यतन्त इति ।। आत्मा जीवश्चेत् सर्वदा अकृत एव** । शरीरं **चेद् असम्भव इत्यत आह– अकृतेति ।। आत्मा बुद्धिः** । **अकृतत्वं चाशुद्धत्वम्** । **'केशान् करोति' इत्यादौ शोधनेऽपि करोतेः प्रयोगादिति भावः ।। ११ ।।**

**भावबोधः (र.टि.)– ।। कारणान्तरमिति** ।। दर्शने ज्ञानचक्षुष्ट्वव्यतिरिक्तप्रयत्नादिरूपसाक्षात्कारणान्तरमित्यर्थः । **सर्वदा अकृत एवेति** ।। ततश्च 'नैनं पश्यन्ति' इति दर्शनसमय एव 'अकृतात्मानः' इति किं विशिष्योच्यते इति भावः ।। ११ ।।

**भावदीपः (रा.टि.)– ।। कारणान्तरमिति** ।। ज्ञानचक्षुष्ट्वापेक्षयेति योज्यम् ।।११।।

**भावरत्नकोशः (सु.टि.)– ।। कारणान्तरमिति** ।। 'ज्ञानचक्षुषः पश्यन्ति', 'यतन्तो योगिनश्च पश्यन्ति' इत्यत्र चशब्देन ज्ञानचक्षुष्ट्वव्यतिरिक्तं यत्नयोगादिरूपं दर्शनकारणमुच्यत

श्लोकः ११

इति प्रतीतीत्यर्थः । अनेन 'यतन्तो योगिनश्च' इत्यत्र 'ज्ञानं प्राप्य' इति शेषः पूरितो भवति । 'आत्मा जीवे धृतौ बुद्धौ शरीरे परमात्मनि' इत्यात्मशब्दस्य नानार्थत्वादाह– **आत्मा जीवश्चेदिति** ।। **सर्वदेति** ।। तथा च 'नैनं पश्यन्ति' इति दर्शनाभावसमय एव विशिष्य 'अकृतात्मानः' इत्युक्त्ययोग इति भावः । **असम्भव इति** ।। अकृता आत्मानः देहा येषां ते तथोक्ता इति विवक्षायां 'शरीरमात्रस्योत्पत्तिः प्रत्यक्षसिद्धा' इति तस्याकृतत्वम् असम्भवदुक्तिकमित्यर्थः । अशुद्धत्वं च तस्याह । करोतेः शोधनार्थत्वे प्रयोगं प्रमाणयति– **केशानिति** ।।

**गीताक्षरार्थस्तु** ज्ञानचक्षुष्ट्वव्यतिरिक्तप्रयत्नादिकारणेन उपलम्भः किं न स्यात् इत्यत उच्यते– **यतन्त इति** ।। यतमानाः श्रवणादिलक्षणप्रयत्नं कुर्वाणा अपि परोक्षनिश्चयरूपज्ञानं प्राप्यैव योगिनो भवन्ति । चित्तनिरोधलक्षणसमाधिशालिन एव आत्मनि मनसि अवस्थितमेनम् शुभभोक्तृत्वादिधर्मविशिष्टं भगवन्तं पश्यन्ति साक्षात्कुर्वन्ति । अकृतात्मानः अशुद्धबुद्धयस्तु यतमाना अपि अचेतसः असंज्ञानाः अप्राप्तपरोक्षनिश्चयाः नैनं पश्यन्ति ।

'न तस्य तत्त्वग्रहणाय साक्षाद् वरीयसीरपि वाचः समासन् ।

'मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुषतत्त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वाऽत्र तु डाम्भिकानाम् ।।'

इत्यादिवचनादिति ।। ११ ।।

**भावदीपिका (श्री.टि.)– ।। कारणान्तरमिति** ।। 'पश्यति' इत्युक्तापरोक्षदर्शने ज्ञानचक्षुष्ट्वव्यतिरिक्तं श्रवणादिरूपपुरुषप्रयत्नरूपं कारणान्तरमुच्यत इत्यर्थः । **यतन्त इतीति** ।। तथा च 'पश्यन्ति ज्ञानचक्षुषः' इत्युक्ते, तत्र ज्ञानचक्षुष्ट्वमेव कथं स्यात् इति शङ्कायां श्रवणादिरूपः पुरुषप्रयत्नः तत्र कारणत्वेनोच्यत इत्यर्थः । भाष्ये 'ज्ञानं प्राप्य' इत्यस्य 'ज्ञानचक्षुष्ट्वं प्राप्य' इत्यर्थो द्रष्टव्यः । **सर्वदेति** ।। अजन्यत्वादिति भावः । तथा च 'नैनं पश्यन्ति' इति दर्शनाभावसमय एव 'अकृतत्ववचनमयुक्तम्' इति द्रष्टव्यम् । **असम्भव इति** ।। उत्पत्तेः प्रत्यक्षसिद्धत्वेन अकृतत्वासम्भव इत्यर्थः । ननु करोतेः शुद्धतायां प्रयोगो न दृष्टः इति चेत् तत्राह– **केशानिति** ।। सिद्धानां केशानां करणासम्भवात् शोधनमेव तत्र करणशब्दार्थ इत्याशयः ।। ११ ।।

**भावप्रकाशः** (कृ.टि.)– ।। **कारणान्तरमिति** ।। दर्शने ज्ञानचक्षुष्ट्वव्यतिरिक्तं यत्नादिरूपं कारणान्तरमित्यर्थः । **सर्वदाऽकृत एवेति** ।। ततश्च 'नैनं पश्यन्ति' इति दर्शनाभावसमय एव विशिष्य 'अकृतात्मानः' इत्युक्त्यप्रयोग इति भावः ।। ११ ।।

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। १२ ।।**

**भाष्यम् — पूर्वोक्तमेव ज्ञानं प्रपञ्चयति– यदादित्यगतम् इत्यादिना ।। १२ ।।**

**भावप्रदीपिका** (प.टी.)– **नोत्तरत्राद्वैतमुच्यत इत्याह– पूर्वोक्तमिति** ।। १२ ।।

**प्रमेयदीपिका** (ज.टी.)– **ननु 'न तद् भासयते' (१५.१६) इत्यादिना स्वरूपं कथितम् । तत्किमुत्तरेण? इत्यत आह– पूर्वोक्तमेवेति ।। 'अधश्च मूलान्यनुसन्ततानि' (१५.२) इति यत्सर्वान्तर्यामित्वरूपं विज्ञानमुक्तम्, यच्चोर्ध्वशब्देन सर्वोत्तमत्वं तदध्यायशेषेण प्रपञ्चयतीत्यर्थः ।। १२ ।।**

**भावबोधः** (र.टि.)– ननु 'यदादित्यगतम्' इत्यादिना 'द्वाविमौ' इत्यादिना च वक्ष्यमाणान्तर्यामित्वसर्वोत्तमत्वरूपं विज्ञानं पूर्वस्मिन्नध्याये केनोक्तमित्यत आह– **अधश्चेति** ।। १२ ।।

**भावरत्नकोशः** (सु.टि.)– 'यदादित्यगतम्' इत्यादिना 'द्वाविमौ पुरुषौ' इत्यादिना च वक्ष्यमाणयोः सर्वान्तर्यामित्वसर्वोत्तमत्वयोः पूर्वाध्यायेऽनुक्तत्वात् कथं 'पूर्वोक्तमेव' इति भाषणम्, कथं च 'संसारस्वरूपतदत्ययोपायविज्ञानान्युच्यन्ते' इति प्रतिज्ञातविज्ञानस्याप्रदर्शनम् इत्यत आह– **अधश्चेत्यादिना** ।। **विज्ञानं** विज्ञातव्यं भगवन्माहात्म्यम् । 'ऊर्ध्व उत्तमः सर्वतः' इति भाषितत्वादाह– **सर्वोत्तमत्वमिति** ।। 'अध्यायशेषेण' इत्यत्र 'यदादित्यगतम्' इत्यादिचतुःश्लोक्या सर्वान्तर्यामित्वप्रपञ्चनम्', द्वाविमौ इत्यादित्रिश्लोक्या सर्वोत्तमत्वप्रपञ्चनम्, तदुत्तरश्लोकद्वयस्यापि तत्फलकथनरूपस्य तच्छेषत्वम् इति विवेक्तव्यम् ।। १२ ।।

**गीताक्षरार्थस्तु**– 'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वरूपं

श्लोकः १३

विज्ञानशब्दितं भगवन्माहात्म्यमुक्तम्, तत्प्रपञ्च्यते– **यदादित्यगतमित्यादिचतुःश्लोक्या** ।। तेजः प्रकाशनशक्तिः जगद् भासयते प्रकाशयति यच्चन्द्रमसि यच्चाग्नौ तत्तेजो मामकं मदीयम्, यद् आदित्यादौ मत्सन्निधायत्तं तेजः तत् मामकं मदधीनं विद्धि जानीहि ।। १२ ।।

**भावदीपिका (श्री.टि.)– ।। स्वरूपमिति ।।** विज्ञानशब्दवाच्यभगवत्स्वरूपमित्यर्थः ।। १२ ।।

**भावप्रकाशः (कृ.टि.)–** ननु 'यदादित्यगतम्' इत्यादिना 'द्वाविमौ' इत्यादिना च वक्ष्यमाणयोः सर्वान्तर्यामित्वसर्वोत्तमत्वयोः प्रागनुक्तत्वात् प्रपञ्चयतीति कथमुक्तमित्यत आह– **अथश्चेति** ।। १२ ।।

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।। १३ ।।**

## भाष्यम्

**गां** भूमिम् ।। १३ ।।

भावप्रदीपिका (प.टी.)– गोशब्दस्यानेकार्थत्वात् तस्यार्थमाह– **गामिति ।**

प्रमेयदीपिका (ज.टी.)– धेनोः आवेशो न भूतधारणे कारणम् इत्यत आह– **गामिति ।। १३ ।।**

**भावरत्नकोशः (सु.टि.)— गीताक्षरार्थस्तु** किञ्च गां भूमिम् आविश्य भूतानि सशरीरान् जीवान् ओजसा बलेन स्वसामर्थ्येन धारयामि । किञ्चाहमेव रसात्मकः अमृतरसम् आददानः, रसस्वामी वा सोमः सौम्यत्वात् सोमनामकः, चन्द्रगतत्वाच्च सोमशब्दवाच्यो भूत्वा सर्वा ओषधीः व्रीहियवाद्याः पुष्णामि पुष्टिमतीः स्वादुमतीश्च करोमि ।। १३ ।।

**भावदीपिका (श्री.टि.)–** 'गामाविश्य' इत्यत्र गोशब्दो धेनुवाचीत्याशयेनाह– **धेनोरिति** ।। १३ ।।

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।। १४ ।।**

**भावरत्नकोशः(सु.टि.)– गीताक्षरार्थस्तु** किञ्चाहम् उपजीव्यतया विश्वनरसम्बन्धी वैश्वानरः जाठरजातवेदा भूत्वा प्राणिनां देहमाश्रितः देहे प्रविष्टः सन् प्राणापानाभ्यां मुख्यप्राण-रूपाभ्यां समायुक्तः सहितः, 'भक्ष्यम्, भोज्यम्, लेह्यम्, चोष्यं च' इति चतुर्विधमन्नं प्राणिभि-र्भुक्तं पचामि पक्त्वा देहाद्युपचयकारणं करोमि । यत्र यद् दन्तैरवखण्ड्य भक्ष्यते अपूपादि तद् भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद् भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादनेन निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् । यत्तु दंष्ट्रादिभिर्निष्पीड्य रसांशं निगीर्य अवशिष्टं त्यज्यते इक्षुखण्डादि तच्चोष्यमिति चतुर्विधमन्नं विवेचयन्ति ।। १४ ।।

**भावप्रकाशः (कृ.टि.)–** गीतायां **पचाम्यन्नं चतुर्विधमिति ।** भक्ष्यं भोज्यं लेह्यं चोष्यं चेत्यन्नं चतुर्विधम् । तत्र दन्तैरवखण्ड्य यद् भुज्यते तद्भक्ष्यम् । यत् तु अनति-काठिन्यादप्रयत्नवत् खण्डानपेक्षं चर्वयित्वैव निगीर्यते तद्भोज्यम् । लेह्यं प्रसिद्धम् । यस्योष्ठदशनरसनादिभिः निष्पीडितस्य सफूत्कारेण मुखमारुतेन रसो निष्पीयते तच्चोष्यम् । यथेक्षुखण्डादीति ।। १४ ।।

**सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।। १५ ।।**

## भाष्यम्

**वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथाच सामवेदे प्राचीन-शाला(ल)श्रुतिः– 'स वेदान्तकृत् स कालक इति, स ह्येव युक्तिसूत्रकृत्', 'स कालकः' इति ।। १५ ।।**

भावप्रदीपिका (प.टी.)– वेदान्तकृत् इत्यस्यार्थमुपनिषत्कर्तेति प्रतीतिनिरासाय **सप्रमाणकमाह– वेदेति । कालकोऽज्ञानहारी ।। १५ ।।**

प्रमेयदीपिका (ज.टी.)– 'वेदान्तकृत्' इत्युपनिषदां कर्ता' इत्यन्यथाप्रतीति-

श्लोकः १५

निरासार्थमाह– **वेदेति ।।** वेदः वेदार्थः । तस्यान्तो निर्णयः । तदात्मिका । तादर्थ्यात् ताच्छब्द्यम् । मीमांसा ब्राह्मी ।तस्याः 'कर्ता' इति शेषः । कुत एतत्? इत्यत आह– **तथा चेति ।।** युक्तिसूत्रकृत् वेदार्थनिर्णयार्थयुक्तिसूचकवाक्यकृत् । स कालकः इति द्वितीयेन कलधातोः ज्ञानाद्यर्थतया प्रसिद्धत्वान्निगदव्याख्यानमेतदित्याचष्टे ।। १५ ।।

**भावदीपः (रा.टि.)–** 'हि'इत्यन्तप्रतीकं गृहीत्वा 'स हि' इत्यादिना 'वेदान्तकृत्' इत्येतावदेव व्याख्यातम् । 'स कालकः' इत्येतत्कुतो न व्याख्यातम् इत्यत आह– **स कालक इति द्वितीयेनेति** ।। 'इत्याचष्टे' इत्यन्वयः ।। १५ ।।

**भावरत्नकोशः (सु.टि.)–** 'अयं वेदः' इति निर्णये, 'अयम् ऋग्वेदः', 'अयं यजुर्वेदः' इत्यादिनिर्णये वा न मीमांसोपयागः इत्यतो भाष्यगतवेदशब्दविवक्षितार्थमाह– **वेदो वेदार्थ इति** ।। 'अन्तोऽस्त्री निश्चये नाशे' इत्यभिधानाद् 'उभयोरपि दृष्टोऽन्तः' इत्यत्र 'अन्तो निर्णयः' इति भाषणाच्चाह– **अन्तो निर्णय इति** ।। मीमांसाया वेदार्थनिर्णयरूपत्वाभावादाह– **तादर्थ्यादिति** ।। निर्णयप्रयोजनकत्वात् निर्णयशब्दार्थत्वमित्यर्थः । मुख्यो वेदार्थो हि भगवान् , तन्निर्णयात्मकत्वं च न कर्ममीमांसादेः, इत्यतोऽत्र मीमांसाशब्दविवक्षितार्थमाह– **ब्राह्मीति** ।। 'तस्याः मीमांसायाः कर्ता' इति वदन् मीमांसा वेदान्तः, तस्याः कर्ता वेदान्तकृत् इति भाष्यशेषो निरूपणीय इत्यभिसन्धत्ते । 'युक्तिसूत्रकृत्' इत्यत्र 'युक्तीनां सूत्राणां कर्ता' इति प्रतीतिनिरासायार्थमाह– **वेदार्थेति** ।। युक्तिसूचकं च वाक्यं ब्रह्ममीमांसैव । तस्या एव 'आकाशस्तल्लिङ्गात्' इत्यादिसूत्ररूपाणां आकाशादिशब्दानां वेदमुख्यार्थभगवद्ग्रहणे परोवरीयस्त्वादियुक्तिसूचकवाक्यत्वादिति भावः । व्यासस्य ब्रह्मसूत्रकर्तृत्वाद् 'अहं कर्ता' इति कथं गीताचार्य उपदिशति इति शङ्का 'स एव व्यासरूपेण वेदान्तकृदुदाहृतः' इति प्रमाणोदाहरणेनोत्तरप्रस्थाने परिहृता ।

ननु वेदान्तकृच्छब्द इव कालकशब्दोऽपि श्रुतावुपात्तः किमिति न व्याख्यातः पुनरुक्तश्च इत्यतः तदभिप्रायमाह– **स कालक इति द्वितीयेनेति** ।। पुनरनुवादेनेत्यर्थः । 'कलधातोः' इति वदन् कलधातुः पचाद्यजन्तः । कलयति जानातीति कलः, स एव प्रज्ञादित्वात् कालः, स एव कालकः, स्वार्थे कः, 'ज्ञाता' इत्यर्थ इत्यभिसन्धत्ते । 'ज्ञानाद्यर्थत्वात्' इत्यत्रादिशब्दार्थः 'कालोऽस्मि लोकक्षयकृत् प्रवृद्धः' इत्यत्र भाष्य एव स्फुटः । भावप्रदीपिकायां तु 'कालकोऽ-

ज्ञानहारी' इति व्याख्यातम् । **निगदव्याख्यानम्** निगदः पाठः, स एव व्याख्यानम् अर्थकथनं यस्य तत् तथा । **एतत्** कालकपदमित्यर्थः ।। १५ ।।

**गीताक्षरार्थस्तु** किञ्च सर्वस्य प्राणिजातस्य हृदि अन्तर्यामितया सन्निविष्टः अस्मि । मत्तः 'पञ्चम्यास्तसिल्'। मत् एव स्मृतिः पूर्वानुभूतार्थविषया प्रतीतिः ज्ञानम् अनुभवः, स्मृतिज्ञानयोः अपोहनम् अपगमनं प्रमोषश्च भवति । अपोहनं विपरीतप्रत्यय इत्यपि आहुः । सर्वैर्वेदैरहमेव परममुख्यया वृत्त्या वेद्यो ज्ञातव्यः । वेदान्तकृद् वेदस्य अन्तो वेदान्तः, करोतीति कृत्, वेदान्तस्य कृत् वेदान्तकृद् इत्यत्र वेदशब्देन वेदार्थो गृह्यते । अन्तशब्देन निर्णयवचनेन निर्णायकग्रन्थः, तादर्थ्यात् ताच्छब्द्यम् । तथा च वेदार्थनिर्णायकमीमांसा वेदान्तशब्दार्थः, तस्याः कर्ता व्यासरूपेणाहमेवेति स तथोच्यते । वेदवित् वेदार्थस्य वेदिता च अहमेव मुख्यः ।।१५।।

**भावदीपिका (श्री.टि.)–** 'मीमांसा मेयशेधनम्' इत्युक्तत्वेन वेदरूपशब्दनिर्णयाकत्वा-भावादाह– **वेदो वेदार्थ इति** ।। 'मीमांसा त्रिविधा ज्ञेया ब्राह्मी दैवी च कार्मिकी' इति वचनेन मीमांसायास्त्रैविध्याद् अत्र कर्ममीमांसादिग्रहणे तस्या जैमिन्यादिकृतत्वेन व्यासकृतत्वा-भावादाह– **ब्राह्मीति** ।। **कर्तेति** ।। 'व्यासरूपेण' इति शेषः । 'स एव व्यासरूपेण वेदान्तकृदुदाहृतः' इति तात्पर्योक्तेरिति ध्येयम् । **निगदेति** ।। निगदनम् उच्चारणमेव तद्व्याख्यानमित्यर्थः । तथा च 'कल ज्ञाने' इत्यादिधातोर्ज्ञातृत्वादिना कालः, स्वार्थे कः । तथा च 'काल एव कालकः' इति स्पष्टमिति द्रष्टव्यम् ।। १५ ।।

**भावप्रकाशः (कृ.टि.)–** 'अन्तोऽस्त्री निश्चये नाशे' इति विश्वोक्तेराह– **अन्तो निर्णय इति** ।। १५ ।।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। १६ ।।**

## भाष्यम्

**क्षरभूतानि ब्रह्मादीनि । कूटस्थः प्रकृतिः । तथा च शार्कराक्ष्यश्रुतिः 'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् ।**

श्लोकः १६

**तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्' इति ।।१६।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितें श्रीमद्भगवद्गीताभाष्ये पञ्चदशोऽध्यायः ।।

भावप्रदीपिका (प.टी.)– क्षरः सर्वाणि इत्यादि व्याचष्टे– **क्षरेति** । द्वौ इत्यादेः सङ्ग्रहेण श्रुत्यर्थमाह– **तथा चेति** । जननमरणसहितं च तद्रहितं च जालाजालम् ।। १६-२० ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीभगवद्गीताभाष्यभावप्रदीपिकायां पञ्चदशोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– 'क्षराक्षरशब्दौ जडजीवार्थौ' इत्यपव्याख्याननिरासार्थमाह– **क्षरेति ।।** भूतग्रहणं युक्तिसूचनार्थम् । नहि जडमात्रे भूतशब्दो रूढः । किन्तु जीवेष्वपि । पुरुषशब्दस्य चैतदुपलक्षणम् । प्रकृतिः चेतना । 'अक्षरः' इति वक्तव्ये 'कूटस्थः' इति वचनमपि युक्तिसूचनार्थमेव । न हि जीवानां कूटस्थत्वमस्ति । सुखादिमत्त्वेन विकारित्वात् । श्रुतिसम्मत्या चायमेवार्थ इत्याह– **तथा चेति ।।** क्षरः इत्यनुवादेन 'प्रजापतिः' इत्यादि व्याख्यानम् । अन्यं परमात्मानम् । क्षरान्तर्भूतोऽपि मातरिश्वा विवक्षाविशेषेणाक्षरोऽपि भवतीत्युच्यते– **जालेति ।।** जालं संसारबन्धः । सोऽस्यास्तीति जालः । 'अर्श आदिभ्य अच् । तद्रहितश्चाजालः । अभिमानाभावात् ।। १६-२० ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां पञ्चदशोऽध्यायः ।। १५ ।।

भावबोधः (र.टि.)– ।। **युक्तीति** ।। क्षरशब्दार्थतया जडग्रहणे बाधिका जीवग्रहणे साधिका या इत्यर्थः । तत्कथमित्यत आह – **न हीति** ।। आकाशादिभूतपञ्चक एव जडेष्वित्यर्थः । ततश्च सर्वाणीत्येतदनुपपन्नमिति भावः । **जीवेष्विति** ।। .....इति भावः । **पुरुषशब्दस्येति** ।। जीवजडग्रहणयोः साधकबाधकरूपस्येत्यर्थः।। १६ ।।

।। इति श्रीरघूत्तमतीर्थप्रणीता गीताभाष्ये भावबोधाभिधा टिप्पणी पञ्चदशोऽध्यायः ।।

भावदीपः (रा.टि.)– युक्तिसूचनार्थमित्युक्तं व्यनक्ति– **नहीति** ।। 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ जीवेष्वेव प्रयोगादिति भावः । न केवलं भूतपदप्रयोगान्न जडं

क्षरपदार्थः । किन्तु 'द्वाविमौ पुरुषौ' इति निर्दिष्टपुरुषपदायोगाच्चेति भावेनाऽह– **पुरुषशब्दस्य चैतदुपलक्षणमिति** ।। **विवक्षाविशेषेणेति** ।। सत्यपि संसारे तत्कृतविकाराभावरूपकूटस्थत्व-विवक्षयेत्यर्थः । 'जालश्चासावजालश्च' इति विग्रहमुपेत्याह– **जालमिति** ।। एतेन 'मातरिश्वा-नमेकमक्षरमुदाहरन्ति' इति योजना सूचिता ।। १४ ।।

।। **श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिविरचिते पञ्चदशोऽध्यायः** ।। १५ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **इत्यपव्याख्यानेति** ।। तथा च शङ्करः 'क्षरतीति क्षरः विनाशी पुरुषः, समस्तं विकारि जडजातम् । न कदाचित् क्षरतीत्यक्षरः पुरुषः संसारी जन्तुः' इति । 'युक्तिसूचनार्थम्' इत्यत्र क्षरशब्दस्य जडार्थत्वे बाधिका, जीवार्थत्वे साधिका च या युक्तिः तत्सूचनार्थम् इत्युक्तयुक्तिमेवाह– **न हि जडमात्र इति** ।। 'मात्रे' इति वदन् पञ्चभूतेषु भूतशब्दवृत्तिमङ्गीकरोति । **रूढ इति** ।। तथा च जडग्रहणे रूढिबाधः, जीवग्रहणे रूढिस्वीकार एव युक्तिरिति भावः । **किन्तु जीवेष्विति** ।। 'यतो वा इमानि भूतानि जायन्ते', 'एतस्यैवा-नन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति', 'तं भूतान्यभ्यक्रोशन् इत्यादाविवेति भावः । न केवलं भूतपदरूढिबाधात् न जडं क्षरपदार्थः, किन्तु 'द्वाविमौ पुरुषौ' इत्युपात्तपुरुषपदप्रयोगाच्च इति युक्त्याऽपीति भावेन तां युक्तिमाह– **पुरुषशब्दस्य चेति** ।। **एतद्** भूतग्रहणम् । जडप्रकृतेर्विकारितया कूटस्थत्वायोगादाह– **प्रकृतिश्चेतनेति** ।।

'क्षरो भूतानि' इतिवत् 'अक्षरः प्रकृतिः' इति भाषणीयेऽपि; एवमुक्तेः प्रयोजनमाह– **अक्षर इतीति** ।। तामेव युक्तिं दर्शयति– **न हीति** ।। **विकारित्वात्** उच्चनीचतालक्षण-विकारवत्त्वात् । अनेन भाष्ये कूटस्थशब्दो निर्विकारार्थकः, पुरुषशब्दापेक्षया च पुंलिङ्गम् इति भावितं भवति । क्षरशब्दस्यैवात्र गीतागतस्य व्याख्यातव्यत्वाद् भाष्यं व्यत्यस्य योज्यमित्याह– **क्षर इतीति** ।। 'प्रधानम्' इति श्रौतपदस्य चेतनप्रकृतिरर्थः । 'परमात्मेत्युदाहृतः' इति गीतानुसारेणान्यपदार्थमाह– **अन्यं परमात्मानमिति** ।। **क्षरान्तर्भूतोऽपि** क्षरपदार्थोऽपि **विवक्षाविशेषेण** सत्यपि संसारे तत्राभिमानाभावेन विकारित्वाभावलक्षणकूटस्थत्वविवक्षाविशेषेण । अच्युतत्वर्थीय इति भावः । **अभिमानाभावादिति** ।।

'ब्रह्मा निरभिमानित्वात् शरीर्यप्यशरीरवान् । तदप्यनभिमानतः' इत्यादिशास्त्राद्
'वायुर्हि ब्रह्मतामेति तस्मात् ब्रह्मैव स स्मृतः'

श्लोकः १६

इति वचनाद् ब्रह्मशब्दो वाय्वर्थक इति तस्य संसाराभिमानाभावाद् अजालशब्दित-संसाराभाववचनं युक्तमित्यर्थः । अनेन 'जालश्चासौ अजालश्च' इति बहुलग्रहणाद् विशेषणयोरपि समास इति विभावितं भवति । 'जननमरणरहितं जालाजालम्' इति भावप्रदीपिका ।।

**गीताक्षरार्थस्तु** एवं सर्वान्तर्यामित्वं प्रपञ्च्य यद् 'ऊर्ध्वमूलम्' इत्यत्र ऊर्ध्वशब्देन सर्वोत्तमत्वमुक्तम्, तद् अध्यायशेषेण प्रपञ्चयते– **द्वाविमौ पुरुषावित्यादिना** ।। 'इमौ' इति प्रमाणसिद्ध्या सूच्यते । पुरुषौ चेतनौ, एवशब्दस्य 'द्वावेव' इति सम्बन्धः । तद्घटनाय परमपुरुषं व्यावर्तयितुम्– **'लोके' इत्युक्तम्** । चशब्दौ परस्परसमुच्चये । कौ तौ पुरुषौ इत्यत उच्यते– **क्षर इति** ।। सर्वाणि भूतानि ब्रह्मशिवसुराद्याः जीवाः शरीरक्षरणात् क्षराः पुरुषाः, कूटस्थः पुरुषोऽक्षरदेहत्वात् महालक्ष्मीः । तदनेन उत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृतम् ।। १६ ।।

**भावदीपिका (श्री.टि.)– ।। युक्तीति ।।** क्षरशब्दार्थतया सर्वजडग्रहणे बाधिकायाः, जीवमात्रग्रहणे साधिकायाः युक्तेः सूचनार्थमित्यर्थः । तदेव दर्शयति– **न हीति ।।** आकाशादिभूतपञ्चक एव रूढः, न सर्वजडेषु । अतः क्षरशब्देन जडमात्रग्रहणमयुक्तमित्यर्थः । **किन्त्विति ।।** 'सर्वेषु' इति शेषः । यद्वा जडमात्रे केवलजड एव रूढो न, किन्तु जीवेष्वपि । अतो जीवा एव ग्राह्या इत्याशयः । तथात्वे विनिगमनाभावः इत्यतो निरवकाशज्ञापकमाह– **पुरुषशब्दस्य चेति ।।** जीवग्रहणे साधकस्य, जडग्रहणे बाधकस्येत्यर्थः । अत्र 'द्वाविमौ पुरुषौ' इति प्रक्रान्तपुरुषप्रभेदस्यैवोच्यमानत्वेन क्षरशब्देन जडग्रहणे तत्र चेतनत्वापरपर्याय-पुरुषत्वायोगात्, जीवेषु तत्सम्भवात् क्षरशब्देन जीवा एव ग्राह्याः न जडमिति भावः ।।

**।। युक्तीति ।।** प्रकृतिग्रहणे साधिकायाः जीवग्रहणे बाधिकायाश्च युक्तेः सूचनार्थमित्यर्थः । तत्कथम्? इत्यत आह– **न हीति ।। कूटस्थत्वं** निर्विकारत्वम् । **विकारित्वादिति ।।** उच्चनीचत्वादिविकारित्वादित्यर्थः । प्रकृतेस्तु नित्याभिव्यक्तसुखवत्त्वेन अस्त्येव कूटस्थत्वमिति भावः । अत्र 'सर्वजीवाः' इत्यनुवादेन 'क्षरः' इति व्याख्यानमिति प्रतीयते । तदसङ्गतम् । क्षरशब्दस्यैव व्याख्येयत्वाद् एकवचनायोगश्चेत्यत आह– **क्षर इतीति ।।** एकवचनं तु 'वेदाः प्रमाणम्' इतिवद्युज्यत इति भावः । **अर्शआदिभ्य इति ।।** तथा च जालशब्दस्यापि

अर्शआदिगणस्थत्वेन तस्मात् मत्वर्थीयाच्प्रत्यये चकारलोपे, भस्य लकारस्थस्याकारस्य लोपे, प्रत्ययाकारसम्बन्धे च सति 'जाल' इति भवतीति द्रष्टव्यम् । नन्वधुनाऽपि मातरिश्वनो लिङ्ग-देहवत्त्वेन संसारबन्धवत्त्वात् कथं तद्राहित्यरूपाजालत्वम् इत्यत आह– **अभिमानाभावा-दिति** ।। 'ब्रह्मा निरभिमानित्वात् शरीर्यप्यशरीरवान्' इति वचनात् । मातरिश्वनोऽपि भाविब्रह्मत्वादिति भावः ।। १६ ।।

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता–
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
दशम अगमदध्यायोऽन्तमस्याः सपंचः ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यटीकाविवृत्तौ भावप्रदीपिकाख्यायां पञ्चदशोऽध्यायः ।।**

**भावप्रकाशः (कृ.टि.)**– ।। **युक्तीति** ।। अक्षरशब्दस्य जडार्थत्वे बाधिका जीवार्थत्वे साधिका या युक्तिः तत्सूचनार्थमित्यर्थः । तां युक्तिमाह– **न हीति** ।। तथा च क्षरशब्देन जडग्रहणे रूढिबाधः । जीवग्रहणे च तदानुगुण्यमिति भावः । **जीवेष्वपीति** ।। 'सदेहजीवा भूतानि' इत्युक्तेरिति भावः । जडप्रकृतेः कूटस्थत्वाभावादाह– **प्रकृतिश्चेतनेति** ।। **विकारित्वादिति** ।। नीचोच्चतादिरूपविकारोपेतत्वादित्यर्थः ।। १६ ।।

**।। इति श्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णविरचिते प्रमेयदीपिकाभावप्रकाशे पञ्चदशोऽध्यायः ।।**

## उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
## यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।। १७ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** ततः किम् इत्यतः– **उत्तमः पुरुष इति** ।। अन्यः क्षराक्षराभ्याम् न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिरुच्यते– **परमात्मेत्युदाहृत इति** ।। आत्मशब्दोऽत्र चेतनपर्यायः । उदाहृतः 'प्रजापतिप्रमुखाः सर्वजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् । तदुत्तमं चान्यमुदाहरन्ति' इत्यादिश्रुतौ,

'ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ।।'

इत्यादिस्मृतौ च । युक्तिमाह– **यो लोकत्रयमिति** ।। यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम्– **अव्यय इति** ।। कथम् ऐश्वर्या-दित्युच्यते– **ईश्वर इति** ।। १७ ।।

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। १८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** स कः इत्यतोऽहमेवेति सप्रमाणकमुच्यते– **यस्मादिति** ।। 'क्षरं चातीतः' इति चशब्दान्वयः । क्षराच्चोत्तम इत्यर्थः । लोकशब्देन पौरुषेयागम उच्यते । प्रथितः प्रख्यातः ।। १८ ।।

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ।। १९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं प्रतिपादिते क्षराक्षरोत्तमत्वे तात्पर्य-द्योतनाय वेदितुः फलमुच्यते– **यो मामेवमिति** ।। 'एवम्' इत्यस्य व्यावृत्तिनिरासः– **असम्मूढ इति** ।। न पुनरश्वकर्णादिशब्दवत् संज्ञामात्रत्वेनेत्यर्थः । स सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात् सर्वशास्त्रार्थस्य वेदिता । सर्वभावेन सर्वप्रकारेण ।। १९ ।।

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ।। २० ।।**

ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुराणपुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ।। १५ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एतच्च यस्मै कस्मैचित् न वाच्यमिति भावे-नोच्यते– **इति गुह्यतममिति** ।। शास्त्रमिति ।। शास्त्रार्थः 'स सर्ववित्' इत्याद्युक्तम् । ततः

किम् इत्यत उच्यते– **एतद्बुध्वेति** ।। बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यः मुक्त इति मायावादखण्डनटीकोक्तः ।

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।
भूरिमनीषागमचितकरणान् श्रीजयतीर्थव्रतिकृतिशरणान् ।
सन्ततमीडे सुचरितवरणान् वेङ्कटनारायणगुरुचरणान् ।।
नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ।।

**।। इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सूरीन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां पञ्चदशोऽध्यायः ।।**

## ।। अथ श्रीमद्भगवद्गीतायां षोडशोऽध्यायः ।।

**श्रीभगवानुवाच—**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।। १ ।।**

## भाष्यम्

**पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति । तपः ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः' इत्यभिधानात् ।। १ ।।**

भावप्रदीपिका (प.टी.)– अध्यायार्थं दर्शयति– **पुमर्थेति ।।** देवलक्षणानि पुमर्थसाधनानि, तदितराणि तद्विरोधादीनीति । स्वाध्यायादेरपि तपस्त्वात् कथं तपसः पृथगुक्तिः इत्यत आह– **तप इति** ।। १ ।।

प्रमेयदीपिका (ज.टी.)– अध्यायप्रतिपाद्यं दर्शयति– **पुमर्थेति ।।** यद्यपि पूर्वयोरध्याययोः साधनप्रतिपादन एव तात्पर्यम् । तथाऽपि तन्न प्रपञ्चितम् । किं नाम बन्धस्वरूपम्? साधनमनुतिष्ठता च तद्विरोधिनां त्यागोऽवश्यं करणीयः । पूर्वाध्याये च निर्मान (१५.५) इत्यादिना पुमर्थयो र्ज्ञानमोक्षयोः साधनं यतन्तोऽप्यकृतात्मानः (१५.११) इत्यादिना तद्विरोधि च सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् । सुरासुरलक्षणं च तथेति तदनेनाध्यायेन दर्शयतीत्यर्थः । 'तपो वक्ष्यमाणम्' इति कश्चित् । तदसत् । देवद्विज (१७.१४) इत्यादिनोक्तस्यात्र ग्रहणे शौचादेरपि तपोग्रहणेन गृहीतत्वात् पुनरुक्तिप्रसङ्गात् । अतो वक्ष्यमाणान्तर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तमेव । तच्च प्रधानस्यैवोपलक्षणत्वोपपत्तेर्नोपवासादीति भावेन सप्रमाणकमाह– **तप इति** ।। १ ।।

भावबोधः (र.टि.)– ।। **शौचादेरिति** ।। पूजनं शौचमार्जवमिति तत्रापि शौचादेरुक्तत्वादित्यर्थः । **पुनरुक्तीति** ।। 'धृतिश्शौचम्' इत्यत्रापि शौचादेः पृथगित्यर्थः ।। १ ।।

श्लोकः १

**भावदीपः (रा.टि.)– ।। बन्धस्वरूपमिति ।।** 'प्रपश्चितम्' इत्यनुषङ्गः ।। **तद्विरोधि चेति** ।। अशुद्धबुद्धित्वादिकम् ।। **वक्ष्यमाणेति** ।। 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्' (१७.१४) इत्यादिना उत्तराध्याये वक्ष्यमाणलक्षणमित्यर्थः । **पुनरुक्तीति** ।। आर्जवशौचादेरत्राप्युक्तेः 'तपः' इत्यनेन पुनरुक्तीत्यर्थः ।। १ ।।

**भावरत्नकोशः (सु.टि.)– ।। अध्यायप्रतिपाद्यमिति ।।** उत्तरेषां पश्चानामध्यायानां प्रतिपाद्यार्थस्य 'साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति' इति भाषितत्वाद् इदमध्यायावान्तरप्रतिपाद्यमर्थमित्यर्थः । ननु पुमर्थसाधनविरोधीनि चैतदध्यायप्रतिपाद्यानि इत्ययुक्तम् । पुमर्थसाधनानाम् 'निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः' इत्यादिना, पुमर्थविरोधिना च 'यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः' 'विमूढा नानुपश्यन्ति' (१५.१०) इत्यादिना प्रागेव निरूपितत्वात् किमनेनाध्यायेन निरूपणीयमस्तीत्याक्षिपति– **यद्यपीत्यादिना ।। पूर्वयोः** चतुर्दशपश्चदशयोः । **तात्पर्यमिति ।।** 'साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति 'इति भाषणादिति भावः । बन्धस्वरूपमत्ययसाधने जिज्ञासामुत्पादयितुं प्रपश्चितम् । तर्ह्यावश्यकत्वात् साधनमेव निरूप्यताम्; किं तद्विरोधिप्रदर्शनेन इत्यत आह– **साधनमिति** ।। बन्धात्ययसाधनमित्यर्थः । ततः किम् इत्यतः पूर्वाध्यायसङ्गतिं दर्शयन् भाष्यार्थमाह– **पूर्वाध्याये चेति** ।। 'ज्ञानमवान्तरपुरुषार्थः' इति भावेन 'पुमर्थयोर्ज्ञानमोक्षयोः' इत्युक्तम् । **साधनम्** 'उक्तम्' इत्याकृष्यते । **तद्विरोधीति** ।। पुमर्थविरोध्यशुद्धबुद्धित्वादिकमित्यर्थः । **तदुभयम्** 'पुमर्थसाधनम्, 'तद्विरोधि' चेत्युभयमिति वदन् भाष्ये 'पुमर्थसाधनानि च तद्विरोधीनि च' इति द्वन्द्वमभिप्रैति । ननु तर्हि साधनतद्विरोधिनी प्रपश्चनीये; किं देवासुरलक्षणवचनेनेत्यत आह– **देवासुरेति** ।। तथा देवलक्षणम्, तत्साधनम्; असुरलक्षणं तद्विरोधीत्यर्थः । तथा च भावप्रदीपिका 'विलक्षणानि पुमर्थसाधनानि; तदितराणि तद्विरोधीनि' इति । **तद्** देवासुरलक्षणम् **दर्शयति** प्रपश्चयतीत्यर्थः । 'तपो वक्ष्यमाणलक्षणं शारीरादि' इति शङ्करभाष्ये दूष्यभागमनुवदति– **तपो वक्ष्यमाणेति** ।। उत्तराध्याये–

'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।।'

इत्यत्र वक्ष्यमाणेत्यर्थः । **पुनरुक्तिप्रसङ्गादिति** ।। अत्रापि 'तेजः क्षमा धृतिः शौचमद्रोहः'

श्लोकः १

इति शौचादेरभिधानाद् उत्तराध्याये तदुक्तौ तपःशब्दार्थस्य पुनरुक्तिप्रसङ्गादिति । **वक्ष्य-माणान्तर्गतम्** 'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्' इति वक्ष्यमाणदेवपूजादावन्तर्गतं यत् शौचादि अत्र षोडशे पृथगुच्यते तद्व्यतिरिक्तमेव तपो वक्तव्यमित्यर्थः । ननु 'तप सन्तापे' इति हि पठ्यते। सन्तापश्चोपवासादिरूपः कायक्लेशो व्याख्यायत इति न पुनरुक्तिदोषः इत्यत आह– **तच्चेति** ।। तपः । तर्ह्युपवासाद्यसङ्ग्रहापत्तिरित्यत उक्तम्– **उपलक्षणत्वोपपत्तेरिति** ।। विनिगमनाविरहादुपवासादेरेवोपलक्षणत्वमस्तु इत्यत उक्तम्– **प्रधानस्यैवेति** ।। उपवासाद्यपेक्षया प्रधानभूतस्य ब्रह्मचर्यादेरेवेत्यर्थः । 'राजा गच्छति' इत्यादौ प्रधानस्यैवेतरोपलक्षणत्वदर्शनाद् 'अमात्यो गच्छति' इत्यादौ तददर्शनाच्च । आवेदितं च ब्रह्मचर्यस्य प्राधान्यम् ऊर्ध्वरेतस्सु च शब्दो हि' इति भगवता सूत्रकारेणेति भावः ।। १ ।।

**गीताक्षरार्थस्तु–** पूर्वाध्याये 'निर्मानमोहाः' इत्यादिना पुमर्थयोर्ज्ञानमोक्षयोः साधनम्, 'यतन्तोऽप्यकृतात्मानः' इत्यदिना तद्विरोधि सङ्क्षेपेणोक्तम् । तदुभयमिदानीं प्रपञ्चनीयम् देवासुरलक्षणं च तथेति तदनेनाध्यायेन प्रपञ्च्यते । साधनमनुतिष्ठता तद्विरोधित्यागस्य अवश्यं करणीयत्वाद् विरोधित्यागसमुचितस्यैव साधनस्य साध्यनिष्पत्त्यनुकूलस्य प्रतिपादकोऽयमध्यायः, एकमेव वाक्यं च । तत्र पुमर्थयोर्ज्ञानमोक्षयोः साधनं मुमुक्षुलक्षणं तावदुच्यते– **भगवानुवाच अभयमित्यादित्रिश्लोक्या** ।। अभयं भागवतधर्मज्ञानानुष्ठाननिष्पादने भगवद्द्वेषिकृतोपप्लवाद् भयाभावः । स्वतोऽन्यस्यान्यस्माच्च स्वस्य भयाभावः 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इत्युक्तेरित्यपि आहुः । सत्त्वसंशुद्धिः सत्त्वस्य अन्तःकरणस्य रागादिदोषाभावः । ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्च प्राप्तः तत्त्वावगमः, योगः भगवति चित्तनिरोधः, तयोर्व्यवस्थानं परिनिष्ठा, ज्ञानोपाये निष्ठेति वा । दानं न्यायार्जितवित्तादेः पात्रेषु यथोचितं संविभागः । दमः इन्द्रियनिग्रहः । यज्ञः देवतोद्देशेन द्रव्यपरित्यागरूपो यागः । स्वाध्यायः वेदशास्त्राध्ययनम् । तपः ब्रह्मचर्यादि । आर्जवम् सत्सु मनोवाक्कायवृत्तीनामवैपरीत्यम् ।। १ ।।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवानार्यगुरूणां पदपङ्कजे
क्रियते षोडशाध्यायटीका भावप्रदीपिका ।। १ ।।

नन्वत्राध्ये 'अभयं' 'दम्भो दर्पः' इत्यादिना सुरासुरलक्षणमेवोच्यते । अत एवोक्तं

तात्पर्ये– 'देवासुरलक्षणम्' इति । तथा चात्र 'पुमर्थसाधनविरोधीनि अनेनाध्यायेन दर्शयति' इति कथमध्यायप्रतिपाद्यमुच्यते । पुमर्थसाधनविरोधिनां निरूपणस्यात्रादर्शनात्, इत्यतोऽनया वाचोभङ्ग्याऽर्थात् सुरासुरलक्षणमेवोच्यत इत्यभिप्रेत्याह– **यद्यपीत्यादिना ।। साधनेति** ।। पुमर्थसाधनेत्यर्थः । तथा च ताभ्यां गतार्थतेति भावः । **तद्विरोधिनां** पुमर्थविरोधिनाम् । **ज्ञानमोक्षयोरिति** ।। ज्ञानस्याप्यवान्तरपुरुषार्थत्वादिति भावः । **तथेति** ।। अभयादि-देवलक्षणस्य पुमर्थसाधनत्वात्, दम्भाद्यसुरलक्षणस्य पुमर्थविरोधित्वात्, पुमर्थसाधनादिनिरूपणेन देवासुरलक्षणमेवोच्यत इति भावः । **देवद्विजेत्यादिनेति** ।।

'देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।।'

इत्यादिनोत्तरत्रोक्तस्येत्यर्थः । **शौचादेरपीति** ।। 'शौचमार्जवम्' इति तत्रोक्तशौचादेरपि 'स्वाध्यायस्तप आर्जवम्' इत्यत्रत्यतपोग्रहणेनैव गृहीतत्वात् 'धृतिः शौचमद्रोहः' इत्यत्रापि शौचादेः पृथगुक्तत्वात् पुनरुक्तिः स्यादित्यर्थः । **वक्ष्यमाणेति** ।। वक्ष्यमाणतपोऽन्तर्गत-मित्यर्थः । **यदिति** ।। शौचार्जवादीत्यर्थः । **अत्र** 'अभयम्' इत्यादौ तद्व्यतिरिक्तमेव तपः-शब्देनात्र ग्राह्यमित्यर्थः । ननु वक्ष्यमाणान्तर्गतं यदत्र पृथगुच्यते तद्व्यतिरिक्तं तपः कायक्लेशरूपोपवासाद्यपि गृहीतमेवेति, 'उपवासादि' इत्युक्तावपि आदिपदेन ब्रह्मचर्यादेरपि ग्रहणसम्भवेन विनिगमकाभावात्, इत्यत आह– **तच्चेति** ।। तप इत्यर्थः । 'राजाऽसौ गच्छति' इत्यादौ प्रधानेनाप्रधानोपलक्षणदर्शनात् । ननु अप्रधानेन प्रधानस्योपलक्षणम्, अदर्शनादिति भावः । प्रकृते च ब्रह्मचर्याद्यभावे केवलोपवासादेरप्रयोजकत्वाद् ब्रह्मचर्यस्य प्राधान्यमिति द्रष्टव्यम् ।। १ ।।

**भावप्रकाशः (कृ.टि.)– ।। तात्पर्यमिति** ।। साधनं प्राधान्येनोत्तरैरध्यायैः वक्ती-त्यनेनाध्यायपञ्चकप्रतिपाद्यस्य प्रागुक्तत्वादिति भावः । **न प्रपञ्चितमिति** ।। 'निर्मान' इत्यादिना 'यतन्तोऽपि' इत्यादिना च साधनतद्विरोधिनोरुक्तत्वात् 'नोक्तम्' इत्यनुक्त्वा 'न प्रपञ्चितमित्याह' इति बोध्यम् । तर्हि साधनमेव प्रदर्श्यतां किं तद्विरोधिप्रदर्शनेनेत्यत आह– **साधनमनुतिष्ठता चेति** ।। तर्ह्यानन्तर्यलक्षणा सङ्गतिः कथमस्याध्यायस्येत्यत आह– **पूर्वाध्यायेति** ।। उक्तस्योक्तिः व्यर्थेत्यतः सङ्क्षेपेणेत्युक्तम् । तर्हि कात्स्न्येन पुमर्थसाधनाद्य-

श्लोकः २

ज्ञानात् तदनुष्ठानानुपपत्तिरित्यत आह– **तदुभयमिति** ।। तर्हि चतुर्दशाध्याय एव प्रपञ्च्यताम्; किं विलम्बेनेत्यत उक्तम्– **इदानीमिति** ।। अवसरप्राप्तावित्यर्थः ।

ननु साधनतद्विरोधिनोः प्रपञ्चनीयत्वे सुरासुरलक्षणोक्तिरयुक्तेत्यत आह– **सुरासुरेति** ।। **तथेति** साधनं तद्विरोधि चेत्यर्थः । **तत्** सुरासुरलक्षणम् । **वक्ष्यमाणेति** ।। उत्तराध्याये 'देवद्विज' इत्यादिनेति शेषः । **शौचादेरपीति** ।। 'पूजनं शौचमार्जवम्' इति शौचादेरपि तपस्त्वोक्तेरिति भावः ।। **पुनरुक्तीति** ।। अत्रापि तेजः, क्षमा, धृतिः, शौचमित्यादिना शौचादेरुक्तत्वादिति भावः । ननु पुनरुक्तिपरिहारायोपवासादिकं तप इति व्याख्यायतां किमुक्तक्लेशेनेत्यत आह– **तच्चेति** ।। तच्च नोपवासादीत्यन्वयः । किन्तु ब्रह्मचर्यादीति शेषः । तर्ह्युपवासाद्यसङ्ग्रह इत्यत उक्तम्– **उपलक्षणत्वेति** ।। विनिगमनाविरहादुपवासादेरेवोपलक्षणत्वमस्त्वित्याशङ्कापरिहाराय 'प्रधानस्य' इत्युक्तम् ।। १ ।।

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ।। २ ।।**

## भाष्यम्

**पैशुनं परोपद्रवनिमित्तदोषाणां राजादेः कथनम् । 'परोपद्रवहेतूनां दोषाणां पैशुनं वचः । राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते ।।' इत्यभिधानात् । लौल्यं रागः । 'रागो लौल्यं तथा रक्तिः' इत्यभिधानात् । अचापलं स्थैर्यम् । 'चपलश्चञ्चलोऽस्थिरः' इत्यभिधानात् ।। २ ।।**

भावप्रदीपिका (प.टी.)– न दोषोद्भावनमात्रं पैशुनमित्याह– **पैशुनमिति** । राजादेर्वचः । अलोलुत्वअचापलशब्दयोरर्थभेदमाह–**लौल्यमिति** ।। २ ।।

प्रमेयदीपिका (ज.टी.)– 'पैशुनाभावोपैशुनम् । पैशुनं च परस्यापराधवचनम्' इति । तदसत् । शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि तत्त्वप्राप्तेरित्याशयेनाह– **पैशुनमिति** ।। राजादेस्तच्छ्रावणम् । परोपद्रवनिमित्त इति दोषेषूपचारः । अनेन परोपद्रवायेति सूचयति । **वचः कथनम्** । **मदात्** कारणात् । **भीतेरदृष्टिः** अनुत्पत्तिरिति यावत् । भीतेः भीतिकारणस्य तथात्वेन अदृष्टिरिति वा । बालादीनां भीतेरदर्शनं

**व्यावर्तयितुं मदात् इत्युक्तम् । अनेन धात्वर्थोऽप्यनुगतः ।। एतेनासुरलक्षणं दर्पोऽपि व्याख्यातः । अलोलुत्वाचापलत्वयोर्भेदं क्रमेण सप्रमाणकं दर्शयति– लौल्यमिति ।। लोलुत्वपर्यायोऽयमित्यत एवमुक्तम् ।। २ ।।**

**भावबोधः (र.टि.)–** ननु राजादेर्दोषादिश्रवणमेव परोपद्रवनिमित्तं, न तु दोष इति कथं तन्निमित्तदोषाणामित्युक्तमित्यत आह– **राजादेरिति** ।। **उपचार इति** ।।..... इत्यादिश्रवणे दोषेषु चोपद्रवप्रयोजकरूपैकगुणयोगादित्यर्थः । ननु भीतेः सत्वात् कथमदृष्टिरित्यत आह– **अनुत्पत्तिरिति** ।। **धात्वर्थोऽपीति** ।। 'हर्षविमोहनयोः' इति धातोर्घञि कृते लघूपधगुणे दर्प इति रूपम् । विमोहनमदृष्टिरिति भावः । ननु गीतायामलोलुत्वोक्तेः भाष्ये लौल्यमिति कथमुक्तमित्यत आह– **लोलुत्वपर्याय इति** ।। २ ।।

**भावदीपः (रा.टि.)–** राजादेः परकीयदोषश्रवणस्यैव परोपद्रवहेतुत्वाद्दोषेषु कथं तद्धेतुत्वोक्तिरित्यत आह – **राजादेस्तच्छ्रावणमिति** ।। अदृष्टिपदस्यार्थमाह– **अनुत्पत्तिरित्यादिना** ।। यथाश्रुते भीतेः मनोधर्मस्य ज्ञातैकसत्वेनादृष्टेरयोगादिति भावः ।। **धात्वर्थोऽपीति** ।। 'मदात्' इत्यादिना दर्पपदार्थव्याख्यानेनोक्तेऽर्थे 'दर्पहर्ष विमोहनयोः' इत्युक्तदृप्धात्वर्थानुगत इत्यर्थः ।। विमोहनस्यादृष्टिरूपत्वादिति भावः । गीतायां त्वप्रत्ययान्तश्रवणाद्भाष्ये लौल्यम् इति कथमुक्तम् इत्यत आह– **लौल्यमितीति** ।। २ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ।। दृप् हर्षविमोहनयोः इति धातोः घि कृते लघूपधगुणे दर्प इति रूपम् ।। विमोहनं चादृष्टिरिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** ।। **अपैशुनम्** अपिशुनता । परस्मै पररन्ध्रप्रकटीकरणं पैशुनम्, तदभावोऽपैशुनम्' इति शङ्करभाष्ये दूष्यभागमनुवदति– **पैशुनाभाव इत्यादिना** ।। अपैशुनशब्दार्थः – **पैशुनाभाव इति** ।। इतरस्तु परभाष्यानुवाद इति वा । **तत्त्वप्राप्तेः** पैशुनत्वप्राप्तेः । ननु कथनं नाम वाक्यरचनं वक्तृव्यापारः । तत्र 'राजादेः' इति षष्ठ्यन्तपदस्य कर्तृसमर्पकत्वं कर्मसमर्पकत्वं वा न सम्भवति, असाङ्गत्यापत्तेरित्याशङ्क्य नात्र कथनं वचनमात्रं विवक्षितम्; किन्नाम राजादिकर्तृकश्रवणानुकूलप्रेरणात्मकं श्रावणमेव । तत्र च राजादेः श्रवणकर्तृत्वेनान्वयस्याभिसंहितत्वात् श्रोतृत्वसम्बन्धे षष्ठी इति भावेन 'राजादेः कथनम् इत्यत्र 'कथनम् इत्यस्य तात्पर्यविषयीभूतार्थं दर्शयति– **राजादेस्तच्छ्रावणमिति** ।। परोपद्रवनिमित्त-दोषश्रावणम् ।

श्लोकः २

नन्वेवं राजादेः शिष्यादिदोषश्रावणं शिक्षार्थमपि पैशुनं स्यात् इत्यत आह– **परोपद्रवेति** ।। उपचारः दोषतच्छ्रावणयोः परोपद्रवप्रयोजकत्वधर्मसाम्येन परोपद्रवनिमित्तशब्दस्य गौणी वृत्तिरित्यर्थ इति आहुः । कथनशब्दस्य दोषश्रावणतात्पर्यकस्य श्रावणकर्मदोषेषु लक्षणाऽत्रोपचारशब्दार्थ इत्यपि अपरे । भावप्रदीपे तु, राजादेस्तच्छ्रावणं परोपद्रवनिमित्तमिति 'दोषेषु उपचारः' इति पाठानुसारेण व्याख्यातम् । नन्वेवं शिष्यादिदोषानुवादस्य शिक्षार्थस्यापि पैशुनत्वप्रसङ्ग इति शङ्कितदोषः कथं परिहृत इत्यत आह– **अनेनेति** ।। 'परोपद्रवनिमित्तेन' इति भाषणेन । तथा च 'परोपद्रवोद्देश्यकं राजादेः परदोषश्रावणं पैशुनम् इति लक्षणं विवक्षितमिति शिष्यादिदोषानुवादे नातिव्याप्तिः । तस्य शिष्यादिशिक्षामात्रपर्यवसायितया उपद्रवोद्देश्यकत्वाभावादिति भावः । ननु प्रमाणे वचो नाम वाक्यम्; तथा च परोपद्रवहेतूनां दोषाणां राजादेर्वाक्यं पैशुनम् इत्यनन्वितम् इत्यतोऽर्थमाह– **वचः कथनमिति** ।। एवं च न नान्वयः, नापि भाष्यविसंवाद इति भावः ।।

भावप्रदीपिकायां तु 'स्वाध्यायादेरपि तपस्त्वात् कथं तपसः पृथगुक्तिः इत्यत आह– **तप इति** ।। न दोषोद्भावनमात्रं पैशुनमित्याह– **पैशुनमिति** ।। राजादेः राजादिकं प्रति वचः' इति व्याख्यातम् । 'मदात्' इति पञ्चमी भयहेताविति प्रतीतिनिरासायाह– **मदात् कारणादिति** ।। 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमीति भावः । 'ह्रीर्भीरित्येतत् सर्वं मन एव' इति श्रुतेः भीतेः मनोवृत्तिविशेषस्य साक्षिगोचरस्य ज्ञातैकसत्त्वात् 'अदृष्टिः' इत्यनुपपन्नम् इत्यतो दृष्टिशब्दतात्पर्यार्थमाह– **अनुत्पत्तिरिति** ।। 'ञिभी भये' इत्यतः करणे क्तिनि निष्पन्नो भीतिशब्दो भीतिकारणमाह । 'अदृष्टिरदर्शनमेव' इति सोपस्कारमाह– **भीतेर्भीतिकारणस्येत्यादि** ।। 'मदात्' इत्यस्य प्रयोजनं दर्शयति– **बालादीनामिति** ।। **अनेन** 'मदाद्भीतेरदृष्टिः' इत्यनेन । **धात्वर्थः** 'दृप हर्षविमोहनयोः' इति धात्वर्थः विमोहनरूप इत्यर्थः । विमोहनमत्रादृष्टिरूपमिति भावः । **दर्पः** 'दम्भो दर्पोऽभिमानश्च' इत्यत्रासुरलक्षणतया वक्ष्यमाणः । 'मदाद्भीतेः अदृष्टिः' इति व्याख्यातः । अलोलुत्वशब्दे व्याख्यातव्ये गीतायामविद्यमानो लौल्यशब्दः किमिति व्याख्यायत इत्यत आह– **लोलुत्वपर्याय इति** ।। लोलुपत्वपर्यायो लोलुत्वशब्दः; पकारलोपस्त्वार्षः । लौल्यमेव च लोलुत्वम् इति भाष्ये एवं व्याख्यानं कृतमिति भावः ।।

**गीताक्षरार्थस्तु–** अहिंसा मनोवाक्कायैः सर्वभूतेषु सर्वदाऽपि क्लेशाजननम्, प्राणिनां पीडावर्जनं वा । सत्यं भूतहितयथार्थभाषणम्, अप्रियानृतवर्जितभाषणमिति एके । अक्रोधः

प्रतिहतस्यापि चित्ते क्षोभानुत्पत्तिः । त्यागः कर्मफलाभिसन्धिवर्जनम्, औदार्यम् इति एके । शान्तिः शमो भगवन्निष्ठता । अपैशुनम् पैशुनाभावः, पैशुनं च परोपद्रवोद्देश्यकं राजादेः परदोषश्रावणम् । भूतेषु प्राणिषु कृपा दया अलोलुत्वम् 'लुप विमोहने' इत्यस्य हि इदं रूपम्, पकारलोप आर्षः । पुत्रकलत्रादिषु अभिषङ्गाभावः । इन्द्रियाणां विषयसन्निधावपि अविक्रिया इति एके । मार्दवम् मृदुता अक्रौर्यं ह्रीः निषिद्धाचरणे लज्जा अचापलं स्थैर्यम् ।। २ ।।

**भावदीपिका (श्री.टि.)– ।। तत्त्वप्राप्तेरिति ।।** पैशुनत्वप्राप्तेरित्यर्थः । ननु राजादेर्दोषादिश्रावणमेव परोपद्रवनिमित्तम्, न तु दोष इति 'परोपद्रवनिमित्त' इति कथमवादीत्? इत्यत आह– **परोपद्रवेति ।।** राजादिश्रावणे दोषेषु चोपद्रवप्रयोजकत्वरूपैकगुणयोगादित्यर्थः । **अनेन** 'परोपद्रवनिमित्त' इति वचनेन । **परोपद्रवायेति ।।** राजादेः कथनमित्यर्थः । ननु भीतेः साक्षिवेद्यत्वेन ज्ञातैकसत्त्वात् कथमदृष्टिः इत्यत आह– **अनुत्पत्तिरिति ।। तथात्वेन** भीतिकारणत्वेन । **बालादीनामिति** । तथाच तेष्वपि दर्पसद्भावव्यवहारः स्यादिति भावः । **अनेनेति** । अदृष्टिः इत्यनेनेत्यर्थः । **धात्वर्थ इति ।।** 'दृप हर्षविमोहनयोः' इति विमोहनरूपदृपृधात्वर्थ इत्यर्थः । विमोहनशब्देन सम्यग् ज्ञानाभावरूपादृष्टेर्विवक्षितत्वादित्याशयः । 'दृप्' अस्मात् घञि, लघूपधगुणे च 'दर्पः' इति रूपं द्रष्टव्यम् । **एतेनेति ।।** पैशुनस्वरूपकथनायोदाहृताभिधानशेषे दर्पस्वरूपकथनेनेत्यर्थः । **भेदमिति ।।** चञ्चलस्यैव लोलत्वेन लौल्यचापलयोरभेदशङ्कायामित्यर्थः । ननु गीतायाम् 'अलोलुत्वम्' इत्युक्ते लौल्यमिति कथं भाषितम्? इत्यत आह– **लोलुत्वेति ।। एवमुक्तं** 'लौल्यम्' इत्युक्तम् ।। २ ।।

**भावप्रकाशः (कृ.टि.)–** ननु कथनं नाम वचनव्यापारः । परार्थं वचनम् । तच्च श्रवणानुकूलव्यापारः । तत्र राजादेरिति न कर्तरि षष्ठी । राजादिकर्तृकदोषवचनस्य निन्दारूपत्वेन पैशुनत्वाभावात् । नापि कर्मणि, दोषाणां वचनकर्मत्वेन राजादेरस्तदभावात् । वचनक्रियाया द्विकर्मकत्वाभावाच्चेत्याशङ्क्य कथनं नाम न वचनमात्रं किन्तु परार्थं वचनम् । तच्च श्रवणानुकूलप्रेरणात्मकं श्रावणमेव । तत्र च राजादेः श्रोतृत्वरूपसम्बन्धे षष्ठी शेष इति सूत्रेण षष्ठी इति भावेन दोषाणां राजादेः कथनमित्यस्य फलितार्थमाह– **राजादेस्तच्छ्रावणमिति ।।** नन्वेवं राजादेः शिष्यादिदोषश्रावणस्य शिक्षार्थस्य पैशुनत्वप्रसङ्ग इत्यत उक्तम्– **परोपद्रवनिमित्तेति ।।** तदयुक्तम् । दोषाणां स्वरूपेण परोपद्रवनिमित्तत्वाभावादित्यत आह– **परोपद्रवनिमित्तेतीति उपचार इति ।।** परोपद्रवनिमित्तशब्दस्य तादृशश्रवणविषयत्वे लक्षणा । दोषतच्छ्रवणयोः परोपद्रवप्रयोजकत्वसाम्येन गौणी वेत्यर्थः ।

श्लोकः ३

ननु दोषाणां पुरुषान्तरेषूपद्रवप्रयोजकत्वस्य फलोपहितस्य दर्शनेन शिष्यादिदोषेष्वपि स्वरूपयोग्यम् उपद्रवप्रयोजकत्वमस्त्येव । तेन· नोक्तातिव्याप्तिपरिहार इत्यत आह– **अनेनेति** ।। तथा च परोपद्रवोद्देशेन राजादेः परदोषश्रावणं पैशुनमिति लक्षणं विवक्षितम् । न च शिक्षार्थं राजादेः शिष्यादिदोषश्रावणं तथा । शिक्षार्थत्वविरोधात् । अतो नातिप्रसङ्ग इति भावः । भावबोधे तु । राजादेः तच्छ्रवणं परोपद्रवनिमित्तमिति दोषेषूपचार इति पाठमाश्रित्य व्याख्यातमिति बोध्यम् ।

ननु वचो वाक्यम् । तस्य कथं पुरुषधर्मपैशुनत्वम् । वाक्यस्य पुरुषधर्मत्वाभावादित्यत आह– **वचः कथनमिति** ।। ननु भीतेर्ज्ञातिकसत्वात् कथमदृष्टिरित्यत आह– **अनुत्पत्तिरिति यावदिति** ।। **धात्वर्थ इति** ।। 'दृप हर्षविमोहनयोः' इत्युक्तो विमोहनरूपो धात्वर्थ इत्यर्थः । दर्पशब्दस्य दृपप्रकृतिकत्वादिति भावः । **अनुगत इति** ।। विमोहनस्यादृष्टिरूपत्वादिति भावः । **अलोलुत्वाचापलयोर्भेद इति** ।। 'लोलः चपलतृष्णयोः' इत्यमरोक्तेः लोलशब्दस्य चपलशब्दपर्यायचलशब्दसमानार्थत्वात् तद्घटितालोलत्वाचापलशब्दयोरन्यतरवैयर्थ्यप्रसक्तावर्थभेदं दर्शयतीत्यर्थः ।

ननु रागो लौल्यमित्यसङ्गतम् । व्याख्येयस्य लोलुत्वशब्दस्याव्याख्यानादित्यत आह– **लोलुत्वपर्याय इति** ।। यद्वा ननु लोलुत्वशब्द उकारान्तप्रकृतिकः। लौल्यशब्दस्तु अकारान्त-प्रकृतिकः । ततो रागो लौल्यमिति व्याख्यानमयुक्तमित्यत आह– **लोलुत्वपर्याय इति** ।।२।।

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ।। ३ ।।**

## भाष्यम्

**क्षमा तु क्रोधाभावेन सहापकर्तुरनपकारः । 'अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते' इत्यभिधानात् ।। ३ ।।**

भावप्रदीपिका (प.टी.)– अक्रोधपदागतार्थतया क्षमापदं व्याचष्टे –**क्षमेति** ।।३।।

प्रमेयदीपिका (ज.टी.)– अक्रोधः इत्युक्तत्वात् क्षमा इति पुनरुक्तिरित्यत आह–

**क्षमा त्विति ।।** क्रोधं दोषमपकारं च न करोति इति अक्रोधदोषकृत् । शत्रोः अपकर्तुः ।। ३ ।।

**भावरत्नकोशः (सु.टि.)–** दोषशब्दार्थः – **अपकारमिति** ।। क्रोधदोषकृन्न भवतीति अक्रोधदोषकृद् इत्यस्य फलितप्रदर्शनम् – **न करोत्यक्रोधदोषकृदिति** ।। 'अपकर्तुः' इति भाष्याविसंवादाय शत्रुशब्दार्थमाह– **शत्रोरपकर्तुरिति** ।।

**गीताक्षरार्थस्तु–** तेजः प्रागल्भ्यम् । क्षमा क्रोधाभावेन सह अपकर्तुः अनपकृतिः । धृतिः देहेन्द्रियेषु अवसादप्राप्तावपि तन्निरोधकोऽन्तःकरणवृत्तिविशेषः । शौचम् द्विविधम्– मृज्जलाभ्यां कायमलशोधनं बाह्यम्, भगवद्ध्यानादिना मनःकालुष्यापकर्षणम् आन्तरमिति । अद्रोहो जिघांसाभावः । नातिमानिता अत्यर्थं मानोऽतिमानः, सोऽस्यास्तीति अतिमानी, तस्य भावः तत्ता, नसमासः तदभावः नातिमानिता । आत्मनः पूज्यतातिशयभावनाऽभावः । अहङ्कार-राहित्यमिति तु विवृतिकृतः । एते च 'अभयं सत्त्वसंशुद्धिः' इत्यादिनोपदिष्टाः षड्विंशतिर्गुणाः दैवीं सम्पदमभिजातस्य प्रतिजातस्य भवन्ति । अभिरयं प्रत्यर्थे लक्षणे कर्मप्रवचनीयः । कर्मप्रवचनीययुक्ते च द्वितीयोपपद्यते । मुमुक्षुवर्गे जातस्य दैवी सम्पल्लक्षणम् इत्येते धर्मा मुमुक्षुणाऽवश्यमापादनीया इति भावः ।। ३ ।।

**भावप्रकाशः (कृ.टि.)– ।। दोषमपकारमिति ।।** दोषमित्यनूद्यापकारमिति विवृतम् ।। ३,४ ।।

## दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
## अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।। ४ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** मुमुक्षुणा त्यक्तव्यान्यासुरलक्षणान्युच्यन्ते– **दम्भो दर्पोऽभिमानश्चेत्यादिना** ।। आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं दम्भः । दर्पः धनाभिजात्यादिमदात् समुपनतस्यापि भयकारणस्याप्रदर्शनम् । अभिमानक्रोधौ व्याख्यातप्रायौ । पारुष्यं परुषत्वं निष्ठुरभाषणम् । अज्ञानं कर्तव्याकर्तव्यविवेकाभावः । एवशब्दो जातस्यैवेति सम्बध्यते । एते च धर्माः आसुरीम् असुरसम्बन्धिनीं सम्पदं योग्यताम् अभिजातस्य प्रतिजात-स्यैव पुंसो भवन्ति । अमुमुक्षुवर्गजातस्यैव आसुरी सम्पल्लक्षणमिति दम्भादयो मुमुक्षुणा त्यक्तव्या इति भावः ।। ४ ।।

श्लोक: ५

**दैवी सम्पद्विमोक्षाय निबन्धायाऽसुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ।। ५ ।।**

## भाष्यम्

**दैवीं सम्पदम् अभिजातः प्रतिजातः ।। ५ ।।**

प्रमेयदीपिका (ज.टी.)– 'सम्पदं दैवीमभिजातोऽसि' इत्यत्र अभिजातः उत्तमजन्मा । नायं धातुः सकर्मकः । तत् कथं द्वितीया? इत्याशङ्क्य 'अभिलक्ष्य जातः' इति केचित् व्याचक्षते । तदसत् । अर्जुनस्य देवत्वेन देवत्वमुद्दिश्य जन्मायोगादित्याशयवानाह– **दैवीमिति** ।। अनेनैतद्व्याव्याचष्टे। नायमभिरुपसर्गः । येन तस्य जनिसम्बन्धे द्वितीयानुपपत्तिः स्यात्, लक्ष्यसम्बन्धे चोक्तानुपपत्तिः स्यात् । किन्तु प्रत्यर्थलक्षणे कर्मप्रवचनीयः । तथा च 'कर्मप्रवचनीययुक्ते द्वितीया' उपपद्यते । यथा वृक्षमभिवृक्षं प्रति विद्योतत इत्यत्र वृक्षो विद्योतनस्य लक्षणमित्यर्थः । एवं देवी सम्पत् जातस्य तव लक्षणमित्यर्थः सम्पद्यते । तथा चार्जुनस्य प्राप्तदेवत्वाविरोध इति । अत एव 'सम्पदं दैवीमभिजातस्य भारत' 'अभिजातस्य पार्थ सम्पदमासुरीम्' इत्येतद्विहायेदं व्याख्यातम् । अर्जुनस्य देवत्वप्रसिद्धेरेतत्साहचर्यात् तत्राप्येतदर्थत्वोपपत्तेः ।। ५ ।।

भावबोधः (र.टि.)– ।। **अयं धातुरिति** ।। जनिधातुरित्यर्थः । **देवत्वप्रसिद्धेरिति** ।। तयोर्देवत्वासुरत्वप्रसिद्ध्यभावादित्यर्थः ।। ५ ।।

भावदीपः (रा.टि.)– ।। **प्रत्यर्थलक्षण इति** ।। 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति प्रतीत्युपसर्गस्य लक्षणरूपेऽर्थे कर्मप्रवचनीयसञ्ज्ञोक्तेरिति भावः ।। **अत एवेति** ।। देवत्वस्य अर्जुनलक्षणत्वज्ञापनार्थत्वादेवेत्यर्थः। प्रसिद्धस्यैव लक्षणत्वात् । षष्ठ्यन्तनिर्दिष्टस्थले च देवासुरत्वाप्रसिद्धेरिति भावः ।। ५ ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **अयं धातुरिति** ।। जनिधातुरित्यर्थः ।। **प्रत्यर्थलक्षणे कर्मप्रवचनीय इति** ।। अभिरभाग इति लक्षणात् एकस्याभेः कर्मप्रवचनीयत्वविधानादित्यर्थः ।

लक्षणे कर्मप्रवचनीय इत्येवोक्ते अनुर्लक्षण इत्यन्वर्थस्य जनकत्वरूपलक्षणस्यापि अभ्यर्थत्व-प्रसक्तौ जनकत्वरूपस्य च तस्य प्रकृते असम्भवात् कर्मप्रवचनीयत्वमित्याशङ्कानिरासाय प्रत्यर्थत्वेन लक्षणं विशेषितम् । तथाच लक्ष्यते चिन्ह्यते येन तल्लक्षणं चिह्नं बोधकमत्रलक्षणम् तादृशलक्षणे अभिः कर्मप्रवचनीय इत्युक्तं भवति। प्रत्यर्थे लक्षणे प्रतेः कर्मप्रवचनीयत्ववत् अभ्यर्थे लक्षणे अभेरपि कर्मप्रवचनीयत्वमिति दृष्टान्ततया तदुपादानमित्याहुः । अस्त्वेवमभि-शब्दस्य कर्मप्रवचनीयत्वम्, किं तावतापि इत्यत आह– **तथाचेति**।। कर्मप्रवचनीययुक्ते द्वितीयेति तत्र तद्विधानादिति भावः । तत्रैव सम्प्रतिपन्नं दृष्टान्तमाह– **यथेति** ।। वृक्षो विद्योतनस्य लक्षणमिति वृक्षं प्राप्य विद्योतत इति प्राप्तक्रियाजनितो लक्ष्यलक्षणभावः प्रत्यादिभिः द्योत्यत इति भावः ।।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे षोडशोध्यायः ।।**

**भावरत्नकोशः (सु.टि.)–** ।। **उत्तमजन्मा** कुलीनः ।। **अयं धातुः** 'जातः' इत्यत्र प्रकृतिभूतो 'जनी प्रादुर्भावे' इति जनिधातुः । **तत्कथमिति** ।। 'कर्मणि द्वितीया इत्युक्तेरिति भावः । **केचिदिति** ।। तथा च शङ्करः 'दैवीं देवादीनां या सम्पत् तामभिलक्ष्य जातस्य' इति । 'देवत्वेन' इति वदन् 'इन्द्रो ह्यर्जुनः' इत्यभिसन्धत्ते । 'जनिधातोरकर्मकत्वात् कथं द्वितीया इति शङ्का कथं परिहृता इत्यतो भाष्यभावमाह– **अनेनेति** ।। **येन** उपसर्गत्वेन । 'उपसर्गाः क्रियायोगे 'इति वचनादत्र जनिधात्वर्थः क्रियायोगो वा लक्षधात्वर्थक्रियायोगो वा उपसर्गत्वे निमित्तमिति विकल्पं मनसि निधाय आद्ये दोषमाह– **तस्य जनिसम्बन्ध** इति ।। अन्तेऽप्याह– **लक्षिसम्बन्ध इति** ।। 'लक्ष दर्शनाङ्कनयोः' इति धात्वर्थक्रियायोग इत्यर्थः । **उक्तानुपपत्तिः** अर्जुनस्य सिद्धदेवत्वमुद्दिश्य जन्मायोगात् इत्युक्तानुपपत्तिः ।

प्रतेर्लक्षणाद्यनेकार्थत्वाद् विवक्षितमर्थं दर्शयति– **लक्षण इति** ।। चिह्न इत्यर्थः । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु पतिपर्यनवः' इति सूत्रे येष्वर्थेषु प्रतेः कर्मप्रवचनीयत्वमुक्तम्. तेषु भागमात्रं वर्जयित्वा 'अभिरभागे' इत्यभेः कर्मप्रवचनीयत्वस्योक्तत्वादत्र लक्षणेऽर्थे अभेः कर्मप्रवचनीयत्वं युक्तमिति तद्योगे द्वितीयोपपत्तेरिति भावः । अभेः प्रत्यर्थे लक्षणे कर्मप्रवच-नीयत्वेन तद्योगे द्वितीयेत्यत्र उदाहरणं दर्शयति– **यथा वृक्षमभीति** ।। **तव लक्षणमिति** ।।

श्लोकः ५

विशेषणरूपं चिह्नमित्यर्थः । **विरोध इति** ।। इतिशब्दस्य 'व्याचष्टे' इति पूर्वेणान्वयः । 'नार्जुनस्य प्राप्तदेवत्वविरोधः' इत्युक्तेऽर्थे उपष्टम्भकमाह– **अत एवेति** ।। दैव्याः सम्पदोऽर्जुन-लक्षणत्वज्ञापनार्थत्वादेवेत्यर्थः ।

एतेन 'सम्पदं दैवीमभिजातस्य' 'पार्थ सम्पदमासुरीम्' इति च वाक्यद्वये प्रथमोप-स्थितेऽपि, तत्र 'अभिजातस्य प्रतिजातस्य' इति व्याख्यानं किमिति न कृतम् , किमिति च 'दैवीं सम्पदमभिजातोऽसि पाण्डव' इति चरमश्रुतवाक्यं भाष्ये व्याख्यातम् इति चोद्यं परिहृतं भवति । 'अत एव' इत्युक्तं हेतुं दर्शयति– **अर्जुनस्येति** ।। **एतत्साहचर्यात्** प्रसिद्ध-देवत्वार्जुनसम्पत्साहचर्यात् । **तत्रापीति** ।। 'सम्पदं दैवीमभिजातस्य' इत्यत्र, 'पार्थ सम्पदमा-सुरीम्' इत्यत्र 'दैवीं सम्पदमभिजातस्य प्रतिजातस्य' इति 'आसुरीं सम्पदमभिजातस्य प्रतिजातस्य' इति च व्याख्यानोपपत्तेरित्यर्थः ।। ५ ।।

**गीताक्षरार्थस्तु** दैवासुरसम्पदोः फलप्रदर्शनेन दैवसम्पत्फलयोग्यस्य अर्जुनादिसाधकवर्गस्य असुरस्वभावत्वशङ्का निवार्यते– **दैवीति** ।। दैवी देवसम्बन्धिनी सम्पत् 'अभयं सत्त्वसंशुद्धिः' इत्यादिरूपो धर्मः विमोक्षाय तत्तद्योग्याय विविधमोक्षाय मता । आसुरी तु निबन्धाय नीचस्थाने अन्धतमसे बन्धाय तत्र अनिवर्त्यदुःखमनुभवितुम् इति यावत् मता । दैवीं सम्पदमभिजातः प्रतिजातोऽसीति मा शुचः शोकं मा कार्षीः । दैव्याः सम्पदः स्वाभाविकत्वेन कदाचिदप्यन-पायात् मा भैषीरिति अर्जुनोपलक्षितसज्जने भगवतोऽनुक्रोशः ।। ५ ।।

**भावदीपिका (श्री.टि.)**– ।। **उत्तमजन्मेति** ।। तथा च 'अभिजातोऽसि' इत्यस्य 'सत्कुलप्रसूतोऽसि' इत्यर्थो द्रष्टव्यः । **अयं** धातुः जनिधातुः । **द्वितीया** 'सम्पदं दैवीम्' इति द्वितीया । उपसर्गाणां क्रियासम्बन्धाभावे ससाधनक्रियावाचित्वमभिप्रेत्याह– **अभिलक्ष्येति** ।। दैवीं सम्पदं देवत्वमभिलक्ष्य उद्दिश्य जात इत्यर्थः । 'लक्ष दर्शनाङ्कनयोः' इति लक्षधातोः सकर्मकत्वात् द्वितीया युक्तेत्यर्थः । **देवत्वेन** प्राप्तदेवत्वेन । देवेन्द्रावतारत्वेनास्यापि देवत्वा-दिति भावः । **जनिसम्बन्ध इति** ।। 'अभिजात उत्तमजन्मा' इति जनिसम्बन्ध इत्यर्थः । **लक्ष्यसम्बन्ध इति** ।। अध्याहृतलक्ष्यपदेन सम्बन्ध इत्यर्थः । **उक्तानुपपत्तिः** अर्जुनस्य 'देवत्वेन' इत्युक्तानुपपत्तिः । अयमभिरुपसर्गो न चेत् तर्हि किमिति पृच्छति – **किं त्विति** ।। उत्तरमाह– **प्रत्यर्थ इति** ।। नच अभेः कथं कर्मप्रवचनीयसंज्ञा? 'लक्षणेत्थम्भूताख्यानभाग-

वीप्सासु प्रतिपर्यनवः' इति सूत्रेण प्रत्यादित्रयाणामेव लक्षणाद्यर्थचतुष्टये कर्मप्रवचनीयताया उक्तत्वात्, तत्र च अभेरनुक्तेरित्यत उक्तम् – **प्रत्यर्थ इति** ।। तथा च 'अभि' इत्यस्य प्रत्यर्थकत्वात्, तस्य च कर्मप्रवचनीयताया उक्तत्वादिति भावः ।

ननु लक्षणाद्यर्थेषु कस्मिन्नर्थेऽत्र कर्मप्रवचनीयसंज्ञेत्यत उक्तम् – **लक्षण इति** ।। 'प्रति' इत्यस्यार्थभूतं यल्लक्षणं तदर्थेऽयमभिः कर्मप्रवचनीयसंज्ञ इत्यर्थः । तथाऽपि कथं द्वितीयापपत्तिरित्यत आह– **तथा चेति** ।। 'कर्मप्रवचनीययुक्ते द्वितीया' इति सूत्रेणेत्यर्थः । 'वृक्षमभि विद्योतते विद्युत्' इत्युदाहरणम् । अत्राभेर्लक्षणार्थत्वमुपपादयन्, दृष्टन्तेन प्रकृतेऽप्युपपादयति – **यथेत्यादिना** ।। लक्षणं चिह्नं ज्ञापकमित्यर्थः । **दैवी सम्पदिति** ।। जातस्य तव अहिंसादिरूपा दैवी सम्पत् अभि पूर्वप्राप्तदेवत्वज्ञापिकेत्यर्थः । **एतद्विहायेति** ।। 'सम्पदं दैवीमभिजातस्य' इत्यादेः सामान्योक्तित्वेन यत्किञ्चित्पुरुषविषयकत्वसम्भवेन अर्जुनविषयकत्वाभावात् तत्र 'देवत्वमुद्दिश्य जातः' इत्यर्थोक्तावपि बाधकाभावाद् अर्जुनविषयत्वेनावगतं 'सम्पदं दैवीमभिजातोऽसि' इति वाक्यमेव व्याख्यातमित्यर्थः । 'अत एव' इत्युक्तं विशदयति– **अर्जुनस्येति** ।। तथा चात्र 'देवत्वमुद्दिश्य' इति व्याख्यानं न सम्भवतीत्याशयः । **एतदर्थत्वेति** ।। जातस्य पुंसो दैवी सम्पत् अभि लक्षणम्, जातस्य पुंस आसुरी सम्पत् अभि लक्षणमित्यर्थोपपत्तेरित्यर्थः ।। ५-७ ।।

**भावप्रकाशः (कृ.टि.)– ।। उत्तमजन्मेति** ।। कुलीन इत्यर्थः । 'अभिजातः स्थितं न्याये कुलीनप्राप्तरूपयोः इति विश्वोक्तेरिति भावः । **अयं धातुरिति** ।। जनिधातुरित्यर्थः । उपसर्गत्वे क्रियायोगः तन्त्रम् । 'उपसर्गाः क्रियायोगे' इत्युक्तेः । तत्र किं श्रुतक्रियायोगः अध्याहृतक्रियायोगो वेति विकल्प्याद्ये आह– **तस्य जनिसम्बन्ध इति** ।। अन्त्ये आह– **लक्षिसम्बन्ध इति** ।। लक्षदर्शनाङ्कनयोरित्युक्तधात्वर्थक्रियायोग इत्यर्थः । **लक्षणे इति** ।। परिच्छेदक इत्यर्थः । परिच्छेदकं च द्विविधम् । विशेषणमुपलक्षणं च । तद्द्वयमपि लक्षणशब्देनात्र विवक्षितमिति बोध्यम् ।

नन्वभेर्लक्षणे कर्मप्रवचनीयत्वं कुत इत्यत उक्तम्– **प्रत्यर्थेति** ।। अयं भावः । 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनव' इत्यनेन येष्वर्थेषु प्रतेः कर्मप्रवचनीयत्वमुक्तं तेष्वेव भागमात्रं वर्जयित्वाऽभिरभागे इत्यभेः कर्मप्रवचनीयत्वमुक्तम् । अतो लक्षणे

श्लोकः ६,७

कर्मप्रवचनीयत्वं युक्तमिति । **लक्षणमिति** ।। उपलक्षणमित्यर्थः ।। **न लक्षणमिति** ।। विशेषणमित्यर्थः ।। अत एवेत्युक्तं दर्शयति– **अर्जुनस्येति** ।। ५-७ ।।

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ।। ६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** आसुरी सम्पत् सर्वात्मना परित्यजनीयेति भावनाय उक्तानुवादपूर्वकं सैव प्रपञ्चयितुं प्रतिज्ञायते– **द्वाविति** ।। अस्मिन् लोके द्वौ द्विप्रकारौ भूतसर्गौ भूतानां प्राणिनां सर्गौ निसर्गौ स्वभावौ तौ उच्येते– **दैव आसुरश्चेति** ।। तत्र दैवः सर्गः विस्तरशः विस्तरप्रकारैः प्रोक्तः 'अभयं सत्त्वसंशुद्धिः' इत्यादिना परिभाषितः । आसुरं सर्गं मे मम सकाशाद् विस्तरशः शृणु अवधारय । अत्र सर्गाणां सुबहुविधत्वाद् 'द्वाविति कथमुच्यते' इति शङ्का

'सर्गाणां सुबहुत्वेऽपि शुभाशुभफलादिकौ ।
दैवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तरा ।।'

इति प्रमाणेन सर्गाणां सुबहुप्रकारत्वेऽपि द्वौ इति वक्तुं शक्यते । शुभाशुभफलाधिक्य-विवक्षायां गन्धर्वमनुष्याधमादयोऽपि तदुभयफलान्तर्वर्तमाना एवेति उत्तरप्रस्थाने परिहृता ।।६।।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ।। ७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं प्रतिज्ञाता आसुरी सम्पदेव परिवर्जनाय आ अध्यायपरिसमाप्तेः प्रपञ्चेनोच्यते– **प्रवृत्तिं च निवृत्तिं चेत्यादिना** ।। आसुराः असुरस्वाभावाः जनाः प्रवृत्तिं यस्मिन् पुरुषार्थसाधने ज्ञानकर्मादौ कर्तव्या प्रवृत्तिः तां निवृत्तिं यस्माद् अनर्थहेतोः दम्भादेः निवर्तितव्यं सा निवृत्तिः, ताम्, चशब्दावितरेतरसमुच्चये । न विदुः न जानते । 'प्रवृत्तिं विहिते, निवृत्तिं निषिद्धे' इत्यध्याहरन्ति एके । प्रवृत्तिनिवृत्तिशब्दौ विधिनिषेधलक्षकौ । प्रवृत्तिनिवृत्तिधर्मार्थाविति अन्ये । नैतावदेव तेषु किन्तु शौचं बाह्याभ्यन्तरमलक्षालनम्, आचारः कर्माङ्गत्वेन शुद्धिप्रदो व्यापारः सत्यं यथार्थभाषणं च न विद्यते । प्रत्येकं नञोऽनुबन्धः सर्वथा परिवर्जनीयत्वे तात्पर्यद्योतनार्थः ।। ७ ।।

## असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
## अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।। ८ ।।

## भाष्यम्

**जगतः सत्यं प्रतिष्ठा । ईश्वरश्च विष्णुः । तद् वैपरीत्येनाऽहुः । 'तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यम्, तेषामेष सत्यम्' (बृ.उ. ८.१.२०) इति हि श्रुतिः । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च ... स्थितं च यच्च सच्च त्यच्च' (बृ.उ.२.३.१ ) इति । 'तस्योपनिषत् सत्यस्य सत्यमिति एष ह्येवैतत् सादयति यामयति चेति' इति प्राचीनशालाश्रुतिः । परस्परसम्भवो ह्युक्तः अन्नाद्भवन्ति भूतानि (३.१४) इत्यादिना ।। ८ ।।**

भावप्रदीपिका (प.टी.)– न केवलं जगदसत्यत्त्वादिवादिनोऽसत्यमित्यादिनोच्यन्ते । किन्त्वीश्वरस्यास्वातन्त्र्याद्यभ्युपगन्तारोऽपि इत्यभिप्रायेणाह– **जगत इति** । जगतः सत्यं हरिरिति कोऽर्थ इत्यत आह– **तस्येति** । ननु जगतः परस्परसम्भवे सत्येव तदभावोक्तिरयुक्ता । स एव कुत इत्यत आह– **परस्परेति** ।। ८,९ ।।

प्रमेयदीपिका (ज.टी.)– न केवलं जगतो मिथ्यात्वादि वदतामसुरत्वम् 'असत्यमप्रतिष्ठं ते' इत्यनेनोच्यते । किन्तु जगज्जन्मादिकारणं विष्णुं ये न मन्यन्ते तेषां सर्वेषामपीति भावेनाऽह– **जगत इति** ।। **तद्वैपरीत्येनेति** ।। न विद्यते सत्यमस्येत्यादि । जगतः सत्यं विष्णुः इत्यत्र श्रुतिमाह– **तस्येति** ।। तस्य विष्णोः सत्यस्य सत्यमिति उपनिषत् रहस्यं नाम । कथम्? प्राणाः मूर्तामूर्तं जगदिति यावत् सत्यमित्युच्यते । तेषां प्राणानाम् एषः विष्णुः सत्यमित्यर्थः ।।

एवं चेज्जगतो मुख्यं सत्यत्वं न भवेत् । अन्यथा निर्धारणायोगादित्यतो मूर्तामूर्तात्मकस्य जगतः सत्यत्वं तावदन्यथा श्रुत्यैव व्याचष्टे– **द्वे वावेति** ।। रूपे प्रतिमे । तत्र मूर्तं 'स्थितम्' इति 'सत्' इति चोच्यते । अमूर्तं तु यत् इति त्यत् इति च उच्यत इत्यर्थः । तथा च सच्च त्यच्च सत्यमित्युक्तं भवति । इदानीं जगतः सत्यत्वं विष्णोः श्रुत्या व्याचष्टे– **तस्येति** ।। सादयति विशरणादिकं प्रापयतीति सत् ।

श्लोकः ८

यामयति नियच्छतीति यत् । सच्च तत् यच्च सत्यमित्यर्थः । प्रतिष्ठा ईश्वरश्चेति प्रसिद्धमेव ।।

'अपरस्परसम्भूतम्' इत्यस्य 'अपरं परस्मात् सम्भूतम्' इति व्याख्यानमसत् । प्रतिषेधप्रकरणात् । अतः परस्परसम्भूतं न भवतीत्याहुरित्येवं व्याख्येयम् । स्यादेवं यदि परस्परसम्भवो भगवतोऽभिमतः स्यादित्यत आह– **परस्परेति** ।। यद्वाऽनेन परव्याख्यानासाधुत्वमुपपादयति । भगवता परस्परसम्भवस्योक्तत्वात् तद्वचनं कथमासुरमिति? ईश्वराक्षेपे तात्पर्यमिति चेन्न । पुनरुक्तिप्रसङ्गात् ।। ८ ।।

**भावबोधः (र.टि.)**– ।। **मूर्तामूर्तं चेति** ।। वक्ष्यमाणप्रमाणानुसारेण प्राणशब्दार्थमाह– **मूर्तामूर्तमिति** ।। ८ ।।

**भावदीपः (रा.टि.)**– ।। **न विद्यते सत्यमस्येत्यादीति** ।। अस्य जगतः सत्यं सादनरूपविशरणादिप्रापकं नियामकं च न विद्यत इत्यस्य सत्यं न विद्यते प्रतिष्ठा स्थितिहेतुरस्येति 'अप्रतिष्ठम्' इत्यादिरूपेण ध्येय इत्यर्थः ।। **विशरणादिकमिति** ।। 'षद्लृ विशरणगत्यवसादनेषु' इति धातोरिति भावः ।। **प्रतिषेधेति** ।। 'असत्यम्' इत्यादिपदत्रये बहुव्रीहिप्रतिषेधस्य प्रक्रान्तत्वादित्यर्थः ।। **उक्तत्वादिति** ।। 'तृतीये' इति योज्यम् । **पुनरुक्तीति** ।। अनीश्वरम् इत्यनेनेति भावः ।। ८ ।।

**भावरत्नकोशः (सु.टि.)**– 'मिथ्यात्वादि' इत्यत्र आदिशब्देन अप्रतिष्ठत्वम् अनीश्वरत्वं च ग्राह्यम् । **न मन्यन्ते** 'जगज्जन्मादिकारणं न भवति' इति मन्यन्ते चेत्यपि ग्राह्यम् । 'न विद्यते सत्यम् विशरणादिप्रापकम्, नियामकं चास्य जगतः' इति असत्यम् 'न विद्यते प्रतिष्ठा स्थितिहेतुरस्य' इत्यप्रतिष्ठम्' न विद्यते ईश्वरोऽस्य' इत्यनीश्वरम् इत्येवंरूपेणाहुरित्यन्वयः । 'उपनिषद्' इत्यनुवादः 'रहस्यं नाम' इति व्याख्या । 'प्राणाः' इत्यनुवादः 'मूर्तामूर्तम्' इति व्याख्या । प्रमाणे तथा वक्ष्यमाणत्वादियमुक्तिः । तद्विवक्षितार्थकथनम्– **जगदितीति** ।। 'उच्यन्ते' इति बहुवचनम् 'प्राणाः' इत्येतदपेक्षया । **प्राणानां** मूर्तामूर्तात्मकजगत इति यावत् ।

अबाध्यत्वापरपर्यायमिह सत्यत्वमुक्तमिति मत्वा शङ्कते– **एवं चेदिति** ।। भगवान् सत्यस्य सत्यं चेदित्यर्थः । **अन्यथा** सत्त्वेन अन्यत्वेन च मूर्तामूतात्मकत्वेनेति यावत् । सच्च त्यं च मूर्तामूर्तं च । जगतः सत्यत्वं जगत् प्रति सत्यत्वम् सत्यस्य सत्यत्वमित्यर्थः ।

'विशरणादिकम्' इत्यत्र 'षद्लृ विशरणगत्यवसादनेषु' इत्युक्तगत्यादिः आदिपदार्थः । सदेरन्तर्णीतण्यर्थाद् 'अन्येभ्योऽपि दृश्यते' इति क्विपि 'सत्' इति रूपमिति भावः । **प्रसिद्धमेवेति** ।। 'सदायतनाः सत्प्रतिष्ठाः', ईश्वरः सर्वभूतानाम्' इत्यादौ प्रसिद्धमित्यतो नैतयोः प्रमाणोदाहरणमिति भावः । **प्रतिषेधेति** ।। 'असत्यम् अप्रतिष्ठम् अनीश्वरम्' इति नञा निषेधस्यैव प्रकृतत्वात् । 'अपरम् पश्चात्कालीनं कार्यं परस्मात् पूर्वकालीनात् कारणात् सम्भूतम्' इति व्याख्यानं प्रतिषेधप्रकरणाननुगुणमिति भावः । **तद्वचनं** भगवद्वचनम् । अपरं परस्मात् सम्भूतमिति वचनं वा । **ईश्वराक्षेप इति** ।। अपरं परस्मादेव सम्भूतम् न तु ईश्वरात् इति ईश्वरनिराकरण इत्यर्थः । **पुनरुक्तिप्रसङ्गात्** अनीश्वरम् इत्यनेन ।।

**गीताक्षरार्थस्तु** किञ्च ते आसुरा जनाः जगत् असत्यं न सत्यम् असत्यं तत् असत्यत्वाद् अप्रतिष्ठं ज्ञानबाध्यं तत एव अनीश्वरम् अस्वामिकम् आहुः । न च यतो जातम् असावीश्वर इति वाच्यम् । यतः अपरस्परसम्भूतम् एकस्मादेकस्य नोत्पत्तिरिति यावत् । न चैतावन्मात्रेण कथमासुरत्वमिति वाच्यम् । 'अन्नाद् भवन्ति भूतानि' इत्यादावुक्तः परस्परसम्भवो हि मत्सिद्धान्तः, तद्विरुद्धत्वादित्याशयात् । सत्यं न चेत् किमसदेव परस्परसम्भूतं न चेत् किं नित्यम् स्वतो वा जातम् आद्यस्योत्तरम् अन्यत् 'सदसद्भ्याम् इति शेषः । द्वितीयस्योत्तरम्– कामहैतुकम् । 'कामः' इति तत्कारणमविद्या लक्ष्यते । कामहेतुकमेव कामहैतुकम्, अविद्याकल्पितम् इत्येकोऽर्थः ।

'मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ।
मिथ्यात्वान्नेश्वरोऽस्यास्ति..... ।।'

इति तात्पर्यनिर्णयमूलेन 'न केवलं जगतो मिथ्यात्वादि वदताम् आसुरत्वम् 'असत्यमप्रतिष्ठं ते' इत्यनेनोच्यते, इत्यत्रत्यटीकया, तत्त्वोद्योतटीकया चावगम्यते । भाष्ये तु 'न विद्यते सत्यमस्य तद् असत्यम्, न विद्यते प्रतिष्ठापकोऽस्य तद् अप्रतिष्ठम्, न विद्यत ईश्वरोऽस्य तद् अनीश्वरम्' इति अपरार्थ उक्तः । तत्र टीकायाम् 'सादयति शरणादिकं प्रापयतीति सः, यामयति नियच्छतीति यम्, सच्च तद् यं चेति सत्यम् इति सत्यशब्दं विष्णौ व्युत्पाद्य, 'प्रतिष्ठेश्वरश्च प्रसिद्धमेव' इति प्रसिद्ध्यैव प्रतिष्ठेश्वरशब्दयोर्विष्ण्वर्थकत्वमुक्तम् ।। ८ ।।

श्लोकः ८

**भावदीपिका (श्री.टि.)–** 'उप समीपे निषीदति' इति व्युत्पत्तिं हृदि निधायाह– **रहस्यं नामेति ।। मूर्तं चामूर्तं चेति ।।** वक्ष्यमाणप्रमाणानुसारेण प्राणशब्दार्थमाह– **मूर्ता-मूर्तमिति ।।** पञ्चमहाभूतानामेव प्राप्तिपरिहारायाह– **जगदितीति ।।** अबाध्यत्वरूपं सत्यत्व-मत्रोक्तमिति मत्वा शङ्कते – **एवं चेदिति ।। अन्यथेति ।।** जगतो मुख्यसत्यत्व इत्यर्थः । 'आसां गवां मध्ये कृष्णा गौः सम्पन्नक्षीरतमा' इत्युक्ते इतरासां किञ्चित्सम्पन्नक्षीरत्वं लभ्यते, एवं 'सत्यस्य सत्यम्' इत्युक्ते निर्धारणे षष्ठीबलाद् ईश्वरस्य मुख्यसत्यत्वम्, जगतस्त्वमुख्यं व्यावहारिकसत्यत्वं लभ्यत इति भावः । अत्र 'सत् त्यम्' इति 'सत्यम्' इत्यत्र विग्रहं दर्शयति – **सच्च त्यच्चेति ।।** मूर्तामूर्तं चेत्यर्थः । **जगत इति ।।** षष्ठ्यन्तसत्यशब्दवाच्यस्य मूर्तामूर्तजगत इत्यर्थः ।

'षद्लृ विशरण...' इत्यादिधातुमाश्रित्याह– **विशरणादिकमिति ।।** अत्र 'सत् यम्' इत्येव विवक्षितम्, नतु पूर्ववत् 'सत् त्यम्' इति इत्याशयेनाह– **सच्च तदिति ।।** ननु 'जगतः सत्यम्' इत्याद्यर्थत्रयमध्ये 'जगतः सत्यं विष्णुः' इत्यत्र श्रुतिरुक्ता । 'प्रतिष्ठा ईश्वरः' इत्यत्र कस्मान्न प्रमाणमुदाहृतम् इत्यत आह– **प्रतिष्ठेति ।।** 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' 'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्' इत्यादिना जगतः प्रतिष्ठा ईश्वरश्चेति प्रसिद्धमेवेत्यर्थः । **अपरं** पश्चात्कालीनं कार्यम् । **परस्मात्** पूर्वकालीनात् कारणात् । **प्रतिषेधेति ।।** 'असत्यम् अप्रतिष्ठम्' इत्यादिप्रतिषेधप्रकरणादित्यर्थः । **अत इति ।।** प्रकरणाविरोधायेत्यर्थः । **स्यादेवमिति ।।** 'परस्परं सम्भूतं न भवति' इति वदतां निन्द्यत्व-मित्यर्थः । 'परस्परं सम्भूतं न भवतीत्याहुः' इति स्वव्याख्यानोपपादकत्वेन 'परस्पर' इति वाक्यं व्याख्यातम् । अधुना परकृतव्याख्यानासाधुत्वोपपादकत्वेनापि व्याख्येयम्, इत्याह– **परव्याख्यानेति ।।** 'अपरं परस्मात् सम्भूतम्' इति परव्याख्यानेत्यर्थः । **तद्वचनं** परस्परसम्भववचनम् । **ईश्वरेति ।।** 'अपरं परस्मात् सम्भूतम्' इत्येव न तु 'ईश्वरेण सम्भूतम्' इतीश्वराक्षेप इत्यर्थः । **पुनरुक्तीति ।।** 'अनीश्वरम्' इत्यनेन तदभावस्योक्तत्वेन पुनरुक्तिप्रसङ्गादित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)–** 'मूर्तं चामूर्तञ्च' इति वक्ष्यमाणप्रमाणानुसारेणाह– **मूर्तामूर्तं जगदिति यावदिति ।।** मूर्तामूर्तयोः स्वरूपत्वायोगादाह– **प्रतिमे इति ।।** 'सच्च त्यच्च' इति समाहारद्वन्द्वः छान्दसः समासान्तलोपश्चेति भावः । **जगतः सत्यत्वमिति ।।** सम्बन्धमात्रे षष्ठी ।

जगत्प्रति सत्यत्वमित्यर्थः । **सादयतीति** ।। तथा च सदेरन्तर्भूतण्यर्थाद् अन्येभ्योऽपि दृश्यत इति कर्तरि क्विबिति भावः । **प्रतिषेधकरणादिति** ।। सत्यं नेत्यादिरूपेण निषेधस्यैव प्रकृतत्वादित्यर्थः । **तद्वचनमिति** ।। अपरं परस्मात् सम्भूतमिति वचनमित्यर्थः । **ईश्वराक्षेप इति** ।। अपरं परस्मात् सम्भूतं न त्वीश्वरादितीश्वरनिराकरणे तात्पर्यमित्यर्थः । **पुनरुक्तीति** ।। 'अनीश्वरम्' इत्यनेनेति शेषः ।। ८,९ ।।

**एतां दृष्टिमवष्टभ्य नष्टाऽत्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।। ९ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** एतां 'जगदसत्यम्' इत्यादिनोक्तां दृष्टिं मिथ्याऽध्यवसायम् अवष्टभ्य आश्रित्य नष्टात्मानः दुष्टचित्ताः आगामिनिश्चितनाशस्वरूपा वा अल्पा अल्पविषया, महति भगवति अल्पजीवाभेदावगाहिनी वा बुद्धिर्येषां ते तथोक्ताः, उग्रं क्रूरं मिथ्याशास्त्रनिर्माणतदुपदेशादिरूपं कर्म व्यापारो येषां ते उग्रकर्माणः जगतोऽहिताः शत्रवः । कथं जगतः क्षयाय नाशाय नरकप्राप्त्याद्यनिष्टाय प्रभवन्ति समर्था भवन्ति, कलियुगादावुद्भवन्ति वा ।। ९ ।।

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ।। १० ।।**

## भाष्यम्

**दुष्पूरो हि कामः । 'पाताल इव दुष्पूरो मां हि क्लेशयते सदा' (१२.१७७.३९) इति हि मोक्षधर्मे ।।**

भावप्रदीपिका (प.टी.)– **विषयसम्पादनेन कामपूर्तेः कथमसौ दुष्पूरः ?** इत्यत आह– **दुष्पूरो हीति** ।। १० ।।

**प्रमेयदीपिका** (ज.टी.)– **काममाश्रित्य दुष्पूरम्** इति **कामस्य दुष्पूरत्वं** किं **विशेषणम्**? **नेति ब्रूमः** । **किं तर्हि? कामस्य प्रवृत्तिहेतुत्वे हेतुरयमुच्यत** इति

श्लोकः १०

भावेनाऽह– **दुष्पूरो हीति** ।। विशेषणमेव किं न स्यात्? **कामस्य दुष्पूरत्वा-व्यभिचारादिति** भावेनाऽह– **पाताल इवेति** ।। १० ।।

**भावबोधः (र.टि.)**– ।। **दुष्पूरत्वाव्यभिचारादिति भावेनेति** ।। अनेन सदा दुष्पूरं, सदा क्लेशयते इति उभयत्राप्यन्वय इत्युक्तं भवति ।। **१०** ।।

**भावदीपः (रा.टि.)**– ।। **अयमिति** ।। दुष्पूरत्वरूपो धर्मः कामस्य नानाविषयेषु प्रवर्तकत्वे बीजभूतोऽयम् इत्यर्थः ।। १० ।।

**भावरत्नकोशः (सु.टि.)**– दुष्पूरम् अशक्यपूरणं कामम् इति यत् कामविशेषणत्वमुक्तं शङ्करेण तदाशङ्क्य परिहरति– **किं विशेषणम् नेति ब्रूम इति** ।। शङ्करपक्षं दूषयितुं शङ्कते– **विशेषणमेवेत्यादिना** ।। **अव्यभिचारादिति** ।। 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणम्' इति ह्यभियुक्ता इति भावः । प्रमाणे 'सदा दुष्पूरः सदा क्लेशयते' इति सदाशब्दसम्बन्धः ।।

**गीताक्षरार्थस्तु** किञ्च दुष्पूरं पूरयितुमशक्यमिति कामस्य नानाविधविषयेषु प्रवर्तकत्वे 'दुष्पूरो हि कामः' इति हेत्वर्थसमर्पकं विशेषणम्, न तु व्यावतर्कविशेषणम् 'कामस्य दुष्पूरत्वाव्यभिचारात्' इति भाष्यटीकयोः स्फुटम् । कामम् आश्रित्य दम्भमानमदान्विताः परवञ्चनार्थं धर्माभासानुष्ठानप्रदर्शनरूपं धर्मध्वजित्वं दम्भः, 'अहं कर्ता' इत्यहङ्कारः मानः, धर्माभिजात्यादिनिबन्धन उत्सेकः मदः, तैरन्विताः, मोहात् मिथ्याज्ञानस्वभावाद् असद्ग्रहान् अशुभाध्यवसायान् दुष्टपक्षान् वा गृहीत्वा अशुचिव्रताः अशुद्धक्षुद्रदेवताराधनादिनियमयुक्ताः प्रवर्तन्ते कामे दूष्पूरत्वाज्ञानेन नानाविधाशुभक्षुद्रविषयभोगाय व्याप्रियन्ते ।। १० ।।

**भावदीपिका (श्री.टि.)**– ।। **किंविशेषणमिति** ।। अदुष्पूरकामव्यावर्तकं विशेषणं किमित्यर्थः । **हेतुरयमिति** ।। तथा च हेतुगर्भविशेषणमिति भावः । **दुष्पूरो हीति** । भाष्ये हिशब्दबलात् गीतायां 'दुष्पूरम्' इत्यस्य हेतुगर्भत्वं ज्ञायत इति द्रष्टव्यम् । **विशेषणमेवेति** ।। इतरव्यावर्तकमेवेत्यर्थः । **दुष्पूरत्वाव्यभिचारादिति** ।। यदि कश्चित् अदुष्पूरः कामः स्यात् तदैव तद्व्यावर्तनायेदं विशेषणं स्यात्, न चैवम्, कामस्य दुष्पूरत्वाव्याभिचारादिति भावेनाहेत्यर्थः ।। **१०** ।।

**भावप्रकाशः (कृ.टि.)**– ।। **दूष्पूरत्वाव्यभिचारादिति** । 'सम्भवे व्यभिचारे च

स्याद्विशेषणमर्थवत्' इत्युक्तेरिति भावः । अनेन 'सदा' इत्यस्य 'दुष्पूरः क्लेशयते' इत्युभयत्राप्यन्वय इत्युक्तं भवति ।। १० ।।

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ।। ११ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** किञ्च अपरिमेयाम् परिमातुम् इयत्तया परिच्छेत्तुमशक्याम्, प्रलयान्तां मरणावसानां चिन्ताम् उपाश्रिताः मरणावधि दुर्विषयचिन्तापराः कामोपभोगपरमाः 'काम्यन्ते' इति कामाः विषयाः शब्दाद्याः, तेषामुपभोग एव परमः मुख्योऽर्थो येषां ते तथा, एतावदिति निश्चिताः एतत्परिमाणम् ऐहिकविषयसुखमेव श्रेयः, न आमुष्मिकमन्यच्छ्रेय इति कृतनिश्चयाः, 'प्रवर्तन्ते' इति पूर्वेण 'अर्थसंचयान् ईहन्ते' इति परेणान्वयः ।। ११ ।।

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ।। १२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु आशापाशशतैरिति** ।। आशाः अभिलाषाः, पाशा इव तेषां शतैः, बहुविषयावगाहिभिः अभिलाषैरिति यावत्, बद्धाः इतस्तत आकृष्य-माणाः । कामक्रोधौ परमयनं येषां ते कामक्रोधपरायणाः कामभोगार्थं विषयानुभवप्रयोजनाय अन्यायेन परस्वापहारादिरूपेण अर्थसञ्चयान् द्रविणराशीन् ईहन्ते इच्छन्ति । अर्थसंचयान् ईहन्ते चेष्टन्ते व्याप्रियन्त इति अन्ये ।। १२ ।।

**इदमद्य मया लब्धमिमं(दं) प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।। १३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तेषां मनोराज्यं कथ्यते– **इदमद्येत्यादिना** ।। इदं धनादि अद्य इयता कालेनेति यावत् मया लब्धमिदम् अन्यत् मनोरथं मनोगतं मनस्तुष्टिकरं वस्तु प्राप्स्ये प्राप्स्यामि । 'इमं प्राप्स्ये मनोरथम् इत्यपि पठन्ति । इदं च अद्य अस्ति इदमपि मे भविष्यति आगामिसंवत्सरे पुनर्धनम् ।। १३ ।।

श्लोकः १४-१७

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** असौ परोक्षः शत्रुः मया हतः अपरानपि शत्रून् हनिष्ये । ईश्वरोऽहं ब्रह्माहमस्मि भोगी आतिशयनिक इनिः । सर्वातिशायी भोगशाली सिद्धः कृतकृत्यः न साधारणोऽहम्, किन्तु बलवान् सुखी चाहमेव ॥ १४ ॥

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** आढ्यः सम्पन्नो धनेन अभिजनवान् परिजनवान् कुलीनो वा मया तुल्यार्थैरतुलोपमाभ्यां तृतीया अन्यतरस्याम्' इति तृतीया । सदृशः तुल्यः अन्यः कोऽस्ति यक्ष्ये यागं करिष्यामि, इतरदीक्षितेभ्यो महतीं प्रतिष्ठां प्राप्स्यामीति यावत् । दास्यामि स्तावकेभ्यः । ततो मोदिष्ये सन्तोषं प्राप्स्यामि । इत्येवमज्ञानेन विमोहिताः विविधं वैचित्र्यमापादिताः ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं चिन्ताप्रकार उक्तः । अथ तत्फलमुच्यते– **अनेकेति** ॥ अनेकचित्तविभ्रान्ताः अनेकार्थविषयकचित्तवृत्तिभिः विविधं भ्रान्ताः अनवस्थिताः मोहजालसमावृताः मोहः मिथ्याप्रत्ययः, पुत्रादिस्नेहो वा, स जालमिव तेन नियन्त्रिताः कामभोगेषु विषयानुभवेषु प्रसक्ताः प्रकर्षेण सक्तहृदयाः सन्तः तेनोपचितकल्मषाः अशुचौ नानाप्रकारैः मनसः क्लेशकरे नरके रौरववैतरण्यादौ पतन्ति ॥ १६ ॥

**आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यक्ष्य इति यस्तेषां मनोरथ उक्तस्तत्र यागदानादि कुर्वतां कथं नरकप्राप्तिरुच्यते इति शङ्कापराकरणाय स तेषां मनोरथः केवलं

दम्भाहङ्कारादिदोषप्रधान एव, न तात्त्विक इति भावेनोच्यते– **आत्मसम्भाविता इति** ।। आत्ससम्भाविताः 'स्वयं श्रोत्रियत्वादिसकलगुणसम्पन्नाः' इति आत्मनैव पूज्यतां नीताः, न तु साधुभिः, स्तब्धाः अप्रणतात्मानः धनमानमदान्विताः धननिमित्तो मानः चित्तसमुन्नतिः, तन्निमित्तो मदश्च ताभ्यामन्विताः दम्भेन धर्मध्वजितया, न तु श्रद्धया अविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितं यथा तथा नामयज्ञैः नाममात्रैः देवताप्रीत्यनुद्देश्यकैः यज्ञैः यजन्ते 'दीक्षितोऽयम्' 'सोमयाजी अयम् ' इत्यादिनाममात्रनिर्वाहप्रयोजनकाः ये यज्ञाः ते नामयज्ञाः तैः यजन्त इत्यर्थ इति अन्ये । 'नाम' इति पृथक् पदमिति अपरे ।। १७ ।।

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।। १८ ।।**

## भाष्यम्

**मामात्मपरदेहेष्विति ।। न कस्यचित् विष्णुः कारयिता । यदि स्यान्मामपीदानीं कारयतु इत्यादि ।**

**'ईश्वरो यदि सर्वस्य कारकः कारयीत माम् ।**
**अद्येति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु'**

**इति हि सामवेदे यास्कश्रुतिः ।। १८ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये षोडशोऽध्यायः ।। १६ ।।

भावप्रदीपिका (प.टी.)– आत्मपरदेहेष्वीश्वरद्वेषो नाम कीदृशः ? इत्यत आह– **मामिति** ।। १८ ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचित श्रीभगवद्गीताभाष्यभावप्रदीपिकायां षोडशोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– भगवद्द्वेषस्याऽत्मपरदेहाधिकरणत्वं कथम्? इत्यत आह– **मामिति** ।। कुतो न? कारयिता यदि स्यात् तर्हि इदानीमकुर्वाणं मामपि कारयतु । कुर्वाणं च निवारयत्वित्यर्थः। सदाऽधः नित्यनरकम् ।। १८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां षोडशोऽध्यायः ।। १६ ।।

श्लोकः १८

**भावबोधः (र.टि.)**– आदिपदार्थमाह– **कुर्वाणं चेति** ।। १८ ।।

।। इति श्रीरघूत्तमतीर्थप्रणीता गीताभाष्यटीकाभावबोधे षोडशोऽध्यायः ।।

**भावदीपः (रा.टि.)**– भाष्यमवतार्य शेषोक्त्या व्याचष्टे– **कुत इति** ।। आदिपदार्थोक्तिः **कुर्वाणं चेति** ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते षोडशोऽध्यायः।।१६ ।।

**भावरत्नकोशः (सु.टि.)**– 'इदानीम्' इत्यस्य तात्पर्यम्– **अकुर्वाणमिति** ।। आदिपदार्थः– **कुर्वाणं चेति** ।। 'अधमां गतिम्' इति गीतानुसारेण 'सदाऽधः' इत्यस्यार्थमाह– **नित्यनरकमिति** ।। तामिस्रान्धतामिस्ररूपमित्यर्थः ।। १८ ।।

**गीताक्षरार्थस्तु** अविधिपूर्वकत्वमेव विविच्यते– **अहङ्कारमिति** ।। क्रियासु 'अहमेव कर्ता' इति मिथ्याऽध्यवसायः अहङ्कारः, तं बलं परधनवनिताद्यपहारसामर्थ्यं दर्पं धनाभि-जात्यादिमदात् समुपनतस्यापि भयकारणस्य अदर्शनम्, कामं क्रोधं च संश्रिताः । आत्मपरदेहेषु च नियामकतया अन्तःस्थितं मां प्रद्विषन्तः 'न कस्यचिद् मम परस्य वा विष्णुः कारयिताऽस्ति, यदि स्यात् कारयिता तर्हीदानीम् अकुर्वाणं मामपि कारयतु, कुर्वाणं च निवारयतु' इत्यादिकुतर्कैरपलपन्तः अभ्यसूयकाः मद्गुणेषु मद्भक्तगुणेषु वा दोषारोपकाः नामयज्ञैर्यजन्ते ।। १८ ।।

**भावदीपिका (श्री.टि.)**– ।। **अधिकरणत्वमिति** ।। 'आत्मपरदेहेषु' इति सप्तम्या आत्मपरदेहयोः अधिकरणत्वप्रतीतेरिति भावः । 'इत्यादि' इत्यत्रत्यादिशब्दार्थमाह– **कुर्वाणं चेति** ।। अधःशब्देन नरकाख्याधोगतिरुच्यते, तस्याः सदाशब्देन नित्यत्वम् इत्यभिप्रेत्योक्तम्– **सदाऽधो नित्यनरकमिति** ।। १८ ।।

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
षडधिकदशमोऽध्यायोऽन्तमस्यामवाप ।।

।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायं
श्रीमद्भगवद्गीताभाष्यविवृतौ भावप्रदीपिकाख्यायां षोडशोध्यायः ।।

**भावप्रकाशः (कृ.टि.)–** आदिपदार्थमाह– **कुर्वाणं चेति** ।। 'सदाधः' इत्येतन्महानर्थो यथा स्यात्तथा व्याचष्टे– **नित्यनरकमिति** ।। ।। १८ ।।

**।। इति श्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णविरचिते प्रमेयदीपिकाभावप्रकाशे षोडशोऽध्यायः ।।**

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।। १९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवमासुरस्वभावमापन्ना नरके पतन्तीति नरकानुभवः फलमुक्तः । नैतावदेव, किन्नाम कश्चित्कालं मयैव प्रापितसंसारमनुभूय ततो नित्यनरकप्राप्तिरपीत्युच्यते– **तानहमिति द्वाभ्याम्** ।। तान् उक्तासुरभावमापन्नान् अत एव द्विषतः क्रूरान् घोरान् अमङ्गलस्वभावान् आसुरीष्वेव, न कदापि साध्वीषु योनिषु संसारेषु जननमरणमार्गेषु क्षिपामि निरस्यामि परिवर्तयामि ।। १९ ।।

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।। २० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** ते च आसुरीं योनिमापन्नाः प्राप्तवन्तः जन्मनिजन्मनि सर्वेष्वपि जन्मसु मूढाः मिथ्याध्यवसायवन्तः सन्तः मामप्राप्य अनासाद्य एव अधमा नित्यनिरयलक्षणां गतिं यान्ति ।। २० ।।

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ।।२१।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** पुमर्थविरोधिषु दोषेषु सर्वथा परिवर्जनीयं दोषत्रयमुच्यते– **त्रिविधमिति** ।। कामः क्रोधस्तथा लोभः इतीदं त्रिविधं नरकस्य प्राप्तौ द्वारमात्मनो नाशनं महानर्थरूपनित्यनिरयप्रापकं च । एवं सति आत्मा नष्ट इव शून्यतां नीत इवेति आत्मनाशनत्वं दोषत्रयस्य । तस्माद् अनर्थहेतुत्वात् एतत् त्रयं कामादित्रिकं त्यजेत् ।। २१ ।।

श्लोकः २२

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ।। २२ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु** एतत्त्यागे किं स्यात् इत्यत उच्यते– **एतैरिति** ।। तमोद्वारैः तमःप्रापकैः एतैः कामक्रोधरूपैः त्रिभिः दोषैः विमुक्तो विशेषेणास्पृष्टः, स च आत्मनः श्रेयः निःश्रेयसः साधनं श्रवणमननादिजन्यज्ञानरूपम् आचरति सम्पादयति । ततः पराम् अखिलक्लेशनिवृत्तिविशिष्टपरमानन्दानुभवरूपां गतिं याति च ।

अत्रेदं वेदितव्यम् 'अभयं सत्त्वसंशुद्धिः' इत्यादिना यानि देवलक्षणानि, यानि च 'दम्भो दर्पोऽभिमानश्च' इत्यादिना असुरलक्षणान्यभिहितानि, अभिहिते च प्रातिस्विके फले 'मा शुचः सम्पदं दैवीम्' इति, 'निबन्धायासुरी' इति, 'ततो यान्त्यधमां गतिम्' इति चापवर्गान्धतमसे, तत्र कानिचिद् देवलक्षणान्यसुरेषु, असुरलक्षणानि देवेषु च दृश्यन्त इति च तत्तत्फलं तत्रतत्र विनिमयेन स्यात् । तदयुक्तम् । दानवास्तु तमोलया इति, 'देवानां निरयो नास्ति तमश्चापि कथंचन' इत्यादिवचनविरोधात् । किञ्च कामक्रोधलोभानाम् आत्मनाशापरपर्यायनित्यनिरय-प्रापकत्वमुच्यमानमयुक्तम् । देवेष्वपि कामादिदर्शनेन तेषामपि आत्मनाशाख्यफलापत्तेः, इति चेत् ।

अत्रोच्यते । यत्तावदुक्तम् 'देवेष्वासुरलक्षणं दृश्यते' इति, सत्यं दृश्यत इति । किन्तु नासुरभावः तेषां देवत्वस्वभावनिवर्तकः । स्फटिकशौक्ल्यानिवर्तकलौहित्यवत् दुर्जनसङ्गादिना प्राप्तस्य तस्य औपाधिकत्वात् औपाधिकस्य च तस्य सच्छास्त्रोपदेष्टसज्जनसङ्गत्यादिशुभकारणेन दुष्टलक्षणस्य प्रहाणे देवत्वमेव युक्तम् । श्रूयते च शापादिना प्राप्तासुरभावादीनामपि प्रह्लादादीनां स्वतो देवानाम् औपाधिकसुखप्रहाणेन नैजो देवभावः । एवमेव असुरेष्वपि यत्किञ्चित् दयादि देवलक्षणं दृश्यते तस्यापि मनोगतस्य औपाधिकस्य सर्वथा प्रहाण एव नैजासुरत्वप्राप्त्या तमःप्रवेशः 'इतरस्याप्येवमसंश्लेषः पाते तु' इति भगवता सूत्रकारेणाभिहितः ।

यदपि 'किञ्च कामक्रोधलोभानाम्' इत्याद्युक्तम्, तत्र ब्रूमः । न यादृशतादृशकामादीनाम् आत्मनाशलक्षणतमःप्रापकत्वम् , किन्तु

'अयोग्येशत्वकामाच्च लोभाच्चात्मसमर्पणे ।
तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम् ।।'

इति शास्त्रावेदितदुष्टकामानामेव । तत्र 'ब्रह्मभावो ममास्तु' इति दुष्टेच्छा गीतोक्तकाम-शब्दार्थः ।

'अनाद्यनन्तकालेषु मुक्तौ संसार एव च ।
मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु ।
इति सप्रीतिकं ज्ञानं विद्यादात्मसमर्पणम् ।।'

इति शास्त्रावेदितात्मसमर्पणे अकरणेच्छालोभशब्देन विवक्षितः । 'स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ता भगवानस्ति' इति जानन्तः तत्त्ववेदिनः, तेषु कोपः क्रोधशब्दार्थतयाऽभिमत इति तेषामेवान्धतमसः प्रापकत्वम् । सज्जनेषु दृश्यमानकामक्रोधलोभानां तु औपाधिकानां नरकमात्रप्रापकत्वम् । तथाविधानां च तेषां निःशेषतया निवृत्तावेव भगवान् स्वात्मानं प्रदर्श्य तान् मोचयति, इत्ययमर्थः

'निःशेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हरेः........ ।।'

'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति', 'स बिम्बदर्शन एवैनं मोचयति'

इत्यादि शास्त्रसिद्ध इति । मा शुचः । 'सम्पदं दैवीम्, 'एतैर्विमुक्तस्ततो यान्ति परां गतिम्' इति च गीताचार्येणोपदिष्टमिति ।। २२ ।।

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।। २३ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु**– सर्वस्यैतस्यासुरसम्पत्परिवर्जनस्य श्रेष्ठाचरणस्य च शास्त्रं कारणम् । शास्त्रप्रमाणाद्धि उभयं शक्यं कर्तुम्, नान्यथेत्युच्यते– यः **शास्त्रविधिमित्यादिना** ।। यः पुमान् शास्त्रविधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यं शास्त्रविधानम् उत्सृज्य अपरिज्ञाय कामकारतः स्वेच्छामात्रेण वर्तते प्रवर्तते । स न सिद्धिं ज्ञानम् अवाप्नोति, न सुखम् ऐहिकमामुष्मिकं वा स्वर्गादिकम् अवाप्नोति । परां गतिं मोक्षं न अवाप्नोतीति किमु ।। २३ ।।

श्लोकः २४

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।। २४ ।।**

ओं तत्सदिति श्रीमगद्भवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पत्ति(सम्पद्विभाग)योगो नाम षोडशोऽध्यायः ।। १६ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु तस्मादिति ।।** यस्माच्छास्त्रविहितधर्मानुष्ठाने ज्ञानादिश्रेयःप्राप्तिः तदतिक्रमे नैहिकपारत्रिकसुखप्राप्तिः, तस्माद् 'इदं कार्यम्' 'इदमकार्यम्' इत्यस्यां व्यवस्थितौ व्यवस्थायां शास्त्रं श्रुतिस्मृतिइतिहासपुराणादिरूपं ते तव प्रमाणं प्रमितिजनकम् । अतः शास्त्रविधानोक्तं शास्त्रस्य विधानं 'कुर्यात्' 'न कुर्यात्' इत्येवं रूपं नियोजनं तेनोक्तं प्रमापितं ज्ञात्वा इह कर्माधिकारवर्गे स्थितः त्वं कर्म भगवत्प्राप्त्युद्देश्यकं स्वयं कर्तृत्वाध्यवसायहीनं कर्तुमर्हसि । तन्मूलत्वात् सत्त्वशुद्धितत्त्वज्ञानभक्तिमुक्तीनामिति ।। २४ ।।

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ।।

।। इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां षोडशोऽध्यायः ।।

## ।। अथ श्रीमद्भगवद्गीतायां सप्तदशोऽध्यायः ।।

अर्जुन उवाच–

**ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ।। १ ।।**

## भाष्यम्

**गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन । शास्त्रविधिमुत्सृज्य अज्ञात्वा एव। 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति विधिरुत्सृष्टो हि तैः ।**

भावप्रदीपिका (प.टी.)– एतदध्यायप्रतिपाद्यं दर्शयति– **गुणेति** ।। गुणभेदज्ञान-मन्तरेण साधनानुष्ठानासम्भवात् साधनमेवोक्तं भवति । ये शास्त्रविधिमुत्सृज्य इत्यत्र हेयताबुद्ध्या विसर्ग इत्यन्यथाप्रतीतिनिरासायाह– **शास्त्रेति** ।। प्राप्तस्यैव त्याज्यत्वात् कथमज्ञाने विसर्गशब्दः ? इत्यत आह– **वेद इति** ।।

प्रमेयदीपिका (ज.टी.)– अध्यायार्थमाह– **गुणेति** ।। गुणनिमित्ताः श्रद्धादीनां भेदाः । 'नान्यं गुणेभ्यः कर्तारम्' इत्युक्तत्वात् प्रपञ्चयति इत्युक्तम् । 'सात्त्विकानां पुमर्थसाधनत्वादनुष्ठेयत्वम्, अन्येषां तद्विरुद्धत्वात्, त्याज्यत्वं च ज्ञापयितुम्' इति शेषः । शास्त्रविधिमुत्सृज्य इत्यस्य 'वेदविधानमप्रामाण्यबुद्ध्या परित्यज्य' इत्यर्थप्रतीतिं निवारयितुमाह– **शास्त्रेति**।। अज्ञानमेवात्रोत्सर्गः, न त्वप्रामाण्यबुद्ध्या त्याग इत्यर्थः ।। ननु प्राप्तपरित्याग उत्सर्गः । एवञ्च प्रतीतार्थ एव युक्तः । नतु 'अज्ञात्वा' इति । तत्राह– **वेद इति** ।। अर्थज्ञानपर्यन्तोऽयं विधिः । अयं च सर्वान् द्विजन्मनः प्राप्तः तैः अज्ञानिभिः उत्सृष्टश्च । अतः अज्ञात्वा इति युक्तमित्यर्थः ।।

भावबोधः (र.टि.)– ।। **गुणनमित्ता इति** ।। अनेन गुणैर्भेदानिति विग्रहः श्रद्धादीना-मिति शेषः सूचितो भवति । **इत्युक्तत्वादिति** ।। परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यतीति व्याख्यातत्वादिति भावः ।

श्लोकः १

**भावदीपः (रा.टि.)**– गुणैर्भेदाः श्रद्धाहारयज्ञतपःप्रभृतीनामिति विग्रहमुपेत्याह– **गुणनिमित्ता इति** ।। इत्युक्तत्वादिति ।। 'परिणामः सर्वोऽपि गुणकृतः' इत्युक्तत्वाच्चतुर्दश इत्यर्थः ।। प्रपञ्चनं किमर्थम् इत्यत आह– **सात्त्विकानामिति**।। धर्माणामित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– ।। **अध्यायार्थमिति** ।। सप्तदशाध्यायावान्तराभिधेयमित्यर्थः । ननु सप्तदशेऽध्याये श्रद्धाहारयज्ञतपःप्रभृतीनामेव विभागस्य वक्ष्यमाणत्वावभासात् कथं 'गुणभेदात्' इति भाषणम् इत्यतो भाष्यं व्याचष्टे– **गुणनिमित्ता इति** ।। 'गुणैर्भेदः' इत्येव विग्रहः, तृतीया हेतौ, योग्यतया च श्रद्धादीनां सम्बन्ध इति, सत्त्वरजःतमोगुणभेदहेतुकः श्रद्धाऽऽहारादिभेद एतदध्यायप्रतिपाद्य इति भाष्यार्थ इति भावः । 'गुणभेदान्' इत्यत्र शाकपार्थिवादिवत् मध्यमपदलोपीसमास इति भावेनैवमुक्तम् इत्यपि आहुः । **इत्युक्तत्वादिति** ।। 'परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यन्ति' इति चतुर्दशाध्याये उक्तत्वात् श्रद्धादीनामपि गुणपरिणामत्वाद् अपौनरुक्त्याय 'प्रपञ्चयति' इति भाषितमित्यर्थः । प्रपञ्चनप्रयोजनमाह– **सात्त्विकानामिति** ।। श्रद्धाहारयज्ञादीनाम् । **अन्येषां** राजसतामसश्रद्धादीनाम् । **तद्विरुद्धत्वात्** पुमर्थविरुद्धत्वात् । चशब्दस्य 'त्याज्यत्वं च' इति सम्बन्धः ।।

भावदीपिकायां तु गुणभेदज्ञानमन्तरेण श्रद्धादिसाधनानुष्ठानासम्भवात् साधनमेवोक्तं भवतीत्यध्यायार्थप्रतिपादकभाष्यभाव उक्तः । 'शास्त्रविधिम् वेदविधानं श्रुतिस्मृतिचोदनां परित्यज्य' इति शङ्करभाष्यं सपरिकरं हृदि कृत्वोक्तम् – **इत्यर्थप्रतीतिमिति** ।। भाष्यस्थैवकारतात्पर्यमाह– **अज्ञानमेवेति** ।। **एवं च** सति चैवं प्रतीतार्थः त्यागरूपोऽर्थः । **नाज्ञात्वेतीति** ।। 'अर्थः' इति शेषः ।।

**भावदीपिका (श्री.टि.)**–

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे ।
कुर्मः सप्तदशाध्यायटीका भावप्रदीपिका ।।

'गुणैर्भेदा गुणभेदाः, तान्' इति विग्रहः । तत्र योग्यतावशात् 'श्रद्धादीनाम्' इत्यस्य लाभ इत्याशयेनाह– **गुणनिमित्ता इति** ।। **इत्युक्तत्वादिति** ।। 'परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति' इति व्याख्यातत्वेन श्रद्धादीनामपि गुणत्रयात्मकप्रकृतिपरिणामित्वस्योक्तत्वादित्यर्थः । गुणनिमित्तकश्रद्धादिभेदकथनस्य किं प्रयोजनम् इत्यत आह– **सात्त्विकानामिति** ।।

श्रद्धादीनामित्यर्थः । **प्रतीतार्थ एवेति** ।। शास्त्रविधिः प्रमाणतया सर्वान् प्रति प्राप्तः, तस्याप्रामाण्यबुद्ध्या परित्यागरूप उत्सर्गो युक्त इति भावः । **न त्वज्ञात्वेति** ।। अज्ञानस्य परित्यागरूपत्वाभावादिति भावः ।

**भावप्रकाशः (कृ.टि.)**– नन्वग्रे सत्त्वादिभेदनिमित्तकश्रद्धादिभेदस्य वक्ष्यमाणत्वात् कथं 'गुणभेदान्' इत्युक्तमित्यत आह– **गुणनिमित्ता इति** ।। अनेन गुणैर्भेदा इति विग्रहः योग्यतया श्रद्धादिसम्बन्ध इत्युक्तं भवति । **इत्युक्तत्वादिति** ।। परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यतीति व्याख्यातत्वेन कार्यमात्रस्य गुणकार्यत्वलाभे श्रद्धादीनामपि गुणकार्यत्वलाभादिति भावः । प्रपञ्चनं व्यर्थमित्यत आह– **सात्त्विकानामिति** ।। **अज्ञानमेवेति** ।। सात्त्विकादित्रिविधलोकसाधारण्यादिति भावः । **अर्थज्ञानपर्यन्त इति** ।। फलमन्तरेण विधिश्रुतेरपर्यवसानादवश्यं फले कल्पनीये दृष्टे सम्भवत्यदृष्टकल्पनस्यान्याय्यत्वेन विश्वजिन्न्यायात् स्वर्गकल्पनायोगोऽर्थज्ञानस्यैव फलत्वकल्पनात् । 'सरहस्य' इत्युक्तत्वाच्चेति भावः ।

## भाष्यम्

**'ये वै वेदं न पठन्ते न चार्थं वेदोज्झांस्तान् विद्धि सानूनबुद्धीन्' इति माधुच्छन्दसश्रुतिः । अन्यथा 'तामसाः' इत्येवोच्येत । नतु विभज्य । यदि सात्त्विकाः, तर्हि नोत्सृष्टशास्त्राः । नहि वेदविरुद्धो धर्मः । 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्' (मनु.२.६) इति हि स्मृतिः । 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः' इति च भागवते (भाग. ६.१.४०) ।। १ ।।**

भावप्रदीपिका (प.टी.)– अध्ययनविधिः सर्वानपि प्राप्त एवेत्यर्थः । वेदानध्ययनमपि तद्विसर्ग इत्यत्र श्रुतिं चाह– **य इति** ।। ननु हेयत्वबुद्ध्या वेदत्याग एवात्र विवक्षितः किं न स्यात् ? इत्यत आह– **अन्यथेति** ।। यदि हेयत्वबुद्ध्या वेदत्यागिनः प्रश्नेऽभिप्रेताः, तर्हि परिहारे तामसा इत्येव वक्तव्यम् । न तु सात्त्विकराजसतामसभेदात् ते त्रिविधा अपि सन्तीति विवक्षेत्यर्थः । सात्त्विकत्वादि यदि तेषामुच्यते, तर्हि को विरोध इत्यत आह– **यदीति** ।। यदि तेषां सात्त्विकत्वं, तर्हि हेयत्वबुद्ध्या न शास्त्रत्यागित्वमिति कुत इत्यत आह– **न हीति** ।। सात्त्विकानां हि धर्मनिष्ठा । तेषां चोत्सृष्टशास्त्रत्वे धर्मस्य शास्त्रविरुद्धत्वं स्यात् । न च तद्युक्तं स्मृतिविरोधादित्यर्थः ।।१।।

श्लोकः १

**प्रमेयदीपिका (ज.टी.)–** अत्र श्रुतिसम्मतिं चाह– **य इति ।।** न चार्थमधिगच्छन्ति । सहानूनया वेदतदर्थाधिगतियोग्यया बुद्ध्या वर्तमानान् । सानूनबुद्धयोऽपि 'ये वेदं न पठन्ते' इति योज्यम् । अप्रामाण्यबुद्ध्या परित्यज्य इत्येवार्थः किं न स्यात्? इत्यत आह– **अन्यथेति ।।**

यद्यत्र वेदविरोधिनां बौद्धादीनां निष्ठा पृच्छ्येत तदा ते तामसाः इत्येव उत्तरम् उच्येत । तदीयतामसत्वस्याविकल्पितत्वादिति भावः । न केवलं वक्तव्यानुक्तिरेव दोषः। किन्तु तद्विरुद्धोक्तिश्च स्यादिति भावेनाऽह– **न त्विति ।।**'त्रिविधा भवति श्रद्धा' इत्यादिना श्रद्धां विभज्य उत्तरं नोच्येतेत्यर्थः । एवमुत्तरवचनेऽपि किं स्यात्? इति चेत् वेदाप्रामाण्यवादिनामपि पाक्षिकं सात्विकत्वं स्यात् । तथाच वक्ष्यामः । तदपि स्यादिति चेन्न । सात्त्विकत्ववेदविरोधित्वयोः सहानवस्थानादित्याह– **यदीति ।।** सहानवस्थानमपि कुतो निश्चेयम्? इति चेत् । सात्त्विकाः हि धर्ममाचरन्ति । 'सत्त्वाद्धर्मो भवेत् पुंसाम्' इति वचनात् । तथा च वेदविरोधिनो धर्मिणश्चेत्युक्तं भवति। एवञ्च वेदविरोधी धर्म इत्याद्यापद्येत । तच्चानुपपन्नमित्याह– **न हीति ।।** कुतो नेत्यत आह– **वेद इति ।। १ ।।**

**भावबोधः (र.टि.)–** सानूनबुद्धित्वस्य विधेयवेदोज्झितत्वविशेषणत्वे वैय्यर्थ्यमनूद्य विशेषणत्वे मूकबधिराद्यशक्तव्यावर्तकत्वेन सार्थकत्वमित्यभिप्रेत्याह– **सानूनबुद्धयोऽपीति ।।१।।**

**भावदीपः (रा.टि.)–** शेषमाह– **अधिगच्छन्तीति ।। विकल्पितत्वादिति ।।** 'सत्वमाहो रजतस्तमः' इत्यनेनेति योज्यम् ।। **तथाच वक्ष्याम इति ।। एवञ्चेति ।।** 'वेदविरोधिनश्च धर्मिणश्च' इत्युक्ते सतीत्यर्थः ।। १ ।।

**भावरत्नकोशः (सु.टि.)– ।। अर्थज्ञानपर्यन्तोऽयं विधिरिति ।।** तथा च चिन्तितं पूर्वतन्त्रे 'अथातो धर्मजिज्ञासा' इति प्रथमाधिकरणे 'स्वाध्यायोऽध्येतव्यः' इति विधिः किं स्वर्गफलकः आहोस्वित् अर्थज्ञानफलकः इति संशयः । पूर्वपक्षस्तु अर्थज्ञानाय अध्ययनविधिः इति वदन् प्रष्टव्यः – किमयमपूर्वविधिरुत नियमविधिरिति । न तावदपूर्वविधिरिति पक्षः । गुरूच्चरणानूच्चारणरूपाध्ययनस्य अर्थज्ञानार्थतया अन्वयव्यतिरेकसिद्धत्वात्, 'विमतं वेदध्ययनम् अर्थज्ञानहेतुः अध्ययनत्वात् भारताध्ययनवत्' इत्यनुमानसिद्धत्वाच्च । यद्विध्यभावे विधेयत्वाभि-

मतस्य मानान्तरेण कालत्रयेऽपि न प्राप्तिः तस्यैवापूर्वविधित्वात् । यथा 'व्रीहीन् प्रोक्षति' इति । नापि नियमविधिः । प्रकृते तन्नियमनासम्भवात् । न च लिखितपाठेन गुरुपूर्वकाध्ययनेन वा नखैः अवघातेन वैतुष्यस्येव अर्थज्ञानस्य सम्भवात् पक्षे प्राप्तमध्ययनं विधिना नियम्यत इति वाच्यम् । वैषम्यात् । अवघातनिष्पन्नैरेव तण्डुलैः अवन्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, नान्यथा इति दर्शाद्यपूर्वम् अवघातनियमे हेतुः । अत्र लिखितपाठेन अध्ययनेन वा अर्थज्ञानसिद्धेः नाध्ययननियमे हेतुरस्तीति । अत एव 'यद्विध्यभावे पाक्षिकी प्राप्तिः अप्राप्तिश्च, विधिसत्वे प्राप्तिरेव, न कदापि अप्राप्तिः स एव नियमविधिः' । यथा 'समे दर्शपूर्णमासभ्यां यजेत' इत्यादिः । तथा च द्विविधस्यापि विधेरसम्भवात् नार्थज्ञानहेतुरयं विधिरिति । न चैवं श्रूयमाणस्य 'स्वाध्यायोऽध्येतव्यः' इति विधेरानर्थक्यं स्यादिति वाच्यम् । स्वर्गार्थमध्ययनमत्र विधीयत इति सार्थक्योपपत्तेः । अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः । 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति सूत्रे विश्वजिति अश्रूयमाणम्प्यधिकारिणं सम्पादयितुं तद्विशेषणं स्वर्गफलं त्यक्त्वा निर्णीतं तद् अध्ययनेऽप्यस्तु । तदाहुः

'विनाऽपि विधिनाऽदृष्टलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्याद् स्वर्गो विश्वजिदादिवत् ।।' इति ।

सिद्धान्तस्तु – यदुक्तम् 'अध्ययनविधिः नापूर्वविधिः' इति, तत्तथैव । नियमविधिस्तु स्यादेव । तथा दर्शपूर्णमासजन्यं परमापूर्वम् अवघातजन्यस्य अवान्तरापूर्वस्य कल्पकं भविष्यतीति वक्तुं शक्यत्वात् । नियमाद् अदृष्टाङ्गीकारे श्रूयमाणो विधिरनर्थक एव स्यात् । नच 'अध्ययनेनैव क्रतुः' इति वा, 'अध्ययनसम्पादितज्ञानेनैव क्रतुः' इति वा तत्र नियमार्थः । येनोक्तदोषः स्यात् । किन्तु 'अध्ययनसम्पादितमेव अर्थज्ञानं फलवत्क्रतुसाधनम्' इति नियमशरीराङ्गीकारे दोषाभावात् । न च क्रतुप्रकरणाभावे कथं क्रतुविशेषितम् अर्थज्ञानम् उद्दिश्य अध्ययननियमनम् , कथं वा विध्यानर्थक्यपरिहाराय अध्ययनसाध्यतावच्छेदकश्च विशेषः शक्तिरूपो नियमोऽदृष्टाभिधानः कल्प्येत ततश्चाध्ययनसम्पादितमेव अर्थज्ञानं फलवत्कर्मानुष्ठान-हेतुरिति पर्यवस्यति । अन्यथा अध्ययनविधितः फलवदर्थावबोधसाधनत्वेन स्वाध्यायाक्षर-योगनवगमे कुतोऽवघातादावपि नियमविधिवार्ता । विध्यानर्थक्येऽपि क्षतेरभावात् । न च विश्वजिन्न्यायेन स्वर्गार्थत्वम् अध्ययनविधेर्युक्तम् । दृष्टे फलेऽर्थज्ञाने सम्भवति अदृष्टस्य तत्फलकत्वकल्पनायोगात् । तदाहुः

श्लोकः १

'लभ्यमाने फले दृष्टे नादृष्टफलकल्पना ।
विधेश्च नियमार्थत्वात् नानर्थक्यं भविष्यति ।।'

इति 'अर्थज्ञानपर्यन्तोऽयं विधिः' इति साधूक्तम् । अत एव 'वेदः कृत्स्नः' इत्यत्र अधिगन्तव्यशब्दः अधिपूर्वस्य गमेः अवगत्यपरनामकज्ञानार्थत्वादिति ज्ञातव्यपरः । 'सरहस्यः' इति भाष्यपदस्य 'उपनिषद्भिः सहितः' इत्यर्थः । **द्विजन्मनः** ब्राह्मणक्षत्रियवैश्यानित्यर्थः । तैः इत्यनुवादः, अज्ञानिभिः इति व्याख्या । **इत्युक्तमिति** ।। अर्थज्ञानपर्यन्तप्राप्तविध्युत्सर्गो नाम विध्यज्ञानमेव पर्यवस्यतीति भावः । **अत्र** 'अज्ञानमेवोत्सर्गः' इत्यत्र । **सम्मतिं चेति** ।। साकाङ्क्षम् अध्याहारेण पूरयति – **अधिगच्छन्तीति** ।। 'अज्ञात्वा' इति भाष्यानुरोधेन 'जानन्ति' इति वाच्येऽपि 'अधिगच्छन्ति' इत्युक्तिः 'अधिगन्तव्यः' इति वचनानुसारादिति द्रष्टव्यम् ।

'सा' इति स्त्रीलिङ्गत्वपदत्वे, अन्वयाभावः । द्वितीयाश्रवणाद् 'वेदोज्झा' इत्येतद् विशेषणत्वे अनूनबुद्धिसहितशब्दोदितानाम् उत्तमबुद्धियुक्तानां वेदोज्झत्वमनुचितम् । इति शङ्कापनोदाय 'सानूनबुद्ध्योऽपि ये न वेदं पठन्ति, न वेदार्थमधिगच्छन्ति च,ताननूनबुद्धीनपि वेदोज्झान् विद्धि इत्येवमर्थतात्पर्यकं सानूनबुद्धीन् इति विशेषणम् इति मनसि निधाय बुद्धौ अनूनत्वं व्याकुर्वन् विग्रहं दर्शयति– **सहानूनयेति** ।। न पठन्ते 'न पठन्ति, नार्थमधिगच्छन्ति च, तान् तथाविधान् अनूनबुद्धीनपि वेदोज्झान् विद्धि' इति भाष्यं योज्यमित्यर्थः । बुद्धौ विद्यमानाऽपि वेदरूपवर्णराशितदर्थावगाहनयोग्यता न फलोपहिता इत्यतः तेषां बुद्धिरकिञ्चित्करी इति वेदोज्झा वेदादिशब्दितशास्त्रविध्यज्ञानिन एवेति तात्पर्यतः सिध्यतीति 'महाबुद्धीनां कथं वेदोज्झत्वम्'इति चोद्यानवकाशः ।

**उत्तरमिति** ।। शेषोक्तिः । **तदीयतामसत्वस्याविकल्पितत्वादिति** ।। वेदविरोधिबौद्धादिगतस्य तामसत्वस्य **अविकल्पितत्वात्** निश्चितत्वादित्यर्थः । विरुद्धोक्तिश्च 'दोषः' इत्यनुवर्तते । 'उत्तरम्' इति शेषोक्तिः । 'उच्येत' इत्यनुवृत्तिः । विरुद्धोक्तित्वं विशदयितुं शङ्कते– **एवमुत्तरेति** ।। तत्कथमित्यत आह– **तथा चेति** ।। अतो विभज्य इति भाष्यव्याख्यावसरे 'वेदविधिमजानतां विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपमुच्यते' इति 'त्रिविधा' इत्यादेः तात्पर्यं वक्ष्यामः । एवं च 'ये शास्त्रविधिमुत्सृज्य'

इत्यनेन वेदाप्रामाण्यादिवादिनामपि ग्रहणे तेषां पाक्षिकं सात्त्विकत्वं स्यादिति दोषः स्यादेवेति भावः ।

केचित्तु यथा तेषां पाक्षिकं सात्त्विकत्वं स्यात् तथा 'यो यच्छ्रद्धः स एव सः' इत्यत्र वक्ष्यामः । तत्र वेदोक्तम् अप्रामाण्यबुद्ध्या परित्यज्य श्रद्धयाऽन्विता ये यजन्ते तेषां का निष्ठा इति प्रश्ने, यष्टृविशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण सात्त्विकत्वादि-स्वरूपकथनेन पाक्षिकं वेदाप्रामाण्यवादिनामपि सात्त्विकत्वं स्पष्टमायातीति व्याचक्षते । पाक्षिकं सात्त्विकत्वं स्यादित्यत्र इष्टापत्तिं शङ्कते– **तदपीति** ।। **वेदविरोधित्वम्** वेदाप्रामाण्य-वादित्वम् । **सत्त्वात्** सत्त्वगुणात् । **धर्मिणः** धर्मानुष्ठातारः । **धर्ममूलम्** धर्मप्रमितेः कारणम् । **तद्विदां** वेदार्थज्ञानिनां मन्वादीनां च स्मृतिः ग्रन्थः, शीलं मनोगतिश्च धर्ममूलम् । 'धर्म-स्वरूपचित्रत्वाद् यो यो देवमनोगतः । स एव धर्मो विज्ञेयः....' इति वचनात् । **वेद-प्रणिहितः** वेदेन कर्तव्यत्वेन उक्त एव धर्मः । **तद्विपर्ययः** वेदेनाकर्तव्यतया उक्त इति यावत्, स ह्यधर्म इति भाष्यार्थः ।।

**गीताक्षरार्थस्तु–** चतुर्दशाध्याये 'नान्यं गुणेभ्यः कर्तारम्' इति सर्वस्यापि कार्यवर्गस्य गुणपरिणामत्वमुक्तम् । श्रद्धादयश्च कार्यवर्गे प्रविष्टा इति तेऽपि गुणपरिणामा एव । ततश्च सत्त्वादिगुणपरिणामरूपाणां श्रद्धा आहारयज्ञतपःप्रभृतीनां भेदः प्रपञ्च्यते । 'सात्त्विकानामेतेषां पुमर्थसाधनत्वाद् अनुष्ठेयत्वम्, अन्येषां तद्विरुद्धत्वात् त्याज्यत्वम् इति ज्ञापयितुमिति गुणनिमित्तश्रद्धादिभेदप्रपञ्चनं सप्तदशाध्यायावान्तरप्रतिपाद्योऽर्थः । चतुर्दशाध्यायादिपञ्चाध्यायानां कर्मध्यानलक्षणज्ञानसाधनेतिकर्तव्यतांशप्रतिपादकत्वस्य 'साधनं प्राधान्येनोक्तैरध्यायैर्वक्ति' इति प्रधानप्रतिपाद्यार्थस्य प्राग्भाषितत्वात्, समनन्तरातीताध्यायान्ते

'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।।'

इति शास्त्रविधानोक्तं ज्ञात्वैव कर्म कर्तव्यमित्युक्त्या लब्धावसरोऽर्जुनः पप्रच्छेत्युच्यते– **अर्जुन उवाच– ये शास्त्रविधिमिति** ।। ये जनाः शास्त्रविधिं श्रुतिस्मृतिचोदनाम् उत्सृज्य अज्ञात्वैव श्रद्धयाऽन्विताः केवलं लोकाचारप्रामाण्येन रिक्ता आस्तिक्यबुद्ध्या संयुक्ताः सन्तो यजन्ते देवादीन् पूजयन्ति तेषाम् एवंभूतानां तु निष्ठा स्थितिः का कीदृशी सैव विविदिषया

श्लोकः १

विविच्यते– **सत्त्वमाहो रजस्तम इति** ।। 'आश्रिता' इति शेषः । किं सा निष्ठा सात्त्विकी आहोस्विद् राजसी उत तामसी इति यावत् ।। १· ।।

**भावदीपिका (श्री.टि.)**– नन्वज्ञानिनामपि अक्षरग्रहणमात्ररूपवेदाध्ययनदर्शनात् कथं तैर्विधिरुत्सृष्ट इत्यत उक्तम् – **अर्थज्ञानपर्यन्तोऽयं विधिरिति** ।। नाक्षरग्रहणमात्रपर्यवसायीत्यर्थः । तथात्वे विचारशास्त्रस्यावैधत्वप्राप्त्याऽनारम्भणीयत्वं स्यादिति भावः । तथा हि । प्रमाणलक्षणे प्रथमपादे प्रथमाधिकरणे चिन्तितम् । धर्मविचारशास्त्रमत्र विषयः । तत्किं विधिप्रयुक्तानारम्भणीयम् उतारम्भणीयमिति संशयः । तदर्थमिदं चिन्तनीयम् – 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिः किमक्षरग्रहणमात्रपर्यवसायी सन् धर्मद्वारा स्वर्गमात्रफलकः उत अक्षणग्रहणपरोऽपि ज्ञायमानवाक्यार्थज्ञानरूपदृष्टफलार्थ एवेति । यद्यक्षरग्रहणमात्रपर्यवसायी स्वाध्यायाध्ययनविधिः स्वर्गमात्रप्रयोजनकः, तदा नाध्ययनविधिर्विचारशास्त्रारम्भप्रयोजकः । यदि तु वाक्यार्थज्ञानरूपदृष्टफलार्थः तदाऽर्थज्ञानं न विचारमन्तरेण सम्भवतीत्युक्तविधिर्विचारशास्त्रारम्भप्रयोजक इति पूर्वपक्षे सिद्धान्ते च फलफलिभावः ।

पूर्वपक्षस्तु– अर्थज्ञानाय अध्ययनविधिरिति वदन् प्रष्टव्यः – 'किमत्यन्तम् अप्राप्तमध्ययनम् अत्रार्थज्ञानाय विधीयते किंवा पक्षे प्राप्तम् अवघातवन्नियम्यते' इति । नाद्यः । 'विमतं वेदाध्ययनम् अर्थज्ञानपूर्वकम् अध्ययनत्वात् भारताध्ययनवत्' इत्यनुमानेनैव विधिनिरपेक्षेणाध्ययनेऽर्थज्ञानहेतुत्वस्य प्राप्तत्वात् । न द्वितीयः । वैषम्यात् । अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारेण दर्शपूर्णमासौ परमापूर्वं जनयतः, न नखदलनादिनिष्पन्नैः । ततः परमापूर्वमवघातस्य नियमहेतुः । अत्र तु गुरुपूर्वकाध्ययनं विना लिखितपाठजन्येनाप्यर्थज्ञानेन क्रत्वनुष्ठानसिद्धेरध्ययनस्य नियमहेतुर्नास्तीति । अतो द्विविधविध्यसम्भवाद् अर्थज्ञानहेतुविचारशास्त्रारम्भस्य न वैधत्वमुपपद्यते । तर्हि श्रूयमाणस्य विधेः का गतिरिति चेत् । स्वर्गापेक्षयाऽक्षरग्रहणमात्रं विधेयमिति वदामः । अश्रुतोऽपि स्वर्गो विश्वजिन्न्यायेन कल्पनीयः । एतदेवाभिप्रेत्योक्तम्–

'विनाऽपि विधिनाऽदृष्टलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत् ।।' इति ।

किञ्चैवं सति 'वेदमधीत्य स्नायात्' इति शास्त्रमप्यनुगृह्यते । अत्र वेदाध्ययनसमावर्तनयो-

नैरन्तर्यं प्रतीयते । त्वत्पक्षे तु अधीतेऽपि वेदे धर्मविचाराय गुरुकुल एवाधिवासः कर्तव्यः, तेन चैतन्नैरन्तर्यं बाध्यते । तस्माद्विचारशास्त्रस्य वैधत्वाभावात् पाठमात्रेण स्वर्गसिद्धेः समावर्तन-शास्त्राच्च धर्मविचारशास्त्रं नारम्भणीयमिति ।

सिद्धान्तस्तु– यदुक्तं प्रमाणान्तरसिद्धत्वान्नाप्राप्तविधिरिति, तत्तथैव । नियमविधित्वं तु न निवारयितुं शक्यम् । यथा दर्शपूर्णमासजन्यपरमापूर्वम् अवघातनियमजन्यस्यावान्तरापूर्वस्य कल्पकम्, एवमशेषक्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्यापूर्वस्य कल्पकं भविष्यति । नियमाददृष्टानङ्गीकारे श्रूयमाणो विधिरनर्थकः स्यात् । नच विश्वजिन्न्यायेन स्वर्गार्थत्वं युक्तम् । दृष्टफलेऽर्थज्ञाने सम्भवति अदृष्टकल्पनाया अयुक्तत्वात् । अत एवोक्तम् –

लभ्यमाने फले दृष्टमदृष्टपरिकल्पना ।
विधेस्तु नियमार्थत्वान्नार्थक्यं भविष्यति ।। इति ।

नन्वेवमपि श्रुतव्याकरणाद्यङ्गस्याधीतवेदस्य पुरुषस्यार्थज्ञानसम्भवान्न विचारशास्त्रस्य कृत्यमिति चेन्न । ज्ञानमात्रस्य सम्भवेऽपि निर्णयस्य विचाराधीनत्वात् । न ह्यक्ताः शर्करा उपदधतीत्यत्र 'घृतेनैवाञ्जनं न तैलादिना' इत्ययं निर्णयो व्याकरणेन निगमनिरुक्तादिना वा सिद्ध्यति । विचारशास्त्रं तु 'तेजो वै घृतम्' इति वाक्यशेषादर्थं निर्णेष्यति । अतो विचारो वैधः । 'वेदमधीत्य स्नायात्' इति विचारशास्त्रं त्वध्ययनसमावर्तनयोः पूर्वापरीभावसमानकर्तृकत्वे एवाचष्टे न तु नैरन्तर्यम् । तस्माद्विधिवशादेव विचारशास्त्रमारम्भणीयमित्येवम् अर्थज्ञान-पर्यन्तोऽयं वेदविधिरिति द्रष्टव्यम् । **द्विजन्मन इति** ।। 'देहोत्पत्त्या, उपनयनेन च' इति द्विवारं जन्मवतो ब्रह्मक्षत्रियवैश्यानित्यर्थः । 'अनूनया' इत्यस्यार्थः – **वेदतदर्थाधिगति-योग्ययेति** ।। 'सह' इत्यस्य सादेशो द्रष्टव्यः । 'तान् सानूनबुद्धीन्' इत्यनुवादबलाद् विधिर्लभ्यत इत्याह– **सानूनबुद्धयोऽपीति** ।। 'न पठन्ते तान्' इत्यन्वयो द्रष्टव्यः ।

ननु बौद्धादेस्तामसत्वाभावात् 'ते तामसाः' इत्युत्तरे कथिते भगवतोऽयथार्थवादित्वं स्यात् इत्यत आह– **तदीयेति** ।। बौद्धादिसम्बन्धीत्यर्थः । बौद्धादीनां तामसत्वस्येति यावत् । **अविकल्पितत्वात्** निश्चितत्वात् । **वक्तव्येति** ।। 'तामसाः' इति वक्तव्यस्यानुक्तिरित्यर्थः । **तद्विरुद्धेति** ।। तद्विरुद्धोक्तिरूपो दोषश्च स्यादित्यर्थः । **उत्तरं नोच्येतेति** ।। तथा चैवमुत्तर-वचनं बौद्धादितामसत्वविरुद्धोक्तिरूपमेवेत्यर्थः । **किं स्यादिति** ।। विरुद्धोक्तित्वं कथं

स्यादित्यर्थः । कथमिति चेत् आह– **तथा चेति** ।। यथा तेषां पाक्षिकं सात्त्विकत्वमायाति तथा 'यो यच्छ्रद्धः' इत्यत्र वक्ष्याम इत्यर्थः ।। वेदोक्तम् अप्रामाण्यबुद्ध्या परित्यज्य श्रद्धयाऽन्विता ये यजन्ते तेषां का निष्ठा इति प्रश्ने विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण वेदाप्रामाण्यवादिनां सात्त्विकत्वादिस्वरूपकथने पाक्षिकं सात्त्विकत्वं स्पष्टमिति ज्ञातव्यम् । **तदपीति** ।। पाक्षिकं सात्त्विकत्वमपीत्यर्थः । **वेदविरोधित्वं** वेदाप्रामाण्यवादित्वम् । **धर्मिणश्चेति** ।। सात्त्विकाश्चेत्यर्थः । **वेद इतीति** ।। अखिलोऽपि वेदो धर्ममूलं धर्मज्ञप्तेः कारणम् । तद्विदां वेदविदां मन्वादीनां स्मृतिशीले स्मृतिः तत्कृतो ग्रन्थः, शीलं मनोगतिश्च धर्ममूलमिति सम्बन्धः ।

धर्मस्वरूपचितत्वाद् योयो देवमनोगतः ।
स एव धर्मो विज्ञेयः........................।। इति वचनादिति ध्येयम् ।। १ ।।

**भावप्रकाशः (कृ.टि.)–** क्रियाकाङ्क्षायां न चार्थमित्यतः परं अध्याहार्यमाह– **न चार्थमधिगच्छन्तीति** ।। सह वर्तमानानित्यन्वयः । ननु 'सानूनबुद्धीन्' इत्यस्य वेदोज्झानिति विधेयविशेषणत्वे वैयर्थ्यमित्यत आह– **सानूनबुद्धयोऽपीति** ।। तथा च मूकबधिरादिव्यावर्तकत्वेन सार्थक्यमिति भावः । **अविकल्पितत्वादिति** ।। पाक्षिकत्वाभावात् । नियतत्वादिति यावत् । ननूत्तरत्र श्रद्धाविभागस्योक्तत्वात् कथं वेदाप्रामाण्यवादिनां पाक्षिकसत्वप्रसङ्ग इत्यत आह– **तथा च वक्ष्याम इति** ।। 'अतो विभज्याह' इत्येतद्व्याख्यावसर इति शेषः । तत्र हि वेदविधिमजानतां विशेषणत्वेनोक्तां श्रद्धां सात्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपमुच्यत इति 'त्रिविधा' इत्यादेस्तात्पर्यं कथ्यते । एवं च 'ये शास्त्रविधिमुत्सृज्य' इत्यनेन वेदाप्रामाण्यवादिनां ग्रहणे तेषां पाक्षिकं सात्विकत्वं स्यादिति युक्तमिति भावः । यद्यपि स्पष्टमेतत् । तत्र नाभिहितम् । तथाऽप्यभिप्रेतत्वाद् वक्ष्याम इत्युक्तम् ।। १ ।।

**श्रीभगवानुवाच–**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विका राजसी चैव तामसी चेति तां शृणु ।। २ ।।**

# भाष्यम्

**अतो विभज्याऽऽह– त्रिविधा इत्यादिना ।। २ ।।**

**भावप्रदीपिका (प.टी.)– यत एवमुत्सृष्टशास्त्रत्वं नामापाठाद्येव । अतस्तेषां सात्वकत्वादिभेदेन त्रैविध्यं वक्ति परिहार इत्याह– अत इति ।। २ ।।**

**प्रमेयदीपिका (ज.टी.)– ननु 'तेषां निष्ठा का ' (१७.१) इति पृष्टे सात्विकत्वादिकं वक्तव्यम् । त्रिविधा इत्यादिकं किमुच्यते? इत्यत आह– अत इति ।। यत एवं अर्जुनेन वेदविधिमजानतां निष्ठा पृष्टा, अज्ञानं च न भेदकं त्रयाणामपि सम्भवात् । न चाज्ञानस्य (प्र)भेदाः सन्ति । अतः श्रद्धयाऽऽन्विताः इति तद्विशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपम् आह इत्यर्थः ।।२।।**

**भावदीपः (रा.टि.)– ।। त्रयाणामिति ।।** सात्विकराजसतामसानामित्यर्थः ।। **तद्विशेषणत्वेनेति ।।** वेदविध्यज्ञविशेषणत्वेनेत्यर्थः । **तेषां** सात्विकादीनां वेदार्थाज्ञानामिति चार्थः ।। **कथं न व्याहतमिति ।।** सात्विकादिस्वरूपानुरूपेति न वक्तव्यमिति भावः ।।२।।

**भावरत्नकोशः (सु.टि.)– ।। किमर्थमुच्यते** असङ्गतत्वादिति भावः । **निष्ठा** स्थितिः । ननु वेदविध्यज्ञानिविशेषणम् । अज्ञानं विभज्य निष्ठोच्यताम् इत्यत आह– **अज्ञानं चेति ।। त्रयाणां** सात्त्विकराजसतामसानां **सम्भवात्** अज्ञानस्य । नन्वज्ञानावान्तरभेदात् तदाश्रयाणां विभाग उच्यताम् इत्यत आह– **न चेति ।। तद्विशेषणत्वेन** वेदविध्यज्ञानिविशेषणत्वेन । भावप्रदीपिकायाम् 'ननु हेयबुद्ध्या वेदत्याग एवात्र विवक्षितः किं न स्यात् इत्यत आह– **अन्यथेति** ।। यदि हेयबुद्ध्या वेदत्यागिनः प्रश्नेऽभिप्रेताः स्युः, तर्हि परिहारे 'तामसाः' इत्येव वक्तव्यम्, न तु 'सात्त्विकराजसतामसभेदात् त्रिविधा अपि सन्ति' इति विभज्येत्यर्थः । सात्त्विकत्वादिकं यदि तेषामप्युच्यत तर्हि को विरोधः इत्यत आह– **यदीति** ।। यदि तेषां सात्त्विकत्वं तर्हि न हेयबुद्ध्या शास्त्रत्यागित्वम्, कुतः इत्यत आह– **न हीति** ।। सात्त्विका हि धर्मनिष्ठाः, तेषां चोत्सृष्टशास्त्रत्वे धर्मस्य शास्त्रविरुद्धत्वं स्यात् । न च तद्युक्तम्, स्मृतिविरोधादित्यर्थः । यत एवम् उत्सृष्टशास्त्रत्वं नाम वेदाद्यपाठाद्येव, अतस्तेषां सात्त्विकत्वादिना त्रैविध्यं वक्ति भगवान् परिहारे, इत्याह– **अत इति** ।।'' इति व्याख्यातम् ।।

**गीताक्षरार्थस्तु** एवमर्जुनेन वेदविधिमजानतां निष्ठाभेदः पृष्टः । अज्ञानं च न भेदकम् । सात्त्विकराजसतामसानां त्रयाणामपि तत्सम्भवात् । न चाज्ञानवैचित्र्यात् तद्वैचित्र्यं शङ्क्यम् । अज्ञानस्य ज्ञानप्रागभावरूपस्य वैचित्र्यायोगात् । अतः 'श्रद्धयाऽन्विताः' इति यजनाङ्गतया अज्ञानिविशेषणत्वेनोक्तां श्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां स्वरूपं ज्ञातव्यमिति भावेन भगवतोत्तरमुच्यते– **श्रीभगवानुवाच त्रिविधा भवति श्रद्धेति** ।। या त्वया यजनाङ्गतया शास्त्रविध्यज्ञानिपुरुषविशेष्णत्वेनोक्ता श्रद्धा सात्त्विकी राजसी तामसी सत्त्वरजस्तमोगुणनिमित्तेति त्रिविधा त्रिप्रकारा । चशब्दौ इतरेतरसमुच्चये । एवशब्दस्तु 'स्वभावज एव' इत्यन्वेति । सा चैवंविधा त्रिविधा श्रद्धा स्वभावजैव जीवस्वरूपभूतैव इत्युक्तिः मनोवृत्तिभूत-श्रद्धाव्यावर्तनाय । ताम् एतां त्रिविधां श्रद्धां शृणु श्रुत्वा तत्र निष्ठां कुरु ।। २ ।।

**भावदीपिका (श्री.टि.)**– ननु श्रद्धां विभज्य तेषां स्वरूपं कस्माद्वक्तव्यम् । अज्ञान-स्यैव भेदकत्वमङ्गीकृत्य तदाश्रयेण तेषां स्वरूपं कस्मान्नोच्यत इत्यत आह– **अज्ञानं चेति** ।। कुतः इत्यत आह– **त्रयाणामपीति** ।। सात्त्विकानां राजसानां तामसानां त्रयाणामप्यज्ञान-सम्भवादित्यर्थः । न चाज्ञानप्रभेदानां भेदकत्वमङ्गीकृत्य तदाश्रयेणैव तेषां स्वरूपमुच्यताम्? इत्यत आह– **न चाज्ञानस्येति** ।। **तद्विशेषणत्वेन** अज्ञानिविशेषणत्वेन । **तदाश्रयेणेति** ।। सात्त्विकत्वादिभेदभिन्नश्रद्धाश्रयेणेत्यर्थः ।। २ ।।

**भावप्रकाशः (कृ.टि.)**– ननु तर्हि तद्विशेषणीभूताज्ञानं विभज्य निष्ठोच्यतामित्यत आह– **अज्ञानं चेति** ।। ननु अज्ञानावान्तरभेदात् तदाश्रयाणां विभागोऽस्त्वित्यत आह– **न चाज्ञानस्येति** ।। २ ।।

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।। ३ ।।**

## भाष्यम्

**सत्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः सात्त्विकश्रद्धः सात्त्विक इत्यादि ।। ३ ।।**

भावप्रदीपिका (प.टी.)– **नोत्सृष्टशास्त्रत्वेन पुरुषभेदो ज्ञायते किन्तु तच्छ्रुत्यैव, श्रद्धायास्त्रिरूपत्वात् श्रद्धायाः स्वरूपान्तःकरणानुरूपत्वात्** । **अतः सात्त्विकादिश्रद्धवतां सात्विकादीत्याशयेनाह– सत्त्वेति** ।। ३ ।।

**प्रमेयदीपिका** (ज.टी.)– **सात्त्विकत्वादिभेदेन श्रद्धा त्रिविधा इत्युक्ता** । पुनः **'सत्त्वानुरूपा सर्वस्य श्रद्धा भवति'** इति **वचनं कथं न व्याहतम्**? इत्यत आह– **सत्त्वेति** ।। चित्तं चैतन्यम् । जीव इति यावत् । ननु **श्रद्धास्वरूपमेव निरूपितम्** । न तु तदाश्रित्य **जीवस्वरूपम्** । **अतो न सङ्गतमुत्तरमित्यतो येन तदुच्यते तत्पठित्वा व्याचष्टे– य इति** ।। इत्यादि **'ज्ञातव्यम्'** इति शेषः । **राजसश्रद्धः** राजसः । **तामसश्रद्धस्तामस इत्यर्थः** ।। ३ ।।

भावबोधः (र.टि.)– जीवानुरूपेति तात्पर्यं मनसि निधायाह– **जीव इति यावदिति** ।। ३ ।।

भावदीपः (रा.टि.)– ।। **विभज्य** इत्यनूद्य कर्मकारकमाह– **विभज्य श्रद्धास्वरूपमिति** ।। ३ ।।

**भावरत्नकोशः** (सु.टि.)– ।। **कथं न व्याहतमिति** ।। सात्त्विकी राजसी तामसी चेति त्रिविधा सर्वस्य श्रद्धा भवति इति वचनस्य, सत्त्वानुरूपा सत्त्वं सत्त्वगुणः, तदनुरूपा सात्त्विकीति यावत्, सर्वस्य पुंसः सात्त्विक्येव श्रद्धा इति श्रद्धाया एकविधत्ववचनेन विप्रतिषेधात् त्रिविधत्वोक्तिएकत्वोक्त्योर्व्याघातो दुष्परिहर एवेत्यर्थः । ननु 'यो यच्छ्रद्धः स एव' इति श्रद्धयैव सात्त्विकादिजीवस्वरूपज्ञानम् इत्यस्योपपदानायोक्तम्– **सत्त्वानुरूपेति** ।। तत्र सत्त्वशब्दार्थो भाषितः– **चित्तेति** ।। अनेनापि कथं 'यो यच्छ्रद्धः स एव' इत्यस्योपपादनम् इत्यतश्चित्तशब्दार्थमाह– **चित्तं चैतन्यमिति** ।। एवमपि 'चेतनश्चेतनानाम्' इत्यादिशास्त्रसिद्धमुख्यचैतन्यस्य ईश्वरस्य ग्रहणे उपपादनालाभ एव इत्यतः 'सत्त्वं जीवः क्वचित् प्रोक्तः' इत्यभिधानमूलम् सत्त्वानुरूपा जीवानुरूपा' इति तात्पर्यं हृदि कृत्वाऽऽह– **जीव इति यावदिति** ।। तथा च सत्त्वशब्दस्य जीवार्थत्वान्न व्याहतिशङ्का, नाप्युक्तोपपादनालाभ इति चोद्यमिति भावः । **तदाश्रित्य** श्रद्धास्वरूपविभेदमाश्रित्य जीवस्वरूपं निरूपितम् । 'तदाश्रितं जीवस्वरूपम्' इति पाठे 'श्रद्धाऽऽश्रितं जीवस्वरूपम्' इत्यर्थः । **उत्तरम्** 'त्रिविधा भवति

श्लोकः ४

श्रद्धा' इत्यादिना उच्यमानम् । **येन** वाक्येन **तत्** सात्त्विकादिश्रद्धाश्रितजीवस्वरूपम् । आदिपदार्थोक्तिः– **राजसश्रद्ध इत्यादि** । 'रासजी श्रद्धा यस्यासौ' इत्युभयत्रापि राजसतामस-शब्दयोः पुंवद्भावः, श्रद्धाशब्दे 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वश्च द्रष्टव्यः ॥

**गीताक्षरार्थस्तु** ननु श्रद्धास्वरूपमेव निरूपितम्, न तु तदाश्रितजीवस्वरूपम् । अतो न सङ्गतम् इत्यत उच्यते– **सत्त्वानुरूपेति** ॥ तत्र यो यजमानो यच्छ्रद्धः यादृशश्रद्धायुक्तः स एव सः तादृशः सात्त्विकश्रद्धः सात्त्विकः, राजसश्रद्धो राजसः, तामसश्रद्धः तामस इति श्रद्धयैव जीवस्वरूपं ज्ञातव्यम् इत्यस्योपपादनायोक्तम्– **सत्त्वानुरूपेति** ॥ 'सत्त्वं जीवः क्वचित् प्रोक्तः' इति वचनात् सत्त्वशब्दोऽत्र जीववाची । सर्वस्य देहिजातस्य श्रद्धा तत्तज्जीवस्वरूपानुसारिणी भवति । श्रद्धाया जीवस्वरूपानुसारित्वात् तया तत्स्वरूपं ज्ञायत इत्यर्थः । श्रद्धाया जीवानुरूपत्वं कुतः इत्यत उक्तम् – **श्रद्धामय इति** ॥ मयट्प्रत्ययस्तादात्म्यार्थ इति श्रद्धारूपः अयं पुरुषो जीवः । जीवस्य श्रद्धानुरूपत्वात् श्रद्धाया जीवानुरूपत्वं युक्तमिति भावः ॥ ३ ॥

**भावदीपिका (श्री.टि.)– ॥ कथं न व्याहतमिति ॥** सर्वस्यापि सत्त्वगुणानु-रूपश्रद्धोक्तौ सात्त्विकश्रद्धैव सर्वेषां प्राप्ता । तथा च श्रद्धात्रैविध्योक्तिर्व्याहतेत्यर्थः । 'जीवानु-रूपा' इति तात्पर्यं मनसि निधायाह– **जीव इतीति** ॥ **येन** वाक्येन । **तत्** सात्त्विकत्वादि-भेदभिन्नश्रद्धाश्रयेण जीवस्वरूपम् । आदिशब्दार्थमाह– **राजसेति** ॥ ३ ॥

**भावप्रकाशः (कृ.टि.)–** ननु 'यो यच्छ्रद्धः स एव सः' इत्यस्योपपादनाय 'सत्वानु-रूपा' इत्युक्तम् । न च चित्तानुरूपत्वोक्तौ तदुपपादनं भवतीयत आह– **चैतन्यमिति** ॥ ननु 'क्वचित्सत्वं जनार्दनः' इत्युक्तेः सत्त्वशब्दार्थत्वेनेश्वरचैतन्यग्रहणे उपपादनालाभ एवेत्यत आह– **जीव इति यावदिति** ॥ 'सत्त्वं जीवः क्वचित्प्रोक्तः' इति शब्दनिर्णयादिति भावः ॥ ३ ॥

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

## भाष्यम्

**कः सात्विकश्रद्धः? इत्यादि विभज्याऽह– यजन्त इत्यादिना ॥ ४ ॥**

**भावप्रदीपिका (प.टी.)– त्रिविधा भवति श्रद्धा, तयैव जीवो ज्ञायते । तां च शृणु इत्युक्तं कीदृशं सात्विकादिश्रद्धावत्त्वम् ? इत्याशङ्क्य, उत्तरश्लोकानवतारयति– क इति । इत्यादि प्रश्ने सतीत्यर्थः । सात्त्विकाः इत्यादिना सात्त्वकश्रद्धा इत्यादि ज्ञेयम् ।। ४ ।।**

**प्रमेयदीपिका (ज.टी.)– 'तां शृणु' इति प्रतिज्ञातं नोच्यते, 'यजन्ते सात्विकाः' इत्यप्रस्तुतं चोच्यत इत्यत आह– क इति ।। इत्यादि 'जिज्ञासायाम्' इति शेषः । विभज्य श्रद्धास्वरूपं प्रतिज्ञातं श्रद्धात्रैविध्यमेवोच्यते । अतो नासङ्गतिरिति भावः । एतेन 'सात्त्विकाः' इत्यादेः 'सात्त्विकश्रद्धाः' इत्यादिरर्थ उक्तो भवति ।। ४ ।।**

**भावरत्नकोशः (सु.टि.)–** न केवलं वक्तव्यानुक्तिः, असङ्गतोक्तिश्चेत्याह– **यजन्त इति ।।** भाष्यपदमनूद्य विभागकर्म दर्शयति– **विभज्य श्रद्धास्वरूपमिति** ।। प्रतिज्ञातानुक्तिः, अप्रतिज्ञातोक्तिश्चेति दोषद्वयं भाष्यभावोक्त्योद्धरति– **प्रतिज्ञातमिति** ।। ४ ।।

**गीताक्षरार्थस्तु** कः सात्त्विकश्रद्धः कश्च राजसश्रद्धः इत्यादिजिज्ञासायां 'तां शृणु' (१७.२) इति प्रतिज्ञातं च श्रद्धात्रैविध्यमेव 'यो यच्छ्रद्धः' इत्यस्य विवरणेनोच्यते– **यजन्त इति** ।। ये जनाः देवान् इन्द्रादीन् तदन्तर्गतान् तत्तन्नामकान् भगवद्रूपविशेषांश्च यजन्ते पूजयन्ति ते सात्त्विकाः सात्त्विकश्रद्धाः । ये तु जनाः यक्षरक्षांसि यजन्ते ते राजसाः राजसश्रद्धाः, ये च सात्त्विकराजसेभ्यः अन्ये तु प्रेतान् भूतगणाश्च यजन्ते ते तामसाः तामसश्रद्धाः ।

अत्र श्लोके 'यजन्ते सात्त्विका देवान्' इति 'देवान् यजन्तः सात्त्विकश्रद्धाः' इति वदन् गीताचार्यः शास्त्रविधिमजानन्तोऽपि श्रद्धापारवश्याद् देवान् यजन्तः सात्त्विकश्रद्धाः किमुत शास्त्रविधिं परिजानन्तः सन्तो देवान् यजन्त इत्यभिसन्धत्त । यद्यपि राजसतामसाश्च 'ऐन्द्रं चरुं रौद्रं गावीधुकं चरुम्' इत्यादिशास्त्रोक्ता इन्द्रादिदेवता एव यजन्ते, नतु यक्षादीन् । तथापि राजसैः क्रियमाणे यज्ञे ब्रह्मेन्द्रादिसमाननामका यक्षराक्षसा एव हविर्भुञ्जते । तामसैः क्रियमाणे तु यज्ञे साक्षात् शिवपरिवाराः शिवस्कन्दादिनामानो भूताः प्रेतगणाश्च हविर्भुञ्जत इति भोक्तृभेदविवक्षया 'यक्षरक्षांसि' इति, 'भूतान् प्रेतगणांश्च' इति चोक्तिरुपपद्यत इति ज्ञातव्य-विशेष उत्तरप्रस्थानतोऽवगन्तव्यः ।। ४ ।।

**भावदीपिका (श्री.टि.)– ।। प्रतिज्ञातं** श्रद्धात्रैविध्यम् ।।

श्लोकः ५,६

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ।। ५ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** यक्षरक्षोभूतप्रेतगणयाजिनो राजसास्तामसा इत्युक्तम् । इतोऽपि तन्निष्ठैव विविच्योच्यते – **अशास्त्रविहितमिति द्वाभ्याम् ।।** ये जनाः वेदादिशास्त्रविरुद्धम् अशास्त्रम् दुरागमः, तद्विहितं तत्र कर्तव्यत्वेनोक्तं भगवच्छ्रद्धाविरहितत्वात् शास्त्रविहितमपि अशास्त्रविहितमिति वा घोरं भूतभयङ्करं तपस्तप्यन्ते निर्वर्तयन्ति । तत्र हेतूक्तिः दम्भाहङ्कारसंयुक्ताः । दम्भः लोकवचनम्, अहङ्कारः 'अहमेव क्रियाकर्ता' इत्यभिमानः, ताभ्यां संयुक्ताः कामरागबलान्विताः कामः दुष्टविषयाभिलाषः, रागः आसक्तिः, तद् बलं तेन अन्विताः । बलम् आग्रहः, तैरन्विता इति वा । 'तपस्तप्यन्ते' इत्युपलक्षणम् 'यज्ञदानजपादि कुर्वन्ति' इत्यपि ग्राह्यम् ।। ५ ।।

**कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।**
**मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।। ६ ।।**

## भाष्यम्

**भगवत्कर्शनं नामाल्पत्वदृष्टिरेव ।।**

भावप्रदीपिका (प.टी.)– ननु कथं नित्यपूर्णभगवतोऽन्यैः कृशीभावः कर्शयन्तः इत्यनेनोच्यते ? इत्यत आह– **भगवदिति ।।**

प्रमेयदीपिका (ज.टी.)– ननु निर्विकारस्य भगवतः कथं 'मां चैवान्तःशरीरस्थं कर्शयन्तः' इति कर्शनमुच्यते? इत्यत आह– **भगवदिति ।।** 'प्रातिपदिकात् धात्वर्थे वहुलम् इष्ठवच्च' इति वचनाद् दृष्टिरपि णेरर्थ इति भावः । 'मां चैव जीवरूपेणान्तः-शरीरस्थम्' इति व्याख्यानं तु सम्यग् व्याख्यानेनैव परास्तम् । जीवरूपत्वदर्शनस्यैव कृशीकरणत्वात् । 'मदनुशासनाकरणमेव मत्कर्शनम्' इति व्याख्याननिरासार्थम् एव इत्युक्तम् । अशाब्दत्वात् ।।

**भावबोधः (र.टि.)**– ।। **प्रातिपदिकादिति** ।। कर्शशब्दात् प्रातिपदिकात् दृशिधात्वर्थ-दृष्टौ णिचि कर्शयन्त इत्यस्याल्पत्वेन पश्यन्त इत्यर्थः सिद्ध्यतीत्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **प्रातिपदिकादिति** ।। यस्मात् कस्माच्चित् प्रातिपदिकात् दृशिरूपधात्वर्थेन बहुलं णिच् भवतीत्यर्थलाभात् गुणावादेशादौ सति 'कर्शयन्तः' इति रूपसिद्धेः कर्शयन्तः अल्पतां पश्यन्त इति गीतार्थ इत्यर्थ इति भावः ।। **सम्यगिति** ।। अल्पत्वदृष्टिरेवेति व्याख्यानेनैवेत्यर्थः ।। **अन्तःशरीरस्थमितीति** ।। कर्शयन्तः तदनुशासनमकुर्वन्त इति परव्याख्यानमित्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **प्रातिपदिकाद्धात्वर्थे बहुलमिति वचनादिति** ।। कर्शशब्दात् प्रातिपदिकात् दृशिधात्वर्थदृष्टौ. विवक्षितायां णिचि कर्शयन्त इत्यस्य अल्पत्वेन पश्यन्त इति सिद्ध्यतीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)**– ननु 'हेतुमति च' 'तत्करोति तदाचष्टे' इति वचनात् प्रयोजकव्यापारस्य करणआख्यानयोश्चैव णिजर्थत्वात् कथं भाष्ये दृष्टिः णिजर्थतयोक्ता इत्यत आह–**प्रातिपदिकादिति** ।। प्रातिपदिकाद् धात्वर्थे बहुलम् इष्ठवच्च' इति योगस्यायमर्थः । यस्मात्कस्माच्चित् प्रातिपदिकाद् यस्मिंस्कस्मिंश्चित् धात्वर्थे वाच्ये बहुलं णिच्प्रत्ययो भवति. इष्ठवच्च इष्ठन्प्रत्यये परे यथा कार्यं तथा णिच्परेऽपि स्यात् । तथा चात्र कृश्यतीत्यर्थे कर्शः पचाद्यच् । न च 'कृश तनूकरणे' इति धातोः इगुपधत्वाद् 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यय एव स्यात्, सति चैवं 'कृशः' इत्येव रूपं भवति । ततः प्रातिपदिकाद्धात्वर्थे इति णिचि 'कृशयन्तः' इत्येव स्यात्, नतु 'कर्शयन्तः' इति इति वाच्यम् । वासरूपन्यायेन पचाद्यच एवात्रोत्पाद्यतयेष्टत्वात् । ततः कर्शप्रातिपदिकाद् दृशिधात्वर्थे णिचि, णौ इष्ठवत् प्रातिपदिकस्यैव अतिदेशात् टिलोपे, ततः 'कर्शि' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसञ्ज्ञायाम् तस्मात् लटः शत्रादेशे, शपि, सार्वधातुकलक्षणे गुणे, अयादेशे, शपोऽकारस्य 'अतो गुणे' इति पररूपत्वे, स्वाद्युत्पत्तौ च 'कर्शयन्तः' इति रूपम् तस्यार्थः 'अल्पत्वं पश्यन्ति' इति हृदि निधाय भाष्ये 'अल्पत्वदृष्टिः' इत्युक्तमिति भावः । ननु 'तत्करोति तदाचष्टे' इत्यादिना धात्वर्थस्य नियमितत्वात् कथं दृष्टिः धात्वर्थः स्यात् । अत एव शङ्करः 'कर्शयन्तः कृशं कुर्वन्तः' इति व्याचख्यौ, इति चेन्न । 'कूलम् उल्लङ्घयति उत्कूलयति'

श्लोकः ६
इत्यादौ प्रातिपदिकाद् धात्वर्थे' इत्यनेन णिचम् उत्पादयद्भिः वैयाकरणैः तत्करोतीत्यादेः तत्प्रपञ्चनार्थत्वस्याङ्गीकृतत्वेन नियमार्थत्वाभावात् इत्यभियुक्ताः ।

**मां चैवेति** ।। 'मां चैव तत्कर्म बुद्धिसाक्षिभूतम् अन्तःशरीरस्थम् 'इति शङ्करभाष्यस्यायं तात्पर्यानुवादः । **इति व्याख्यानं त्विति** ।। जीवस्वरूपत्वदर्शनस्य भगवतो जीवस्वरूप-भावनस्य, जीवस्वरूपस्याल्पत्वादिति भावः । शङ्करभाष्याक्षरानुवादः – **मदनुशासनेति** ।। तल्लब्धां युक्तिमाह– **अशाब्दत्वादिति** ।। **उक्तव्याख्याने** 'अल्पदर्शनमेव कर्शनम्' इति व्याख्याने । न केवलमस्मद्व्याख्याने उक्तरीत्या शाब्दत्वमिति चशब्दः ।

**भावदीपिका (श्री.टि.)–** ।। कर्शनं कर्शनरूपो विकारः । ननु 'कर्शयन्' इति ताव-ण्णिजन्तोऽयं शब्दः । तथाच 'तत्करोति तदाचष्टे' इति करण आचक्षणाद्यर्थ एव णिचो विहितत्वात् 'पीडां करोतीति पीडयन्', 'भृशमाचष्ट इति भृशयन्' इत्यादिप्रयोगदर्शनेन च दृशेर्णिजर्थत्वाभावात् भगवत्कर्शनं नाम 'अल्पत्वकरणम्', अल्पत्वाचक्षणम्' इत्येव वक्तव्यत्वेन 'अल्पत्वदृष्टिरेव इति कथमुक्तम् इत्यत आह– **प्रातिपदिकादिति** ।। 'प्रातिपदिकात् धात्वर्थे बहुलमिष्ठवच्च' इति धातुसूत्रम् । तस्यार्थः– यस्मात्कस्माच्चित् प्रातिपदिकात् यस्मिन् कस्मिंश्चिद्धात्वर्थमात्रे विवक्षिते सति णिच्प्रत्ययो विकल्पेन भवति, स च प्रत्यय इष्ठवद्भवति इष्ठन्प्रत्ययकार्यभूतं यत् प्रातिपदिकटिलोपादि तत्कारी भवतीति । एवं च प्रकृते कृशप्रातिपदिकात् 'दृशिर् प्रेक्षणे' इति दृशधात्वर्थभूताया दृष्टेर्विवक्षितत्वात्, तस्यां विवक्षितायां सत्यां णिच्प्रत्यये, णकारचकारयोर्लोपे, 'कृश इ' इति जाते, णिच्प्रत्ययस्य इष्ठन्प्रत्ययकार्य-कारित्वेनोक्तत्वात् तस्य च टिलोपकारकत्वस्वभावस्य 'टेः' भस्य टेर्लोपः स्यात् इष्ठेमेयस्सु परतः' इत्युक्तत्वेन णिचि परे टीभूतस्य शकारस्थस्य अकारस्य लोपे 'कृश्' इति जाते, 'सार्वधातुकार्धधातुकयोः' इति गुणे, 'उरण् रपरः' इति गुणस्य च रपरत्वे 'कर्श् इ कर्शि' इति जाते, अस्माल्लटि तस्य शत्रादेशे, शकारऋवर्णयोर्लोपे 'अत्' इति जाते इकारस्य एकाररूपगुणे, तस्य चापरत्वेऽयादेशे 'कर्शयत्' इति प्रातिपदिकसिद्धिः । पश्चात् स्वाद्युत्पत्तौ नुमागमे, मित्त्वादन्त्यादचः परे जाते 'कर्शयन् त् सु' इति स्थिते 'हल्ङ्याब्भ्यः....' इति सोर्लोपे संयोगान्ततकारलोपे च 'कर्शयन्' इत्यादि सिद्ध्यतीति द्रष्टव्यम् ।

कथं परास्तम्? इत्यत आह– **जीवरूपत्वेति** ।। **कृशीकरणत्वात्** अल्पत्वदृष्टित्वात् । तथा च 'मां चैवान्तःशरीरस्थम्' इत्यनेनैव पूर्णत्वात्, 'कर्शयन्तः' इत्यस्य वैयर्थ्यमिति भावः ।

श्लोकः ६

**भावप्रकाशः (कृ.टि.)**– ननु हेतुमति च 'तत्करोति तदाचष्टे' इत्युक्तेः प्रयोजकव्यापारस्याख्यानकरणयोश्च णिजर्थत्वात् कथं दृष्टिर्णिजर्थ इत्यत आह– **प्रातिपदिकादिति** ।। बहुलमिष्ठवच्चेति पाठः । प्रातिपदिकाद्धात्वर्थे वाच्ये बहुलं णिच् इष्ठन् प्रत्यये परे यथाकार्यं तथा णिचि परे स्यादित्यर्थः । तथा च कृश्यतीति कर्शः । कृ तनूकरण इत्यस्मादिगुपधज्ञाप्रीकिरः क इति के प्राप्ते वासरूपन्यायेन पचाद्यच् । ततः कर्शप्रातिपदिकात् कर्शं पश्यतीति दृशिधात्वर्थे णिच् । णौ परे इष्ठवदित्यतिदेशाट्टिलोपः । कर्शीत्यस्य सनाद्यन्ता इति धातुत्वे तस्माल्लटि लटः शत्रादेशे शपि सार्वधातुकेति धातोर्गुणे अयादेशे शपोऽकारस्य आतो गुण इति पररूपे स्वाद्युत्पत्तौ च कर्शयन्त इति रूपम् । तस्यार्थोऽल्पं पश्यन्त इतीति बोध्यम् । एतेन कृशप्रातिपदिकात् णिचि कृशयन्त इति स्यादित्यपास्तम् । अन्ये तु कर्शनं कर्शः । भावे घञ् । ततः अर्श आद्यच् । ततो णिजादीत्याहुः– **दृष्टिरपि णेरर्थ इति** ।। न च 'तत्करोति तदाचष्टे' इत्यादिना धात्वर्थनियमस्य कृतत्वात् कथमेतदिति वाच्यम् । शब्दकौस्तुभे कूलमुल्लङ्घयति । उत्कूलयतीत्यादौ प्रातिपदिकादित्यनेन णिचमुक्त्वा तत्करोतीत्यादेस्तत्प्रपञ्चत्वस्योक्तत्वेन नियमार्थत्वाभावात् । **जीवस्वरूपत्वेति** ।। तत्स्वरूपस्यान्यत्वादिति भावः । तथा च कर्शयन्त इति व्यर्थं स्यादिति हृदयम् ।

## भाष्यम्

**'यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी' इत्यनभिम्लान(त)श्रुतिः । आसुरो निश्चयो येषां त आसुरनिश्चयाः । 'देवास्तु सात्त्विकाः प्रोक्ता दैत्याः राजसतामसाः'इति ह्याग्निवेश्यश्रुतिः ।। ६ ।।**

**भावप्रदीपिका (प.टी.)**– आसुरनिश्चयपदं व्याचष्टे– **आसुर इति** । तांस्तामसानेव विद्धीत्येव वक्तव्यमित्यत आह– **देवास्त्वति** ।। ६ ।।

**प्रमेयदीपिका (ज.टी.)**– उक्तव्याख्याने श्रुतिसम्मतिं चाऽह– **य इति** ।। नैवं महत्त्वविरुद्धम् । द्रष्टा इति तृन्नन्तम् । कर्शकः 'तस्योच्यते' इति शेषः । कर्मधारयत्वशङ्कानिरासार्थमाह– **आसुर इति** ।। निश्चयः श्रद्धा । कर्मधारयपक्षे हि सामानाधिकरण्यं गौणमिति कल्प्यम्, मत्वर्थीयप्रत्ययो वा । तथाच गौरवमिति भावः ।। ननु प्रकरणात् 'तामसनिश्चयान्' इति वक्तव्यम् । आसुरनिश्चयान् इति कथमुक्तम्? इत्यत आह–

श्लोकः ६

**देवास्त्विति ।।** सात्त्विकाः देवाः देवपर्यायवाच्याः प्रोक्ताः । **राजसाः तामसाश्च दैत्याः दैत्यपर्यायवाच्याः प्रोक्ताः इत्यर्थः** ।। ६ ।।

**भावबोधः (र.टि.)–** नन्वल्पत्वदृष्टिरिति महत्त्वविरुद्धदृष्टिर्भगवत्कर्शनमित्युक्तार्थे 'नैवं द्रष्टा' इति महत्त्वाज्ञत्वमात्रप्रतिपादकं कथं सम्मतित्वेनोदाहृतमित्यतो व्याचष्टे– **नैवं महत्त्व-विरुद्धमिति** ।। 'महान्त'मित्याद्यनुसारेण विरुद्धमिति द्वितीया । 'न च' इत्येतदुपपत्त्यर्थमाह– **तृन्नन्तमिति** ।। तृजन्तत्वे तु 'कर्तृकर्मणोः कृति' इति विरुद्धस्येति षष्ठी स्यादिति भावः । **गौणमिति** ।। आसुरजनानां विपरीतनिश्चयरूपज्ञानसामानाधिकरण्यं पुरुषतन्निश्चयानुगम-सात्त्विकवैपरीत्यगुणयोगेनेत्यर्थः । **गौरवमिति** ।। 'न बहुव्रीहिनिर्वाह्येऽर्थे भवन्ति मतुबादयः' इति वचनादिति भावः । **दैत्यपर्यायवाच्या इति** ।। तथा चतुरशब्दस्य दैत्यशब्दपर्यायत्वेन न प्रकृतानुपयोग इति भावः । एतदनुरोधेन देवा इत्येतदपि तथैव व्याख्यातम् ।। ६,७ ।।

**भावदीपः (रा.टि.)–** ।। **श्रुतिसम्मतिं चेति** ।। व्याख्यार्थस्य शाब्दत्वसमुच्चयार्थश्च-शब्दः ।। श्रुतौ **नैवमिति** ।। महत्वाद्यज्ञानप्रतीतिनिरासाय तद्विरुद्धत्वाल्पत्वज्ञानलाभायाह– **महत्वविरुद्धमिति** ।। अल्पत्वं दृष्ट्वेत्यर्थः ।। **तृन्नन्तमिति** ।। तृजन्तत्वे सति 'कर्तृकर्मणोः कृति' इति षष्ठी स्यादिति भावः ।। **तस्येति** महतः परमपुंसमित्यर्थः । 'त्रिविधा भवति श्रद्धा'इत्युपक्रमविरोधायाऽह– **निश्चयः श्रद्धेति** ।। **गौणमिति** ।। असुरसम्बन्धिश्रद्धारूपत्वस्य तामसजनेषु मुख्यस्यासम्भवादित्यर्थः ।। **मत्वर्थीय इति** ।। 'अर्श आदिभ्योऽच्' इत्युक्त-मत्वर्थकअच्प्रत्ययान्तो वा कर्तव्य इत्यर्थः ।। **तामसनिश्चयानिति** ।। तामसश्रद्धानित्यर्थः । 'सात्विकाः सुराः' इत्यादि यत्र क्वचित् श्रुतप्रयोगनिर्वाहायाऽह– **देवपर्यायेति** ।। 'राजसादेः' इति श्रुतत्वाभावात् प्रकृते असुरशब्दस्यैव भावाच्चाह– **दैत्यपर्यायेति** ।। ६ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु द्रष्टेत्यस्य तृजन्तात् तद्योगे कर्तृकर्मणोः कृतीति जगतः कर्ता इत्यादाविव षष्ट्या विरुद्धस्येति स्यात् । विरुद्धमिति द्वितीया तु कथमित्यतो अस्य तृन्नन्तत्वेन तृजन्तत्वाभावात् तृन्योगे न लोक इति षष्ट्या निषिद्धत्वात् युक्ता द्वितीयेत्याह– **द्रष्टा इति तृन्नन्तमिति** ।। ननु च कर्मधारयस्य वृत्तिपदार्थप्रधानस्य अन्यपदार्थस्याप्रधानतया जघनयत्वात् बहुव्रीहेः बलीयस्त्वात् स एव किं नस्यात् इत्यतः तत्पुरुषः समानाधिकरणः कर्मधारय इति समानाधिकरण्य एव तद्विधानात् प्रकृते चासुरजनानां विपरूतनिश्चयार्थाक-

ज्ञानसामानाधिकरण्याभावात् पुरुषतन्निश्चयानुगतसात्वकवैपरीत्यगुणयोगेन सामानाधिकरण्यो-पपादनस्य गौणत्वेनासम्भवात् न कर्मधारय इत्याह– **कर्मधारयपक्षे हीति । मत्वर्थीयो वेति ।।** आसुरजनत्वस्य निश्चयवत्वस्य च सामानाधिकरण्यसम्भवादिति भावः । अस्तु तर्हि स एवेत्यत आह – **तथाच गौरवमिति ।।** कर्मधारयमत्वर्थीयात् बहुव्रीहिरेवेष्टो लघुत्वात् इति कात्यायनवचनादिति भावः ।।

**भावरत्नकोशः (सु.टि.)**– ननु प्रमाणे नञा 'द्रष्टा' इति क्रियापदेनान्वये महत्त्वदर्शना-भाव एव लभ्यते, न पुनरल्पत्वदर्शनम् । तत्कथम् 'अल्पत्वद्रष्टा कर्शयन्' इत्यत्र सम्मनित्वम् इत्यतो 'नैवम्' इत्येकं पदम् इति भावेन तस्य प्रकृतसिद्धयेऽर्थमाह– **नैवं महत्त्वविरुद्ध-मिति ।।** महत्त्वस्य विरुद्धं महत्त्वासामानाधिकरणम् अल्पत्वम्, तद्वन्तं पुमांसं द्रष्टेत्यर्थः । दृशेः तृचि 'द्रष्टा' इति रूपत्वे तृचः कृत्त्वात् 'कर्तृकर्मणोः कृति' इति कर्मकारके षष्ठी स्यात् इत्यत आह– **तृन्नन्तमिति ।।** ताच्छील्यविशिष्टार्थकतृनूरूपकृत्प्रत्ययान्तत्वे 'द्रष्टा' इति पदमिति कर्मणि द्वितीयोपपत्तिरिति भावः । अनेन 'सात्त्विकानामपि कदाचिद् भगवति अल्पदृष्टिसम्भवात्, तेषामपि अतिपापशब्दितं तामसत्वं स्यात्' इत्यपास्तम् । तृन्प्रत्ययेन अल्पत्वदृष्टेः शीलत्वाभिधानात् सात्त्विकानामल्पत्वदृष्टिः न सहजा, इति नातिप्रसङ्ग इत्यपि सूचितम् । 'कर्शकः अल्पत्वस्य द्रष्टा' इति भाष्यपदमनूद्य तत्र पदद्वयशेषमाह– **तस्योच्यत इति ।। तस्य** महतः पुंसः । 'त्रिविधा भवति श्रद्धा इत्युपक्रमात् 'तान्' इति परामर्शाच्च 'आसुरश्रद्धान्' इति वक्तव्ये कथं निश्चयशब्दः इत्यत आह– **निश्चयः श्रद्धेति ।।** श्रद्धाया निश्चयविशेषरूपत्वादियमुक्तिः ।

समासप्राबल्याद् 'आसुरनिश्चयान्' इत्यत्र कर्मधारय एवास्तु, तद्वत्त्वविवक्षायामपि कर्मधारयाद् अर्शआदिलक्षणमुत्पादयिष्यामः । बहुव्रीहिस्तु अन्यपदार्थप्रधानो जघन्य इति. न स आश्रयणीयः इत्याशङ्क्य पक्षद्वयेऽपि शेषमाह– **कर्मधारयपक्षे हीति ।।** सामानाधिकरण्यम् आसुरपुरुषाणां निश्चयाभेदः । द्वितीयपक्षे शेषमाह– **मत्वर्थीयो वेति ।।** 'परेण कल्पनीयः' इति शेषः । **गौरवमिति ।।** आदौ कर्मधारयत्वकल्पनम्, ततो मत्वर्थीयाच्प्रत्ययकल्पनं चेति कल्पनागौरवमित्यर्थः । केचित्तु 'तान् ' इति अशास्त्रविहितं घोरं तपः तप्यमानान् जनान् परामृश्य, तेषाम् आसुरनिश्चयात्मता वेदितव्या । तेषां च पुरुषाणां धर्मिभूतानां धर्मभूत-निश्चयात्मकत्वलक्षणं सामानधिकरण्यं मुख्यमसम्भवीति गौणमेव वक्तव्यम् । कर्मधारयात् मत्वर्थीयप्रत्ययकल्पनपक्षे कल्पनाद्वयमिति गौरवमित्यर्थ इत्याहुः ।

श्लोकः ६

प्रकरणात् 'तामसा जनाः' इति केषांश्चिज्जनानां तामसपदेनैव प्रकृतत्वात् । 'तामसनिश्चयान् इति वक्तव्यम्' इति प्रश्नं प्रति उत्तरवाक्यं सङ्गमयितुं व्याख्याति– **सात्त्विका इति** ।। 'सात्त्विकाः सुराः' इत्यादिरूपेण यत्र क्वापि श्रुतस्य प्रयोगस्य निर्वाहाय 'देवपर्यायवच्याः' इत्युक्तमिति स्वामिनः । सहपाठविरोधपरिहारायैवमुक्तिः इति अन्ये । कर्मधारयप्रतीतिव्युदासायाह– **राजसास्तामसाश्चेति** ।। दैत्यपर्यायवाच्याः दैत्यशब्ददैत्यपर्यायासुरादिशब्दवाच्या इति प्रकृतप्रश्नोत्तरमिति हृदयम् ।।

**गीताक्षरार्थस्तु–** किञ्च शरीरस्थं प्राणिशरीरे च नियामकतया स्थितं भूतग्रामं लक्ष्मीविरिञ्चिवाणीईशादिदेवतासमूहं नियामकतया सर्वशरीरे स्थितं मां च कर्शयन्तः अल्पत्वेन पश्यन्तः अनन्तगुणं भगवन्तं मां, बहुगुणान् रमादींश्च अल्पगुणत्वेन पश्यन्तः । किमिति तथा पश्यन्ति अचेतसः असम्यग्ज्ञानाः, एतान् आसुरो निश्चयः श्रद्धा येषां ते आसुरनिश्चयाः तान् । अत्रासुरशब्दो राजसतामसशब्दितसात्त्विकशब्दार्थसुरविरुद्धजनार्थः सम्पद्यते । विद्धि जानीहीति ।। ६ ।।

**भावदीपिका (श्री.टि.)– ।। तृन्नन्तमिति ।।** तृजन्तत्वे 'कर्तृकर्मणोः कृति' इति षष्ठीविधानात् 'पुंसो द्रष्टा' इति षष्ठी स्यात् । तृन्नन्तत्वे तु 'न लोक...' इति षष्ठ्या निषिद्धत्वात् 'पुमांसम्' इति द्वितीयोपपत्तिरिति भावः । **कर्मधारयत्वेति** ।। 'आसुराश्च ते निश्चयाश्च आसुरनिश्चयाः, तान्' इति कर्मधारयत्वशङ्केत्यर्थः । **सामानाधिकरण्यमिति ।।** आसुरजनानां विपरीतनिश्चयाख्यज्ञानसामानाधिकरण्यं पुरुषतन्निश्चयानुगतसात्त्विकवैपरीत्याख्यागुणयोगेन गौणं कल्प्यमित्यर्थः । **मत्वर्थीयेति** ।। आदौ 'आसुरश्चासौ निश्चयश्च' इति कर्मधारयं विधाय, पश्चाद् 'आसुरो निश्चयो एषामस्ति' इति तद्वत्त्वरूपार्थलाभाय मत्वर्थीयअर्शआद्यजन्ताच्प्रत्ययो वा कल्पनीय इत्यर्थः । ननु मथ्वर्थीयप्रत्ययकल्पने को दोषः इत्यत आह– **तथा चेति** ।। बहुव्रीहिणैव तद्वत्त्वार्थलाभे सति तदर्थमत्वर्थीयप्रत्ययकल्पने गौरवम् । 'न बहुव्रीहिनिर्वाह्ये भवन्ति मतुबादयः' इति वचनादिति भावः । **प्रकरणादिति** ।। 'तामसा जनाः' इति प्रकरणादिति भावः । **देवपर्यायेति** ।। देवपर्यायशब्दिताः सुरविबुधादिशब्दाः, तद्वाच्या इत्यर्थः । **दैत्यपर्यायेति** ।। दैत्यपर्यायशब्दाः असुरादिशब्दाः, तद्वाच्या इत्यर्थः । तथा च तामसानाम् असुरशब्दवाच्यत्वाद् 'आसुरनिश्चयान्' इति युक्तमित्याशयः ।। ६ ।।

**भावप्रकाशः (कृ.टि.)–** नन्वेवं न द्रष्टा इत्यनेन महत्त्वदर्शनाभावास्योक्तत्वात् कथमल्पत्वदर्शने सम्मतिरियमित्यतो 'नैवम्' इति समस्तं पदमिति भावेनाह– **नैवं महत्त्वविरुद्धमिति** ।। ननु पुमांसमिति विशेष्यानुसारान्नैवमिति द्वितीयान्तमस्तु । तथाऽपि द्रष्टेति तृजुक्तः । तद्योगे कर्तृकर्मणोः कृतीति षष्ठ्या भाव्यत्वादित्यत आह– **तृन्नन्तमिति** ।। ननु तां शृणु इति श्रद्धाप्रकरणाद् आसुरश्रद्धान् इति वाच्यम् । कथं निश्चयग्रहणमित्यत आह– **निश्चयः श्रद्धेति ।। गौणमिति** ।। पुरुषतन्निश्चययोः सात्त्विकान्यत्वाख्यगुणयोगादिति भावः । ननु 'तामस' इति वाच्ये कथम् 'आसुर' इत्युक्तमिति प्रश्नस्य 'तामसा आसुरपदवाच्याः' इत्युत्तरं सङ्गतं न त्वन्यदित्याशङ्क्य तथैव व्याख्यातुं सहपाठविरोधपरिहाराय 'देवास्तु' इत्येतद्व्युत्क्रमेण व्याख्याति– **सात्त्विका इति** ।। ६ ।।

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ।। ७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं श्रद्धाभेदः सात्त्विकादिजीवस्वरूपभेदज्ञापक इत्युक्तम् । इदानीम् आहारयज्ञतपोदानभेदोऽपि तद्भेदज्ञापक इत्युच्यते– **आहार इत्यादिभिः श्लोकैः** । तुशब्दश्चशब्दार्थः । सर्वस्यापि प्राणिसमूहस्य प्रियः इष्ट आहारः अन्नादिः त्रिविधः सात्त्विकादिभेदेन त्रिप्रकारः । तथा यज्ञो दानं तपः च त्रिविधमेव । तेषाम् आहारादीनां भेदं सात्त्विकादि इति भावः । इमं वक्ष्यमाणं शृणु ।। ७ ।।

**आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।। ८ ।।**

## भाष्यम्

**प्रीतिः आनन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्का भवन्ति । तथा ह्याज्यादयः ।। ८ ।।**

भावप्रदीपिका (प.टी.)– **प्रीतिविवर्धनाः हृद्याः** इत्यनयोरर्थभेदमाह– **प्रीतिरिति** । अन्नानां स्थैर्यं नाम किम् इत्यत आह– **स्थिराश्चेति** ।। ८ ।।

श्लोकः ८

**प्रमेयदीपिका (ज.टी.)– 'प्रीतिविवर्द्धनाः' 'हृद्याः' इत्येतयोरर्थभेदमाह– प्रीतिरिति ।। आनन्तरिकेति ठन् प्रत्ययान्तम् ।। सेवाव्यवहितकाल इत्यर्थः । 'प्रियं तत्कालसौख्यदम्' इति वचनात् । दर्शनेऽनुभवे सति पश्चादपि यन्मनोहारित्वं तत् हृद्यत्वम् । 'हृद्यं पश्चात् मनोहारि' इति वचनादित्यर्थः । आहाराणां क्षणिकानामभावात् कथं 'स्थिराः' इति विशेषणम्? इत्यत आह– स्थिराश्चेति ।। चस्त्वर्थः प्रसिद्धं स्थैर्यं व्यावर्तयति । तदैव अचिरकाल एव । पक्वाः निवृत्तपाकाः, चिरकालं देहे गुणप्रदा इत्यर्थः । असम्भवपरिहाराय तानुदाहरति– तथा हीति ।। ८ ।।**

**भावदीपः (रा.टि.)–** ननु ठकूप्रत्ययान्तत्वे 'टिड्ढाणञ्' इत्यादिना ङीप्प्रत्यये सति आनन्तरिका इति भाव्यमित्यतो नायं ठगन्तः, अपितु 'तद्धिताः' इति बहुवचननिर्देशादन्य एवेत्याह– **ठन्प्रत्ययान्तमिति** ।। तथाच टाबन्तः साधुरिति भावः ।। **इति वचनादिति** ।। 'हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम्'इति तात्पर्यवचनादित्यर्थः ।। **निवृत्तेति** ।। निष्फला इत्यर्थः ।। ८ ।।

**वाक्यार्थप्रदीपः (पां.टि.)–** ननु अनन्तशब्दात् भवार्थे ठकि तस्य ठस्येक इति इकादेशे कित्त्वात् किति च इत्यादिवृद्धौ टिड्ढाणञ् इति ङीपि यस्येति च इति अकारलोपे आनन्तरिकी इति भवितव्यम् । आनन्तरिकेति तु कथमित्यत आह– **आनन्तरिकेति ठकूप्रत्ययान्त इति** ।। तथाचानन्तरिकशब्दस्य ठकूप्रत्ययान्तत्वेपि ढकूप्रत्ययान्तत्वाभावात् न टिड्ढाणञ् इति ङीबित्यर्थः । नच ठगाश्रयणेपि कित्वादादिवृद्ध्यनुपपत्तिरिति वाच्यम् । अनन्तरमेवानन्तरमिति स्वार्थे अणि णित्वादादिवृद्धौ आनन्तरशब्दनिष्पत्तौ आनन्तरं भवेति भवार्थे ढप्रत्ययव्युत्पादने तात्पर्यादित्याहुः । मन ज्ञान इत्यतः इकारप्रत्ययः । उपधाया उकारश्चेति । मनेरुच्च इत्यौणादिकसूत्रेण मनेरिन्प्रत्यस्य उपधाकारस्य चोकारादेशविधानात् मुनिरिति रूपं सिद्ध्यतीत्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** आनन्तरिक इति शब्दस्य ठक्प्रत्ययान्तत्वे ठञ्प्रत्ययान्तत्वे वा 'टिड्ढाणञ्...' इत्यादिना ङीपि, 'आनन्तरिकी' इति भाष्ये निर्देशः स्यात् इत्यतः तस्य रूपं निर्धारयति– **आनन्तरिकेति ठन्प्रत्ययान्तमिति** ।। न विद्यते अन्तरं व्यवधानं यस्य तद् अनन्तरम् । 'पौरुषम्' इत्यादाविव भावेऽण्प्रत्यये अनन्तरस्य भावः आनन्तरम् । ततः

'तदस्यास्ति' इत्यर्थे 'अत इनिठनौ' इति ठन्, 'ठस्येकः' 'यस्येति च' इति अकारलोपः. ततः स्त्रियाम् टाप् । सति चैवम् 'आनन्तरिका' इति सुप् निष्पत्तिरिति भावः । 'आनन्तरि-केति इक्प्रत्ययान्तम्' इति पाठे अनन्तरशब्दात् 'तद्धिताः' इति बहुवचनज्ञापित इक्प्रत्ययः, 'यस्येति च' इति अकारलोपः, कित्त्वात् 'किति च' इति वृद्धिश्च इति व्याकुर्वन्तः स्वामिनः । तदर्थमाह– **सेवेति** ।। अनुभवाव्यवहितसमयभाविनी । उक्तार्थे तात्पर्यनिर्णयवचनं प्रमाणयति– **प्रियमिति** ।। सेवाऽव्यवहितकाल एव सौख्यप्रदम् अभ्यवहार्यवस्तु प्रियमित्युक्त्यैव 'तत्सेवाऽ-व्यवहितकालभावि सुखं प्रीतिः' इति विभावितमिति प्रकृतसिद्धिः । भाष्यपदं व्याकुर्वंस्तत्र शेषमाह– **दर्शनेऽनुभवे सतीति** ।। **पश्चादपि** न केवलं तत्काले इति अपिशब्दः । **क्षणिकानाम्** आशुविनाशिनाम् **अभावात्** स्थायित्वाभावात् । 'भावात्' इति पाठे 'सत्त्वात्' इत्यर्थः । **त्वर्थः सन्** तुशब्दार्थकः सन् **प्रसिद्धं** स्थायित्वाख्यम् । 'पक्वाः निष्पन्नपाकाः' इत्यत्र विवक्षितं पाकशब्दार्थमाह– **निर्वृत्तेति** ।। तदैव उपहितकाले न चेत् किं तर्हि इत्यतो भाष्य-भावमाह– **चिरकालमिति** ।। **गुणाः** पुष्ट्यादयः । भाष्ये **आज्यादयः** आज्यरसायनादयः ।।

**गीताक्षरार्थस्तु** स एव भेद उच्यते– **आयुरित्यादिभिस्त्रिभिः** । आयुः जीवनं सत्त्वं साधुभावः, भवति हि सोऽपि शुच्यन्नाद् बलं शक्तिः आरोग्यं रोगराहित्यं सकृदुपयुक्तेनापि विषयेण यत् सुखं भवति तदिह सुखशब्देन विवक्षितम् । विषयसेवाऽव्यवहितकाले भवं सुखं प्रीतिः तासां विवर्धनाः विशेषेण वृद्धिं कुर्वन्तः ते च रस्याः रसोपेताः बहुवारोपयोग एव सौख्यप्रदाः स्निग्धाः स्नेहयुक्ताः स्थिराः चिरकालं देहे गुणप्रदा आज्यादयः हृद्याः सेवानन्तरमपि ये 'पुनर्भूयासुः' इति मनोहरन्ति ते । एवंविधा आहाराः कर्मणि घञ् । अभ्यवहर्तव्याः । सात्त्विकानां प्रियाः इष्टाः ।। ८ ।।

**भावदीपिका (श्री.टि.)– ।। ठन्प्रत्ययान्तमिति** ।। अनन्तरमेव आनन्तरम् । तथा च आनन्तरशब्दात् भवार्थे ठन्प्रत्यये 'ठस्येकः' इति सूत्रेण तस्येकादेशे भस्य रकारस्थाकारस्य लोपे 'आनन्तरिक' इति जाते, 'अजाद्यतष्टाप् इति टापि आकारमात्रं विहाय सर्वस्यापि लोपे अकः सवर्णे दीर्घे, 'आनन्तरिका' इति रूपम् । न तु 'ठक्प्रत्ययान्तम्' इति पाठः । तथात्वे आनन्तरशब्दात् ठक्प्रत्यये ककारलोपे ठस्येकादेशे 'आनन्तरिक' इति जाते 'टिड्ढाणञ्-द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपूख्युनाम्' इति सूत्रेण ङीपि 'आनन्तरिकी' इति भाष्ये पाठः स्यादिति ज्ञेयम् । **तत्कालेति** । सेवाऽयव्यवहितकाल एवेत्यर्थः । **पश्चादिति** ।।

श्लोकः ९

अव्यवहितकालं विना कालान्तरेऽपीत्यर्थः । **प्रसिद्धेति** ।। स्थायित्वापरपर्यायमित्यर्थः । अचिरकाले निर्वृतपाकाः प्राप्तकलाः । न तदैव पक्वा भवन्तीत्यस्य फलितमाह– **चिरकालं देह इति** ।। **असम्भवेति** ।। 'तादृशाः पदार्था एव न सन्ति' इत्यसम्भावनाशङ्कापरिहारायेत्यर्थः ।। ८ ।।

**भावप्रकाशः (कृ.टि.)–** ननु ठगन्तत्वे टञन्तत्वे च 'टिड्ढाणू' इति ङीपि सति 'आनन्तरिकी' इति स्यात् । तेन 'निर्वृत्तम्' इत्यादेष्ठगाद्यर्थस्य प्रकृतेऽविवक्षितत्वाच्चेत्याशङ्क्या-नन्तरिकशब्दार्थं वक्तुं तत्स्वरूपं निर्धारयति– **आनन्तरिकेति ठन्प्रत्ययान्तेति** ।। अनन्तरस्य भावः आनन्तरम् । पौरुषमित्यादिवद्भावे णप्रत्ययः । ततस्तदस्य अस्तीत्यानन्तरिका । अत इनि ठनाविति ठन् । 'ठस्येकः' 'यस्येति च' इत्यकारलोपः ततः स्त्रीत्वात् टाप् । एवं सति आनन्तरिकेति रूपं भवतीत्यर्थः । अस्त्वेवम् । ततः किं प्रकृत इत्यत आह– **सेवेति** ।। अनुभवेत्यर्थः । ननु 'पक्वाः' इत्यत्र पच्यर्थस्य 'तदेव' इत्यनेन तत्कालत्वमुक्तम् । क्तप्रत्ययेन चातीतत्वमिति व्याघात इत्यत आह– **निर्वृत्तपाका इति** ।। न च सः 'निर्वृत्त' इति क्तेना-तीतत्वमुक्तमिति व्याघाततादवस्थ्यम् । अकर्मकत्वात् कर्तरि विहितस्यास्य भूताधिकार-विहितत्वाभावादित्यशयात् । ननु तदैव पक्वा न भवन्तीत्येतत् मांसादितामसाहारसाधारणम् । पललं च चतुर्दशेत्यादि वैद्यशास्त्रे चतुर्दशघटिकाद्यनन्तरं मांसादिपाकस्योक्तत्वादित्यत आह– **चिरकालमिति** ।। गुणप्रदाः पुष्ट्यादिहेतवः ।। ८ ।।

**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।। ९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** राजसप्रियाहारोक्तिः – **कट्वाम्लेति** ।। कटवः मरीचिकादयः, आम्लाः जम्बीरनीरादयः, लवणा अत्युष्णाश्च प्रसिद्धाः । तीक्ष्णाः सर्षपादयः, रूक्षाः स्वत एव नीरसाः कोद्रवादयः विदाहिन उदन्योत्पादकाः सन्तापजननशीला वा । एते आहारा दुःखशोकामयप्रदाः दुःखं तात्कालिकचित्ततोदः, शोकः पश्चाद्भावि दौर्मनस्यम्, आमयः रोगः, एतान् प्रददति प्रयच्छन्तीति तथोक्ताः, आहाराः राजसस्य इष्टाः प्रियाः, एते राजसा आहारा इत्यर्थः । अत्र सात्त्विकराजसाहारेषु 'रस्याः' 'स्निग्धाः' इति सात्त्विकत्वेनोक्तानां रस्यादीनां सात्त्विकत्वं न नियतम् । तथा कट्वादीनां राजसत्वमपि । तेषामेव कदाचित्

सात्त्विकत्वं कदाचित् राजसत्वमपि भवतीत्ययमर्थः । कट्वादीनामपि आरोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । रस्यादीनामपि राजसत्वमनारोग्यहेतुत्वे । 'दुःखशोकामयप्रदाः' इति दुःखादिप्रदाश्चेद् 'राजसाः' इत्युक्तत्वाद् 'अनारोग्यहेतुत्वे न सात्त्विकत्वनियमः' इत्युत्तर-प्रस्थानतोऽवगन्तव्यः ।। ९ ।।

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।। १० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु यातयाममिति** ।। यातो यामः प्रहरो यस्य तथा । यामाद् उपरिगतप्रहरमित्यर्थः । यामं नियम्यम् अपेक्षितांशः सार इति यावत् । गतरसं पूर्वं स्वाद्वेव, पश्चाद् अन्यथाजातं गतरसम् । यो वा को वा यस्य रसः तदपगमे यातयामम्, स्वादुत्वापगमे गतरसमित्यर्थभेद इति न्यायदीपिका । एतेन 'पङ्क्तिपावनपुरुषान्नस्य सात्त्विकत्व-प्रसिद्धेः कथं यातयामं गतरसम्' इति शङ्का निरस्ता । पूति स्वतः परिणामतो वा दुर्गन्धोपेतम्, पर्युषितं पक्वम् सद् रात्र्यन्तरितदिनान्तरितपाकमित्यपि आहुः । उच्छिष्टम् अन्यभुक्तावशिष्टम् अमेध्यम् अयज्ञार्हम् अपवित्रं भोजनं कर्मणि ल्युट् अभ्यवहर्तव्यं तामसप्रियं तामसजनस्येष्टम् ।। १० ।।

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ।। ११ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अथ सात्त्विकादिजीवस्वरूपज्ञापकं यज्ञ-त्रैविध्यमुच्यते– **अफलाकाङ्क्षिभिरिति त्रिभिः** । अफलाकाङ्क्षिभिः फलाभिलाषरहितैः पुम्भिः विधिदृष्टः शास्त्रचोदनया कर्तव्यतयाऽवगतः यो यज्ञः यष्टव्यमेव यज्ञानुष्ठानं कर्तव्यमेव । भगवत्प्रीत्युद्देशेन नान्यत् फलं साधनीयम् इति एवं मनः समाधाय एकाग्रं कृत्वा इज्यते यजिरत्र करणार्थः, क्रियते । विष्णौ मनः समाधाय सर्वयज्ञभोक्तृत्वेन इज्यमानदेवतान्तर्यामित्वेन विष्णुम् अनुसन्धायेति वा । सः यज्ञः सात्त्विकः सात्त्विकजीवस्वरूपज्ञापक उच्यते ।। ११ ।।

**अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ।। १२ ।।**

श्लोक: १३-१५

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु– अभिसन्धायेति** ।। हे भरतश्रेष्ठ यत् कर्मफलम् अभिसन्धाय 'मम भूयात् 'इति कामयित्वैव, तुशब्दः सात्त्विकयज्ञवैलक्षण्यद्योतनार्थः । दम्भार्थमपि परवञ्चनेन महत्त्वख्यापनायापि य इज्यते क्रियते तं यज्ञं राजसं राजसजीवस्वरूपज्ञापकं विद्धि ।। १२ ।।

**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ।। १३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु विधिहीनमिति** ।। विधिहीनं यथाशास्त्रचोदितविपरीतम् असृष्टान्नं ब्राह्मणेभ्यो न दत्तमन्नं यस्मिन् तथा मन्त्रहीनं तत्तद्देवतादिप्रकाशकमन्त्रशून्यम्, स्वरतो वर्णतो वा वियुक्तम् अमन्त्रकम् इत्यपि आहुः । अदक्षिणं कल्पोक्तदक्षिणारहितं श्रद्धाविरहितम् आस्तिक्यनिष्ठया विशेषेण हीनं यज्ञं तामसं तमोगुणनिर्वृत्तं तामसजीवस्वरूपज्ञापकं परिचक्षते कथयन्ति प्राज्ञाः ।। १३ ।।

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।। १४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तपोभेदेनापि सात्त्विकादिजीवस्वरूपभेदं ज्ञापयितुं शरीरादिभेदेन तपसस्त्रैविध्यं तावदुच्यते– **देवद्विजगुरुप्राज्ञ इत्यादिभिस्त्रिभिः** ।। देवाः विष्णुलक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रादयः द्विजाः ब्राह्मणाः गुरवः तत्त्वस्योपदेष्टारः प्राज्ञाः तदन्ये तत्तत्त्वविदः, तेषां पूजनम् । शौचं बाह्यमाभ्यन्तरं च आर्जवं सदाचारे नित्यमेकप्रकारकत्वरूपम् ऋजुत्वम् । ब्रह्मचर्यं गुह्येन्द्रियनियमनं शारीरं शरीरनिर्वर्त्यं तप उच्यते ।। १४ ।।

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ।। १५ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अनुद्वेगेति** ।। उद्वेगं भयं न कर्तुं शीलमस्येति अनुद्वेगकरम् । करोतेः ताच्छील्ये टः । सत्यं यथा श्रोतुः प्रियं हितं च परिणामे सुखकरं च वाक्यं स्वाध्यायाभ्यसनं च वाङ्मयं वाचा निर्वर्त्यं तप उच्यते ।। १५ ।।

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।। १६ ।।**

## भाष्यम्

**सौम्यत्वम् अक्रौर्यम् । 'अक्रूरः सौम्य उच्यते' इत्यभिधानम् । मौनं मननशीलत्वम् । 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इति हि श्रुतिः । 'एतेन हीदं सर्वम् मतं । यदनेन हीदं सर्वं मतं तस्मान्मुनिः तस्मान्मुनिरित्याचक्षते' इति भाल्लवेयश्रुतिः । कथं चान्यथा मानसं तपः स्यात्? ।। १६ ।।**

भावप्रदीपिका (प.टी.)– मौनादिमत्वं कथं मानसं तप इत्यत आह– **कथमिति** ।। १६ ।।

प्रमेयदीपिका (ज.टी.)– नन्वङ्गसौष्ठवं सौम्यत्वम् । तत्कथं मानसं तप उच्यते? इत्यत आह– **सौम्यत्वमिति**।। 'मौनं वाङ्नियमनम्' इत्यन्यथाप्रतीतिनिरासार्थमाह– **मौनमिति** ।। कुत एतत्? इत्यत आह – **बाल्यमिति** ।। युक्तिबलोपेतत्वं वाल्यम् । आगमज्ञत्वं पाण्डित्यम् । अथ मुनिः मननशीलो भवतीत्यर्थः । 'एतेन हीदम्' इत्युक्तमर्थं यदनेन इति हेतुत्वेनोपादत्ते ।यस्मादेवं मुनिस्तस्मात्तं मुनिरित्याचक्षते । 'मन ज्ञाने' (पा.धा.११,७६) इत्यतः इकारप्रत्ययः । उपधाया उकारश्च । मुनेर्भावश्च मौनम् । तच्च मननशीलत्वम् आगमार्थस्य युक्तिभिः अनुसन्धानम् । उक्तार्थानङ्गीकारे वाधकमाह– **कथमिति** ।। 'मौनम्' इति शेषः ।।

'वाङ्नियम एव न मौनम् । किन्त्वत्र तत्कारणमनोनियमो लक्ष्यते' इति कश्चित् । तदसत् । 'आत्मविनिग्रहः' इति पुनरुक्तिदोषात् । कथञ्चित् परिहारेऽपि मुख्यार्थसम्भवे लक्षणाश्रयणस्यैव दोषत्वात् ।। १६-२२ ।।

भाववोधः (र.टि.)– ननु वाङ्नियमकारणत्वेनैव मौनपदेन मनोनियमो लक्ष्यते. आत्मनिग्रहपदेन तु चक्षुरादिनियमहेतुत्वेन विषयस्मरणनियमहेतुत्वेन वा मनोनियम उच्यते इति

श्लोकः १६

न पुनरुक्तिरित्यत आह– **कथञ्चिदिति** ।। सकृदुक्तमनोनियमस्यैव सर्वेन्द्रियव्यापारनियमहेतुत्वे विषयस्मरणनियमहेतुत्वे च सम्भवति एवं विवक्षायां गौरवमित्यभिप्रेत्य कथञ्चिदित्युक्तम् ।। १६ ।।

**भावदीपः (रा.टि.)**– 'तस्मान्मुनिः' इत्ययं विधिरित्युपेत्य तदनन्तरमपेक्षितमध्याहृत्योत्तरवाक्यं संयोजयति– **'यस्मादेवं मुनिस्तस्मात्' इत्यादिना** ।। 'मौनं मननशीलत्वम्' इति भाष्यं कार्यकारणभावाभिप्रायमिति भावेनाऽह– **तच्चेत्यादिना** ।। ननु वाङ्नियमकारणमनोनिग्रहो मौनपदेन, आत्मनिग्रहपदेन तु चक्षुरादीन्द्रियनियमनहेतुमनोनिग्रहो गृह्यत इत्यत आह– **कथञ्चित्परिहारेऽपीति** ।। **एवेति** ।। अस्मदुक्तार्थ एवेत्याहेत्यर्थः ।। १६ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **अङ्गसौष्ठवमिति** ।। 'सौम्यं तु सुन्दरे सोमदैवते' इत्यमरेण

'उपाध्याये तु ना सौम्यः पुनः स्त्रीसोमदैवते ।
सुन्दरे च पुमांस्त्वेष वत्सरे च बुधग्रहे ।।'

इति केशवेन च सौम्यशब्दस्य अङ्गसौष्ठवशब्दितसौन्दर्यशालिवचनत्वाभिधानाद् अङ्गसौष्ठवमेव सौम्यत्वमिति भावः । केचित्तु सोमः चन्द्र इव आह्लादकः सोमशब्दाद् इवार्थे 'शाखादिभ्यो यः' इति यप्रत्ययः । स एव प्रज्ञादिभावेन स्वार्थेऽणि सौम्यः सुन्दरः स हि आह्लादको भवति, तस्य भावः सौम्यत्वम् इत्यनेन अङ्गसौष्ठवं लभ्यत इति भावेन एवमुक्तमित्याहुः । भाष्ये अक्रौर्यं मनसः क्रोधात्मना परिणामाभावोऽभिमत इति मानसतपस्त्वोपपत्तिरिति द्रष्टव्यम् । वलशब्दाद् 'उपेतम्' इत्यर्थे ष्यञि बाल्यम् । बलं चात्र युक्तिरूपं विवक्षितम् । 'बाल्यं युक्तिसहायता' इति वचनादिति भावेनाह– **युक्तीति** ।। 'पाण्डित्यम् आगमज्ञानम्' इति वचनानुसारेण व्याचष्टे– **आगमज्ञत्वमिति** ।।

भाष्ये 'निर्विद्य इत्यत्र 'नितरां लब्ध्वा' इत्यर्थः । 'मननशीलत्वम् इति भाष्यानुसारेणाह– **मुनिर्मननशील इति** ।। 'उपादत्ते' इत्युक्तमेवाह– **यस्मादेवमिति** ।। एवं सर्वमन्तृत्वप्रकारेण मननं मुनिशब्देन यथा लभ्येत तथा व्युत्पादयति– **मन ज्ञान इति** ।। 'मनेरुच्चोपाधायाः' इति सूत्रेण मनेरिन्प्रत्ययः, उपधाया अकारस्योकार इति भावेन 'इकारप्रत्ययः उकारश्च' इत्युक्तम् । मुनिशब्देन ज्ञानित्वमात्रप्राप्तावपि मननशीलत्वलाभप्रकारमाह मुनेर्भावश्च मौनम्, तच्च मनन-

शीलत्वाख्यम् । **युक्तिभिरनुसन्धानमिति** ।। **आगमार्थस्य** वेदवैदिकग्रन्थार्थस्य । आचार्योपदेशाद् उपजायमानं ज्ञानम् आगमजन्याख्यं श्रावणं तदेव पाण्डित्यं नाम । आगमार्थस्य श्रुतस्य युक्त्यनुगृहीतं ज्ञानं मननम् । तस्यैव मननस्य नैरन्तर्येण आपादनं मननशीलत्वाख्यं मौनमुच्यते । तदिदं वाङ्नियमनाद् अन्यत् मनःकार्यं मानसं तप इति युक्तमुक्तमिति भावः ।

यद्यपि **'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्य अथ मुनिः'** इति बृहदारण्यकश्रुतिः । 'ब्राह्मणः ब्रह्म अणितुं योग्यः, पाण्डित्यम् आगमज्ञानम्, बाल्यं युक्तिसहितं बलयुक्तत्वात् मौनम् उपासनाजनितम्' इति तद्भाष्यानुसारेण तत्त्वप्रकाशिकायाम् 'यो ब्रह्मप्राप्तियोग्योऽसौ आगमजं ज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत् । तदुभयलाभानन्तरं ध्यानी भवति' इति मुनिशब्देन ध्यानी व्याख्यातः । तथापि मुनिशब्दस्य मननशीलत्वम् अर्थान्तरमप्यत्राभिमतम् । अत एव 'मननशीलत्वम्' इति भाषितेऽर्थे 'अथ मुनिः' इति श्रुतिः सम्मतित्वेनोदाहृता । अत एव 'सर्वं हेदं मतम्' इति श्रुतिरपि मननशीलत्वमेव मुनिशब्दप्रवृत्तौ निमित्तमाहेति तदनुसारेणैव व्याख्यातमिति न विसंवादशङ्कावकाशः ।

केचित्तु 'मननशीलः' इत्यत्र मननशब्देन ध्यानमेव ग्राह्यम्, तत्त्वप्रकाशिकाऽनुसारात् । ध्यानमननयोरुभयोरपि मानसतपस्त्वसम्भवेन ध्यानग्रहणे बाधकाभावाच्च । बाल्यशब्देन युक्तिभिरनुचिन्तनरूपं प्रसिद्धं मननमेव विवक्षितम् । 'आगमार्थस्य युक्तिभिरनुसन्धानम्' इति टीकाऽपि । युक्तिभिरनु पश्चात् युक्तिभिरनुचिन्तनरूपमननानन्तरम्, आगमार्थस्य भगवतो विषये सन्धानं मनसः सम्यङ्निधानम् इति यावदिति व्याख्येयम् । एवं च न तत्त्वप्रकाशिकादि विरोध इत्याहुः । तत्र भाल्लवेयश्रुत्युदाहरणं भाष्यकारीयं मननमेव प्रसिद्धं मुनिशब्दवृत्तिनिमित्तम् इत्यर्थे क्रियमाणं नातीव चतुरस्रम् इत्यपरे ।

एवं मननशीलत्वमेव मौनशब्दार्थः तर्हि तस्य मानसतपस्त्वं कथं स्यात् इति पृच्छति– **किन्त्विति** ।। उत्तरमाह– **अत्रेति** ।। 'मौनमात्मविनिग्रहः' इति गीतायाम् । **लक्ष्यते** मौनशब्देन । लक्षणाबीजसम्बन्धस्फोरणायोक्तं– **तत्कारणमिति** ।। 'मनसा वा अग्रे सङ्कल्पयति, अथ वाचा व्याहरति, तस्मात् मन एव पूर्वरूपम्, वागुत्तररूपम्' इत्यादिना मनोव्यापारपूर्वकत्वावगमाद्वाग्व्यापारस्य तन्नियमे साऽपि नियता भवतीति भावः । **कश्चित्** शङ्करः । तथा च तदीयं भाष्यम् 'वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण

कारणमुपलक्ष्यते मनःसंयमो मौनमिति' इति । 'सर्वतः सामान्यरूप आत्मविनिग्रहः, वाग्विषय-स्यैव मनसः संयमो मौनमिति विशेषः' इति शङ्करेण भाषितत्वान्न पुनरुक्तिः इत्यत आह– **कथञ्चित् परिहारेऽपीति** ।। आत्मनिग्रहपदेनैव मौनग्रहणे सम्भवति सामान्यविशेषाभावे पुनरुक्तिं परिहरतोऽकौशलमेवेति भावेन 'कथञ्चित्' इत्युक्तम् ।। १६ ।।

**गीताक्षरार्थस्तु मनः प्रसाद इति** ।। मनःप्रसादः प्रसन्नता प्रायेण विषयेष्वप्रवृत्तिः । सौम्यत्वम् अक्रौर्यं मौनं मननशीलत्वं न त्वभाषणत्वम् । तस्य मानसत्वाभावादिति भाष्ये स्पष्टम् । आत्मविनिग्रहः विषयेभ्यो मनसः प्रत्याहारशब्दितो निरोधः । विषयेभ्यः प्रत्याहृतस्य मनसो हरौ स्थापनमित्यपि आहुः । भावसंशुद्धिः आशये नानारागराहित्यम् । व्यवहारे मायाराहित्यमिति अन्ये । इत्येतन्मानसं तप उच्यते ।। १६ ।।

**भावदीपिका (श्री.टि.)– ।। यस्मादेवमिति ।।** 'यद् अनेन हीदं सर्वं मतं तस्मात् स मुनिः, यस्मात् स मुनिः तस्मत्तं मुनिरित्याचक्षते' इत्यर्थः । **मन ज्ञान इति** ।। अत्र नकारस्थः अकार उच्चारणार्थः । 'मन्' इत्येव धातुः, तस्मात् इकारप्रत्यये उपधाभूतस्य मकार-स्थस्याकारस्य उकारादेशे मुनिरिति भवतीति द्रष्टव्यम् । मौनशब्दफलितार्थं दर्शयति– **आगमार्थस्येति** ।। कथं तर्हि मानसं तपः इति पृच्छति – **किन्त्विति** ।। उत्तरमाह– **अत्रेति** ।। 'मुनिर्मननशीलो भवति' इत्यत्र मननशब्देन प्रसिद्धमननविवक्षायां बाल्यशब्देन पुनरुक्त्यापत्तेः, अतो 'युक्तिबलोपेतत्वं योग्यतारूपम्', 'मननशीलो भवति' इति तु फलोपधानं व्याख्येयम् । एवं व्याख्याने तत्त्वप्रकाशिकाविरोधः । अतो मननशब्देन ध्यानं ग्राह्यम् । ध्यानमननयोरुभयोरपि मानसतपस्त्वसम्भवेन ध्यानग्रहणे बाधकाभावाद् बाल्यशब्देन प्रसिद्ध-मननमेवेति मन्तव्यम् । 'आगमार्थस्य युक्तिभिरनुसन्धानम्' इत्युत्तरवाक्यमपि युक्तिभिरनु चिन्तनरूपमननानन्तरम् आगमार्थस्य भगवतो विषये सन्धानं मनःसन्धानं ध्यानमिति यावदिति योज्यम् । **तत्कारणमिति**। वाङ्नियमे करणमित्यर्थः ।। 'मनसा वा अग्रे सङ्कल्पयति, अथ वाचा व्याहरति' इति श्रुतेर्मनोनियमनस्य वाङ्नियमकारणत्वादिति भावः । 'कारणम्' इति लक्षणाबीजसम्बन्धोपपादनायोक्तमिति द्रष्टव्यम् । मौनपदेन वाङ्नियमकारणमनोनियमो लक्ष्यते । 'आत्मविनिग्रह' इत्यनेन चक्षुरादीन्द्रियनियमोऽभिप्रेत इति न पुनरुक्तिः इत्यत आह– **कथञ्चिदिति** ।। वाङ्नियमहेतुत्वेन उक्तमनोनियमेनैव चक्षुरादीन्द्रियनियमनस्यापि लब्धत्वात् पृथक् न वक्तव्यमित्याशयेन 'कथञ्चित्' इत्युक्तम् । आत्मशब्दस्य चक्षुरादिवाचित्वाभावाभि-

प्रायेण वा 'कथञ्चित्' इत्युक्तमिति द्रष्टव्यम् । **मुख्यार्थेति** ।। मौनशब्दस्य मननशीलत्व-रूपमुख्यार्थः ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **अङ्गसौष्ठवं सौम्यत्वमिति** ।। 'सौम्यं तु सुन्दरे प्रोक्तम्' इत्यमरेण सौम्यशब्दस्य सुन्दरार्थकत्वोक्तेरिति भावः । भाष्ये 'सौम्यत्वमक्रौर्यम्' इति सोम इव सौम्यः इवार्थे 'शाखादिभ्यो यः' इति यः । ततः स्वार्थे प्रज्ञाद्यण् , तस्य भावः सौम्यत्वमिति बोध्यम् । 'पाण्डित्यमागमज्ञानं बाल्यं युक्तिसहायता' इति प्रमाणानुसारेण व्याचष्टे– **युक्तीत्यादिना** ।। **मननशील इति** ।। यद्यपि 'मौनं तूपासनासिद्धिः' इत्युक्तेः 'ध्यानमेव मौनम्' इत्यन्यत्रोक्तम् । तथाऽपि मौनं मननशीलत्वमित्यर्थे श्रुतेरुक्तत्वात् तदानुकूल्यायैवं व्याख्यातम्. प्रकारान्तरत्वाच्च न विरोधः ।'मनेरुच्चोपधायाः' इति मनेरिन् उपधाकारस्य चोकार इत्याह– **मनज्ञान इत्यादिना** ।। अनुबन्धलोपाभिप्रायेणेकार इत्येवोक्तम् ।

ननु मुनिशब्दस्य मननशक्तिशीलार्थत्वेऽपि 'मौनं मननशीलत्वम्'इत्यत्र कथं श्रुतिर्मानमित्यत आह– **मुनेर्भाव इति** ।। ननु 'मन ज्ञाने' इत्युक्तेर्ज्ञानमेव मननम्, । तस्य च मनोनियमः । तस्य च मनोमात्रजन्यत्वाभावात् मानसतपस्त्वं कथमित्यतो मननशीलत्वं निर्वक्ति– **तच्चेति** ।। अनुसन्धानस्य मनोमात्रजन्यत्वाद्युक्तमुक्तमिति भावः । तर्हि मानस-तपस्त्वं कथमिति पृच्छति– **किन्त्विति** ।। उत्तरमाह– **अत्रेति** ।। ननु मौनपदेन वानिङ्ग्यमनकारणत्वेनैव मनोनियमो लक्ष्यते । आत्मविनिग्रहपदेन तु चक्षुरादिनियमहेतुत्वेन विषयस्मरणनियमहेतुत्वेन वा मनोनियमो लक्ष्यत इति न पुनरुक्तिरित्यत आह– **कथञ्चिदिति** ।। यद्वा ननु वाग्विषयस्यैव मनसः संयमो मौनपदेन लक्ष्यते । आत्मविनिग्रहस्तु सर्वतो मनोविरोधात्मकत्वात् सामान्यरूप इति न पुनरुक्तिरित्यत आह– **कथञ्चित्परिहारेऽपीति** ।। आत्मविनिग्रहपदेन तल्लाभेऽपि सामान्यविशेषभावेन पुनरुक्तिं वदतो गौरवमित्यभिप्रेत्य कथञ्चिदित्युक्तम् ।। १६ ।।

## श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
## अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ।। १७ ।।

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** एवं शरीरादिभेदेन त्रिविधमपि तपः सात्त्विकादिभेदेन त्रिविधमित्युच्यते– **श्रद्धयेत्यादिभिस्त्रिभिः** । तत् शरीरादिभेदेन त्रिविधमपि

श्लोकः १८-२०

तपः परया प्रकृष्टया श्रद्धया आस्तिक्यनिष्ठया अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः युक्तैः भगवदर्पणादियोगयुक्तैः । न केवलं तपस एवैतदुच्यते, किन्तु यज्ञदानयोरप्येतदनुसन्धेयम् इत्यन्यतोऽवसेयम् । नरैः पुरुषैः तप्तम् अनुष्ठितं तपः सात्त्विकं सात्त्विकजीवस्वरूपज्ञापकं परिचक्षते कथयन्ति शिष्टाः ।। १७ ।।

**सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।**
**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ।। १८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु सत्कारेति** ।। सत्कारः 'साधुरयं तपस्वी ब्राह्मणः' इत्यादिवाक्पूजारूपः साधुकारः । मानः प्रत्युत्थानाभिवन्दनादिरूपं माननम् । पूजा पादक्षालनअर्चनादिरूपा गौरवितप्रीतिहेतुक्रिया, एता एव अर्थः प्रयोजनं यस्य तत् सत्कारमानपूजार्थं दम्भेनैव परवञ्चनेनैव यत् तपः क्रियते तदिह विद्वत्सदसि राजसं प्रोक्तम् । तस्यैव गर्हितत्वं दर्शयितुमुक्तम् – 'चलं कादाचित्कफलम् अध्रुवं क्षयिष्णुफलकं च' इति । मोक्षसाधनातिरिक्तफलकं सर्वं तपो राजसमिति भावः ।। १८ ।।

**मूढग्राहेणाऽऽत्मनो यत् पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ।। १९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु मूढेति** ।। मूढग्राहेण अविवेककृतेन दुराग्रहेण, मूढोपदेशेनेति एके । आत्मनः पीडया कायस्य कर्शनेन केशोल्लुण्ठनादिरूपेण यत् तपः क्रियते परस्योत्सादनार्थं नाशार्थम् आभिचारादिरूपं वा तत्तामसमुदाहृतम् ।। १९ ।।

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ।। २० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** इदानीं प्रतिज्ञातो दानभेद उच्यते– **दातव्यमित्यादिभिस्त्रिभिः** । देशे पुण्यदेशे काले पुण्यकाले पात्रे 'अक्षय्यं ब्राह्मणे दानम्' इत्यत्रेव 'पात्रे' इति सप्तमी । समुपनत एव विहितत्वाद् विष्णुप्रीतये दातव्यमिति एवं श्रद्धया यद् अनुपकारिणे प्रत्युपकारमकुर्वते ब्राह्मणाय दीयते क्रियते तद् दानं सात्त्विकं सात्त्विकजीव-स्वरूपज्ञापकं स्मृतं धर्मग्रन्थेषु निबद्धम् ।। २० ।।

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ।। २१ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु– 'यत्तु' इत्यत्र सात्त्विकदाने वैलक्षण्यद्योतनाय तुशब्दः । यत्तु दानं प्रत्युपकारार्थं 'काले प्रसक्तोऽयं मां प्रत्युपकरिष्यति इत्येवं बुद्ध्या इति यावत् । फलं स्वर्गादिकम् उद्दिश्य वा पुनः दीयते परिक्लिष्टं चित्तखेदयुक्तं यथा भवति तथा तद्राजसमुदाहृतम् शास्त्रेषु ।। २१ ।।

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ।। २२ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अदेशेति ।। अदेशकाले द्वन्द्वैकवद्भावात्. म्लेच्छाशुच्यादिसङ्कीर्णदेशे अकाले पुण्यहेतुत्वेन अप्राख्याते निषिद्धदेशे निषिद्धकाले वा अपात्रेभ्यः मूर्खनटविटादिभ्यः, चशब्दः तुशब्दार्थस्सन् सात्त्विकराजसवैलक्षण्यद्योतकः । दीयते क्रियते असत्कृतं देशकालपात्रसम्पत्तौ वा प्रियवन्दनपादप्रक्षालनादिसत्काररहितम् अवज्ञातं पात्रपरिभवयुक्तं तद् एवंभूतं दानं तामसं तामसजीवस्वरूपज्ञापकम् उदाहृतमार्यैः ।। २२ ।।

**ओ३म् तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।। २३ ।।**

## भाष्यम्

**पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह– ओ३म् तत्सत् इत्यादिना ।।**

भावप्रदीपिका (प.टी.)– ननु कथं गुणभेदकथनपराध्यायेऽन्यदुच्यत इत्यत आह– **पुनश्चेति** । 'अफलाकाङ्क्षिभिः' इत्यादिना सात्त्विककर्मणः स्वरूपमुक्तम्, तदेव सेतिकर्तव्यमुच्यत इत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– ॐइत्यादिकं तु प्रकृतासङ्गतं कथमुच्यते? इत्यत आह–

श्लोकः २३

**पुनश्चेति ।।** कर्म इति यज्ञ उच्यते । आदिपदेन तपोदाने । इतिकर्तव्यता इत्थम्भावः । **विधानार्थं** प्रतिपादनार्थम् । 'अफलाकाङ्क्षिभिः' इत्यादिनोक्तत्वात् 'पुनश्च' इत्युक्तम् । यज्ञतपोदानानां सात्त्विकत्वादि हेतवो असाधारणधर्माः प्रागुक्ताः । साधारणांस्तु वक्तुं पुराकल्पादिरूपमर्थवादमाह इत्यर्थः ।।

**भावबोधः (र.टि.)– ।। इत्थम्भाव इति ।।** 'ओ३म् तत् सत्' इतिशब्दत्रयार्थ-भगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दत्रयार्थभगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञतपोदानानुष्ठानं कार्यमित्येवं यज्ञास्तदनुष्ठानोपयुक्ताङ्गकलाप इत्यर्थः । अर्थाभावे विध्यभावात् कल्प्याविध्यभिप्रायं भाष्यमिति भावेनाऽह– **प्रतिपादनार्थमिति ।। प्रागुक्ता इति ।।** 'अफला-काङ्क्षिभिः' इत्यादिनोक्ता इत्यर्थः ।। **साधारणांस्त्विति ।।** ज्ञानभक्त्यादिरूपानित्यर्थः ।। **पुराकल्पेति ।।** अनेककर्तृकचरितानुवादमित्यर्थः ।। 'मोक्षकाङ्क्षिभिः' इति बहुवचननिर्देशादिति भावः । **आदिपदेन** एककर्तृकचरितानुवादाख्यपराकृतिरूपमिति गृह्यते । तेन 'विहिताः' इति कर्तुरेकत्वप्रतीतेरिति ज्ञेयम् ।।

**भावरत्नकोशः (सु.टि.)– ।। प्रकृतेति ।।** गुणनिमित्तकश्रद्धादिभेदस्यैव एतदध्याय-प्रतिपाद्यत्वेन प्रकृतत्वादिति भावः । ननु कर्मण एतदध्यायेऽप्रकृतत्वात् कर्मादेरितिकर्तव्यता-प्रतिपादनं प्रकृतासङ्गतम् इत्याशङ्कापरिहाराय कर्मादिशब्दार्थमाह– **कर्मेति यज्ञ इति, तपोदान इति, इत्थम्भाव इति ।।** 'ओम् तत् सद्' इति शब्दत्रयार्थभगवज्ज्ञानभक्त्यादिपूर्वकं फलानभिसन्धानेन ओमादिशब्दार्थं भगवन्तमुद्दिश्य ब्राह्मणैः सह यज्ञतपोदानान्यनुष्ठेयानि इत्येवं वक्ष्यमाणो यज्ञाद्युपयुक्ताङ्गकलाप इत्यर्थ इति स्वामिनः । आहत्य विधिप्रत्ययादर्शनादाह– **प्रतिपादनार्थमिति ।।** अर्थवादकल्प्यविध्यभिप्रायं भाष्ये विधानमिति भावः ।। **उक्तत्वात्** फलाभिसन्धानाभावमनःसमाधानादिरूपेतिकर्तव्यताया उक्तत्वात् । तर्हि पुनरुक्तिः इत्यत आह– **यज्ञतपोदानानामिति ।। सात्त्विकत्वादिहेतवः** सात्त्विकत्वराजसत्वतामसत्वप्रयोजकाः । **प्राक्** 'अफलाकाङ्क्षिभिः' इत्यत्र, 'अभिसन्धाय तु' इत्यत्र, 'विधिहीनमसृष्टान्नम् इत्यत्र च यज्ञस्य । एवं तपोदानयोरपि द्रष्टव्यम् ।

**साधारणान्** ज्ञानभक्त्यादिरूपान् । पुराकल्पशब्देन अनेककर्तृकचरितानुवादरूपोऽर्थवादो गृह्यते । 'ब्रह्मवादिनाम्' इति 'मोक्षकाङ्क्षिभिः' इति च बहुवचनश्रवणात् । आदिपदेन

'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते....' इति निन्दार्थवादग्रहः । तेनापि श्रद्धापदोपलक्षितज्ञानभक्त्यादीतिकर्तव्यताया अवश्यम्भावावगमात् । 'तेन ब्राह्मणा वेदा यज्ञाश्च विहिताः' इति एककर्तृकचरितानुवादरूपपरकृतिशब्दितार्थवादो वा आदिपदार्थः ।

**भावदीपिका (श्री.टि.)–** ।। **प्रकृतेति** ।। गुणनिमित्तश्रद्धादीनां भेदमाश्रित्य जीवस्वरूपकथनं हि प्रकृतम्, तदसङ्गतमित्यर्थः । प्रकृतसङ्गतिमुपपादयति – **यज्ञेत्यादिना** ।। 'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते' इति यज्ञे सात्त्विकत्वहेतवः अफलाकाङ्क्षिकृतत्व-विधिदृष्टत्वादयोऽसाधारणधर्मा उक्ताः । 'श्रद्धया परया तप्तम्' इति तपसि सात्त्विकत्वहेतुभूतः परश्रद्धावत्कृतत्वरूपोऽसाधारणधर्म उक्तः । 'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे' इति दाने सात्त्विकत्वहेतुभूतोऽनुपकारिणं प्रति दातव्यमिति बुद्ध्या देयत्वरूपोऽसाधारणधर्म उक्त इत्यवधेयम् । **साधारणान्** 'ओं तत्सत्' इत्यादींश्च । 'विहिताः पुरा' इत्यनेन **पुराकल्पः** । आदिपदेन 'क्रियन्ते मोक्षकाङ्क्षिभिः' इत्यादिनोच्यमाना परकृतिर्ग्राह्या ।।

**भावप्रकाशः (कृ.टि.)–** ननु कर्मशब्देनैव तप आदेर्लाभसम्भवादादिपदं व्यर्थमित्यत आह– **कर्मेति यज्ञ इति** ।। नन्वत्र यज्ञादीनां सात्त्विकत्वादिप्रयोजकमुच्यते न त्वङ्गम् । तत्कथमितिकर्तव्यतेत्युक्तमित्यत आह– **इत्थम्भाव इति** ।। धर्म इत्यर्थः । विधिप्रत्यया-दर्शनाद्विधानार्थमिति कथमुक्तमित्यत आह– **प्रतिपादनार्थमिति** ।। तर्हि पुनरुक्तिरित्यत आह– **यज्ञतपोदानानामिति** ।। **पुराकल्पादीति** ।। आदिपदेन 'अश्रद्धया हुतम्' इति निन्दासङ्ग्रहः ।

# भाष्यम्

**परस्य ब्रह्मणः ह्येतानि नामानि ।।**

भावप्रदीपिका (प.टी.)– तत्र पूर्वार्धं व्याचष्टे– **परस्येति ।**

प्रमेयदीपिका (ज.टी.)– ब्रह्मशब्दस्य हिरण्यगर्भाद्यर्थतां निर्देशशब्दस्य च भावार्थतां वारयितुं व्याख्याति– **परस्येति ।।** निर्दिश्यतेऽनेनेति निर्देशः नाम । कुत एतत्? इत्यतो हि इत्युक्तम् । भावार्थत्वे 'ओ३म् तत् सत्' इत्येतैः सामानाधिकरण्यानुपपत्तेः नामार्थत्वमेवाङ्गीकार्यम् । ॐआदिकं च परब्रह्मनामत्वेन प्रसिद्धमित्यर्थः ।।

श्लोकः २३

**भावबोधः (र.टि.)– ।। एतदिति ।।** ब्रह्मशब्दस्य परब्रह्मार्थत्वं निर्देशशब्दस्य ओमादिनामार्थत्वं चेत्यर्थः ।

**भावदीपः (रा.टि.)– ।। भावार्थतामिति ।।** 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्तभावार्थतामित्यर्थः ।। निरुपपदाद् 'दिश अतिसर्जने' इत्यतो भावे घञन्तोऽयं शब्द इति भ्रान्तिं वारयितुमित्यर्थः । तथात्वे निर्देशशब्दस्योक्तिरित्यर्थापत्तेरिति भावः । निर्दिश्यते व्यवह्रियते अर्थोऽनेनेति करणे घञन्तोऽयं शब्द इत्यर्थः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। भावार्थतामिति ।।** ओं तत्सदित्यादेर्निर्देशनरूपत्वादिति भावः ।

**भावरत्नकोशः (सु.टि.)– ।। हिरण्यगर्भार्थतां** चतुर्मुखबृहस्पतिवेदाद्यर्थताम् । **भावार्थतां** 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इत्युक्तधात्वर्थवाचिताम् । **एतद्** ब्रह्मनिर्देशशब्दयोः परब्रह्मनामार्थत्वम् । **सामानाधिकरण्यानुपपत्तेः** पदानां वर्णात्मकद्रव्यरूपाणां निर्देशानुरूपक्रियाऽभेदानुपपत्तेः ।।

**भावदीपिका (श्री.टि.)– ।। भावार्थतां** धात्वर्थभूतव्यवहारणार्थताम् । **व्याख्यातीति ।।** करणव्युत्पत्तिमाश्रित्येत्यर्थः । **निर्दिश्यते** व्यवह्रियते । तदेव विवृणोति– **भावार्थत्व इति ।।**

**भावप्रकाशः (कृ.टि.)– ।। एतदिति ।।** ब्रह्मनिर्देशशब्दयोः परब्रह्मनामार्थत्वमित्यर्थः ।

## भाष्यम्

**'ओतं जगद् यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च ।**
**सर्वैः शुभैश्चाभियुतो न चान्यैः ओ३म् तत् सदित्येनमतो वदन्ति'**

**इति हि ऋग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः ।**

भावप्रदीपिका (प.टी.)– ब्रह्मण ओमादिनामवत्त्वे श्रुतीः उदाहृत्यास्पष्टांशं विवृणोति– **ओतमिति । वेदोक्तत्वेन परोक्षत्वात् तच्छब्दवाच्य इत्यर्थः ।**

प्रमेयदीपिका (ज.टी.)– तामेव प्रसिद्धिं दर्शयति– **ओतमिति ।।** ओतं प्रविष्टम्

**आश्रितं यत्र परमेश्वरे यः स्वयं च जगति ओतः प्रविष्टः । पूर्णः, अनुपचारतः मुख्यया वृत्त्या । अत्र 'ओतं जगद् यत्र' इत्यादिना ॐशब्दस्य निमित्तद्वयेन भगवति वृत्तिर्दर्शिता । 'अवतेः टिलोपश्च'इति वचनात् । सर्वैः इत्यनेन सच्छब्दस्य । साधुभावे च ' (१७.२६) इति वक्ष्यमाणत्वात् । तच्छब्दस्य तु न केनापि । अतः ॐ तत् सत् इत्ययुक्तमित्यत आह– द्वितीयेति ।। 'वेदोक्तः' इति द्वितीयपादः तच्छब्दार्थ-व्याख्यानपरः । तत् इति हि नित्यपरोक्षत्वमुच्यते । नचेश्वरस्वरूपमनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात् तत् इत्युच्यत इति भावः ।।**

**भावबोधः (र.टि.)– ।। अवतेष्टिलोपश्चेति ।।** प्रवेशनार्थस्यावतेर्धातोर्मन्प्रत्यये टिलोपे च अवम् इति स्थिते 'ज्वर त्वर' इति सूत्रेण वकारस्योपधारूपकारस्य च उकारद्वये तयोः सवर्णदीर्घे 'सार्वधातुकार्धधातुकयोः' इति गुणे ओमिति रूपमिति भावः **।। साधुभावेति ।।** शुभत्वमेव साधुभाव इत्यर्थः ।

**भावदीपः (रा.टि.)– ।। निमित्तद्वयेनेति ।।** सर्वाश्रयत्वसर्वत्रप्रतिष्ठितत्वरूपनिमित्त-द्वयेनेत्यर्थः ।। **अवतेः इति ।।** औणादिकसूत्रेण 'गतिकान्तिप्रवेश'इति प्रवेशार्थकादवतेर्मन्-प्रत्यये तस्य टिलोपे 'ज्वरत्वर'इति ऊठि गुणः ।। ननु तच्छब्दो वेदोक्तं वक्तीति श्रुतिगत-द्वितीयपादेन गम्यते । तथाच परोक्षेऽपि ईश्वरे प्रत्यक्षावसरेऽप्यनुमानप्रवृत्तिरस्तु । तथाच **वेदोक्तरूपः** इत्यनेन कथं तच्छब्दार्थो भगवानिति व्याख्यानप्राप्तिः? इत्यत आह **न चेश्वरेति ।।** शास्त्रयोनिसूत्रे भाष्यादौ तथोक्तेरिति भावः ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। अवतेष्टिलोपश्चेति सूत्रादिति ।।** अवतेर्धातोर्मन्-प्रत्ययः, मन्प्रत्ययस्य च टिलोपो भवतीति सूत्रार्थः । तथाच प्रवेशार्थकादवतेः धातोः मन्प्रत्यये टिलोपे च अवम् इति स्थिते च्छ्वोः शूडनुनासिके च इत्येतत्पूर्वसूत्रस्य अनुनासिके च इत्यस्य ज्वरत्वर इति सूत्रे अनुवृत्तेः धातुवृत्तिकारेण व्याख्यातत्वेन मस्य अनुनासिकतया अवतेर्मनु-विसुषीत्यादिना कित्वेन किति पिततया वा तस्मिन् परतो ज्वरत्वरेति सूत्रेण एवकारस्य तदुपधाकारस्य च ऊठि उकारद्वयस्य अकः सवर्णे दीर्घ इति सवर्णदीर्घे सार्वधातुकार्धधातु-कयोरिति गुणे ओमिति रूपसिद्धिः ।। नचैवं किति चेति गुणनिषेधप्रसङ्गः । ओमास इत्यादि-वत् बाहुलकात् तदुपपत्तेरिति भावः ।।

श्लोकः २३

।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे सप्तदशोध्यायः ।।

**भावरत्नकोशः (सु.टि.)**– प्रवेशार्थस्य अवतेः 'ओम्' इति रूपमिति तदर्थं वदंस्तत्तात्पर्यमाह– **ओतं प्रविष्टमाश्रितमिति** ।। **यत्रेति** ।। परमेश्वरस्य प्रस्तुतत्वात् चशब्दाच्चाह– **यश्चेति** ।। **स्वयं** परमेश्वरः । 'जगत्' इति वर्तते । 'ओतम्' इति च लिङ्गव्यत्ययेनानुवर्तत इति भावेनोक्तम्– **जगत्योतः प्रविष्ट इति** ।। पूर्णः देशतः कालतो गुणतश्च निरवधिकः । द्वितीयपादः तच्छब्दार्थ इति भाष्यं घटयितुमाह– **अत्र ओतमिति** ।। **निमित्तद्वयेन** जगत्प्रवेशाधिकरणत्वेन, जगत्प्रविष्टत्वेन चेति निमित्तद्वयेन । **अवतेष्टिलोपश्चेति** ।। अवतिधातोर्मन्प्रत्ययः, प्रत्ययस्य टिलोपश्च इति औणादिकसूत्रार्थः । अत्र च प्रवेशार्थाद् अवतेर्मन्प्रत्यये प्रत्ययस्य टिलोपे 'ज्वरत्वर...' इत्यादिना अकारवकारयोः ऊठि, तयोः सवर्णदीर्घे, 'सार्वधातुकार्धधातुकयोः' इति गुणे च 'ओम्' इति रूपमिति भावः । सच्छब्दस्य साधुभावेन निमित्तेन भगवति वृत्तिर्दर्शिता इत्यनुवर्तते । उपपादयति– **साधुभावे चेतीति** ।। **साधुभावः** शुभधर्मः । शुक्लादिशब्दस्य शौक्ल्यादिगुणनिमित्तेन तद्वति प्रवृत्तिरिव सच्छब्दस्य शुभधर्मनिमित्तेन तद्वति ब्रह्मणि प्रवृत्तिः । अत एव 'शुभैर्युतः' इति वचनमिति भावः । **न केनापि** निमित्तेन भगवति प्रवृत्तिर्दर्शिता इत्यनुवर्तते । किं ततः इत्यत आह– **अत इति** ।। 'वेदोक्तेति द्वितीयपादः' इति वदन् 'अनुपचारतः' इत्येतद् अनुपचारतः मुख्यया वृत्या वेदोक्तस्वरूप इत्यत्रापि संयोज्यमित्यभिसन्धत्ते । 'परोक्षे तदिति जानीयात्' इत्यभियुक्तवचनादाह– **नित्यपरोक्षत्वमिति** ।। ननु नित्यपरोक्षत्वेऽपि अनुमानवेद्यत्वसम्भवात् कथं वेदोक्तस्वरूपत्वं तच्छब्दप्रवृत्तिनिमित्तमित्युच्यत इत्यत आह– **न चेश्वरस्वरूपमिति** ।। शास्त्रयोन्यधिकरणे तथा स्थितेरति भावः ।।

**भावदीपिका (श्री.टि.)**– ।। **निमित्तद्वयेनेति** ।। 'जगद्यत्र ओतम्, स्वयं च जगत्योतः' इति निमित्तद्वयेनेत्यर्थः । **अवतेष्टिलोपश्चेति वचनादिति** ।। 'अव रक्षणगतिकान्तिप्रीतितृप्तिअवगमप्रवेशश्रवण..' इत्यादिधातोरत्र प्रवेशार्थकस्य अवतेर्मनूप्रत्ययः, प्रत्ययस्य टेर्लोप इति उणादिसूत्रार्थः । एवञ्च 'अव' इत्यस्मात् मनूप्रत्यये तत्र टीभूतस्य 'अन्' इत्यस्य लोपे 'अव् म्' इति जाते, 'ज्वर–त्वर'.. इत्यादिनोपधाऽकारस्य वकारस्य

चोठि कृते 'ऊ ऊ' इति जाते सवर्णदीर्घे 'ऊ' इति जाते 'सार्वधातुकार्धधातुकयोः' इति गुणे च सति 'ओम्' इति सिद्ध्यतीति भावः । नन्वत्र न 'ज्वर त्वर..' इति सूत्रेण ऊठः प्राप्तिः। तत्र क्वौ झलादौ क्ङिति परतस्तद्विधानात्, अत्र तदभावादिति चेत् उच्यते – 'छ्वोः शूड्नुनासिके च' इति पूर्वसूत्राद् 'अनुनासिके च' इत्यनुवर्तते । एवं चानुनासिकस्य मकारस्यात्र परतो विद्यमानत्वात् ऊठ् स्यादेव । यद्वा 'ओतुः' इत्यादिशब्दानाम् अकित्यपि बाहुलिकत्वेनोठमङ्गीकृत्य वैयाकरणैः साधितत्वेन, प्रकृतेऽकित्यपि ऊठः प्राप्तिरिति ध्येयम् ।

वस्तुतस्तु 'छ्वोः शूड्नुनासिके च' इत्यनेनैवात्र धातुवकारस्योठि 'आद्गुणः' इति गुणे च कृते 'ओम्' इति रूपम् । अत्र 'एत्येधत्यूठ्सु' इति छन्दस्त्वान्न भवति । अत्र कोङ्कारस्य वर्णत्रयात्मकत्वप्रसिद्धिरप्यनुकूला भवतीति ज्ञेयम् । अन्ये तु अवतेर्मनूप्रत्यये बाहुलिकेन वकारस्य सम्प्रसारणे, गुणे च सति 'ओम्' इति सिद्ध्यतीत्याहुः इत्याद्यस्मादाचार्यचरणकृत-सुधाटिप्पण्यनुसारेण आलोचनीयमित्युपरम्यते ।

**साधुभावे चेति** ।। शुभत्वमेव साधुभावः । **इत्येतदयुक्तमिति** ।। 'ओं सत्' इत्येव वक्तव्यमिति भावः । **नित्यपरोक्षत्वमिति** ।। तथा चेश्वरस्यापि नित्यपरोक्षत्वादिति भावः । नन्वनुमानवेद्यत्वेऽपि नित्यपरोक्षत्वार्थकतच्छब्दवाच्यत्वसम्भवात् कथं वेदैकवेद्यत्वेनैव तच्छब्द-वाच्यत्वम्? इत्यत आह– **न चेति** ।।

**भावप्रकाशः (कृ.टि.)–** द्वितीयपादस्तच्छब्दार्थः इति विशेष्योक्तौ बीजं वक्तुमाह– **अत्रौतमिति** ।। **अवतेष्टिलोपश्चेतीति** ।। अवतेर्मन् प्रत्ययः प्रत्ययस्य टिलोपश्चेत्यर्थः । न तु प्रकृतेष्टिलोपः । तथात्वे डिदित्येव ब्रूयादिति बोध्यम् । तथा च प्रवेशार्थादवतेर्मन् प्रत्ययस्त-ट्टिलोपः 'ज्वरत्वर' इत्यकारवकारयोरूठौ तयोः सवर्णदीर्घः । सार्वधातुकेति गुणश्चेति भावः । **साधुभावे चेति** ।। शुभधर्मे सच्छब्दवृत्तेर्वक्ष्यमाणत्वादित्यर्थः । तथा च शुक्लादिशब्दस्य शौक्ल्यादिनिमित्तेन तद्वति प्रवृत्तिवदत्रापि सच्छब्दस्य शुभधर्मनिमित्तेन तद्वति वृत्तिरित्याशयः । **न केनापीति** ।। न च द्वितीयपादस्तच्छब्दस्य वृत्तिप्रदर्शक इति वाच्यम् । ॐ सच्छब्दयो-रुक्तप्रवृत्तिनिमित्तकत्वे उदाहृतनियामकवत् प्रकृते तदभावेन द्वितीयपादस्य परमात्मानुवादकत्वा-दित्याशयात् । **नित्यपरोक्षत्वमिति** ।। 'परोक्षे तदिति विजानीयात्' इत्युक्तेरिति भावः । ननु नित्यपरोक्षत्वस्यानुमानैकवेद्यत्वेनाप्युपपत्तेः कथं वेदोक्तरूपत्वेन तच्छब्दप्रवृत्तिनिमित्तमुच्यत इत्यत आह– **न चेश्वरेति** ।। वैदिकेऽर्थे केवलानुमानप्रामाण्यानभ्युपगमादिति भावः ।

श्लोकः २३

# भाष्यम्

**'सदेव सोम्येदमग्र आसीत्' (छां.उ.६.२.१) इति च । 'ओं इति ब्रह्म' (तै.उ.१.८.१) इति च । तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिः व्यञ्जनम् ।**

भावप्रदीपिका (प.टी.)– एवमोमादिनामानि ब्रह्मणः सन्तीत्युक्त्वाऽन्यत्रापि तानि सन्तीत्युच्यते 'ब्राह्मणाः' इत्यादिना । तत्र तच्छब्देन ब्रह्मणा वेदविधानं च व्यक्तिरेवेत्याह– **तेनेति** । ब्राह्मणादयः परस्परौतत्त्वेन विहितास्तेन किञ्चिदोंशब्दस्तेष्वपीत्यर्थः ।

प्रमेयदीपिका (ज.टी.)– 'सत्' 'ओ३म्'शब्दयोः परब्रह्मनामत्वे श्रुत्यन्तरं चाह– **सदेवेति** ।। तेन इति निर्देशपरामर्श इति कश्चित्। तदसदिति भावेनाऽह– **तेनेति** ।। कुत एतत् । निर्देशस्य ब्राह्मणादिविधानायोगात् । निर्देशस्तुत्यर्थमिदमुच्यत इति चेन्न । भूतोक्तिसम्भवे तदयोगात् । ब्रह्मणाऽपि ब्राह्मणादिविधानानुपपत्तिः प्रयोजनाभावाद् इत्यत आह– **आत्मेति** ।। आत्मपूजया प्राणिनां सुखार्थं ब्राह्मणादयो विहिता इति सम्बन्धः । 'ब्राह्मणादिवत् वेदानामपि विधानं निर्माणमेव' इति प्रतीतिनिरासार्थमाह– **वेदेति** ।। व्यञ्जनमेव विधानं न निर्माणमित्यर्थः ।।

भावबोधः (र.टि.)– ।। **भूतोक्तीति** ।। परब्रह्मार्थत्वे च विद्यमानोक्तित्वसम्भवेऽविद्यमानार्थकस्तुत्यर्थत्वायोगादित्यर्थः ।।

भावदीपः (रा.टि.)– ।। **निर्देशपरामर्श इति** ।। **तेन** इत्यनेनेति योज्यम् । **भूतेति** ।। पूर्वं भूतस्य भूसत्तायाः परब्रह्मरूपविद्यमानस्यार्थस्योक्तित्वसम्भवे स्तुत्यर्थत्वायोगादिति भावः ।।

भावरत्नकोशः (सु.टि.)– 'तेन निर्देशेन ब्राह्मणादयो विहिताः' इति शङ्करेण भाषणादाह– **इति कश्चिदिति** ।। **निर्देशस्येति** ।। कर्तरि षष्ठी । **ब्राह्मणादिविधानायोगात्** ब्राह्मणवेदयज्ञनिर्माणकर्तृत्वायोगात् । 'निर्देशस्तुत्यर्थमिदमुच्यते' इति शङ्करभाष्यस्यानुवादः । **भूतोक्तिसम्भवे** तच्छब्दस्य ब्रह्मार्थकत्वेन यथास्थितार्थोक्तिसम्भवे **तदयोगात्** स्तुत्यर्थत्वेनाविद्यमानोक्तित्वयोगात् । **विधानानुपपत्तिः** निर्माणायोगात् । **प्रयोजनाभावात्** निर्माणेन

आप्तव्यप्रयोजनाभावात् । यतस्तत् पूर्णकाममिति भावः । नन्वत एव आत्मपूजापि न प्रयोजनम् इत्यतः आत्मपूजाशब्देन तत् कार्यं स्वजनसुखं लक्ष्यत इत्याह– **आत्मपूजयेति** ।। तथा चाऽऽहुः 'भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव' इति तेन ब्रह्मणा आत्मपूजया प्राणिनां सुखार्थम्' इति भाष्यम् अनन्वितम् इत्यतो गीतयाऽस्यान्वय इत्याह– **ब्राह्मणादय इति** ।। 'सर्वं वाक्यं सावधारणम्' इति न्यायं हृदि निधायाऽऽह– **व्यञ्जनमेवेति** ।। तद्व्यावर्त्यमाह– **नेति** ।।

**भावदीपिका (श्री.टि.)– ।। ब्राह्मणादिविधानेति** ।। 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा' इत्युक्तब्राह्मणादिनिर्माणायोगादित्यर्थः । **स्तुत्यर्थमिति** ।। स्तुतौ चाविद्यमानोक्तिर्युक्तेत्यर्थः । **भूतोक्तीति** ।। 'तेन' इत्यस्य परब्रह्मार्थत्वमङ्गीकृत्य विद्यमानोक्तित्वसम्भवे, अविद्यमानार्थकस्तुत्यर्थत्वायोगादिति भावः । आत्मपूजयाऽपि किं फलम् इत्यत आह– **आत्मपूजया प्राणिनां सुखार्थमिति** ।।

**भावप्रकाशः (कृ.टि.)– ।। भूतोक्तीति** ।। परब्रह्मार्थत्वे तथाभूतोक्तिसम्भवेनेत्यर्थः । नन्वात्मपूजार्थमित्ययुक्तम् । भगवत आप्तकामत्वादित्यत आह– **आत्मपूजयेति** ।।

## भाष्यम्

**मा तूक्ता पुरस्तात् ।। २३ ।।**

भावप्रदीपिका (प.टी.)– वेदनिर्माणे को विरोधः ? इत्यत आह– **मा त्विति** ।। २३,२४ ।।

**प्रमेयदीपिका (ज.टी.)– सकृच्छ्रुतस्य विहितशब्दस्य द्विधा अर्थकल्पनं कुतः? इति चेत् वेदापौरुषेयत्वस्य प्रमितत्वात् । किं तत्प्रमाणम्? इत्यत आह– मा त्विति ।। परमेश्वरस्य वेदव्यञ्जनं नाध्यापकवत् । किन्तु स्वातन्त्र्यमप्यस्तीति ज्ञापयितुं विधिग्रहणं कृतम् । वेदो हि विध्यात्मा अस्ति । 'विधिः', 'प्रेरणम्', 'नियोगः' इति चानर्थान्तरम् । नच नियोक्तारमन्तरेण नियोगः सम्भवति । नच शब्दादीनां नियोक्तृत्वं सम्भवति । लोकविरोधात् । न चोच्चारक एव नियोक्ता । 'मां उपासीत' इत्यादावव्यवस्थापातात् । तस्मात् स्वतन्त्रेण वक्त्रा भाव्यम् । न चैवं पौरुषेयत्वापत्तिः । अनादिसिद्धेनैव शब्दार्थसम्बन्धेन तस्य नियोक्तृत्वाभ्युपगमादिति ।।२३।।**

श्लोकः २३

**भाववोधः (र.टि.)– ।। लोकविरोधादिति ।।** लौकिकवाक्ये वक्तुरेव नियोक्तृत्व-दर्शनादिति भावः । **इत्यव्यवस्थापातादिति ।।** उच्चारकाणामनन्तत्वेन सर्वेषामपि तेषा-मस्मच्छब्दवाच्यत्वप्राप्त्योपास्यत्वे ब्रह्मोपास्यमिति व्यवस्था न स्यादित्यर्थः ।। २३ ।।

**भावदीपः (रा.टि.)– ।। मा त्वितीति ।।** द्वितीये 'देहिनोऽस्मिन्' इति श्लोक-व्याख्यानावसरे धर्मादिसिद्ध्यन्यथानुपपत्तिरूपप्रमाणमुक्तमित्यर्थः ।। **लोकेति ।।** लोके चेतन-स्यैव नियोक्तृत्वदृष्टेरिति भावः ।। **अव्यवस्थेति ।।** उच्चारकाणामनेकत्वेनानेकेषाम् अस्म-च्छब्दार्थत्वापत्त्या ब्रह्मैवोपास्यमिति व्यवस्था न स्यादित्यर्थः ।। २३ ।।

**भावरत्नकोशः (सु.टि.)– ।। द्विधाऽर्थकल्पनम्** ब्राह्मणयज्ञविषये निर्माणार्थकत्वम्, वेदविषये व्यञ्जनार्थकत्वम् इति द्विधाऽर्थकल्पनम् । **मा त्वितीति ।। द्वितीये** 'देहिनोऽस्मिन्' इति गीताव्याख्याऽवसरे धर्मादिसिद्ध्यन्यथानुपपत्तिरेव प्रमाणम् । 'अपौरुषेयत्वे' इति शेषः । ननु भाष्ये गीतानुसारेण 'वेदविधानं व्यञ्जनम्' इति वक्तव्यम्; विधिग्रहणं तु किमिति कृतम् इत्यतः तत्प्रयोजनमाह– **परमेश्वरस्येति ।। अध्यापकवत्** अध्यापकस्येव । **स्वातन्त्र्य-मिति ।।** योजनाभिप्रायप्रयोजनादौ प्रवेशनादौ परानपेक्षत्वमित्यर्थः । विधिग्रहणेन स्वातन्त्र्यख्यापनमुपपादयति– **वेदो हि विध्यात्मेति ।।** लिङ्लोट्तव्यप्रत्ययपञ्चमलकारोपेत-शब्दरूप इत्यर्थः । **इति** शब्दत्रयम् । न विद्यते अन्योऽर्थो यस्य तद् अनर्थान्तरम् एकार्थवाचकम् । ननु लिङादिरूपः शब्द एव वा तन्निष्ठः शाब्दभावनाख्यः शाब्दव्यापारो वा तद्वाच्यः अर्थभावनाशब्दितः पुरुषप्रयत्नो वा नियोक्ता किं न स्यात् इत्याशङ्क्य निषेधति– **न च शब्दादीनामिति ।। लोकेति ।।** लोके 'गामानय' इत्यादौ स्वतन्त्रवक्तृचेतनस्यैव नियोक्तृत्वदर्शनेन, वेदे अचेतनस्य लिङादेः नियोक्तृत्वाभ्युपगमे तद्विरोधापातादित्यर्थः । **अव्यवस्थेति ।।** 'अहं ब्रह्म' इत्यादौ अस्मच्छब्दस्य उच्चारयितृपुरुषवाचकत्वप्राप्त्या तस्यो-पाध्यायस्यापि उपास्यत्वापत्त्या 'ब्रह्मैवोपास्यम्' इति शास्त्रव्यवस्थाया अयोगापाता-दित्यर्थः । **पौरुषेयत्वेति ।।** स्वतन्त्रवक्तृपुरुषबुद्धिपूर्वकत्वस्यैव पौरुषेयशब्दार्थत्वादिति भावः । **तस्य** स्वतन्त्रवक्तुः ।।

**गीताक्षरार्थस्तु–** 'अफलाकाङ्क्षिभिः' इत्यादिना यज्ञतपोदानानां सात्त्विकादिहेतवोऽ-साधारणधर्माः प्रागुक्ताः । साधारणांस्तु धर्मान् वक्तुं पुराकल्पादिरूपोऽर्थवाद उच्यते–

**ओं तत्सदित्यादिना ।।** ब्रह्मणः परब्रह्मणः ओम् इति तद् इति सद् इति च त्रिविधो निर्देशः निर्दिश्यतेऽनेनेति निर्देशः नाम स्मृतः 'ओमिति ब्रह्म', सदेव सोम्येदमग्र आसीत्,' ओं तत्सदित्येनमतो वदन्ति' इत्यादिवेदवैदिकग्रन्थेषु चिन्तितं वेदविद्भिः ।

अत्र ओतं प्रतिष्ठितं आश्रितं यत्र ब्रह्मणि, तद् ब्रह्म वा, जगत्योतं प्रविष्टं पूर्णमिति ओंशब्दस्य निमित्तद्वयेन भगवति प्रवृत्तिर्ज्ञातव्या । 'अवतेष्टिलोपश्च' इति स्मरणात् । 'तत्' इति हि नित्यापरोक्षत्वमुच्यते । न चेश्वरस्वरूपमनुमातुं शक्यम् । अतो वेदैकवेद्यत्वात् 'तत्' इति ब्रह्मोच्यते । 'सद्भावे साधुभावे च' इति साधुभावशब्देन सर्वशुभधर्मयुतत्वस्य सच्छब्दार्थतया वक्ष्यमाणत्वात् सर्वशुभयुक्तत्वस्य ब्रह्मैकधर्मत्वात् 'सत्' इति ब्रह्मनामैव । तेन 'ओं तत् सत्' इति नामत्रयवता ब्रह्मणा ब्राह्मणाः ऋत्विगादिरूपाः वेदाः यष्टव्यदेवतादि-प्रकाशकमन्त्रब्राह्मणादिरूपाः यज्ञाः अग्निहोत्रदर्शपूर्णमासादिरूपाश्च विहिताः पुरा आदिकाले निर्मिताः । अत्र वेदानां विधानं व्यञ्जनमेव, न ब्राह्मणादिवत् निर्माणमिति भाष्ये स्फुटम् । ब्राह्मणादीनां विधानं च स्वात्मपूजया प्राणिनां सुखार्थमेव, न पुनः स्वस्य प्रयोजनाभिसन्धिना इत्यपि ।। २३ ।।

**भावदीपिका (श्री.टि.)– ।। द्विधेति ।।** ब्राह्मणादिविषये निर्माणार्थकत्वम्, वेदविषये व्यञ्जनार्थत्वमिति द्विधाऽर्थकल्पनमित्यर्थः । **स्वातन्त्र्यमिति** ।। सजातीयोच्चारणमनपेक्ष्योच्चार-यितृत्वरूपमित्यर्थः । कथं विधिग्रहणेन तज्ज्ञापनम् इत्यत आह– **वेद इत्यादिना** ।। **विध्यात्मा** 'यजेत' इति विध्यात्मा । **अनर्थान्तरं** पर्याय इत्यर्थः । नियोक्ता किं शब्दः वा, उच्चारकपुरुषः वा ईश्वरः वा । नाद्य इत्याह– **न चेति ।। लोकेति** ।। लौकिकवाक्ये वाक्तुरेव नियोक्तृत्वदर्शनादित्यर्थः । द्वितीयमाशङ्क्य निषेधति– **न चेति ।। अव्यवस्थापातादिति** ।। उच्चारकाणामनन्तत्वेन तेषामसच्छब्दवाच्यत्वप्राप्त्या उपास्यत्वे 'ब्रह्मैवोपास्यम्' इति व्यवस्था न स्यादिति भावः । तृतीयमङ्गीकरोति– **तस्मादिति** ।। सजातीयोच्चारणमनपेक्ष्योच्चारयितृत्वेन स्वतन्त्रवक्त्रा परानधीनस्वाभिप्रायप्रवेशकर्त्रा भाव्यमित्यर्थः । **वक्त्रा** 'यजेत' इति नियोक्त्रा । ईश्वरस्यैव स्वतन्त्रवक्तृत्वे लिङादिशब्दैर्विधानरूपार्थस्य ईश्वरेण रचिततया उत्प्रेक्षितत्वात्, विध्यात्मकवेदस्य पौरुषेयत्वापत्तिः इत्याशङ्क्य निषेधति– **न चैवमिति ।। अनादीति** ।। शब्दार्थसम्बन्धस्य अनादित्वाद् अनादिकालसिद्धशब्दार्थसम्बन्धेनैव ईश्वरो नियोजयतीति नोत्प्रेक्षितत्वं तस्येत्यर्थः । यथोक्तं भगवत्पादैः 'नित्ययोगोऽपि शब्दानामर्थैनैव निषिद्ध्यते'

इति । उक्तं च जैमिनिना– 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति । तथा च सर्ववेदानामपीश्वरवाक्यत्वेन तदभिप्रायप्रवेशसद्भावात् 'मामुपासीत' इत्यादौ व्यवस्थेति भावः । एवमेव क्वचित् तदितरपुरुषाभिप्रायप्रवेशोऽप्यस्ति । अन्यथा सङ्कल्पप्रार्थनादिवाक्यानाम् आनर्थक्यप्रसङ्गादिति द्रष्टव्यम् ।। २३ ।।

**भावप्रकाशः (कृ.टि.)– ।। स्वातन्त्र्यमपीति ।।** अत्र स्वातन्त्र्यं नाम न वेदानुकूलकृतिमत्त्वम् । तत्त्वनिर्णयटीकाविरोधात् । किन्तु नियोजनाभिप्रवेशनादौ परानपेक्षत्वम् । ननु लिङादिशब्दस्य तन्निष्ठव्यापाराख्यशब्दभावनाद्वाराऽपूर्वस्य तज्ज्ञानद्वारा वा ज्ञाताया यत्नरूपभावनाया वा प्रवर्तकत्वं तत्तद्वादिरीत्या किं न स्यादित्यत आह– **नच शब्दादीनामिति ।। लोकविरोधादिति ।।** लोके स्वतन्त्रवक्तुरेव नियोक्तृत्वदर्शनेन तद्विरोधादिति भावः । **अव्यवस्थेति ।।** अस्मच्छब्दस्योच्चारकपुरुषवाचित्वादुच्चारकाणां सर्वेषामप्युपास्यत्वप्राप्तौ ब्रह्मैवोपास्यमिति व्यवस्था न स्यादित्यर्थः । **पौरुषेयत्वापत्तिरिति ।।** स्वतन्त्रपुरुषपूर्वकत्वस्यैव पौरुषेयपदार्थत्वादिति भावः ।। २३,२४ ।।

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।। २४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु तस्मादिति ।।** तस्माद् ओङ्कारस्य भगवन्नामत्वाद् ओमित्युदाहृत्य ओङ्कारार्थभगवद्ध्यानपूर्वकं तमुच्चार्य ब्रह्मवादिना तृतीयार्थे षष्ठी, वेदवदनशीलैः ब्राह्मणैः क्रियमाणाः विधानोक्ताः शास्त्रचोदिताः यज्ञदानतपःक्रियाः सततं सर्वदा प्रवर्तन्ते । केचित्तु 'प्रवर्तन्ते' इत्येतत् 'प्रवर्त्यन्ते' इति व्याख्येयम्, तेन 'उदाहृत्य' इति ल्यबुपपत्तिः । पूर्वव्याख्याने 'यष्टृभिः' इत्यध्याहर्तव्यमित्याहुः । अत्र 'ब्राह्मणाः' इत्यादिसार्धश्लोकेन ब्राह्मणेषु वेदानाम् वेदेषु यज्ञादीनाम् ओतत्वात् यज्ञदानतपःक्रिया अपि ब्रह्मवेदशब्दार्थ इत्यावेदितम् । तथा च भाष्यम् 'ओं यज्ञाद्याः' इति । वेदाद्योतत्वात् 'यज्ञाद्या ओंशब्दवाच्याः' इति । 'ओं तत्सदित्यनेन ब्रह्मणो यत् नामत्रयं तद् यज्ञादेरपि वाचकम्' इति टीकावाक्यमपि यज्ञादेराशब्दार्थमाहेति बोद्धव्यम् ।। २४ ।।

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ।। २५ ।।**

## भाष्यम्

**तत् फलं मे स्यात् इत्यनभिसन्धाय ।। २५ ।।**

भावप्रदीपिका (प.टी.)– तत् इत्यस्यान्वयं सूचयति– **तदिति** । तत्फलं मे स्यादित्यनभिसन्धाय क्रियमाणत्वात् किञ्चित् तेषां तच्छब्दवाच्यताऽपीत्यर्थः ।। २५ ।।

**प्रमेयदीपिका (ज.टी.)– 'तदित्यनभिसन्धाय' इति वाक्यं ब्रह्मणीव यज्ञादावपि तच्छब्दस्य प्रवृत्तिं प्रतिपादयतीति ज्ञापयितुं योजयति– तदिति ।। वेदोक्तं स्वर्गादिकम् ।। २५ ।।**

भावदीपः (रा.टि.)– ।। **प्रतिपादयतीति** ।। 'भगवान्' इति योज्यम् । 'ज्ञापयति' इत्यत्राप्येवं ज्ञेयम् ।। २५ ।।

**भावरत्नकोशः** (सु.टि.)– परमेश्वरस्य परोक्षत्वं हि तच्छब्दप्रवृत्तिनिमित्तम् । वेदोक्तं स्वर्गादिफलं च परोक्षमेवेति तत्साधयतो यज्ञादेर्युक्तं तच्छब्दवाच्यत्वमिति भावेन तच्छब्दार्थमाह– **वेदोक्तं स्वर्गादिकमिति** ।।

**गीताक्षरार्थस्तु–** एवं तच्छब्दोऽपि ब्रह्मणीव यज्ञदानतपआद्येषु प्रवर्तन्ते इति भावेनोच्यते– **तदिति** ।। वेदोक्तं फलं स्वर्गादिकम् अनभिसन्धाय 'मम स्यात्' इति अभिसन्धिं विना मोक्षकाङ्क्षिभिः मुमुक्षुभिः विविधा यज्ञदानतपःक्रिया दानक्रियाश्च क्रियन्ते निर्वर्त्यन्ते । अत्र 'तत् वेदैकवेद्यं ब्रह्म अभिसन्धाय च' इत्यपि ग्राह्यम् । तेन ब्रह्मणि यज्ञादौ च तच्छब्दस्य प्रवृत्तिरावेदिता भवति ।। २५ ।।

**भावप्रकाशः** (कृ.टि.)– ।। **तच्छब्दप्रवृत्तिनिमित्तमिति** ।। वेदवेद्यत्वेन निमित्तेनेति शेषः ।। २५ ।।

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ।। २६ ।।**

श्लोकः २६

## भाष्यम्

**सद्भावशब्देन प्रजननं सूचितम् । ॐ इत्युक्त्वा अनभिसन्धाय फलं यज्ञदानतपआदिकृताम् अतिप्रीतेः नामसाम्याद् ब्रह्मैव निष्पादितं भवतीत्याशयः ।। २६ ।।**

भावप्रदीपिका (प.टी.)– सद्भावशब्देन सत्तामात्रं नेत्याह– **सद्भावेति** । ईश्वरार्थत्वात् कर्मणः सच्छब्दवाच्यताऽपीत्यर्थः ।। २६ ।।

।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीभगवद्गीताभाष्यभावदीपिकायां सप्तदशोऽध्यायः ।।

प्रमेयदीपिका (ज.टी.)– 'सद्भावे सत्तायाम्' इति प्रतीतिनिरासार्थमाह– **सद्भावेति ।।** प्रजननं प्रागसतः सत्तापादनम् । यद्यपि सद्भावशब्दः सत्तामात्रवाची । तथाऽप्यत्र ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् सत्ताविशेषप्रजननपर इति ज्ञायत इति प्रतिपादयितुं सूचितम् इत्युक्तम् ।।

नन्वनेन यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता भवति? इत्यत आह– **ॐ इति ।।** उक्तोङ्कारार्थज्ञानपूर्वकम् अनभिसन्धाय, फलं ब्रह्माभिसन्धाय च ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सहेत्यपि ग्राह्यम् । आदिपदेन जपादिग्रहणम् । षष्ठी तृतीयार्थे । नामसाम्यात् नामसाम्येनावगतात् तत्प्रतिमात्वात् । घटादीनामपि ब्रह्मप्रतिमात्वसाम्यात् को विशेषो यज्ञादेः? इत्यत उक्तम्– **अतिप्रीतेरिति ।।** ब्रह्मणः यज्ञादिषु निष्पादितं प्रतिष्ठापितम् । अतः 'एवं क्रियमाणं यज्ञादिकं सात्विकं अन्यद्राजसं तामसं वा इत्येवमितिकर्तव्यता प्रतिपादिता' इति वाक्यशेषः ।।

अत्र हि 'ओं तत् सत्' इत्यनेन ब्रह्मणो यन्नामत्रयं तद्यज्ञादेरपि वाचकमिति प्रतिपादितम् । तेन यज्ञादेर्ब्रह्मप्रतिमात्वं सूचितम् ।। ब्राह्मणाः इत्यादिना ओङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्य तदुच्चरणाचार उक्तः । तेनार्थस्मरणपूर्वकमोङ्कारमुच्चार्य वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यमिति सूचितम् । **तत्** इत्यनेन तच्छब्दो यज्ञादौ ब्रह्मणि च व्युत्पादितः । तेन फलमनभिसन्धाय ब्रह्माभिसन्धाय चेति लब्धम् ।

**सद्भावे** इत्यनेन सच्छब्दो ब्रह्मणि व्याख्यातः । तेन ब्रह्मज्ञानपूर्वकमिति लभ्यते ।। २६ ।।

**भावबोधः (र.टि.)– ।। सूचितमित्युक्तमिति ।।** प्रजननवाचकत्वे तूक्तमित्येवावक्ष्यदिति भावः । 'ओमित्युक्त्वाऽनभिसन्धाय फलम्' इत्यादिभाष्ये यावद्गीतोक्तेतिकर्तव्यतानुक्तेस्तदर्थत्वेनेति तद्भक्त्या तत्स्मणपूर्वकमेव कर्म सदिति तात्पर्यं मनसि निधाय भाष्येऽनुक्तं पूरयति– **ब्रह्माभिसन्धाय चेत्यादिना ।।** 'सह' इति 'यज्ञदानतपआदिकृताम्' इति भाष्येण सम्बन्धः ।।

**तृतीयार्थ इति ।।** 'निष्पादितम्' इत्यत्र तपआदिकृतां कर्तृत्वे तपआदिकृद्भिरिति तृतीयार्थ इत्यर्थः । **नामसाम्येनेति ।।** ब्रह्मवाचक ओम्तत्सदिति नामत्रयवाच्ययज्ञादेर्ब्रह्मसन्निधानेन ब्रह्मप्रतिमात्वं विना नोपपद्यत इति तदन्यथानुपपत्त्याऽवगततत्प्रतिमात्वादित्यर्थः । **ओं तत्सदित्यनेनेति** प्रतीकग्रहणम् इत्यादिना प्रकारेणेत्यर्थः । एवं च ओम् तदित्यर्धेन यदोमादिनामत्रयं ब्रह्मवाचकत्वेनावगतं, तद्ब्राह्मणास्तेन इत्यर्धेन 'ओङ्कारः, तदित्यनभिसन्धाय' इति श्लोकेन तच्छब्दः, 'प्रशस्ते कर्मणि' इत्यनेन सच्छब्द इति नामत्रयं यज्ञादेर्वाचकमिति प्रतिपादितमित्यर्थः । **ब्रह्मणि यज्ञादौ च व्युत्पाद्येति ।।** 'विहिताः' इत्यनेनैव 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति प्रमाणबलेन विधायकस्य ब्रह्मणः ब्राह्मणादावोतत्वस्य विहितब्राह्मणादीनां विधायकब्रह्मण्योतत्वस्य प्रतिपादनात् परस्परं प्रवेशनकर्तृत्वकर्मत्वाभ्यां ब्रह्मयज्ञाद्योयोरुभयोरपि ओङ्कारं व्युत्पाद्येत्यर्थः । अत एव ओमित्युदाहरिष्यमाणश्रुतिव्याख्यानावसरे 'यज्ञाद्या वेदाद्योतत्वात्' इति ब्रह्मसङ्ग्रहायादिपदप्रयोगः । **उच्चारणाचार इति ।।** ओमित्युदाहृत्येत्यनेनेत्यर्थः । **अर्थस्मरणपूर्वकमिति ।।** ओङ्कारस्य योगव्युत्पादनेनेत्यर्थः । **वेदोक्तप्रकारेणेति ।।** 'विधानोक्ताः' इत्यनेनेत्यर्थः । **ब्राह्मणैः सहेति ।।** ब्रह्मवादिनामित्यनेनेत्यर्थः । **यज्ञादिकं कार्यमिति ।।** 'यज्ञदानतपःक्रियाः प्रवर्तन्ते' इत्यनेनेत्यर्थः । **ब्रह्मणि चेति ।।** मोक्षकाङ्क्षिभिरित्युक्तत्वेन तद्ब्रह्माभिसन्धायेति च लाभे वेदोक्तत्वरूपपरोक्षत्वनिमित्तेन ब्रह्मणि स्वर्गादौ ब्रह्मोद्देश्यकत्वस्वर्गाद्यनुद्देश्यकत्वनिमित्तेन च यज्ञादौ तच्छब्दो व्युत्पादित इत्यर्थः । **सच्छब्दो ब्रह्मणीति ।।** प्रजननहेतुत्वेनेत्यर्थः ।। २६ ।।

**भावदीपः (रा.टि.)– ।। सूचितमित्युक्तमिति ।।** सद्भावपदस्य प्रजननवाचकत्वे तु 'उक्तम्' इत्येव ब्रूयादिति भावः ।। **निष्पादितम्** इत्यनेन अन्वयमाह– **षष्ठी तृतीयार्थ इति ।।**

श्लोकः २६

'कर्तृकरणयोस्तृतीया' इत्युक्तेरिति भावः ।। **नामसाम्येनावगतादिति** ।। ओं तत्सदिति नामत्रयं भगवतीव यज्ञादावपि वर्तत इत्यनुपदमग्रे वक्ष्यति । तच्च यज्ञादौ भगवन्नामसाम्यं तत्प्रतिमात्वेनैव नान्यथा । 'शारीररूपकविन्यस्तगृहीतेः' इति न्यायादिति भावः ।। **प्रतिपादितमिति** ।। ओ३म् तत्सदितीत्याद्यर्थवादस्य यज्ञादौ भगवति च नामत्रयप्रतिपादनार्थमेव प्रवृत्तत्वात्, जगति ओतत्वरूपनिमित्तस्य ब्रह्मणीव वेदादावोतत्वरूपत्वस्य यज्ञादावपि सत्वादिति भावः ।। **व्युत्पाद्येति** ।। तेन ओंनामकेन हरिणा नाम्ना यज्ञादयो विहिता इत्युक्त्या व्युत्पादितमिति भावः ।। यद्वा, हरेर्जगत्प्रवेशनिमित्तेन ओंनामकत्वोक्त्या तत्प्रवेशार्थं यज्ञादीनां विधानोक्त्या ओंनामभगवत्सम्बन्धाद् यज्ञादेः 'शरीररूपकविन्यस्तगृहीतेः' इति न्यायाद् ओ३मूनामत्वं यज्ञादेरिति भावः ।। **वेदोक्तेति** ।। 'विधानोक्ता' इत्यनेन लब्धोऽर्थः **ब्राह्मणैः सहेति** । अन्यथा तत्सृष्टिर्वृथा स्यादिति भावः ।। **तदित्यनेनेति** ।। 'तदिति फलमनभिसन्धाय यज्ञादयः क्रियन्त' इत्युक्त्या यज्ञादौ परोक्षवाचित्वात् परोक्षे ब्रह्मणि च तच्छब्दो व्युत्पादित इत्यर्थः । 'मोक्षकाङ्क्षिभिः' इत्युक्त्या लब्धमाह– **ब्रह्माभिसन्धाय चेति** ।। **सद्भाव इत्यनेनेति** ।। तस्य प्रजननवाचित्वात् ब्रह्मणश्च तत्कर्तृत्वादिति भावः ।। २६ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **प्रागसतः** कार्याकारेण प्रागसतः तदाकारेण सत्तापादनम् । **विवक्षितत्वात्** 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः' इत्यनेन । 'सत्ताविशेषप्रजननपरः' इति वदन् 'लक्षणया' इत्यभिप्रैति । **सूचितमित्युक्तमिति** ।। भगवदापादितजगन्निष्ठसत्ता-विशेषस्य प्रजननस्य सद्भावशब्दमुख्यार्थत्वे 'उक्तम्' इत्येवावक्ष्यदिति भावः । **अनेन** 'ओं तत्सदिति निर्देशः' इत्यर्थवादेन । भाष्यपदमनूद्य तत्र शेषमाह– **उक्तोंकारार्थज्ञानपूर्वक-मिति** ।। तथा च न्यायदीपिका 'ओङ्कारोच्चारणं तदर्थज्ञानपूर्वकमेव कार्यम्' इति, 'ओङ्कारार्थ-स्मरणपूर्वकं तमुच्चार्यैव । ओमित्युक्त्वत्रानभिसन्धाय इत्यादिभाष्ये गीताभिप्रेतयावदितिकर्तव्यता-मुक्तेः तदर्थत्वेन तद्वक्त्या तत्स्मरपूर्वकमेव कर्म सत्' इति तात्पर्यनिर्णयानुसारेणाऽह– **ब्रह्माभिसन्धाय इत्यादिना ग्राह्यम् इत्यन्तेन** । 'जपादि' इत्यादिपदेन देवपूजादिग्रहणम् । 'निष्पादितम्' इति निष्ठायोगे 'न लोकाव्ययनिष्ठा..' इति षष्ठीनिषेधाद् भाष्ये 'कृताम्' इति कथं षष्ठी इत्यत आह– **षष्ठी तृतीयार्थ इति** ।। व्यत्ययशास्त्रादिति हृदयम् । **नामसाम्ये-नेति** ।। अव्यक्तादिशब्दस्य भगवति परममुख्यवृत्त्या, प्रधानादिषु मुख्यवृत्त्या प्रवृत्तावपि उभयत्र मुख्यवृत्तित्वेन साम्यमिति 'ओं तत् सत्' इति नामत्रयस्य भगवति यज्ञादौ च प्रवृत्तस्य

साम्यमेव । तच्च शरीररूपकविन्यस्तगृहीतेः इति अव्यक्ताधिकरणन्यायेन नामत्रयवद्भगवत्सन्निधानेन तत्प्रतिमात्वेनैव ज्ञातव्यमिति भावः । तदिदं वक्ष्यते 'तच्छब्दानां सन्निधेस्तद्रूपत्वात् प्रतिमात्वात्' इति । 'अतिप्रीतेः' इत्यत्र इतरवस्तुसाम्यपरिहारायाध्याहरति– **ब्रह्मणः यज्ञादिष्विति** ।। अनादिब्रह्मणः कथं निष्पादितत्वम् इत्यतो व्याख्याति– **प्रतिष्ठापितमिति** ।। सन्निधापितमित्यर्थः । नन्वनेन 'यज्ञादीनां का इतिकर्तव्यता प्रतिपादिता' इति कृतशङ्काया अनिरास एव इत्यत आह– **अत एवं क्रियमाणमिति** ।।

भाष्योक्तस्य इत्थम्भावकलापस्य गीतासूचितत्वं दर्शयति– **अत्र हीति** ।। **इत्यनेन** गीतावाक्येन । **वाचकमिति प्रतिपादितमिति** ।। 'ओं तत्सदिति निर्देशः' इत्यर्धेन 'ओंनामकेन हरिणा यज्ञादयो विहिताः' इत्युक्त्या ओङ्कारादित्रयमपि यज्ञादेर्वाचकमिति प्रतिपादितम् । ओंनामकाद् जातं यज्ञादिकमपि ओंनामकम्, तन्नामकाद् जातं तन्नामकम्, सन्नामकाद् जातं सन्नामकम् । 'काकाज्जातः काकः' 'श्येनाज्जातः श्येनः' इति यथा । सति चैवं 'तेन ओमादिनाम्ना ब्रह्मणा' इत्युक्तिरर्थवतीति भाव इति केचित् । अन्ये तु 'ओं तत्सद् इति यो ब्रह्मणो निर्देशः स त्रीणि यज्ञदानतपांसि विधत्ते प्रतिपादयतीति त्रिविधः स्मृतः' इति व्याख्यानाशयाद् यज्ञादेर्वाचकमित्युक्तम् । विपूर्वाद् दधातेः मूलविभुजादित्वात् कप्रत्यये, आतो लोपे च 'त्रिविधः' इति रूपसिद्धेः इत्याहुः ।

**तेन** वाचकत्वप्रदानेन । **सूचितमिति** ।। यत्र यत्सन्निधानेन ब्रह्मशब्दयोगः तस्य तत्प्रतिमात्वम् । यथा 'रथस्थं केशवं दृष्ट्वा ' इत्यादौ केशवप्रतिमायां केशवशब्दयोगः, यथा च भगवन्नाम्नोऽव्यक्तशब्दस्य प्रधाने प्रयोग इति व्याप्तेः । न चैवं प्रतिमादाविव यज्ञादौ ओमादित्रयममुख्यमापन्नम् इति कथम् ओमादिपदवाच्यत्वमिति शङ्क्यम् । जगत्योतत्वनिमित्तेन ब्रह्मणीव वेदादौ ओतत्वनिमित्तेन यज्ञादौ प्रवृत्तिसम्भवेन तस्य वाच्यत्वोपपत्तेः । अत एव अव्यक्तादिशब्दे 'शरीररूपकविन्यस्तगृहीतेः' इति अव्यक्तादेः प्रतिमात्वोक्तौ, तर्हि अव्यक्तादिशब्दस्य प्रधानादौ लक्षणादिप्रसक्तिः इत्याशङ्क्य 'कल्पनोपदेशाच्च मध्वादिवदविरोधः इति भगवता सूत्रकारेण लोकसिद्धरूढियोगादिवृत्त्यभ्युपगमेन मुख्यवृत्तिरिति स्थापितम् ।

**इत्यादिना** सार्धश्लोकेन । **ब्रह्मणि यज्ञादौ च व्युत्पाद्येति** ।। 'ओतं जगद्यत्र' इत्यनेन ओतम् प्रविष्टम् आश्रितं यत्र परमेश्वरे, यश्च स्वयं जगदोतः प्रविष्टः पूर्ण इति ओंशब्दस्य

श्लोकः २६

निमित्तद्वयेन भगवति व्युत्पत्तिर्दर्शिता । एवमेव 'विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् । विहिता विष्णुना तेन.....' इति वचनात् । 'वेदाद्योतत्वं ब्रह्मनिमित्तत्वं च निमित्तीकृत्य ओंशब्दस्य यज्ञादौ प्रवृत्तिर्दर्शिता' इत्येवम् ओङ्कारं ब्रह्मणि यज्ञादौ च व्युत्पाद्येत्यर्थः । **तदुच्चारणाचारः** ओङ्कारोच्चारणाचारः **उक्तः** 'तस्मादोम् इत्युदाहृत्येति श्लोकेन । 'अभक्तोदाहृतं नैव फलदातृ भविष्यति' इति भक्तिज्ञानादिहीनपुरुषोच्चरितस्य सफलत्वाभावावगमात् 'स्मृतं सार्थं सर्वकामप्रदं स्यात्' इति वचनेनार्थस्मरणादिपूर्वकनामोच्चारणस्य सफलत्वावगमाद् 'ओतं जगद्यत्र' इति योगवृत्तिप्रदर्शनाच्चाऽह– **तेनार्थस्मरणपूर्वकमिति** ।। **वेदोक्तप्रकारेणेति** ।। 'प्रवर्तन्ते विधानोक्ताः' इत्युक्तेरिति भावः । **ब्राह्मणैः सहेति** ।। अन्यथा तत्सृष्टिर्व्यर्था स्यादिति भावः ।

केचित्तु 'ब्रह्मवादिनाम्' इत्युक्तत्वाद् ब्राह्मणेषु वेदानाम्, वेदेषु यज्ञानां च ओतत्व-व्युत्पादनाच्चेति भावेन 'ब्राह्मणैः सह' इत्युक्तमित्याहुः । 'यज्ञादिकं कार्यम्' इति वदन् 'यज्ञदानतपःक्रियाः प्रवर्तन्ते' इत्याचार्येण विधिरुन्नीयत इत्यभिसन्धत्ते । **सूचितम्** सङ्क्षेपेणोक्तम् । **तदित्यनेन** 'तदित्यनभिसन्धाय' इति श्लोकेन यज्ञादौ ब्रह्मणि चेति ।। 'तद्वेदोक्तं स्वर्गादिकं फलं मम स्यादित्यनभिसन्धाय' इति भाष्यरीत्या फलानभिसन्धिपूर्वकत्व-रूप इत्थम्भावो यज्ञादौ प्रतिपादितः । स च तच्छब्दप्रवृत्तिनिमित्तं 'निष्फलं कर्म तत्स्यात्' इति श्रुतौ निष्फलशब्देन फलानभिसन्धेरभिप्रेतत्वात् । तथा च प्रवृत्तिनिमित्तप्रतिपादनद्वारा तच्छब्दो यज्ञादौ व्युत्पादितः । एवं च–

........तद् ब्रह्म स्यान्ममास्पदम् ।

इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः ।
अभिसंहितं हि तत्प्रोक्तं ततं वा स्वगुणैः सदा ।।'

इति तात्पर्यनिर्णयोक्तरीत्या तच्छब्दस्य वेदैकवेद्यस्वरूपत्वम् गुणपूर्णत्वम्, अभिसंहितत्वं चेति प्रवृत्तिनिमित्तत्रयं ब्रह्मणि प्रतिपादितम् । तथा च तच्छब्दो ब्रह्मणि व्युत्पादितो भवतीत्याशयः । तल्लब्धमाह– **तेनेति** ।।

**इत्यनेन** 'सद्भावे साधुभावे च' इति श्लोकेन । अत्र हि सद्भावशब्देन प्रागसतः सत्तापादनरूपप्रजननतात्पर्यकेण प्रजननहेतुत्वम्, साधुशब्देन शुभगुणवत्त्वं च सच्छब्दप्रवृत्तौ

निमित्तमिति कथितं द्वयमपि ब्रह्मणि सुप्रसिद्धम् । अतः प्रवृत्तिनिमित्तद्वयकथनद्वारा सच्छब्दो ब्रह्मणि व्याख्यात इत्यर्थः । **लभ्यत इति** ।। सच्छब्दो हि जगज्जनकत्वादिगुणनिमित्तको ब्रह्मणि प्रवर्तते । गुणोक्तिश्च ज्ञानाद्यर्था । अतो 'ब्रह्मज्ञानपूर्वकम्' इति इतिकर्तव्यता लभ्यत इत्यर्थः ।। २६ ।।

**गीताक्षरार्थस्तु–** ब्रह्मणि सच्छब्दो व्याख्यायते– **सद्भाव इति** ।। सद्भावशब्दस्य सत्तामात्रवाचिनोऽप्यत्र प्रागसतः सत्तापादनरूपप्रजननार्थताऽवसेया । 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः' इति ब्रह्मणो जगज्जनकत्वस्य विवक्षितत्वात् । तथा च जगतः सद्भावे प्रजनने जनयितृत्वे इत्यर्थः सम्पद्यते । साधुभावे साधोर्भावः सर्वशुभधर्मयुतत्वं तस्मिंश्च, सदित्येतत् पदं प्रयुज्यते प्राज्ञैरित्यनेन जगज्जनयितृत्वात् सर्वशुभधर्मयुतत्वाच्च भगवान् सच्छब्दार्थ इत्युक्तं भवति । तेन ब्रह्मज्ञानपूर्वकत्वस्य इतिकर्तव्यता लभ्यते । तथा प्रशस्ते कर्मणि शुभे कर्मणि सच्छब्दः युज्यते प्रयुज्यते ।। २६ ।।

**भावदीपिका (श्री.टि.)– ।। विवक्षितत्वादिति ।।** 'ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा' इत्यनेनेत्यर्थः । **सूचितमित्युक्तमिति** ।। प्रजननवाचकत्वे तु 'उक्तम्' इत्येवावक्ष्यदिति भावः । 'ओम् इत्युक्त्वाऽनभिसन्धाय फलम्' इत्यादिभाष्येण यावद्गीतोक्तेतिकर्तव्यताऽनुक्तेः तदर्थं 'भक्त्या तत्स्मरणपूर्वकमेव कर्म सत्' इति तात्पर्यं मनसि निधाय भाष्येऽनुक्तं पूरयति – **ब्रह्माभिसन्धाय चेत्यादिना** ।। 'उक्तोङ्कारार्थज्ञानपूर्वकम्' इत्यादीनां 'ब्राह्मणैः सह' इत्यन्तानां तपआदिकृताम्' इति भाष्येण प्रत्येकं सम्बन्धो द्रष्टव्यः । **तृतीयार्थ इति** ।। 'निष्पादितम्' इत्यत्र तपआदिकृतां 'कर्तृकरणयोस्तृतीया' इति कर्तरि तृतीयाविधानात् तपआदिकृद्भिर्ब्रह्मैव निष्पादितं भवतीत्यर्थो द्रष्टव्यः ।

'तच्छब्दानां सन्निधेः', 'तद्रूपत्वात्' इत्युत्तरश्रुत्यनुसारेण आह– **नामसाम्येनावगतात् तत्प्रतिमात्वादिति** ।। ब्रह्मवाचक'ओम् तत् सत्' इति नामत्रयवाच्यत्वम् । यज्ञादेर्ब्रह्मसन्निधानेन ब्रह्मप्रतिमात्वं विना नोपपद्यत इति, तदन्यथाऽनुपपत्त्याऽवगतात् तत्प्रतिमात्वादित्यर्थः । नन्वत्र भाष्ये यज्ञादीनाम् ईदृशीतिकर्तव्यता प्रतिपादिता इत्यप्रतीतेराह– अत **एवमिति** ।। 'ओमित्युक्त्वा' इत्यादिकं गीतारूढं करोति– **अत्र हीति** ।। **ओं तत्सदित्यनेनेति** ।। प्रतीकग्रहणमिदम् । इत्यादिना प्रकरणेनेत्यर्थः । एवं च 'ओम् तत्सत्' इत्यर्धेन

श्लोकः २६

यद् ओमादिनामत्रयं ब्रह्मवाचकत्वेनावगतं तत् 'ब्राह्मणास्तेन' इत्यर्धेन ओङ्कारः, 'तदित्यनभिसन्धाय' इति श्लोकेन तच्छब्दः, 'प्रशस्ते कर्मणि' इत्यनेन सच्छब्द इति नामत्रयं यज्ञादेर्वाचकमिति प्रतिपादितमित्यर्थः । **ब्रह्मणि यज्ञादौ च व्युत्पाद्येति** ।। 'विहिताः' इत्यनेनैव 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इति प्रमाणबलेन विधायकस्य ब्रह्मणः ब्राह्मणादावोतत्वस्य, विहितब्राह्मणादीनां विधायके ब्रह्मण्योतत्वस्य प्रतिपादनात् परस्परं प्रवेशनकर्तृत्वकर्मत्वाभ्यां ब्रह्मयज्ञाद्योरुभयोरपि ओङ्कारं व्युत्पाद्येत्यर्थः । अत एव ओमित्युदाहरिष्यमाणश्रुतिव्याख्यानावसरे 'ओं यज्ञाद्या वेदाद्योतत्वात्' इति ब्रह्मसङ्ग्रहायादिपदप्रयोग इति मन्तव्यम् । **उच्चारणाचार इति** ।। 'ओमित्युदाहृत्य' इत्यनेनेत्यर्थः ।

**अर्थस्मरणपूर्वकमिति** ।। ओंकारस्य योगव्युत्पादनेनेत्यर्थः । **वेदोक्तप्रकारेणेति** ।। 'विधानोक्ताः' इत्यनेनेत्यर्थः । **ब्राह्मणैः सहेति** ।। 'ब्रह्मवादिनाम्' इत्यनेनेत्यर्थः । **यज्ञादिकं कार्यमिति** ।। 'यज्ञदानतपःक्रियाः प्रवर्तन्ते' इत्यनेनेत्यर्थः । तच्छब्दः **यज्ञादौ ब्रह्मणि चेति** । ब्रह्मोद्देश्यकत्वस्वर्गाद्यनुद्देश्यकत्वनिमित्तेन च यज्ञादौ तच्छब्दो व्युत्पादितः तेन 'फलमनभिसन्धाय' इति लब्धम् । वेदोक्तत्वरूपपरोक्षत्वनिमित्तेन ब्रह्मणि तच्छब्दो व्युत्पादितः, तेन 'ब्रह्माभिसन्धाय' इति लब्धमिति भावः । **सच्छब्दो ब्रह्मणीति** ।। प्रजननहेतुनेत्यर्थः ।।२६।।

**भावप्रकाशः (कृ.टि.)–** सद्भावशब्दस्य प्रजननार्थत्वमुपपादयितुं प्रजननशब्दार्थमाह– **प्रागसत इति** ।। कार्याकारेण प्रागसतस्तदाकारेण सत्तापादनमित्यर्थः । उक्तमित्यनुक्तत्वा सूचितमिति यदुक्तं तत्कृत्यं वक्तुमाह– **यद्यपीति** ।। **सत्ताविशेषेति** ।। लक्षणयेति शेषः । यथोक्तम् 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणे 'इति । ब्राह्मणा इत्यादिनोङ्कारस्य ब्रह्मणि निरुक्तत्वात् तदनुरोधेनाह– **ओङ्कारार्थज्ञानपूर्वकमिति** ।। भाष्ये गीतालब्धसर्वेतिकर्तव्यतानुक्तेस्तदर्थत्वेन तद्भक्त्या तत्स्मरणपूर्वकमेव कर्म सदिति तात्पर्यानुसारेणाह– **ब्रह्माभिसन्धाय चेत्यादिना जपादीति** ।। आदिपदेन पूजादिग्रहणम् ।

ननु निष्ठाप्रत्यययोगे न लोकेति षष्ठीनिषेधात् कथं तपआदिकृतां निष्पादितमित्युक्तमित्यत आह– **षष्ठी तृतीयार्थ इति** ।। व्यत्ययेनेति शेषः । तथा च कर्तृकर्मणोः कृतीत्युक्तषष्ठ्या एव न लोकेति निषेधो न व्यत्ययप्राप्तायाः, येन नाप्राप्तिन्यायादिति भावः । यद्वा ननु यदि शेषे षष्ठी तदा कर्तृत्वबोधो न स्यादित्यत आह– **तृतीयार्थ इति** ।। कर्तृत्व इत्यर्थः । न लोकेति

निषेधस्यानित्यत्वादिति भावः । कर्तृकरणयोरित्युक्ततृतीयां बाधित्वेयं षष्ठीति ज्ञापयितुं कर्तरीत्यनुक्त्वा तृतीयार्थ इत्युक्तम् ।

ननु यदि ब्रह्मणि यज्ञादौ च नामसाम्याद्यज्ञादिकृतां ब्रह्मनिष्पादकत्वं तदा लवणकृतामश्वनिष्पादकत्वं स्यात् सैन्धवनामसाम्यादित्यत आह– **नामसाम्येनेति** ।। असाधारणनामसाम्येनेत्यर्थः । तेन लवणादेरश्वादिप्रतिमात्वं स्यान्नामसाम्यादिति निरस्तम् । न च साधारण्यं साम्यं चेति व्याहतम् । परममुख्यवृत्त्याऽसाधारण्यम् । मुख्यवृत्त्या साम्यमित्यङ्गीकारात् । तथा च यज्ञादेरोमादिब्रह्मनामादिसाम्यम् । ब्रह्मसन्निधानेन ब्रह्मप्रतिमात्वं विनाऽनुपपन्नं तदवगमयतीति भावः ।

ननु ब्रह्मणोऽनादित्वात् कथं निष्पादितत्वमित्यत आह– **प्रतिष्ठापितमिति** ।। नन्वेवं सति यज्ञादीनां केतिकर्तव्यता प्रतिपादितेति शङ्काया अनिरास एवेत्यत आह– **अक्रियमाणमिति** ।। उक्तस्य सर्वस्यापि सात्त्विकत्वप्रयोजकस्य गीतासूचितत्वं दर्शयति– **अत्र हीति** ।। **इत्यनेनेति** ।। वाक्येनेति शेषः । **प्रतिपादितमिति** ।। ॐ तत्सदिति यो ब्रह्मणो निर्देशः । स त्रीणि यज्ञदानतपांसि विधत्ते प्रतिपादयतीति । त्रिविधः स्मृत इति व्याख्यानादिति भावः । विपूर्वाद्दधातेः मूलविभुजादित्वात् कप्रत्यये अकारलोपे च त्रिविध इति रूपं बोध्यम् ।

**सूचितमिति** ।। यत्र सन्निधानेन ब्रह्मनामप्रयोगस्तस्य तत्प्रतिमात्वं यथा व्यासप्रतिमादाविति व्याप्तेरिति भावः । न चैवमोमादिशब्दानां यज्ञादिष्वमुख्यत्वापत्तिरिति वाच्यम् । उक्तरीत्योमादिशब्दप्रवृत्तिनिमित्तस्यापि सत्त्वेन वाचकत्वसम्भवात् । अत एव प्राग्वाचकमित्युक्तम् । **इत्यादिनेति** ।। सार्धश्लोकग्रहणायादिपदम् । **ब्रह्मणि यज्ञादौ च व्युत्पाद्येति** ।।

'विप्रा यज्ञाश्च वेदाश्च यस्मादोताः परस्परम् ।
विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः ।
ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति'

इति तात्पर्यनिर्णयानुसारेण ब्राह्मणा इति वाक्ये विष्णौ परस्परं चौता इति पूरणीयम् । ततश्च ब्रह्मणि ब्राह्मणाद्याश्रयत्वतन्निर्मातृत्वरूपमोङ्कारप्रवृत्तिनिमित्तं प्रतिपादितं तेन अवति

श्लोकः २६

प्रविशति ब्राह्मणादिकं सर्वमस्मिन्निति वा अवति करोति ब्राह्मणादीनिति वौङ्कारो ब्रह्मणि व्युत्पादितः । एवं वेदाद्योतत्वं ब्रह्मनिर्मितत्वं चोङ्कारप्रवृत्तिनिमित्तं यज्ञादौ प्रतिपादितं तेनावति प्रविशतीति वा अव्यते क्रियते एतदिति वा यज्ञदावोङ्कारो व्युत्पादित इति भावः । **तदुच्चारणाचार इति** ।। तस्मादित्यादिश्लोकेनेति शेषः ।

**अर्थस्मरणपूर्वकमिति** ।। 'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा' इति स्मृतेः गुणोक्तेः ज्ञानाद्यर्थत्वादिति भावः । **उच्चार्येति** ।। ॐ मित्युदाहृत्येत्युक्तत्वादिति भावः । **वेदोक्त-प्रकारेणेति** ।। 'विधानोक्ता' इत्युक्तत्वात् । वेदेषु यज्ञाद्योततत्वरूपोङ्कारप्रवृत्तिनिमित्त-व्युत्पादनाच्चेति भावः । **ब्राह्मणैः सहेति** ।। ब्रह्मवादिनामित्युक्तत्वाद्ब्रह्मणे यज्ञाद्योतत्व-रूपोङ्कारप्रवृत्तिनिमित्तव्युत्पादनाच्चेति भावः । **यज्ञादिकं कार्यमिति** ।। यज्ञदानतपःक्रियाः प्रवर्तन्त इति आचारोक्त्या विध्यनुमानादिति भावः । **सूचितमिति** ।। अर्थाद् ज्ञापितमित्यर्थः ।

**यज्ञादौ ब्रह्मणि चेति** ।। तद्वेदोक्तं स्वर्गादिकं फलं मे स्यादित्यनभिसन्धायेत्यादियोजनायां फलानभिसन्धिपूर्वकत्वरूपं निष्फलत्वं यज्ञादौ प्रतिपादितं तच्च तच्छब्दप्रवृत्तिनिमित्तं निष्फलं कर्म तत् स्यादिति श्रुतेः । तथा च प्रवृत्तिनिमित्तप्रतिपादनद्वारा तच्छब्दो यज्ञादौ व्युत्पादितः । एवं–

'तत् ब्रह्म स्यात् ममास्पदम् । इति यत्क्रियते कर्म तन्नामातो जनार्दनः ।
अभिसंहितं हि तत् प्रोक्तं ततं वा स्वागुणैः सदा'

इति तात्पर्यानुसारेण तद्वेदोक्तरूपं गुणपूर्णं च ब्रह्म ममास्पदं स्यादित्यभिसन्धायेत्यादि योजनायां वेदोक्तरूपत्वं गुणपूर्णत्वम् अभिसंहितत्वं चेति तच्छब्दप्रवृत्तिनिमित्तत्रयं ब्रह्मणि प्रतिपादितं तेन तच्छब्दो ब्रह्मणि व्युत्पादित इत्यर्थः । **सद्भाव इत्यनेनेति** ।। श्लोकेनेति शेषः । **अत्र** श्लोके प्रजननहेतुत्वं साधुगुणः अक्लिष्टकारित्वं चेति सच्छब्दप्रवृत्तिनिमित्तत्रय-मुक्तम् । तच्च ब्रह्मणि प्रसिद्धम् । अतः प्रवृत्तिनिमित्तकथनद्वारा सच्छब्दो ब्रह्मणि व्याख्यात इत्यर्थः । **लभ्यत इति** ।। ओंतत्सदित्यादिप्रकरणस्य यज्ञादीनां सात्विकत्वादिप्रयोजक-साधारणधर्मप्रतिपादने तात्पर्यं वाच्यम् । अन्यथा प्रकरणविरोधात् । श्लोके च जगज्जनकत्वादि-रूपसच्छब्दप्रवृत्तिनिमित्तं ब्रह्मणि व्युत्पाद्यते । ततो ब्रह्मज्ञानपूर्वकत्वरूपं प्रयोजकं प्रतिपाद्यत इति लभ्यत इत्यर्थः ।। २६ ।।

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।। २७ ।।**

**प्रमेयदीपिका (ज.टी.)– 'यज्ञे तपसि ....कर्म चैव' इत्यनेन यज्ञादिषु सच्छब्दो व्याख्यातः । तेन ब्रह्मविषयत्वेन निष्ठया चेति लब्धम् ।। २७ ।।**

**भावबोधः (र.टि.)– ।। ब्रह्मविषयत्वेनेति ।।** कर्म चैव तदर्थीयमित्यनेनेत्यनेनेत्यर्थः । **निष्ठायां चेति** ।। 'यज्ञे तपसि दाने च स्थितिः' इत्यनेनेत्यर्थः । स्थितेरेव निष्ठात्वादिति भावः ।। २७ ।।

**भावदीपः (रा.टि.)– ।। कर्म चैवेतीति ।।** 'कर्म चैव तदर्थीयम्' इत्यनेनेत्यर्थः ।। २७ ।।

**भावरत्नकोशः (सु.टि.)– ।। सच्छब्दो व्याख्यात इति ।।** 'यज्ञे तपसि' इत्यनेन यज्ञादिषु स्थितिशब्दिता निष्ठा सच्छब्दप्रवृत्तौ निमित्तमुक्तम् । तथा च तादृशनिष्ठाविषयत्वेन यज्ञादिकं 'सत्' इत्युच्यते । 'कर्म चैव तदर्थीयम्' इत्यनेन च भगवदुद्देश्यकं यज्ञादिकर्म 'सत्' इत्युच्यत इत्येवं व्याख्यात इत्यर्थः । तेन एवंव्याख्यानेन, 'कर्म चैव' इत्यनेन ब्रह्मविषयत्वम्, 'यज्ञे तपसि' इत्यनेन निष्ठया इति लब्धमिति द्रष्टव्यम् ।।

**गीताक्षरार्थस्तु** यज्ञादिषु सच्छब्दो व्याख्यायते– **यज्ञ इति ।।** यज्ञे तपसि दाने च स्थितिः निष्ठा च सदित्युच्यते । तदर्थीयम् 'ओं तत्सदिति निर्देशो ब्रह्मणः' इति ब्रह्मविषयं कर्म च ब्रह्मप्रीत्युद्देश्यकम् एव कर्म सदित्यभिधीयते इत्यनेन 'ब्रह्मविषयत्वम्, 'निष्ठा च' इति इतिकर्तव्यता लभ्यते ।। २७ ।।

**भावदीपिका (श्री.टि.)– ।। ब्रह्मविषयत्वेनेति ।।** 'कर्म चैव तदर्थीयम्' इत्यनेनेत्यर्थः । **निष्ठया चेति ।।** 'यज्ञे तपसि दाने च स्थितिः' इत्यनेनेत्यर्थः । स्थितेरेव निष्ठात्वादिति भावः ।। २७ ।।

**भावप्रकाशः (कृ.टि.)– ।। सच्छब्दो व्याख्यात इति ।।** यज्ञे तपसीत्यनेन यज्ञादिषु निष्ठा सच्छब्दप्रवृत्तिनिमित्तमिति युक्तम् । तथा च तादृशनिष्ठाविषयत्वेन यज्ञादिकं सदित्युच्यत

इति लभ्यते । कर्म चैवेत्यनेन भगवदर्थयज्ञादिकर्म सदित्युच्यत इत्येवं सच्छब्दो यज्ञादौ व्याख्यात इत्यर्थः । **तेनेति** ।। कर्म चैवेत्यनेन ब्रह्मविषयत्वं लब्धम् । यज्ञे तपसीत्यनेन निष्ठेति योगमन्वयः ।। २७ ।।

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ नच तत् प्रेत्य नो इह ।। २८ ।।**

ॐ तत्सदिति श्रीमद्भवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे त्रिगुणविभागो नाम सप्तदशोऽध्यायः ।। १७ ।।

## भाष्यम्

**तथा च ऋग्वेदखिलेषु–'ॐ यज्ञाद्या निष्फलं कर्म तत् स्यात् सद् वै तदर्थं कर्मेति वदन्ति देवाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्य' इति ।। २८ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये सप्तदशोऽध्यायः ।। १७ ।।

भावप्रदीपिका (प.टी.)– ननु ब्रह्मणः कर्मादीनामोमादिशब्दवाच्यत्वे केतिकर्तव्यतोक्ता स्यात् ? इत्यत आह– **ओमिति** । ब्रह्मैव निष्पादितं सन्निधापितं स्यात्, यज्ञादेः तत्प्रतिमात्वात् । ब्रह्मप्रतिमात्वं कुतः ? नामसाम्यात् । नामसाम्यं सर्वपदार्थेष्वपि सममिति न वाच्यम् । अतिप्रीतेः ।। २८ ।।

प्रमेयदीपिका (ज.टी.)– **'अश्रद्धया'** इत्यनेन ब्रह्मभक्तिरपीति ।। अत्र श्रुतिसम्मतिमाह– **तथा चेति** ।। ओं यज्ञाद्याः वेदाद्योतत्वात् । निष्फलम् । फलोद्देशरहितत्वात् । तदर्थं ब्रह्मविषयम् । एवं तच्छब्दानां ब्रह्मशब्दानां यज्ञादिषु सन्निधेः अवगततद्रूपत्वात् तत्प्रतिमात्वात् । तस्य उक्तप्रकारेण यज्ञादीनामनुष्ठातुः ।। २८ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्भगवद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायां सप्तदशोऽध्यायः ।। १७ ।।

**भावबोधः (र.टि.)– ।। अश्रद्धयेत्यनेनेति ।।** अश्रद्धया हुतादेरसत्त्वेन तत्सत्त्वे तद्विरोधितया भक्तिः निमितत्वेन लभ्यत इति भावः । **ब्रह्मशब्दानामिति ।।** अनेन तस्य ब्रह्मणः वाचकानामोमादिशब्दानामिति व्याख्यातं भवति ।। २८ ।।

**।। इति श्रीरघूत्तमतीर्थप्रणीता गीताभाष्यटीकाभावबोधे सप्तदशोऽध्यायः ।।**

**भावदीपः (रा.टि.)– ।। अश्रद्धयेत्यनेनेति ।।** तादृशहोमादेरसत्वादिना निन्दोक्त्या भक्तिपूर्वानुष्ठानस्य लाभादिति भावः ।। **अत्रेति ।।** 'ओमित्युक्त' इत्यादिनोक्तार्थे भाष्ये 'यज्ञाद्या ओंनामकाः' इत्यर्थमुपेत्य ओंपदवाच्यत्वे निमित्तं स्वयमाह **वेदाद्योतत्वादिति ।। सन्निधेरिति ।।** पञ्चमी यज्ञादिषु विद्यमानस्य हेतुना अवगतत्वादिति शेषोक्तिः । **'तस्य'** इत्यनुवादः । **'उक्त'** इत्यादि व्याख्या । 'उक्तोङ्कारार्थज्ञानपूर्वकम्' (१७.२६) इत्यादिनोक्त-प्रकारेणेत्यर्थः ।। २८ ।।

**।। इति श्रीमद्गीताभाष्यटीकाभावदीपे राघवेन्द्रयतिकृते सप्तदशोऽध्यायः ।।**

**भावरत्नकोशः (सु.टि.)–** ब्रह्मभक्तिरपि लब्धा । अश्रद्धया हुतादि निराक्रियते । 'न हि निन्दा निन्द्यं निन्दितुं क्रियते, अपि तु स्तुत्यं स्तोतुम्' इति न्यायेन श्रद्धाशब्दितभक्तिस्तुतौ तात्पर्यावगमादिति भावः । **अत्र** 'ओमित्युक्त्वा, अनभिसन्धाय फलम् इत्यादिभाषितार्थे । **श्रुतीः** 'ओं यज्ञाद्याः ओंनामकाः यज्ञदानतपःक्रियाः' इत्यर्थं इति हृदि निधाय तत्र निमित्त-माह– **वेदाद्योतत्वादिति ।।** आदिशब्देन वैदिकग्रन्थानां ब्रह्मणश्च सङ्ग्रहः । ननु वेदोक्तस्य भगवद्विषयकस्य कर्मणः कथं निष्फलत्वम् इत्यतो निष्फलत्वं घटयति– **फलेति ।।** अनेन 'यज्ञादिकर्म तत्फलं वेदोक्तं स्वर्गादिकं मे स्यात्' इत्यनभिसन्धायानुष्ठितं तत् तच्छब्दवाच्यम्' इति व्याख्यातं भवति । 'ब्रह्मविषयं कर्म सच्छब्दार्थं वेदा वदन्ति' इति भाष्यपदेनान्वयः । **एवमिति ।।** वेदादिप्रतिपाद्यतया ब्रह्माधानत्वेन च निमित्तेन ओंशब्दस्य, फलोद्देशरहितत्वेन निमित्तेन तच्छब्दस्य, ब्रह्मविषयत्वेन निमित्तेन सच्छब्दस्य इत्येवं तच्छब्दानां ब्रह्मशब्दानां ब्रह्मवाचकओंशब्दतच्छब्दसच्छब्दानां यज्ञादिषु यज्ञदानतपस्तु सन्निधेः वाचकत्वेन वर्तमानात् निमित्तात् 'अवगतात्' इत्यध्याहारः । 'तद्रूपत्वात् इत्यनुवादः, 'तत्प्रतिमात्वात् इति व्याख्यानम् । 'तस्य' इत्यस्योक्तप्रकारेण इत्यादि व्याख्यानम् । **उक्तप्रकारेण** 'ओङ्कारार्थ-ज्ञानपूर्वकम् ओङ्कारमुच्चार्य, अनभिसन्धाय फलम् ब्रह्माभिसन्धाय च' इत्याद्युक्तप्रकारेण ।

श्लोकः २८
अनुष्ठातुः ब्रह्म जनितं प्रादुर्भूतमित्यन्वयः । उक्तप्रकारेण यज्ञदानतपोजपादिकमनुतिष्ठता साधकेन ब्रह्मैव निष्पादितं भवतीत्याशयः ।। २८ ।।

**गीताक्षरार्थस्तु–** भगवद्भक्तिरपि यज्ञादीतिकर्तव्यता इति भावेनोच्यते– **अश्रद्धयेति** ।। अश्रद्धया भगवच्छ्रद्धाभावेन 'भगवद्भक्त्या विना' इति यावत्, यद् हुतं दत्तं तप्तम् अनुष्ठितं तपः यच्च अन्यत् कृतं कर्म जपादि तद् असदित्युच्यते । कुतः यतः तद् हवनादि प्रेत्य स्थितस्य लोकान्तरे न फलति । इह अपि नो न फलतीति 'श्रद्धयैव कर्म कर्तव्यम्' इति 'भक्तिरपि' इतिकर्तव्यताविशेष इत्युक्तं भवति । तदनेन ओङ्कारार्थज्ञानपूर्वकम् ओङ्कारमुच्चार्य, अनभिसन्धाय फलम्, ब्रह्म अभिसन्धाय च, ब्रह्मज्ञानभक्तिपूर्वकं तद्विषयत्वेन निष्ठया वेदोक्तप्रकारेण ब्राह्मणैः सह यज्ञादिकं कार्यम् । एवं यज्ञादिकं कुर्वद्भिः साधकैर्ब्रह्मणि यज्ञादौ च ओङ्कारादिनामसाम्येन अवगततत्प्रतिमात्वाद् यज्ञादेस्तत्र यज्ञादौ ब्रह्मणोऽतिप्रीतेः तत्र ब्रह्मैव निष्पादितं भवति । अत एवं क्रियमाणं यज्ञादिकं सात्त्विकम्, अतथाभूतं तु यज्ञादिकं राजसं तामसमित्येवम् इतिकर्तव्यताप्रतिपादने 'ओं तद् इत्याद्युपदेष्टुः गीताचार्यस्य तात्पर्यमिति ।। २८ ।।

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।
नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमः श्रीनृसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ।।

**।। इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायां सप्तदशोऽध्यायः ।।**

**भावदीपिका (श्री.टि.)– ।। अश्रद्धयेत्यनेनेति** ।। अश्रद्धया हुतादेरसत्त्वे सति तेषामेव हुतादीनां सत्त्वे अश्रद्धाविरोधितया भक्तिर्निमितत्वेन लभ्यत इति भावः । **वेदाद्योतत्वादिति** ।। आदिपदेन ब्रह्मसङ्ग्रहः । वेदेषु प्रतिपाद्यतया प्रविष्टत्वात् ब्रह्मणि चाधेयतया प्रविष्टत्वादित्यर्थः । गीतायां 'स चासावर्थश्च तदर्थः, तत्सम्बन्धिं तदर्थीयम्' इत्यर्थः । **ब्रह्मशब्दानामिति** ।। अनेन 'तस्य ब्रह्मणो वाचकानामोमादिशब्दानाम्' इति व्याख्यातं भवति । **सन्निधेरिति** ।। सन्निधेर्निमित्तादवगतं तद्रूपत्वं तत्प्रतिमात्वं तस्माद्ब्रह्मणः प्रीतेर्जायमानत्वादित्यर्थः । **तस्येति** ।। कर्तरि षष्ठी । तेन 'उक्तप्रकारेण यज्ञादीनामनुष्ठात्रा ब्रह्म जनितं व्यक्तं भवति' इत्यर्थः ।। २८ ।।

श्लोकः २८

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
दशम अगमदध्यायोऽन्तमस्यां ससप्तः ॥

**भावप्रकाशः (कृ.टि.)– ॥ अश्रद्धयेति** ॥ न हि निन्दा निन्द्यं निन्दितुं भवति । अपि तु स्तुत्यं स्तोतुमिति न्यायेन भक्तिस्तुतौ तात्पर्यादिति भावः । **ब्रह्मशब्दानामिति** ॥ ब्रह्मवाचकोमादिशब्दानामित्यर्थः ॥ २८ ॥

॥ इति **श्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णविरचिते प्रमेयदीपिकाप्रकाशे सप्तदशोऽ**ध्यायः ॥

## ।। अथ श्रीमद्भगवद्गीतायाम् अष्टादशोऽध्यायः ।।

**अर्जुन उवाच–**

**सन्न्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ।। १ ।।**

### भाष्यम्

पूर्वोक्तं साधनं सर्वं सङ्क्षिप्योपसंहरत्यनेनाध्यायेन ।। १ ।।

भावप्रदीपिका (प.टी.)– एतदध्यायप्रतिपाद्यमाह– **पूर्वोक्तेति** ।

प्रमेयदीपिका (ज.टी.)– अध्यायप्रतिपाद्यमाह– **पूर्वोक्तमिति** ।। साधनं ज्ञान-साधनम् । उक्तस्योक्तिर्व्यर्थेत्याशङ्कानिरासाय सङ्क्षिप्योपसंहरति इत्युक्तम् । अनुक्तं त्रैगुण्यं च वक्तीत्यपि द्रष्टव्यम् ।। १ ।।

**भावबोधः (र.टि.)**– ननु 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इत्यादिना त्रैगुण्यस्यापि वचनात्कथमध्यायप्रतिपाद्यत्वेन साधनमेवोक्तमित्यतः अनुक्तत्रैगुण्यवादी चायमिति तात्पर्यं हृदि कृत्वाऽह– **अनुक्तमिति** ।। चतुर्दशाध्यायानुक्तमित्यर्थः ।

**भावदीपः (रा.टि.)**– ।। **पूर्वोक्तमिति** ।। पूर्वतनेष्वध्यायेषु विप्रकीर्णतयोक्तमित्यर्थः ।। **अनुक्तं त्रैगुण्यं चेति** ।। 'कारणं गुणसङ्गोऽस्य' (१३.२१) इत्यादिना त्रयोदशे, 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' (१४.५) इत्यादिना चतुर्दशादावुक्तादन्यदेव त्रैगुण्यमित्यर्थः ।। **वक्तीति** ।। 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इत्यादिना वक्तीत्यर्थः ।। १ ।।

**भावरत्नकोशः (सु.टि.)**– ।। **अध्यायप्रतिपाद्यम्** एतदध्यायप्रतिपाद्यम् । **पूर्वोक्तं** पूर्वेषु अध्यायेषु विप्रकीर्णतयोक्तम् । 'सङ्क्षिप्य' इति भाष्ये 'मन्दानां बुद्ध्यारोहाय' इति योज्यम् । 'उपसंहरति' इत्यनुवदन् उपसंहाररूपत्वात् न पुनरुक्तिशङ्का इत्यभिप्रैति । ननु 'त्यागो हि पुरुषव्याघ्र त्रिविधः' इति 'ज्ञानं कर्म च कर्ता च त्रिविधो गुणभेदतः' इत्यादिना च गुणनिमित्तकत्यागादिभेदस्यापि अत्राध्याये वचनात् कथं 'साधनम् 'इत्येवोक्तम् इत्यतो

'अनुक्तत्रैगुण्यवादी चायम्' इति तात्पर्यनिर्णयरीत्या गुणभेदवचनमपि ग्राह्यमित्याह– **अनुक्तमिति** ।। 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इति चतुर्दशाध्याये, 'कारणं गुणसङ्गोऽस्य' इति त्रयोदशाध्याये चोक्तात् त्रैगुण्यादन्यदेव त्रैगुण्यमित्यर्थः ।। १ ।।

**गीताक्षरार्थस्तु–** पूर्वाध्यायेषु तत्र तत्र यद् विप्रकीर्णतयोक्तं पुरुषार्थसाधनज्ञानसाधनं तन्मन्दानां बुद्ध्यारोहार्थं सङ्क्षेपेणास्मिन्नष्टादशाध्याये निरूप्यते । चतुर्दशाद्यनुक्तं त्रैगुण्यं चोच्यते । पूर्वं 'सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ', 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी' इत्यादौ सन्न्यास उपदिष्टः । 'त्यागाच्छान्तिरनन्तरम्,' 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः', 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इत्यादौ त्यागश्च । तयोः स्वरूपनिर्धारणाय अर्जुनोऽपृच्छदित्युच्यते– **अर्जुन उवाच सन्न्यासस्येति** ।।

सन्न्यासस्य च त्यागस्य च पृथग् इतरेतरविभागः तत्त्वम् अनारोपितं रूपं वेदितुं ज्ञातुम् इच्छामि । हे महाबाहो हृषीकेश इन्द्रियप्रेरक केशिनिषूदन हयासुरनिबर्हण इति श्रीकृष्णस्य सम्बुद्धिः ।। १ ।।

**भावदीपिका (श्री.टि.)–**

प्रणम्य यादवाचार्यगुरूणां पदपङ्कजे
क्रियतेऽष्टादशाध्यायटीका भावप्रदीपिका ।। १ ।।

।। **व्यर्थेति** ।। तथा च पुनरुक्तिरिति भावः । **सङ्क्षिप्योपसंहरतीति** ।। तथा चोपसंहारार्थत्वात् न पुनरुक्तिरिति भावः । ननु 'ज्ञानं कर्म च कर्ता च' इत्यादिना त्रैगुण्यस्यापि वचनात् कथमन्याप्रतिपाद्यत्वेन साधनमेवोक्तम् इत्यतः 'अनुक्तत्रैगुण्यवादी चायम्' इति तात्पर्यं मनसि निधायाह– **अनुक्तमिति** ।। चतुर्दशाध्यायादावनुक्तमित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)–** ननु 'त्यागो हि पुरुषव्याघ्र त्रिविधः' इत्यादिना त्यागादीनां गुणनिमित्तकभेदोऽप्युच्यते । तत्कथं साधनमित्येवोक्तमित्यत आह– **अनुक्तं त्रैगुण्यमिति** ।। गुणनिमित्तकभेदमित्यर्थः । ननु चतुर्दशादौ त्रैगुण्यस्योक्तत्वात् पुनरुक्तिरित्यत उक्तम्– **अनुक्तमिति** ।। चतुर्दशाद्यनुक्तमित्यर्थः ।। १ ।।

श्लोकः २

## श्रीभगवानुवाच–

**काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।। २ ।।**

भाष्यम्

**फलानीच्छयाऽकरणेन वा काम्यकर्मणो न्यासः सन्न्यासः । त्यागस्तु फलत्याग एव । तथा हि प्राचीनशालाश्रुतिः 'अनिच्छयाऽकर्मणा वाऽपि काम्यकर्मन्यासो न्यासः फलत्यागस्तु त्यागः' इति ।। २ ।।**

भावप्रदीपिका (प.टी.)– काम्यानाम् इति श्लोकं सप्रमाणकं व्याचष्टे– **फलेति** ।। २ ।।

प्रमेयदीपिका (ज.टी.)– 'काम्यानां कर्मणाम्' इत्येतं श्लोकं केचिद् व्याचक्षते 'काम्यानां कर्मणामश्वमेधादीनां स्वरूपेण त्यागः सन्न्यासः । नित्यनैमित्तिकादि-सर्वकर्मफलत्यागः त्यागः' इति । तदसदिति भावेनाऽह– **फलेति** ।। वैकल्पिक-काम्यानां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः, नियतकाम्यानां स्वरूपाकारणेन त्यागः सन्न्यासः ।। काम्यकर्मणामेव फलत्यागस्तु त्यागः करणाकरणे तु न विवक्षित इत्यर्थः । कुत एतत्? इत्यत आह– **तथा हीति** ।। अकर्मणा अकरणेन ।। जनकाश्वपत्यादिभिर्मुमुक्षुभिः अश्वमेधादीनाम् अनुद्दिष्टफलानाम् अनुष्ठानात् न काम्यानां स्वरूपपरित्याग एव । नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन तत्त्यागो न युक्तः ।। २ ।।

**भावबोधः** (र.टि.)– नन्वकरणेन वेति पक्षान्तरेऽश्वमेधादीनां स्वरूपेण त्यागप्राप्त्या अपव्याख्यानमेवाङ्गीकृतं स्यादित्यत आह– **वैकल्पिकेति** ।। 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च' इति वक्ष्यमाणरीत्या फलेच्छया तदनिच्छया च कर्तुं योग्यत्वात् ज्योतिष्टोमादीनां वैकल्पिककाम्यत्वमित्यर्थः । **विशेषणत्यागेनेति** ।। फलकामनाविषयत्वरूप-विशेषणत्यागेनेत्यर्थः । **नियतकाम्यानामिति** ।। कारीर्यादीनामित्यर्थः । **काम्यकर्मण-मेवेति** ।। वैकल्पिकेति ग्राह्यम् । नित्यनैमित्तकव्यावृत्त्यर्थमेवेत्युक्तम् । यद्वक्ष्यति

'नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन त्यागो न युक्तः' इति । नन्वेवं तर्हि सन्यासात् त्यागस्य कथं भेद इत्यत आह– **करणाकरणे त्विति** ।। सन्यासशब्दार्थे तु करणं विवक्षितमिति भावः । अत एव विशेषणत्यागेनेत्युक्तम् । तथाच कर्म कृत्वैव स्वर्गादि-नश्वरतत्फलत्यागः सन्यासः, तादृशफलत्यागमात्रं त्याग इति द्वयोर्भेद इत्युक्तं भवति ।

**भावदीपः (रा.टि.)– ।। फलानिच्छया अकरणेन वा** इति भाष्यं भिन्नकर्मविषयतया व्याचष्टे– **वैकल्पिकेति** ।।अश्वमेधज्योतिष्टोमादयो हि फलकामनया तदकामनया वा अनुष्ठानयोग्यत्वाद्वैकल्पिककाम्याः, तेषां कामनाविषयत्वरूपविशेषणत्यागेन स्वरूपाकरणत्यागेन स्वरूपाकरणम् इत्यर्थः ।। **नियतेति** ।। पुत्रेष्ट्यादिरूपकाम्यकर्मणामित्यर्थः ।। **काम्यकर्मणा-मेवेति** ।। स्वर्गादिफलकाश्वमेधज्योतिष्टोमराजसूयादिकर्मणामित्यर्थः ।। एव इत्यनेन प्रागुक्ता-नामिति द्योतयति । भाष्यस्थस्यैवाक्षरतात्पर्यमाह– **करणाकरणे तु न विवक्षत इति** ।। उत्तरं वक्तुर्भगवत इति योज्यम् । सन्न्यासशब्दार्थे तु उक्तदिशा केषाञ्चित् करणं केषाञ्चिदकरणं विवक्षितमिति सन्न्यासत्यागयोर्भेद इति भावः ।। २ ।।

**भावरत्नकोशः (सु.टि.)– ।। केचिदिति** ।। तथा च शङ्करः 'काम्यानाम् अश्वमेधा-दीनां कर्मणां न्यासं परित्यागम् अनुष्ठीयत्वेन प्राप्तस्याननुष्ठानम्, नित्यनैमित्तिकानाम् अनुष्ठीय-मानानां सर्वकर्मणाम् आत्मसम्बन्धितया प्राप्तस्य फलस्य परित्यागम् 'इति । श्रीधरोऽपि 'पुत्रकामः', 'स्वर्गकामः' इत्यादिकामोपबन्धेन विहितानां कर्मणां सन्न्यासं स्वरूपतः परित्यागं सर्वकर्मणां फलमात्रपरित्यागं त्यागं प्राहुः' इति । **नित्यनैमित्तिकादिसर्वकर्मेति** ।। नित्यानि सन्ध्यावन्दनादीनि, नैमित्तिकानि उपरागस्नानादीनि । आदिपदगृहीतानि काम्यकर्माणि इत्येवं सर्वेषां कर्मणां फलत्यागः त्यागशब्दार्थ इत्यर्थः । यत्तु 'अत्र आदिपदं सम्पातायातम् 'इति केषाञ्चिद्वचनं तदभव्यम् । काम्यानाम् अश्वमेधादीनां स्वरूपतः त्यागः सन्न्यासशब्दार्थः, निमित्तनैमित्तिककाम्यात्मकानां सर्वकर्मणां फलत्यागः त्यागशब्दार्थ इति सन्न्यासत्यागयोः स्वरूपव्याख्यानाद् आदिपदेन काम्यकर्मग्रहणसम्भवात् । नित्यनैमित्तिकयोः स्वपदेन, काम्यग्रहणं तु पूर्वार्धे स्वरूपतः त्यक्तव्यतयाऽभिहितत्वाशयात् । अत एव 'सर्वकर्मफलत्यागम्' इत्युत्तरार्धम् । 'सर्वेषां काम्यानां नित्यानां नैमित्तिकानां च कर्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणाः' इति श्रीधरोऽपि व्याचख्यौ । 'नित्यनैमित्तिकानां सर्वकर्मणाम्' इति शङ्करभाषण-मपि स्वरूपतस्त्यक्तानां काम्यकर्मणां फलत्यागस्य कैमुतिकन्यायप्राप्तत्वाभिप्रायम् ।

श्लोकः २
'नित्यनैमित्तिकफलस्य अन्तःकरणशुद्धेः' इति अग्रिमटीकावाक्यमपि 'काम्यानां स्वरूपतस्त्यागः, नित्यनैमित्तिकानां फलत्यागः' इति यद् अपव्याख्यानं तत्प्रतिक्षेपाय प्रवृत्तमिति न तदपि आदिपदस्य सम्पातायातत्वे उपष्टम्भकमिति ।

'अश्वमेधादीनां स्वरूपतस्त्यागः सन्न्यासः' इति परपक्षं प्रतिक्षिपन् 'फलानिच्छया अकरणेन' इति भाष्यं व्यवस्थया व्याख्याति– **वैकल्पिककाम्यानामिति** ।। यानि फलाभिसन्धिना कर्तुं योग्यान्यपि तदनभिसन्धिनाऽपि कर्तुं योग्यानि तानि वैकल्पिककाम्यानि अत्र विवक्षितानि, तेषाम् अश्वमेधादीनामित्यर्थः । भाष्ये फलस्वरूपं वक्तुमुक्तम्– **स्वर्गादीति** ।। 'फलानिच्छया' इत्यस्य तात्पर्यम्– **विशेषणत्यागेनेति** ।। फलाभिसन्धिपूर्वकं क्रियमाणत्वरूपविशेषणत्यागेनेत्यर्थः ।

नियतकाम्यानां 'पुत्रकामः पुत्रेष्ट्या यजेत', 'वृष्टिकामः कारीर्या यजेत' इत्यादिशास्त्रचोदितनित्यकाम्यानां पुत्रकामेष्ट्यादीनामित्यर्थः । न चैतेषामपि फलेच्छया तदनिच्छया च कर्तुं शक्यत्वाद् वैकल्पिककाम्यत्वं शङ्क्यम् । अश्वमेधादिवत् मोक्षोद्देशेन सनकादिभिः अननुष्ठानेन तेषां नित्यकाम्यत्वमेवेत्याशयात् । काम्यकर्मणामेव वैकल्पिककाम्यकर्मणाम् अश्वमेधादीनामेव । एवकारेण नित्यनैमित्तिककर्मव्यावृत्तिः ।

तर्हि सन्न्यासत्यागयोः भेदः कथम् इत्यतः भाष्यस्थैवकारतात्पर्योक्तिः– **करणाकरणे त्विति** ।। सन्न्यासशब्दार्थे तु करणं विवक्षितमिति हृदयम् । अत एव 'अश्वमेधादीनाम् अनुद्दिष्टफलानाम् अनुष्ठानात्' इति वक्ष्यति । तथा च अश्वमेधादिकर्मानुष्ठानायैव तत्फलस्वर्गाद्यनभिसन्धिः सन्न्यासः, वैकल्पिकनित्यरूपोभयविधकाम्यकर्मणामेव करणाकरणविवक्षया फलमात्रत्यागः त्याग इति तयोर्भेद इति विभावितं भवतीति वदन्ति । 'अकरणेन' इति भाष्याविसंवादाय 'अकर्मणा' इत्यस्य प्रकृतेऽन्वयाय चार्थमाह– **अकर्मणा अकरणेनेति** ।। 'काम्यानां स्वरूपतस्त्यागः, नित्यनैमित्तिकानां फलत्यागः' इति परव्याख्याने किं दूषणमुक्तं स्यात् इत्यतः तद्दर्शयति– **जनकेति** ।। फलानुद्देशे प्रेक्षावतां प्रवृत्तेरनुपपत्तिरिति विशेषपरिजिहीर्षयोक्तम्– **मुमुक्षुभिरिति** ।। अनुद्दिष्टफलानाम् अनभिसंहितनश्वरस्वर्गादिफलकानाम् । स्वरूपपरित्याग एव 'स्वरूपत एव त्यागः सन्न्यासः' इति योज्यम् । न त्यागः नित्यनैमित्तिककर्मफलत्यागः, 'न युक्त इति भावः' इति शेषः ।।

**गीताक्षरार्थस्तु** अत्र परिहार उक्तो भगवतेत्युच्यते– **भगवानुवाच– काम्यानामिति** ।। काम्यानि कर्माणि द्विविधानि वैकल्पिककाम्यानि नियतकाम्यानि चेति । तत्र यानि फलाभिसन्धिना कर्तुं योग्यान्येव तदनभिसन्धिनाऽपि कर्तुं योग्यान्येव, (तदभिसन्धिनाऽपि कर्तुं योग्यानि) तान्युच्यन्ते वैकल्पिककाम्यानीति । यानि तु केवलम् ऐहिकफलाभिसन्धिना क्रियन्ते पुत्रकामेष्टिकारीर्यादीनि, तान्युच्यन्ते नियतकाम्यानीति । तत्र वैकल्पिककाम्यानाम् अश्वमेधादीनां फलानिच्छया फलाभिसन्धिना क्रियमाणत्वरूपविशेषणत्यागेन त्यागम्, नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्यागं सन्न्यासं सन्न्यासशब्दार्थं कवयः पण्डिताः विदुः जानन्ति सर्वेषां काम्यकर्मणामेव फलत्यागं करणाकरणौदासीन्येन फलाभिसन्धित्यागं त्यागशब्दार्थं विचक्षणाः प्राज्ञाः प्राहुः कथयन्ति ।। २ ।।

**भावदीपिका (श्री.टि.)**– ।। **नित्येत्यादि** ।। **नित्यं** सन्ध्यावन्दनादि । **नैमित्तिकं** पितृश्राद्धादि । 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया' इति वचनेन प्रत्यवायपरिहारार्थमेव तेषां कर्तव्यत्वादिति भावः । ननु 'अकरणेन वा' इति पक्षान्तरेऽश्वमेधादीनां स्वरूपेण त्यागप्राप्त्याऽपव्याख्यानमेवाङ्गीकृतं स्यात्? इत्यत आह– **वैकल्पिकेति** ।। 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च' इति वक्ष्यमाणरीत्या फलेच्छया तदनिच्छया च कर्तुं योग्यत्वात् ज्योतिष्टोमादीनां वैकल्पिककाम्यत्वम् । **विशेषणत्यागेनेति** ।। फलकामनाविषयत्वरूपविशेषणत्यागेनेत्यर्थः । **नियतकाम्यानामिति** ।। कारीर्यादीनामित्यर्थः । **काम्यकर्मणामिति** ।। वैकल्पिककाम्यकर्मणामित्यर्थः । नित्यनैमित्तिकव्यावृत्त्यर्थम् 'एव' इत्युक्तम् । यद्वक्ष्यति– 'नित्यनैमित्तिकफलस्यान्तःकरणशुद्धेः सर्वापेक्षितत्वेन त्यागो न युक्तः' इति । नन्वेवं तर्हि सन्न्यासात् त्यागस्य कथं भेद इत्यत आह– **करणाकरणे त्विति** ।। 'त्यागः' इति शेषः । सन्न्यासशब्दार्थे तु करणं विवक्षितमिति भावः । अत एव 'विशेषणत्यागेन' इत्युक्तम् । तथाच 'कर्म कृत्वैव नश्वरस्वर्गादिफलत्यागः सन्न्यासः', 'तादृशफलत्यागमात्रं त्यागः' इति द्वयोर्भेद इत्युक्तं भवति । परव्याख्यानं दूषयति– **जनकेति** ।। 'नित्यनैमित्तिकादि' इत्युक्ततदीयत्यागशब्दार्थं दूषयति– **नित्येति** ।। २ ।।

**भावप्रकाशः (कृ.टि.)**– नित्यनैमित्तिकादीत्यादिपदं सम्पातायातम् । अत एवाग्रे नित्यनैमित्तिकफलस्येत्येवोक्तम् । शब्दतः प्रतीतं विरोधं विषयव्यवस्थया परिहरति– **वैकल्पिकेति** ।। अश्वमेधादीनामित्यर्थः । 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च'

श्लोकः ३

इत्युक्तेः । फलेच्छया तदनिच्छया च कर्तुं योग्यत्वाद्वैकल्पिककाम्यत्वमिति भावः । **विशेषणेति** ।। काम्यत्वं नाम फलेच्छया क्रियमाणत्वम् । तत्रेच्छारूपविशेषणत्यागेनेत्यर्थः । **नियतकाम्यानामिति** ।। ग्रामपश्वादिकामनया विहितानां चित्रादियागानामित्यर्थः । न चैतेषामपि फलेच्छया तदनिच्छया च कर्तुं शक्यत्वाद्वैकल्पिकत्वं शङ्क्यम् । अश्वमेधादिवन्मोक्षेच्छया जनकादिभिरेतदननुष्ठानान्नित्यकाम्यत्वमेवेत्याशयात् । किञ्च यथा ज्योतिष्टोमादीनां फलोद्देशेन च विधिः ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिश्रवणात् तथा चित्रादियागानां न विधिः । अतोऽपि नित्यकाम्यत्वमेवेति । **काम्यकर्मणामेवेति** ।। वैकल्पिककाम्यानामेवेत्यर्थः । नित्यनैमित्तिकव्यावृत्त्यर्थम्' एव' इत्युक्तम् । नन्वेवं तर्हि सन्न्यासात् त्यागस्य कथं भेद इत्यत आह– **करणाकरणे त्विति** ।। लक्षणशरीरप्रविष्टतयेति शेषः । सन्न्यासशब्दार्थे तु करणं विवक्षितमिति भावः । अत एव विशेषणत्यागेनेत्युक्तम् । तथा च कर्म कृत्वैव स्वर्गादिनश्वरतत्फलत्यागः सन्न्यासः । तादृशफलत्यागमात्रश्च त्याग इति द्वयोर्भेदो बोध्यः । अपव्याख्यानं निराह– **जनकेति** ।। २ ।।

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपः कर्म न त्याज्यमिति चापरे ।। ३ ।।**

## भाष्यम्

**मनीषिणः इति विशेषणात् पूर्वपक्षोऽपि ग्राह्य एव । फलत्यागेन त्यागो विवक्षितः । यज्ञादेस्तत्पक्षे । 'यस्तु कर्मफलत्यागी' (१८.११) इति च वक्ष्यति । अत एक एवायं पक्षः ।। ३ ।।**

भावप्रदीपिका (प.टी.)– यज्ञदानतपः कर्म न त्याज्यम् इति श्रवणात् त्याज्यं दोषवत् इति पक्षो हेय इति न शंक्यमित्याह– **मनीषिण इति** । तर्हि कृष्णमतविरोध इत्यत आह– **फलेति** । त्यागशब्दः फलत्यागमात्रे कथं पर्यवस्यति ? इत्यत आह– **यस्त्वति** । यतो न भगवन्मतविरोधः, अतोऽयमेक एव पक्ष इत्याह– **अत इति** ।।

प्रमेयदीपिका (ज.टी.)– 'त्याज्यं दोषवत्' इत्यनेन 'हेयः कापिलानां पक्ष उपन्यस्तः' इति केचित्। तदसदिति भावेनाऽह– **मनीषिण इति** ।। पूर्वपक्षः

**पूर्वोपन्यस्तः पक्षः । ननु 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' (१८.५) इति भगवन्मतविरुद्धोऽसौ कथं ग्राह्यः? इत्यत आह– फलत्यागेनेति ।।** फलत्यागाभिप्रायेण यज्ञादेः त्यागो विवक्षितः तत्पक्षे न स्वरूपतः । कुतः? **मनीषिणः** इति विशेषणादेव । अतो न भगवन्मतविरुद्धोऽसौ । कर्मत्यागशब्दः कथं फलत्यागेनार्थेनार्थवान्? इत्यत आह– **यस्त्विति ।।** नन्वेवं सति पूर्वोत्तरार्धोपन्यस्तयोः पक्षयोरविरोध आपद्यत इति चेत् सत्यमित्याह– **अत इति ।।** अतः मनीषिपक्षत्वात् एकः अविरुद्धः । अयं पूर्वोत्तरार्धोपन्यस्तः । किन्त्वापातप्रतीतिमपेक्ष्य सन्देहवीजत्वेन विप्रतिपत्तिरियमुद्भावितेति भावः ।। ३ ।।

**भावबोधः (र.टि.)– ।। पूर्वोपन्यस्त इति ।।** 'यज्ञदानतपःकर्म न त्याज्यमिति चापरे' इत्येतदपेक्षयेत्यर्थः । **अविरुद्ध इति ।।** न त्याज्यमित्युत्तरपक्षेऽपि फलत्यागेन स्वरूपकरणस्य विवक्षितत्वादिति भावः । **आपातप्रतीतिमिति ।।** 'त्याज्यं' इत्यनेन स्वरूपत्याग एवोच्यते, न त्याज्यमित्यनेन फलेच्छया कर्तव्यत्वमुच्यते इत्यापातप्रतीतिमित्यर्थः ।। ३ ।।

**भावदीपः (रा.टि.)– ।। पूर्वोपन्यस्त इति ।।** 'त्याज्यम्' इति श्लोके पूर्वोत्तरार्धयोः 'एके अपरे' इत्युक्तपक्षयोर्मध्ये पूर्वार्धोपन्यस्तः पक्ष इत्यर्थः ।। फलत्यागेन इति वाक्यस्य 'ग्राह्यः' इत्यन्तवाक्येन अन्वयमाह – **अत इति ।। अविरोध इति ।।** फलत्यागानुमानस्य पक्षद्वयेऽपि साम्याद् इति भावः ।। कुतस्तर्हि पक्षभेदोपन्यासः इति पृच्छायामाह– **किन्त्वित्यादिना ।। आपातेति ।।** कर्मणस्त्यागरूपापातप्रतीतिमित्यर्थः ।। **अपेक्ष्य** इत्यस्य **उद्भाविता** इत्यनेनान्वयः ।। ३ ।।

**भावरत्नकोशः (सु.टि.)– ।। 'हेयः' इति** साधुकपिलपक्षव्यावृत्त्यर्थमुक्तम् । 'पूर्वपक्षो ग्राह्यः' इत्यलौकिकम् इत्यत आह– **पूर्वोपन्यस्त इति ।।** 'त्याज्यं दोषवदित्येके' इत्यर्धोपन्यस्त इत्यर्थः । **असौ** 'कर्मयज्ञादिकं त्याज्यम्' इति पूर्वोपन्यस्तः पक्षः । **तत्पक्षे** पूर्वोपन्यस्तपक्षे । **कुतः** यज्ञादेः स्वरूपतस्त्यागो न विवक्षित इत्ययमर्थः कस्मात् प्रमाणाद् अवसेय इत्यर्थः । **अतः** 'त्याज्यं कर्म' इति आद्यपक्षस्य फलत्यागाभिप्रायकत्वात् । **असौ** पूर्वार्धोपन्यस्तः । 'इति भावः' इति शेषः । शङ्कते– **कर्मत्यागशब्द इति ।।** 'अतः' इत्यनुवादः, 'मनीषिपक्षत्वाद्' इति व्याख्या । करणाकरणपक्षयोरिति भेदात् कथमेकत्वम् इत्यत

श्लोकः ३

उक्तम्– **एकः अविरुद्ध इति** ।। 'न त्याज्यम्' इत्युत्तरार्धोपन्यस्तपक्षेऽपि फलत्यागेन स्वरूपकरणस्य विवक्षितत्वात् । 'त्याज्यं कर्म'. इत्यत्रापि फलत्यागस्यैवाभिसंहितत्वादिति भावः । एवं तर्हि 'एके' इति, 'अपरे' इति च विप्रतिपत्त्युद्भावनं कथम् इति पृच्छति– **किन्त्विति** ।। **आपातप्रतीतिमिति** ।। 'त्याज्यम्' इत्यनेन कर्मणः स्वरूपतस्त्याग उच्यते, 'न त्याज्यम्' इत्यनेन च स्वरूपतोऽत्याग इति झटिति उत्पन्नापरामर्शपूर्वकप्रतीतिमित्यर्थः ।।

**गीताक्षरार्थस्तु** 'सर्वकर्मफलत्यागम्' इति स्वोक्तत्यागस्वरूपावधारणाय आपातप्रतीतिमपेक्ष्य सन्देहबीजत्वेन विद्वन्मतविप्रतिपत्तिरुद्भाव्यते– **त्याज्यं दोषवदिति** ।। एके मनीषिणः पण्डिताः कर्म काम्यं त्याज्यं प्राहुः । कुतः दोषवत् । हिंसाबन्धकत्वाख्यदोषवद् इति हेत्वर्थगर्भं विशेषणम्, दोषयुक्तत्वादित्यर्थः । अपरे तु मनीषिणः यज्ञदानतपांसि कर्म कर्तव्यत्वेन विहितो धर्मः, यद्वा द्वन्द्वैकवद्भावः । कर्म नित्यनैमित्तिकलक्षणं तन्न त्याज्यमिति प्राहुः । अत्र पूर्वोत्तरार्धोपन्यस्तौ पक्षौ अविरुद्धावेव, फलत्यागाभिपायेणैव यज्ञादेस्त्यागो विवक्षितः । पूर्वोपन्यस्तपक्षे न स्वरूपत्यागः । कुतः 'मनीषिणः' इति विशेषणादेव । एवमपि कर्मत्यागशब्दः कथं फलत्यागेनार्थेन अर्थवान् इति चेत् 'सर्वकर्मत्यागं ततः कुरु' इति, 'यस्तु कर्मफलत्यागी' इति च भगवतैव कर्मत्यागशब्दाभिप्रायाविष्करणाद् इत्यवेहीति भाष्यटीकयोः स्फुटम् ।। ३ ।।

**भावदीपिका (श्री.टि.)**– वक्ष्यमाणरीत्या 'त्याज्यम्' इत्युक्तपक्षस्यापि सिद्धान्तत्वेन पूर्वपक्षत्वाभावादाह– **पूर्वोपन्यस्तमिति** ।। 'यज्ञदान' इत्येतदपेक्षया पूर्वोपन्यस्त इत्यर्थः । **अविरुद्ध इति** ।। 'न त्याज्यम्' इत्युक्तपक्षेऽपि फलत्यागेन स्वरूपकरणस्य विवक्षितत्वादिति भावः । नन्वेवम् उभयोरपि पक्षयोरविरुद्धत्वे 'एके', 'अपरे' इति विप्रतिपत्तिः कथमुद्भावितेत्याशयेन पृच्छति – **किन्त्विति** ।। उत्तरमाह– **आपातेति** ।। 'त्याज्यम्' इत्यनेन स्वरूपत्याग एवोच्यते, 'न त्याज्यम्' इत्यनेन फलेच्छया कर्तव्यत्वमुच्यत इत्यापातप्रतीतिमपेक्ष्येत्यर्थः ।। ३ ।।

**भावप्रकाशः (कृ.टि.)**– साधुकापिलपक्षव्यावृत्त्यै 'हेय' इत्युक्तम् । पूर्वपक्षस्य व्याहतत्वं व्याहतमित्यत आह– **पूर्वोपन्यस्त इति** ।। **अविरुद्ध इति** ।। 'न त्याज्यम्' इत्युत्तरपक्षेऽपि फलत्यागेन स्वरूपकरणस्य विवक्षितत्वादिति भावः । तर्हि 'एके अपरे इति

विप्रतिपत्त्युद्भावनं कथमित्याशयेन पृच्छति– **किन्त्विति** ।। उत्तरमाह– **आपातेति** ।। त्याज्यमित्यनेन स्वरूपत्याग एवोच्यते । 'न त्याज्यम्' इत्यनेन तु कर्तव्यत्वमित्यापातप्रतीतिमित्यर्थः ।। ३ ।।

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ।। ४ ।।**

## भाष्यम्

**तत्प्रकारं चाह– निश्चयमित्यादिना ।। यज्ञभेद उक्तः 'द्रव्ययज्ञाः' (४.२८) इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद् यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा 'ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्' इत्यादि व्यासस्मृतिविरोधः ।**

भावप्रदीपिका (प.टी.)– प्रथमद्वितीयपक्षयोर्विरोधाभ्युपगमे 'निश्चयम्' इत्यादि च न सङ्गच्छत इति भावेनाह– **तत्प्रकारं चेति** । ननु यतीनां यज्ञदानाभावात् कथं तयोरत्याज्यत्वमुच्यते ? इत्यत आह– **यज्ञेति** । ननु यज्ञादिपदेन द्रव्ययज्ञाद्येव विधीयत इति किं न स्यात् ? इत्यत आह– **अन्यथेति** ।।

प्रमेयदीपिका (ज.टी.)– न केवलं **'मनीषिणः'** इति विशेषणसामर्थ्यादेवमुच्यते । किन्तु भगवताऽपि तदविरोधप्रकारस्य व्युत्पाद्यमानत्वादिति भावेनोत्तरवाक्यतात्पर्यमाह– **तदिति** ।। ननु परमहंसानां यज्ञदानयोरभावात् कथमुच्यते 'न त्याज्यं कार्यमेव तत् इति । तत्राह– **यज्ञेति** ।। ननु ज्योतिष्टोमादिकमेव यज्ञः धनदानादिकमेव दानं गृहीत्वा पारमहंस्यमेव कुतो न निराक्रियत इत्यत आह– **अन्यथेति** ।। **यतिः** हंसादिः । **आस्थातुं** प्राप्तुम् । **उत्तमाश्रमं** पारमहंस्यम् ।।

**भावबोधः** (र.टि.)– ।। **उत्तरवाक्यतात्पर्यमिति** ।। अनेन निश्चयादिनेति भाष्ये आदिपदेन 'त्यागी सत्त्वसमाविष्टो मेधावी च्छिन्नसंशयः' इत्यन्तस्य ग्रहणमिति सूचितम् । तावता ग्रन्थेन त्यागो हीति त्यागत्रैविध्यं प्रतिज्ञाय फलत्याग एव सात्त्विकत्यागः, कर्मस्वरूपत्यागस्तु तामसो राजसश्चेति प्रतिपादनेन मनीषिमतयोरविरोधप्रकारस्यैव व्युत्पादितत्वादिति भावः ।

श्लोकः ४

ननु यत्याश्रमस्यैवोत्तमत्वात् यतिरुत्तममाश्रममाश्रयेदिति कथमुक्तमित्यत आह– **यतिर्हंस इति** ।। ज्ञानमेव यज्ञो येषां ते ज्ञानयज्ञः । ब्रह्मचर्याद्येव तपो येषां ते ब्रह्मचर्यादितपस इति यावत् ।

**भावदीपः (रा.टि.)–** ।। **यज्ञेतीति** ।। 'द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे' इत्यादिना चतुर्थे यज्ञभेद उक्त इति भाष्यार्थः ।। **गृहीत्वा** इत्यतः पूर्वम् **इति**शब्दोऽध्याहार्यः ।। **यतिः हंसादिरिति** ।। चतुर्थाश्रमो हंसकुटीचकबहूदकपरमहंसभेदेन चतुर्विधः । ततो 'हंसादेः' इत्युक्तम् । यतेरेव परमहंसत्वे 'उत्तमाश्रममाश्रयेत् 'इत्युक्तमयुक्तं स्यादिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** 'अविरोधप्रकारस्य व्युत्पाद्यमानत्वाद्' इति वदता 'तत्प्रकारं पूर्वोत्तरपक्षयोः अविरोधप्रकारमाह व्युत्पादयति' इति भाष्यार्थ उक्तो भवति । 'उत्तरवाक्य-तात्पर्यम् इत्यत्र 'उत्तरवाक्यानां तात्पर्यम्' इति विग्रहः । भाष्ये आदिपदेन 'त्यागी सत्त्व-समाविष्टो मेधावी छिन्नसंशयः' इत्यन्तवाक्यग्रहणम् । तदन्तवाक्यसमुदायेन च 'त्यागो हि' इति त्यागत्रैविध्यं प्रतिज्ञाय, फलत्याग एव सात्त्विकत्यागः, कर्मस्वरूपत्यागस्तु तामसो राजसश्चेति प्रतिपादनेन मनीषिमतयोः अविरोधप्रकारस्येव व्युत्पाद्यमानत्वादित्यभिप्रैति । 'यज्ञभेद उक्तः' इति भाष्ये 'चतुर्थाध्याये' इति शेषः । ननु यत्याश्रमस्यैव उत्तमाश्रमत्वात् कथं 'यतिरुत्तम-माश्रमम् आश्रयेत्' इत्युक्तिः इत्यत आह– **यतिर्हंसादिरिति** ।। आदिपदेन कुटीचकबहूदकयो-र्ग्रहणम् । 'आस्थातुम्' इत्यस्य 'अवस्थानाय' इति प्रतीतार्थकत्वेऽनन्वयः इत्यतो व्याचष्टे– **प्राप्तमिति** ।। तिष्ठतेरकर्मत्वेऽपि 'अनेकार्था हि धातवः' इति प्रसिद्धेः प्रकृत प्राप्त्यर्थकत्वम् इष्टमिति भावः । उक्तचोद्यापनोदाय उत्तमाश्रमशब्दविवक्षितार्थमाह– **पारमहंस्यमिति** ।।

**भावदीपिका (श्री.टि.)–** ।। **एवम्** अविरुद्धत्वम् । **उक्तवाक्यतात्पर्यमिति** ।। अनेन 'निश्चयमित्यादिना' इति भाष्ये आदिपदेन 'त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः' इत्यन्तस्य ग्रहणमिति सूचितम् । तावता ग्रन्थेन 'पुरुषो हि' इति त्यागत्रैविध्यं प्रतिज्ञाय फलत्याग एव सात्त्विकत्यागः, कर्मस्वरूपत्यागस्तु सात्त्विको राजसश्च इति प्रतिपादनेन मनीषिमतयोरविरोधप्रकारस्यैव व्युत्पादितत्त्वादिति भावः । **पारमहंस्यमेवेति** ।। तत्रोक्तयोः यज्ञदानयोरभावादिति भावः । तथा च पारमहंस्यमकर्तव्यत्वेनैव विवक्षितमिति भावः । ननु यत्याश्रमस्यैवोत्तमाश्रमत्वात् 'यतिरुत्तममाश्रममाश्रयेत्' इत्ययुक्तम् इत्यत आह– **यतिर्हंसादि-रिति** ।। अत्रादिपदेन बहूदकूटीचकयोः सङ्ग्रहः । हंसादीनां स्वरूपं तु 'यज्ञोपवीतवान्

एकदण्डी शिखारहितो हंसः । त्रिदण्डी शिखायज्ञोपवीतवान् ग्रामैकरात्रिः बहूदः । त्रिदण्डी शिखायज्ञोपवीतवान् यावज्जीवं पुत्रदत्तान्नः कुटीचः । शिखायज्ञोपवीतहीनः एकदण्डी परमहंसः' इति गीतातात्पर्योक्तरीत्या द्रष्टव्यम् ।

**भावप्रकाशः (कृ.टि.)– ।। उत्तरवाक्यतात्पर्यमिति ।।** अनेन 'निश्चयमित्यादिना' इत्यादिपदेन 'मेधावी च्छिन्नसंशयः' इत्यन्तस्य ग्रहणमिति सूचितम् । तत्रादौ त्यागो हीति त्यागत्रैविध्यं प्रतिज्ञाय फलत्याग एव सात्त्विकत्यागः । कर्मस्वरूपत्यागस्तु तामसो राजसश्चेति प्रतिपादनेन मनीषिमतयोरविरोधाप्रकारस्यैव व्युत्पादितत्वादिति भावः । ननु यत्याश्रमस्यैवोत्तमत्वात् कथं यतिरुत्तमाश्रममाश्रयेदित्युक्तमित्यत आह– **यतिः हंसादिरिति** ।। आदिपदेन बहूदकुटीचयोः ग्रहणम् । 'परमहंसाः प्रकीर्तिताः । हंसो बहूदः कुटिजः' इत्युक्तोत्तमक्रमाभिप्रायेण हंसादिरित्युक्तम् । स्थितेरकर्मकत्वादाह– **प्राप्नुमिति** ।।

## भाष्यम्

**ज्ञानयज्ञविद्याऽभयदानब्रह्मचर्यादितपसो हि ते । अतो यद्वचः अन्यथा प्रतीयते अधिकारभेदेन तद्योज्यम् । अन्यथेतरेषां गत्यभावात् ।। ४ ।।**

भावप्रदीपिका (प.टी.)– नन्वस्तु ज्ञानाद्यपि यज्ञादिः, तदपि कथं यतीनाम् ? इत्यत आह– **ज्ञानेति** । ननु सर्वेषां यत्याश्रमाश्रयणविधाने कथं प्रियव्रतादीनां तन्निवारणम् ? इत्यत आह– **अत इति** । तद्वचनानुसारादस्य तद्बाधः किं न स्यात् ? इत्यत आह– **अन्यथेति** ।।

**प्रमेयदीपिका** (ज.टी.)– नन्वेतेषां मध्ये इत्येवं व्याख्यानेऽपि कथं परमहंसानां यज्ञादिसम्भवः? इत्यत आह– **ज्ञानेति** ।। बहुव्रीहित्रयगर्भः कर्मधारयोऽयम् । विद्याऽभयविषयं दानं येषां ते तथोक्तास्ते परमहंसाः ।। ननु पारमहंस्ये हि प्रवृत्तः प्रियव्रतो हिरण्यगर्भेण निवारित इति पुराणेषूच्यते । तत्कथं पारमहंस्यस्याकर्तव्यतेत्यत आह– **अत इति** ।। उक्तवाक्यविरोधादेव । वाक्यत्वाविशेषात् पुराणवाक्येनैव स्मृतेर्बाधः किंन स्यात्? इत्यत आह– **अन्यथेति** ।। एवमयोजयने इतरेषां ब्रह्मचारी इत्यादीनाम् 'गत्यन्तराभावादप्रामाण्यमेव प्रसज्यते' इति शेषः ।। एवं परमहंसानामपि

श्लोकः ४

**यज्ञादिकर्तव्यतासम्पादनेनेदमपि परास्तम् । यत् केनचिदुक्तम् 'अज्ञान् कर्मण्यधिकारिणोऽधिकृत्य एतत् प्रकरणं प्रवृत्तम्, न परमहंसपरिव्राजकान्' इति ।। ४-१० ।।**

**भावबोधः (र.टि.)–** विद्याभये एव दानं येषामिति प्रतीतिनिरासार्थं विग्रहमाह– **विद्याभयविषयमिति** ।। विद्याभययोर्दानकर्मत्वं न तु दानरूपत्वमित्यर्थः । ततश्च ज्ञानयज्ञाश्च ते विद्याभयदानाश्च ते ब्रह्मचर्यादितपसश्चेति बहुव्रीहित्रयगर्भः कर्मधारय इत्यर्थः ।।

**भावदीपः (रा.टि.)– ।। बहुव्रीहित्रयेति** ।। ज्ञानमेव यज्ञो येषां त इति बहुव्रीहिद्वयमुक्तम् । **विद्याऽभयदान** इत्यत्रास्फुटत्वाद् आह– **विद्याभयेति** ।। विद्याभययोर्दानं येषामिति, ब्रह्मचर्यादिरेव तपो येषां त इति कर्मणि षष्ठ्या विषयसप्तम्या वा व्यधिकरणबहुव्रीहिः, ज्ञानयज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यस्तपश्चेति कर्मधारय इति भावः ।। **'ते'** इत्यनुवादः । **'परमहंसाः'** इति व्याख्या ।। **पुराणेष्विति** ।। 'गृहाश्रमः किन्नु करोत्यवद्यम्' (भाग. ५१. १७) इत्यादिना भागवतादिष्वित्यर्थः ।। **उक्तेति** ।। ब्रह्मचारीत्यादिवाक्येत्यर्थः ।। ४–१० ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। बहुव्रीहित्रयेति** ।। ज्ञनयज्ञाश्च ते विद्याभयप्रदानाश्च ते ब्रह्मचर्यादितपसश्च इति बहुव्रीहित्रयगर्भकर्मधारय इत्यर्थः । ननु ज्ञानस्यैव यज्ञत्वात् ब्रह्मचर्यादेरेव तपस्त्वात् ज्ञानमेव यज्ञो येषां ते ज्ञानयज्ञाः । ब्रह्मचर्याद्येव तपो येषां ते ब्रह्मचर्यादितपसः इति बहुव्रीहिसम्भवेपि विद्याभययोरेव दानत्वाभावेन विद्याभये एव दानं येषामिति बहुव्रीहेरसम्भवात् कथमयं बहुव्रीहित्रयगर्भः कर्मधारयः स्यादित्यतः विद्याभययोर्दानरूपत्वाभावेपि विद्याभये दानं येषामिति बहुव्रीहेरनुपपत्तावपि तयोर्दानकर्मत्वेन विद्याभयकर्मकं दानं येषामिति बहुव्रीहेरुपपन्नत्वात् बहुव्रीहित्रयगर्भत्वं कर्मधारयस्योपपन्नमित्याह– **विद्याभयविषयदानं येषामिति** ।।

**भावरत्नकोशः (सु.टि.)–** 'बहुव्रीहित्रय' इत्यत्र 'ज्ञानं यज्ञो येषां ते ज्ञानयज्ञाः', 'विद्याभयविषयं दानं येषां ते विद्याऽभयदानाः', 'ब्रह्मचर्याद्येव तपो येषां ते ब्रह्मचर्यादितपसः' इति बहुव्रीहित्रयगर्भ इत्यर्थः । विद्याभययोर्दानत्वासम्भवात् कथं तत्र बहुव्रीहिः इत्यतोऽभिप्रेतं विग्रहं दर्शयति– **विद्याऽभयविषयमिति** ।। 'विद्याभययोर्दानं येषां ते तथोक्ताः' इति व्यधिकरणो बहुव्रीहिः । षष्ठी च 'कर्मणि' इति विषयत्वं तदर्थ इति भावः । विद्याऽभयपदं

विद्याऽभयविषयकत्वलक्षकमिति भावेन एवं विग्रहः प्रादर्शीति केचित् । **कर्मधारयः** 'ज्ञान-यज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यादितपसश्च' इति कर्मधारयः । 'ते' इति युष्मदो रूपमिति प्रतीतिं **'ब्रह्मचर्यादयः'** इति प्रतीतिं वा व्युदस्यन् उत्तमाश्रमपदेन परमहंसानां सूचितत्वादाह– **ते परमहंसा इति** ।।

**पुराणेषु** भागवतादिषु स्फुटोऽयमर्थः पञ्चमस्कन्धे । **उक्तवाक्यं** 'ब्रह्मचारी गृहस्थो वा' इति वाक्यम् । **स्मृतेः** 'ब्रह्मचारी' इति स्मृतेः । **बाधः स्यात्** बाधः किं न स्यात् । **एवमयोजने** 'अधिकारिभेदेन उभयविधवाक्यप्रवृत्तिः' इत्ययोजने । **प्रसज्यत इति** ।। अप्रामाण्यप्रसञ्जनं चानिष्टम् ।

'को हि मीमांसको ब्रूयाद् विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति ।।'

इति वचनादिति भावः । शङ्करस्तु' कर्मिण एवाधिकृतान् अपेक्ष्य एते विकल्पाः, न तु ज्ञाननिष्ठान् सन्न्यासिनोऽपेक्ष्येति । तस्मात् ज्ञाननिष्ठाः सन्न्यासिनो नेह विवक्षिता इति तस्मात् कर्मण्यधिकृतान् अज्ञान् प्रत्येव सन्न्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः सन्न्यासिनो न ते विकल्पार्हाः इति चाभाषत । तत्सङ्ग्रहेणानुवदति– **यत् केनचिदुक्तमज्ञानिति** ।। 'परम-हंसाख्ययतीन्' इति वाच्ये यत् परिव्राजकग्रहणं तत् 'परित्यज्य सर्वं व्रजति' इति तदर्थपर्यालोचनया सर्वकर्माभावं प्रत्याययितुम् इति निरस्तम्' इति सम्बन्धः ।।

**गीताक्षरार्थस्तु** पूर्वोत्तरार्धोपन्यस्तपक्षयोः अविरोधप्रकार एव भगवता प्रतिज्ञापूर्वकं व्युत्पाद्यते– **निश्चयमिति** ।। तत्र विप्रतिपन्नत्यागविषये मे मम सकाशाद् निश्चयं शृणु, श्रुत्वा च तत्र निष्ठां कुरु । 'भरतानां साधुतम' इति सम्बुद्धिः । त्यागो हि त्यागशब्दार्थः त्रिविधः वक्ष्यमाणसात्त्विकादिभेदेन त्रिप्रकारकः सम्प्रकीर्तितः सम्यक् कथितः शास्त्रेषु । केचित् त्यागः कर्मफलत्यागः त्रिविधः फलत्यागः, 'मदीयमिदं कर्म' इति कर्मणि ममतात्यागः, भगवति कर्मकर्तृत्वानुसन्धानात् स्वात्मनः 'अहं कर्ता' इति कर्तृत्वाभिमानत्याग इति त्रिप्रकारक इत्यर्थ इत्याहुः ।। ४ ।।

**भावदीपिका (श्री.टि.)**– विद्याभययोः दानकर्मत्वेन दानरूपत्वाभावादाह– **विद्याभय-विषयमिति** ।। एवं च 'ज्ञानं यज्ञे येषां ते ज्ञानयज्ञाः, विद्याऽभयविषयं दानं येषां ते

श्लोकः ५
विद्याऽभयदानाः, ब्रह्मचर्याद्येव तपो येषां ते ब्रह्मचर्यादितपसः, ज्ञानयज्ञाश्च ते विद्याऽभयदानाश्च ते ब्रह्मचर्यादितपसश्च इति बहुव्रीहित्रयगर्भः कर्मधारयो द्रष्टव्यः । **पुराणेष्विति** ।। स्पष्टमेतत् पञ्चमस्कन्धभागवतादिषु इति द्रष्टव्यम् । **उक्तवाक्यादेवेति** ।। 'ब्रह्मचारी' इत्यादिव्यास-स्मृतिवाक्यादेवेत्यर्थः । **एवमिति** ।। अधिकारिभेदेन पुराणानामयोजन इत्यर्थः । **एतत्प्रकरण-मिति** ।। 'यज्ञदानतपःकर्म न त्याज्यम्' इति प्रकरणमित्यर्थः ।। ४ ।।

**भावप्रकाशः (कृ.टि.)**– विद्याभये दानं येषामिति बाधितमित्यत आह– **विद्याभय-विषयमिति** ।। फलितकथनमेतत् । अन्यथा समासे विषयपदश्रवणप्रसङ्गात् । विग्रहस्तु विद्याभययोः दानं येषामिति वा विद्याभये दाने येषामिति वा बोध्यः । आद्ये षष्ठ्यर्थो विषयत्वम् । अन्त्ये विद्याभयपदस्य तद्विषयकत्वे लक्षणेति दिक् । **परमहंसपरिव्राजका-निति** ।। परमहंसाख्ययतीनित्यर्थः । परमहंसानां कर्माभावे युक्तिसूचनाय परिव्राजकग्रहणम् । परित्यज्य सर्वं व्रजतीति तदर्थपर्यालोचनया सर्वकर्माभावप्रतीतेरिति भावः ।। ४ ।।

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।। ५ ।।**

**भावरत्नकोशः (सु.टि.)**– **गीताक्षरार्थस्तु** 'निश्चयं शृणु' इति प्रतिज्ञातमुच्यते– **यज्ञेत्यादि द्वाभ्याम्** । तत् प्रकृतं सप्तदशाध्यायोक्तरीत्या वेदवेद्यं वा यज्ञः दानं तप इत्येवं त्रिविधं कर्म न त्याज्यम्, किन्तु कार्यं कर्तव्यमेव । कस्मात् यज्ञो दानं तपश्च एतानि पावनानि विशुद्धिकराणि । 'मनीषिणामेव' इत्युक्त्या भगवत एव यज्ञादिसर्वकर्माराध्यत्व-तन्मुख्यकर्तृत्वभोक्तृत्वादि अनुसन्दधतां फलमनभिसन्दधतां च कर्म न बन्धकमेव । अमनीषिणां तु तद् बन्धकमिति विभावितं भवति ।

ननु ज्योतिष्टोमादियज्ञेषु हिरण्यादिदानेषु यतीनां शूद्रादीनां चाधिकाराभावात्, ऊर्ध्व-रेतस्त्वादितपस्सु गृहस्थादीनाम् अधिकाराभावात् कथं सर्वेषां 'न त्याज्यम्, कार्यमेव तत्' इति यज्ञादि विधीयते इति चेद् उच्यते । नात्र सर्वेषां ज्योतिष्टोमादियज्ञाः, हिरण्यादिदानानि, ऊर्ध्वरेतस्त्वादि तपांस्येव विधीयन्ते, किन्तु द्रव्ययज्ञज्ञानयज्ञादियज्ञाः विद्याभयदानानि, सत्यवचनादितपांसि । तेषां च यत्यादीनामपि उचितत्वाद् युक्तः सर्वेषां तद्विधिः । 'नाग्निर्न यज्ञः' इत्यादेस्त्रिवर्णबाह्यानां न क्वापि यज्ञेऽधिकार इति चेत् द्रव्ययज्ञाद्यभावेऽपि तेषां

स्वाध्याययज्ञेऽधिकारोऽस्त्येव । न च वेदानधिकारेण तदभावः । विष्णुनामस्वाध्याययज्ञे अधिकारसम्भवात् । सत्योपवासादितपस्सम्भवाच्च । तस्माद् द्रव्ययज्ञादीनां मध्ये स्वोचितो यज्ञः, विद्याभयदानादि स्वोचितं दानम् स्वोचितं तपश्च सर्ववर्णाश्रमिभिः अन्यैश्च कार्यमेवेति गीताचार्याशयो भाष्यटीकादावाविष्कृतः ॥ ५ ॥

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** यदुक्तम् 'यज्ञादि कार्यमेव इति, तत्रेत्थम्भाव उच्यते– **एतानीति** ॥ हे पार्थ एतानि यज्ञदानतपांसि कर्माणि नित्यनैमित्तिकान्यपि सङ्गम् 'अहं कर्ता' इति कर्तृत्वाभिमानलक्षणम्, कर्मणां फलाभिसन्धिं च त्यक्त्वा कर्तव्यानि इति मे मम निश्चितं मतमुत्तमम् ॥ ६ ॥

**नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।**
**मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** स्वरूपतः कर्मत्यागः प्रत्यवायहेतुरिति भावेन 'त्यागो हि पुरुषव्याघ्र त्रिविधः' इत्युक्तं प्रपञ्च्यते– **नियतस्येति त्रिभिः** ॥ नियतस्य स्ववर्णाश्रमविहितस्य तु कर्मणः सन्न्यासः त्यागः नोपपद्यते । 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्' इति प्रत्यवायश्रवणात्, कर्मत्यागस्य स्वयमेव स्तूयमानत्वात् 'स्वरूपत्याग एव कर्तव्यः, न सङ्गफलत्यागः' इति मिथ्याज्ञानाख्यात् मोहात् तस्य नियतस्य कर्मणः परित्यागः स्वरूपतस्त्यागः तामसः परिकीर्तितः ॥ ७ ॥

**दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** दुःखः इत्येव' इत्यत्र एवशब्देन तामसमोहः पूर्वोक्तो व्यावर्त्यते । दुःखशब्देन शरीरायासद्वारा प्राप्तदुःखान्यद् यत् मानसं धनव्ययादिनिमित्तं दुःखं तद् गृह्यते । यः पुमान् कर्म स्ववर्णाश्रमविहितं दुःखं परत्रापीदं दुःखसाधनमिति

श्लोकः ९-११
मिथ्याज्ञानं विना शरीरायासद्वारा मानसदुःखसाधनमिदमिति हेतोः कायक्लेशतया शरीरायासभयाच्च त्यजेत् सः पुरुष उक्तराजसं त्यागं कृत्वाऽपि त्यागफलं मोक्षं नैव लभेत् लभेत ।। ८ ।।

**कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ।। ९ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- कार्यमिति ।। हे अर्जुन नियतं वर्णाश्रम-विहितं कर्मैव कार्यम्, न पुनस्तत्र कर्तृत्वं फलं वाऽनुसन्धेयमित्येतद् विविच्यते । सङ्गं कर्तृत्वाभिमानलक्षणम्, तस्य फलं च त्यक्त्या क्रियते स एव कर्मणि सङ्गफलत्याग एव सात्त्विकत्यागो मतः ।। ९ ।।

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ।। १० ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु सात्त्विकत्यागी पुनर्निरूप्यते– **न द्वेष्टीति** ।। अकुशलं तात्कालिकमानसदुःखप्रदं कर्म न द्वेष्टि कुशले जन्मान्तरकृते पुण्यफले नानुषज्यते अनुषङ्गः प्रीतिः, तद्वान् न भवति त्यागी कृतं कर्म भगवति त्यक्तुम् सन्न्यसितुं शीलमस्येति तथोक्तः । स्वकृतकर्मणो विष्णावर्पणशील इत्यर्थः । सत्त्वसमाविष्टः सत्त्वगुणेन संव्याप्तः मेधावी मेधाशब्दाद् विनिरयं प्रशंसायाम्, सम्यक् विष्णुतत्त्वविषयकमेधाशाली, अत एव छिन्नसंशयः परापरतत्त्वविषये विगतसन्देहश्च यः स सात्त्विकः । 'त्यागी' इति प्रकृतमनुसन्धीयते ।।१०।।

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।। ११ ।।**

## भाष्यम्

**अन्यस्त्यागार्थो न युक्त इत्याह– नहीति ।। ११ ।।**

भावप्रदीपिका (प.टी.)– कार्यमित्येव इति कथितः कथं त्यागः ? सर्वकर्म-त्यागस्यैव मुख्यतः त्यागत्वादित्याशङ्क्य, श्लोकमवतारयति– **अन्य इति** ।। ११ ।।

**प्रमेयदीपिका (ज.टी.)– ननु 'इति मे पार्थ'(१८.६) इति भगवता स्वसिद्धान्तो निष्टङ्कितः । अतो 'न हि देहभृता' इति किमुच्यते? इत्यत आह– अन्य इति ।। सर्वकर्मपरित्यागलक्षणः । त्यागार्थः त्यागशब्दार्थः । 'पूर्वपक्षवीजनिरासार्थम्' इति शेषः ।। ११ ।।**

**भावबोधः (र.टि.)– ।। पूर्वपक्षबीजनिरासार्थमिति ।।** 'त्याज्यं दोषवत्' इत्युक्त-त्यागो यदि सर्वकर्मपरित्यागः स्यात् तदा तन्मतबीजकः सर्वकर्मपरित्यागः कर्तव्य इति पूर्वपक्षः स्यात् । न चासौ युक्तः । हि यस्माद्देहभृता अशेषतः कर्माणि त्यक्तुं न शक्यमिति पूर्वपक्षबीजनिरासार्थमित्यर्थः ।

**भावदीपः (रा.टि.)– ।। निष्टङ्कितः** निष्कृष्टः **।। पूर्वपक्षबीजेति ।।** 'त्याज्यं दोषवत्' इत्यत्र सर्वकर्म त्याज्यमिति यः पूर्वपक्षस्तस्य यद्बीजम् आपातप्रतीतिरूपं वा, 'एके अपरे' इति विप्रतिपत्त्युक्तिरूपं वा तन्निरासार्थमित्यर्थः ।। ११ ।।

**भावरत्नकोशः (सु.टि.)– ।। इति मे पार्थेतीति ।।** 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।।'इति । **निष्टङ्कितः** 'न त्याज्यम्, कार्यमेव' इति इतरप्रतिक्षेपपूर्वकं निकृष्योक्त इत्यर्थः । त्यागार्थः त्यागप्रयोजनक इत्यादिप्रतीतिनिरासायाह– **त्यागशब्दार्थ इति ।। पूर्वपक्षेति ।।** 'त्याज्यं दोषवत्' इत्यत्र 'सर्वकर्मपरित्यागः कर्तव्यः' इति पूर्वपक्षे बीजम् आपातप्रतीतिरूपम् तन्निरासार्थम् । न हि देहभृताऽशेषकर्माणि त्यक्तुं शक्यम् इति वचनमित्यर्थः ।।

**गीताक्षरार्थस्तु-** 'त्याज्यं दोषवद्' इति पूर्वपक्षबीजनिरासार्थं सर्वकर्मणां स्वरूपत्यागः त्यागशब्दार्थो न युक्त इत्युच्यते– **न हीति** ।। देहभृता अशेषतः निःशेषेण कर्माणि त्यक्तुं न शक्यम् । 'शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः' इति प्रयोग इवायं प्रयोगः । 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ' इत्यनुवादविहितजीवनयोनिप्राणादिचेष्टारूपकर्मत्यागो न शक्यः कर्तुम्, विहितत्यागोऽपि 'स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम् 'इति प्रत्यवायश्रवणाद् अयुक्त इति हि यस्मात् तस्माद् 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' इत्युक्तस्वसिद्धान्त एव युक्त इति भावः ।। ११ ।।

श्लोकः १२

**भावदीपिका** (श्री.टि.)– त्यागरूपार्थस्य अर्थाभावादाह– **त्यागशब्दार्थ इति** ।। **पूर्वपक्षवीजेति** ।। 'त्याज्यं दोषवत्' इत्युक्तत्यागो यदि सर्वकर्मपरित्यागः स्यात् तदा तन्मतबीजकः सर्वकर्मपरित्यागः कर्तव्य इति पूर्वपक्षः स्यात् । न चासौ युक्तः । हि यस्मात् देहभृताऽशेषतः कर्माणि त्यक्तुं न शक्यन्त इत्येवं पूर्वपक्षबीजनिरासार्थमित्यर्थः ।। ११ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **पूर्वपक्षवीजनिरासार्थमिति** ।। सर्वकर्मत्यागः कर्तव्य इति पूर्वपक्षे त्याज्यं दोषवदित्युपन्यस्तम् मतम् आपातप्रतीतिमपेक्ष्य यद् बीजं तन्निरासार्थमित्यर्थः ।। ११ ।।

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ।। १२ ।।**

## भाष्यम्

**त्यागं स्तौति– अनिष्टमिति ।। १२ ।।**

भावप्रदीपिका (प.टी.)– नन्वयं त्यागः सात्त्विकः कुतः इत्यत उत्तरश्लोकमवतारयति – **त्यागमिति** ।। १२ ।।

प्रमेयदीपिका (ज.टी.)– **कर्मफलाभावो नाम संसारनिवृत्तिरेव । सा कथं त्यागफलत्वेनोच्यते?** इत्यत आह– **त्यागमिति** ।। उपपादितमेतत् 'त्यागाच्छान्तिः' (१२.१२) इत्यत्र ।। १२ ।।

**भावबोधः (र.टि.)**– ।। **कथं त्यागफलत्वेनेति** ।। संसारनिवृत्तेर्ज्ञानफलत्वादित्यर्थः । नरकस्वर्गमानुषरूपानिष्टेष्टमिश्ररूपः कर्मफलाख्यः संसारः त्यागिनां न भवतीत्युक्तेऽर्थात्तन्निवृत्तिस्त्यागफलमिति लक्ष्यत इति भावः । अनेन सन्न्यासिनामित्यस्य त्यागिनामित्यर्थ उक्तो भवति ।

**भावदीपः (रा.टि.)**– ।। **संसारनिवृत्तिरेवेति** ।। संसारस्य कर्मफलरूपत्वादिति भावः ।। **कर्मफलाभावमिति** ।।'अनिष्टमिष्टम्' इति श्लोके इष्टानिष्टमिश्रशब्दितस्वर्गनरकमानुषभावरूपफलत्रयं त्यागिनां नास्तीति 'न तु सन्न्यासिनां क्वचित्' इतिपदेन कर्मफलाभाव उक्तः ।

स तु सन्न्यासादनिवृत्तिरेव । सा कथं सन्न्यासशब्दितत्यागिनां नास्तीति त्यागफलत्वेनोच्यत इत्यर्थः ।। **त्यागाच्छान्तिरित्यत्रेति** ।।

'श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद् ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागः त्यागाच्छान्तिरनन्तरम्' (१२.१२)

इत्यत्र द्वादशे ध्यानमुक्तम्, त्याग एव चात्रोक्तः । अन्यथा कथं 'त्यागात् शान्तिरनन्तरम्' इत्युच्यत इत्यादिना भाष्ये उपपादितं त्यागस्य मोक्षफलकत्वं ध्यानसाहित्येनेत्यर्थः ।। १२ ।।

**भावरत्नकोशः (सु.टि.)– ।। कथं त्यागफलत्वेनेति ।।** तस्याः 'तरति शोकमात्मवित्' इत्यादिना ज्ञानफलत्वावगमादिति भावः । कथमनेन स्तुत्यवगमः इत्यत आह– **उपपादितमिति** ।। **इत्यत्रेति** ।। 'अन्यथा कथं त्यागात् शान्तिरनन्तरम् इत्युच्यते' इति द्वादशाध्यायभाष्यटीकयोरित्यर्थः ।।

**गीताक्षरार्थस्तु** अत्यागनिन्दापूर्वकं त्यागी स्तूयते– **अनिष्टमिति** ।। कर्मणः पुण्यपापलक्षणस्य फलं त्रिविधं त्रिप्रकारकम् । कथम् अनिष्टं नरकतिर्यक्त्वादिरूपम् इष्टं स्वर्गादिलक्षणं मिश्रम् इष्टानिष्टमेलनरूपं मानुष्यादि इति । एवं त्रिविधं कर्मफलम् अत्यागिनां अत्यक्तुं शीलानां सङ्गफलत्यागमकुर्वतां पुंसां प्रेत्य देहादेर्गत्या स्थितानां भवति । सन्न्यासिनां तु त्यागिनामिति यावत् । क्वचिद् अपि न एतत् त्रिविधं फलं भवति । अत्र अत्यागिप्रतियोगित्वेन 'त्यागिनाम्' इति वक्तव्येऽपि यत् 'सन्न्यासिनाम्'इत्युक्तं तत्तात्पर्यम् उत्तरप्रस्थानतोऽवसेयम् । अत्र स्तुत्यवगमप्रकारस्तु 'त्यागाच्छान्तिरनन्तरम् इत्येतद्गीताव्याख्याऽवसरे 'अन्यथा कथं त्यागाच्छान्तिरनन्तरमित्युच्यते इति भाष्ये, तट्टीकायां चोपपादितः ।। १२ ।।

**भावदीपिका (श्री.टि.)– ।। कथं त्यागफलत्वेनोच्यत इति ।।** संसारनिवृत्तेः ज्ञानफलत्वादित्यर्थः । अत्र 'सन्न्यासिनाम्' इत्यस्य 'त्यागिनाम्' इत्यर्थकत्वेन नरकस्वर्गमानुषरूपानिष्टेष्टमिश्ररूपः कर्मफलाख्यसंसारः सन्न्यासिनां न भवतीत्युक्ते अर्थात् तन्निवृत्तिः त्यागफलमिति लभ्यत इति भावः । ननु 'त्यागस्तुतिः' इति कस्मादुच्यते, वास्तवमेव किं न स्यात् इत्यत आह– **उपपादितमिति** ।। 'न हि त्यागमात्रानन्तरमेव मुक्तिर्भवति' इत्यादिना द्वादशाध्याय उपपादितमित्यर्थः ।। १२ ।।

**भावप्रकाशः (कृ.टि.)– ।। कथं त्यागफलत्वेनेति ।।** संसारनिवृत्तेः ज्ञानफलत्वादिति भावः । अनेन 'सन्न्यासिनाम्' इत्यस्य 'त्यागिनाम्' इत्यर्थः सूचितः । नन्वन्वयव्यतिरेकाभ्यां कर्मफलाभावरूपसंसारनिवृत्तेस्त्यागसाध्यत्वमत्रोच्यते । तत्कथमियं त्यागस्तुतिः । मुख्यार्थे बाधकाभावादित्यत आह– **उपपादितमिति** ।। न हि त्यागमात्रानन्तरमेव मुक्तिः भवति । ततश्चापरोक्ष्यम् । ततो मुक्तिर्भविष्यतीत्यादिविरोधादिति बाधकमुपपादितमित्यर्थः । **त्यागाच्छान्तिरित्यत्रेति** ।। अन्यथा कथं त्यागाच्छान्तिरनन्तरमित्युच्येतेति भाष्योपात्ते त्यागाच्छान्तिरित्यत्रेत्यर्थः ।। १२ ।।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ।। १३ ।।**

## भाष्यम्

**पुनः सन्न्यासं प्रपञ्चयितुं कर्मकारणान्याह– पञ्चेत्यादिना ।। साङ्ख्ये कृतान्ते** ज्ञानसिद्धान्ते ।। १३ ।।

भावप्रदीपिका (प.टी.)– उत्तरश्लोकचतुष्टयं पूर्वसङ्गततया अवतारयति– **पुनरिति** । साङ्ख्यपदेन दर्शनविशेष इत्याह– **साङ्ख्य इति** ।। १३ ।।

प्रमेयदीपिका (ज.टी.)– **पञ्च** इत्यादेः प्रकृतेन सङ्गत्यप्रतीतेस्तामाह– **पुनरिति** ।। न केवलं काम्यानां कर्मणां न्यासः सन्न्यासः, किन्तु कर्तृत्वाभिमानत्यागश्चेत्येवं प्रागुक्तं सन्न्यासं पुनः प्रपञ्चयितुम् आत्मनोऽकर्तृत्वे क्रियाऽनिष्पत्तिप्रसङ्गादङ्गीकार्ये कर्तृत्वे कथं तदभिमानत्यागो युक्तः? इत्याशङ्कापरिहारार्थमात्मव्यतिरिक्तान्येव कर्मकारणान्याह इत्यर्थः ।। साङ्ख्यशब्दः कापिलतन्त्रे रूढः । 'कृतं कर्म, तस्यान्तो निवृत्तिर्यत्र उच्यते' इत्युपनिषत्सु कृतान्तशब्दं कश्चिद्व्याख्यातवान् । तदुभयं निवर्तयितुमाह– **साङ्ख्य इति** ।। ज्ञानार्थः सिद्धान्तः ज्ञानसिद्धान्तः । 'सिद्धान्तः' इति शास्त्रं लक्ष्यते । कापिलतन्त्रस्य निन्दितत्वात् । उपनिषत्स्वपि कर्मत्यागाप्रतिपादनात् ।। १३ ।।

**भावबोधः (र.टि.)**– ननु प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः । तत्र कथं कारणानि प्रोक्तानीत्युच्यते इत्यत आह– **शास्त्रं लक्ष्यत इति** ।।

**भावदीपः (रा.टि.)**– ।। **सन्न्यासमिति** ।। 'त्यागरूपं प्रपञ्चयितुं कर्मकारणान्याह' इत्यन्वयः । किमर्थं प्रपञ्चनम्? इत्यत उक्तम्– **इत्येवं प्रागुक्तमिति** ।। 'शरीर' इत्यादिश्लोकेन वक्तुमित्यर्थः ।। **आत्मव्यतिरिक्तान्येवेति** ।। तथाच आत्मजीवत्वाकर्तृत्वेपि न क्रियानुपपत्तिदोष इति भावः । प्रामाणिकत्वेनाभ्युपगतार्थस्य सिद्धान्तशब्दितस्य ज्ञानार्थत्वाभावादाह– **शास्त्रं लक्ष्यत इति** ।। **निन्दितत्वादिति** ।। 'निन्दितत्वाच्चेतरयोर्मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या' इति द्वितीयाध्यायभाष्य एव प्रपञ्चनादिति भावः ।। **कर्मत्यागाप्रतिपादनादिति** ।। प्रत्युत 'तान्याचरथ नियतं सत्यकामाः' (२.१) इत्याथर्वणे, 'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतꣳसमाः' (२) इति ईशावास्यादौ तत्र विधानाच्चेत्यपि ध्येयम् ।। १३ ।।

**भावरत्नकोशः (सु.टि.)**– पुनःशब्दतात्पर्यं दर्शयन् भाष्यार्थमाह– **न केवलमिति** ।। 'काम्यानां कर्मणां न्यासम्' इत्यस्य वैकल्पिककाम्यानाम् अश्वमेधादीनां स्वर्गादिफलानिच्छया विशेषणत्यागेन त्यागः, नियतकाम्यानां कारीर्यादीनां स्वरूपाकरणेन त्याग इत्यर्थ इत्येवमिति प्रपञ्चनप्रकारोक्तिः । **क्रियाऽनिष्पत्तिप्रसङ्गात्** क्रियाया अनिष्पत्तिप्रसङ्गात् **तदभिमानत्यागः** कर्तृत्वाभिमानत्यागः । **कश्चित्** शङ्करः । तथा च तदीयं भाष्यम् 'कृतमिति कर्मोच्यते, तस्य अन्तः कृतस्य परिसमाप्तिः यत्र स कृतान्तः वेदान्तः' इति । **उभयं** रूढिपक्षम् उपनिषद्ग्रहणपक्षं चेत्युभयम् । 'ज्ञानसिद्धान्तः' इत्यत्र ज्ञानस्य सिद्धान्तरूपत्वाभावात् नैवं व्याख्यानं युक्तमित्याशङ्क्य शाकपार्थिवादिवदत्र समासो विवक्षित इत्याह– **ज्ञानार्थ इति** ।। प्रामाणिकतयाऽभ्युपगत्यर्थस्य सिद्धान्तपदार्थत्वात्, तत्र प्रोक्तत्वं कथमेतेषाम् इत्यत आह– **सिद्धान्त इतीति** ।। प्रतिपादकत्वं शक्यसम्बन्ध इति भावः । रूढिबलात् कापिलतन्त्रग्रहणे दोषमाह– **कापिलेति** ।। **निन्दितत्वादिति** ।। तथा च द्वितीयाध्याये भाष्यम् 'निन्दितत्वाच्च इतरयोः साङ्ख्ययोगयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या' इति । परापव्याख्यानं प्रत्याख्याति– **उपनिषत्स्वपीति** ।। 'कर्मत्यागाप्रतिपादनात्' इत्युपलक्षणम् । प्रत्युत 'तान्याचरत नियतं सत्यकामाः' इत्याथर्वणे, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति काण्वमन्त्रोपनिषदादौ च कर्तव्यताया एवावगमादित्यपि द्रष्टव्यम् ।।

श्लोकः १४

**गीताक्षरार्थस्तु** न केवलं वैकल्पिककाम्यकर्मणां फलोद्देशेन क्रियमाणत्वस्य विशेषणस्य त्यागेन त्यागः, नियतकाम्यानां स्वरूपाकरणेन त्यागश्च सन्न्यासः । किन्तु कर्तृत्वाभिमानत्यागश्च इत्येवं प्रागुक्तं सन्न्यासं प्रपञ्चयितुम् आत्मनो कर्तृत्वे क्रियाया अनिष्पत्तिप्रसङ्गाद् अङ्गीकार्ये च कर्तृत्वे कथं तदभिमानत्यागो युक्तः इत्याशङ्कापरिहारार्थम् आत्मव्यतिरिक्तान्येव कर्मकारणान्युच्यन्ते– **पञ्चैतानि इत्यादित्रिभिः** ।। हे महाबाहो! सर्वकर्मणां सिद्धये निष्पत्तये एतानि वक्ष्यमाणानि पञ्च कारणानि मे मम सकाशात् निबोध अवगच्छ । कर्तृत्वाभिमानत्यागे श्रोतुर्विश्वासजननायोच्यते– **साङ्ख्ये कृतान्ते प्रोक्तानीति** ।। साङ्ख्ये ज्ञानार्थे कृतान्ते सिद्धान्ते, सिद्धान्तशब्देन तत्प्रतिपादकं शास्त्रं लक्ष्यते । कपिलाख्यविष्णुनिर्मितसाङ्ख्य-नामकशास्त्रे ज्ञानानुकूलकर्मकारणानि प्रोक्तानि इति प्रतिज्ञातोक्तिः ।। १३ ।।

**भावदीपिका (श्री.टि.)– ।। आत्मव्यतिरिक्तान्येवेति ।।** जीवव्यतिरिक्तान्येवेत्यर्थः । तथाच जीवव्यतिरिक्तैरेव कारणैः क्रियानिषअपत्तिप्रसङ्गो नास्तीत्याशयः । ननु प्रामाणिकत्वे-नाभ्युपगतार्थस्य सिद्धान्तत्वात् तत्र कथं कारणानि प्रोक्तानि इत्यत आह– **सिद्धान्त इतीति** ।। परव्याख्याने बाधकमाह– **कापिलेति** ।। 'साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि' इत्यादिना मोक्षधर्मे इति शेषः । उपनिषत्स्वपीति । प्रत्युत कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः इति कर्मकरणस्यावश्यकताया एव प्रतिपादनादित्यर्थः ।।

**भावप्रकाशः (कृ.टि.)–** ज्ञानस्य सिद्धान्तत्वाभावादाह– **ज्ञानार्थ इति** ।। शाकपार्थि-वादिरितिवदिति भावः । ननु प्रामाणिकत्वेनाभ्युपगतार्थस्य सिद्धान्तत्वात् सिद्धान्ते प्रोक्तानीति कथमित्यत आह– **शास्त्रं लक्ष्यत इति** ।। प्रतिपादकत्वं शक्यसम्बन्ध इति कपिलतन्त्रोक्तौ बाधकमाह– **कापिलेति** ।। अपव्याख्यां प्रत्याह– **उपनिषत्स्विति** ।। १३ ।।

## अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
## विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ।। १४ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अधिष्ठानमिति** ।। अधिष्ठानं देहभूम्यादि कर्ता सर्वस्वतन्त्रकर्ता विष्णुः पृथग्विधं नानाप्रकारं करणम् इन्द्रियस्रुवादि विविधाः नानाप्रकाराः पृथक्चेष्टाः परस्परं भिन्ना हस्तादिक्रियाः । सावान्तरव्यापारं हि कारणं कारकमुच्यते । तत्तदधिष्ठानादिपदैः देहाद्यर्थकैः व्यापारिणो निर्दिश्यन्ते । चेष्टाशब्देन क्रियावाचिना तु

अवान्तरव्यापारः । कारकाश्रिताभिः देहावान्तरक्रियाभिः प्रधानक्रियाजननं प्रसिद्धमिति भावेन भाष्ये हस्तादिक्रियाभिर्हि होमादिकर्माणि जायन्त इत्युपपादितम् । अत्र कर्मनिष्पत्तौ दैवम् अदृष्टं पञ्चमं पञ्चानां पूरणम् । तथाचशब्दाः परस्परसमुच्चये, एवशब्दस्तु 'एवं पञ्चैव कर्मकारणानि, न पुनर्जीवोऽपि कारणकोटिनिविष्टः' इत्यर्थः सन् जीवे क्रियाकर्तृत्वाभिमानत्यागं द्योतयति ॥ १४ ॥

**शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

## भाष्यम्

**अधिष्ठानं देहादि । कर्ता विष्णुः; 'स हि सर्वकर्ता' इत्युक्तम् । जीवस्य चाकर्तृत्वे प्रमाणमुक्तम् । करणम् इन्द्रियादि च । चेष्टाः क्रियाः । हस्तादिक्रियाभिः होमादिकर्माणि जायन्ते ॥**

भावप्रदीपिका (प.टी.)– अधिष्ठानपदं व्याचष्टे– **अधिष्ठानमिति** । आदिपदाद् भूम्यादि कर्तृपदेन जीव इति शङ्कानिरासायाह– **कर्तेति** । कुतो विष्णुपरतेत्यत आह– **स हीति** । ईश्वरस्यास्तु कर्तृत्वम्, जीवोऽत्र विवक्षित इत्यत आह– **जीवस्येति** । करणपदं व्याचष्टे– **करणमिति** । आदिपदेन स्रुगादि । चेष्टापदेन प्राणापानादि-वायुचेष्टेति असदित्याह – **चेष्टा इति** । ननु चेष्टाया एव पञ्चकारणान्युच्यन्ते, अतः कथं चेष्टा कारणम् इत्यत आह– **हस्तादीति** ।

प्रमेयदीपिका (ज.टी.)– अधिष्ठानादि करण एवान्तर्भूतमिति वक्ष्यति । तत्प्रबोधनायाधिष्ठानं निर्दिशति–**अधिष्ठानमिति** ॥ आदिपदेन भूम्यादि । 'कर्ता जीवः' इति व्याख्यानमसदिति भावेनाऽह– **कर्तेति** ॥ शरीरवाङ्मनोभिः क्रियमाणानां कर्मणां कर्ता कथं विष्णुः? इत्यत आह– **स हीति** ॥ उक्तम् उपपादितम् । तथाऽपि जीवोऽत्र कर्ता किं न स्यात्? इत्यत आह– **जीवस्य चेति**॥ अपराधीनत्वाभि (कर्तृत्वाभि) प्रायेणेदं निराकरणम् । पराधीनं कर्तृत्वमङ्गीकृत्यान्यत्र जीवो व्याख्यात इत्यविरोधः ॥

श्लोकः १५

भावसाधनताप्रतीतिनिरासार्थमाह– **करणमिति** ।। आदिपदेन स्रुवादि । भाव-साधनार्थस्य साध्यत्वात् । चेष्टाग्रहणेन च गृहीतत्वाच्च । 'वायवीयाः प्राणापानाद्याः चेष्टा' इत्यसत् । द्रव्याभिधाने चेष्टात्वानुपपत्तेः । प्राणनाद्यभिधाने साध्यत्वात् कारकत्वानुपपत्तेरित्याशयवानाऽह– **चेष्टा इति** ।। क्रियाणां साधकत्वात् कथं कारकत्वम्? इत्यत आह–**हस्तादीति** ।। सावान्तरव्यापारं हि करणं कारकमुच्यते । तत्राधिष्ठानादिपदैर्व्यापारिणो निर्दिश्यन्ते । क्रियाशब्देन त्ववान्तरा व्यापाराः । कारकाश्रिताभिरवान्तरक्रियाभिः प्रधानक्रियाजननं च प्रसिद्धमेवेत्यर्थः ।।

**भावबोधः (र.टि.)–** ।। **तत्प्रबोधनायेति** ।। अन्तर्भावप्रबोधनाय तद्योग्यमधिष्ठानं निर्दिशतीत्यर्थः । ननु तात्पर्ये 'त्रिविधः कर्मसङ्ग्रहः' इति गीतावाक्यव्याख्यानावसरे दैवशब्दो-क्तेश्वरस्य मुख्यकर्तृत्वात् स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेस्त्रैविध्यमित्युक्तम् । तेन 'अधिष्ठानं तथा कर्ता' इति पूर्ववाक्ये दैवशब्देनेश्वरः, कर्तृशब्देन जीव उक्त इति ज्ञायते । तथा च जीवस्याकर्तृत्वे प्रमाणमुक्तमिति जीवस्य कर्तृशब्दार्थत्वनिराकरणेन तद्विरोधः स्यादित्यतोऽभिप्रायमाह– **अपराधीनत्वाभिप्रायेणेति** ।।

ननु करणशब्दस्य भावसाधनत्वे होमादिक्रिया वा तदर्थम् उत हस्तादिक्रिया वेति विकल्पं मनसि निधाय नाद्य इत्याह– **भावसाधनार्थस्येति** ।। न द्वितीय इत्याह– **चेष्टाग्रहणेनेति** ।। **द्रव्याभिधान इति** ।। प्राणादिरूपद्रव्यग्रहणे इत्यर्थः । **कारकत्वानुपपत्तेरिति** ।। हस्तादीन्द्रियाणां करणत्वेन तत्क्रियाणामवान्तरव्यापारत्वेन कारकत्वेऽपि प्राणादीनां कारणत्वा-भावात् प्राणनादिक्रियाणामवान्तरव्यापारत्वेनापि कारकत्वानुपपत्तेरिति भावः ।

**भावदीपः (रा.टि.)–** ।। **तत्प्र(तद्बो)बोधनायेति** ।। अन्तर्भावबोधनायेत्यर्थः ।। **उक्तमुपपादितमिति** ।। सर्वकर्तृत्वोक्त्या 'वा हि' इति प्रमाणप्रसिद्ध्युक्त्या वा सर्वान्तःपाति-कर्मकर्तृत्वं कैमुत्यसिद्धमिति भावेनोपपादितमित्यर्थः ।। **जीवस्य चेतीति** ।। 'जीवस्याकर्तृत्वे प्रमाणमुक्तम्' इति भाष्ये नहि प्रतिबिम्बस्य क्रिया इत्यादिना द्वितीये 'यत्र यत्रैव संयुक्तः' इत्यादिना पञ्चदशे चोक्तमित्यर्थः ।। **अन्यत्रेति** ।। 'स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तश्च' इति तात्पर्य इत्यर्थः । 'कर्ता शास्त्रार्थवत्वात्' इति सूत्रभाष्ये चेत्यर्थः ।। **भावेति** ।। करणं निर्माणप्रतीतीत्यर्थः ।। **साध्यत्वादिति** ।। निष्पाद्यमानस्य अवश्यपूर्ववर्तित्वरूपकारणात्वानु-

पपत्तेरिति भावः । हस्तादिक्रियार्थत्वे दोषमाह **चेष्टेति ।। द्रव्येति ।।** वायुविकारप्राणादिद्रव्येत्यर्थः ।।

।। **अधिष्ठानादीनामिति ।।** देहेन्द्रियादृष्टकर्तृहस्तादिक्रियाणामित्यर्थः ।। **कर्मादीनां** कर्मकारकादीनामित्यर्थः । भूम्यां तिष्ठति, चैत्रश्चलति इत्यादावभावादिति भावः ।। **वक्ष्यतीति ।।** सर्वक्रियानुरूपगतिमधिष्ठानादेरिति योज्यम् ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। भावसाधनतेति ।।** क्रियाकारणमिति भावसाधनस्य करणशब्दस्य क्रियार्थताप्रतीतिनिरासायेत्यर्थः । भावव्युत्पत्त्या करणशब्दक्रियावत्वार्थत्वस्य सम्भवे किमर्थान्तरकल्पनया इत्यतो भावसाधनत्वं वदता किं होमादिक्रियार्थत्वमभिमतम् उत हस्तादिकक्रियार्थत्वमिति विकल्प्य आद्यं दूषयति– **भावसाधनार्थस्येति ।** द्वितीयं दूषयति– **चेष्टाग्रहणेनेति ।।**

**भावरत्नकोशः (सु.टि.)– ।। तत्प्रबोधनाय** अन्तर्भावप्रबोधनाय। **भूम्यादि** 'ग्राह्यम्' इति शेषः । **इति व्याख्यानमिति ।।** 'कर्ता उपाधिलक्षणो भोक्ता जीवः' इति शङ्करव्याख्यानमित्यर्थः । **कथं विष्णुरिति ।।** जीवकर्तृत्वस्यानुभूयमानत्वादिति भावः । **उपपादितम्** उपपत्तियुक्ततया प्रतिपादितम्, द्वितीयादौ तत्र तत्र । ननु 'स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेः' इति जीवस्यास्वातन्त्र्यकर्तृशब्दार्थेन तात्पर्यनिर्णये व्याख्याततत्वाद् अत्र 'कर्ता विष्णुः', 'जीवस्याकर्तृत्वे प्रमाणमुक्तम्' इति कथम् । परस्परविरोधात् इत्यतस्तात्पर्यनिर्णयवाक्यभावमाह– **अपराधीनकर्तृत्वाभिप्रायेणेति ।।** इदं भाष्यस्थम् । **अन्यत्र** तात्पर्यनिर्णये । **भावसाधनतेति ।। भावः** धात्वर्थः निर्माणम्, ससाधनम् शब्दनिष्पत्तौ निमित्तं यस्य स भावसाधनः करणशब्दः, तत्ताप्रतीतिः निर्माणप्रतिपादकत्वप्रतीतिः, तन्निरासार्थमित्यर्थः । 'स्रुवादि' इत्यादिपदेन स्वधित्यादि, 'ग्राह्यम्' इति शेषः ।

करणशब्दो भावसाधनः किं न स्यात् इति चेत्, तदत्र वक्तव्यम् किं भावशब्देन होमादिक्रिया विवक्षिता, हस्तादिक्रिया वा इति विकल्पं मनसि निधाय, आद्ये दोषमाह– **भावसाधनार्थस्येति ।।** धात्वर्थप्रतिपादको यः शब्दः तदर्थस्येत्यर्थः । **साध्यत्वादिति ।।** कृञ्धात्वर्थतया विवक्षितहोमादिक्रियायाः साध्यत्वेन निष्पाद्यत्वेन 'पञ्चैतानि महाबाहो कारणानि निबोध मे' इति कारणशब्दार्थपूर्वभावित्वानुपपत्तेरिति भावः । अन्ते दोषमाह–

श्लोकः १५

**चेष्टाग्रहणेनेति** ।। तथा च भावसाधनताप्रतीतिः अनुचितेति भावः । 'वायवीयाः' इत्यादि शङ्करभाष्याक्षरानुवादः । **वायवीयाः** वायुविकाराः । प्राणादिशब्देन प्राणापानादिद्रव्यं विवक्षितम् उत प्राणादिनिष्ठक्रिया प्राणनादिरूपा विवक्षिता इति विकल्पं हृदि निधाय, आद्ये दोषमाह– **द्रव्याभिधान इति** ।। द्वितीय आह– **प्राणनादीति** ।। साध्यत्वात् प्राणनादीनां पश्चाद्भावित्वात्, 'कारणानि निबोध' इत्युक्तकारणशब्दितपूर्वभावित्वानुपपत्तेरित्यर्थः । **क्रियाणां** चेष्टाशब्दार्थानां साध्यत्वात् 'कारणानि' इत्युक्तकारकत्वं कथमित्यर्थः ।

नन्वेवं करणव्यापारसङ्ग्रहेऽपि नाधिष्ठानादिक्रियासङ्ग्रहः । सति चैवं क्रियां प्रति करणमात्रसङ्ग्रहोक्तिर्न स्यात् इत्यत आह– **सावान्तरेति** ।। **अधिष्ठानादिपदैः** अधिष्ठानकर्तृकरणादिपदैः **क्रियाशब्देन** 'चेष्टाः क्रियाः' इत्यत्रत्यक्रियाशब्देन **कारकाश्रिताभिः** दण्डादिकारकाश्रिताभिः **अवान्तरक्रियाभिः** चक्रभ्रमिप्रभृतिभिः **प्रधानक्रियाजननं** घटनिर्माणलक्षणं क्रियानिष्पादनम् ।

**भावदीपिका (श्री.टि.)– ।। तत्प्रबोधनायेति ।।** अधिष्ठानस्य करणेऽन्तर्भावस्य सुज्ञानाय अन्तर्भावयोग्यमधिष्ठानं निर्दिशतीत्यर्थः । ननु तात्पर्ये 'त्रिविधः कर्मसङ्ग्रहः' इति गीतावाक्यव्याख्यानावसरे 'दैवशब्दोक्तेश्वरस्य मुख्यकर्तृत्वात् स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेस्त्रैविध्यम्' इत्युक्तम् । तेन च 'अधिष्ठानं तथा कर्ता' इति पूर्ववाक्ये दैवशब्देनेश्वरः, कर्तृशब्देन जीव उक्त इति ज्ञायते । तथा च जीवस्याकर्तृत्वे प्रमाणमुक्तमिति जीवस्य कर्तृशब्दार्थत्वनिराकरणे तद्विरोधः स्यात् इत्यतोऽभिप्रायमाह– **अपराधीनत्वाभिप्रायेणेति ।। भावसाधनतेति** ।। भावः धात्वर्थः क्रियारूपः, तत्प्रतिपादकतेत्यर्थः । **स्रुवादीति** ।। 'स्रुवेण जुहोति' इत्यादेस्तेषामपि करणत्वावगमादिति भावः । करणशब्दस्य भावसाधनत्वे होमादिक्रिया तदर्थ उत हस्तादिक्रिया । नाद्य इत्याह– **भावसाधनार्थस्येति** ।। भावप्रतिपादकशब्दार्थस्येत्यर्थः । कृञ्धात्वर्थभूतहोमादिक्रियायाः साध्यतयाऽभिप्रेतत्वेन तत्कारणमध्ये परिगणनमयुक्तमिति भावः । न द्वितीय इत्याह– **चेष्टेति** ।। तथा च पुनरुक्तिरिति भावः । पुनरुक्तिर्नास्तीत्याशङ्कते – **वायवीया इति ।। द्रव्येति** ।। प्राणादिरूपद्रव्यग्रहण इत्यर्थः । **कारकत्वेति** ।। क्रियाजनकत्वेत्यर्थः । हस्तादीन्द्रियाणां करणत्वेन तत्क्रियाणाम् अवान्तरव्यापारत्वेन कारकत्ववत्, प्राणादीनां करणत्वाभावात् प्राणनादिक्रियाणाम् अवान्तरव्यापरत्वेनापि क्रियाजनकत्वाभावेन कारकत्वानुपपत्तेरिति भावः । **कारकत्वं** क्रियाजनकत्वम् ।

आत्माश्रयादिति भावः । ननु क्रियाणां कथमवान्तरव्यापारत्वम् । तज्जनकत्वाभावात् इत्यत आह– **कारकाश्रिताभिरित्यादिना** ।।

**भावप्रकाशः (कृ.टि.)–** शरीरवाङ्मनोजन्यकर्ममात्राधिष्ठानस्य प्रकृतत्वादाह– **भूम्या-दीति** ।। आदिपदात् होमाद्यधिकरणाग्न्यादिसङ्ग्रहः । ननु द्वितीयाध्याये' न हि प्रतिबिम्बस्य क्रिया' इत्यादिना जीवस्वातन्त्र्यनिषेधेन अर्थादीश्वरस्य कर्तृत्वं प्राप्तम् । न चार्थिकस्योक्तत्वम् । यः स्वार्थादर्थो न स चोदनार्थ इत्युक्तेरित्यत आह– **उपपादितमिति** ।। नन्वेवं सति स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनोक्तेरिति तात्पर्यनिर्णयविरोध इत्यत आह– **साध्यत्वादिति** ।। अन्त्ये ।। **चेष्टाग्रहणेनेति** ।। किं प्राणादिशब्देन प्रसिद्धिबलात् प्राणादिद्रव्यमुच्यते । उत व्याख्येयचेष्टाशब्दबलात् प्राणादिनिष्ठक्रियेति विकल्प्याद्ये आह– **द्रव्येति** ।। अन्त्ये आह– **प्राणनादीति** ।। **कारकत्वेति** ।। प्राणादीनामकरणत्वेन तत्क्रियाणां हस्तादिक्रियावद् व्यापारत्वेनापि कारकत्वायोगादित्यर्थः । नन्वेवं करणव्यापारसङ्ग्रहेऽपि नाधिष्ठानादिक्रियासङ्ग्रहः । तथा च नेयं क्रिया प्रतिकारणमात्रोक्तिः स्यादित्यत आह– **सावान्तरेति** ।

## भाष्यम्

**ध्यानादेरपि मानसी चेष्टा कारणम् । पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति ।**

भावप्रदीपिका (प.टी.)– ननु ध्यानादिकर्मणः स्थैर्यसाध्यत्वात् कथं चेष्टा-जनकत्वम् ? इत्यत आह– **ध्यानादेरपीति** । न केवलं तत्कालीनचेष्टा कारणं किन्तु पूर्वत्वेनापीत्याह– **पूर्वतनेति** ।

प्रमेयदीपिका (ज.टी.)– नन्वत्र कारकाभिधानप्रसङ्गे अधिष्ठानाद्येवोक्तम् । कर्मसम्प्रदानापादानानि कुतो नोक्तानि? अधिष्ठानादीनां सर्वक्रियानुगमात् । कर्मादीनां तदभावादिति ब्रूमः । तथाच वक्ष्यति 'शरीरवाङ्मनोभिर्यत्' (१८.१५) इति ।। एवं तर्हि चेष्टाऽपि न वक्तव्या । ध्यानादिजनने करणस्य मनसः चेष्टाभावेनाननुगमादित्यत आह– **ध्यानादेरपीति** ।। आदिपदेन स्मरणं गृह्यते। ज्ञात एवार्थे ध्यानं भवति । ज्ञानं चाऽत्मेन्द्रियसन्निकृष्टेनैव मनसा जायते । सन्निकर्षश्च मानसचेष्टाजन्यः । अतो

श्लोकः १५

**ध्यानादेरपि मनस्सम्बन्धिनी चेष्टा कारणं भवतीति भावः । ननु नियतपूर्वक्षणे सत् कारणम् । नच ध्यानादिपूर्वक्षणे मनसि क्रियाऽस्ति । चिरातीतत्वात् । मनोनैश्चल-साध्यत्वाद् ध्यानादेः ।। नच सन्निकर्षः ज्ञानद्वारा करणम् । तस्यापि चिरातीतत्वादित्यत आह– पूर्वतनीति ।। पूर्वतनी चिरातीताऽपि मानसी क्रिया सन्निकर्षज्ञानद्वारा ध्यानादिहेतुसंस्कारकारणत्वेन भवति ध्यानादेः कारणम् । संस्कारस्य स्थायित्वादित्यर्थः ।।**

**भावदीपः (रा.टि.)–** ।। **तस्यापीति** ।। सन्निकर्षजज्ञानस्यापीत्यर्थः ।। **ध्यानादिहेतुसंस्कारेति** ।। ध्यानविषयस्य मानसवासना परिणामत्वादिति भावः । भाष्ये शेषमाह– **ध्यानादेः कारणमिति** ।। मानसक्रियानन्तरं तस्य तेन श्रोत्रादीन्द्रियसन्निकर्षे सति, स तस्य श्रोत्रादिसन्निकृष्टविषयानुभवे सति, तज्जन्यसंस्कारपरिणतवस्तुविषयकमानसावलोकनस्य ध्यानत्वात् परम्परया ध्यानरूपक्रियाहेतुर्भवति मानसक्रियेति भावः ।। **अधिष्ठानादीनामिति** ।। देहेन्द्रियादृष्टकर्तृहस्तादिक्रियाणामित्यर्थः ।। **कर्मादीनां** कर्मकारकादीनामित्यर्थः । भूम्यां तिष्ठति, चैत्रश्चलति इत्यादावभावादिति भावः ।। **वक्ष्यतीति** ।। सर्वक्रियानुरूपगतिमधिष्ठानादेरिति योज्यम् ।।

**भावरत्नकोशः (सु.टि.)–** उत्तरमाह– **अधिष्ठानादीनामिति** ।। **कर्मादीनां** कर्मसम्प्रदानापादानानाम् । **तदभावादिति** ।। वृद्धिक्षयभयजीवितमरणलज्जासत्तास्थितिजागरणशयनक्रीडारुचिदीप्त्यर्थकधातूनाम् अकर्मकत्वानुभवेन तत्र कर्मादिकारकाणाम् अनुगमाभावादित्यर्थः । अधिष्ठानादीनां सर्वक्रियास्वनुगमने गीतामेव प्रमाणयति– **तथा चेति** ।। 'शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः' इत्युत्तरत्र शरीरशब्देनाधिष्ठानकारकस्य, वाक्छब्देन मनःशब्देन च करणकारकस्य, 'नरः' इति कर्तृकारकस्य क्रियामात्रारम्भेऽनुगमाभिधानादुक्तं युक्तमित्यर्थः ।। एवं तर्हि 'यदनुगतं तद्वक्तव्यम्' इति नियमे भाष्योक्तमुपपादयति– **ज्ञात एवार्थ इत्यादिना** ।। **आत्मेन्द्रियसन्निकृष्टेन** आत्मेन्द्रियाभ्यां सन्निकृष्टेन **तत्सन्निकर्षः** आत्मेन्द्रियसन्निकर्षः । 'मानसी' इत्यस्यार्थः– **मनःसम्बन्धिनीति** ।।किञ्च ध्यानपूर्वक्षणे यदि मनसि चेष्टाऽभ्युपगम्यते तदा ध्यानमेव न सम्पद्यते इत्याशयेनाह– **मनोनैश्चल्येति** ।। मानसचेष्टायाः चिरातीतत्वेऽपि यागोऽदृष्टद्वारेव सन्निकर्षज्ञानद्वारा सा कारणं भविष्यति इत्याशङ्क्य निराह– **न चेति** ।। **तस्यापि** मानसात्मेन्द्रियसन्निकर्षस्यापि । **ध्यानादिहेतुसंस्कारेति** ।। ध्यानविषयस्य

मानसवासनापरिमाणत्वाद् इति भावः । 'भवति' इत्यनुवादः, 'ध्यानादेः कारणम्' इति तु शेषः । आदिपदेन स्मरणं ग्राह्यम् । मानसक्रियानन्तरं श्रोत्रादीन्द्रियसन्निकर्षो भवति । तेन च श्रोत्रादिसन्निकृष्टविषयानुभवः, तस्मिंश्च सति तज्जन्यसंस्कारपरिणतवस्तुविषयकमानसावलोकन-रूपध्यानजननात् परम्परया ध्यानहेतुर्भवति मानसी क्रियेति भावः ।

**भावदीपिका (श्री.टि.)–** ।। **अधिष्ठानाद्येवेति** ।। कर्तृकर्मकरणसम्प्रदानापादानाधि-करणाख्यषट्कारकेषु अधिकरणकरणकर्त्राख्यकारकत्रयमेवोक्तमित्यर्थः । **तदभावादिति** ।।

वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम् ।
शयनक्रीडानतिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ।।

इत्युक्तवृद्ध्यादिक्रियासु कर्मादीनां कारकाणामननुगमादित्यर्थः । अधिष्ठानादीनां सर्वक्रिया-स्वनुगमः कुतः इत्यतो गीतावाक्यमेव तज्ज्ञापकमित्याह– **तथा चेति** ।। 'शरीरवाङ्मनोभिः यत् कर्म प्रारभते नरः' इत्यत्र शरीरशब्देन अधिष्ठानकारकस्य, वाङ्मनश्शब्देन करणकारकस्य 'नरः' इत्यनेन कर्तृकारकस्य च कर्ममात्रारम्भेऽनुगमकोक्तेरित्यर्थः ।। **एवं तर्हीति** ।। कर्मादि-कारकाणां सर्वक्रियास्वनुगमाभावेनावक्तव्यत्व इत्यर्थः । **मनस इति** ।। ध्यानकरणस्य मनो-रूपेन्द्रियस्यावान्तरव्यापारभूतचेष्टाया अभावादित्यर्थः । कारणत्वमुपपादयति– **ज्ञान एवे-त्यादिना** ।। **चेष्टा कारणमिति** ।। आत्मसन्निकर्षज्ञानद्वारा कारणमित्यर्थः । ध्यानादिपूर्वक्षणे मनसि क्रियाऽङ्गीकारे ध्यानमेव न सम्पद्यत इत्याह– **मनोनैश्चल्येति** ।। 'न च' इत्यनन्तरं 'मानसी चेष्टा' इति शेषः । **कारणं** ध्यानकारणम् । **तस्यापीति** ।। ज्ञानस्यापीत्यर्थः । त्रिक्षणावस्थायित्वादिति भावः । ननु मानसचेष्टायाः सन्निकर्षज्ञानजन्यसंस्कारद्वाराऽपि कथं ध्यानकारणत्वम्? संस्कारस्यापि क्षणिकत्वात्, इत्याशङ्क्याह– **संस्कारस्येति** ।।

## भाष्यम्

**दैवम् अदृष्टम् । तथा चायास्यश्रुतिः 'देहो ब्रह्माथेन्द्रियाद्याः क्रियाश्च तथा दृष्टं पञ्चमं कर्म हेतुः' इति ।। १४,१५ ।।**

**भावप्रदीपिका (प.टी.)–** ननु कर्तृशब्देनैव विष्णुग्रहणे दैवशब्देन किमुच्यते ? इत्यत आह– **दैवमिति** । उक्तं श्रुत्या स्थापयति– **तथा चेति** ।।

श्लोकः १५

**प्रमेयदीपिका (ज.टी.)– 'दैवमन्तर्यामिव्यापारः' इति कश्चित् । तदसत् । 'कर्ता' इत्यनेनैवोक्तत्वात् । 'चक्षुरा द्यनुग्राहकाः सूर्यादयः' इत्यपरः । तदप्यसत् । करणादि-शब्दैरेव गृहीतत्वादिति भावेनाऽह– दैवमदृष्टमिति ।। उक्तमर्थं श्रुतिसम्मत्याऽपि समर्थयति– तथा चेति ।।** देहः इत्युपलक्षणम् । हेतुः कारणम् । कर्म हेतु इति क्वचित् पाठः । तत्र छान्दसो लिङ्गव्यत्ययः ।। १४,१५ ।।

**भावबोधः (र.टि.)– ।। चक्षुराद्यनुग्राहका इति ।।** आदिपदेन श्रोत्रादीन्द्रियवद्देहा-धिष्ठानमपि गृह्यते । **करणादिशब्दैरेवेति ।।** आदिपदेनाधिष्ठानादिकं ग्राह्यम् । **उपलक्षण-मिति ।।** देहादीति भाष्यानुरोधादेवमुक्तम् ।।

**भावदीपः (रा.टि.)– ।। करणादीति ।।** करणाधिष्ठानकर्तृशब्दैरित्यर्थः । अधिष्ठान-कारणशब्दाभ्यां देहाद्यनुग्राहकाणाम् अपि प्राप्तेः तन्मते कर्तृपदेन जीवानां ग्रहणादिति भावः ।। **उपलक्षणमिति ।।** भूम्यादेरिति भावः ।। १४,१५ ।।

**वाक्यार्थप्रदीपः (पां.टि.)– ।। लिङ्गव्यत्यय इति ।।** हेतुरिति पुंलिङ्गस्य 'हेतु' इति नपुंसकलिङ्गतया व्यत्ययः 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति वचनादिति भावः ।।

**भावरत्नकोशः (सु.टि.)–** 'देवादागतम्, 'तत आगतः' इत्यणि 'देवप्रेरणम्' इत्यभि-प्रायेणाह– **दैवमन्तर्यामिव्यापार इति ।।** तथा चाहुः 'सर्वप्रेरकोऽन्तर्यामी' इति । **उक्तत्वात्** 'कर्ता विष्णुः, स हि सर्वस्य कर्ता' इति अन्तर्यामिव्यापारस्योक्तत्वात् । 'चक्षुराद्यनुग्राहकम् आदित्यादि दैवम्' इति शङ्करभाष्यमनुवदति– **चक्षुरादीति ।। करणादिशब्दैः** करणा-धिष्ठानादिशब्दैः । 'अधिष्ठानं देहादिः' इति भाषणादाह– **उपलक्षणमिति ।।** 'भूम्यादेः' इति योज्यम् । पाठान्तरोद्भावनाय, 'कारणानि निबोध मे' इति गीतानुरोधाय च 'हेतुः' इत्यस्यार्थ-माह– **हेतुः कारणमिति ।। लिङ्गव्यत्यय इति ।।** 'हेतुर्ना कारणम्' इति हेतुशब्दस्य पुंलिङ्गत्वाभिधानादिति भावः ।।

**गीताक्षरार्थस्तु** अधिष्ठानादेः कारणत्वमुपदिश्यते– **शरीरेति ।।** शरीरेण वाचा मनसा च नरो यत् कर्म प्रारभते निवर्तयति किं तत् कर्म न्याय्यं न्यायादनपेतं धर्म्यं श्रुतिविहितं विपरीतम् अन्याय्यम् अधर्म्यं निषिद्धं वा तस्य कर्मणः एते अधिष्ठानादिदैवान्ता हेतवः कारणानि । तथा च जीवस्य तत्रानन्तर्भावात् कर्तृत्वाभिमानोऽनेन हातव्य इति भावः । यद्यपि

यथोक्तैः पञ्चभिरेव कर्म प्रारभ्यमाणम् । तथापि त्रिष्वेवान्तर्भावाभिप्रायेण एवमुक्तम् । शारीरं वाचिकं मानसं चेति कर्म त्रिविधमिति प्रसिद्धेः ।। १५ ।।

**भावदीपिका (श्री.टि.)–** ।। **कर्तेत्यनेनेति** ।। अन्तर्यामिभूतस्य व्यापारवतो विष्णोः कर्तृशब्देनोक्तत्वात्, तद्व्यापारस्यापि चेष्टापदेनैवोक्तत्वादित्यर्थः । **सूर्यादय इति** ।। दैवपदवाच्या इत्यर्थः । **करणादिशब्दैरेवेति** ।। अभिमान्यधिकरणन्यायेनेति भावः । 'देहादि' इति भाष्यानुरोधादाह– **देह इतीति** ।। भूम्याख्याधिष्ठानस्येत्यर्थः । **छान्दस इति** ।। 'हेतुर्ना कारणम्' इति हेतुशब्दस्य नित्यपुंलिङ्गत्वाभिधानादिति भावः ।। १४,१५ ।।

**भावप्रकाशः (कृ.टि.)–** ।। **अन्तर्यामिव्यापार इति** ।। सर्वप्रेरकोऽन्तर्यामीत्यर्थः । उक्तं चैवं श्रीधरेण । **चक्षुराद्यनुग्राहकम् इति** ।। आदिपदेन श्रोत्रादीन्द्रियवद्देहाद्यधिष्ठानमपि ग्राह्यम् । अत एवाह– **करणादिशब्दैरिति** ।। आदिपदेनाधिष्ठानादिसङ्ग्रहः । देहादीति भाष्यानुरोधादाह– **उपलक्षणमिति** ।। १४,१५ ।।

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ।। १६ ।।**

## भाष्यम्

**केवलं निष्क्रियम्** । 'एनं केवलमात्मानं निष्क्रियत्वाद् वदन्ति हि' इति तत्रैव ।। १६ ।।

भावप्रदीपिका (प.टी.)– ननु जीवस्य पञ्चकारणानन्तर्गतत्वे तत्रैवम् इति श्लोको न युक्तः । यः केवलमेकमात्मानं कर्तारं पश्यति । न कारणान्तरं पश्यतीत्युक्तेः । अन्यथा केवलपदवैयर्थ्यमित्यत आह– **केवलमिति** ।। १६ ।।

प्रमेयदीपिका (ज.टी.)– नन्वेवं जीवस्य कर्मकारणेष्वनन्तर्भावे व्याख्यायमाने **तत्रैवं सति** इत्युत्तरवाक्ये **केवलम्** इति न युज्यते । एकाकिनमात्मानं कारणत्वेन मन्यमानस्य निन्दयाऽस्य ससहायस्य कारणत्वप्रतीतेरित्यत आह– **केवलमिति** ।। नात्र केवलशब्द एकाकिवचनः । किन्तु निष्क्रियत्ववाची । तदुक्तिश्च निन्दोपपाद-

**नार्थेति** भावः । केवलशब्दस्य निष्क्रियार्थत्वं कुतः? इत्यत आह– **एनमिति** ।। तत्रैव अयास्यश्रुतावेवोक्तम् ।। १६ ।।

**भावबोधः (र.टि.)**– ।। **निन्दोपपादनार्थमिति** ।। स्वातन्त्र्येण क्रियाशून्यस्यापराधीनकर्तृत्वं विरुद्धमिति तज्ज्ञानी भ्रान्त इति निन्दोपपादकत्वमित्यर्थः ।

**भावरत्नकोशः (सु.टि.)**– ।। **निन्दोपपादनार्थेति** ।। स्वातन्त्र्येण क्रियाशून्यस्य पराधीनकर्तृत्वं नास्तीति तज्ज्ञानी भ्रान्त इति निन्दोपपादनार्थेत्यर्थः ।। १६ ।।

**गीताक्षरार्थस्तु**- कर्तृत्वाभिमानी त्यागी विनिन्द्यते– **तत्रैवमिति** ।। तत्र कर्मणि एव सति पश्चानामेव कारणत्वे सति केवलं निष्क्रियं परप्रेरणां विना स्वतः क्रियाविहीनम् आत्मानं स्वात्मानं यः कर्तारं क्रियायां स्वातन्त्रेण विवक्षितं कारकं पश्यति सः अकृतबुद्धित्वात् श्रवणआचार्योपदेशादिना अशिक्षितबुद्धित्वाद् दुर्मतिः अविद्यमानकर्तृत्वमतिमत्तया मिथ्यामतिः न पश्यति तत्त्वज्ञानी न भवतीत्यर्थः ।। १६ ।।

**भावदीपिका (श्री.टि.)**– ।। **तदुक्तिः** निष्क्रियत्वोक्तिः । **निन्दोपपदनार्थेति** ।। स्वातन्त्र्येण क्रियाशून्यस्यापराधीनकर्तृत्वं विरुद्धमिति तज्ज्ञानी भ्रान्त इति निन्दोपपादनार्थेत्यर्थः ।। १६ ।।

**भावदीपः (रा.टि.)**– ।। **निन्दोपपादनयेति** ।। केवलं निष्क्रियं क्रियाशून्यकर्तृत्वहीनमिति यावत् । 'आत्मानं कर्तारं पश्यन्नपि न पश्यति सक्तः' इति निन्दोपपादनायेत्यर्थः ।। १६ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **निन्दोपादनार्थेति** ।। स्वातन्त्र्येण क्रियाशून्यस्यापराधीनकर्तृत्वं नास्तीति तज्ज्ञानी भ्रान्त इति निन्दोपपादनार्थेत्यर्थः ।। १६ ।।

**यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमांल्लोकान्न हन्ति न निबद्ध्यते ।। १७ ।।**

## भाष्यम्

**तज्ज्ञानं स्तौति– यस्येति । यस्त्वीषद् बद्ध्यते स ईषदहङ्कारी च ।।**

**भावप्रदीपिका (प.टी.)– अहं कर्तेति मन्यमानो न जानातीत्युक्तम्** । विपरीतत्वे को गुणः इत्यतः श्लोकमवतारयति– **तदिति** । नन्वहङ्कारादिरहितेन्द्रादेरपि वृत्रवधादि-नेषद्बत्वात् कथमेतत् इत्यत आह– **यस्त्वति** ।। १७ ।।

**प्रमेयदीपिका (ज.टी.)– अवश्यं चैतदेवम् यावतोत्तरश्लोके स्वात्मानमकारणं जानतः स्तुतिः क्रियते । अन्यथा ससहायस्य कारणत्वं जानतः स्तुतिः क्रियेतेति भावेनाऽह–तदिति।। स्वात्मनो निष्क्रियत्वज्ञानम् । ननु निरहङ्कारस्यापीन्द्रादेः वृत्र-वधादिनेषद्बन्धो दृश्यते । तत्कथमेतत्? इत्यत आह– यस्त्विति ।।** इयं च कल्पना **वक्तुराप्तत्वादिना युज्यते** ।। १७ ।।

**भावबोधः (र.टि.)– ।। इयं चेति ।।** इन्द्रस्यापीषदहङ्कारपल्पना ।। वक्तुर्गीता-कारस्य । आदिपदेनार्थस्य वेदादिसिद्धत्वं ग्राह्यम् ।

**भावदीपः (रा.टि.)– ।। ईषद्बन्धो दृश्यत इति ।।** 'ब्रह्महत्या हते तस्मिन् नाससाद वृषाकपिम्' इत्यादिना षष्ठस्कन्धे प्रसिद्धमिति भावः ।। **इयश्चेति ।।** भाष्यकारीया कल्पना 'यस्य नाहङ्कृतो भावः' इति **वक्तुः** कृष्णस्याप्तत्वाद्, आदिपदोक्तान्यथानुपपत्तिबलादेव अहङ्कारस्य पारिजातहरणेन्द्रयागविघातादौ दर्शनेन सम्भावितत्वाच्च युज्यत इत्यपेरर्थः ।। १७ ।।

**भावरत्नकोशः (सु.टि.)– ।। एतत्** 'तत्रैवं सति' इति श्लोकव्याख्यानम् । यावता यतः । अन्यथा अकारणं जानतः स्तुत्यनभिप्राये । **आत्मनः** जीवस्य । **ईषद्बन्ध इति ।।** 'हरेर्दुःखं कुतोऽभवत् ' इति, 'स आवसत् पुष्करनालतन्तून्' इति भागवतादिवचनादिति भावः । **एतत्** निष्क्रियत्वज्ञानिनः स्तवनम् । अप्रामाणिकत्वादश्रद्धेयम् इत्यत आह– इयं **चेति** ।। निरहङ्कारस्यापि इन्द्रादेः ईषदहङ्कारकल्पना । **वक्तुः** 'यस्य नाहङ्कृतो भावः' इति उपदेष्टुर्गीताचार्यस्य । **आप्तत्वेन** अर्जुने प्रेमवत्त्वेन तत्त्वज्ञानोद्देशेन प्रवृत्तत्वेन च श्रद्धेयेत्यर्थः । भागवताद्यागम आदिपदार्थः । दृश्यते चेन्द्रस्य पारिजातहरणकाले, इन्द्रयागभङ्गकाले चाहङ्कारः । स चाप्यल्पकाल एवेति ईषच्छब्दो भाष्यटीकयोरित्यपि आहुः ।। १७ ।।

**गीताक्षरार्थस्तु** कर्तृत्वाभिमानत्यागी तु स्तूयते– **यस्येति** ।। यस्य पुंसः अहङ्कृतः अहमित्येव कृतः 'अहं कर्ता' इत्येवम्भूतो भावः अभिप्रायः न अस्ति । यस्य बुद्धिः फले न लिप्यते, किन्तु 'कर्तव्यमेव' इति कर्मणि प्रवर्तते सः इमान् लोकान् हत्वाऽपि न हन्ति

श्लोकः १८

'हन्मि' इत्यभिमानाभावात् न निबध्यते कर्मफलभूतस्वर्गनरकादिना । एतच्च वाक्यम् ईश्वरे स्वातन्त्र्यज्ञानी यो विश्वहननाय जातो रुद्रो यमो वा तद्विषयम् अन्यत्र स्थितम् । ननु निरहङ्कारस्यापि इन्द्रादेः वृत्रवधादिना ईषद्बन्धो दृश्यते । तत्कथमियमुक्तिः इति शङ्का 'यस्त्वीषद् बध्यते स ईषदहङ्कारी च' इति भाष्ये परिहृता ।। १७ ।।

**भावदीपिका (श्री.टि.)–** ।। बन्धः दुःखादिरूपः । अप्रामाणिकमेतदश्रद्धेयमित्याह– **इयञ्चेति** ।। इन्द्रस्यापीषदहङ्कारकल्पनेत्यर्थः । **वक्तुरिति** ।। 'यस्य नाहङ्कृतो भावः' इति प्रतिपादयितुर्गीताकारस्येत्यर्थः । आदिपदेन तदर्थस्य वेदादिसिद्धत्वं ग्राह्यम् ।। १७ ।।

**भावप्रकाशः (कृ.टि.)–** नन्वियं कल्पना प्रमाणाभावादयुक्तेत्यत आह– **इयं चेति** ।। यस्त्वीषद्बध्यते स ईषदहङ्कारीति कल्पनेत्यर्थः । **वक्तुराप्तत्वादिनेति** ।। **वक्तुः** कृष्णस्य आप्तत्वम्, आदिपदेन अर्जुने प्रेमवत्त्वं तत्तत्वज्ञानोपदेशेन प्रवृत्तत्वं च ग्राह्यम् । तेनादिपदादर्थस्य वेदादिसिद्धत्वग्रहे वक्तुरित्यनन्वयं इत्यपास्तम् ।। १७ ।।

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ।। १८ ।।**

## भाष्यम्

**एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वादित्यत आह– ज्ञानमिति ।। त्रिविधा कर्मचोदना एतत् त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधा इत्युच्यते ।।**

भावप्रदीपिका (प.टी.)– ननु जीवस्याकर्तृत्वे घटादिवन्न विधिस्तं प्रतीत्येतत्परिहाराय श्लोकार्धमवतार्य व्याचष्टे– **एवं तर्हीति** । ज्ञानादित्रयस्य जीवे विद्यमानत्वेन घटादिविलक्षणत्वात् तं प्रति विधिरित्यर्थः ।

प्रमेयदीपिका (ज.टी.)– यदि न जीवस्य कारणत्वं कथं तर्हि तज्ज्ञानादेरुत्तरवाक्ये कर्मणां मूलकारणत्वमुच्यते ? 'ज्ञानादित्रयं कर्मणां प्रवर्तकमिति इत्याशङ्क्य तस्यार्थान्तरं विवक्षुस्तन्निवर्त्यामाशङ्कामाह– **एवं तर्हीति** ।। यदि जीवो न कर्मणां कारणमित्यर्थः । विधिः श्रौतः स्मार्तश्च । न प्रवर्तेत । ततश्च 'तद्वैयर्थ्यप्रसङ्गः' इति

**शेषः । एवं तर्हि इत्युक्तस्यैव विवरणम्– अकर्तृत्वादिति ।। 'जीवस्य घटवत्' इति शेषः ।।**

**ननु ज्ञानादिरूपेण कर्मचोदनायाः त्रैविध्यमयुक्तमनुपयुक्तं च कथमुच्यते? । नियोक्तुः प्रेरणं हि विधिः । नच तज्ज्ञानादित्रयरूपम् । न चानेनोक्तशङ्कानिवृत्तिरित्यत आह– त्रिविधेति ।। स्पष्टप्रतीत्यर्थोऽनुवादः । 'इत्यत्र' इति शेषः । एतत् ज्ञानादिकम् । कर्मविधिः 'प्रवर्तते जीवं प्रति' इति शेषः । इतिशब्दो हेतौ । त्रिविधा इत्युच्यते कर्मचोदना । निमित्तनैमित्तिकभावेनाभेदोपचार इत्यर्थः ।।**

**भावबोधः (र.टि.)– ।। घटवदिति शेष इति ।।** अनेन जीवः न विधिविषयः, अकर्तृत्वात् घटवदित्यनुमानम् । अकर्तृत्वादिति हेतुवचनेनोक्तं भवतीति भावः । अयुक्तत्वमुपपादयति– **नियोक्तुरिति** ।। अनुपयुक्तत्वमुपपादयति– **न चेति** ।। नन्वेवं ज्ञानादीनां कर्मविधिनिमित्तानामेव त्रैविध्यात् त्रिविधा कर्मचोदनेति कथमुक्तमित्यत आह– **निमित्तेति** ।।

**भावदीपः (रा.टि.)–** उच्यत इत्युक्तम् । तत्कथम् इत्यतो 'ज्ञानं ज्ञेयम्' इत्यत्र तात्पर्यमाह– **ज्ञानादित्रयमिति** ।। 'प्रवर्तते' इति शेषोक्तिः । तेन **अपेक्ष्य** इति ल्यबन्तप्रयोगोपपत्तेरिति भावः।। **तद्वैयर्थ्येति** ।। विधिवैयर्थ्यर्थं (वैयर्थ्ये) जडेश्वरयोः विध्यविषयत्वाज्जीवं प्रत्यप्यविधाने वैयर्थ्यमेवेति भावः ।। कस्य इत्यतो 'जीवस्य' इति शेषोक्तिः ।। जीवो न विधिविषयः कर्तृत्वाद् घटवदिति प्रयोग इति भावः । अयुक्तत्वानुपयुक्तत्वे क्रमाद्व्यनक्ति **नियोक्तुरित्यादिना** ।। **एतत्** इत्यनुवादः, **ज्ञानादिकम्** इति व्याख्या । **प्रवर्तते** इति शेषोक्तिः प्राग्वदेव कृत्यम् ।। अयुक्त इति शङ्कायाः किमुत्तरमुक्तम् इत्यत आह – **निमित्तेति** ।। जीवस्याकर्तृत्वाद् घटादेरिव विधिविषयतेत्यनुपयुक्तत्वशङ्कानिरासस्तु **अकर्तृत्वेपि** इत्यादि भाष्ये भविष्यतीति भावः ।।

**भावरत्नकोशः (सु.टि.)–** 'तज्ज्ञानादेः जीवज्ञानादेः' इत्यत्र आदिपदेन ज्ञेयपरिज्ञातृग्रहणम् । **कर्मणां** कर्माणि प्रति । तत्कथम् इत्यतः 'त्रिविधा कर्मचोदना' इत्यस्य तात्पर्यमाह– **ज्ञानादित्रयमिति** ।। **तस्य** ईश्वरवाक्यस्य । पुरुषमपेक्ष्य जीवमधिकृत्येति भाष्यार्थः स्फुट इति भावेन विधिं विवृण्वन् तत्र शेषमाह– **विधिरित्यादिना** ।। न 'प्रवर्तेत' इत्यत्रेष्टापत्तिमाशङ्क्योक्तम् – **ततश्चेति** ।। जडेश्वरमुक्तानाम् अतदधिकारित्वाद् जीवान् प्रत्यपि

श्लोकः १८

अप्रवृत्तौ विधिर्व्यर्थ एव स्यादित्यर्थः । अयुक्तत्वमुपपादयति– **नियोक्तुः प्रेरणं हीति** ।। **तत्** **प्रेरणम्** । अनुपयुक्तत्वमुपपादयति– **न चानेनेति** ।। **उक्तशङ्का** 'एवं तर्हि' इति भाष्योक्तशङ्का 'एतद्' इत्यनुवादः 'ज्ञानादिकम् 'इति व्याख्या । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यभिधानादाह– **इतिशब्द इति** ।। 'उच्यते' इत्याख्यातोपात्तकर्म – **कर्मचोदनेति** ।। ननु कर्मविधिनिमित्तानां ज्ञानज्ञेयपरिज्ञातृणां त्रैविध्यमेवानेन ज्ञायते, न कर्मचोदानायाः । तत्कथं 'कर्मचोदना त्रिविधा' इत्युक्तिः इत्यत आह– **निमित्तनैमित्तिकभावेनेति** ।।

**भावदीपिका (श्री.टि.)–** ।। **तज्ज्ञानादेरिति** ।। जीवज्ञानादेरित्यर्थः । आदिपदेन ज्ञेयपरिज्ञात्रोः सङ्ग्रहः । **कर्मणामिति** ।। कर्मणि षष्ठी, कर्माणि प्रतीत्यर्थः । 'कर्मचोदना' इत्यनेन कथमेतल्लभ्यते इत्यतस्तदर्थमाह– **ज्ञानादित्रयमिति** ।। 'कर्मणां प्रवर्तकम्' इति कर्मचोदनाशब्दार्थानुवादः । **घटवदिति** ।। तथा च 'जीवो न विधिविषयः अकर्तृत्वात् घटवत्' इत्यनुमानम् 'अकर्तृत्वात्' इति हेतुवचनेनोक्तं भवतीति भावः । अयुक्तत्वमुपपादयति– **नियोक्तुरिति** ।। पुरुषस्येत्यर्थः । **प्रेरणम्** अन्यान् प्रति । **विधिः** कर्मचोदनापदवाच्यः । अनुपयुक्तत्वमुपपादयति – **न चेति** ।। नापीत्यर्थः । **उक्तशङ्केति** ।। 'एवं तर्हि 'इत्युक्तशङ्केत्यर्थः । ननु 'ज्ञानमिति' इत्येवं प्रतीकस्य गृहीतत्वाद् 'एतत् त्रिविधम्' इत्यादिव्याख्यान एव कर्तव्ये, 'त्रिविधा कर्मचोदना' इत्यनुवादः किमर्थ इत्यत आह– **स्पष्टा** ।। 'व्याख्येयपदानाम्' इति शेषः । नन्वेवं ज्ञानादीनां कर्मविधिनिमित्तानामेव त्रैविध्यात् 'त्रिविधा कर्मचोदना' इत्ययुक्तम् इत्यत आह– **निमित्तेति** ।। 'लाङ्गलेन वयं जीवामः' इत्यत्रेवेति भावः ।

**भावप्रकाशः (कृ.टि.)–** ननु विधिः प्रेरणम् । तथा च जीवो न विधिविषयः । अकर्तृत्वाद्घटवदित्येतदन्यथा सिद्धम् । अकर्तृत्वेऽपि तदज्ञानेन गामानयेत्यादिविधिसम्भवादित्यत आह– **श्रौतः स्मार्तश्चेति** ।। तथा च श्रुतिस्मृतिभिः प्रेरकस्येश्वरादेरज्ञानाभावान्नान्यथासिद्धिरिति भावः । अयुक्तत्वमुपपादयति– **नियोक्तुरिति** ।। अनुपयुक्तत्वमुपपादयति– **न चेति** ।। ननु कर्मविधिनिमित्तानां त्रैविध्येऽपि कर्मचोदनायास्त्रैविध्योक्तिः । कथमित्यत आह– **निमित्तेति** ।।

## भाष्यम्

**कारणानि सङ्क्षिप्याऽऽह– करणमिति ।। कर्मसङ्ग्रहः कर्मकारणसङ्ग्रहः । अधिष्ठानादि कारण एवान्तर्भूतम् ।।**

भावप्रदीपिका (प.टी.)– करणम् इत्यनेन न कारणान्तरं शङ्क्यमिति भावेनाह– **कारणानीति** । कर्मसङ्ग्रह एवोच्यते न तु कारणसङ्ग्रह इत्यत आह– **कर्मेति** । कथं पञ्चकस्य त्रयेऽन्तर्भावः ? इत्यत आह– **अधिष्ठानादीति** । आदिपदाद्दैवम् ।।

**प्रमेयदीपिका (ज.टी.)– कर्मकरणानामुक्तत्वात् किमिदं पुनरुच्यते? इत्यत आह– कारणानीति ।। तर्हि 'कर्मसङ्ग्रहः' इति कथम्? 'कारणसङ्ग्रहः' इति वक्तव्यत्वादित्यत आह– कर्मेति ।। कर्मशब्देन तत्कारणानि लक्ष्यन्त इत्यर्थः । यदि पञ्चानां कारणानामयं सङ्ग्रहस्तर्हि कस्य कुत्रान्तर्भावः? इत्यत आह– अधिष्ठानादीति ।। आदिपदेन दैवपदोक्तमदृष्टं गृह्यते । 'कांस्यपात्र्या भुङ्क्ते' 'दैवेन कृतमन्यथा' इत्यादिवत् साधकतमत्वेन विवक्षितत्वात्, 'विवक्षातः कारकाणि भवन्ति' इति वचनात् । न चाऽऽदिपदेन चेष्टायाः सङ्ग्रहः । तत्र कारकान्तर्भावस्यैवौचितत्वात् । कर्म इति पृथक्ग्रहणाच्च । नच कर्म अदृष्टम् । 'कर्म चेष्टा' इत्यन्यत्र व्याख्यातत्वात् । 'कर्तुरीप्सिततमं कर्म' (पा.सू.१.४.४९) इति कश्चित् । तदसत् । पञ्चसु कारणेषु तस्यागृहीतत्वात् ।।**

**भावबोधः (र.टि.)– ।। कारकान्तर्भावस्यैवेति ।।** चेष्टाया अवान्तरव्यापारत्वमेव, नतु कारकत्वमिति भावः ।।

**भावदीपः (रा.टि.)–** देहभूम्याद्यधिष्ठानस्यादृष्टस्य च कथं कारणकोटिप्रवेश इत्यतः प्रयोगौ दर्शयति– **कांस्यपात्र्येति ।।** कर्तृकरणयोस्तृतीयेति भावः ।। 'अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा' इति प्रयोगात् करणान्तर्गतिः युक्तेत्यर्थः । तत्रापि कथम्? इत्यत आह– **साधकेति ।। आदिपदेनेति ।।** 'अधिष्ठानादि' इत्यादिपदेनेत्यर्थः ।। तत्रेति कारणेषु अधिष्ठानादिकारणान्तर्भावस्यैवोचितत्वात् चेष्टायाश्च कारकव्यापारत्वेन कारकत्वाभावादिति भावः ।। **अन्यत्रेति** ।। तात्पर्ये ।।

श्लोकः १८

**वाक्यार्थप्रदीपः (पां.टि.)**– ननु कथमधिष्ठानादेः करणत्वम् । कुत्राप्यदृष्टत्वादित्यत आह– **कांस्यपात्र्या इति** ।। ननु अधिष्ठानस्यैव साधकतमत्वने करणत्वेपि अधिष्ठानत्वात् सप्तमीस्यादेवेत्यत आह– **विवक्षात इति** ।। यदा अधिकरणत्वं विवक्ष्यते तदा सप्तम्यामपि । यदा साधकतमत्वेन करणत्वविवक्षा तदा तृतीयोपपद्यत इति भावः ।।

**भावरत्नकोशः (सु.टि.)**– ।। **उक्तत्वात्** 'अधिष्ठानं तथा कर्ता' इत्यत्र । 'तत्कारणानि' इति वदन् कर्मकारणभावलक्षणं लक्षणाबीजं सम्बन्धमभिसन्धत्ते । **अयं** 'करणं कर्म कर्ता' इत्यर्थः । **सङ्ग्रहः** सङ्ग्राहकः । ननु देहभूम्यादिरूपाधिष्ठानशब्दिताधिकरणस्य कथं करणत्वम् । 'आधारोऽधिकरणम् ' 'साधकतमं करणम्' इति तयोर्विविक्तस्वरूपोक्तेः । दैवपदोक्तम् अदृष्टं च कारणमेव, नतु करणम् इति तस्यापि न करणेऽन्तर्भावो युक्तः, इत्यतो भाष्यं घटयितुमाह– **कांस्यपात्रेति** ।। विवक्षामात्रेण 'कर्तृकरणयोस्तृतीया' इति विहित-तृतीयाकारकविभक्तिः । कुत इत्यत आह– **विवक्षात इति वचनादिति** ।। **अत्र** 'इति शब्द आद्यर्थः । तेन–

> 'क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम् ।
> विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ।।'

इति भर्तृहरिवचनं च गृहीतं भवति ।

**इतिवचनात्** 'करण एवान्तर्भूतमिति युज्यते' इति योज्यम् ।। **तत्र कारकान्तर्भाव-स्येति** ।। सावान्तरव्यापारं कारणं हि कारकमुच्यते, अवान्तरव्यापारश्च चेष्टैव, इति चेष्टायाः तत्तत्कारकावान्तरव्यापारत्वस्य स्वरसतया तत्तत्कारकेष्वन्तर्भावस्यैवोचितत्वेन स्वयं तस्याः करणत्वस्याविवक्षणीयत्वाद् आदिपदेन न तद्ग्रहणमुचितमिति भावः । 'कुलालचेष्टया घटो जातः' इति प्रयोगात् चेष्टायाः कारकत्वावगतिसम्भवाद् युक्तः करणेष्वन्तर्भावस्तस्य, इत्यतो दूषणान्तरमाह– **कर्मेति पृथग्ग्रहणाच्चेति** ।। 'करणं कर्म कर्ता' इत्यत्र चेष्टायाः करणात् पृथगुक्तत्वादित्यर्थः । **अन्यत्र** तात्पर्यनिर्णये । 'कर्म ईप्सिततमं कर्तुः क्रियया प्राप्यमाणम्' इति शङ्करभाष्यं सङ्गृह्यानुवदति– **कर्तुरीप्सिततममिति** ।। **तस्य** परोक्तस्य कर्मशब्दार्थस्य ।

**भावदीपिका (श्री.टि.)**– ।। इदं 'करणं कर्म कर्तेति' इत्येतत् । नन्वधिष्ठानकारकस्य कथं करणकारकेऽन्तर्भावः इत्यत आह– **कांस्यपात्र्येति** ।। भोजनाधिकरणभूताया अपि

कांस्यपात्र्याः करणत्वदर्शनादित्यर्थः । आदिपदोक्तदैवस्यापि करणेन्तर्भावोपपादनायोक्तम्– **दैवेनेति** ।। 'अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा' इत्यादिवदित्यर्थः । अवान्तर-व्यापारवत्त्वाभावात् कथं दैवादेः करणान्तर्भावः इत्यत आह– **साधकतमत्वेनेति** ।। 'साधकतमं करणम्' इति सूत्रादिति भावः । न हि विवक्षामात्रेण प्रमेयसिद्धिः इति चेत् तत्राह– **विवक्षात इति** ।। 'वैयाकरणानाम्' इति शेषः । नरहरितीर्थनामादिपदव्याख्यान-माशङ्क्य दूषयति– **न चेति** ।। **तत्र** करणकारके । चेष्टायाश्चावान्तरव्यापारत्वेन कारकत्वा-भावात्, दैवस्य चोक्तरीत्या कारकत्वावगमादिति भावः । 'कुलालचेष्टया घटो जायते' इति प्रयोगेण चेष्टाया अपि कारकत्वावगमाद् युक्तः करणेऽन्तर्भावश्चेष्टायाः इत्यतो दूषणान्तरमाह– **कर्मेतीति** ।। चेष्टापरपर्यायस्य कर्मणः करणात् पृथग्ग्रहणादित्यर्थः । **अदृष्टमिति** ।। तथा चादिपदेन चेष्टाग्रहणे न दोष इति भावः । **अन्यत्र** तात्पर्ये । **कर्तुरिति** ।। कर्तुः क्रियया आप्तुमिष्टतमं कर्मसंज्ञं स्यात् । यथा 'ग्रामं गच्छति देवदत्तः' इत्यत्र ग्रामादीति द्रष्टव्यम् । **अगृहीतत्वादिति** ।। तत्र गृहीतानामेवान्तर्भावस्य कथनीयत्वादिति भावः ।

**भावप्रकाशः (कृ.टि.)–** नन्वधिकरणस्य कथं करणत्वम् । विरोधात् । अत एवादृष्ट-स्यापि तन्नयुक्तम् । जनिकर्तुः प्रकृतिरित्यनेन पुत्रात् प्रमोदो जायते अङ्गादङ्गात् सम्भव-तीत्यादिवददृष्टस्याप्यपादानत्वादित्यत आह– **कांस्यपात्र्येत्यादि** ।। न चान्नादेः भोक्तव्यस्या-पायं प्रत्यवधित्वेन कांस्यपात्र्या अपादानत्वादधिकरणस्य करणत्वेनेदमुदाहरणमिति युक्तम् । अपादानत्वबाधेन परत्वादधिकरणत्वप्राप्तेः । न चैवं करणत्वायोगः । विवक्षावशेनोपपत्तेः । एवं दैवस्यापादानत्वेऽपि विवक्षावशात् करणत्वमिति बोध्यम् । **इति वचनादिति** ।। उपलक्षणमेतत् । क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदास्मृतमिति भर्तृहरिवचनाच्चेत्यपि ग्राह्यम् । **तव कारकान्तर्भावस्यैवेति** ।। चेष्टायाश्च अवान्तरव्यापारत्वेनाकारकत्वादिति भावः ।

## भाष्यम्

**तथा हि ऋग्वेदखिलेषु–**

**'ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः ।**
**करणं चैव कर्ता च कर्मकारणसङ्ग्रहः' इति ।।**

श्लोकः १८

**अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतः तेनैव ।।**

भावप्रदीपिका (प.टी.)– श्लोकार्थे प्रमाणमाह– **तथा हीति** । ननु आवश्यकत्वेन तस्य पुरुषार्थभावात् कथं तं प्रति विधिः ? इत्यत आह– **अकर्तृत्वेऽपीति** । तर्हि विधिनियतत्वमेव नेशाधीनत्वं जीवस्येत्यत आह– **ईश्वरेति** । नन्वेतावन्मात्रं जीवस्य कर्तृत्वं चेन्नास्त, तर्हि न तं प्रति विधिरित्यत आह– **यदि चेति** ।

प्रमेयदीपिका (ज.टी.)– श्लोकार्थे श्रुतिसम्मतिं चाह– **तथा हीति** ।। **'कर्म'** इत्यावर्तनीयम् । तत्रैकं व्यस्तम् । परं समस्तम् ।। ननु **ज्ञानं ज्ञेयम्** इत्यनेन कथमुक्तशङ्कानिरासः? इत्यत आह– **अकर्तृत्वेऽपीति** ।। अपराधीनकर्तृत्वाभावेऽपि जीवस्य न तं प्रति विधिवैयर्थ्यम् । कुतः? 'इति हेतोः' इत्यन्वयः । विधिशब्देन तज्ज्ञानमुपलक्ष्यते । इच्छा इत्यनेन प्रयत्नोऽपि । उक्तकारणैरधिष्ठानादिभिः ।। अनेन ज्ञानं विधिविषयं ज्ञेयं च इच्छाप्रयत्नलक्षणम्, अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । परिज्ञाता सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितोऽस्ति । अतस्तं प्रति कर्मचोदनेत्यर्थः सूचितो भवति ।।

**भावबोधः** (र.टि.)– ननु प्रमाणे करणकर्त्रोर्द्वयोरेव ग्रहणम्, न तु कर्मणस्तृतीयस्येति कथं गीताद्वितीयार्धे सम्मतिरित्यत आह– **कर्मेत्यावर्तनीयमिति** ।।

भावदीपः (रा.टि.)– श्लोकार्धे सम्मतिलाभायाह– **कर्मेत्यावर्तनीयमिति** ।। **उक्तशङ्कानिरास इति** ।। एवं तर्हि 'न पुरुषमपेक्ष्य विधिः' इत्युक्तशङ्केत्यर्थः ।। **इत्यन्वय इति** ।। तस्यापि 'न प्रवृत्तिविधिवैयर्थ्यम्' इत्यनेनान्वयः ।। श्लोकार्थं निष्कृष्याह– **अनेनेति** ।। विधिभाष्येणेत्यर्थः ।।

**भावरत्नकोशः** (सु.टि.)– ननु श्रुतौ करणकर्त्रोः द्वयोरेवोक्तत्वात् 'त्रिविधः कर्मसङ्ग्रहः' इति श्लोकार्थे कथमियं सम्मतिः इत्यत आह– **कर्मेत्यावर्तनीयमिति** ।। तथा चोक्तार्थसम्मतित्वमुपपन्नमिति भावः । **उक्तशङ्का** 'एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वात् इति भाष्योक्तशङ्का । 'अकर्तृत्वमनुभवबाधितम् इत्यतो व्याचष्टे– **अपराधीनकर्तृत्वाभावेऽपीति** ।।

'जीवस्य' इति 'न तं प्रति' इति च शेषः । 'इति' इत्यनूद्य व्याख्याति– **इति हेतोरिति** ।। स्वरूपतो विधेः इच्छाद्युत्पादकत्वाननुभावादाह– **विधिशब्देनेति** ।। 'तज्ज्ञानम् ' इति वदन् विषयविषयिभावलक्षणं लक्षणाबीजसम्बन्धमभिसन्धत्ते । **प्रयत्नोऽपि** 'उपलक्ष्यते' इति वर्तते । तत्रापि कार्यकारणभावः सम्बन्ध इति भावः । **अनेन** 'विधिद्वारा' इत्यादिभाष्येण । गीतायां ज्ञेयपदेन विवक्षितान् भाष्यसूचितान् अर्थान् दर्शयति– **ज्ञेयं चेति** ।। **इच्छाप्रयत्नेति** ।। 'मदिष्टसाधनमिदं मया कार्यम्' इति ज्ञात्वा हि पुरुषः प्रयतत इति भावः ।

**भावदीपिका (श्री.टि.)**– ननु प्रमाणे करणकर्त्रोर्द्वयोरेव ग्रहणम्, न तु कर्मणस्तृतीयस्य । अतः कथं गीताद्वितीयार्धे सम्मतित्वेनैतत्प्रमाणोदाहरणम् इत्यत आह– **कर्मेतीति** ।। **व्यस्तमिति** ।। 'कर्म' इति पृथक्पदमित्यर्थः । **समस्तमिति** ।। 'कर्मकारण' इति समासप्राप्तपदमित्यर्थः । **उक्तशङ्केति** ।। 'एवं तर्हि' इत्युक्तशङ्केत्यर्थः ।। **अस्ति** यत इति शेषः । तं **प्रति** जीवं प्रति ।

**भावप्रकाशः (कृ.टि.)**– ननु श्रुतौ द्वयोरुक्तत्वात् कथं सम्मतिरित्यत आह– **कर्मेत्यावर्तनीयमिति** ।। **इच्छाप्रयत्नलक्षणमिति** ।। मदिष्टसाधनत्वादिदं मया कार्यमिति ज्ञात्वा प्रवृत्तेरिति भावः ।।

**प्रमेयदीपिका** (ज.टी.)– **एतदुक्तं भवति । नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम् । येन जीवं प्रति कर्मविधिवैयर्थ्यं स्यात् । तथासतीश्वरस्यापि विधिविषयत्वापातात् । किन्तु यस्य स्वसम्बन्धितया विधिज्ञानं, कर्म, तत्फलं चोद्दिश्येच्छा, तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं कर्मसम्बन्धः, फलभाक्त्वं, चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेदं समस्तं परमेश्वरप्रसादायत्तं जीव इति कथं न तं प्रति कर्मविधयः स्युरिति? एतत्सङ्ग्रहवाक्यमुत्तरवाक्यैर्विव्रियते । नन्वीश्वरश्चेत् प्रेरको जीवशरीरेऽभ्युपगतः, तदा तत्प्रसादादेवेच्छाप्रयत्नयोरुत्पादात् किं विधिज्ञानमङ्गीक्रियते? इत्यत आह– ईश्वरेति ।। इच्छति 'प्रयतते च' इति शेषः । अनेन विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्यैतद् विवृतं भवति ।।**

**भावदीपः (रा.टि.)**– ।। **तथासतीति** ।। अपराधीनकर्तृत्वस्यैव विषयत्वप्रयोजकत्वे सतीत्यर्थः ।। **विध्यपीति** ।।

तस्यापीत्यपेरर्थः ।। **कर्मसम्बन्धः** कर्मानुष्ठातृता ।। 'जीवे' इति सप्तम्यन्तम् ।। अनेनात्रापि विधिशब्दो विधिज्ञानपर इत्युक्तं भवति ।।

**भावरत्नकोशः (सु.टि.)–** ननु 'जीवो न विधिविषयो भवितुमर्हति अकर्तृत्वाद् घटवत्' इति परोत्प्रेक्षितानुमानस्य किं दूषणमुक्तम् इत्यतो भावमाह– **एतदुक्तं भवतीति** ।। स्वसम्बन्धितया 'सम्प्रतीदम् इष्टसाधनावबोधकम्' इत्येवं स्वाधिकारिकतया प्रत्येकं च तेषां विधिविषयताप्रयोजकत्वं ज्ञातव्यम् । तथा च स्वसम्बन्धितया विधिज्ञानाद्यभाववत्त्वम् उक्तानुमाने उपाधिरित्याशयः । **स्युरिति** ।। 'एतदुक्तं भवति' इति सम्बन्धः । विवरणप्रकारं दर्शयितुं शङ्कामुत्थापयति– **नन्वीश्वरश्चेदिति** ।। 'विधिज्ञानम् इति वदता 'विधिद्वारा' इति भाष्ये विधिशब्दो विधिविषयज्ञानपर इति विभावितं भवति । विधिज्ञानं निमित्तमात्रमिति भावेन भाष्ये एवकारः, तेनैव नियत इत्यपूर्तेः । भाविभाष्ये 'इच्छादिः' इति सन्निहितमध्याहरति– **इच्छतीति** ।। यदुक्तं 'विक्रियते' इति तदाह– **अनेनेति** ।।

**भावदीपिका (श्री.टि.)–** नन्वेवमपि कथमुक्तशङ्कानिरासः । 'अकर्तृत्वात्' इति तदुक्तहेतोर्दूषणानभिधानादित्यत आह– **एतदुक्तं भवतीति** ।। विधिज्ञानस्येश्वरेऽपि सत्त्वादाह– **यस्य स्वसम्बन्धितयेति** ।। 'अयं विधिर्मां प्रत्येव प्रवृत्तः' इत्येवंरूपेणेत्यर्थः । तथा च 'जीवो न विधिविषयः अकर्तृत्वात्' इत्यत्र यदि परतन्त्रकर्तृत्वाभावोऽभिप्रेतः तदाऽसिद्धिः । यदि च स्वतन्त्रकर्तृत्वाभावः, तदाऽप्रयोजकता । विध्यविषयेऽपीश्वरे प्रयोजकीभूतस्य स्वतन्त्रकर्तृत्वाभावस्याभावेन विध्यविषयत्वेऽस्याप्रयोजकत्वात् 'तस्मिन् सति अभवतस्तदप्रयोजकत्वात्' इति वचनादिति भावः । असाधारण्याच्च, तथा विरुद्धश्चेति नोक्तहेतुः साधीयानित्याशयः ।

**भावप्रकाशः (कृ.टि.)–** जीवस्य कर्तृत्वाद्विधिविषयत्वमयुक्तमित्यस्य किमेतावता दूषणमुक्तमित्यत आह– **एतदुक्तं भवतीति** ।। तथा चोक्तप्रयोगे स्वसम्बन्धितया विधिज्ञानाद्यभाव उपाधिरिति भावः । **यस्य स्वसम्बन्धितयेति** । प्रत्येकमेषां विधिविषयत्वे प्रयोजकता । एवमनेकं गीतोक्तं कारणमित्यग्रे वक्ष्यमाणत्वात् । तेन न वैयर्थ्यमिति बोध्यम् ।

## भाष्यम्

**यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् ।।**

**भावप्रदीपिका (प.टी.)**– जीवेच्छानन्तरमेवेशेन क्रियतेऽतस्तं प्रति विधिरित्यर्थः । इतश्च तं प्रति विधिरित्याह– **फलं चेति ।**

**प्रमेयदीपिका (ज.टी.)**– उक्तकारणैः कर्म भवतीत्युक्तम् । तेनाधिष्ठानादीनां स्वव्यापारे स्वातन्त्र्यं प्राप्तम् । तन्निरासार्थमाह– **यदि चेति ॥** ईश्वरेणैव कर्माधिष्ठानादीनि निमित्तमात्राणि कृत्वा कारितं भवति । अत्र णिचं प्रयुञ्जानस्य स्वातन्त्र्यमिति वक्ष्यमाणोऽभिप्रायः । कर्मद्वारा पुरुषार्थो भवतीति पुरुषार्थसाधने कर्मणां प्राधान्यं प्राप्तम् । अत आह– **फलं चेति ॥** ईश्वरेणैवेति वर्तते । यद्वा 'यदि च' इत्यादिना वाक्यद्वयेन विधिविषयतासिद्धये कर्मफलसम्बन्धस्य काकतालीयता निराक्रियते । इदं च नेश्वरमुक्तजडेषु विध्यविषयेष्वस्ति, किन्तु संसारिष्वेवेति भवति प्रयोजकम् ॥

**भावबोधः (र.टि.)**– ॥ **काकतालीयतेति** ॥ यदि च फलेच्छादिर्जायते, तर्ह्येवेश्वरेण कर्म कारितं, न तु विष्टिगृहीतवत् । यदि चेश्वरप्रेरणया संसारिणा कर्म कृतम्, तदैव फलं नियतमिति फलसम्बन्धस्य इच्छापूर्वककर्मान्वयव्यतिरेकानुविधायित्वोक्त्या तस्य तत्कारणतावधारणादिति भावः । **नेश्वरमुक्तजडेष्विति** ॥ जडे इच्छादित्रितयाभावात्, ईश्वरे मुक्तेषु च लीलया स्वेच्छया वा कर्मकरणसद्भावेऽपि फलेच्छादिजन्यकर्मनिबन्धनफलाभावात्, फलेच्छापूर्वककर्मजन्यफलसम्बन्धरूपं विशिष्टप्रयोजकं नास्तीत्यर्थः । अनेन अकर्तृत्वादित्यत्र यदि परतन्त्रकर्तृत्वाभावो विवक्षितः तदाऽसिद्धिः । यदि च स्वतन्त्रकर्तृत्वाभावो विवक्षितः तदाऽप्रयोजकता । विधिविषयत्वे अस्मदुक्तस्यैव प्रयोजकत्वेन स्वतन्त्रकर्तृरपीश्वरस्य विध्यविषयत्वेन स्वतन्त्रकर्तृत्वस्य तदप्रयोजकत्वादित्युक्तं भवति ॥

॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यश्रीरघूत्तमतीर्थकृते
श्रीमज्जयतीर्थश्रीचरणविरचितगीताभाष्यटीकाभावबोधे अष्टादशोऽध्यायः ॥

**भावदीपः (रा.टि.)**– ॥ **कर्म भवतीत्युक्तम्** इत्यर्थानुवादः । **जायते** इत्यत्र केन इत्याकाङ्क्षायामुक्तम्– **ईश्वरेणैवेति** ॥ कारितम् इत्यत्र विशेष्याकाङ्क्षायामुक्तं– **कर्मेति** ॥ अधिष्ठानादेरवैय्यर्थ्यायोक्तम्– **निमित्तमात्राणीति** ॥ **कारित**मित्युक्त्या प्रयोजककर्तृत्वमेवेति भ्रमनिरासायोक्तम्– **कर्तृत्वादिति** ॥ तर्हि कृतमिति वाच्यमित्यत आह– **अत्रेति** ॥

श्लोकः १८

जीवस्यापि कर्तृत्वमस्तीत्यभिप्राय इत्यर्थः ।। वेदानां वाक्यद्वयमुक्तविवरणपरं किन्तु विधि-विषयत्वे हेतुत्वेनोक्तो यः कर्मसम्बन्धः फलसम्बन्धश्च तद्वयं कर्तुर्जीवस्य निर्हेतुकमिति शङ्काव्यावृत्त्यर्थं प्राप्तमित्याह– **यद्वेति** ।। **काकतालीयतेति** ।। यादृच्छिकेत्यर्थः ।। विधिज्ञान-द्वारेच्छाप्रयत्नावुत्पाद्य जीवस्येश्वरः स्वयमेव कर्मसम्बन्धं फलसम्बन्धं च सम्पादयतीति काकतालीयता निरस्यत इत्यर्थः ।। **इदं चेति** ।। विधिविषयताया प्रयोजकभूतं स्वसम्बन्धितया विधिज्ञानोतेपन्नेच्छाप्रयत्नद्वारा ईश्वरकारितकर्मफलसम्बन्धवत्वमित्यर्थः ।। **संसारिष्वेव** इत्यनन्तरम् इतिशब्दो अध्याहार्यः ।। विवृतमेतत् चन्द्रिकायाम् 'जीवेपि विध्यविषयेभ्यः ईश्वर-जडमुक्तेभ्यो व्याहृतस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलसाधनेच्छायां साधन-विषयकृते अनुभवसिद्धत्वात्, तस्य ज्ञानादेः सम्मते त्वत् इत्यादिश्रितिभिरीशाधीनत्वेप्यस्वतनत्र-कर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभात्त्वं च युक्तम्' इति ।।

**वाक्यार्थप्रदीपः (पां.टि.)**– ।। **काकतालीयतेति** ।। यद्यपि समासाच्च तद्विषयादिति सूत्रेण इवार्थविषयात् समासात् इवार्थे छप्रत्ययेन निष्पादितः काकलालीयशब्दः उपमाद्वयगर्भः । तथाच काकतालयोरिव यादृच्छिको दस्युदेवदत्तयोः समागम इति एका समासार्थोपमा । तदानीमेव पतता तालेन काकस्येव दस्युना देवदत्तस्य वधः कृत इति अन्या तद्धितार्थोपमा चेति यत्रोपमाद्वयं तत्रैवास्य शब्दस्य सम्पूर्णार्थता । तथाप्यस्य यादृच्छिकसमागममात्रेप्यप्रचुरः प्रयोगो दृश्यत इति अयमपि प्रयोगो यादृच्छिकसमागममात्रविषय इति द्रष्टव्यम् ।।

**भावरत्नकोशः (सु.टि.)**– 'कर्म भवति' इत्यनुवदन् भाष्ये 'कर्म' इत्यावर्तनीयम् । तत्रैकं व्यस्तं तत्रापि भवतीत्यस्यान्वयः, परं समस्तम् इत्यभिसन्धत्ते । **कर्म** कारितमित्यन्वयः । तेषां वैयर्थ्यपरिहारायोक्तम्– **निमित्तमात्राणीति** ।। **णिचं** करोतेर्णिच्प्रत्यये निष्पन्नं कारितपदम् । **वक्ष्यमाणस्वातन्त्र्यं च** जडमपेक्ष्य इत्यत्र । **इत्यभिप्रायः** अस्ति जीवस्यापि ईश्वरायत्तं क्रियायां स्वातन्त्र्यलक्षणं कर्तृत्वमित्यभिप्रायः । **पुरुषार्थसाधने** तन्निष्पादने । नेदं वाक्यद्वयम् उक्तविवरणपरमतिस्वारस्यालाभात् । किन्तु विधिविषयत्वे प्रयोजकत्वेनोक्तो यः कर्मसम्बन्धः फलसम्बन्धश्च तद्वयं कर्मकर्तुः जीवस्य यादृच्छिकम् इति शङ्कानिरासार्थमेव प्रवृत्तमिति पक्षान्तरमाह– **यद्वेति** ।। विधिविषयतासिद्धये जीवस्य कर्मफलसम्बन्धस्य कर्मसम्बन्धस्य च काकातालीयतेति ।।

अत्र काकतालशब्दौ वृत्तिविषये स्वार्थनिष्ठक्रियावचनौ । ततश्च काकागमनमिव तालपतनमिव काकतालम् । 'समासाच्च तद्विषयात्' इति इवार्थविषयात् समासाद् अन्यस्मिन्निवार्थे छप्रत्ययविधानात् काकतालीयम् अवितर्कितोपनतम्, तस्य भावः तत्ता, काकतालीयता । लोके यथा काकस्यागमनं तालस्य च पतनम्, तेन च पतता तालेन काकस्य वधः काकतालीय इत्युच्यते, तथा अवितर्कितसम्भवत्वनिरासायेति तदर्थः । **इदं चेति** ।। वाक्यद्वयोक्तं विधिविषयताप्रयोजकीभूतं स्वसम्बन्धितया विधिज्ञानोत्पन्नेच्छाप्रयत्नद्वारक-स्वतन्त्रेश्वरकारितकर्मफलसम्बन्धवत्त्वरूपमित्यर्थः । स्पष्टमेतत् 'कर्ता शास्त्रार्थवत्त्वात्' इत्यधिकरणचन्द्रिकायाम् । जीवेऽपि विध्यविषयेभ्य ईशजडमुक्तेभ्यो व्यावृत्तस्य स्वसम्बन्धितया विधिज्ञानस्य, तज्जन्यायाः फले साधने चेच्छायाः, साधनविषयकृतेः स्वानुभवसिद्धत्वात् । तस्य च ज्ञानादेः 'न ऋते त्वत्' इत्यादिश्रुतिभिरीश्वराधीनत्वेऽपि अस्वतन्त्रकर्तृत्वमात्रेण विधि-विपयत्वं कर्मफलभाक्त्वं च युक्तमिति ।

**भावदीपिका (श्री.टि.)– ।। स्वव्यापारे** कर्मजननरूपे व्यापारे । **णिचमिति** ।। 'ईश्वरेण कर्म कारितम्' इत्युक्त्या जीवस्यापि कर्तृत्वप्रतीतेरिति भावः । **काकतालीयतेति** ।। 'दैवात् कर्म कृतम्, अनेन फलमप्यकस्माज्जातम्' इति यादृच्छिकसंवादितेत्यर्थः । 'समासाच्च तद्विषयात्' इत्यनेन इवार्थविषयात् काकतालरूपसमासपदाद् अन्यस्मिन् इवार्थे छप्रत्यये तस्य ईयादेशे च सति 'काकातालीयम्' इति रूपनिष्पत्तिः । काकतालशब्दौ काकतालसमवेत-क्रियावाचिनौ । काकस्यागमनं यादृच्छिकं तालस्य च पतनम्, तेन पतता तालेन काकस्य वधः । तथा च काकागमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयमिति विग्रहः । काकतालादिशब्दयोरुक्तार्थे समासश्चास्मादेव ज्ञापकात् । यथाऽहुः– 'इवार्थे काकतालाद्याः समासाः स्युरमी इति । ज्ञाप्यतेऽनेन योगेन प्रत्ययश्च विधीयते' इति ।

यत्तु खण्डनटीकाकारेणोक्तम् – परिणततालपतनकाले काकोऽपि तद्वृक्षमाश्रयते, तत्र काकयोगस्य तालपतनेऽन्वयव्यतिरेकविरहाद् 'यादृच्छिकः काकयोग इति काकतालीयम्' इत्युच्यत इति तद् उक्तव्याकरणविध्यज्ञानमूलम् इत्युपेक्षणीयम् इत्यस्मादाचार्यचरणविरचित-युक्तिपादीयसुधाटिप्पण्यनुसारेणालोचनीयम् । **नेश्वरमुक्तजडेष्विति** ।। जडे इच्छादित्रितया-भावाद्, ईश्वरे मुक्तेषु च लीलया स्वेच्छया वा कर्मकरणसद्भावेऽपि फलेछादिजन्यकर्मनिबन्धन-फलाभावात् फलेच्छापूर्वककर्मजन्यफलसम्बन्धरूपविशिष्टविधिविषयत्वप्रयोजकं नास्तीत्यर्थः ।

श्लोकः १८

**भावप्रकाशः (कृ.टि.)**– ननु कृतमित्यनुक्त्वा कारितमिति णिचूप्रयोगः किमर्थमित्यत आह– **अत्र णिचमिति ।। वक्ष्यमाणेति ।।** स्वातन्त्र्यं च जडमपेक्ष्येत्यनेनेति शेषः । नन्वेवं सत्येवशब्दस्य व्यस्तान्वयो नियतपदवैयर्थ्यं चेत्यत आह– **यद्वेति ।। कर्मफलसम्बन्धस्येति ।।** कर्मसम्बन्धस्य फलसम्बन्धस्य चेत्यर्थः । **काकतालीयतेति** । अतर्कितोपनतत्वमित्यर्थः । अत्र काकतालशब्दौ तदुभयनिष्ठक्रियार्थौ । ततश्च काकागमनमिव तालपतनमिव काकतालम् । समासाच्च तद्विषयादिति ज्ञापकादिवार्थेति समासः । काकतालमिव काकतालीयम् । अन्यस्मिन्निवार्थे छः । समासाच्च तद्विषयादितीवार्थविषयात् समासाद् अन्यस्मिन्निवार्थे छप्रत्ययविधानात् । तस्य भावः । काकतालीयता । यथा खलु काकस्यागमनं तालस्य च पतनं तेन च पतता तालेन काकस्य वधः । इदं च सर्वं यादृच्छिकम् , एवं चैत्रस्यागमनं चोरस्य समागमः । तैश्च तद्वध इत्यतश्चैत्रवधः काकतालीय इत्युच्यते । सेयं काकतालीयता निराक्रियत इत्यर्थः । कथं काकतालीयता निराकृतेत्यतो वाक्यद्वयाभिप्रायमाह– **इदश्चेति ।।** पूर्ववाक्ये एवशब्देन कर्मसम्बन्धस्य द्वितीयवाक्ये नियतपदेन फलभाक्त्वस्य जन्येच्छाद्याश्रयजीवमात्रवृत्तित्वोक्तेरिति भावः । **नेश्वरेति ।।** ईश्वरमुक्तयोरिच्छादिसत्वेऽपि जन्यत्वविशेषणाभावाद् जडे इच्छादिरूपविशेष्याभावादिति भावः । एवमेकं गीतोक्तकारणमिति क्वचित् पाठस्तत्र समुदायापेक्षयैकवचनम् । अनेकमिति पाठस्तु सुगमः ।

## भाष्यम्

**वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडम् अपेक्ष्यैवेति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ।। १८ ।।**

भावप्रदीपिका (प.टी.)– ननु जीवस्य कर्तृत्वे सति तस्येश्वरकारित्वं स्यात् । तस्य फलं च स्यात् । तदभावात् कथमेतत् ? इत्यत आह– **वस्तुत इति** । ननु तथाऽपि घटादिवदस्वातन्त्र्यात् न तत्र तं प्रति विधिरित्यत आह– **स्वातन्त्र्येति** । नन्वत्राप्यपूर्वेऽर्थे प्रमाणमवश्यं वाच्यमित्यत आह– **सर्वं चेति** । अनुभवेनोक्तप्रमाणैश्च ।। १८ ।।

**प्रमेयदीपिका** (ज.टी.)– एवमेकं गीतोक्तं कारणमुक्त्वा भाष्यकारः कारणान्तरं चाह– **वस्तुत इति** ।। वस्तुतः परमार्थतः । आभिमानिकम् अहङ्कारकारितं भ्रान्तिप्रतीतम् । तस्य जीवस्य एव इत्यवधारणेनास्य जीवं प्रति विधिप्रवृत्तौ प्रयोजकत्वं समर्थयते । परमेश्वरकृतासु क्रियासु स्वस्य स्वातन्त्र्यं मन्यमानस्यापराधीनो विधिबन्धलक्षणो दण्ड इति भावः ।।

प्रकारान्तरमाह– **स्वातन्त्र्यं चेति** ।। 'तस्य'इति वर्तते । स्यादिदं प्रवृत्तिविधिवैयर्थ्यं यदि जीवस्य क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं सर्वथा न स्यात् । न चैवम् । ईश्वरायत्तस्य तस्याङ्गीकारात् । अपराधीनापेक्षया तदभावोक्तेः । न चैवं जडतौल्यमित्याह– **जडमपेक्ष्येति** ।। 'अधिकम्' इति शेषः । जडं हि तदा परकृतेन नोदनादिना क्रियावद्भवति । न त्वागन्तुककारणमन्तरेण स्वेच्छया । जीवस्त्वनादिसिद्धया परमेश्वरप्रसादायत्तया सत्तातुल्यया क्रियाशक्त्या कर्तेति युक्तस्तं प्रति कर्मविधिरिति ।।

नन्वेतत् सर्वं कुतः प्रमाणात् प्रतिपत्तव्यम्? इत्यत आह– **सर्वं चेति** ।। अनुभवेनोक्तप्रमाणैश्च । 'विधिज्ञाने सतीच्छोत्पत्तिः' इत्यादिकमनुभवसिद्धम् । ईश्वरप्रसादात् इत्यादिकं तु 'यथा नियुक्तोऽस्मि' इत्याद्युदाहृतागमसिद्धम् ।। पृथक् पुनः ।। १८ ।।

भावदीपः (रा.टि.)– ।। **गीतोक्तमिति** ।। 'ज्ञानं ज्ञेयम्' इति गीतोक्तमित्यर्थः ।। **समर्थयते** इत्युक्तं व्यनक्ति– **परमेश्वरेति** ।। कथमनेन विधिविषयत्वप्रकारोपादनम् इत्यत आह– **स्यादिदमित्यादिना** ।। अधिकम् इत्युक्तेः कृत्यमाह– **जडं हीति** ।। विक्रिया चानुभवरीत्युक्त्या विक्रियारूपावान्तरक्रियायामस्ति कर्तृत्वं तस्येति सूचितम् ।। अनुभवादिकं व्यनक्ति– **विधिज्ञाने सतीत्यादिना** ।। **उदाहृतेति** ।। 'यथा नियुक्तोऽस्मि तथा वहामि' इति पञ्चरात्रागमेत्यर्थः ।। पृथक् इत्यनुवादः, पुनरिति व्याख्या ।। १८ ।।

**भावरत्नकोशः** (सु.टि.)– 'वस्तुतः स्वरूपतः' इति प्रतीतिनिरासाय व्याचष्टे– **परमार्थत इति** ।। परमार्थतः कर्तृत्वाभावेऽभिमानमात्रेण कथं कर्तृत्वं स्यात् इत्यत आभिमानिकत्वं व्याचष्टे– **अहङ्कारकारकारितभ्रान्तिप्रतीतमिति** ।। 'तस्य' इत्यस्यार्थः– **जीवस्येति** ।। **अस्य** अहङ्कारकारकारितभ्रान्तिप्रतीतकर्तृत्वस्य । समर्थनप्रकारं दर्शयति– **परमेश्वरकृतास्विति** ।। **प्रवृत्तिविधीति** ।। प्रवृत्त्यनुकूलो विधिः प्रवृत्तिविधिः– **प्रवर्तकविधिरित्यर्थः** ।

श्लोकः १८

'अकर्तृत्वेऽपि' इत्याद्युक्तेर्गतिमाह– **अपराधीनेति** ।। अपराधीनकर्तृत्वापेक्षया । **नोदनादिना** नोदनेन अभिघातेन च । 'शब्दाजनकसंयोगो नोदनम्, 'स्पर्शवद्वेगवद्द्रव्यसंयोगोऽभिघातः' इति पदार्थविदः । **क्रियाशक्तेः** कर्मकरणसामर्थ्यस्य । अनादिसिद्धत्वोपपादनायोक्तम्– **सत्तातुल्यया स्वरूपसत्तातुल्ययेति** ।

भावप्रदीपिकायां तु ननु जीवस्याकर्तृत्वे पुरुषार्थाभावात् कथं तं प्रति विधिप्रवृत्तिः इत्यत आह– **अकर्तृत्वेऽपीति** ।। तर्हि विधिनियतत्वमेव, नेश्वराधीनत्वं जीवस्य इत्यत आह– **ईश्वरेति** ।। ननु ईषन्मात्रं जीवस्य कर्तृत्वं चेन्नास्ति, तर्हि न तं प्रति विधिप्रवृत्तिः स्यात् इत्यत आह– **यदि चेति** ।। जीवेच्छादिकमेवेश्वरेण क्रियते, अतस्तं प्रति विधिप्रवृत्तिः । इतश्च तं प्रति विधिरित्याह– **फलं चेति** ।। ननु जीवस्य कर्तृत्वे सति तस्येश्वरकारितत्वं स्यात् , तस्य फलं च स्यात् । तदभावात् कथमतत् इत्यत आह– **वस्तुत इति** ।। ननु तर्हि घटादिवत् अस्वातन्त्र्यात् कथं तं प्रति कर्मविधिः इत्यत आह स्वातन्त्र्यं चेति' इति भाष्य-वाक्यानि अवतारितानि । 'अनुभवेनोक्तानि प्रमाणानि' इति प्रतीतिनिरासायाह– **अनुभवेन उक्तप्रमाणैश्चेति** ।। द्वन्द्वोऽत्र समासश्चेति हृदयम् । **विधिज्ञाने सति** विध्यर्थेष्टसाधनताज्ञाने सति । 'इच्छोत्पत्त्यादिकम् इत्यत्र 'प्रयत्नोत्पत्तिः' आदिपदार्थः । **इत्याद्युदाहृतेति** ।।

'भावाभावावपि जानन् गरीयो जानामि श्रेयो न तु तत्करोमि ।
आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि ।।'

इति पञ्चदशाध्यायभाष्योदाहृतागमसिद्धमित्यर्थः । उक्तप्रमाणसिद्धत्वं विलक्षणप्रमाणानुक्तौ न हेतुः इत्यतः पृथक्छब्दस्य विवक्षितमर्थमाह– **पृथक् पुनरिति** ।।

**गीताक्षरार्थस्तु**- ननु यदि जीवो न कर्मणां कारणं तर्हि श्रौतः स्मार्तश्च विधिः तं प्रति न प्रवर्तते । ततश्च ईश्वरमुक्तजडानाम् अतदर्हत्वात् तद्वैयर्थ्यप्रसङ्ग इत्यत इदमुच्यते– **ज्ञानमिति** ।। ज्ञानं विधिविषयं, ज्ञेयं च इच्छाप्रयत्नलक्षणम् ,अधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च परिज्ञाता सर्वज्ञ ईश्वरश्च सर्वप्रेरको जीवे सन्निहितः । अतस्तं प्रति त्रिविधा कर्मचोदना कर्मविधिः प्रवर्तते । अत्र कर्मविधिनिमित्तानां ज्ञानज्ञेयपरिज्ञातॄणां त्रिविधत्वात् निमित्तनैमित्तिक-भावेनाभेदोपचार इति 'त्रिविधा कर्मचोदना' इत्युक्तिः ।

एतदुक्तं भवति । नापराधीनकर्तृत्वं विधिविषयत्वे प्रयोजकम्, येन जीवं प्रति कर्मविधि-वैयर्थ्यं स्यात् । तथा सतीश्वरस्यापि विधिविषयत्वापातात् । किन्तु यस्य स्वसम्बन्धितया विधिज्ञानं कर्म तत्फलं चोद्दिश्य इच्छा तदनुगुणश्च प्रयत्नः, अधिष्ठानादिसन्निधानं कर्मसम्बन्धः फलभाक्त्वं चास्ति तं प्रति कर्मविधयः प्रवर्तन्ते । अस्ति चेद् समस्तं परमेश्वरप्रसादायत्तं जीवे इति तं प्रति कर्मविधयः स्युरिति पूर्वोक्तानि कर्मकारणानि सङ्क्षिप्योच्यन्ते– **करणमिति** ।। करणम् इन्द्रियम् स्रुवादि कर्म हस्तादिक्रियारूपा चेष्टा कर्ता विष्णुः इति त्रिविधः कर्मसङ्ग्रहः । अत्र कर्मशब्देन कर्मकारणानि लक्ष्यन्ते, तेषां सङ्ग्रहः सङ्क्षेपः । यद्यपि कर्मकारणानि पञ्चोक्तानि । तथाप्यधिष्ठानस्य दैवपदोक्तादृष्टस्य च करण एवान्तर्भावविवक्षया 'त्रिविधः कर्मकारणसङ्ग्रहः' इत्युक्तिः इत्याकरे स्फुटम् ।। १८ ।।

**भावदीपिका (श्री.टि.)– ।। कारणमिति ।।** जीवस्य विधिविषयत्वे फलेच्छापूर्वक-कर्मजन्यफलसम्बन्धरूपं कारणमित्यर्थः । **अस्य** आभिमानिककर्तृत्वस्य । प्रयोजकत्वसमर्थन-प्रकारमेव दर्शयति– **परमेश्वरेति ।। क्रियास्वातन्त्र्येति ।।** 'स्वतन्त्रः कर्ता' इति स्मरणादिति भावः । तर्हि पूर्वं कर्तृत्वाभावप्रतिपादनेन विरोधः इत्यत आह– **अपराधीनेति ।। जडतौल्यमिति ।।** क्रियास्वातन्त्र्यलक्षणं कर्तृत्वं 'वृक्षस्तिष्ठति' इत्यादिप्रयोगाद् जडेऽप्यस्तीति जडतौल्यमित्यर्थः । तथा च जीवं प्रति विधिप्रवृत्तौ एतादृशकर्तृत्वस्य प्रयोजकत्वे जडं प्रत्यपि तत्प्रवृत्तिः स्यादिति भावः । 'नोदनादिना' इत्यत्रादिपदेनाभिघातग्रहणम् । द्रव्यद्रव्यसम्बन्धो नोदना । स्पर्शवद्वेगवद्द्रव्यसम्बन्धोऽभिघात इति द्रष्टव्यम् । **सत्तातुल्ययेति** ।। स्वरूप-सत्तातुल्ययेत्यर्थः । इदं च क्रियाशक्तेरनादिसिद्धत्वोपपादनायेति ज्ञातव्यम् । **क्रियाशक्त्या** तत्करणशक्त्या । प्रमाणस्यानुभवोक्तत्वप्रतीतिनिवारणायाह– **उक्तप्रमाणैश्चेति** ।। १८ ।।

**भावप्रकाशः (कृ.टि.)–** ननु वस्तुत इति न सिद्धान्तप्रतिज्ञा । अकर्तृत्वेऽपीत्य-स्याभिमानिकं कर्तृत्वमित्यनेन पुनरुक्तेः । अकर्तृत्वे इत्यनेनेवाभिमानिकमित्यनेनापि कल्पित-त्वोक्त्या कर्तृत्वाभावबोधनादित्यत आह– **परमार्थत इति** ।। नन्वाभिमानिकत्वं नाम अभिमाननिर्वृतत्वम् । तथा च जन्यस्यापि घटवत् सत्यत्वोपपत्त्या परमार्थतोऽकर्तृत्वोक्ति-व्याघात इत्यत आह– **अहङ्कारकारितेति** ।। ननु भ्रान्तिप्रतीतस्यात्यन्तासत्वात् कथं विधिविषयत्वे निमित्ततेत्यत आह– **परमेश्वरेति** ।। कर्तृत्वभ्रान्तिरेव विधिनिमित्तम् । तयो-रपराधदण्डात्मकत्वाच्च निमित्तनैमित्तिकभावोपपत्तिरिति भावः । **प्रवृत्तिविधीति** ।। विधि-

श्लोकः १९

प्रवृत्तीत्यर्थः । विधिप्रवृत्तावित्युक्तत्वादिति बोध्यम् । **नोदादिनेति** ।। शब्दाजनकसंयोगः नोदः । आदिपदेन स्पर्शवद्वेगवद्द्रव्यसंयोगाख्याभिघातग्रहः । ननूक्तप्रमाणसिद्धत्वस्य पुनरुक्तिप्रसङ्गेनोक्तप्रमाणस्यानुक्तौ हेतुत्वेऽपि न विलक्षणप्रमाणानुक्तौ हेतुत्वमित्यत आह– **पृथक् पुनरिति** ।। १८ ।।

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ।। १९ ।।**

## भाष्यम्

**पुनः साधनप्रथनाय गुणभेदानाह– ज्ञानमित्यादिना ।। गुणसङ्ख्याने गुणगणनप्रकरणे ।। १९ ।।**

भावप्रदीपिका (प.टी.)– उत्तरप्रघट्टकमवतारयति– **पुनरिति** । गुणसङ्ख्यानपदेन न साङ्ख्यशास्त्रमित्यत आह– **सर्वं चेति** ।। १९ ।।

प्रमेयदीपिका (ज.टी.)– ज्ञानं कर्म इत्यादेः प्रकृतोपयोगाप्रतीतेस्तं दर्शयन्नाह– **पुनरिति** ।। साधनप्रथनाय मोक्षसाधनप्रपञ्चनाय । **गुणभेदानिति** । गुणनिमित्तान् ज्ञानादिभेदान् । सात्त्विकं ज्ञानादिकं मोक्षसाधनम् । मोक्षसाधनप्रपञ्चनात् प्रागपि गुणभेदानामुक्तत्वात् पुनः इत्युक्तम् । गुणसङ्ख्यानशब्देन कापिलं शास्त्रमुच्यते इति भावेनाऽह– **गुणेति** ।। तच्च वैदिकमभिप्रेतम् ।। १९ ।।

भावदीपः (रा.टि.)– तावता कथं मोक्षसाधनप्रपञ्चनम्? इत्यत आह– **सात्त्विकं हीति** ।। **प्रागपीति** ।। पूर्वाध्यायादौ ।। १९ ।।

भावरत्नकोशः (सु.टि.)– ।। **प्रकृतेति** ।। ज्ञानसाधनस्य सङ्क्षेपेणोपसंहारो ह्येतदध्यायार्थतया प्रकृतः, तत्रोपायोगाप्रतीतेः इत्यर्थः । 'साधनप्रथनाय' इत्यस्यार्थः– **मोक्षसाधनप्रपञ्चनायेति** ।। मोक्षसाधनज्ञानादिप्रपञ्चनायेत्यर्थः । सत्त्वादिगुणभेदानाम् अत्रावचनादाह– **गुणनिमित्तानिति** ।। ज्ञानादिभेदान् ज्ञानकर्मकर्तॄणां भेदान् । गुणनिमित्तज्ञानादिभेदकथनेन कथं मोक्षसाधनप्रपञ्चनम् इत्यत आह– **सात्त्विकं हीति** ।। **प्रागपीति** ।।

'गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन इति सप्तदशे गुणनिमित्तकपुमर्थसाधनानामुक्तत्वादित्यर्थः । दुष्टकापिलशास्त्रस्य निन्दितत्वादाह– **तच्चेति** ।। गुणगणनप्रकरणं चेह वैदिककापिलतन्त्रं विवक्षितम् । अत एव गुणसङ्ख्याने परमसाङ्ख्यशास्त्रे' इति तात्पर्यनिर्णय इति भावः ।।

**गीताक्षरार्थस्तु** – सात्त्विकज्ञानादिरूपमोक्षसाधनम् अनुष्ठानाय प्रपञ्चयितुं पुनः प्रतिज्ञापूर्वं सत्त्वादिगुणनिमित्ता ज्ञानभेदा उच्यन्ते– **ज्ञानमित्यादिना** ।। गुणभेदतः सत्त्वादिगुणभेदेन ज्ञानं कर्म च कर्ता च त्रिधा गुणसङ्ख्याने गुणाः सङ्ख्यायन्ते गण्यन्तेऽस्मिन्निति गुणसङ्ख्यानं गुणगणनप्रकरणं– परमसाङ्ख्यशास्त्रम् अस्मिन् प्रोच्यते । तान्यपि तानि च यथावत् तत्त्वं शृणु श्रुत्वा तत्र निष्ठां कुरु ।। १९ ।।

**भावदीपिका** (श्री.टि.)– नन्वत्राध्याये साधनं संक्षिप्योच्यते, अतो ज्ञानादिभेदकथन-मसङ्गतम् अत आह– **सात्त्विकं हीति** ।।

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ।। २० ।।**

## भाष्यम्

**एकं भावं विष्णुम् ।। २० ।।**

भावप्रदीपिका (प.टी.)– सर्वभूतेषु इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **एकमिति ।।** २० ।।

**प्रमेयदीपिका** (ज.टी.)– एकं भावम् इति सामान्येनोक्तम् । **कोऽसावेको भावः इत्याकाङ्क्षायामाह– एकमिति ।।** २० ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं तत्र प्रतिज्ञातं ज्ञानत्रैविध्यमुच्यते– **सर्वभूतेष्वित्यादिना** ।। विभक्तेषु परस्परम्, परमेश्वराच्च भिन्नेषु सर्वभूतेषु चेतनाचेतनेषु अविभक्तं स्वगतभेदवर्जितम्, तेषां व्ययेऽपि अव्ययम् । एकं भावं सर्वोत्तमं पदार्थं विष्णुं येन ज्ञानेन ईक्षते विषयीकरोति तज्ज्ञानं सात्त्विकं विद्धि इति विष्णुतत्त्वविनिर्णयटीका ।। २० ।।

श्लोकः २१-२३

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ।। २१ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यत्तु सर्वेषु भूतेषु जीवेषु पृथक्त्वेन भिन्नत्वेन ज्ञानम् यच्च नानाभावान् नानाप्रकारान् पदार्थान्, जडानिति यावत् पृथग्विधान् प्रत्येकं भिन्नस्वरूपान् वेत्ति विषयीकरोति तज्ज्ञानं राजसं विद्धि ।। विष्णोरन्यस्य प्रपञ्चस्य याथात्म्यम् अवगाहमानं सर्वभूतेषु विद्यमानं विष्णुमेकत्वेन अनवगाहमानं भगवत्स्वरूपं सन्दिग्धतयाऽवगाहमानं च ज्ञानं राजसमिति यावत् । 'सर्वभूतेषु पृथक्त्वेन यज्ज्ञानम् इत्यस्य व्याख्या नानानाभावान् इत्यादि तु उत्तरप्रस्थाने ।। २१ ।।

**यत् तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ।। २२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु यत्त्विति** ।। अत्र कार्यशब्दो जीवपरः । स्वरूपतः शुद्धस्य जीवस्य संसारित्वेन, संसारिणो मुक्तत्वेन, मुक्तियोग्यत्वेन नित्यसंसारित्वेन तमोयोग्यत्वेन चेत्यादिनानाप्रकारेण कर्तुं योग्यत्वात् । कृत्स्नशब्दश्चाकार्यत्वादिनानाप्रकारगुणपूर्णब्रह्मवचनः, अखिलजगत्परश्च । एकस्मिन् कार्ये जीवे कृत्स्नवत् ब्रह्मणीव सक्तम्, ब्रह्म यथा स्वात्मानं 'ब्रह्म' इति विषयीकरोति तथा विषयीकुर्वत्, जीवे ब्रह्माभेदमवगाहमानमिति यावत् । तथा एकस्मिन् कार्ये जीवे कृत्स्नवत् अखिले जगतीव सक्तं जीवं जगदात्मकत्वेन विपयीकुर्वदिति यावत् । तथा एकस्मिन् कार्ये जीवे कृत्स्नवत् अखिले जगतीव सक्तं एकजीवकल्पितम् अखिलं जगत् इति विषयीकुर्वदिति यावत् । यत् ज्ञानम् इति त्रेधाऽर्थः । अहैतुकं स्वगोचरेऽर्थे वेदाद्यनुकूलयुक्तिरहितम् अतत्त्वार्थवत् न तत्त्वम् अनारोपितं रूपं यस्य स अतत्त्वः, स चासौ अर्थश्च, तद्वत् । यथा स्थिताकराद् विपरीताकारावगाहि सदसद्वैलक्षण्याद्यविद्यमानाकारकल्पनायुक्तमिति यावत् । अल्पम् अधिष्ठानादिमात्रविषयकाल्पसम्यग्ज्ञानयुक्तं तद् ज्ञानं तामसम् । अत्र विशेष उत्तरप्रस्थानतोऽवगन्तव्यः ।। २२ ।।

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ।। २३ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु** गुणभेदेन कर्मत्रैविध्यमुच्यते– **नियतमित्यादिना** ।। विष्णोः सर्वोत्तमत्वादिज्ञानपूर्वकं तद्भक्त्या तदर्पणबुद्ध्या क्रियमाणं स्ववर्णाश्रमोचितं कर्म नियतम् अत्र गृह्यते । सङ्गरहितं कर्तृत्वासक्तिवर्जितम् । अरागद्वेषतः कृतं पुत्रकीर्त्यादिरागेण शत्रुद्वेषेण वा यत्कृतं न भवति तत्तथा, फलं प्रातुमिच्छतीति फलप्रेप्सुः, न फलप्रेप्सुः, तेन फलाभिसन्धिहीनेन यत् कृतं कर्म तत सात्त्विकमुच्यते ।। २३ ।।

**यत् तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ।। २४ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु यत्तु कामेति** ।। तुशब्दः पूर्वस्माद् विशेषद्योतनार्थः । यत्तु कामेप्सुना काम्यत इति कामः फलम्, तत् प्राप्तुमिच्छता साहङ्कारेण कर्तृत्वाभिमानवता, वाशब्दः चशब्दार्थः । क्रियते यच्च पुनर्बहुलायासं बहुवित्तव्ययादिनिबन्धनमानसादिक्लेशयुक्तं कर्म तद्राजसमुदाहृतम् ।। २४ ।।

**अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ।। २५ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु अनुबन्धमिति** ।। अनुबध्यत इति अनुबन्धः । तत् पश्चाद्भावि शुभाशुभं क्षयं वित्तस्य, हिंसां परपीडां पौरुषं पुरुषसामर्थ्यं च अनवेक्ष्य अपर्यालोच्य मोहाद् 'अहमेव कर्ता' इति मिथ्याज्ञानाद् यत् कर्मारभ्यते तत्तामसमुच्यते ।। २५ ।।

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ।। २६ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु** अत्र गुणभेदकृतकर्तृत्रैविध्यमुच्यते– **मुक्तसङ्ग इत्यादिभिस्त्रिभिः** ।। मुक्तसङ्गः परित्यक्तः फलस्नेहो येन स तथा । अनहंवादी सर्वस्य स्वगतकर्तृत्वादेः भगवदधीनत्वनिश्चयादेव 'अहं कर्ता' इति वेदितुं शीलं यस्य नास्ति स तथोच्यते । धृतिः कर्मण्यवर्जनीयदुःखसहनम्, उत्साहः उन्नाहः, ताभ्यां समन्वितः सिद्ध्य-

श्लोकः २७,२८
सिद्ध्योः कर्मफलस्य सिद्धौ असिद्धौ च निर्विकारः हर्ष विषादलक्षणविकाररहितो यः कर्ता कर्मणः स सात्त्विक उच्यते ।। २६ ।।

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकार्तितः ।। २७ ।।**

भावरत्नकोशः (सु.टि.)– रागीति ।। गीताक्षरार्थस्तु रागी विषयाभिलाषवान् कीर्त्यादिकामो वा कर्मफलप्रेप्सुः उद्दिष्टकर्मफलप्राप्तीच्छावान् लुब्धः कमपिक्षितद्रव्यव्यये लोभयुक्तः, परद्रव्येषु सञ्जाततृष्णः, तीर्थादौ च द्रव्यापरित्यागीति आहुः । हिंसात्मकः परपीडा-स्वभावः अशुचिः बाह्याभ्यन्तरशौचरहितः हर्षशोकान्वितः इष्टप्राप्तौ हर्षः, अनिष्टप्राप्तौ इष्टवियोगे च शोकः, ताभ्यां समन्वितो यः कर्ता कर्मणः स राजसः परिकार्तितः अभियुक्तैः ।। २७ ।।

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ।। २८ ।।**

## भाष्यम्

**परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री । 'परेण यः कृतो दोषः दीर्घकालकृतोऽपि वा । यस्तस्य सूचको दोषाद्दीर्घसूत्री स उच्यते' इत्यभिधानात् ।। २८ ।।**

भावप्रदीपिका (प.टी.)– दीर्घसूत्री यथा तामसो भवति तथा तत्पदं व्याचष्टे– **परेति ।। २८।।**

प्रमेयदीपिका (ज.टी.)– दीर्घसूत्रित्वं कथं तामसत्वहेतुः? इत्यतः **सप्रमाणकं व्याचष्टे– परेति ।।** दीर्घकालकृतं चिरातीतकालकृतम् । अनुचितं वचनायोग्यम् । परोपद्रवहेतुत्वात् दोषात् मात्सर्यादिः ।।

भावदीपः (रा.टि.)– ननु बहुकालकृतस्यात्याज्यतार्थवचनयोग्यत्वेन कथमनुचितत्व-मित्यत आह– चिरातीतकृतमिति ।। दोषादिति प्रमाणस्यानुवादः, 'मात्सर्यादिः' इति व्याख्या ।। २८ ।।

**भावरत्नकोशः (सु.टि.)– ।। दीर्घसूत्रत्वम्** 'विषादी दीर्घसूत्री' इति गीतोक्तम् । ननु यदा कदाचित्काले कृतोऽपि दोषो दीर्घकालकृत एव, सर्वदा कालस्य सत्त्वेन तद्दीर्घत्वस्य सदातनत्वात् । तत्किमुच्यते 'दीर्घकालम्' इत्यतोऽत्र विवक्षितं कालस्य दीर्घत्वं व्याचष्टे– **चिरेति** ।। चिरातीतकालकृतमित्यर्थः । सूचनायोग्यत्वमुपपादयति– **परेति** ।। 'दोषात्' इत्यभिधानस्य पदानुवादः 'मात्सर्यात्' इति व्याख्या । 'न मद्वशोऽसौ' इति चित्ततोदो मात्सर्यम् । आदिशब्देन असूयादिग्रहणम् ।।

**गीताक्षरार्थस्तु अयुक्त इति ।।** अयुक्तो भगवदर्पणादियोगरहितः, 'भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतः...' उच्यते । स्तब्धो नाम असम्भावनया क्वाप्यनम्रः, शठो गूढद्वेषी, नैकृतिको नीचकर्मा, अलसः प्राप्तकाले कर्मण्युदासीनः , विषादी अवसादन-शीलः, सर्वव्यापारोपरमहेतुमनोदौर्बल्यशील इति स्वामिनः । उपद्रवहेतुत्वात् सूचनायोग्यं चिरातीतकृतं परकृतं दोषं यः सूचयति स दीर्घसूत्री एतादृशश्च कर्ता तामस उच्यते प्राज्ञैः ।। २८ ।।

**भावदीपिका (श्री.टि.)**– कालस्य दीर्घत्वं नाम कीदृशम् इत्यत आह– **चिरातीतेति** ।। २८ ।।

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ।। २९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु**- इदानीं बुद्धेर्धृतेश्च गुणकृतो भेदः श्रावयितुः प्रतिज्ञायते– **बुद्धेरिति** ।। धनञ्जय अर्जुनो हि दिग्विजयकाले प्रभूतं धनं जितवान्, तेनासौ धनञ्जयः, तत्सम्बुद्धिः । बुद्धेः धृतेश्च गुणतः सत्त्वादिगुणतः प्राप्तं त्रिविधं भेदम् अशेषेण निरवशेषतः यथावदिति यावत् पृथक्त्वेन विभागेन मयैव प्रोच्यमाणं शृणु इति ।। २९ ।।

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ।। ३० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु**- प्रतिज्ञातमुच्यते– **प्रवृत्तिमित्यादिभि-स्त्रिभिः** । प्रवृत्तिं संसारप्रवृत्तिहेतुभूतं धर्मं निवृत्तिं तन्निवृत्तिहेतुभूतं भागवतधर्मं कार्याकार्ये

श्लोकः ३१,३२

कर्तव्याकर्तव्ये भयाभये कार्याकार्यनिबन्धनौ अर्थानर्थौ बन्धं मोक्षं तदतिप्रकारं च या बुद्धिः वेत्ति जानाति, अवान्तरक्रियास्वातन्त्र्यविवक्षया 'वेत्ति इत्युक्तिः विषयीकरोतीत्यर्थः, सा सात्त्विकी ॥ ३० ॥

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**

## भाष्यम्

**यथार्थत्वनियमाभावे राजस्याः । अन्यथा तामस्याः भेदाभावात् ॥३१॥**

भावप्रदीपिका (प.टी.)– अयथावत् प्रजानाति इत्यत्र न विपरीततयेत्यर्थ इत्याह– **यथार्थत्वेति । किमित्येवम्** इत्यत आह– **अन्यथेति ॥**

प्रमेयदीपिका (ज.टी.)– यया धर्ममधर्मं च इति राजस्याः बुद्धेः धर्मादिविषयाया अयथार्थज्ञानहेतुत्वमुच्यते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **यथार्थत्वेति ॥** अयथावत् प्रजानाति इत्यस्य यथार्थज्ञानजनननियमाभावे तात्पर्यमित्यर्थः । प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **अन्यथेति ॥** राजस्याः इति षष्ठ्यन्तमनुवर्तते । तामस्याः इति पञ्चमी । भेदाभावात् भेदाभावप्रसङ्गात् ॥ ३१ ॥

भावरत्नकोशः (सु.टि.)– 'बुद्धिः अन्तःकरणम्' इति हृदि निधायाऽह– **यथार्थज्ञान-जननेति** ॥ षष्ठ्यन्तं 'पदम् इति शेषः । हेतोरसिद्धिदोषो यथा न स्यात् तथा व्याचष्टे– **भेदाभावप्रसङ्गादिति** ॥ ३१ ॥

**गीताक्षरार्थस्तु ययेति** ॥ पुमान् यया बुद्ध्या धर्मम् अधर्मं कार्यं च अकार्यं च कर्तव्यं चाकर्तव्यं च अयथावत् प्रतिजानाति इत्यस्य यथार्थज्ञानजनननियमाभावे तात्पर्यम् । प्रतीतार्थ एव किं न स्यादिति चेन्न । तथात्वे राजस्या बुद्धेः तामसबुद्धितो भेदाभावप्रसङ्गाद् इत्याकरे स्फुटम् ॥ ३१ ॥

**अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु अधर्ममिति ।।** या बुद्धिः अधर्मं वेदप्रतिषिद्धं धर्मं वेदविहितम् इति मन्यते इति । अत्र धर्मशब्दो नपुंसकलिङ्गः 'स्याद्धर्ममस्त्रियाम्' इत्यभिधानात् । तथा च ततः इतिशब्दो नानुचितः । किञ्च तमसाऽऽवृता सती सर्वार्थान् विपरीतान् स्वाकारविपरीताकारान् मन्यते सा बुद्धिः तामसी । अत्र बुद्धिः अन्तःकरणम् पूर्वोक्तज्ञानं तु तद्वृत्तिः । तेन मनआदीनाम् इन्द्रियाणामपि त्रैविध्यमुक्तप्रायमिति मन्तव्यमिति विवृतिकृतः ।। ३२ ।।

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ।। ३३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** इदानीं धृतेः त्रैविध्यमुच्यते– **धृत्येत्यादिभिः त्रिभिः** । योगेन वैष्णवभक्तियोगेन युक्तया अव्यभिचारिण्या यया धृत्या मनःप्राणेन्द्रियाणां क्रियाः उच्छास्त्रमार्गप्रवृत्तेः धारयते निवारयति पुमान् सा धृतिः सात्त्विकी। केचित्तु मनः अन्तरिन्द्रियम् प्राणा पञ्चप्राणान् इन्द्रियाणि दशेन्द्रियाणि, क्रियाः कर्माणि च, धारयते धरतीति व्याख्यातवन्तः ।। ३३ ।।

**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ।। ३४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु यया त्विति ।।** फलाकाङ्क्षी स्वर्गादिफलाभिलाषी पुरुषः प्रसङ्गेन कर्मणि मदीयतास्नेहलक्षणेन प्रकृष्टेन सङ्गेन यया धृत्या धर्मकामार्थान् धारयते मनसि नित्यमेव कर्तव्यरूपान् अवधारयति तस्य सा धृतिः राजसी ।। ३४ ।।

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ।। ३५ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु ययेति ।।** दुर्मेधाः दुष्टाविवेकपरिभूता मेधा प्रज्ञा यस्य स तथा । 'नित्यमसिच् प्रजामेधयोः' इत्यसुच्प्रत्ययः, पुमान् यया स्वप्नं निद्रां भयं त्रासं शोकं दुःखं विषादं सर्वव्यापारोपरमहेतुं मनोदौर्बल्यं मदं विषयसेवां च, उपलक्षणमिदं

स्वप्नादिग्रहणं भगवद्द्वेषादिसर्वनिषिद्धस्य, न विमुञ्चति प्रत्युताचरति, तस्य सा धृतिः तामसी ।। ३५ ।।

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ।। ३६ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- प्रतिज्ञार्थकं गुणतः सुखस्य त्रैविध्यमुच्यते– **सुखमित्यादिना** ।। हे भरतर्षभ मे मम सकाशात् शृणु । यत्र यस्मिन् अभ्यासात् चिरकाले परिचयात् रमते निरतिशयां रतिं प्रतिपद्यते, यस्मिन् रममाणश्च दुःखस्य अन्तं नाशं निगच्छति नितरां गच्छति ।। ३६ ।।

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ।। ३७ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- तदेव विशिष्यते– **यदिति** ।। यत् प्रसिद्धं सुखम् अग्रे पूर्वं विषमिव बह्वायासपूर्वकत्वात्, परिणामे विपाके अमृतोपमम् अमृतसदृशम् आत्मबुद्धिप्रसादजम् आत्मनः विष्णोः बुद्धेः अन्तःकरणस्य च प्रसादात् अनुग्रहात्, प्रायो विषयेषु स्वतोऽप्रवृत्तिलक्षणायाश्च प्रसन्नताया जातं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः ।।३७।।

**विषयेन्द्रियसंयोगाद्यत् तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।। ३८ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- **विषयेति** ।। विषयाणां शब्दादीनाम् इन्द्रियाणां श्रोत्रादीनां च 'जातम्' इति शेषः । अग्रे प्रथमसन्निपाते अमृतोपमं परिणामे परिपाककाले दुःखोदर्कतया विषमिव तत्सुखं राजसं स्मृतम् ।। ३८ ।।

**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।। ३९ ।।**

भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु- यदग्र इति ।। यद् अग्रे समुपनतिसमये

अनुबन्धे च पश्चादपि विपाककाले आत्मनो मोहनं मोहकरं निद्राऽऽलस्यप्रमादेभ्यः समुत्तिष्ठतीति निद्राऽऽलस्यप्रमादोत्थं तत्सुखं तामसमुदाहृतम् ।। ३९ ।।

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ।। ४० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** सर्वजीवानामपि गुणतस्त्रैविध्यमुच्यते– **न तदिति** ।। यत्सत्त्वं जीवजातं एभिः प्रकृतैः प्रकृतिजैः प्रकृतिकार्यैः त्रिभिर्गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं स्यात् तत्सत्त्वं पृथिव्यां मनुष्यादिषु दिवि देवेषु वा पुनर्नास्ति । 'पुनः' इत्यन्तरिक्ष इति समुच्चीयत इति एके । ननु 'गुणातीतं सत्त्वं नास्ति' इत्येतावता पूर्णत्वात् 'पृथिव्यां दिवि इति विशेषोक्तिः किमर्था इति चेदुच्यते– मुक्तानां गुणबद्धत्वाभावात् 'गुणातीतं सत्त्वं नास्ति' इत्युक्ते तेषामपि तत्प्रसक्तेः, तद्व्यावृत्त्यर्थं 'पृथिव्याम् ' इत्यादिविशेषोक्तिरर्थवती इत्याद्युत्तरप्रस्थाने स्फुटम् । अनेन जीवाः सात्त्विका राजसाः तामसाश्चेति त्रिविधा इति विभावितं भवति ।। ४० ।।

**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।। ४१ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** इदानीं भगवदाराधनात्मकस्य कर्मणः 'स्वे स्वे कर्मणि' इति कर्म, 'यतः प्रवृत्तिः' इत्यत्र च ज्ञानलक्षणं फलं प्रतिपादयितुं ब्राह्मणाद्यधिकारिजीवानां स्वभावानुबन्धिसत्त्वादिगुणभेदभिन्नवृत्या सह कर्तव्यकर्मस्वरूपमुच्यते– **ब्राह्मणेत्यादिना** ।। हे परन्तप! शक्तिसम्पन्न ब्राह्मणानां क्षत्रियाणां विशां वैश्यानाम्, द्विजत्वाभाव-द्योतनार्थं 'शूद्राणां च' इति समासात् पृथक्करणम् । कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि । केन निमित्तेन स्वभावप्रभवैः गुणैः स्वभावः सत्त्वप्रधानत्वादिलक्षणः, ब्राह्मणत्वादि-लक्षणः, योग्यतालक्षणो वा प्रभवति प्रादुर्भवति व्यक्तीभवति येभ्यस्ते स्वभावप्रभवाः, तैः गुणैः सत्त्वादिभिः तानि च शृणु इति योज्यम् ।। ४१ ।।

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ।। ४२ ।।**

श्लोकः ४३,४४

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तत्र ब्राह्मणस्य नैसर्गिककर्माण्युच्यन्ते– **शमो दम इति** ।। शमः बुद्धेर्भगवन्निष्ठता , दम इन्द्रियनिग्रहः, तपः ब्रह्मचर्यादि, शौचं शुद्धिः बाह्या आन्तरी च, शान्तिः क्रोधानुत्थितिः, आर्जवं मनोवाक्कायकर्मणाम् अवैपरीत्यं, ज्ञानं सामान्यतः, विज्ञानं विशेषतः, आस्तिक्यं धर्मादौ अस्त्येवानेन प्रयोजनम् इति भावः , एतत्सर्वं ब्राह्मं ब्रह्म ब्राह्मणजातिः, तस्य सम्बन्धि कर्म तच्च स्वभावजं सहजं 'ब्रह्मकर्म' इति क्वचित् गीतापाठः । तत्र ब्रह्मणः ब्राह्मणजातेः कर्मेत्यर्थः ।। ४२ ।।

## शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
## दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।। ४३ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** क्षत्रियकर्मोच्यते– **शौर्यमिति** ।। शौर्यम् अभीरुत्वं, तेजः शरीरगतं वर्चः, धृतिः धैर्यं, दाक्ष्यं पाटवं, युद्धेऽप्यपलायनं च दानम् औदार्यम्, ईश्वरभावः

'प्रसह्य वित्ताहरणं शारीरो दण्ड एव च ।
अशिष्याणां शासनं च तथैवार्थविनाशनम् । एष ईश्वरभावः स्यात्..'

इति शास्त्रावेदितं प्रभुशक्तिप्रकटीकरणं क्षात्रं क्षत्रजातेर्विहितं स्वभावजं क्षत्रजात्यसाधारणं कर्म ।। ४३ ।।

## कृषिगौरक्ष्यवाणिज्यं वैश्यं कर्म स्वभावजम् ।
## परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।। ४४ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** वैश्यशूद्रयोः कर्मणी उच्येते पूर्वोत्तरार्धाभ्याम्– **कृषिगोरक्षवाणिज्यमिति** ।। कृषिगोरक्षवाणिज्यम् कृषिः भूमेः विलेखनम् गाः रक्षतीति गोरक्षः, तस्य भावः गौरक्ष्यम् पाशुपाल्यम्, वाणिज्यं वणिक्कर्म क्रयविक्रयादि, कृषिगौरक्ष्य-वाणिज्यम् इति द्वन्द्वैकवद्भावः । वैश्यं कर्म वैश्यजातेर्विहितं कर्म । स्वभावजम् । परिचर्यात्मकं त्रैवर्णिकशुश्रूषारूपं कर्म शूद्रस्यापि स्वभावजम् । अत्र ब्राह्मणधर्माः शमादयः । तेभ्यः किञ्चिदूनाः क्षत्रियेषु । क्षत्रियेभ्यः किञ्चिदूना वैश्येषु । वैश्येभ्यः किञ्चिदूनाः शूद्रेषु ज्ञातव्या इत्यादिविशेष उत्तरप्रस्थानतोऽवगन्तव्यः ।। ४४ ।।

श्लोकः ४५-४८

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।। ४५ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** अस्त्वेवं ब्राह्मणादीनां कर्माणि विभक्तानीति । ततः किम् इत्यत उच्यते– **स्वे स्वे कर्मणीति** ।। 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिनो विकल्पितत्वात् 'स्वे' इति प्रयुक्तम् । स्वे स्वे स्वस्वाधिकारविहिते कर्मणि अभिरतः परिनिष्ठितो नरः स्वस्वकर्मणा भगवन्तमाराधयन्निति यावत् संसिद्धिं समीचीनं ज्ञानम् तद्द्वारकं मोक्षं वा लभते । स प्रकार एव प्रतिज्ञापूर्वकं विविच्यते– **स्वकर्मेति** ।। यथा येन प्रकारेण सिद्धिं विन्दति लभते तत् तत्प्रकारं शृणु ।। ४५ ।।

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।। ४६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** यतः यस्माद् भगवतो भूतानां प्राणिनां प्रवृत्तिः चेष्टा भवति, येन च इदं सर्वं चराचरात्मकं जगत् ततं व्याप्तं तं भगवन्तं स्वकर्मणा ब्रह्मचर्यशमदमादिपूर्वकं सम्यक् पूजयित्वा मानवो मनुष्यो ब्राह्मणादिः सिद्धिं विन्दति लभते ।। ४६ ।।

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।। ४७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** स्वविहितकर्मनिरतत्वम् अत्यावश्यकमित्येतदुपपाद्यते– **श्रेयानिति** ।। विगुणो वैगुण्यलक्षणदोषयुक्तोऽपि स्वधर्मः स्वविहितधर्मः परधर्मात् क्षत्रियादिजातिविहिताद्धर्मात् स्वनुष्ठितात् साधुकृतात् श्रेयान् प्रशस्यतरः । पुमर्थसाधने विगुणः कथं श्रेयस्साधनं स्यात् इत्यत उच्यते– **स्वभावेति** ।। स्वस्य ब्राह्मणादेर्भावो वर्णाश्रमादिलक्षणः तन्निमित्तीकृत्य विहितं स्वभावनियतं कर्म कुर्वन् किल्बिषं वैगुण्यकृतदोषं नाप्नोति ।। ४७ ।।

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।। ४८ ।।**

श्लोकः ४९

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** वैगुण्यशङ्कया स्वविहितकर्मत्यागो न शङ्कनीयः । वैगुण्यस्य सर्वथाऽवर्जनीयत्वादित्युच्यते– **सहजमिति** ।। सहजं स्वभावनियतं कर्म सदोषं किञ्चिद्वैगुण्यादिदोषसहितमपि न त्यजेत् । हि यस्मात् सर्वारम्भाः सर्वाण्यपि कर्माणि दोषेण केनचिद् आवृता व्याप्ता एव, धूमेन सहजेन अग्निरिव ।। ४८ ।।

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ।। ४९ ।।**

## भाष्यम्

**नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ।। ४९ ।।**

भावप्रदीपिका (प.टी.)– **ब्रह्माप्नोति** इत्युत्तरत्र **श्रवणात् न नैष्कर्म्यसिद्धिर्मोक्ष** इत्याह– **नैष्कर्म्येति ।।** ४९ ।।

**प्रमेयदीपिका** (ज.टी.)– **'नैष्कर्म्यसिद्धिं मोक्षम्'** इति **केचित् । तदसत् । तदनन्तरं मां विशते इति वाक्यशेषविरोधादिति भावेनान्यथा व्याचष्टे– नैष्कर्म्यमिति ।। नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः । सा च योगस्येत्यर्थः** ।। ४९ ।।

**भावदीपः (रा.टि.)–** 'विशते तदनन्तरम्' इत्यस्यान्वयमुखेन अनुवादः, तदनन्तरं मां विशत इति ।। ततो मां तत्वतो ज्ञात्वा विशते इत्यत्राङः प्रश्लेष इति भावः ।। ४९ ।।

**भावरत्नकोशः (सु.टि.)–** ।। **नैष्कर्म्यसिद्धिमिति** ।। नैष्कर्म्यं च सा सिद्धिश्च नैष्कर्म्यसिद्धिः, तां मोक्षमिति भावेन नैष्कर्म्यसिद्धिं मोक्षमित्युक्तम् । 'नैष्कर्म्यफलम्' इति भाष्यघटनायाऽह– **नैष्कर्म्यार्थेति** ।। नैष्कर्म्यम् अर्थः प्रयोजनं फलं यस्याः सा नैष्कर्म्यार्था, तां नैष्कर्म्यफलामिति गीताभाष्ययोरेकार्थता । सा च सा सिद्धिः ज्ञानम् अपरोक्षज्ञानम् । तद्धि नैष्कर्म्यशब्दितमोक्षफलकम् 'नैष्कर्म्यफलां सिद्धिम्' इत्येव भाषणीये यद् योगग्रहणं तत्तात्पर्यमाह– **सा चेति** ।। नैष्कर्म्यार्थसिद्धिश्च । योगस्य सात्त्विकज्ञानकर्मादिलक्षणस्य अपरोक्षज्ञानोपायस्य सिद्धिः फलरूपा इति भावेन भाष्ये 'योगसिद्धिम्' इत्युक्तम् । तेन 'पुनः साधनप्रथनाय गुणभेदमाह' इति भाष्ये 'ज्ञानं कर्म च' इत्यादिप्रघट्टकस्य यन्मोक्षसाधनज्ञानाय परोक्षज्ञानोपायप्रपञ्चनपरत्वमुक्तं तद्विशदं भवतीत्याशयः ।

अत्र 'नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः' इति समासः । शाकपार्थिवादाविव मध्यमपदलोपी च । यद्वा नैष्कर्म्यम् अस्याः फलत्वेनास्तीति नैष्कर्म्या, अर्शआदिभावेन मत्वर्थीयोऽच्प्रत्ययः । सा च सा सिद्धिश्च नैष्कर्म्यसिद्धिरिति कर्मधारयः । 'नैष्कर्म्या नैष्कर्म्यफला सिद्धिः फलत्वेन यस्याः परोक्षज्ञानकर्मादिलक्षणायाः साधनसामग्र्याः सा नैष्कर्म्यसिद्धिः' इति बहुव्रीहिश्च इति तन्त्रेण समासद्वयमभिसंहितम् । इदं च 'नैष्कर्म्यफलां योगसिद्धिम्' इति भाष्यवाक्यद्वयेन, 'नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः' इति 'सा च योगस्य' इति टीकावाक्यद्वयेन चोन्नीयते । एवं समासद्वयानभिसन्धाने नैष्कर्म्यफलां सिद्धिम् इति, 'नैष्कर्म्यार्था सिद्धिः नैष्कर्म्यसिद्धिः' इत्येवावक्ष्यदिति आहुः ।। ४९ ।।

**गीताक्षरार्थस्तु** कर्मनिरतस्य सिद्धिरुक्ता । तदनुष्ठाने इत्थम्भाव उच्यते– **असक्तेति** ।। सर्वत्र कर्म तदङ्गाद्यनुष्ठाने असक्ता कर्तृत्वाभिमानहीना बुद्धिः यस्य स तथा जितात्मा वशीकृतचित्तः, विगता निःशेषेण निवृत्ता स्पृहा फलाभिलाषो यस्मात् स तथा । एवंभूतः साधकः परमाम् उत्तमां नैष्कर्म्यसिद्धिः नैष्कर्म्यार्था मोक्षार्था सिद्धिः नैष्कर्म्यसिद्धिरिति समासो मध्यमपदलोपी । यद्वा 'नैष्कर्म्यम् अस्याः फलत्वेनास्ति' इत्यत्र अर्शआदिलक्षणे मत्वर्थीयेऽच्प्रत्यये नैष्कर्म्यार्था मोक्षफला च सा सिद्धिश्च नैष्कर्म्यसिद्धिरिति कर्मधारयः । नैष्कर्म्या नैष्कर्म्यफला सिद्धिः फलत्वेन यस्याः परोक्षज्ञानकर्मादिलक्षणायाः साधनसामग्र्याः सा नैष्कर्म्यसिद्धिरिति बहुव्रीहिः, तां नैष्कर्म्यसिद्धिं सन्न्यासेन सर्वकर्मणां भगवति समर्पणलक्षणेन अधिगच्छति प्राप्नोति ।। ४९ ।।

**भावदीपिका (श्री.टि.)**– ।। **तदनन्तरं** नैष्कर्म्यसिद्धिप्राप्त्यनन्तरम् । **नैष्कर्म्यार्था** मोक्षार्था । **योगस्येति** ।। कर्मसमाधियोगरूपस्य सिद्धिः तत्फलभूतम् अपरोक्षज्ञानमित्यर्थः ।। ४९ ।।

**भावप्रकाशः (कृ.टि.)**– ।। **सा च योगस्येति** ।। ज्ञानस्येत्यर्थः । अग्रे सिद्धेर्ज्ञाननिष्ठात्मकत्वेन अभिधानात् ।। ४९ ।।

**सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ।। ५० ।।**

## भाष्यम्

**यथा येनोपायेन सिद्धिं प्राप्तो ब्रह्म (प्रा)आप्नोति तथा निबोध । या सिद्धिः ज्ञानस्य परा निष्ठा ।। ५० ।।**

**भावप्रदीपिका** (प.टी.)– बुद्ध्या विशुद्धया इति ज्ञानसाधनस्योक्तेः, यथा इति ज्ञानोपाय एव ब्रह्मप्राप्त्युपाय इत्याह– **यथेति** । या इति ब्रह्मप्राप्तिपरामर्श इत्याह– **येति** ।। ५० ।।

**प्रमेयदीपिका** (ज.टी.)– 'सिद्धिं प्राप्तः' इति योगसिद्धिप्राप्त्यनन्तरं ब्रह्मप्राप्तावुपायकथनं प्रतिज्ञायते' इत्यन्यथाप्रतीतिनिरासार्थं व्याचष्टे– **यथेति** ।। ब्रह्माऽप्नोति इत्यनुवादमात्रम् । तथा तमुपायम् । प्रतीत एवार्थः किं न स्यात्? इति चेन्न । सिद्धेः ज्ञाननिष्ठाऽत्मकत्वेन अभिधानात् । ज्ञानस्य च ब्रह्मप्राप्तावनपेक्षत्वादिति भावेन 'निष्ठा' इत्येतद् व्याचष्टे– **येति** ।। ५० ।।

**भावदीपः (रा.टि.)**– तमिति शेषः, उपायम् इति व्याख्या, उपायमिति वा शेषः ।। **अनपेक्षत्वादिति** ।। अन्यानपेक्षतया स्वस्यैवाहेतुत्वादित्यर्थः ।। **येतीति** ।। या सिद्धिः ज्ञानस्य परिनिष्ठा नितरां स्थितिस्तां सिद्धिं प्राप्तः इति भाष्ये गीतायां चान्वय इति भावः ।।

**भावरत्नकोशः (सु.टि.)**– यथा येन' इति भाषणानुसारेण 'तथा' इति पदमनूद्यार्थमाह– **तथा तमुपायमिति** ।। प्रतीत एवार्थः ब्रह्मप्राप्तौ उपायकथनप्रतिज्ञारूपः । ज्ञाननिष्ठेति ।। निश्चलापरोक्षज्ञानत्वेनेत्यर्थः । ज्ञानस्य अपरोक्षस्य अनपेक्षत्वादिति ज्ञानेन ब्रह्मप्राप्तौ जनयितव्यायां साधकनिष्ठसाधनान्तरानपेक्षत्वादित्यर्थः । 'न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्' इति वचनादिति भावः ।। ५० ।।

**गीताक्षरार्थस्तु**- प्रतिज्ञापूर्वकं नैष्कर्म्यसिद्धिसाधनं विवृण्वता तदनन्तरभावि फलमुच्यते– **सिद्धिमिति** ।। हे कौन्तेय यया येनोपायेन सिद्धि प्राप्तो ब्रह्म आप्नोति तथा तमुपायं समासेन सङ्क्षेपेण मे सकाशात् निबोध नितरामवधारय । या सिद्धिः ज्ञानस्य परा निष्ठा पर्यवसितिः तां सिद्धि नैष्कर्म्यसिद्धिमित्यन्वयः ।। ५० ।।

**भावदीपिका (श्री.टि.)–** 'सिद्धिं प्राप्तो यथा तथा निबोध' इत्येव वक्तव्यत्वाद् 'ब्रह्माप्नोति' इति व्यर्थम् इत्यत आह– **ब्रह्माप्नोतीति ।। तमुपायम्** अपरोक्षज्ञानोपायम् । **प्रतीत एवार्थः** ब्रह्मप्राप्तावुपायकथनरूपः । **ज्ञाननिष्ठात्मकत्वेनेति** । निश्चलापरोक्षज्ञानात्मकत्वेनेति यावत् । **अनपेक्षत्वादिति** ।। 'सिद्धिम् अपरोक्षज्ञानं प्राप्तो यथा येनोपायेन ब्रह्माप्नोति तथा निबोध' इत्युक्ते, अपरोक्षज्ञानस्य ब्रह्मप्राप्तौ पुनः साधनान्तरसापेक्षता प्रतीयेत । तदयुक्तम् ।

'सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक् ।।' इति वचनविरोधापत्तेरिति भावः ।। ५० ।।

**भावप्रकाशः (कृ.टि.)– ।। ब्रह्मप्राप्तावनपेक्षत्वादिति ।।** ब्रह्मप्राप्तौ जनयितव्यायामधिकारिनिष्ठकारणान्तरानपेक्षत्वादित्यर्थः ।। ५० ।।

**बुध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।। ५१ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** प्रतिज्ञातमुच्यते– **बुद्ध्येति** ।। विशुद्धया विषयसङ्गादिदोषपरिहृतया बुद्ध्या युक्तः धृत्या धैर्येण आत्मानं मनो नियम्य विषयेभ्यो विनिवर्त्य च शब्दादीन् इन्द्रियविषयान् त्यक्त्वा तदनुभवेच्छां विहाय तदनुषङ्गिणौ रागद्वेषौ व्युदस्य च ।। ५१ ।।

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।। ५२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** विविक्तसेवी दुर्जनसङ्गहीनदेशसेवाशीलः लघ्वाशी मिताहारशीलः यतने निगृहीतानि वाक्कायमानसानि यस्य स यतवाक्कायमानसः नित्यं ध्यानयोगपरः ध्यानम् भगवदनुचिन्तनम्, तदेव योगः उपायः तत्परः तत्रासक्तः वैराग्यं दृष्टादृष्टविषयेषु वैतृष्ण्यं नित्यमेव समुपाश्रितः ।। ५२ ।।

श्लोकः ५३,५४

**अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।। ५३ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु**- अहङ्कारं स्वस्य कर्तृत्वाभिमानं बलं समर्थताऽभिमानं दर्पं मदात् समुपनतभीतिहेतोरदर्शनं कामम् अभिलाषं क्रोधं द्वेषं परिग्रहं देहधारणमात्रानुकूलपरिग्रहाद् अधिकं विमुच्य विशेषेण मुक्त्वा निर्ममः 'ममेदं कर्म' इति ममताभिमानहीनः शान्ता भगवन्निष्ठबुद्धिः, हेतुभिरपि अनुत्थितकोपः इति स्वामिनः । ब्रह्मभूयाय ब्रह्मणि भावः ब्रह्मभूयम् ब्रह्मणि स्थितिः सर्वदा तन्मनस्कतेति यावत् कल्पते ।। ५३ ।।

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।। ५४ ।।**

## भाष्यम्

**ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयं ब्रह्मणि स्थितिः । सर्वदा तन्मनस्कतेत्यर्थः ।। ५३,५४ ।।**

भावप्रदीपिका (प.टी.)– ब्रह्मभूयशब्देन ब्रह्मत्वमिति आह– **ब्रह्मणीति** । मद्भक्तिं लभते इत्यादिवाक्यशेषाद्ब्रह्मणि भावोऽपि न मोक्ष इत्याह– **सर्वदेति** ।। ५३ ।।

प्रमेयदीपिका (ज.टी.)– 'ब्रह्मभूयाय ब्रह्मत्वाय' इति प्रतीतिनिरासार्थं व्याचष्टे– **ब्रह्मेति** ।। 'इत्यर्थः' इति शेषः । भावो न जन्मादि' इत्याशयेन विवृणोति– **ब्रह्मणीति** ।। इयमपि न मुक्तिः । 'ब्रह्मभूतः' इति पुनर्भक्त्यादिलाभश्रवणादिति भावेनाऽह– **सर्वदेति** ।। ५३,५४ ।।

भावदीपः (रा.टि.)– ।। **ब्रह्मभूत इतीति** ।। 'ब्रह्मभूतः' इति श्लोक इत्यर्थः ।। ५३,५४ ।।

वाक्यार्थप्रदीपः (पां.टि.)– ।। **ब्रह्मभूयाय ब्रह्मत्वाय इति प्रतीतिनिरासार्थमिति** । यद्यपि वदः सुपीत्यतः सुपीत्यनुवृत्तौ भुवो भाव इत्यनेन तयू भवनमिति तच्छब्द उपपदे

भुवतेर्धातोः भवनरूपे अर्थे क्यप्प्रत्यये कित्वात् गुणाभावे च सति निष्पन्नत्वात् ब्रह्मभूयशब्दस्य तद्भवनमात्रार्थतया न तत्वार्थत्वम् । तथापि स्यात् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि इत्यभिधाने ब्रह्मभूयब्रह्मत्वशब्दसायुज्यशब्दानामपर्यायत्वस्य अभिधानात् व्याकरणस्य साधुत्वा-न्वाख्यानप्रकरणमात्रपरत्वात् युक्तमेव ब्रह्मभूयशब्दस्य ब्रह्मार्थत्वमिचि अवधेयम् ।।

यद्विद्याधीशगुरोः शुश्रूषान्या नरोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ।।

**।। इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीविद्याधीशतीर्थतत्पूज्यचरणानां निजशिष्यकेशवेन विरचिते व्याकरणस्पृष्टप्रमेयदीपिकावाक्यार्थप्रदीपे त्रयोदशोध्यायः ।।**

**भावरत्नकोशः (सु.टि.)– ब्रह्मभूयाय ब्रह्मभावाय इति शङ्करोक्तेराह– इति प्रतीतीति** ।। इयमपि ब्रह्मणि स्थितिरपि । पुनः ब्रह्मणि स्थित्यनन्तरमपि । भक्तीति ।। 'मद्भक्तिं लभते पराम्' इति श्रवणादित्यर्थः ।।

**गीताक्षरार्थस्तु**- ततः किम् इत्यत उच्यते– **ब्रह्मभूत इति** ।। ब्रह्मणि सर्वदा समालग्नमनाः प्रसन्नात्मा अलौकिकसुन्दरविषयलाभेन प्रसादयुक्ततया स्वत एव विषयेष्वप्रवृत्तमनाः, प्रसन्न आत्मा परमात्मा यस्य स इति वा, प्रायेण नष्टं न शोचति न वा अप्राप्तं काङ्क्षति सर्वभूतेषु समः षष्ठाध्यायोक्तरीत्या समबुद्धिः सन् पराम् उत्कृष्टां मद्भक्ति मयि भक्ति लभते ।। ५३,५४ ।।

**भावदीपिका (श्री.टि.)– ।। पुनर्भक्त्यादीति ।।** मुक्तौ च पुनर्भक्त्यादिलाभाभावादिति भावः ।। ५३ ।।

## भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
## ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।। ५५ ।।

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** ततश्च किम् इत्यत उच्यते– **भक्त्येति** ।। यावान् अहं यत्परिमाणः देशकालगुणैर्व्याप्तो यश्च यन्नामा यद्रूपश्च अस्मि तावन्तं च मां तत्त्वतः स्वस्वयोग्यतानुसारेणेति यावत्, तथा भक्त्या मामभिजानाति सम्यगवबुध्यते ततो भक्तिप्राप्त्यनन्तरं स्वगतभेदरहितं तद् वैदिकवेद्यत्वहेतुना तच्छब्दवाच्यं ब्रह्म मां विशते प्रविशति प्रपद्यत इत्यर्थः ।। ५५ ।।

श्लोकः ५६,५७

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।। ५६ ।।**

## भाष्यम्

**पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति सर्वकर्माणीत्यादिना ।। ५६ ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकसन्दर्भमवतारयति– **पुनरिति** ।। ५६।।

प्रमेयदीपिका (ज.टी.)– उत्तरग्रन्थस्य सङ्गतिं सूचयंस्तात्पर्यमाह– **पुनरिति** ।। उपसंहरति 'शास्त्रम्' इति शेषः ।। ५६ ।।

**भावरत्नकोशः** (सु.टि.)– प्रागपि साधनानामुक्तत्वात् भाष्ये 'पुनः' इत्युक्तमिति स्फुटत्वान्नोक्तम् ।।

पुनरन्तरङ्गज्ञानसाधनान्युपदिशता शास्त्रमुपसंह्रियते– **सर्वकर्माणीत्यादिना** ।। सर्वकर्माणि विहितान्येव सर्वाणि कर्माणि, अपिशब्दस्तु 'एकमपि कर्म तदानश्रयणेन न कार्यम्' इत्यर्थे । मद्व्यपाश्रयः अहमेव व्यपाश्रयः सम्यगाश्रय यस्य स तथा 'मय्येव समर्पयन्' इति यावत् । सदा कुर्वाणः मत्प्रसादात् ममानुग्रहात् शाश्वतं शश्वदेकप्रकारम् अव्ययं नित्यं पदं परब्रह्मस्वरूपम् अवाप्नोति ।। ५६ ।।

**चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ।। ५७ ।।**

**भावरत्नकोशः** (सु.टि.)– **गीताक्षरार्थस्तु** यदि भगवदाश्रयतया विहितकर्म कुर्वतो मुक्तिः तर्हि त्रैविध्यस्यापि स स्यात् तस्यापि विहितकर्माणि कृत्वा भगवदर्पणसद्भावेन भगवदाश्रितत्वाविशेषात् इत्यत उच्यते– **चेतसेति** ।। सर्वकर्माणि विहितानि सर्वाणि चेतसा मयि भगवति सन्न्यस्य समर्प्य मत्परः अहमेव सर्वस्मात् सर्वप्रकारेण सर्वदा परः उत्तम इति भावो यस्य स तथा बुद्धियोगं बुद्धेः ज्ञानस्य योगः प्रत्याहाराद्युपायः, तम् उपाश्रित्य अनन्यविषयतया समाश्रयणम् उपाश्रयः, तत् कृत्वा सततं मच्चित्तः मयि चित्तं निरुद्धं यस्य स तथा भव ।

अत्र भगवदाश्रितत्रैविध्ययोः विहितकरणादिसाम्येऽपि मोक्षभावाभावौ उपपद्येते । विहिताशेषकर्माणि चेतसा भगवति सन्न्यस्य भगवदाश्रितः करोति, न तथा त्रैविद्य इति तयोः चेतसैव विशेषसद्भावादिति भावयितुं 'चेतसा' इत्युक्तम् । 'मत्परः' इत्यत्र त्रैविद्यात् भागवतस्य विशेष उच्यते सर्वदा सर्वप्रकारेण सर्वस्माद् भगवान् परः' इति भावो हि मत्परत्वम् । अस्ति चेदं भागवते, न तु त्रैविद्ये, इति तेनापि विशेषेण तयोर्विशेष इति न त्रैविद्यभागवतयोः साम्यमिति ज्ञायते । भगवति चित्तवृत्तिनिरोधोऽपि त्रैविद्याद् भागवतस्य विशेष इति भावेन 'मच्चित्तः' इत्युक्तम् ।। ५७ ।।

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ।। ५८ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** भगवति निरुद्धचित्तस्य फलमुच्यते– **मच्चित्त इति** ।। मच्चित्तः सर्वाणि दुर्गाणि दुस्तराणि मोक्षप्रतिबन्धकपापानि मत्प्रसादात् तरिष्यति अतिक्रमिष्यति इति । स्वोक्ताकरणेऽनिष्टमुच्यते– **अथ चेदिति** ।। अथ चेत् यदि पुनः त्वम् अहङ्कारात् पण्डितोऽहमित्यभिमानात् 'युध्यस्व' इति मदुक्तं न श्रोष्यसि श्रुत्वा तत्र निष्ठां न करिष्यसि तर्हि विनङ्क्ष्यसि विनाशं गमिष्यसि पुरुषार्थभ्रष्टो भविष्यसि इति यावत् ।। ५८ ।।

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।। ५९ ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु** अथ चेत्त्वमहङ्काराद् इत्यभ्युपगम्योक्तम् । उक्ताकरणम् अशक्यं च तवेत्युच्यते– **यदिति** ।। यद् यदि अहङ्कारमाश्रित्य 'स्वविहितमपि युद्धं न करिष्यामि' इति मन्यसे अध्यवस्यसि तर्हि ते तव एष व्यवसायः युद्धाकरणनिश्चयो मिथ्यैव षण्ड एव । यतः प्रकृतिः ईश्वरेच्छा नियोक्ष्यति प्रेरयिष्यति ।। ५९ ।।

**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ।। ६० ।।**

भावरत्नकोशः (सु.टि.)– **गीताक्षरार्थस्तु-** ईश्वरेच्छाया जीवनियोगे साधनतया

श्लोकः ६१,६२

स्वभावाद्युच्यते– **स्वभावजेनेति** ।। स्वभावः संस्कारः, तज्जनितेन स्वेन स्वकीयेन स्वस्य विहितेन कर्मणा निबद्धो नियन्त्रितः त्वं मोहाद् यद् कर्म युद्धलक्षणं कर्तुं नेच्छसि अवशोऽपि स्वानधीनो भगवदिच्छाधीनो वाऽपि तत् कर्म करिष्यसि एव ।। ६० ।।

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।। ६१ ।।**

**भावरत्नकोशः** (सु.टि.)– ननु प्रकृतिशब्दितेच्छाया एव नियोक्तृत्वे ईश्वरो नियोक्ता न स्यात् इति शङ्का ईश्वरस्वरूपमुपदिशता निराक्रियते– **ईश्वर इति** ।। सर्वेषां भूतानां जीवानां हृद्देशे ईश्वरः अन्तर्यामी तिष्ठति । तदवस्थितिप्रयोजनं सूच्यते– **यन्त्रारूढानीति** ।। यन्त्रशब्दः शरीरार्थः, तानि आरूढानि अधिष्ठितानि भूतानि शरीराभिमानिनो जीवान् मायया स्वरूपभूतया इच्छया भ्रामयन् स्वस्वकर्मसु नियोजयन् सन्निति । केचित्तु 'यन्त्रारूढानि' इत्यत्र इवशब्दं संयोज्य, यथा दारुयन्त्रारूढानि कृत्रिमाणि भूतानि सूत्रधारी लोके भ्रामयति, तथेश्वरो मायया भ्रामयन् तिष्ठतीति व्याचक्षते ।। ६१ ।।

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ।। ६२ ।।**

## भाष्यम्

**परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ।। ६१,६२ ।।**

भावप्रदीपिका (प.टी.)– उत्तरश्लोकसन्दर्भमवतारयति– **पुनरिति** ।।

**प्रमेयदीपिका** (ज.टी.)– 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' ,'तमेव शरणं गच्छ' 'तत्प्रसादात्' इत्यादिरूपात् परोक्षवचनात् कृष्णस्यानीश्वरत्वं प्रतीयते । तन्निराकर्तुमाह– **परोक्षेति** ।। निश्चितार्थत्वाभिप्रायेण । 'अन्यथा सिद्धम्' इति शेषः ।। ६१,६२ ।।

**भावरत्नकोशः** (सु.टि.)– भाष्ये 'भीमवचनवत् इत्यत्र–

'यदि त्वं शत्रुमात्मानं मन्यसे तत्तथाऽस्त्विह ।
एष ते सदृशं कर्म शत्रौ भीमः करिष्यति ।।'

इति द्रोणपर्वणि द्रोणं प्रति भीमवचनवदित्यर्थः । 'भीमवचनवत्' इत्यनन्तरं शेषमाह– **निश्चितेति** ।। 'निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते....' इति तात्पर्यनिर्णयोदाहृतवचनात् निश्चितार्थाभिप्रायेण परोक्षवचनम् अन्यथासिद्धमिति न तत् कृष्णस्यानीश्वरत्वं प्रत्याययितुं शममिति भावः ।।

**गीताक्षरार्थस्तु**- यस्मादेवम् ईश्वर एव स्वतन्त्रः, त्वदादिजीवाश्च तदधीनाः, तस्मात् मिथ्याध्यवसायं परित्यज्य तमेवाश्रय इत्युच्यत– **तमेवेति** ।। सर्वभावेन सर्वप्रकारेण तम् ईश्वरमेव शरणं गच्छ । तत्प्रसादात् तस्य ईश्वरस्यानुग्रहात् पराम् उत्तमां शान्तिं बुद्धेर्भगवति निष्ठां प्राप्स्यसि, ततश्च शाश्वतस्थानं वैकुण्ठादि प्राप्स्यसि । 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति', 'तमेव शरणं गच्छ तत्प्रसादात् ' इत्यादिरूपात् परोक्षवचनात् भगवतः श्रीकृष्णस्य ईश्वरादन्यत्वमिति शङ्का 'परोक्षवचनं तु द्रोणं प्रति भीमवचनमिव निश्चितार्थत्वाभिप्रायेणान्यथासिद्धम्' इत्यादिनाऽऽकरे एव परिहृता ।। ६२ ।।

**भावदीपिका (श्री.टि.)**– 'निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते' इति तात्पर्योदाहृतवचनमनुसन्धायाह– **निश्चितार्थत्वाभिप्रायेणेति** ।। 'द्रोणं प्रति भीमवचनवत्' इति भाष्यम् । तथा हि महाभारते द्रोणपर्वणि शकटचक्रव्यूहप्रवेशकाले आदौ द्रोणेन भीमसेनं प्रत्युक्तम् ।

'शिष्यत्वादर्जुनो मुक्तस्तत्स्नेहेनैव सात्यकिः ।
कथं त्वां मोचयिष्येऽहं पश्याद्य मम पौरुषम् ।।' इत्यादि ।

अनन्तरं द्रोणं प्रति भीमसेनेनोक्तम् –

'द्रोणो भीमेन पितृवन्मानितोऽहर्निशं सदा ।
अद्यारिं मन्यते द्रोणो भीमं तद्वत् करिष्यति ।।
भीम उक्त्वैतावदेव निधाय शिर अग्रतः ।
युक्तान् शरानगणयन् रथं जग्राह सत्वरः ।।' इति ।

तथा च अरिवत्करणरूपभीमसेनोक्तार्थस्य निश्चितत्वेन द्रोणं प्रति 'तद्वत्करिष्यति भीमः' इति परोक्षवचनं निश्चितार्थत्वाभिप्रायेणान्यथासिद्धम्, न स्वभिन्नस्य भीमत्वादिज्ञापकम्, एवं स्वस्मिन्नीश्वरत्वस्य निश्चितत्वात् तदभिप्रायेण 'ईश्वरः' इत्यादिपरोक्षवचनम् अन्यथासिद्धं न कृष्णस्यानीश्वरत्वज्ञापकमित्यर्थ इति सम्प्रदायविदः ।।

**भावप्रकाशः (कृ.टि.)–** ।। **इत्यादिरूपादिति** ।। आदिपदात् 'तत्प्रसादात्परां शान्तिम्' इत्यस्य सङ्ग्रहः । भाष्ये **द्रोणं प्रति भीमवचनवदिति** ।। 'यदि शत्रुं त्वमात्मानं मन्यसे तथाऽस्त्वित्याह । एष ते सदृशं कर्म शत्रो भीमः करिष्यति' इति द्रोणपर्वणि द्रोणं प्रति भीमवाक्यवदित्यर्थः । **निश्चितार्थत्वेति** ।। 'निश्चितार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते विष्णुना यद्वत्तद्ब्रह्म' इत्यादि कथ्यत इत्युक्तेरिति भावः ।। ६२ ।।

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ।। ६३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** एवं भगवता तत्त्वमुपदिशता उक्तानुवादपूर्वकं साभिप्रायम् अर्जुन आक्षिप्यते– **इतीति** ।। 'ते' इति श्रवणाद् 'भारत' इति लभ्यते । गुह्यात् गोप्यात् गुह्यतरम् अतिशयेन गोप्यं रहस्यं ते त्वां प्रति इति प्रागुक्तप्रकारेण ज्ञानं ज्ञातव्यं तत्त्वम् आख्यातम् । एतदशेषेण विमृश्य पर्यालोच्य यथेच्छसि तथा कुरु ।। ६३ ।।

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।। ६४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** साधनसारोपदेशोपसंहाराय प्रतिज्ञायते– **सर्वं गुह्यतममिति** ।। भगवति मनोनिवेशनादेः प्रागुक्तत्वात् 'भूयः' इत्युक्तम् । सर्वगुह्यतमं सर्वसाधनेषु अतिशयेन गोप्यम् अत एव परमं मे वचः शृणु । त्वं मे दृढम् अतीव इष्ट इति कृत्वा ततः ते हितं श्रेयस्करं वक्ष्यामि ।। ६४ ।।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।। ६५ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु** तदेवोच्यते– **मन्मना इति** ।। मयि मनो यस्य स तथा, मम भक्तो भव । मद्याजी मद्यजनशीलो भव । माम् एव नमस्कुरु । एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि । अत्र च संशयं मा कार्षीः । सत्यं यथा तथैव ते तुभ्यं प्रतिजाने प्रतिज्ञां करोमि, यतस्त्वं मे प्रियोऽसि ।। ६५ ।।

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।। ६६ ।।**

## भाष्यम्

**धर्मत्यागः फलत्यागः । कथमन्यथा युद्धविधिः? 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते' (१८.११) इति चोक्तम् ।। ६६ ।।**

भावप्रदीपिका (प.टी.)– सर्वधर्मान् इत्येतदन्यथाप्रतीतिनिरासाय व्याचष्टे– **धर्मेति** । धर्मत्याग एवार्थः किं न स्यात् इत्यत आह– **कथमिति** । धर्मत्यागपदेन कथं फलत्याग उच्यते इत्यत आह– **यस्त्विति** ।। ६६ ।।

**प्रमेयदीपिका (ज.टी.)– 'सर्वधर्मान् परित्यज्य'** इति वर्णाश्रमविहितानामपि सर्वधर्माणां परित्यागो विधीयते' इत्यन्यथाप्रतीतिनिरासार्थमाह– **धर्मेति ।।** प्रतीत एवार्थः किं न स्यात्? इत्यत आह– **कथमिति ।।** 'अस्मिन् शास्त्रे क्रियते' इति शेषः । **अशाब्दोऽयमर्थ इति चेन्न, धर्मशब्दस्य स्वकार्यफलोपलक्षणत्वात्** । एवमेव भगवता व्याख्यातत्वाच्च इत्याह– **यस्त्विति** ।। ६६ ।।

**भावदीपिका (श्री.टि.)– ।। अशाब्द इति ।।** फलत्यागरूपोऽर्थो धर्मत्यागशब्दलभ्यो न भवतीत्यर्थः । **व्याख्यातत्वादिति** ।। 'गीतायामेव' इति शेषः ।। ६६ ।।

**भावरत्नकोशः (सु.टि.)–** फलत्यागः' इति भाष्यपदस्य 'धर्मफलाभिसन्धित्यागः' इत्यर्थः । **उपलक्षणत्वादिति** ।। अन्यथा 'गङ्गायां घोषः' इत्यादौ तीरादिबोधः शाब्दो न स्यादिति भावः । एवमेव धर्मत्यागो नाम धर्मफलत्याग एव, इत्येव शास्त्रे शास्त्रीयप्रसिद्धिरेव ग्राह्या, अन्तरङ्गत्त्वादिति भावः ।।

श्लोकः ६७,६८

**गीताक्षरार्थस्तु-** 'मन्मना भव' इत्युक्तभगवन्मनस्त्वं विस्पष्टं व्याख्यातुं तत्रेत्थम्भाव उच्यते- **सर्वधर्मानिति** ।। धर्मशब्देन धर्मकार्यफलानि लक्ष्यन्ते 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ' इति धर्मपरित्यागशब्दस्य तत्फलपरित्यागार्थकत्वस्य भगवतैवाभिहितत्वात् सर्वधर्मफलान्यभिसन्धाय मामेकं शरणं व्रज गच्छ प्राप्नुहि । यदुक्तं 'मन्मना भव' इति तद्व्याख्यायते 'मामेकं शरणं व्रज' इति निगमात्मना । ननु बहुतरपापसद्भावात्' 'मामेवैष्यसि सत्यम्' इति कथमुक्तम् । कथञ्चित् त्वां प्राप्तस्यापि नाकं प्राप्तस्येव कर्मशेषात् पुनः पाते संसारपरिक्लेशोऽवर्जनीयः इति शङ्काद्वयं परिहर्तुमुच्यते- **अहमिति** ।। अहं त्वां त्वां त्वदुपलक्षितसानुवर्गं सर्वपापेभ्यः अनादिजन्मकृतसर्वपापेभ्यः मोक्षयिष्यामि मोचयिष्यामि विनिर्मुक्तं करिष्यामि । ततो मा शुचः शोकं मा कार्षीरिति कृतशङ्काद्वयशङ्कुरुद्धृतः ।। ६६ ।।

## इदं ते नातपस्काय नाभक्ताय कदाचन ।
## न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ।। ६७ ।।

**भावरत्नकोशः (सु.टि.)- गीताक्षरार्थस्तु-** गीताशास्त्रेऽनधिकारिनिरासेन अधिकारी लक्ष्यते- **इदमिति** ।। इदं गीताशास्त्रार्थतत्त्वम् अतपस्काय न विद्यते तपः ब्रह्मचर्यादिः यस्य सोऽतपस्कः, तस्मै त्वया त्वदुपलक्षितसज्जनेन न वाच्यम् । अशुश्रूषवे परिचर्यामकुर्वते पुनश्च न वाच्यम् इति अतपस्कादपि अशुश्रूषोः दोषाधिक्यं दर्शयितुं चशब्दः । एवम् अशुश्रूषोरपि अतिशयेन अभक्ताय न वाच्यम् इत्यर्थद्योतनाय 'कदाचन' इत्युक्तम् । अभक्तादपि अतिशयेन न वाच्यं यो मामभ्यसूयति तस्मै । 'समुच्चये तथाऽधिक्ये न्यूनत्वे चः प्रयुज्यते' इति वचनात् चकारस्य अतिशयाख्याधिक्यार्थत्वम् । अनेन तपःप्रभृतिधर्मयुक्तोऽत्राधिकारीति विभावितं भवति ।। ६७ ।।

## य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
## भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ।। ६८ ।।

**भावरत्नकोशः (सु.टि.)- गीताक्षरार्थस्तु-** गीताव्याख्यानमध्ययनं श्रवणं च फलकथनेन स्तूयते- **य इत्यादिना** ।। यः साधकः परमं गुह्यम् अतिगोप्यम् इमम् आवयोः संवादरूपं ग्रन्थं मद्भक्तेष्वभिधास्यति व्याख्यास्यति स मयि परां भक्तिं कृत्वा मामेवैष्यति इत्यत्र असंशयः संशयाभावः । '... असन्देहः प्रयोजनम्' इत्यत्रेव 'असंशयः' इति प्रयोगः । 'यः' इत्यस्य 'असंशयः' इत्येतद्विशेषणमिति आहुः ।। ६८ ।।

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता नच मे तस्मादन्यः प्रियतरो भुवि ।। ६९ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** किञ्च तस्मात् गीताशास्त्रव्याख्यातुः अन्यो मनुष्येषु मे मम प्रियकृत्तमः अतिशयेन प्रियं कुर्वन् अस्ति आगामिनि कालेऽपि । तस्माद् व्याख्यातुरन्यः प्रियतरो न भविता न भविष्यति । 'नासीत्' इत्यपि द्रष्टव्यमिति स्वामिनः । अत्र 'मनुष्येषु' इत्युक्त्या मनुष्याणां व्याख्यातृत्वे कारणभूतानां देवानाम् इतोऽपि भगवत्प्रियत्वमस्तीति ज्ञायते ।। ६९ ।।

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ।। ७० ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** पठतः फलमुच्यते– **अध्येष्यत इति** ।। य आवयोरिमं धर्म्यं धारकत्वाद्धर्मो भगवान्, तद्विषयो धर्म्यः तम् धर्मादनपेतं वा संवादं प्रश्नोत्तररूपं ग्रन्थम् अध्येष्यते पठिष्यति, तेन पुरुषेण तेन सर्वयज्ञेषु श्रेष्ठतया प्रसिद्धेन ज्ञानयज्ञेन अहमिष्टः पूजितः स्याम् इति मे मतिः निश्चयः ।। ७० ।।

**श्रद्धवाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभांल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ।।७१।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** श्रोतुः फलमुच्यते– **श्रद्धावानिति** ।। योऽपि नरः श्रद्धावान् अत्रोक्तमस्ति, अनेन मम प्रयोजनमस्तीति मतिः श्रद्धा, तद्वान् अनसूयः असूयादिश्रोतृदोषहीनः च इमं संवादं शृणुयात् सोऽपि मुक्तः पापेभ्यः शुभान् विमलान् समस्तान् पुण्यकर्मणाम् अग्निहोत्रादिकर्मकारिणां लोकान् प्राप्नुयात् प्रतिपद्यते ।। ७१ ।।

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ।। ७२ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** एतावन्तं कालं मदुपदेशो न हि ननु भवति

श्लोकः ७३-७५

भवत्यरण्यरुदितायितमिति भगवता अर्जुनः सम्बोध्यते– **कच्चिदिति** ।। कामप्रवेदने 'कच्चित्' इत्यव्ययम् । हे पार्थ! एतत् मयोक्तं त्वयैकाग्रेण चेतसा अनन्यविषयेण चित्तेन, सच्चित्ताभिनिवेशमिति यावत्, श्रुतं कच्चित् श्रवणेनावधारितं ननु इति इष्टपरिप्रश्नः । अज्ञानसम्मोहः अज्ञाननिमित्तः सम्मोहः प्रणष्टः कच्चित् । कियदर्थोऽयं शास्त्रश्रवणाय आयासस्तव, मम चोपदेष्टृत्वायासः प्रवृत्तः ।। ७२ ।।

## अर्जुन उवाच–

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।**
**स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ।। ७३ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** तत्रोत्तरम्– **अर्जुन इति** ।। अर्जुन उवाच । नेदमरण्यरुदितम् किन्तु त्वत्प्रसादात् मोहः बान्धवस्नेहः, 'न योत्स्ये' इति मिथ्याऽध्यवसायो वा नष्टः, स्मृतिः 'नारायणद्विट्तदनुबन्धिनिग्रहः परमो धर्मोऽवश्यं कर्तव्य एव' इत्येवंरूपाऽनुस्मृतिः लब्धा । अथेदानीं गतसन्देहः त्वच्छासनेन स्थितो युद्धे सन्नद्धः अस्मि । 'यथेच्छसि तथा कुरु' इत्याक्षेपपरिहाराय 'करिष्ये वचनं तव' इत्यनुसरति भगवन्तं परिसमाप्तशास्त्रार्थः ।। ७३ ।।

## सञ्जय उवाच–

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ।। ७४ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** अथेदानीं कथासम्बन्धप्रदर्शनार्थमुच्यते– **सञ्जय उवाचेति** ।। इति पूर्वोक्तप्रकारेण महात्मनो महान् उत्तमश्चासौ आत्मा, तस्य वासुदेवस्य महान् आत्मा सुशिक्षितं मनो यस्य तस्य महात्मनः पार्थस्य च इमं यथोक्तं संवादमश्रौषं श्रुतवानस्मि । कीदृशम् अद्भुतम् अत्यन्तविस्मयकरम् अन्तर्बहिः रोमहर्षणं रोमाञ्चकरम् ।। ७४ ।।

**व्यासप्रसादाच्छ्रुतवान् एतद्गुह्यमहं परम् ।**
**योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ।।७५।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** गीताशास्त्रस्य युद्धरङ्गे रहसि समुपदिष्टस्य श्रवणं तव कथं स्यात् इत्याशङ्कापरिहारायोच्यते– **व्यासप्रसादादिति** ।। भगवता व्यासेन मह्यं कुरुक्षेत्रे यावद्युद्धसमाप्ति तत्रतत्र प्रवृत्तस्य सर्वस्यापि व्यापारस्य दर्शनश्रवणे स्यातामिति हि दिव्यं चक्षुर्दत्तम् । अतो व्यासप्रसादात् परं गुह्यम् एतत् श्रुतवान् । कस्माच्च इत्यपेक्षाया-मुच्यते– **योगं योगेश्वरादिति** ।। योगं ज्ञानोपायः, तत्प्रतिपादकत्वाच्छास्त्रमपि योगः, तं योगानामीश्वराद् योगेश्वरात् साक्षाद् अव्यवधानेन स्वयम् आत्मना, नापरचोदनाय । अर्जुनं प्रति कथयतः कृष्णात् श्रुतवान् इत्यनेन रहसि वृत्तं तव कर्णपथं कथं गतम् किं तच्छ्रुतम् कस्माच्च इति कृतशङ्कात्रयं परिहृतं भवति ।। ७५ ।।

**राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ।। ७६ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** किञ्च हे राजन्! धृतराष्ट्र! केशवार्जुनयोः पुण्यं श्रवणमात्रेण पापहरम् इमं गीताशास्त्ररूपं संवादं संस्मृत्य संस्मृत्य सम्यक् श्रुत्वा मुहुर्मुहुश्च हृष्यामि हर्षं प्राप्नोमि ।। ७६ ।।

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ।। ७७ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** किञ्च श्रुतार्थस्मरणजनितहर्षादपि दृष्टार्थ-स्मरणजन्यो हर्षो ह्यतिशयितः, तं चानुभवामीत्युच्यते– **तच्चेति** ।। हरेः श्रीकृष्णस्य अत्यद्भुतम् अत्याश्चर्यकरं तद् विश्वरूपसन्दर्शनकाले स्वयोग्यताऽनुसारेण दृष्टं रूपं च संस्मृत्य हे राजन्! धृतराष्ट्र! मे मम महान् विस्मयः अनुभूयते । ततो मुहुर्मुहुः हृष्यामि ।। ७७ ।।

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ।। ७८ ।।**

**भावरत्नकोशः (सु.टि.)– गीताक्षरार्थस्तु-** एवं सर्वार्थान् सम्यगेवावज्ञातः तव समुप-नतसेनाद्वये जयाजयविवेकः कथं भासते इत्यत उच्यते– **यत्रेति** ।। यत्र यस्मिन् पक्षे योगेश्वरः सर्वोपायानामीश्वरः स्वामी कृष्णो वर्तते यत्र च धनुर्धरो गाण्डीवधन्वा पार्थः अर्जुनः तत्र एव

श्लोकः ७८

श्रीः विजयो भूतिः ध्रुवा नीतिश्चेति मम मतिः अतिनिश्चय इति सञ्जयवचनम् । तत्र ध्रुवा निश्चला नीतिः न्यायः । ततो ध्रुवा भूतिः उत्तरोत्तराभिवृद्धैश्वर्यम् । ततः सर्वतो विजयः । ततश्च श्रीः महाराज्यलक्ष्मीः इति ।। ७८ ।।

।। ओं तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसन्न्यासयोगो नामाष्टादशोऽध्यायः ।।

## भाष्यम्

**पूर्णादोषमहाविष्णोः गीतामाश्रित्य लेशतः ।**
**निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भगवद्गीताभाष्ये अष्टादशोऽध्यायः समाप्तः ।। १८ ।।

**प्रमेयदीपिका (ज.टी.)– इदानीं समापितभाष्यो भगवानाचार्यो भाष्यनिर्माणस्य फलं भगवत्प्रीतिमेवाऽऽशास्ते– पूर्णेति ।। एतत् 'गीताम्' इत्यनेन 'निरूपणम्' इत्यनेन च सम्बद्ध्यते । 'तेन' इति श्रवणात् 'यत्' इति लभ्यते ।।**

**भावदीपः (रा.टि.)–** 'समापितभाष्येति' बहुव्रीहिः, स्वस्य चेत्यर्थः ।। **एतदिति ।।** पूर्णादोषमहाविष्णोः इत्येतदित्यर्थः ।।

**भावरत्नकोशः (सु.टि.)–** भगवत्प्रीतिमेव न त्वन्यद् यत्किञ्चिद् एकान्तभक्तशिखामणित्वादिति भावः । **एतत्** 'पूर्णादोषमहाविष्णोः' इति विशेषणम् । तथा च पूर्णः सर्वैरानन्दादिगुणैः परिपूर्णः, न दोषाः चिन्तासन्तापादयो यस्य सोऽदोषः । अत एव महान् यो विष्णुः तस्य भगवतो गीतामाश्रित्य व्याख्येयत्वेनोपादाय तस्याः बह्वर्थत्वात् मन्दान् प्रति लेशेनैव प्रतिपाद्यस्य पूर्णादोषमहाविष्णोः स्वरूपस्य यत् निरूपणं कृतं तेन 'विभुर्मे प्रीयताम्' इत्यर्थो योग्यतया सम्पद्यत इति भावः ।

**भावदीपिका (श्री.टि.)– ।। प्रीतिमेवेति ।।** अधिकार्युत्तमवाय्वतारभूतैः आनन्दतीर्थैराशास्या भगवत्प्रीतिरेव, नान्या । 'एकान्तानां न कस्यचिदर्थे नारायणो देवः' इति वचनादिति भावः । **एतदिति ।।** तथा च पूर्णादोषमहाविष्णोर्गीतां भगवद्गीतां तदाख्यं ग्रन्थमिति यावत्,

आश्रित्य पूर्णादोषमहाविष्णोः स्वरूपस्य निरूपणं लेशतो यत् कृतं तेन विभुर्मे सदा प्रीयतामित्यर्थः ।

**भावप्रदीपिका (प.टी.)–**

नमो जलदनीलाय वल्लवीवल्लभाय ते ।
रमाकरसमाराध्यचरणाय मुरद्विषे ।। १ ।।
श्रीमन्मध्वमहाचार्यपदपद्मैकसद्मनाम् ।
अणूनां महतां चापि भवतात् करुणा मयि ।। २ ।।

**।। इति श्रीपद्मनाभतीर्थभट्टारकविरचितश्रीभगवद्गीताभाष्यभावप्रदीपिकायां अष्टादशोऽध्यायः ।।**

**प्रमेयदीपिका (ज.टी.)–**

करतलकलितामलकमिव प्रभुणा येनेदमवगतं विश्वम् ।।
स जयति जनकसुतायाः कान्तः श्रीरघुनन्दनो देवः ।। १ ।।
नमामि व्यासदासस्य पूर्णबुद्धेः पदाम्बुजे ।
नतामरशिरोरत्नराजिनीराजिते सदा ।। २ ।।
अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य मे ।
वचोभिरमृतप्रायैः प्रीयन्तां सततं बुधाः ।। ३ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्गीताभाष्यस्य टीकायां जयतीर्थमुनिविरचितायां प्रमेयदीपिकायाम् अष्टादशोऽध्यायः समाप्तः ।। १८ ।।**

**भावदीपः (रा.टि.)– ।। जयति ।।** सर्वोत्कृष्टो वर्तते । **नतेति** नमनं कुर्वताम् अमराणां देवानां शिरोरत्नराजैः **नीराजिते** आरार्तितेत्यर्थः । **बुधाः** विद्वांसः । अमृतैर्विबुधा देवा यथा प्रीयन्ते तथा मे **वचोभिः** अमृतकल्पैः मूलार्थं स्पष्टं प्रकाशयद्भिः वचोभिः विद्वांसः प्रीयन्ताम् इत्यर्थः ।।

कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ।।
श्रीमद्गीताभाष्यटीकाभावदीपः कृतो मया ।
राघवेन्द्रेण यतिना प्रीत्यै माधवमध्वयोः ।।

।। इति श्रीमद्गीताभाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते अष्टादशोऽध्यायः समाप्तः ।।

श्लोकः ७८

**भावरत्नकोशः (सु.टि.)–** समापितगीताभाष्यव्याख्यानो जयतीर्थाचार्यवर्यः ग्रन्थान्तेऽपि शिष्यान् ग्राहयितुमपि मङ्गलमाचरति– **करतलकलितेति** ।। करतलमिलितामलकफलमिवेत्यर्थः । 'प्रभुणा' इति वदता भाष्यगतविभुशब्दो व्याख्यातः ।। १ ।।

पूर्णबुद्धेः सर्वज्ञाचार्यस्य नताः, नमः कर्तरि क्तः, नतवन्तः, ते चामराः, तेषां शिरोरत्नानां राज्या पङ्क्त्या नीराजिते आरार्तिते ।। २ ।।

अक्षोभ्यतीर्थश्चासौ गुरुश्च तेन शुकवत् शुकस्येव बुधाः सन्तः ।। ३ ।।

श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
कृष्णाय कृष्णारमणप्रियायास्तु नमो नमः ।।

नमस्ते नमस्ते नमस्ते दयालो नमस्ते नमस्ते नमो नारसिंह ।
नमस्ते नमस्ते नमस्ते मुरारे नमस्ते नमस्ते नमो व्यास राम ।।

आर्यस्वान्ताम्भोजहंसायमानौ संसाराम्भोराशिनावौ समानौ ।
भूयास्तां तौ भूतये भूरिमानौ वेदव्यासानन्दतीर्थाभिधानौ ।।
भूरिगमीषागमचितकरणान् श्रीजयतीर्थयतिकृतशरणान् ।
सन्ततमीडे सुचरितचरणान् वेङ्कटनारायणगुरुचरणान् ।।

**।। इति श्रीमत्परमहंसपीरव्राजकाचार्यश्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्यसुमतीन्द्रतीर्थविरचितायां प्रमेयदीपिकाव्याख्यायां भावरत्नकोशसमाख्यायामष्टादशोऽध्यायः ।।**

**भावदीपिका (श्री.टि.)–** समापितग्रन्थो भगवान् टीकाकारः प्रचयगमनार्थम् अन्तेऽपि मङ्गलमाचरति – **करतलकलितेत्यादिना** ।। इदं विश्वं समस्तं करसम्बद्धामलकमिव येनावगतं स जयतीत्यर्थः । नतरुद्राद्यमरशिरोरत्नानां राज्या 'वीथ्यालिरावलिः पङ्क्तिश्रेणीरेखास्तु राजयः' इत्यभिधानात् पङ्क्त्या 'राजृ दीप्तौ' इति धातोः कान्त्या वा नितरां राजिते पूर्णबुद्धेः पदाम्बुजे नमामि, इत्यशेषमतिमङ्गलम् ।। २ ।।

इति यदुपतिवरगीताभाष्यटीकासुयुक्ता–
शयमतिललिताभिर्गीर्भिरावेदयित्री ।
सुललितविवृतिर्या वृष्णिराट्छात्रचीर्णा
समगमदयमत्राष्टादशाध्याय अन्तम् ।।

योऽयाचि त्रिदशैः कुभारहृतयेऽवातारि येन क्षितौ
येनामोचि पितौग्रसेनिनिगडाद्धर्मोऽपि येनाङ्करि ।।
येनाधायि युधिष्ठिरो निजपदे भाग्यादिदं श्रीपतिं
तं कृष्णं सदुपास्यमुद्धवजयज्ञानप्रदं संश्रये ।। १ ।।

श्रीयादवार्यगुरुमानसनीरजस्थश्रीमध्वहृत्कमलवासिरमानिवासः ।
व्यासोस्त्वनेन जयतीर्थमुनीन्द्रवाक्यगूढाशयप्रकटनेन ममाशु भूत्यै ।। २ ।।

गीताभाष्यस्य टीकेयं यादवार्यकृपाबलात् ।
विवृता श्रीनिवासेन भूयाद् व्याख्योपकारिणी ।। ३ ।।

**।। इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां श्रीमद्भगवद्गीताभाष्यविवृतौ भावप्रदीपिकाख्यायामष्टादशोध्यायः ।।**

**भावप्रकाशः (कृ.टि.)–** ननु यदि पूर्णादोषेति गीताया एव विशेषणं न निरूपणस्य तदा यत्किञ्चिन्निरूपणमिति प्रतीयते । तथा च भाष्यकारस्यानवरतमीश्वरप्रवणकायकरण-वृत्तित्वविरोधः । यदि च निरूपणस्यैव तदा यत् किञ्चिद्गीतामित्यापद्यते तच्च बाधितमित्यत आह– **एतदिति** ।। पूर्णेत्यादिविशेषणमित्यर्थः । योग्यतासत्वादिति भावः । इति ।

श्रीमत्तिर्मलसूरिसत्तमगुरुष्टीकाशयं व्याकरो
च्छ्रीवेदेशयतीशशिष्ययदुपत्याचार्यसंशिक्षितम् ।
यं मह्यं तमिहाकृषं हरिगुरुप्रीत्यै स्वधीशुद्धये
प्रीयन्तां सततं बुधा मयि ततः सन्तो गुणग्राहिणः ।।

प्रवरोम्बरजीकृष्णशर्मातिर्मलसूरिजः ।
प्रमेयदीपिकाव्याख्यां शर्मदां निर्ममे सुधीः ।। २ ।।

**।। इति श्रीमत्तिर्मलाचार्यसूरिसूनुकृष्णविरचिते प्रमेयदीपिकाभावप्रकाशेऽष्टादशोऽध्यायः ।।**

**।। समाप्तश्च ग्रन्थः ।।**

**।। श्रीकृष्णार्पणमस्तु ।।**